|| धर्मो विश्वस्य जगतः प्रतिष्ठा ||

# धर्मकोशः

## राजनीतिकाण्डम्

### चतुर्थो भागः

प्रधानसंपादकः

लक्ष्मणशास्त्री जोशी, तर्कतीर्थः

अध्यक्षः प्राज्ञपाठशालामण्डलस्य


संवत् २०३३

# DHARMAKOS'A

## RĀJANĪTIKĀṆḌA

Volume IV
Part IV

1977

EDITED BY

Laxmanshastri Joshi, *Tarkateertha*
President, Prājña Pāṭhaśālā Maṇḍala.

# TABLE OF CONTENTS

# प्रणामपत्रिका

धर्मकोशान्तर्गतस्य श्रुतिस्मृतिपुराणधर्मशास्त्रार्थशास्त्रेभ्यः

तद्व्याख्यानेभ्यश्च समुद्धृतस्य

अस्य

## राजनीतिकाण्डस्य

मफतलालकुलतिलकैः **अरविन्दादिबन्धुभिः** उदारचरितैः
द्रव्यानुदानेनोपकृतस्य प्रकाशनावसरे

मनुशुक्रबृहस्पतिकृष्णभीष्मकौटिल्यादीन् राजनीतिविदः
ऋषभदेवरामचन्द्रमान्धातृभरताशोकादीन्
चक्रवर्तिनश्च

**भूयोभूयः प्रणमामः ।**

## राजनीतिकाण्डस्य

# चतुर्थभागस्य रचनास्वरूपम्

### मूलवचन-व्याख्यानसंग्रहपद्धतिः

( १ ) प्रथमतः प्रकरणनाम, ततः स्तम्भे अवान्तर-प्रकरणनाम, तदधस्तात् ऋष्यादिनाम , तदधस्तात् मूल-वचन—तद्व्याख्यानसंग्रहो विहितः । मूलग्रन्थो व्याख्यान-सहितो रेखया मर्यादितः । तदधस्तात् विशेषटिप्पणी, तदधस्ताच्च स्थलनिर्देशाः पाठभेदाश्च संगृहीताः ।

( २ ) मूलवचनानां संग्रहः कालक्रममनुसृत्य कृतः ।

( ३ ) मूलवचनस्योपरितने प्रदेशे सूक्ष्माक्षरैर्विषय-निर्देशः कृतः ।

( ४ ) मूलवचनं स्थूलाक्षरैः , व्याख्यानानि मध्यमा-क्षरैः, विशेषटिप्पणी—स्थलनिर्देशादिकं सूक्ष्माक्षरैः , ग्रन्थ-नामसंक्षेपाश्च सूक्ष्मकृष्णाक्षरैर्मुद्रितानि ।

( ५ ) एकस्य वचनस्य अनेकप्रकरणसंबन्धे तद्वचनं तत्तत्प्रकरणे प्रायः आवर्तितम् । यत्र तु नाऽऽवर्तितं तत्र ‘ अमुकस्मिन् प्रकरणे द्रष्टव्यम् ’ इति टिप्पणी दत्ता ।

( ६ ) यानि वचनानि ऋषिनाम्ना गृह्यसूत्रपुराणादि-नाम्ना वा निबन्धकारैर्नोद्धृतानि, केवलं स्मृतित्वेन, निबन्धनाम्ना, निबन्धकारनाम्ना, अनिर्दिश्य वा किमपि समुद्धृतानि, तानि ‘ अनिर्दिष्टकर्तृकवचनम्—ने—नानि ’ इति शीर्षकं दत्त्वा संगृहीतानि । तेषां च निबन्धकारैरुक्तः स्मृतिनिबन्धादिसंबन्धः अस्माभिः स्थलादिनिर्देशान्ते दर्शितः ।

( ७ ) यद्वचनं बहुभिर्निबन्धकारैरेकर्षिनाम्ना समु-द्धृतम् , अल्पैर्निबन्धकारैर्ऋष्यन्तरीयत्वेनोद्धृतम् , तत् बहुमतादरेण बहुमान्ये ऋषौ एव संगृहीतम् । यस्य तु वचनस्य एकेनापि निबन्धकृता ऋषिविशेषसंबन्धो दर्शितः , बहुभिस्तु सामान्यस्मृत्यादिसंबन्धः टीका-—निबन्धसंबन्धो वा दर्शितः , केनचित्सह संबन्धो वा नोक्तः , तद्वचनं ऋषिसंबन्धस्मृत्यादिसंबन्धयोर्विरोधा-भावात् ऋषिविशेषे एव संगृहीतम् । यस्य तु वचनस्य एकेनैव निबन्धादिकृता एकस्मिन्नेव स्थले अनेकर्षि-संबन्धो दर्शितः , तत्तु दर्शितसंबन्धेषु सर्वेषु ऋषिषु संगृहीतम् । एतादृशेषु स्थलेषु यस्मिन् ऋषौ वचनं संगृहीतं तदतिरिक्तैर्ऋष्यादिभिर्निबन्धकारदर्शितस्तद्वचन-संबन्धोऽस्माभिरपि स्थलनिर्देशाद्यन्ते दर्शितः ।

( ८ ) वचने व्याख्याने च संगृह्यमाणे यत्राशुद्धि-र्लक्षिता तत्र शुद्धिरुत्प्रेक्षिता चेत् अशुद्धग्रन्थोत्तरं कंसे आदौ प्रश्नचिह्नं तत उत्प्रेक्षितः शुद्धपाठो दत्तः । यत्र न शुद्धेरुत्प्रेक्षा तत्र अशुद्धग्रन्थोत्तरं कंसे प्रश्नचिह्न-मात्रं दत्तम् । यत्र तु अशुद्धिबहुलो ग्रन्थः तत्र क्वचित् प्रश्नचिह्नमपि न दत्तम् । यत्र अक्षरं पदं वाक्यं वा पूर्वापरसंगत्यभावादनावश्यकमधिकमिति प्रतीतं तत्र सोऽधिकांशः प्रश्नचिह्नोत्तरकः कंसे निवेशितः । यत्रा-क्षरपदादेरावश्यकस्य न्यूनता प्रतीता तत्र तत् अक्षरादिकं प्रश्नचिह्नरहितं कंसे निवेशितम् ।

( ९ ) क्वचित् व्याख्यानादिषु विरोधाद्याकलने संशोधनात्मिकाः संपादकीयाः टिप्पण्यो दत्ताः । ताश्च विदुषां विचारे प्रवृत्तिं प्रथयितुं विप्रतिपत्तिस्थानीया भवन्तीति मत्वा विद्वद्भिर्निर्णयो विधेयः ।

( १० ) सर्वाणि व्याख्यानानि कालक्रममनुसृत्य संगृहीतानि । तत्र यत् प्रथमं व्याख्यानं तत् संपूर्णं संगृहीतम् । अग्रिमेषु तु व्याख्यानेषु पूर्वव्याख्यानसदृशा-मंशं विहाय विसदृशांश एव संगृहीतः । यत्र सकल-सादृश्यं तत्र ‘ अमुकवत् ’ इति, यत्र एकदेशसादृश्यम् , एकदेशश्च संगृहीतः, तत्र ‘ शेषं अमुकवत् ’ इति च अधस्तनटिप्पण्यामतिदेशो विहितः । यत्र तु पूर्वसादृश्ये-ऽपि न्यूनविषयं व्याख्यानं तत्र पूर्वोक्तातिदेशो वतेः स्थाने ‘ गतम् ’ इति, ‘ गतार्थम् ’ इति वा पदं निवेशितम् । क्वचित् पुनः उत्तरव्याख्यानस्य प्रसन्नत्वे तस्य पूर्वसादृश्ये-

ऽपि संग्रहः कृतः, पूर्वमसंगृह्य वा तत्र उत्तरस्यातिदेशो विहितः। प्रकरणसंदृब्धान्यपि व्याख्यानानि प्रायशो विभज्य तत्तद्वचनेषु संगृहीतानि। क्वचित् संगतिलोभेनानेकवचनव्याख्यानमेकस्मिन् वचने संगृह्य इतरेषु वचनेषु 'अमुकवचने व्याख्यानं द्रष्टव्यम्' इति टिप्पणी विहिता।

## स्थलनिर्देश--पाठभेदपद्धतिः

(११) स्थलनिर्देशाः पाठभेदाश्च यद्वचनान्यवलम्बन्ते तेषु एकादिसंख्याङ्का मुद्रिताः। त एव संख्याङ्का अधस्तात् कंसचिह्ने आवर्तिताः। यथा—[पृ. १८८५ स्तम्भः १] (१) **विस्मृ.** ३।३८.

(१२) संगृहीतानां ग्रन्थानां नामधेयानि ग्रन्थगौरवभयात् संक्षेपरूपेण निर्दिष्टानि। संक्षेपविवरणमग्रे स्वातन्त्र्येण कृतम्। यथा— मनुस्मृतिः = **मस्मृ.**; राजनीतिप्रकाशः = **राप्र.**

(१३) प्रथमं संक्षेपरूपग्रन्थसंज्ञाः, तदुत्तरं स्थलनिर्देशाः, ततः पाठभेदाः इत्यनुक्रमः। एकग्रन्थानेकस्थलनिर्देशाः स्वल्पविरामचिह्नेन विभेदिताः। पूर्वग्रन्थीयस्थलनिर्देशादिसमाप्तिः अर्धविरामचिह्नेन दर्शिता। सर्वग्रन्थीयस्थलनिर्देशादिसमाप्तिः अवसानचिह्नेन दर्शिता। यथा—[पृ. १९३५ स्तम्भः २] **पमा.** ४११; **राप्र.** ३१९, ४१३ गोरावत्; **नीम.** ३९ गोरावत्.

(१४) यस्मिन् ग्रन्थे केवलपूर्वार्धस्य उत्तरार्धस्यैव वा स्थलनिर्देशः कर्तव्यः तत्र स्थलनिर्देशात् परं 'पू.' 'उत्त.' इति निर्देशः कृतः। यथा—[पृ. १९३३ स्तम्भः २] **ममु.** ७।१५९ उत्त.; [पृ. १९८० स्तम्भः १] **राप्र.** २९६ पू., ३०३.

(१५) पाठभेदाः मूलवचनानां संगृहीताः, न व्याख्यानानाम्।

(१६) यस्य मूलांशस्य पाठभेदो देयः तं मूलांशं दत्त्वा ततः परं कंसचिह्नोदरे पाठभेदो निर्दिष्टः। यथा—[पृ. १८९२ स्तम्भः १] (१) **भा.** १।१९३।१; **भामु.** १।२०१।१ न्तयामि (कीर्तयामि).

(१७) यत्र पूर्वार्धः उत्तरार्धः विशिष्टचरणो वा अनेकपाठसंयुतः तत्र 'पूर्वार्धे' 'उत्तरार्धे' 'अमुकचरणे' इति निर्दिश्य तदुत्तरं कंसचिह्नोदरे संपूर्णः पूर्वार्धः उत्तरार्धः चरणो वा पाठभेदमयः मुद्रितः। यथा—[पृ. १९४० स्तम्भः २] **उनिसा.** उत्तरार्धे (अद्रोह इति येष्वेतदाचार्यास्तान् प्रचक्षते ॥). **उनिसा.** पौराज्ञा (पौरजा) स्त्यांश्च (स्त्यश्च) चतुर्थचरणे (दानभेदविचक्षणः). [पृ. १९४१ स्तम्भः १] **उनिसा.** पूर्वार्धे (अपराद्धंस्तु सुस्निग्धान् स्नेहोक्त्या मानदानतः।).

(१८) यत्र संपूर्णं वचनं पाठभेदमयं तत्र तदनुद्धृत्यैव कंसचिह्नोदरे पाठभेदमयं संपूर्णं वचनं समुद्धृतम्। यथा—[पृ. १९०९ स्तम्भः १] **भामु.** ३।१५०।४१ (राज्ञामुपायश्चारश्च बुद्धिमन्त्रपराक्रमाः। विग्रहप्रग्रहौ चैव दाक्ष्यं वै कार्यसाधकम् ॥).

(१९) पूर्वग्रन्थेन उत्तरग्रन्थस्य पाठभेदसाम्ये उत्तरग्रन्थस्थलनिर्देशोत्तरं 'अमुकवत्' इत्युक्तम्। अंशेन साम्यं चेत् विशेषं पाठभेदं दत्त्वा 'शेषं अमुकवत्' इत्युक्तम्। यथा—[पृ. १९३४ स्तम्भः २] **राप्र.** ४०४ मचवत्; **भाच.** संपन्नो (संयत्तो) शेषं मचवत्.

(२०) यत्र अधिकांशरूपः पाठभेदो निर्देष्टुमिष्टस्तत्र यदुत्तरमधिकांशस्तच्छब्दोत्तरं अधिकचिह्नं कृत्वा तदुत्तरं कंसचिह्नोदरे अधिकांशरूपः पाठभेदः प्रदर्शितः। यथा—[पृ. १९९७ स्तम्भः २] **भामु.** ५।३८।२९ शत्रुरङ्क (शत्रुर्वश) पूर्वार्धानन्तरम् + (न्यग्भूत्वा पर्युपासीत वध्यं हन्याद् बले सति।).

(२१) यत्र कस्यचिदंशस्य न्यूनता निर्देष्टुमिष्टा तत्र यावान् न्यूनांशः तं कंसोदरे निर्दिश्य ततः परं '०' एतादृशं चिह्नं कृतम्। तावानंशो नास्तीति तदर्थः। यथा—[पृ. २०१४ स्तम्भः २] (३) **भा.** १२।११४।४ (सागर उवाच०).

(२२) यत्र एकस्मिन् वचने कस्यचिदंशस्य आवृत्तिः, ग्रन्थान्तरे प्रत्यावृत्ति पाठभेदश्च समानः, तत्र

एकवारमेव पाठभेदो दर्शितः । प्रत्यावृत्ति स पाठभेद इति तदर्थः । [ पृ. १८९३ स्तम्भः १ ] **भामु.** १।२०१।२० साधु ( साध्वी ).

( २३ ) यत्र महतोंऽशस्य पाठभेदो दर्शितव्यस्तत्र तदंशस्य आद्यन्तौ '......' एतादृशचिह्नगर्भावुद्धृतौ, न संपूर्णोंऽश उद्धृतः ।

( २४ ) यत्र एकस्मिन्नेव ग्रन्थे कस्यचिद्विशेषस्य अनन्तरपूर्वस्थलमात्रेण संबन्धो विवक्षितस्तत्र ततः पूर्वतर-स्थलेन संबन्धाभावं बोधयितुम् अनन्तरपूर्वस्थलनिर्देशा-त्पूर्वं ':' इति विसर्गचिह्नं विहितम् ।

( २५ ) यत्र यद्वचनस्य ऋष्यादिसंबन्धो निबन्धकृता न निर्दिष्टः तत्र तद्वचनस्यानिर्दिष्टकर्तृकत्वादिबोधनाय स्थलनिर्देशोत्तरं '(=)' इति चिह्नं दत्तम् । यथा—[ पृ. २११३ स्तम्भः १ ] **राप्र.** ३२४ (=).

## राजनीतिकाण्डस्य

# चतुर्थभागे संगृहीतग्रन्थपरिचयः

### मूलग्रन्थाः

| क्रमाङ्कः | ग्रन्थः | ग्रन्थप्रकाशनादिस्थानम् |
|---|---|---|
| १ | गौतमधर्मसूत्रम् | Government Oriental Library Series, Mysore. |
| २ | हारीतस्मृतिः | (1) Manmatha Nath Dutt, Calcutta;<br>(2) Shri Venkateshwara Press, Bombay. |
| ३ | वृद्धहारीतस्मृतिः | Anandashrama, Poona. |
| ४ | बौधायनधर्मसूत्रम् | Chowkhamba Sanskrit Series, Varanasi. |
| ५ | आपस्तम्बधर्मसूत्रम् | ,, ,, ,, ,, |
| ६ | वसिष्ठस्मृतिः | (1) Anandashrama, Poona;<br>(2) Manmatha Nath Dutt, Calcutta;<br>(3) Bombay Sanskrit and Prakrit Series, Bombay. |
| ७ | विष्णुस्मृतिः | Prof. Julius Jolly, the Asiatic Society, Calcutta. |
| ८ | महाभारतम् | (1) Bhandarkar Oriental Research Institute, Poona;<br>(2) Chitrashala Press, Poona;<br>(3) Ganapata Krishnaji Press, Bombay. |
| ९ | वाल्मीकिरामायणम् | (1) Dayananda Mahavidyalaya Sanskrit Granthamala, Lahore;<br>(2) Nirnayasagara Press, Bombay. |
| १० | कौटिलीयमर्थशास्त्रम् | Trivandrum Sanskrit Series, Trivandrum. |
| ११ | चाणक्यसूत्राणि | University of Mysore, Mysore. |
| १२ | चाणक्यनीतिदर्पणः | Vishveshvaranand Vedic Research Institute, Hoshiarpur. |
| १३ | वृद्धचाणक्यः | ,, ,, ,, ,, |
| १४ | चाणक्यनीतिशास्त्रम् | ,, ,, ,, ,, |
| १५ | चाणक्यसारसंग्रहः | ,, ,, ,, ,, |
| १६ | लघुचाणक्यः | ,, ,, ,, ,, |
| १७ | चाणक्यराजनीतिशास्त्रम् | ,, ,, ,, ,, |
| १८ | मनुस्मृतिः | (1) V. N. Mandlik, Bombay;<br>(2) J. R. Gharpure, ,, ;<br>(3) Asiatic Society of Bengal, Calcutta;<br>(4) Nirnayasagara Press, Bombay. |

| क्रमाङ्कः | ग्रन्थः | ग्रन्थप्रकाशनादिस्थानम् |
|---|---|---|
| १९ | याज्ञवल्क्यस्मृतिः | Nirnayasagara Press, Bombay. |
| २० | नारदीयमनुसंहिता | Trivandrum Sanskrit Series, Trivandrum. |
| २१ | नारदस्मृतिः | Prof. Julius Jolly, The Asiatic Society, Calcutta. |
| २२ | बार्हस्पत्यसूत्रम् | Punjab Sanskrit Series, Lahore. |
| २३ | पराशरस्मृतिः | (1) Shri Venkateshwara Press, Bombay; (2) Asiatic Society of Bengal, Calcutta (3) Bombay Sanskrit and Prakrit Series, Bombay. |
| २४ | बृहत्पराशरसंहिता | Bombay Sanskrit and Prakrit Series, Bombay. |
| २५ | बुधस्मृतिः | Gurumandal Series, Calcutta. |
| २६ | आश्वलायनस्मृतिः | Prajna-Patha-Shala Mandal, Wai (हस्तलिखितम्). |
| २७ | मार्कण्डेयपुराणम् | Kashinath Shastri Lele, Wai. |
| २८ | मत्स्यपुराणम् | Anandashrama, Poona. |
| २९ | हरिवंशः | Chitrashala Press, Poona. |
| ३० | स्कन्दपुराणम् | Shri Venkateshwara Press, Bombay. |
| ३१ | विष्णुधर्मोत्तरपुराणम् | ,, ,, ,, ,, |
| ३२ | गरुडपुराणम् | ,, ,, ,, ,, |
| ३३ | ब्रह्मवैवर्तपुराणम् | ,, ,, ,, ,, |
| ३४ | अग्निपुराणम् | Anandashrama, Poona. |
| ३५ | कालिकापुराणम् | Shri Venkateshwara Press, Bombay. |
| ३६ | कामन्दकीयनीतिसारः | (1) Anandashrama, Poona (सप्तमसर्गपर्यन्तम्); (2) Prajna-Patha-Shala Mandal, Wai (हस्तलिखितम्- अष्टमसर्गतः समाप्तिपर्यन्तम्); (3) Shri Venkateshwara Press, Bombay. |
| ३७ | शुक्रनीतिः | (1) Jivananda Vidyasagar, Calcutta; (2) Shri Venkateshwara Press, Bombay. |
| ३८ | योगयात्रा | Bombay Machine Press, Lahore. |
| ३९ | नीतिवाक्यामृतम् | Manikachanda Jain Granthamala, Bombay. |
| ४० | युक्तिकल्पतरुः | Prajna-Patha-Shala Mandal, Wai (हस्तलिखितम्). |
| ४१ | मानसोल्लासः | Gaekwad's Oriental Series, Baroda. |

## टीका--निबन्ध--ग्रन्थाः

| क्रमाङ्कः | ग्रन्थः | ग्रन्थकर्ता | ग्रन्थस्वरूपम् | ग्रन्थकालः | ग्रन्थप्रकाशनादिस्थानम् | |
|---|---|---|---|---|---|---|
| ४२ | विश्वरूपः | विश्वरूपाचार्यः | याज्ञवल्क्यस्मृति-टीका | (1) A. D. 720–773 by K. L. Daptari; (2) ,, ,, 800–825 by P. V. Kane. | Trivandrum Sanskrit Series, Trivandrum. | मुद्रितम् |
| ४३ | मेधातिथिभाष्यम् | मेधातिथिः | मनुस्मृतिटीका | ,, ,, 825–900 | (1) J. R. Gharpure, Bombay; (2) Ganganath Jha, Asiatic Society of Bengal, Calcutta; (3) V. N. Mandlik, Bombay. | ,, ,, ,, |
| ४४ | गोविन्दराजीया | गोविन्दराजः | ,, | ,, ,, 1050–1100 | V. N. Mandlik, Bombay. | ,, |
| ४५ | मिताक्षरा | विज्ञानेश्वरः | याज्ञवल्क्यस्मृति-टीका | ,, ,, 1070–1100 | Nirnayasagara Press, Bombay. | ,, |
| ४६ | अपरार्कः | अपरादित्यः | ,, | ,, ,, 1115–1130 | Anandashrama, Poona. | ,, |
| ४७ | राजधर्मकल्पतरुः | लक्ष्मीधरः | निबन्धः | ,, ,, 1100–1150 | Gaekwad's Oriental Series, Baroda. | ,, |
| ४८ | मस्करिभाष्यम् | मस्करी | गौतमधर्मसूत्रटीका | ,, ,, 1100–1300 ( Probably about 1200 ) | Government Oriental Library Series, Mysore. | ,, |
| ४९ | मिताक्षरा | हरदत्तः | ,, | ,, ,, 1100–1300 | Anandashrama, Poona. | ,, |
| ५० | उज्ज्वला | ,, | आपस्तम्बधर्मसूत्र-टीका | ,, ,, ,, ,, | Chowkhamba Sanskrit Series, Varansi. | ,, |
| ५१ | मन्वर्थविवृतिः | सर्वज्ञनारायणः | मनुस्मृतिटीका | ,, ,, ,, ,, | V. N. Mandlik, Bombay. | ,, |
| ५२ | मन्वर्थमुक्तावलिः | कुल्लूकभट्टः | ,, | ,, ,, 1150–1300 ( Probably about 1250 ) | (1) V. N. Mandlik, Bombay; (2) Nirnayasagara Press, Bombay. | ,, ,, |
| ५३ | विवादरत्नाकरः | चण्डेश्वरः | निबन्धः | ,, ,, 1314–1324 | Asiatic Society of Bengal, Calcutta. | ,, |
| ५४ | राजनीतिरत्नाकरः | ,, | ,, | ,, ,, ,, ,, | Bihar and orissa Research Society, Patna. | ,, |

| क्रमाङ्कः | ग्रन्थः | ग्रन्थकर्ता | ग्रन्थस्वरूपम् | ग्रन्थकालः | ग्रन्थप्रकाशनादिस्थानम् | |
|---|---|---|---|---|---|---|
| ५५ | पराशरमाधवः—<br>आचारकाण्डम्<br>प्रायश्चित्तकाण्डम्<br>व्यवहारकाण्डम् | माधवाचार्यः | पराशरस्मृतिटीका | A. D. 1330–1385 | Asiatic Society of Bengal, Calcutta.<br>Bombay Sanskrit Series, Bombay.<br>" " " " | मुद्रितम्<br>"<br>" |
| ५६ | दीपकलिका | शूलपाणिः | याज्ञवल्क्यस्मृतिटीका | " " 1375–1460 | J. R. Gharpure, Bombay. | " |
| ५७ | मन्वर्थचन्द्रिका | राघवानन्दः | मनुस्मृतिटीका | Later than 1400 A. D. | V. N. Mandlik, Bombay. | " |
| ५८ | नारदीयमनुसंहिताभाष्यम् | भवस्वामी | नारदीयमनुसंहिताटीका | ... ... ... | Trivandrum Sanskrit Series, Trivandrum. | " |
| ५९ | वीरमित्रोदया | मित्रमिश्रः | याज्ञवल्क्यस्मृतिटीका | A. D. 1610-1640 | Chowkhamba Sanskrit Series, Varanasi. | " |
| ६० | राजनीतिप्रकाशः | " | निबन्धः | " " " " | " " " | " |
| ६१ | वैजयन्ती | नन्दपण्डितः | विष्णुस्मृतिटीका | " " 1623 | Prof. Julius Jolly, The Asiatic Society, Calcutta. | " |
| ६२ | नीतिमयूखः | नीलकण्ठभट्टः | निबन्धः | (1) A. D. 1540 by Chinna Swami;<br>(2) " " 1610–1645 by P. V, Kane. | (1) J. R. Gharpure, Bombay;<br>(2) Gujarati Printing Press, Bombay. | "<br>" |
| ६३ | राजधर्मकौस्तुभः | अनन्तदेवः | " | " " 1650–1675 | Gaekwad's Oriental Series, Baroda. | " |
| ६४ | बालंभट्टी | बालंभट्टः पायगुण्डे | याज्ञवल्क्यस्मृतिमिताक्षराटीका | " " 1730–1820 | J. R. Gharpure, Bombay. | " |
| ६५ | नन्दिनी | नन्दनाचार्यः | मनुस्मृतिटीका | ... ... ... | V. N. Mandlik, Bombay. | " |
| ६६ | मनुभावार्थचन्द्रिका | रामचन्द्रः | " | ... ... ... | " " " | " |
| ६७ | बौधायनविवरणम् | गोविन्दस्वामी | बौधायनधर्मसूत्रटीका | ... ... ... | Chowkhamba Sanskrit Series, Varanasi | " |
| ६८ | नीलकण्ठी | नीलकण्ठः | महाभारतटीका | In the 17th Century by V. S. Sukhathankar | Chitrashala Press, Poona. | " |

| क्रमाङ्कः | ग्रन्थः | ग्रन्थकर्ता | ग्रन्थस्वरूपम् | ग्रन्थकालः | प्रकाशनादिस्थानम् | |
|---|---|---|---|---|---|---|
| ६९ | जयमङ्गला | शंकरार्यः | कामन्दकीयनीतिसारटीका | ... ... ... | (1) Anandashrama, Poona (सप्तमसर्गपर्यन्तम्); | मुद्रितम् |
| | | | | | (2) Prajna-Patha-Shala Mandal, Wai (अष्टमसर्गतःसमाप्तिपर्यन्तम्). | हस्तलि. |
| ७० | उपाध्यायनिरपेक्षा | ... ... | ,, | ... ... ... | Anandashrama, Poona (सप्तमसर्गपर्यन्तम्). | मुद्रितम् |
| ७१ | उपाध्यायनिरपेक्षानुसारिणी | ... ... | ,, | ... ... ... | Prajna-Patha-Shala Mandal. Wai (अष्टमसर्गतः समाप्तिपर्यन्तम्). | हस्तलि. |
| ७२ | नीतिवाक्यामृतटीका | ... ... | नीतिवाक्यामृतटीका | ... ... ... | Manikachanda Jain Granthamala, Bombay. | मुद्रितम् |
| ७३ | शुक्रनीतिटीका | जीवानन्दविद्यासागरः | शुक्रनीतिटीका | A. D. 1882 | Jivananda Vidyasagar Calcutta. | ,, |
| ७४ | श्रीमूला | त. गणपतिशास्त्री | कौटिलीयार्थशास्त्रटीका | ,, ,, 1923 | Trivandrum Sanskrit Series, Trivandrum. | ,, |

# ग्रन्थनामसंक्षेपाः

| | | |
|---|---|---|
| ३४ | अग्नि. | अग्निपुराणम् |
| ४६ | अप. | अपरार्कः |
| ५ | आध. | आपस्तम्बधर्मसूत्रम् |
| २६ | आश्वस्मृ. | आश्वलायनस्मृतिः |
| ५० | उ. | उज्ज्वला |
| ७० | उनि. | उपाध्यायनिरपेक्षा |
| ७१ | उनिसा. | उपाध्यायनिरपेक्षानुसारिणी |
| ३६ | कानी. | कामन्दकीयनीतिसारः |
| ३५ | कालिका. | कालिकापुराणम् |
| १० | कौ. | कौटिलीयमर्थशास्त्रम् |
| ३२ | गरुड. | गरुडपुराणम् |
| ४४ | गोरा. | गोविन्दराजीया |
| १ | गौध. | गौतमधर्मसूत्रम् |
| ४९ | गौमि. | गौतमधर्मसूत्रटीका मिताक्षरा |
| १२ | चाद. | चाणक्यनीतिदर्पणः |
| १४ | चानी. | चाणक्यनीतिशास्त्रम् |
| १७ | चाशा. | चाणक्यराजनीतिशास्त्रम् |
| १५ | चासा. | चाणक्यसारसंग्रहः |
| ११ | चासू. | चाणक्यसूत्राणि |
| ६९ | जम. | जयमङ्गला |
| ५६ | दीक. | दीपकलिका |
| ६५ | नन्द. | नन्दिनी |
| ५८ | नाभा. | नारदीयमनुसंहिताभाष्यम् |
| २० | नासं. | नारदीयमनुसंहिता |
| २१ | नास्मृ. | नारदस्मृतिः |
| ६८ | नीटी. | नीलकण्ठी टीका |
| ६२ | नीम. | नीतिमयूखः |
| ३९ | नीवा. | नीतिवाक्यामृतम् |
| ७२ | नीवाटी. | नीतिवाक्यामृतटीका |
| ५५ | पमा. | पराशरमाधवः |
| २३ | पस्मृ. | पराशरस्मृतिः |
| | पा. | पाणिनिसूत्रम् |
| ६४ | बाल. | बालंभट्टी |
| २२ | बासू. | बार्हस्पत्यसूत्रम् |
| २५ | बुस्मृ. | बुधस्मृतिः |
| २४ | बृपसं. | बृहत्पराशरसंहिता |
| ४ | बौध. | बौधायनधर्मसूत्रम् |
| ६७ | बौवि. | बौधायनविवरणम् |
| ३२ | ब्रह्मवै. | ब्रह्मवैवर्तपुराणम् |
| ८ | भा. | महाभारतम्—भाण्डारकरसंस्था-मुद्रितम् |
| ६६ | भाच. | मनुभावार्थचन्द्रिका |
| ८ | भामु. | महाभारतम्—मुम्बईमुद्रितम् |
| ५७ | मच. | मन्वर्थचन्द्रिका |
| २८ | मत्स्य. | मत्स्यपुराणम् |
| ४८ | मभा. | मस्करिभाष्यम् |
| ५२ | ममु. | मन्वर्थमुक्तावलिः |
| ५१ | मवि. | मन्वर्थविवृतिः |
| १८ | मस्मृ. | मनुस्मृतिः |
| २७ | मार्क. | मार्कण्डेयपुराणम् |
| ४१ | मासो. | मानसोल्लासः |
| ४५ | मिता. | मिताक्षरा याज्ञवल्क्यस्मृतिटीका |
| ४३ | मेधा. | मेधातिथिभाष्यम् |
| १९ | यास्मृ. | याज्ञवल्क्यस्मृतिः |
| ४० | युक. | युक्तिकल्पतरुः |
| ३८ | योया. | योगयात्रा |

| | | |
|---|---|---|
| ४७ | **राक.** | राजधर्मकल्पतरुः |
| ६३ | **राकौ.** | राजधर्मकौस्तुभः |
| ६० | **राप्र.** | राजनीतिप्रकाशः |
| ५४ | **रार.** | राजनीतिरत्नाकरः |
| १६ | **लचा.** | लघुचाणक्यः |
| ६ | **वस्मृ.** | वसिष्ठस्मृतिः |
| ९ | **वारा.** | वाल्मीकिरामायणम्—विश्वबन्धु-संपादितम् |
| ९ | **वाराकु.** | वाल्मीकिरामायणम्—कुम्भकोणे संपादितम् |
| ३१ | **विध.** | विष्णुधर्मोत्तरपुराणम् |
| ५३ | **विर.** | विवादरत्नाकरः |
| ४२ | **विश्व.** | विश्वरूपः |
| ७ | **विस्मृ.** | विष्णुस्मृतिः |
| ५९ | **वीमि.** | वीरमित्रोदया |
| १२ | **वृचा.** | वृद्धचाणक्यः |
| ३ | **वृहास्मृ.** | वृद्धहारीतस्मृतिः |
| ६१ | **वै.** | वैजयन्ती |
| ३७ | **शुनी.** | शुक्रनीतिः |
| ७३ | **शुनीटी.** | शुक्रनीतिटीका |
| ७४ | **श्रीमूला.** | श्रीमूला |
| ३० | **स्कन्द.** | स्कन्दपुराणम् |
| २९ | **हरि.** | हरिवंशः |
| २ | **हास्मृ.** | हारीतस्मृतिः |

राजनीतिकाण्डस्य

# *चतुर्थभागीयस्थलनिर्देशाङ्कपरिचयः

**अग्निपुराणम्**— अध्यायः । श्लोकः
**आपस्तम्बधर्मसूत्रम्**— प्रश्नः । कण्डिका । सूत्रम्
**आश्वलायनस्मृतिः**— अध्यायः । श्लोकः
**कामन्दकीयनीतिसारः**— सर्गः । श्लोकः
**कालिकापुराणम्**— अध्यायः । श्लोकः
**कौटिलीयमर्थशास्त्रम्**— अधिकरणम् । अध्यायः
**गरुडपुराणम्**— अंशः । अध्यायः । श्लोकः
**गौतमधर्मसूत्रम्**— अध्यायः । सूत्रम्
**चाणक्यनीतिदर्पणः**— अध्यायः । श्लोकः
**चाणक्यनीतिशास्त्रम्**— श्लोकः
**चाणक्यराजनीतिशास्त्रम्**— अध्यायः । श्लोकः
**चाणक्यसारसंग्रहः**— शतकम् । श्लोकः
**चाणक्यसूत्राणि**— सूत्रम्
**नारदस्मृतिः**— अध्यायः । श्लोकः
**नारदीयमनुसंहिता**— प्रकरणम् । श्लोकः
**नीतिमयूखः**— पृष्ठम्
**नीतिवाक्यामृतम्**— समुद्देशः । सूत्रम्
**पराशरमाधवः**— पृष्ठम्
**पराशरस्मृतिः**— अध्यायः । श्लोकः
**पाणिनिसूत्रम्**— अध्यायः । पादः । सूत्रम्
**बार्हस्पत्यसूत्रम्**— अध्यायः । सूत्रम्
**बुधस्मृतिः**— सूत्रम्
**बृहत्पराशरसंहिता**— अध्यायः । श्लोकः

---

* अत्र केवलं मूलग्रन्थानां निबन्धग्रन्थानां च स्थलनिर्देशाङ्कपरिचयो दत्तः । टीकाग्रन्थानां तु स्थल-निर्देशाङ्कास्तत्तन्मूलग्रन्थीया एव वर्तन्त इत्यतः ते न स्वातन्त्र्येण प्रदत्ताः ।

**बौधायनधर्मसूत्रम्**— प्रश्नः । खण्डः । सूत्रम्

**ब्रह्मवैवर्तपुराणम्**— खण्डः । अध्यायः । श्लोकः

**मत्स्यपुराणम्**— अध्यायः । श्लोकः

**मनुस्मृतिः**— अध्यायः । श्लोकः

**महाभारतम्**— पर्व । अध्यायः । श्लोकः

**मानसोल्लासः**— विंशतिः । श्लोकः

**मार्कण्डेयपुराणम्**— अध्यायः । श्लोकः

**याज्ञवल्क्यस्मृतिः**— अध्यायः । श्लोकः

**युक्तिकल्पतरुः**— पृष्ठम् । श्लोकः

**योगयात्रा**— अध्यायः । श्लोकः

**राजधर्मकल्पतरुः**— पृष्ठम्

**राजधर्मकौस्तुभः**— पृष्ठम्

**राजनीतिप्रकाशः**— पृष्ठम्

**राजनीतिरत्नाकरः**— पृष्ठम्

**लघुचाणक्यः**— अध्यायः । श्लोकः

**वसिष्ठस्मृतिः**— अध्यायः । सूत्रम्

**वाल्मीकिरामायणम्**— काण्डम् । अध्यायः । श्लोकः

**विवादरत्नाकरः**— पृष्ठम्

**विष्णुधर्मोत्तरपुराणम्**— खण्डः । अध्यायः । श्लोकः

**विष्णुस्मृतिः**— अध्यायः । सूत्रम्

**वृद्धचाणक्यः**— अध्यायः । श्लोकः

**वृद्धहारीतस्मृतिः**— अध्यायः । श्लोकः

**शुक्रनीतिः**— अध्यायः । श्लोकः ; चतुर्थाध्याये तु— अध्यायः । प्रकरणम् । श्लोकः

**स्कन्दपुराणम्**— खण्डम् । माहात्म्यम् । अध्यायः । श्लोकः

**हरिवंशः**— पर्व । अध्यायः । श्लोकः

**हारीतस्मृतिः**— अध्यायः । श्लोकः

राजनीतिकाण्डस्य

# चतुर्थभागस्य प्रकरणक्रमेण विषयानुक्रमणिका

## उपायाः

[ पृ. १८८५–१९९४ ]

### सामान्यविचारः

( पृ. १८८५–१९४५ )



### साम

( पृ. १९४६–१९५१ )

तमम् . **मानसोल्लासः**– १९५० पञ्चविधं साम, साम प्रथमोपायः .

## दानम्

### ( पृ. १९५२–१९५५ )

**कौटिलीयमर्थशास्त्रम्**– १९५२ दानलक्षणम् . **मत्स्यपुराणम्**– १९५२ दानं जयोपायः भेदकारणं वशीकरणं च. **अग्निपुराणम्**– १९५२ दानं वशीकरणोपायः, पञ्चविधं दानम्. **कामन्दकीयनीतिसारः**– १९५३ दानं पञ्चविधम्; दानरीतिः . **नीतिवाक्यामृतम्**– १९५४ दानरीतिः . **युक्तिकल्पतरुः**– १९५४ दानं वशीकरणोपायः . **मानसोल्लासः**– १९५४ दानप्रयोगविषयः , षोडशविधं दानम् .

## भेदः

### ( पृ. १९५६–१९६५ )

**कौटिलीयमर्थशास्त्रम्**– १९५६ भेदलक्षणम्; स्वदेशवासिनां परदेशवासिनां च उपायैर्वशीकरणम्. **बृहत्पराशरः**– १९५७ भेदसाधनरीतिः भेदनिरसनरीतिश्च. **मत्स्यपुराणम्**– १९५७ भेदविषयाः दुष्टक्रुद्धभीतावमानिताः, अन्तःकोपनिवारणाय ज्ञातिभेदसाधनम्. **ब्रह्मपुराणम्**– १९५८ भेददोषाः . **अग्निपुराणम्**– १९५८ भेदविषयाः क्रुद्धभीतादयः, ज्ञातिभेदस्येष्टता, त्रिविधो भेदः, भेदोपायाः. **कामन्दकीयनीतिसारः**– १९५९ त्रिविधो भेदः , भेदविषयाः , भेदोपायाः . **शुक्रनीतिः**– १९६४ भेदमहिमा, भेदविषयाः. **नीतिवाक्यामृतम्**– १९६४ भेदलक्षणम्. **युक्तिकल्पतरुः**– १९६४ भेदविषयाः . **मानसोल्लासः**– १९६४ भेदसाध्याः , भेदप्रकाराः .

## दण्डः

### ( पृ. १९६६–१९८८ )

**गौतमः**– १९६६ न्याय्यदण्डत्वम् . **वृद्धहारीतः**– १९६६ न्याय्यदण्डत्वम् , दण्डप्रकाराः , अपराधाद्यनुरूपो दण्डः , अदण्ड्यादण्डने दोषः . **आपस्तम्बः**– १९६७ प्रायश्चित्तीया दण्ड्याश्च, अपराधानुरूपो दण्डः , दण्डने राजाऽधिकृतः . **वसिष्ठः**– १९६७ चत्वारो वर्णाः स्वधर्मापचारे राज्ञा दण्ड्याः , दण्ड्यस्य अदण्डने राजपुरोहितौ प्रायश्चित्तार्हौ. **विष्णुः**– १९६८ दण्डः अपराधानुरूपो राज्ञा प्रणेयः, दण्ड्योत्सर्गे राजा स्वयं दण्डार्हः. **महाभारतम्**– १९६८ दण्डप्रकाराः उपायानां दण्डः प्रधानः . **वाल्मीकिरामायणम्**– १९६९ दण्डस्य उपायता ; दण्डमहिमा ; सान्त्वादि त्रयं शुभम् , युद्धमशुभम् ; १९७० राज्ञः कर्तव्यं न्याय्यदण्डप्रणयनम् . **कौटिलीयमर्थशास्त्रम्**– १९७० दण्डलक्षणम् . **मनुः**– १९७० नित्योद्यतदण्डत्वं राजधर्मः ; १९७१ देशकालादिसापेक्षं दण्डविधानम्; १९७२ अन्याय्यदण्डफलम्; चतुर्विधदण्डस्यानुष्ठानक्रमः ; १९७३ अधार्मिकः पूज्योऽपि स्वयं राजाऽपि च दण्डनीयः , राज्ञो दण्डः सहस्रगुणः . **याज्ञवल्क्यः**– १९७४ धर्मदण्डनाधर्मदण्डनफलानि, अधार्मिको न कश्चिददण्ड्यः; १९७५ चतुर्विधदण्डानां व्यस्तसमस्तानां यथापराधं प्रयोगः ; १९७६ अपराध–देश–कालाद्यनुरोधेन दण्डपातनम् . **नारदः**– १९७६ अपराधिषु यथापराधं दण्डधारणम्; १९७७ दण्डविधिः , दण्ड्यानां वृत्तिसाधनानि न हरणीयानि ; दण्डप्रकाराः . **बृहस्पतिः**– १९७८ चतुर्विधो दण्डः , स यथापराधं कल्पनीयः ; दण्ड्यभेदेन दण्डव्यवस्था. **कात्यायनः**– १९७८ दण्ड्यभेदेन दण्डव्यवस्था, दण्डप्रकाराः . **बृहत्पराशरः**– १९७८ दण्ड्यभेदेय दण्डव्यवस्था, दण्डप्रकाराः, देशकालाद्यनुगुणो दण्डः , दण्डफलम् . **मत्स्यपुराणम्**– १९७९ उपायत्रितयासाध्ये दण्ड उपायः , अधार्मिको न कोऽप्यदण्ड्यः , अदण्ड्यदण्डनफलम् . **विष्णुधर्मोत्तरपुराणम्**– १९७९ स्वविषयदण्डः परविषयदण्डश्चेति दण्डद्वैविध्यम् , परविषयदण्डस्वरूपम् . **अग्निपुराणम्**– १९८० उपायत्रयासाध्ये दण्डप्रयोगः , अन्याय्यदण्डने नाशः , मर्यादानुत्क्रमणं दण्डफलम् , दण्डशब्दव्युत्पत्तिः ; परदेशप्रयोज्यदण्डनिरूपणम् .

## उपेक्षा

**( पृ. १९८९–१९९० )**



## माया

**( पृ. १९९१–१९९४ )**



## इन्द्रजालम्

**( पृ. १९९५ )**



## षाड्गुण्यम्

**[ पृ. १९९६–२२०७ ]**

## सामान्यविचारः

**( पृ. १९९६–२०८१ )**

**शास्त्रम्**– २०५४ षट् गुणाः, षाड्गुण्यद्वैगुण्यविवेकः, गुणे अन्यतमे अवस्थितिः क्षयस्थानवृद्धिनिश्चयानुसारेण; २०५८ द्वयोर्गुणयोस्तुल्यत्वे कतर एकोऽनुष्ठेय इति निर्णयः; २०५९ शक्तितारतम्यानुसारेण षण्णां गुणानामन्यतमस्य तत्र तत्र अवस्थापनम्, निमित्तविशेषेण त्रिविधहीनसंध्यवस्थापनम्; २०६२ अनुग्राह्या मित्रविशेषाः; २०६४ मध्यमे उदासीने राजमण्डले च विषये विजिगीषोः कर्तव्यानि; २०६९ षाड्गुण्यस्य कारणं कार्यं च. **वृद्धचाणक्यः**– २०७० संधेयत्वं विग्राह्यत्वं च कालप्रयुक्तम्. **चाणक्यराजनीतिशास्त्रम्**– २०७० संधिविग्रहविवेकः. **मनुः**– २०७० कार्यानुसारेण द्विविधं षाड्गुण्यं चिन्तनीयम्. **याज्ञवल्क्यः**– २०७१ षण्णां गुणानां यथायोगं प्रयोगः. **बृहत्पराशरः**– २०७२ गुणानां सम्यक् विचार्य प्रयोगः. **बुधः**– २०७२ षाड्गुण्यं राजसामर्थ्यसाधनम्. **आश्वलायनः**– २०७२ षाड्गुण्यप्रयोगः कार्यानुसारेण स्वपरबलाबलपरिज्ञानेन कार्यः. **हरिवंशः** २०७२ षण्णां गुणानां प्रयोगे विवेकः. **विष्णुधर्मोत्तरपुराणम्**– २०७३ द्वैगुण्यं षाड्गुण्यं वा, कालबलविवेकः षाड्गुण्यनिश्चये. **गरुडपुराणम्**– २०७३ संधिविग्रहविवेकः. **अग्निपुराणम्**– २०७३ गुणगणना, संधिविग्रहौ वरौ. **कालिकापुराणम्**– २०७३ षण्णां गुणानां प्रयोगे विवेकः. **कामन्दकीयनीतिसारः**– २०७४ षाड्गुण्यं द्वैगुण्यं त्रैगुण्यमिति पक्षत्रयम्. **शुक्रनीतिः**– २०७५ गुणानां गणना विषयाश्च. **योगयात्रा**– २०७६ षट् गुणाः तेषां स्वरूपं च. **नीतिवाक्यामृतम्**– २०७६ योगक्षेमकारणम्; शक्तित्रयम्; २०७७ गुणगणना; राजकार्यस्वरूपम्; शत्रुपुरुषपरीक्षा; २०७८ लाभतारतम्यविवेकः; शत्रोर्मित्रत्वकरणे युक्तिः; शत्रुपराजये कर्तव्यता; २०७९ शत्रुविश्वासजननोपायाः; विजिगीषुवृत्तम्; २०८० राज्ञा परिहार्या सभा; अर्थोपार्जनरीतिः; योग्यं दण्डप्रणयनम्; असुरवृत्ती राजा; २०८१ त्रिविधः अर्थलाभः. **मानसोल्लासः**– २०८१ षाड्गुण्यप्रयोगज्ञानफलम्.

## संधिः

## (पृ. २०८२–२१३०)

**महाभारतम्**– २०८२ सद्भिः संधिः महार्थकरः; पापसत्त्वेन संधिः परमदुष्करः, त्रिविधः संधिः; २०८३ असंधेयः संधेयश्च. **कौटिलीयमर्थशास्त्रम्**– २०८४ संधिलक्षणम्, संधिकालः; दण्डोपनतसंधयः कोशोपनतसंधयः देशोपनतसंधयश्चेति त्रिविधा हीनसंधयः; २०८५ संधिप्रकाराः तेषां निमित्तानि च; २०८९ मित्रलाभार्थः हिरण्यलाभार्थश्च संधिः; २०९१ मित्रप्रकाराः; २०९२ भूमिलाभार्थः संधिः; २०९५ जनपदनिवेशरहितभूमिसंबद्धः संधिः; २०९९ दुर्गसेतुबन्धवनखनिविविधपथकर्मसु संधिविवेकः; २१०१ दण्डितेन संधात्रा राज्ञा दण्डकस्य संधेयस्य राज्ञोऽनुनयः कर्तव्यः; २१०३ दण्डोपनते दण्डोपनमयितुः राज्ञः वर्तनम्. **चाणक्यसूत्राणि**– २१११ असामर्थ्ये संधिः. **चाणक्यराजनीतिशास्त्रम्**– २११२ संधिरविश्वास्यः. **मनुः**– २११२ संधिः द्विविधः; संधिकालः. **विष्णुधर्मोत्तरपुराणम्**– २११३ संधिलक्षणम्, संधियोग्यो वैरी. **अग्निपुराणम्**– २११३ षोडश संधिप्रकाराः, मुख्याः संधयः; असंधेया विंशतिः पुरुषाः. **कामन्दकीयनीतिसारः**– २११३ संधिकालः, संधिप्रकाराः; २११७ असंधेयाः विंशतिः पुरुषाः; २११९ संधेयाः सप्त पुरुषाः; २१२१ संधिरविश्वास्यः; २१२२ अभियोक्त्रा कथं वर्तितव्यम्; २१२३ असंधेयो हीनो वैरी; वैरिणा बलीयसा कथं वर्तितव्यम्; २१२६ अतिविग्रहो वर्ज्यः, संधिः संदेहे कार्यः, उपायत्रयेण संधौ यतितव्यम्. **शुक्रनीतिः**– २१२७ मित्रताकरणं मुख्यं संधिलक्षणम्, आपत्तौ संधिः कार्यः, संधिसाधनमुपहारः; संधियोग्या राजानः; २१२८ संधिरविश्वास्यः. **नीतिवाक्यामृतम्**– २१२८ संधिलक्षणम्, संधिसाधनम्; २१२९ संधिकालः, संधियोग्या वैरिणः. **युक्तिकल्प-**

**तरुः**– २१२९ संधिलक्षणम्, संधिकालः, संधिप्रतिपालनं कर्तव्यम्, असंधेया वैरिणः. **मानसोल्लासः**– २१२९ संधेया असंधेयाश्च राजानः, चतुर्विधः संधिः.

## विग्रहः

### ( पृ. २१३१–२१४९ )

**महाभारतम्**– २१३१ भेदमूलो विग्रहः; बलिभिर्विग्रहो न कार्यः; विदुरस्य धृतराष्ट्रं प्रति उपदेशः– स्वज्ञातिभिर्विग्रहो न कार्यः. **वाल्मीकिरामायणम्**– २१३३ मित्रेण विग्रहः विनाशकः, विग्रहकारणानि. **कौटिलीयमर्थशास्त्रम्**– २१३३ विग्रहलक्षणम्, विग्रहहेतुः; सलक्षणा विग्रहप्रकाराः. **चाणक्यसूत्राणि**– २१३३ विग्राह्या अविग्राह्याश्च. **चाणक्यनीतिदर्पणः**– २१३४ विग्रहकालः. **चाणक्यनीतिशास्त्रम्**– २१३४ कण्टकेन कण्टकोद्धरणम्. **मनुः**– २१३४ द्विविधो विग्रहः, विग्रहकालः. **विष्णुधर्मोत्तरपुराणम्**– २१३५ विग्रहलक्षणम्, विग्राह्यः अविग्राह्यश्च. **अग्निपुराणम्**– २१३५ विग्रहकालः, विग्रहकारणानि; प्रशमनीया विग्रहाः पञ्च, षोडश अकार्या विग्रहाः, विग्रहकालः. **कालिकापुराणम्**– २१३५ विग्रहार्हकारणानि. **कामन्दकीयनीतिसारः**– २१३५ विग्रहकारणानि, विग्रहार्हकारणानि; २१३६ विग्रहप्रशमनोपायाः; २१३९ विग्रहप्रकाराः; २१४० षोडश विग्रहा वर्ज्याः; २१४१ विग्रहानुकूलप्रतिकूलकालविवेकः; २१४२ प्रशमनीया विग्रहाः कर्तव्या विग्रहाश्च; २१४३ विग्रहार्हानर्हकालविवेकः; २१४५ विग्रहार्हानर्हवैरिविवेकः. **शुक्रनीतिः**– २१४५ विग्रहप्रयोजनम्, विग्रहकालः, विनिग्राह्यवैरिलक्षणानि; २१४६ रिपोः रिपुराष्ट्रस्य च अवेक्षणे रीतिः रिपुविनाशरीतिश्च. **नीतिवाक्यामृतम्**– २१४७ विग्रहार्हानर्हकालविवेकः विग्रहार्हानर्हवैरिविवेकश्च. **मानसोल्लासः**–२१४९ विग्रहार्हवैरिलक्षणम्, अष्टविधो विग्रहः.

## यानम्

### ( पृ. २१५०–२१७६ )

**हारीतः**– २१५० अनुकूलकाले यानम्. **महाभारतम्**– २१५० युद्धं पापिष्ठम्, अनुकूलदेशकालानुसारेण युद्धस्य कर्तव्यता; युद्धे जयपराजयौ अनिश्चितौ; प्रमाददौर्बल्यानवधानदोषवता वैरिणा योद्धव्यम्; २१५१ युद्धविजयो जघन्यः, जनपदस्य योधानां च युद्धानुकूलगुणाः; युद्धेन ईप्सितम्, युद्धानुकूलः विविधो विवेकः. **कौटिलीयमर्थशास्त्रम्**– २१५१ यानलक्षणम्, यानहेतुः, संधिविग्रहपूर्वकाणि यानानि, संभूययानम्; २१५३ यातव्यभेदाः, यातव्यनिश्चयाय प्रकृतिविवेकः क्षयलोभविरागहेतूनां परामर्शेन, संभूययाननिश्चयाय सामवायिकानां गुरुलघुभावचिन्तनम्; २१५७ कर्तव्ये संहितप्रयाणे पूर्वं सहकारिणा कर्तव्यः संधिविशेषः; राज्ञः यातव्यस्य प्रत्यभियातुर्विजिगीषोः कर्तव्यानि; २१५९ पार्ष्णिग्राहस्य न्यूनाधिकलाभयोर्विवेकः; २१६४ यातव्यस्य अपचितशक्तीनां प्रपूरणविचारः. **मनुः**– २१६७ यानद्वैविध्यम्; २१६८ युद्धानुकूला बलगुणाः; संधिपूर्वकं यानम्; २१६९ मित्रलाभः श्रेयान्; २१७० दुरुच्छेदस्य अरेः लक्षणानि; इष्टस्य उदासीनस्य लक्षणानि. **याज्ञवल्क्यः**– २१७० युद्धानुकूला परराष्ट्रस्थितिः आत्मस्थितिश्च. **बार्हस्पत्यसूत्रम्**– २१७१ समे शत्रौ यानम्. **बृहत्पराशरः**– २१७१ यानानुकूलपरराष्ट्रस्थितिः. **विष्णुधर्मोत्तरपुराणम्**– २१७१ यानलक्षणम्, हितकरं यानम्. **अग्निपुराणम्**– २१७१ पञ्चविधं यानम्. **कामन्दकीयनीतिसारः**– २१७१ युक्तयानलक्षणम्, पञ्चविधं यानम्. **शुक्रनीतिः**– २१७४ पञ्चविधं यानम्. **योगयात्रा**– २१७५ यानलक्षणम्, यानोद्देशाः, यानानुकूलगुणः अभियोक्ता. **नीतिवाक्यामृतम्**– २१७५ यानलक्षणम्, यानानुकूलः कालः. **युक्तिकल्पतरुः**– २१७६ यानानुकूलप्रतिकूलदेशकालविवेकः. **मानसोल्लासः**– २१७६ अभियोगयोग्या वैरिदोषाः, यानानुकूलः कालः; सप्त यान-

## आसनम्

( पृ. २१७७–२१८४ )



## द्वैधीभावः

( पृ. २१८५–२१९३ )



## संश्रयः

( पृ. २१९४–२२०७ )



## कार्याध्यक्षाः

( पृ. २२०८–२३५२ )

२३३५ चाररक्षाधिकृतादीनां गुणाः . **मत्स्यपुराणम्**– २३३६ अध्यक्षाणामवान्तराधिकृतानां च गुणाः . **गरुडपुराणम्**– २३३८ अध्यक्षाणामवान्तराधिकृतानां च गुणाः . **अग्निपुराणम्**– २३३९ अध्यक्षादीनां गुणाः यथायोगं नियोजनं च. **कालिकापुराणम्**– २३३९ कार्याधिकृतानां गुणाः . **कामन्दकीयनीतिसारः**– २३३९ विविधेषु कर्मसु परीक्षितभृत्यनियोजनम्, अग्नाविव राज्ञि भृत्यवर्तनमिष्टम् . **शुक्रनीतिः**– २३४० पुरुषत्रयनियुक्तिः प्रत्येकमधिकारे, अधिकारपरिवर्तनव्यवस्था; विविधकार्याध्यक्षाणां नियुक्तिः तेषां गुणाश्च; २३४७ दुर्गशस्त्रास्त्ररथमार्गादिकारिणां नियुक्तिः ; २३४८ यामिकनियुक्तिः यामिककार्याणि च. **नीतिवाक्यामृतम्**– २३४९ नियोज्यानां गुणा दोषाश्च. **युक्तिकल्पतरुः**– २३५१ अध्यक्षादीनां परीक्षापूर्वकं नियोजनं गुणाश्च. **मानसोल्लासः**– २३५१ अध्यक्षादीनां गुणाः . **अनिर्दिष्टकर्तृकवचनानि**– २३५२ अध्यक्षादीनां गुणाः यथागुणं नियोजनं च; नियोज्या अध्यक्षाः अष्टादश.

## सेनापतिः

### (पृ. २३५३–२३६८)

**महाभारतम्**– २३५३ सेनापतिगुणाः ; युद्धे जयार्थमेक एव नियोज्यः क्षत्रियः सेनापतिः ; भीष्मस्य सेनापतित्वेन वरणमभिषेकश्च कौरवपक्षे; २३५५ सप्त सेनापतयः सर्वसेनापतिश्च पाण्डवपक्षे; २३५६ अभिषिक्तो द्रोणः सेनापतिः कौरवपक्षे; २३५७ सुभगानर्तितैः सौभाग्यवतीनृत्यैः कर्णस्य सैनापत्याभिषेकः . **वाल्मीकिरामायणम्**– २३५९ सेनापतिगुणाः . **कौटिलीयमर्थशास्त्रम्**– २३५९ सेनापतिकर्तव्यानि . **चाणक्यराजनीतिशास्त्रम्**– २३६० सेनाध्यक्षगुणाः . **मनुः**– २३६० सेनापतिबलाध्यक्षनियोजनम् . **याज्ञवल्क्यः**– २३६० राज्ञः कर्तव्यं सेनान्या सह बलचिन्तनम् . **बृहस्पतिः**– २३६० सेनापतिगुणाः . **मत्स्यपुराणम्**– २३६० ब्राह्मणः क्षत्रियो वा सैनापत्यार्हः , सेनापतिगुणाः . **गरुडपुराणम्**– २३६१ बलाबलज्ञानं सेनापतिगुणः . **अग्निपुराणम्**– २३६१ ब्राह्मणः क्षत्रियो वा सैनापत्यार्हः , सेनापतिगुणौ. **कामन्दकीयनीतिसारः**– २३६१ सेनापतेर्गुणसंपत् , सेनापतेर्युद्धे कर्तव्यम् . **शुक्रनीतिः**– २३६५ सेनापतिगुणाः , सर्वे वर्णाः संकरजा म्लेच्छाश्च सेनापतिपदार्हाः , सेनाविभागप्रविभागाधिपनियोजनम् , सैन्यशिक्षा च. **नीतिवाक्यामृतम्**– २३६७ सेनापतेर्गुणा दोषाश्च. **युक्तिकल्पतरुः**– २३६८ सेनापतेर्गुणाः . **मानसोल्लासः**– २३६८ सेनापतेर्गुणाः .

## राजनीतिकाण्डस्य
# चतुर्थभागस्य ऋष्यादिक्रमेण विषयानुक्रमणिका

षाड्गुण्यम्— सामान्यविचारः—

षाड्गुण्यस्य त्रिवर्गद्वयस्य च विवेकः राज्ञा कर्तव्यः ; शत्रुर्वध्यः, नावमन्तव्यः नोपेक्षणीयश्च १९९६. स्थान-वृद्धिक्षयविवेकः ; युधिष्ठिरकृष्णसंवादः— संधिप्रशंसा युद्ध-दोषविवरणं मित्रकार्यं च १९९७. संधिर्हीयमानेन विग्रहश्च वर्धमानेन कार्यः ; विग्रहकालः ; संधिविग्रह-कालौ २००४. राज्ञा अन्ये राजानोऽन्ववेक्षणीयाः २००५. क्षीणबलाय क्षेमदर्शनाम्ने राजपुत्राय कालक-वृक्षीयमुनेरुपदेशः— धार्मिकस्य हीनसंपदो राज्ञः निवृत्ति-र्धर्मः, अथवा अर्थेप्सोः पराभिभूतस्य राज्ञः हीनसंपदः निकृतिर्दम्भयोगाश्च जयोपायाः, निकृतिदम्भयोगापवर्जि-केन शुद्धसत्त्वेन राज्ञा सुवृत्तो राजा आश्रयणीयः २००६. दुर्बलस्य राज्ञः बलीयसा विरोधे वैतसवृत्तिः श्रेयस्करी, आत्मरक्षणाय च संधिः कर्तव्यः २०१४. आपदि संधि-संग्रामयोर्विवेकः २०१६. कार्याकार्यनिश्चयाय दीर्घदर्शनं प्राप्तकालज्ञानं च इष्टम् २०१७. संधिविग्रहनीतिः मार्जार-मूषकाख्यानोपदिष्टा यथा— शत्रुभिर्ग्रस्तेन बलवता अमित्रेण सह दुर्बलेनापि संधिर्विधेयः यावदापत्कालः, निर्गमभयात् प्रशान्तादपि बलवतः अमित्रात् भेतव्यम्, यथाकालं संधिः यथाकालं विग्रहश्च युक्तः २०१९. ब्रह्मदत्तपूजनीसंवादे संधिविग्रहनीतिः यथा— अपकारकर्त्रा अपकारपीडितो नैव विश्वास्यः, तयोः संधिर्निष्फलः, परस्परकृतवैराणां परस्परमविश्वासो युक्तः संधिश्च निष्फलः २०३४. कणिङ्कभरद्वाजप्रोक्ता नीतिः षाड्गुण्यविषयिणी २०४२. षाड्गुण्यानुष्ठाने बलाबलविवेकः श्रेयान् २०४७. षाड्गुण्यविवेकार्थं मण्डलानि तेषां बलानि द्विसप्तति-गुणाश्च ज्ञातव्याः, संधिविग्रहयाननीतिः २०५२.

षाड्गुण्यम्— संधिः—

सद्भिः संधिः महार्थकरः ; पापसत्त्वेन संधिः परमदुष्करः, त्रिविधः संधिः २०८२. असंधेयः संधेयश्च २०८३.

षाड्गुण्यम्— विग्रहः—

भेदमूलो विग्रहः ; बलिभिर्विग्रहो न कार्यः ; विदुरस्य धृतराष्ट्रं प्रति उपदेशः— स्वज्ञातिभिर्विग्रहो न कार्यः २१३१.

षाड्गुण्यम्—यानम्—

युद्धं पापिष्ठम्, अनुकूलदेशकालानुसारेण युद्धस्य कर्तव्यता ; युद्धे जयपराजयौ अनिश्चितौ ; प्रमाददौर्बल्या-नवधानदोषवता वैरिणा योद्धव्यम् २१५०. युद्धविजयो जघन्यः, जनपदस्य योधानां च युद्धानुकूलगुणाः, युद्धेन ईप्सितम्, युद्धानुकूलः विविधो विवेकः २१५१.

षाड्गुण्यम्— संश्रयः—

संश्रयस्वरूपम् २१९४.

कार्याध्यक्षाः—

प्रश्नद्वारा सूचितानि राज्ञा नियुक्तानां कर्तव्यानि कार्यानुष्ठानं परस्पररक्षणम् अनुज्ञयैव विषयसेवनं कोश-कोष्ठवाहनदारायुधायपालनम् आयव्ययलेखनं च, निरप-राधरक्षणम् अधिकारानुरूपनियुक्तिः च राज्ञः कर्तव्यम्, संहत्य कार्यनिर्वृत्तिश्च नियुक्तानां कर्तव्यम् ; उपधाभिः अवञ्चितानां राजपुरुषाणां दूरागतवणिग्भिः पण्यैश्च कर्त-व्यता; कार्यभेदेन नियोक्तव्यानां लक्षणानि, अनियोक्तव्यानां दोषाः ; गुणसंपन्नाध्यक्षद्वारपालशिरोरक्षकादीनां नियुक्तिः २२०९.

सेनापतिः—

सेनापतिगुणाः ; युद्धे जयार्थमेक एव नियोज्यः क्षत्रियः सेनापतिः ; भीष्मस्य सेनापतित्वेन वरणमभिषेक-श्च कौरवपक्षे २३५३. सप्त सेनापतयः सर्वसेनापतिश्च पाण्डवपक्षे २३५५. अभिषिक्तो द्रोणः सेनापतिः कौरव-पक्षे २३५६. कर्णस्य सैनापत्याभिषेकः २३५७.

## वाल्मीकिरामायणम्

उपायाः— सामान्यविचारः—

उपायचतुष्टयप्रयोगः पात्रविवेकेन १९१५.

उपायाः— दण्डः—

दण्डस्य उपायता; दण्डमहिमा; सान्त्वादि त्रयं शुभम्, युद्धमशुभम् १९६९. राज्ञः कर्तव्यं न्याय्यदण्ड-प्रणयनम् १९७०.

षाड्गुण्यम्— सामान्यविचारः—

संधिविग्रहनीतिः २०५४.

## कौटिलीयमर्थशास्त्रम्

## चाणक्यसूत्राणि



## चाणक्यनीतिदर्पणः



## वृद्धचाणक्यः

## नारदः



## बृहस्पतिः



## बार्हस्पत्यसूत्रम्



## कात्यायनः



## उशना



## बृहत्पराशरः



## बुधः



## आश्वलायनः

## मत्स्यपुराणम्



## हरिवंशः



## विष्णुधर्मोत्तरपुराणम्



## गरुडपुराणम्



## ब्रह्मपुराणम्



## अग्निपुराणम्

## कालिकापुराणम्



## कामन्दकीयनीतिसारः

## शुक्रनीतिः

## योगयात्रा



## नीतिवाक्यामृतम्



## युक्तिकल्पतरुः

## मानसोल्लासः



## अनिर्दिष्टकर्तृकवचनानि

# शुद्धिपत्रम्

| पृष्ठम् | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| १८९१ | १ | १ | भतिमि | भूतिमि |
| ,, | ,, | १० | क्षिप्र | क्षिप्रं |
| ,, | २ | ९ | विदर | विदुर |
| ,, | ,, | १२ | शक्नवः | शक्नुवः |
| १८९५ | १ | २४ | पथा | पृथा |
| ,, | ,, | २५ | नसका | न सका |
| ,, | ,, | ,, | त्यय ग | त्ययं ग |
| १८९६ | २ | २३ | दुखं | दुःखं |
| १९०१ | ,, | १० | स्त्रेरुचा | स्त्रैरुचा |
| १९०६ | १ | ९ | पीर्थः | पील्यर्थः |
| १९४५ | ,, | ६ | योपन्ने | योपपन्ने |
| १९६६ | २ | १२ | वृद्धहारीतः | वृद्धहारीतः<br>न्याय्यदण्डत्वम्, दण्डप्रकाराः, अपराधाद्यनुरूपो दण्डः, अदण्ड्यादण्डने दोषः |
| १९६७ | १ | ४ | शास्त्र | शास्त्रै |
| ,, | २ | ८ | दवप्र | दैवप्र |
| १९७७ | ,, | ३२ | पठितो | पठितौ |
| १९९१ | ,, | १० | वय | वर्य |
| १९९७ | ,, | ९ | काय | कार्य |
| १९९९ | ,, | २६ | गहणा | गर्हणा |
| २०२२ | १ | १४ | व्यसन | व्यसनं |
| २०२३ | २ | १३ | मदं | मद् |
| ,, | ,, | १६ | वैडूय | वैडूर्य |
| २०४५ | ,, | १२ | घाती | घाती |
| २०७२ | ,, | २५ | हरिवंशपुराणम् | हरिवंशः |
| २०७३ | ,, | १२ | हो वरा | हौ वरौ |
| २०९९ | १ | १ | मित्र | मित्रं |
| २१७५ | २ | ५ | नीतिवाक्यामृतम् | नीतिवाक्यामृतम्<br>यानलक्षणम्, यानानुकूलः कालः |
| २१८३ | ,, | ३० | सवेषु | सर्वेषु |
| २२९५ | ,, | १५ | णीरम् | णीरन् |
| २३१८ | ,, | १९ | च नियोज्य | नियोज्य |
| २३२५ | ,, | १ | व्रहिन | बहिर्न |
| २३२७ | ,, | १८ | दक्षोः | दक्षो |
| २३३० | ,, | ३० | व्रोद्धत | व्रोद्धृत |
| २३३२ | ,, | ११ | परीच्छे | परिच्छे |
| २३५३ | ,, | २० | ५।५६।६ | ५।१५६।६ |
| २३६४ | १ | ३१ | शत्रप | शत्रुप |

# धर्मकोशः

## राजनीतिकाण्डम्

### उपायाः

### सामान्यविचारः

**विष्णुः**

उपायप्रकाराः तत्प्रयोगलक्ष्याश्च

**[1]शत्रुमित्रोदासीनमध्यमेषु साममेददानदण्डान् यथार्हं यथाकालं प्रयुञ्जीत ॥**

मध्यमः शत्रुविजिगीषुमध्यवर्ती नृपः । वै.

**शङ्खलिखितौ**

शत्रुदेशे उपायाः प्रयोज्याः

**[2]परविषयभेदः सामादिभिरुपायैः ॥**

परविषयभेदः परविषयाणां शत्रुसंबन्धिनाममात्यादीनां भेदः सामादिभिरुपायैः । कार्य इति शेषः ।

राप्र. १८६

**महाभारतम्**

कुटिलनीतिः कणिकेन धृतराष्ट्राय प्रोक्ता जंबुकाख्यानं च

**वैशम्पायन उवाच–**

**[3]श्रुत्वा पाण्डुसुतान्वीरान्बलोद्रिक्तान्महौजसः ।**
**धृतराष्ट्रो महीपालश्चिन्तामगमदातुरः ॥**

उद्रिक्तान् अधिकान् । नीटी.

**तत आहूय मन्त्रज्ञं राजशास्त्रार्थवित्तमम् ।**
**कणिकं मन्त्रिणां श्रेष्ठं धृतराष्ट्रोऽब्रवीद्वचः ॥**

राजशास्त्रं दण्डनीतिशास्त्रम् । नीटी.

**धृतराष्ट्र उवाच–**

**उत्सक्ताः पाण्डवा नित्यं तेभ्योऽसूये द्विजोत्तम ।**
**तत्र मे निश्चिततमं संधिविग्रहकारणम् ।**
**कणिक त्वं ममाऽऽचक्ष्व करिष्ये वचनं तव ॥**

उत्सक्ताः उत्कर्षेण सर्वत्र व्याप्ताः । षञ्ज सङ्गे, अस्य रूपम् । असूये गुणवत्त्वेऽपि दोषवत्त्वेन पश्यामि । तेभ्यः इति चतुर्थ्या तेषु कोपादेवं पश्यामि, न तु अज्ञानादिति गम्यते । 'क्रुधद्रुह०' (पा. सू. १।४।३७) इति स्मरणात् । पाण्डवैः सह संधिकारणं विग्रहकारणं वा तयोरन्यतरप्रयोजकं संधिविग्रहकारणं त्वं ममाऽऽचक्ष्व । नीटी.

**वैशम्पायन उवाच–**

**स प्रसन्नमनास्तेन परिपृष्टो द्विजोत्तमः ।**
**उवाच वचनं तीक्ष्णं राजशास्त्रार्थदर्शनम् ॥**
**शृणु राजन्निदं तत्र प्रोच्यमानं मयाऽनघ ।**
**न मेऽभ्यसूया कर्तव्या श्रुत्वैतत्कुरुसत्तम ॥**

ब्राह्मणोऽयं तीक्ष्णमेवोपायं वदतीति प्रसक्ताऽभ्यसूया न कार्येत्याह– न म इति । नीटी.

**नित्यमुद्यतदण्डः स्यान्नित्यं विवृतपौरुषः ।**
**अच्छिद्रश्छिद्रदर्शी स्यात्परेषां विवरानुगः ॥**

भीमसेनदुर्योधनयोरर्जुनकर्णयोश्च वैरस्य अचिकित्स्यत्वात् असंभावनीयं संधिं त्यक्त्वा विग्रहमेवाऽऽश्रित्या-

---

(१) विस्मृ. ३।३८.

(२) राक. ३१; राप्र. १८६.

(३) भाम. १।१४०।१–९३.

ऽऽह— नित्यमिति । उद्यतो न तु क्षिप्तो दण्डो येन स तथा । अपकृष्टान् भीषयेदेव, न तूच्छिन्द्यात् न वा उपेक्षेतेति भावः । समेषु नित्यं विवृतपौरुषः स्यात् । समानम् उत्कृष्टं बलं संपाद्य हन्यादेवेत्यर्थः । उत्कृष्टेषु च शत्रुषु अच्छिद्रः स्यात् । स्वस्य न्यूनं कोशबलादिकं ते यथा न जानन्ति तथा स्थेयम् । छिद्रदर्शी दूरामात्यत्व-प्रतिकूलदेशावस्थितत्वादीनि छिद्राणि तद्दर्शी स्यात् । तथा भूत्वा च तदेव विवरमनुसृत्य शत्रुं हन्यादित्याह— परेषां विवरानुग इति । नीटी.

**नित्यमुद्यतदण्डाद्धि भृशमुद्विजते जनः ।**
**तस्मात्सर्वाणि कार्याणि दण्डेनैव विधारयेत् ॥**

अस्य श्लोकस्याऽऽद्यं पादं व्याचष्टे— नित्यमिति । नीटी.

**नास्य च्छिद्रं परः पश्येच्छिद्रेण परमन्वियात् ।**
**गूहेत्कूर्म इवाङ्गानि रक्षेद्विवरमात्मनः ॥**

तस्यैवोत्तरार्धं व्याचष्टे— नास्येति । अङ्गानि सहाय-साधनोपायादीनि गूहेत् संवृणुयात् । तथा चैनम् अगणयन् शत्रुः छिद्रे तैरेवाङ्गैः प्रहर्तव्य इति भावः । आत्मनो विवरं रक्षेत् गूहेत् । नीटी.

**नासम्यक्कृतकारी स्यादुपक्रम्य कदाचन ।**
**कण्टको ह्यपि दुश्छिन्न आस्रावं जनयेच्चिरम् ॥**

तथा स्वयं सम्यक् कात्स्न्र्येन कृतं निष्पादितं कार्यं तत्करणशीलः स्यात् । शत्रुशेषं नावशेषयेदित्यर्थः । तत्र दृष्टान्तः— कण्टक इति । दुश्छिन्नः अर्धच्छिन्नः । आस्रावं व्रणम् । नीटी.

**वधमेव प्रशंसन्ति शत्रूणामपकारिणाम् ।**
**सुविदीर्णं सुविक्रान्तं सुयुद्धं सुपलायितम् ॥**
**आपद्यापदि काले च कुर्वीत न विचारयेत् ।**
**नावज्ञेयो रिपुस्तात दुर्बलोऽपि कथंचन ॥**

उपसंहरति— वधमिति । कथं वधः कर्तव्य इत्याह— सुविदीर्णमिति । सुविक्रान्तमपि शत्रुं काले आपदि आपन्नमालम्ब्य सुविदीर्णं विनष्टं कुर्वीत । तथा सुयुद्ध-मपि शत्रुम् आपदि काले सुपलायितं कुर्वीत । 'यस्य च भावेन भावलक्षणम्' (पा. सू. २।३।३७) इति सप्तमी । आपदा शत्रोर्विदारणकालो लक्षणीय इत्यर्थः । आपदि आपदीति द्वित्वं यदा शत्रोरापत् तदा तदेत-त्कर्तव्यम्, न तु अनुबन्धादिकं सौभ्रात्रादिकं वा विचार-येत् । सार्धश्लोकः । मध्यमं प्रति एवमुक्त्वा अधमोऽपि नोपेक्षणीय इत्याह— नावज्ञेय इति । नीटी.

**अल्पोऽप्यग्निर्वनं कृत्स्नं दहत्याश्रयसंश्रयात् ।**
**अन्धः स्यादन्धवेलायां बाधिर्यमपि चाऽऽश्रयेत् ॥**

आश्रयः दुर्गादिः इन्धनम् अग्नेः, तस्य संश्रयात् बलात् । आश्रयाभावे तु स किं कुर्यात्तत्राऽऽह—अन्ध इति । स हि अन्धवेलायां रात्रौ, 'अन्धं तु तिमिरे क्लीबे' इति मेदिनी, सामर्थ्यप्रतिघातसमये अन्धः हीनोपकरणः स्यात् भवेत् । शस्त्रं त्यक्त्वा शत्रुं शरण-मेतीत्यर्थः । बाधिर्यमपि चाऽऽश्रयेत् । तदानीं धिक्कृतो-ऽपि अश्रुतवदेव तत्कृत्वा क्षमेत । नीटी.

**कुर्यात्तृणमयं चापं शयीत मृगशायिकाम् ।**
**सान्त्वादिभिरुपायैस्तु हन्याच्छत्रुं वशे स्थितम् ॥**

अयं शत्रुः चापं तृणमयं तृणवन्निष्प्रयोजनं कुर्यात् । क्षात्रं धर्मं त्यक्त्वा शत्रुगृहे भिक्षाभुगपि स्यादित्यर्थः । ननु सिद्धस्तर्हि पुरुषार्थ इति चेत्तत्राऽऽह— शयीत मृग-शायिकाम् । मृगहन्तुः शय्यां शयीत शेते । यथा व्याधः मृगान् विश्वासयितुं मृषा निद्राति, विश्वस्तेषु च तेषु प्रहरति, एवं स हन्तुमेव आकारं गोपयतीत्यर्थः । उपसं-हरति— सान्त्वेति । तु तस्मात् । तमेवं कपटेन वशे स्थितं स्वयमपि सान्त्वादिना विश्वास्य हन्यादेवेत्यर्थः । नीटी.

**दया न तस्मिन्कर्तव्या शरणागत इत्युत ।**
**निरुद्विग्नो हि भवति न हताज्जायते भयम् ॥**
**हन्यादमित्रं दानेन तथा पूर्वापकारिणम् ।**
**हन्यात्त्रीन् पञ्च सप्तेति परपक्षस्य सर्वशः ॥**
**मूलमेवाऽऽदितश्छिन्द्यात्परपक्षस्य नित्यशः ।**
**ततः सहायांस्तत्पक्षान्सर्वांश्च तदनन्तरम् ॥**

बलाधिकमुद्दिश्याऽऽह— हन्यादिति । अमित्रं सहजशत्रुं दायादं दानेन तत्परिचारकान् वशीकृत्य विषाद्युपायै-र्हन्यात् । तथा संप्रति दासभूतमपि पूर्वापकारिणं हन्यादेवे-

त्युक्तं भवति । अत्रोपायमाह— हन्यादिति । परपक्षस्य क्लृप्तान् ऐश्वर्यमन्त्रोत्साहान् । ऐश्वर्यं तदीयदुर्गाद्याक्रमणेन । मत्रं चारैः । उत्साहम् आप्तद्वारा तेजोवधेन । तथा पञ्चैते त्वया यौवराज्याद्भ्रंशनीया इति भावः (?) । तथा पञ्च 'अमात्यराष्ट्रदुर्गाणि कोशो दण्डश्च पञ्चमः' इति । प्रकृतिपञ्चकहनने शत्रोरैश्वर्यभ्रंशो भवतीत्यर्थः । दण्डोऽत्र सैन्यम् । 'साम्ना दानेन भेदेन दण्डेनोद्बन्धनेन वा । विषेण वह्निना वाऽपि प्रकृतीः पञ्च निर्हरेत् ॥' इत्याह— सप्तेति । उद्बन्धनं प्रमत्तस्य पाशेन मारणम् । यद्वा उद्बन्धनादिना मूलं शत्रुमेव नाशयेत् । अन्नपानताम्बूलादिद्वारा तद्भृत्यान् भेदयित्वा विषादिना नाशयेत्, किमितरैरित्याह— मूलमेवेति । नीटी.

**छिन्नमूले ह्यधिष्ठाने सर्वे तज्जीविनो हताः ।**
**कथं नु शाखास्तिष्ठेरंश्छिन्नमूले वनस्पतौ ॥**
**एकाग्रः स्यादविवृतो नित्यं विवरदर्शकः ।**
**राजन्नित्यं सपत्नेषु नित्योद्विग्नः समाचरेत् ॥**

एकाग्रः एकः शत्रुरेव अग्रे दृष्टिगोचरः यस्य तादृशः स्यात् । अन्यत्र मनो न दद्यात् । अविवृतः गुप्ताङ्गः । विवरदर्शकः परच्छिद्रं द्रष्टुमित्यर्थः । नित्योद्विग्नः विश्वासं कृत्वा क्वचिदपि निश्चितो न भवेदित्यर्थः । 'दर्शकः' इति क्रियायां क्रियार्थायां ण्वुल् । नीटी.

**अग्न्याधानेन यज्ञेन काषायेण जटाजिनैः ।**
**लोकान्विश्वासयित्वैव ततो लुम्पेद्यथा वृकः ॥**

दम्भादिनाऽपि शत्रुर्जेय इत्याह— अग्न्याधानेनेति । नीटी.

**अङ्कुशं शौचमित्याहुरर्थानामुपधारणे ।**
**आनाम्य फलितां शाखां पक्वं पक्वं प्रशातयेत् ॥**

अङ्कुशम् अङ्कुशवत्परचित्ताकर्षणम् । शौचं अग्न्याधानादि । अत्र दृष्टान्तः— आनाम्येति । आनामयित्वा । नीटी.

**फलार्थोऽयं समारम्भो लोके पुंसां विपश्चिताम् ।**
**वहेदमित्रं स्कन्धेन यावत्कालस्य पर्ययः ॥**

एतत्प्रयोजनमाह— फलार्थ इति । फलं शत्रुवधः प्रसिद्धं च । सेवया निर्दयत्वेन शत्रुं हन्यादित्याह— वहेदित्यादिना । नीटी.

**ततः प्रत्यागते काले भिन्द्याद्घटमिवाश्मनि ।**
**अमित्रो न विमोक्तव्यः कृपणं बह्वपि ब्रुवन् ॥**
**कृपा न तस्मिन्कर्तव्या हन्यादेवापकारिणम् ।**
**हन्यादमित्रं सान्त्वेन तथा दानेन वा पुनः ॥**
**तथैव भेददण्डाभ्यां सर्वोपायैः प्रशातयेत् ।**

**धृतराष्ट्र उवाच—**

**कथं सान्त्वेन दानेन भेदैर्दण्डेन वा पुनः ॥**
**अमित्रः शक्यते हन्तुं तन्मे ब्रूहि यथातथम् ।**

**कणिक उवाच—**

**शृणु राजन्यथावृत्तं वने निवसतः पुरा ॥**
**जम्बुकस्य महाराज नीतिशास्त्रार्थदर्शिनः ।**
**अथ कश्चित्कृतप्रज्ञः शृगालः स्वार्थपण्डितः ॥**
**सखिभिर्न्यवसत्सार्धं व्याघ्राखुवृकबभ्रुभिः ।**
**तेऽपश्यन्विपिने तस्मिन्बलिनं मृगयूथपम् ॥**

बभ्रुः नकुलः । मृगयूथपं महान्तं हरिणम् । नीटी.

**अशक्ता ग्रहणे तस्य ततो मन्त्रममन्त्रयन् ।**

**जम्बुक उवाच—**

**असकृद्यतितो ह्येष हन्तुं व्याघ्र वने त्वया ॥**
**युवा वै जवसंपन्नो बुद्धिशाली न शक्यते ।**
**मूषिकोऽस्य शयानस्य चरणौ भक्षयत्वयम् ॥**
**अथैनं भक्षितैः पादैर्व्याघ्रो गृह्णातु वै ततः ।**
**ततो वै भक्षयिष्यामः सर्वे मुदितमानसाः ॥**
**जम्बुकस्य तु तद्वाक्यं तथा चक्रुः समाहिताः ।**
**मूषिकाऽऽभक्षितैः पादैर्मृगं व्याघ्रोऽवधीत्तदा ॥**

मूषिकेण आ ईषत् भक्षितैः । नीटी.

**दृष्ट्वैवाऽऽचेष्टमानं तु भूमौ मृगकलेवरम् ।**
**स्नात्वाऽऽगच्छत भद्रं वो रक्षामीत्याह जम्बुकः ॥**
**शृगालवचनात्तेऽपि गताः सर्वे नदीं ततः ।**
**स चिन्तापरमो भूत्वा तस्थौ तत्रैव जम्बुकः ॥**
**अथाऽऽजगाम पूर्वं तु स्नात्वा व्याघ्रो महाबलः ।**
**ददर्श जम्बुकं चैव चिन्ताकुलितमानसम् ॥**

व्याघ्र उवाच–
किं शोचसि महाप्राज्ञ त्वं नो बुद्धिमतां वरः ।
अशित्वा पिशितान्यद्य विहरिष्यामहे वयम् ॥
जम्बुक उवाच–
शृणु मे त्वं महाबाहो यद्वाक्यं मूषिकोऽब्रवीत् ।
धिग्बलं मृगराजस्य मयाऽद्यायं मृगो हतः ॥
मृगराजस्य व्याघ्रस्य । नीटी.
मद्बाहुबलमाश्रित्य तृप्तिमद्य गमिष्यति ।
गर्जमानस्य तस्यैवमतो भक्ष्यं न रोचये ॥
व्याघ्र उवाच–
ब्रवीति यदि स ह्येवं काले ह्यस्मिन्प्रबोधितः ।
स्वबाहुबलमाश्रित्य हनिष्येऽहं वनेचरान् ॥
खादिष्ये तत्र मांसानि इत्युक्त्वा प्रस्थितो वनम् ।
एतस्मिन्नेव काले तु मूषिकोऽप्याजगाम ह ॥
तमागतमभिप्रेत्य शृगालोऽप्यब्रवीद्वचः ।
जम्बुक उवाच–
शृणु मूषिक भद्रं ते नकुलो यदिहाब्रवीत् ॥
मृगमांसं न खादेयं गरमेतन्न रोचते ।
मूषिकं भक्षयिष्यामि तद्भवाननुमन्यताम् ॥
गरं गरवत् दुष्पचम्, व्याघ्रामिषत्वात् । नीटी.
तच्छ्रुत्वा मूषिको वाक्यं संत्रस्तः प्रगतो बिलम् ।
ततः स्नात्वा स वै तत्र आजगाम वृको नृप ॥
तमागतमिदं वाक्यमब्रवीज्जम्बुकस्तदा ।
मृगराजो हि संक्रुद्धो न ते साधु भविष्यति ॥
सकलत्रस्त्विहाऽऽयाति कुरुष्व यदनन्तरम् ।
एवं संचोदितस्तेन जम्बुकेन तदा वृकः ॥
ततोऽवलुम्पनं कृत्वा प्रयातः पिशिताशनः ।
एतस्मिन्नेव काले तु नकुलोऽप्याजगाम ह ॥
अवलुम्पनं गात्रसंकोचनम् । वर्त्मान्तरेण गमनमित्यन्ये । नीटी.
तमुवाच महाराज नकुलं जम्बुको वने ।
स्वबाहुबलमाश्रित्य निर्जितास्तेऽन्यतो गताः ॥
मम दत्त्वा नियुद्धं त्वं भुङ्क्ष्व मांसं यथेप्सितम् ।
नकुल उवाच–
मृगराजो वृकश्चैव बुद्धिमानपि मूषिकः ॥
निर्जिता यत्त्वया वीरास्तस्माद्वीरतरो भवान् ।
न त्वयाऽप्युत्सहे योद्धुमित्युक्त्वा सोऽप्युपागमत् ॥
कणिक उवाच–
एवं तेषु प्रयातेषु जम्बुको हृष्टमानसः ।
खादति स्म तदा मांस*मेकस्मिन्मन्त्रनिश्चयात् ॥
एवं समाचरन्नित्यं सुखमेधेत भूपतिः ।
भयेन भेदयेद्भीरुं शूरमञ्जलिकर्मणा ॥
लुब्धमर्थप्रदानेन समं न्यूनं तथौजसा ।
एवं ते कथितं राजन् शृणु चाप्यपरं तथा ॥
भयेनेति । अत्र व्याघ्रस्य साम्ना, आखुवृकयोः व्याघ्राद्भयदर्शनेन, नकुलस्य ओजसा स्वसामर्थ्येन च बुद्धिभेदः कृतः । नीटी.
पुत्रः सखा वा भ्राता वा पिता वा यदि वा गुरुः ।
रिपुस्थानेषु वर्तन्तो हन्तव्या भूतिमिच्छता ॥
'हन्तव्याः' इत्यत्र 'कर्तव्याः' इति पाठेऽपि छेत्तव्याः इत्येवार्थः । कृ हिंसायामित्यस्य रूपम् । 'भूतिवर्धनाः' इति पाठे भूतिच्छेदनाः । नीटी.
शपथेनाप्यरिं हन्यादर्थदानेन वा पुनः ।
विषेण मायया वाऽपि नोपेक्षेत कथंचन ।
उभौ चेत्संशयोपेतौ श्रद्धावांस्तत्र वर्धते ॥
उभौ जिगीषू तुल्योपायतया संशयापन्नौ चेत् श्रद्धावान् यो मदुक्तादरवान्, स वर्धते । 'श्रद्धाऽऽदरे च काङ्क्षायाम्' इति मेदिनी । नीटी.
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथप्रतिपन्नस्य न्याय्यं भवति शासनम् ॥

---
* 'एकस्मिन्' इत्यत्र 'एकः सन्' इति पुस्तकान्तरपाठः ।

ननु ज्येष्ठो युधिष्ठिरः कथं हन्तव्य इत्याशङ्क्याऽऽह— गुरोरिति । अवलिप्तस्य भ्रातृबलेन गर्वितस्य । धृतराष्ट्रस्य राज्यं पाण्डौ न्यासभूतमिति अजानतो राज्यलुब्धस्य शासनं कार्यमेव । नीटी.

**क्रुद्धोऽप्यक्रुद्धरूपः स्यात्स्मितपूर्वाभिभाषिता ।**
**न चाप्यन्यमपध्वंसेत्कदाचित्कोपसंयुतः ॥**

अपध्वंसेत् कुत्सयेत् । नीटी.

**प्रहरिष्यन् प्रियं ब्रूयात्प्रहरन्नपि भारत ।**
**प्रहृत्य च कृपायीत शोचेत च रुदेत च ॥**
**आश्वासयेच्चापि परं सान्त्वधर्मार्थवृत्तिभिः ।**
**अथास्य प्रहरेत्काले यदा विचलिते पथि ॥**

अस्य एनम् । विचलिते विचलने सति । नीटी.

**अपि घोरापराधस्य धर्ममाश्रित्य तिष्ठतः ।**
**स हि प्रच्छाद्यते दोषः शैलो मेघैरिवासितैः ॥**
**यः स्यादनुप्राप्तवधस्तस्यागारं प्रदीपयेत् ।**
**अधनान्नास्तिकांश्चौरान्विषये स्वे न वासयेत् ॥**

अनुप्राप्तवधः शीघ्रं हन्तुमिष्टः चौरादिः । अधनाः दरिद्राः सन्तो नास्तिकाः परलोकश्रद्धारहिताः, तान् चौरांश्च । एवं धर्मे पक्षपातं प्रदर्शयेदित्याशयः । नीटी.

**प्रत्युत्थानासनाद्येन संप्रदानेन केनचित् ।**
**प्रतिविश्रब्धघाती स्यात्तीक्ष्णदंष्ट्रो निमग्नकः ॥**

प्रतिविश्रब्धघाती अत्यन्तविश्रब्धहननशीलः तीक्ष्णदंष्ट्रो निमग्नकः गाढं प्रहरेत् यथा पुनर्नोन्मज्जेदित्यर्थः । नीटी.

**अशङ्कितेभ्यः शङ्केत शङ्कितेभ्यश्च सर्वशः ।**
**अशङ्क्याद्भयमुत्पन्नमपि मूलं निकृन्तति ॥**

योऽन्यं हन्तुमिच्छति तमन्योऽपि जिघांसतीति स्वयमशङ्कितेभ्य इति । नीटी.

**न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।**
**विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ॥**

सर्वत्र शङ्कावतः किमपि कार्यं न सिध्यतीत्याशङ्क्याऽऽह— नेति । नीटी.

**चारः सुविहितः कार्य आत्मनश्च परस्य वा ।**
**पाषण्डांस्तापसादींश्च परराष्ट्रेषु योजयेत् ॥**

सुविहितः सम्यक् परीक्षितः । नीटी.

**उद्यानेषु विहारेषु देवतायतनेषु च ।**
**पानागारेषु रथ्यासु सर्वतीर्थेषु चाप्यथ ॥**
**चत्वरेषु च कूपेषु पर्वतेषु वनेषु च ।**
**समवायेषु सर्वेषु सरित्सु च विचारयेत् ॥**

उद्यानादिस्थानेषु ये समवायाः जनसमूहाः तेषु । तीर्थेषु ‘ मन्त्री पुरोहितश्चैव युवराजश्चमूपतिः । पञ्चमो द्वारपालश्च षष्ठोऽन्तर्वेशिकस्तथा ॥ कारागाराधिकारी च द्रव्यसंचयकृत्तथा । कृत्याकृत्येषु चार्थानां नवमो विनियोजकः ॥ प्रदेष्टा नगराध्यक्षः कार्यनिर्माणकृत्तथा । धर्माध्यक्षः सभाध्यक्षो दण्डपालस्त्रिपञ्चमः ॥ षोडशो दुर्गपालश्च तथा राष्ट्रान्तपालकः । अटवीपालकान्तानि तीर्थान्यष्टादशैव तु ॥ ’ इति नीतिशास्त्रोक्तेषु । विचारयेत्, चारद्वारा शत्रुचिकीर्षितमिति शेषः । नीटी.

**वाचा भृशं विनीतः स्याद्धृदयेन तथा क्षुरः ।**
**स्मितपूर्वाभिभाषी स्यात्सृष्टो रौद्रेण कर्मणा ॥**
**अञ्जलिः शपथः सान्त्वं शिरसा पादवन्दनम् ।**
**आशाकरणमित्येवं कर्तव्यं भूतिमिच्छता ॥**

आशाकरणं तुभ्यं धनादिकं दास्य इत्युक्त्वा प्रलोभनम् । भूतिमिच्छता । भूतिकामस्यैव एतदुचितम्, न परलोककामस्येत्यर्थः । नीटी.

**सुपुष्पितः स्यादफलः फलवान्स्याद्दुरारुहः ।**
**आमः स्यात्पक्वसंकाशो न च जीर्येत कर्हिचित् ॥**

अस्मिन्नर्थे नीतिशास्त्रीयं वृक्षरूपकश्लोकमाह— सुपुष्पित इति । पुष्पितः शब्देनैव फलाशां दर्शयेत्, न तु फलम् । दर्शितस्य प्राप्तावपि विघ्नं योजयेत् । प्राप्तमप्यप्राप्तवत् । आमः पक्वो भूत्वा तिष्ठेत् । न च जीर्येत धनव्ययेन शत्रून् पोषयित्वा हीयेत । नीटी.

**त्रिवर्गे त्रिविधा पीडा ह्यनुबंधस्तथैव च ।**
**अनुबन्धाः शुभा ज्ञेयाः पीडास्तु परिवर्जयेत् ॥**

एवं नानोपायैः शत्रूणां दण्डमुक्त्वा नीतिमाह— त्रिवर्ग इति । त्रिवर्गे धर्मार्थकामेषु त्रिविधा त्रिप्रकारा पीडा । एकः एकैकेन प्रकारेण पीड्यते इत्यर्थः । तथा अनु पश्चात् बध्यते इत्यनुबन्धः फलम्, तदपि तथैव

त्रिविधं शुभम् । पीडास्तु न शुभाः । त्रिवर्गं परस्परापीडया सेवेतेत्यर्थः । नीटी.

**धर्मं विचरतः पीडा साऽपि द्वाभ्यां नियच्छति ।**
**अर्थं चाप्यर्थलुब्धस्य कामं चातिप्रवर्तिनः ॥**

तत्र पीडामाह—धर्ममिति । धर्ममत्यन्तं विचरतः पुंसः द्वाभ्यां अर्थकामाभ्यां धनव्ययब्रह्मचर्योपक्षिप्ताभ्यां पीडा चित्तवैकल्यं भवति । साऽपि पुंसः पीडा धर्मं नियच्छति निगृह्णाति । कर्तुः पीडैव धर्मपीडेत्यर्थः । एवम् 'अर्थं चाप्यर्थलुब्धस्य कामं चातिप्रवर्तिनः' इति व्याख्येयम् । लुब्धस्य अर्थं विचरतः पुंसः द्वाभ्यां कामधर्माभ्यां पीडिताभ्यां पीडा भवति । सा पीडा अर्थं नियच्छति । एवम् अतिप्रवर्तिनः कामं विचरतः पुंसः द्वाभ्यां धर्मार्थाभ्यां पीडा भवति । साऽपि पीडा कामं नियच्छतीति योज्यम् । 'अर्थस्य कामस्य' इति पाठे कर्मणि षष्ठ्यौ । नीटी.

**अगर्वितात्मा युक्तश्च सान्त्वयुक्तोऽनसूयिता ।**
**अवेक्षितार्थः शुद्धात्मा मन्त्रयीत द्विजैः सह ॥**
**कर्मणा येन केनैव मृदुना दारुणेन च ।**
**उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत् ॥**

'समर्थो धर्ममाचरेत्' इत्यनेन पूर्वोक्तं सर्वं कौटिल्यादिकमापद्येव कार्यम्, नान्यथा इत्युक्तम् । नीटी.

**न संशयमनारुह्य नरो भद्राणि पश्यति ।**
**संशयं पुनरारुह्य यदि जीवति पश्यति ॥**

संशयं प्राणसंकटम् । नीटी.

**यस्य बुद्धिः परिभवेत्तमतीतेन सान्त्वयेत् ।**
**अनागतेन दुर्बुद्धिं प्रत्युत्पन्नेन पण्डितम् ॥**

परिभवेत् शोकेन । तम् अतीतेन नलरामाद्याख्यानेन, (दुर्बुद्धिं) अनागतेन कालान्तरे तव श्रेयो भविष्यतीत्याशाप्रदर्शनेन, पण्डितं प्रत्युत्पन्नेन वर्तमानेन धनादिना सान्त्वयेत् । नीटी.

**योऽरिणा सह संधाय शयीत कृतकृत्यवत् ।**
**स वृक्षाग्रे यथासुप्तः पतितः प्रतिबुध्यते ॥**

संधिपक्षं निन्दति— योऽरिणेति । नीटी.

**मन्त्रसंवरणे यत्नः सदा कार्योऽनसूयता ।**
**आकारमभिरक्षेत चारेणाप्यनुपालितः ॥**

परचारेभ्यो मन्त्रस्य गूहनम् आकारस्य क्रोधाद्यावेशस्य च गूहनं कर्तव्यम्, स्वयं च चारप्रधानः स्यादित्यर्थः । नीटी.

**नाच्छित्त्वा परमर्माणि नाकृत्वा कर्म दारुणम् ।**
**नाहत्वा मत्स्यघातीव प्राप्नोति महतीं श्रियम् ॥**

दण्डस्यैव प्राधान्यमाह— नाच्छित्त्वेति । नीटी.

**कर्शितं व्याधितं क्लिन्नमपानीयमघासकम् ।**
**परिविश्वस्तमन्दं च प्रहर्तव्यमरेर्बलम् ॥**

विग्रहकालमाह— कर्शितमिति । अघासकम् अनाहारम् । नीटी.

**नार्थिकोऽर्थिनमभ्येति कृतार्थे नास्ति संगतम् ।**
**तस्मात्सर्वाणि साध्यानि सावशेषाणि कारयेत् ॥**

संगतं सख्यम् । कार्येषु सावशेषेषु कार्यिणः स्ववशे तिष्ठन्ति, अन्यथा न गणयन्तीत्यर्थः । नीटी.

**संग्रहे विग्रहे चैव यत्नः कार्योऽनसूयता ।**
**उत्साहश्चापि यत्नेन कर्तव्यो भूतिमिच्छता ॥**

संग्रहे सहायादीनाम् । विग्रहे रिपुभिः सार्धम् । नीटी.

**नास्य कृत्यानि बुध्येरन्मित्राणि रिपवस्तथा ।**
**आरब्धान्येव पश्येरन्सुपर्यवसितान्यपि ॥**
**भीतवत्संविधातव्यं यावद्भयमनागतम् ।**
**आगतं तु भयं दृष्ट्वा प्रहर्तव्यमभीतवत् ॥**

संविधातव्यं प्रतिकर्तव्यम् । नीटी.

**दण्डेनोपनतं शत्रुमनुगृह्णाति यो नरः ।**
**स मृत्युमुपगृह्णीयाद्गर्भमश्वतरी यथा ॥**

उपनतं वशीकृतम् । अनुगृह्णाति धनमानादिना । अश्वतरी अश्वगर्दभसंकीर्णजातिः । नीटी.

**अनागतं हि बुध्येत यच्च कार्यं पुरः स्थितम् ।**
**न तु बुद्धिक्षयात् किंचिदतिक्रामेत् प्रयोजनम् ॥**

अनागतं कार्यं बुध्येत । बुद्ध्वा च तदनुगुणं कुर्यादित्यर्थः । पुरः स्थितं वर्तमानम् । बुद्धिक्षयात् अनवधारणात् । नीटी.

उत्साहश्चापि यत्नेन कर्तव्यो भूतिमिच्छता ।
विभज्य देशकालौ च दैवं धर्मादयस्त्रयः ।
नैःश्रेयसौ तु तौ ज्ञेयौ देशकालाविति
स्थितिः ॥

देशाद्यनुगुण उत्साहोऽपि कर्तव्यः, न त्वलसो भवेत् । दैवं प्राक्तनं कर्म ये धर्मादयस्त्रयः तांश्च विभज्य तेषां मध्ये नैःश्रेयसौ श्रेयोहेतू । इति स्थितिः निश्चयः । नीटी.

तालवत् कुरुते मूलं बालः शत्रुरुपेक्षितः ।
गहनेऽग्निरिवोत्सृष्टः क्षिप्रं संजायते महान् ॥

बालः अल्पोऽपि । नीटी.

अग्निं स्तोकमिवाऽऽत्मानं संधुक्षयति यो नरः ।
स वर्धमानो ग्रसते महान्तमपि संचयम् ॥

आत्मानं संधुक्षयति सहायादिना वर्धयति । संचयम् इन्धनानाम्, पक्षे शत्रूणाम् । नीटी.

आशां कालवतीं कुर्यात् कालं विघ्नेन
योजयेत् ।
विघ्नं निमित्ततो ब्रूयान्निमित्तं वाऽपि हेतुतः ॥

'आशां कालवतीं दद्यात्' इत्यतः प्राक् दाक्षिणात्याः 'आदातव्यं न दातव्यमाशामेव प्रदापयेत्' इत्यर्धं पठन्ति । कालवतीं दीर्घावधिमतीम् । निमित्ततः हेतुतः । तमपि हेत्वन्तरेण । नीटी.

क्षुरो भूत्वा हरेत् प्राणान्निशितः कालसाधनः ॥
प्रतिच्छन्नो लोमहारी द्विषतां परिकर्तनः ॥

क्षुरः क्षुरवत् । निशितः तीक्ष्णः । निर्दय इति यावत् । पक्षे शाणोल्लीढः । कालसाधनः छिद्रकालापेक्षः । पक्षे काललोहोपादानकः । प्रतिच्छन्नः गूढाशयः । पक्षे चर्मपुटच्छन्नः । लोमहारी अनुलोमसंग्रही । पक्षे लोमच्छेदकः । 'लोमवाही' इति पाठेऽपि तावेवार्थौ । नीटी.

पाण्डवेषु यथान्यायमन्येषु च कुरूद्वह ।
वर्तमानो न मज्जेस्त्वं तथा कृत्यं समाचर ॥
सर्वकल्याणसंपन्नो विशिष्ट इति निश्चयः ।
तस्मात्त्वं पाण्डुपुत्रेभ्यो रक्षाऽऽत्मानं नराधिप ॥

कल्याणैः धनपुत्रराज्यादिभिः संपन्नः विशिष्टः कुलशीलबलादिभिः श्रेष्ठः । नीटी.

भ्रातृव्या बलिनो यस्मात्पाण्डुपुत्रा नराधिप ।
पश्चात्तापो यथा न स्यात्तथा नीतिर्विधीयताम् ॥

वैशम्पायन उवाच–

एवमुक्त्वा संप्रतस्थे कणिकः स्वगृहं ततः ।
धृतराष्ट्रोऽपि कौरव्यः शोकार्तः समपद्यत ॥

प्राण्डवेषु प्रयोज्योपायचिन्ता दुर्योधनकर्णभीष्मद्रोणविदरकृता

[1]ततो दुर्योधनश्चैव राधेयश्च विशां पते ।
धृतराष्ट्रमुपागम्य वचोऽब्रूतामिदं तदा ॥
[2]संनिधौ विदुरस्य त्वां वक्तुं नृप न शक्नवः ।
विविक्तमिति वक्ष्यावः किं तवेदं
चिकीर्षितम् ॥
[3]सपत्नवृद्धिं यत्तात मन्यसे वृद्धिमात्मनः ।
अभिष्टौषि च यत्क्षत्तुः समीपे द्विपदां वर ॥

सपत्नबुद्धिं तत्कृतां बुद्धिम् । 'वृद्धिम्' इति पाठः स्वच्छः । हे वर श्रेष्ठ । द्विषतां द्विषतः शत्रून् । नीटी.

[4]अन्यस्मिन्नृप कर्तव्ये त्वमन्यत्कुरुषेऽनघ ।
तेषां बलविघातो हि कर्तव्यस्तात नित्यशः ॥
[5]ते वयं प्राप्तकालस्य चिकीर्षां मन्त्रयामहे ।
यथा नो न ग्रसेयुस्ते सपुत्रबलबान्धवान् ॥

प्राप्तकालस्य कर्मणः चिकीर्षां कर्तव्यताम् । नीटी.

---

(१) भा. १।१९२।२५; भामु. १।२००।२७ श्चैव (श्चापि).

(२) भा. १।१९२।२६; भामु. १।२००।२८ वक्तुं नृप (दोषं वक्तुं).

(३) भा. १।१९२।२७; भामु. १।२००।२९ त्नवृद्धिं (त्नबुद्धिं) द्विपदां (द्विषतां).

(४) भा. १।१९२।२८; भामु. १।२००।३० उत्त.

(५) भा. १।१९२।२९; भामु. १।२००।३१.

धृतराष्ट्र उवाच–

[1]अहमप्येवमेवैतच्चिन्तयामि यथा युवाम् ।
विवेक्तुं नाहमिच्छामि त्वाकारं विदुरं प्रति ॥

विवेक्तुं व्यक्तीकर्तुम् । नीटी.

[2]अतस्तेषां गुणानेव कीर्तयामि विशेषतः ।
नावबुध्येत विदुरो ममाभिप्रायमिङ्गितैः ॥

इङ्गितैः चेष्टितैः । नीटी.

[3]यच्च त्वं मन्यसे प्राप्तं तद्ब्रूहि त्वं सुयोधन ।
राधेय मन्यसे त्वं च यत्प्राप्तं तद्ब्रवीहि मे ॥

यच्च कर्तव्यम् । नीटी.

दुर्योधन उवाच–

[4]अद्य तान् कुशलैर्विप्रैः सुकृतैराप्तकारिभिः ।
कुन्तीपुत्रान् भेदयामो माद्रीपुत्रौ च पाण्डवौ ॥

आप्तकारिभिः अवञ्चकैः । नीटी.

[5]अथवा द्रुपदो राजा महद्भिर्वित्तसंचयैः ।
पुत्राश्चास्य प्रलोभ्यन्ताममात्याश्चैव सर्वशः ॥

[6]परित्यजध्वं राजानं कुन्तीपुत्रं युधिष्ठिरम् ।
अथ तत्रैव वा तेषां निवासं रोचयन्तु ते ॥

[7]इहैषां दोषवद्वासं वर्णयन्तु पृथक्पृथक् ।
ते भिद्यमानास्तत्रैव मनः कुर्वन्तु पाण्डवाः ॥

भिद्यमानाः असक्तः पृथग्भवन्तः । नीटी.

अथवा कुशलाः केचिदुपायनिपुणा नराः ।
इतरेतरतः पार्थान् भेदयन्त्वनुरागतः ॥

व्युत्थापयन्तु वा कृष्णां बहुत्वात्सुकरं हि तत् ।
अथवा पाण्डवांस्तस्यां भेदयन्तु ततश्च ताम् ॥

व्युत्थापनं तु स्वभर्तृणां त्यागः, स च बहुत्वदोषेण सुकरः । अथवेति । तस्याः भर्तृषु वैषम्यं प्रदर्श्य पाण्डवानेव वा तस्यां भेदयन्तु । ततश्च ताम् । लप्स्यामहे इति शेषः । नीटी.

[1]भीमसेनस्य वा राजन्नुपायकुशलैर्नरैः ।
मृत्युर्विधीयतां छन्नैः स हि तेषां बलाधिकः ॥

[2]तमाश्रित्य हि कौन्तेयः पुरा चास्मान्न मन्यते ।
स हि तीक्ष्णश्च शूरश्च तेषां चैव परायणम् ॥

तस्मिंस्तु निहते राजन् हतोत्साहा हतौजसः ।
यतिष्यन्ते न राज्याय स हि तेषां व्यपाश्रयः ॥

[3]अजेयो ह्यर्जुनः संख्ये पृष्ठगोपे वृकोदरे ।
तमृते फल्गुनो युद्धे राधेयस्य न पादभाक् ॥

न पादभाक् न चतुर्थांशतुल्यः । नीटी.

[4]ते जानमाना दौर्बल्यं भीमसेनमृते महत् ।
अस्मान् बलवतो ज्ञात्वा नशिष्यन्त्यबलीयसः ॥

[5]इहाऽऽगतेषु पार्थेषु निदेशवशवर्तिषु ।
प्रवर्तिष्यामहे राजन् यथाश्रद्धं निबर्हणे ॥

[6]अथवा दर्शनीयाभिः प्रमदाभिर्विलोभ्यताम् ।
एकैकस्तत्र कौन्तेयस्ततः कृष्णा विरज्यताम् ॥

---

(१) भा. १।१९३।१; भामु. १।२०१।१ न्तयामि (कीर्षामि).

(२) भा. १।१९३।२; भामु. १।२०१।२ अत (तत).

(३) भा. १।१९३।३; भामु. १।२०१।३ ब्रूहि त्वं (ब्रवीहि) उत्तरार्धे (राधेय मन्यसे यच्च प्राप्तकालं वदाऽऽशु मे ॥).

(४) भा. १।१९३।४; भामु. १।२०१।४ कृतै (गुप्तै).

(५) भा. १।१९३।५; भामु. १।२०१।५.

(६) भा. १।१९३।६; भामु. १।२०१।६ प्रथमचरणे (परित्यजेद्यथा राजा).

(७) भा. १।१९३।७–१०; भामु. १।२०१।७–१०.

(१) भामु. १।२०१।११.

(२) भा. १।१९३।११; भामु. १।२०१।१२ स्तु नि (स्त्वभि).

(३) भा. १।१९३।१२; भामु. १।२०१।१३ फल्गु (फाल्गु).

(४) भा. १।१९३।१३; भामु. १।२०१।१४ जानमाना (जानानास्तु) चतुर्थचरणे (न यतिष्यन्ति दुर्बलाः).

(५) भा. १।१९३।१४; भामु. १।२०१।१५ पार्थेषु (वा तेषु) श्रद्धं निबर्हणे (शास्त्रं निबर्हणम्).

(६) भा. १।१९३।१५; भामु. १।२०१।१६.

एकैकः कौन्तेयः प्रलोभनीयः । तत्र तेषु । ततः प्रलोभ्यमानात् । नीटी.

[1]प्रेष्यतां वाऽपि राधेयस्तेषामागमनाय वै ।
ते लोप्त्रहारैः संधाय वध्यन्तामाप्तकारिभिः ॥

संनीय ऐक्यं नीत्वा । नीटी.

[2]एतेषामभ्युपायानां यस्ते निर्दोषवान् मतः ।
तस्य प्रयोगमातिष्ठ पुरा कालोऽतिवर्तते ॥

[3]यावच्चाकृतविश्वासा द्रुपदे पार्थिवर्षभे ।
तावदेवाद्य ते शक्या न शक्यास्तु ततः परम् ॥

शक्याः, घातयितुमिति शेषः । नीटी.

[4]एषा मम मतिस्तात निग्रहाय प्रवर्तते ।
साधु वा यदि वाऽसाधु किं वा राधेय मन्यसे ॥

**कर्ण उवाच–**

[5]दुर्योधन तव प्रज्ञा न सम्यगिति मे मतिः ।
न ह्युपायेन ते शक्याः पाण्डवाः कुरुनन्दन ॥

[6]पूर्वमेव हि ते सूक्ष्मैरुपायैर्यतितास्त्वया ।
निग्रहीतुं यदा वीर शकिता न तदा त्वया ॥

(१) भा. १।१९३।१६; भासु. १।२०१।१७ वाऽपि (चैव) उत्तरार्धे (तैस्तैः प्रकारैः संनीय पात्यन्तामाप्तकारिभिः ॥).

(२) भा. १।१९३।१७; भासु. १।२०१।१८ मभ्यु (मप्यु).

(३) भा. १।१९३।१८; भासु. १।२०१।१९ यावच्चा (यावद्ध्य) देवाद्य (देव हि).

(४) भा. १।१९३।१९; भासु. १।२०१।२० साधु (साध्वी).

(५) भा. १।१९४।१; भासु. १।२०२।१ नन्दन (वर्धन).

(६) भा. १।१९४।२; भासु. १।२०२।२ यदा (तदा) शकिता न तदा (न चैव शकिताः).

[1]इहैव वर्तमानास्ते समीपे तव पार्थिव ।
अजातपक्षाः शिशवः शकिता नैव बाधितुम् ॥

जातपक्षाः सहायवन्तः, तदन्ये अजातपक्षाः । नीटी.

जातपक्षा विदेशस्था विवृद्धाः सर्वशोऽद्य ते ।
नोपायसाध्याः कौन्तेया ममैषा मतिरच्युत ॥

[2]न च ते व्यसनैर्योक्तुं शक्या दिष्टकृता हि ते ।
शङ्किताश्चेप्सवश्चैव पितृपैतामहं पदम् ॥

दिष्टकृतेन दैवनिर्माणेन । शकिताः शक्तिमन्तः । जतुगृहादिभ्य आत्मानं मोचयितुं शक्ता अभूवन्नित्यर्थः । नीटी.

[3]परस्परेण भेदश्च नाऽऽधातुं तेषु शक्यते ।
एकस्यां ये रताः पत्न्यां न भिद्यन्ते परस्परम् ॥
न चापि कृष्णा शक्येत तेभ्यो भेदयितुं परैः ।
परिद्यूनान् वृतवती किमुताद्य मृजावतः ॥

परिद्यूनान् शोच्यान् भिक्षाभोजित्वादिना । मृजावतः सुवेषान् । नीटी.

[4]ईप्सितश्च गुणः स्त्रीणामेकस्या बहुभर्तृता ।
तं च प्राप्तवती कृष्णा न सा भेदयितुं सुखम् ॥

[5]आर्यवृत्तश्च पाञ्चाल्यो न स राजा धनप्रियः ।
न संत्यक्ष्यति कौन्तेयान् राज्यदानैरपि ध्रुवम् ॥

[6]तथाऽस्य पुत्रो गुणवाननुरक्तश्च पाण्डवान् ।
तस्मान्नोपायसाध्यांस्तानहं मन्ये कथंचन ॥

(१) भा. १।१९४।३–४; भासु. १।२०२।३–४.

(२) भा. १।१९४।५; भासु. १।२०२।५ कृता हि ते (कृतेन च) शङ्किता (शकिता).

(३) भा. १।१९४।६–७; भासु. १।२०२।६–७.

(४) भा. १।१९४।८; भासु. १।२०२।८ सुखम् (क्षमा).

(५) भा, १।१९४।९; भासु. १।२०२।९ वृत्त (व्रत).

(६) भा. १।१९४।१०; भासु. १।२०२।१० तथा (यथा).

[1]इदं त्वद्य क्षमं कर्तुमस्माकं पुरुषर्षभ ।
यावन्न कृतमूलास्ते पाण्डवेया विशां पते ।
तावत्प्रहरणीयास्ते रोचतां तव विक्रमः ॥
[2]असत्पक्षो महान् यावद्यावत् पाञ्चालको लघुः ।
तावत् प्रहरणं तेषां क्रियतां मा विचारय ॥

लघुः अल्पकः । नीटी.

[3]वाहनानि प्रभूतानि मित्राणि बहुलानि च ।
यावन्न तेषां गान्धारे तावदेवाऽऽशु विक्रम ॥
[4]यावच्च राजा पाञ्चाल्यो नोद्यमे कुरुते मनः ।
सह पुत्रैर्महावीर्यैस्तावदेवाऽऽशु विक्रम ॥
[5]यावन्नाऽऽयाति वार्ष्णेयः कर्षन् यादव-
वाहिनीम् ।
राज्यार्थे पाण्डवेयानां तावदेवाऽऽशु विक्रम ॥
[6]वसूनि विविधान् भोगान्राज्यमेव च केवलम् ।
नात्याज्यमस्ति कृष्णस्य पाण्डवार्थे महीपते ॥
[7]विक्रमेण मही प्राप्ता भरतेन महात्मना ।
विक्रमेण च लोकांस्त्रीञ्जितवान् पाकशासनः ॥
विक्रमं च प्रशंसन्ति क्षत्रियस्य विशां पते ।
स्वको हि धर्मः शूराणां विक्रमः पार्थिवर्षभ ॥
ते बलेन वयं राजन् महता चतुरङ्गिणा ।
प्रमथ्य द्रुपदं शीघ्रमानयामेह पाण्डवान् ॥

आनयाम, स्ववशमिति शेषः । नीटी.

न हि साम्ना न दानेन न भेदेन च पाण्डवाः ।
शक्याः साधयितुं तस्माद्विक्रमेणैव ताञ्जहि ॥
[1]तान् विक्रमेण जित्वेमामखिलां भुङ्क्ष्व
मेदिनीम् ।
नान्यमत्र प्रपश्यामि कार्योपायं जनाधिप ॥

वैशम्पायन उवाच–

[2]श्रुत्वा तु राधेयवचो धृतराष्ट्रः प्रतापवान् ।
अभिपूज्य ततः पश्चादिदं वचनमब्रवीत् ॥
उपपन्नं महाप्राज्ञे कृतास्त्रे सूतनन्दने ।
त्वयि विक्रमसंपन्नमिदं वचनमीदृशम् ॥
[3]भूय एव तु भीष्मश्च द्रोणो विदुर एव च ।
युवां च कुरुतां बुद्धिं भवेद्या नः सुखोदया ॥
[4]तत आनाय्य तान्सर्वान्मन्त्रिणः सुमहायशाः ।
धृतराष्ट्रो महाराज मन्त्रयामास वै तदा ॥

भीष्म उवाच–

[5]न रोचते विग्रहो मे पाण्डुपुत्रैः कथंचन ।
यथैव धृतराष्ट्रो मे तथा पाण्डुरसंशयम् ॥
[6]गान्धार्याश्च यथा पुत्रास्तथा कुन्तीसुता मताः ।
यथा च मम ते रक्ष्या धृतराष्ट्र तथा तव ॥
[7]यथा च मम राज्ञश्च तथा दुर्योधनस्य ते ।
तथा कुरूणां सर्वेषामन्येषामपि भारत ॥

---

(१) भा. १।१९४।११; भासु. १।२०२।११–१२ षष्ठचरणे ( तत्तुभ्यं तात रोचताम् ).

(२) भा. १।१९४।१२; भासु. १।२०२।१२.

(३) भा. १।१९४।१३; भासु. १।२०२।१३ बहुलानि ( च कुलानि ) देवाऽऽशु विक्रम ( द्विक्रम पार्थिव ).

(४) भा. १।१९४।१४; भासु. १।२०२।१४ देवाऽऽशु विक्रम ( द्विक्रम पार्थिव ).

(५) भा. १।१९४।१५; भासु. १।२०२।१५ चतुर्थचरणे ( पाञ्चाल्यसदनं प्रति ).

(६) भा. १।१९४।१६; भासु. १।२०२।१६ महीपते ( कथंचन ).

(७) भा. १।१९४।१७–२०; भासु. १।२०२।१७–२०.

(१) भा. १।१९४।२१; भासु. १।२०२।२१ नान्यमत्र ( अतो नान्यं ).

(२) भा. १।१९४।२२–२३; भासु. १।२०२।२२–२३.

(३) भा. १।१९४।२४; भासु. १।२०२।२४ कुरुतां ( कुरुतं ).

(४) भा. १।१९४।२५; भासु. १।२०२।२५.

(५) भा. १।१९५।१; भासु. १।२०३।१.

(६) भा. १।१९५।२; भासु. १।२०३।२ मताः ( मम ).

(७) भा. १।१९५।३; भासु. १।२०३।३ भारत ( पार्थिव ).

[1]एवं गते विग्रहं तैर्न रोचये
संधाय वीरैर्दीयतामद्य भूमिः ।
तेषामपीदं प्रपितामहानां
राज्यं पितुश्चैव कुरूत्तमानाम् ॥
[2]दुर्योधन यथा राज्यं त्वमिदं तात पश्यसि ।
मम पैतृकमित्येवं तेऽपि पश्यन्ति पाण्डवाः ॥
[3]यदि राज्यं न ते प्राप्ताः पाण्डवेयास्तपस्विनः ।
कुत एव तवापीदं भारतस्य च कस्यचित् ॥
[4]अथ धर्मेण राज्यं त्वं प्राप्तवान् भरतर्षभ ।
तेऽपि राज्यमनुप्राप्ताः पूर्वमेवेति मे मतिः ॥
[5]मधुरेणैव राज्यस्य तेषामर्धं प्रदीयताम् ।
एतद्धि पुरुषव्याघ्र हितं सर्वजनस्य च ॥
मधुरेण प्रीत्या। नीटी.
अतोऽन्यथा चेत् क्रियते न हितं नो
भविष्यति ।
तवाप्यकीर्तिः सकला भविष्यति न संशयः ॥
कीर्तिरक्षणमातिष्ठ कीर्तिर्हि परमं बलम् ।
नष्टकीर्तेर्मनुष्यस्य जीवितं ह्यफलं स्मृतम् ॥
यावत् कीर्तिर्मनुष्यस्य न प्रणश्यति कौरव ।
तावज्जीवति गान्धारे नष्टकीर्तिस्तु नश्यति ॥
तमिमं समुपातिष्ठ धर्मं कुरुकुलोचितम् ।
अनुरूपं महाबाहो पूर्वेषामात्मनः कुरु ॥
[6]दिष्ट्या धरन्ति ते वीरा दिष्ट्या जीवति सा
पृथा ।
दिष्ट्या पुरोचनः पापो नसकामोऽत्यय गतः ॥

(१) भा. १।१९५।४; भासु. १।२०३।४ रोचये (रोचे) मद्य भू (मर्धभू).

(२) भा. १।१९५।५; भासु. १।२०३।५.

(३) भा. १।१९५।६; भासु. १।२०३।६ यास्तप (या यश) स्य च (स्यापि).

(४) भा. १।१९५।७; भासु. १।२०३।७ अथ धर्मेण (अधर्मेण च).

(५) भा. १।१९५।८–१२; भासु. १।२०३।८–१२.

(६) भा. १।१९५।१३; भासु. १।२०३।१३ धरन्ति ते वीरा (ध्रियन्ते पार्था हि).

ध्रियन्ते जीवन्ति । सकामः नाऽऽसीत् । अत्ययं नाशम् । नीटी.
[1]यदा प्रभृति दग्धास्ते कुन्तिभोजसुतासुताः ॥
[2]तदा प्रभृति गान्धारे न शक्नोम्यभिवीक्षितुम् ।
लोके प्राणभृतां कंचिच्छ्रुत्वा कुन्तीं तथागताम् ॥
[3]न चापि दोषेण तथा लोको वैति पुरोचनम् ।
यथा त्वां पुरुषव्याघ्र लोको दोषेण गच्छति ॥
दोषेण युक्तं गच्छति जानाति । नीटी.
[4]तदिदं जीवितं तेषां तव कल्मषनाशनम् ।
संमन्तव्यं महाराज पाण्डवानां च दर्शनम् ॥
संमन्तव्यं संमतं कर्तव्यम् । नीटी.
[5]न चापि तेषां वीराणां जीवतां कुरुनन्दन ।
पित्र्योंऽशः शक्य आदातुमपि वज्रभृता
स्वयम् ॥
[6]ते हि सर्वे स्थिता धर्मे सर्वे चैवैकचेतसः ।
अधर्मेण निरस्ताश्च तुल्ये राज्ये विशेषतः ॥
अधर्मेण जतुगृहदाहादिना । नीटी.
[7]यदि धर्मस्त्वया कार्यो यदि कार्यं प्रियं च मे ।
क्षेमं च यदि कर्तव्यं तेषामर्धं प्रदीयताम् ॥
द्रोण उवाच–
[8]मन्त्राय समुपानीतैर्धृतराष्ट्रहितैर्नृप ।
धर्म्यं पथ्यं यशस्यं च वाच्यमित्यनुशुश्रुमः ॥

(१) भासु. १।२०३।१४.

(२) भा. १।१९५।१४; भासु. १।२०३।१४–१५.

(३) भा. १।१९५।१५; भासु. १।२०३।१५ वैति (मन्येत).

(४) भा. १।१९५।१६; भासु. १।२०३।१६ कल्म (किल्बि).

(५) भा. १।१९५।१७; भासु. १।२०३।१७.

(६) भा. १।१९५।१८; भासु. १।२०३।१८ हि सर्वे (सर्वेऽव).

(७) भा. १।१९५।१९; भासु. १।२०३।१९.

(८) भा. १।१९६।१; भासु. १।२०४।१ पथ्यं (अर्थ्यं) श्रुमः (श्रुम).

हितैः मित्रैः । नीटी.

[1]ममाप्येषा मतिस्तात या भीष्मस्य महात्मनः ।
संविभज्यास्तु कौन्तेया धर्म एष सनातनः ॥
प्रेष्यतां द्रुपदायाऽऽशु नरः कश्चित्प्रियंवदः ।
बहुलं रत्नमादाय तेषामर्थाय भारत ॥

तेषां पाण्डवानाम् । नीटी.

[2]मिथःकृत्यं च तस्मै स आदाय बहु गच्छतु ।
वृद्धिं च परमां ब्रूयात्तत्संयोगोद्भवां तथा ॥

मिथःकृत्यं सांबन्धिकं वरपक्षीयैर्वध्वलंकारादि कन्यापक्षीयैर्वरालंकारादि । तस्मै द्रुपदाय तदर्थे । एतेन मिथःकृत्य एव श्वशुरो जामातृदायं गृह्णीयान्नान्यथेति सिद्धम् । वृद्धिं चेति । त्वत्संयोगादस्माकं महत्त्वाप्तिर्जातेति धृतराष्ट्रो दुर्योधनश्च मन्यते इति तत्र वक्तव्यमित्यर्थः । नीटी.

[3]संप्रीयमाणं त्वां ब्रूयाद्राजन् दुर्योधनं तथा ।
असकृद्द्रुपदे चैव धृष्टद्युम्ने च भारत ॥
उचितत्वं प्रियत्वं च योगस्यापि च वर्णयेत् ।
पुनः पुनश्च कौन्तेयान् माद्रीपुत्रौ च सान्त्वयन् ॥

योगस्य संबन्धस्य । नीटी.

हिरण्मयानि शुभ्राणि बहून्याभरणानि च ।
वचनात्तव राजेन्द्र द्रौपद्याः संप्रयच्छतु ॥

संप्रयच्छतु त्वदीयोऽमात्यादिः । नीटी.

तथा द्रुपदपुत्राणां सर्वेषां भरतर्षभ ।
पाण्डवानां च सर्वेषां कुन्त्या युक्तानि यानि च ॥

तथा आभरणानि प्रयच्छन्तु इत्यनुषज्य प्रत्येकं द्रुपदपुत्राणामित्यादिषु योज्यम् । नीटी.

[4]एवं सान्त्वसमायुक्तं द्रुपदं पाण्डवैः सह ।
उक्त्वाऽथानन्तरं ब्रूयात्तेषामागमनं प्रति ॥

(१) भा. १।१९६।२–३; भामु. १।२०४।२–३.

(२) भा. १।१९६।४; भामु. १।२०४।४ बहु (वसु) त्तत्सं (त्वत्सं).

(३) भा. १।१९६।५–८; भामु. १।२०४।५–८.

(४) भा. १।१९६।९; भामु. १।२०४।९ क्त्वाऽथा (क्त्वा सो).

[1]अनुज्ञातेषु वीरेषु बलं गच्छतु शोभनम् ।
दुःशासनो विकर्णश्च पाण्डवानानयन्त्विह ॥
[2]ततस्ते पार्थिवश्रेष्ठ पूज्यमानाः सदा त्वया ।
प्रकृतीनामनुमते पदे स्थास्यन्ति पैतृके ॥
[3]एवं तव महाराज तेषु पुत्रेषु चैव ह ।
वृत्तमौपयिकं मन्ये भीष्मेण सह भारत ॥

औपयिकम् अवश्यकर्तव्यम् । नीटी.

कर्ण उवाच–

[4]योजितावर्थमानाभ्यां सर्वकार्येष्वनन्तरौ ।
न मन्त्रयेतां त्वच्छ्रेयः किमद्भुततरं ततः ॥

अनन्तरौ अन्तरङ्गौ भीष्मद्रोणौ । नीटी.

दुष्टेन मनसा यो वै प्रच्छन्नेनान्तरात्मना ।
ब्रूयान्निःश्रेयसं नाम कथं कुर्यात् सतां मतम् ॥

ननु अन्तरङ्गौ चेत् कथं मच्छ्रेयो नानुमन्त्रयेतामित्याशङ्क्य अन्तरङ्गाभासाविमौ, न त्वन्तरङ्गावित्याह– दुष्टेनेति । दुष्टेन मित्रद्रोहवता मनसा संकल्पेन प्रच्छन्नेन शत्रुहितेप्सुनाऽपि स्वामिहितवदाभासमानेन अन्तरात्मना बुद्ध्या यो ब्रूयान्मन्त्रं सः सतां साधूनां विश्वस्तानां स्वामिनां मतम् इष्टं निःश्रेयसं कल्याणं कथं कुर्यात् ? न कथमपि । शठमित्रं हि पातयत्येव न हितायेत्यर्थः । नीटी.

[5]न मित्राण्यर्थकृच्छ्रेषु श्रेयसे वेतराय वा ।
विधिपूर्वं हि सर्वस्य दुःखं वा यदि वा सुखम् ॥

(१) भा. १।१९६।१०; भामु. १।२०४।१० श्च पाण्डवानानयन्त्विह (श्चाप्यानेतुं पाण्डवानिह).

(२) भा. १।१९६।११; भामु. १।२०४।११ पार्थिवश्रेष्ठ (पाण्डवाः श्रेष्ठाः).

(३) भा. १।१९६।१२; भामु. १।२०४।१२ एवं (एतत्) द्वितीयचरणे (पुत्रेषु तेषु चैव हि).

(४) भा. १।१९६।१३–१४; भामु. १।२०४।१३–१४.

(५) भा. १।१९६।१५; भामु. १।२०४।१५ वेत (चेत).

ननु शठमित्रत्वं त्वस्य त्वय्यप्याशङ्क्येत, तथा च सर्वत्रानाश्वासप्रसङ्ग इत्याशङ्क्य दैवमेव मुख्यं वृद्धिह्रासादिहेतुरित्याह— न मित्राणीति । मित्राणि साध्वसाधूनि अर्थकृच्छ्रेषु कार्यसंकटेषु श्रेयसे इतराय नाशाय वा न प्रभवन्ति । हि यस्मात् विधिपूर्वं पुण्यापुण्यैकहेतुकं सर्वं सुखादिकम् । नीटी.

**[1]कृतप्रज्ञोऽकृतप्रज्ञो बालो वृद्धश्च मानवः ।**
**ससहायोऽसहायश्च सर्वं सर्वत्र विन्दति ॥**

एतदेव स्पष्टयति— कृतेति । सर्वं दैवोपनीतम् । सर्वत्र देशे काले च । नीटी.

**[2]श्रूयते हि पुरा कश्चिदम्बुवीच इति श्रुतः ।**
**आसीद्राजगृहे राजा मागधानां महीक्षिताम् ॥**

अत्राऽऽख्यायिकामाह— श्रूयत इति । ईश्वरः समर्थः । राजगृहे तन्नामके नगरे । नीटी.

**[3]स हीनः करणैः सर्वैरुच्छ्वासपरमो नृपः ।**
**अमात्यसंस्थः कार्येषु सर्वेष्वेवाभवत्तदा ॥**

करणैः चक्षुरादिभिः हीनः विकलः । उच्छ्वास एव परमो भवतीति ज्ञानहेतुर्यस्य सः । अमात्यसंस्थः अमात्याधीनः । नीटी.

**[4]तस्यामात्यो महाकर्णिर्बभूवैकेश्वरः पुरा ।**
**स लब्धबलमात्मानं मन्यमानोऽवमन्यते ॥**

अवमन्यते, राजानमिति शेषः । नीटी.

**[5]स राज्ञ उपभोग्यानि स्त्रियो रत्नधनानि च ।**
**आददे सर्वशो मूढ ऐश्वर्यं च स्वयं तदा ॥**

---

(१) भा. १।१९६।१६; भामु. १।२०४।१६.

(२) भा. १।१९६।१७; भामु. १।२०४।१७ इति श्रुतः (इतीश्वरः).

(३) भा. १।१९६।१८; भामु. १।२०४।१८ कार्येषु सर्वे (सर्वेषु कार्ये).

(४) भा. १।१९६।१९; भामु. १।२०४।१९ पुरा (तदा).

(५) भा. १।१९६।२०; भामु. १।२०४।२०.

**[1]तदादाय च लुब्धस्य लाभाल्लोभो व्यवर्धत ।**
**तथा हि सर्वमादाय राज्यमस्य जिहीर्षति ॥**
**[2]हीनस्य करणैः सर्वैरुच्छ्वासपरमस्य च ।**
**यतमानोऽपि तद्राज्यं न शशाकेति नः श्रुतम् ॥**

न शशाक, हर्तुमिति शेषः । नीटी.

**[3]किमन्यद्विहितान्नूनं तस्य सा पुरुषेन्द्रता ।**
**यदि ते विहितं राज्यं भविष्यति विशां पते ॥**

आख्यायिकातात्पर्यमाह— किमिति । तस्य अम्बुवीचस्य सा पुरुषेन्द्रता तन्नरेन्द्रत्वं नूनं विहिता विधिप्राप्तैव, न तु यत्नसंपादिता । किमन्यददृष्टात्परायणमस्ति ? न किमपीति भावः । प्रकृते योजयति— यदीति । नीटी.

**[4]मिषतः सर्वलोकस्य स्थास्यते त्वयि तद्ध्रुवम् ।**
**अतोऽन्यथा चेद्विहितं यतमानो न लप्स्यसे ॥**
**एवं विद्वन्नुपादत्स्व मन्त्रिणां साध्वसाधुताम् ।**
**दुष्टानां चैव बोद्धव्यमदुष्टानां च भाषितम् ॥**

**द्रोण उवाच –**

**[5]विद्म ते भावदोषेण यदर्थमिदमुच्यते ।**
**दुष्टः पाण्डवहेतोस्त्वं दोषं ख्यापयसे हि नः ॥**

ते तव मतं विद्म भावदोषेण चित्तगतद्वेषेण । नीटी.

**[6]हितं तु परमं कर्ण ब्रवीमि कुरुवर्धनम् ।**
**अथ त्वं मन्यसे दुष्टं ब्रूहि यत्परमं हितम् ॥**

---

(१) भा. १।१९६।२१; भामु. १।२०४।२१ लाभा (लोभा) व्यव (ऽप्यव).

(२) भा. १।१९६।२२; भामु. १।२०४।२२.

(३) भा. १।१९६।२३; भामु. १।२०४।२३ तान्नूनं (ता नूनं).

(४) भा. १।१९६।२४–२५; भामु. १।२०४।२४–२५.

(५) भा. १।१९६।२६; भामु. १।२०४।२६ दुष्टः (दुष्ट) ख्यापयसे हि नः (आख्यापयस्युत).

(६) भा. १।१९६।२७; भामु. १।२०४।२७ कुरु (कुल).

[1]अतोऽन्यथा चेत्क्रियते यद्ब्रवीमि परं हितम् ।
कुरवो विनशिष्यन्ति नचिरेणेति मे मतिः ॥
अहं यद्ब्रवीमि अतोऽन्यथा । नीटी.

विदुर उवाच–
[2]राजन्निःसंशयं श्रेयो वाच्यस्त्वमसि बान्धवैः ।
न त्वशुश्रूषमाणेषु वाक्यं संप्रतितिष्ठति ॥
[3]हितं हि तव तद्वाक्यमुक्तवान् कुरुसत्तमः ।
भीष्मः शान्तनवो राजन्प्रतिगृह्णासि तन्न च ॥
[4]तथा द्रोणेन बहुधा भाषितं हितमुत्तमम् ।
तच्च राधासुतः कर्णो मन्यते न हितं तव ॥
चिन्तयंश्च न पश्यामि राजंस्तव सुहृत्तमम् ।
आभ्यां पुरुषसिंहाभ्यां यो वा स्यात्प्रज्ञयाऽधिकः ॥
आभ्यां भीष्मद्रोणाभ्याम् । पञ्चम्यन्तमिदम् । नीटी.
[5]इमौ हि वृद्धौ वयसा प्रज्ञया च श्रुतेन च ।
समौ च त्वयि राजेन्द्र तेषु पाण्डुसुतेषु च ॥
[6]धर्मे चानवमौ राजन् सत्यतायां च भारत ।
रामाद्दाशरथेश्चैव गयाच्चैव न संशयः ॥
अनवरौ श्रेष्ठौ । नीटी.
[7]न चोक्तवन्तावश्रेयः पुरस्तादपि किंचन ।
न चाप्यपकृतं किंचिदनयोर्लक्ष्यते त्वयि ॥
अनयोः एताभ्याम् । कर्तरि षष्ठी । नीटी.
[1]ताविमौ पुरुषव्याघ्रावनागसि नृप त्वयि ।
न मन्त्रयेतां त्वच्छ्रेयः कथं सत्यपराक्रमौ ॥
[2]प्रज्ञावन्तौ नरश्रेष्ठावस्मिँल्लोके नराधिप ।
त्वन्निमित्तमतो नेमौ किंचिज्जिह्मं वदिष्यतः ।
इति मे नैष्ठिकी बुद्धिर्वर्तते कुरुनन्दन ॥
[3]न चार्थहेतोर्धर्मज्ञौ वक्ष्यतः पक्षसंश्रितम् ।
एतद्धि परमं श्रेयो मेनाते तव भारत ॥
पक्षसंश्रितम् अन्यतरस्यैव हितम् । नीटी.
[4]दुर्योधनप्रभृतयः पुत्रा राजन् यथा तव ।
तथैव पाण्डवेयास्ते पुत्रा राजन् न संशयः ॥
[5]तेषु चेदहितं किंचिन्मन्त्रयेयुरबुद्धितः ।
मन्त्रिणस्ते न ते श्रेयः प्रपश्यन्ति विशेषतः ॥
तेषु पाण्डवेषु । नीटी.
[6]अथ ते हृदये राजन् विशेषस्तेषु वर्तते ।
अन्तरस्थं विवृण्वानाः श्रेयः कुर्युर्न ते ध्रुवम् ॥
ते तव मन्त्रिणः तव अन्तरस्थं विशेषं विवृण्वानास्ते ध्रुवं शाश्वतं हितं न कुर्युः । तव वैषम्यदोषमेव ते प्रकाशयिष्यन्ति, न तु कार्यं साधयिष्यन्तीत्यर्थः । नीटी.
[7]एतदर्थमिमौ राजन् महात्मानौ महाद्युती ।
नोचतुर्विवृतं किंचिन्न ह्येष तव निश्चयः ॥

---

(१) भा. १।१९६।२८; भामु. १।२०४।२८ उत्तरार्धे (कुरवो वै विनङ्क्ष्यन्ति न चिरेणैव मे मतिः ॥).

(२) भा. १।१९७।१; भामु. १।२०५।१ माणेषु (माणे वै).

(३) भा. १।१९७।२; भामु. १।२०५।२ हितं हि तव (प्रियं हितं च).

(४) भा. १।१९७।३–४; भामु. १।२०५।३–४.

(५) भा. १।१९७।५; भामु. १।२०५।५ तेषु (तथा).

(६) भा. १।१९७।६; भामु. १।२०५।६ नवमौ (नवरौ).

(७) भा. १।१९७।७; भामु. १।२०५।७.

(१) भा. १।१९७।८; भामु. १।२०५।८ ताविमौ (तावुभौ) नृप (नृपे).

(२) भा. १।१९७।९; भामु. १।२०५।९–१०.

(३) भा. १।१९७।१०; भामु. १।२०५।१०–११ मेनाते (मन्येऽहं).

(४) भा. १।१९७।११; भामु. १।२०५।११–१२.

(५) भा. १।१९७।१२; भामु. १।२०५।१२–१३ रबुद्धितः (रतद्विदः) न ते (न च).

(६) भा. १।१९७।१३; भामु. १।२०५।१३ षस्ते (षः स्वे).

(७) भा. १।१९७।१४–१५; भामु. १।२०५। १४–१५.

एतदर्थं पाण्डवानां श्रेयोर्थम् । विवृतं विस्पष्टम् । 'विकृतम्' इति पाठे परुषम् । एषः 'पाण्डवानां श्रेयो भवतु' इत्येवंरूपः । हिशब्देन तत्र तस्यैव प्रतीतिं प्रमाणयति । नीटी.

यच्चाप्यशक्यतां तेषामाहतुः पुरुषर्षभौ ।
तत्तथा पुरुषव्याघ्र तव तद्भद्रमस्तु ते ॥

अशक्यतां अजय्यतां तव पुरस्तात् यच्चाऽऽहतुरिति संबन्धः । तद्भद्रमस्तु ते तत् तेभ्यः पाण्डवेवेभ्यस्तव भद्रमस्तु । क्रुद्धाः पाण्डवास्तव सर्वान् पुत्रान् मा हिंस्युरिति भावः । नीटी.

[1]कथं हि पाण्डवः श्रीमान् सव्यसाची परंतपः ।
शक्यो विजेतुं संग्रामे राजन् मघवता अपि ॥
[2]भीमसेनो महाबाहुर्नागायुतबलो महान् ।
कथं हि युधि शक्येत विजेतुममरैरपि ॥
[3]तथैव कृतिनौ युद्धे यमौ यमसुताविव ।
कथं विषहितुं शक्यौ रणे जीवितुमिच्छता ॥
[4]यस्मिन् धृतिरनुक्रोशः क्षमा सत्यं पराक्रमः ।
नित्यानि पाण्डवश्रेष्ठे स जीयेत कथं रणे ॥
[5]येषां पक्षधरो रामो येषां मन्त्री जनार्दनः ।
किं नु तैरजितं संख्ये येषां पक्षे च सात्यकिः ॥
[6]द्रुपदः श्वशुरो येषां येषां श्यालाश्च पार्षताः ।
धृष्टद्युम्नमुखा वीरा भ्रातरो द्रुपदात्मजाः ॥

[1]सोऽशक्यतां च विज्ञाय तेषामग्रेण भारत ।
दायाद्यतां च धर्मेण सम्यक्तेषु समाचर ॥

अग्रे तत्पितुरेव पाण्डोः राज्यभागित्वकाले । दायाद्यतां पितृधनभोजनार्हताम् । नीटी.

[2]इदं निर्दिग्धमयशः पुरोचनकृतं महत् ।
तेषामनुग्रहेणाद्य राजन् प्रक्षालयाऽऽत्मनः ॥
[3]तेषामनुग्रहश्चायं सर्वेषां चैव नः कुले ।
जीवितं च परं श्रेयः क्षत्रस्य च विवर्धनम् ॥
[4]द्रुपदोऽपि महान्राजा कृतवैरश्च नः पुरा ।
तस्य संग्रहणं राजन् स्वपक्षस्य विवर्धनम् ॥
[5]बलवन्तश्च दाशार्हा बहवश्च विशां पते ।
यतः कृष्णस्ततस्ते स्युर्यतः कृष्णस्ततो जयः ॥
[6]यच्च साम्नैव शक्येत कार्यं साधयितुं नृप ।
को दैवशप्तस्तत्कर्तुं विग्रहेण समाचरेत् ॥
[7]श्रुत्वा च जीवतः पार्थान् पौरजानपदो जनः ।
बलवद्दर्शने गृध्नुस्तेषां राजन् कुरु प्रियम् ॥

बलवत् अत्यन्तम् । नीटी.

[8]दुर्योधनश्च कर्णश्च शकुनिश्चापि सौबलः ।
अधर्मयुक्ता दुष्प्रज्ञा बाला मैषां वचः कृथाः ॥

---

(१) भा. १।१९७।१६; भामु. १।२०५।१६ परंतपः (धनंजयः) अपि (ऽपि हि).

(२) भा. १।१९७।१७; भामु. १।२०५।१७ हि (स).

(३) भा. १।१९७।१८; भामु. १।२०५।१८ विषहितुं शक्यौ (विजेतुं शक्यौ तौ).

(४) भा. १।१९७।१९; भामु. १।२०५।१९ वश्रेष्ठे (वे ज्येष्ठे) कथं रणे (रणे कथम्).

(५) भा. १।१९७।२०; भामु. १।२०५।२०.

(६) भा. १।१९७।२१; भामु. १।२०५।२१ श्याला (स्याला).

(१) भा. १।१९७।२२; भामु. १।२०५।२२ मग्रेण (मग्रे च).

(२) भा. १।१९७।२३; भामु. १।२०५।२३ निर्दिग्ध (निर्दिष्ट).

(३) भामु. १।२०५।२४.

(४) भा. १।१९७।२४; भामु. १।२०५।२५.

(५) भा. १।१९७।२५; भामु. १।२०५।२६ तस्ते स्युर्य (तः सर्वे य).

(६) भा. १।१९७।२६; भामु. १।२०५।२७ त्कर्तुं (त्कार्यं).

(७) भा. १।१९७।२७; भामु. १।२०५।२८ पदो जनः (पदा जनाः) गृध्नु (हृष्टा) कुरु प्रियम् (प्रियं कुरु).

(८) भा. १।१९७।२८; भामु. १।२०५।२९.

[1]उक्तमेतन्मया राजन् पुरा गुणवतस्तव ।
दुर्योधनापराधेन प्रजेयं विनशिष्यति ॥

उपायाः सप्त, तेषां परीक्षा कर्तव्या

[2]*कच्चिद्राजगुणैः षड्भिः सप्तोपायां-
स्तथाऽनघ ।
बलाबलं तथा सम्यक् चतुर्दश परीक्षसे ॥
कच्चित्ते यास्यतः शत्रून्पूर्वं यान्ति
स्वनुष्ठिताः ।
साम दानं च भेदश्च दण्डश्च विधिवद्गुणाः ॥

द्रौपदीप्रोक्तः शमदण्डप्रयोगविवेकः
बलिप्रह्लादसंवादपुरःसरः

**वैशम्पायन उवाच–**

[3]ततो वनगताः पार्थाः सायाह्ने सह कृष्णया ।
उपविष्टाः कथाश्चक्रुर्दुःखशोकपरायणाः ॥

इतोऽध्यायद्वयस्य तात्पर्यं सुशीलाऽपि स्त्री धर्मं त्याजयति, किमुत इतरा इति । नीटी.

[4]प्रिया च दर्शनीया च पण्डिता च पतिव्रता ।
ततः कृष्णा धर्मराजमिदं वचनमब्रवीत् ॥

**द्रौपद्युवाच–**

[5]न नूनं तस्य पापस्य दुःखमस्मासु किंचन ।
विद्यते धार्तराष्ट्रस्य नृशंसस्य दुरात्मनः ॥

अस्मासु, दुःखितेष्विति शेषः । नीटी.

* अस्य श्लोकद्वयस्य व्याख्यानं 'राजनीतेः सामान्यसिद्धान्ताः०' इत्यस्मिन् प्रकरणे (पृ. ५४२, ५४८) द्रष्टव्यम् ।

(१) भा. १।१९७।२९; भामु. १।२०५।३० न्मया (त्पुरा) पुरा (मया) विनशिष्यति (वै विनङ्क्ष्यति).
(२) भा. २।५।११, ५१; भामु. २।५।२१, ६१.
(३) भा. ३।२८।१; भामु. ३।२७।१.
(४) भा. ३।२८।२; भामु. ३।२७।२ ततः (अथ).
(५) भा. ३।२८।३; भामु. ३।२७।३.

[1]यस्त्वां राजन् मया सार्धमजिनैः
प्रतिवासितम् ।
भ्रातृभिश्च तथा सर्वैर्नाभ्यभाषत किंचन ।
वनं प्रस्थाप्य दुष्टात्मा नान्वतप्यत दुर्मतिः ॥
[2]आयसं हृदयं नूनं तस्य दुष्कृतकर्मणः ।
यस्त्वां धर्मपरं श्रेष्ठं रूक्षाण्यश्रावयत् तदा ॥
सुखोचितमदुःखार्हं दुरात्मा ससुहृद्गणः ।
ईदृशं दुःखमानीय मोदते पापपूरुषः ॥

आनीय प्रापय्य । नीटी.

[3]चतुर्णामेव पापानामश्रु वै नापतत्तदा ।
त्वयि भारत निष्क्रान्ते वनायाजिनवाससि ॥

अस्रं नेत्रजलम् । नीटी.

[4]दुर्योधनस्य कर्णस्य शकुनेश्च दुरात्मनः ।
दुर्भ्रातुस्तस्य चोग्रस्य तथा दुःशासनस्य च ॥
[5]इतरेषां तु सर्वेषां कुरूणां कुरुसत्तम ।
दुःखेनाभिपरीतानां नेत्रेभ्यः प्रापतज्जलम् ॥
इदं च शयनं दृष्ट्वा यच्चाऽऽसीत्ते पुरातनम् ।
शोचामि त्वां महाराज दुःखानर्हं
सुखोचितम् ॥
[6]दान्तं यच्च सभामध्य आसनं रत्नभूषितम् ।
दृष्ट्वा कुशबृसीं चेमां शोको मां
रुन्धयत्ययम् ॥

दान्तं गजदन्तमयम् । कुशबृसीं कुशासनम् । रुन्धयति आवृणोति । मोहयतीत्यर्थः । नीटी.

(१) भा. ३।२८।४; भामु. ३।२७।४ द्वितीयार्धं नास्ति.
(२) भा. ३।२८।५–६; भामु. ३।२७।५–६.
(३) भा. ३।२८।७; भामु. ३।२७।७ द्वितीयचरणे (मस्रं न पतितं तदा).
(४) भा. ३।२८।८; भामु. ३।२७।८ तथा (राजन्).
(५) भा. ३।२८।९–१०; भामु. ३।२७।९–१०.
(६) भा. ३।२८।११; भामु. ३।२७।११.

[1]यदपश्यं सभायां त्वां राजभिः परिवारितम् ।
तच्च राजन्नपश्यन्त्याः का शान्तिर्हृदयस्य मे ॥

[2]या त्वाऽहं चन्दनादिग्धमपश्यं सूर्यवर्चसम् ।
सा त्वा पङ्कमलादिग्धं दृष्ट्वा मुह्यामि भारत ॥

त्वाऽहं त्वामहम् । आदिग्धं लिप्तम् । नीटी.

[3]या वै त्वा कौशिकैर्वस्त्रैः शुभ्रैर्बहुधनैः पुरा ।
दृष्टवत्यस्मि राजेन्द्र सा त्वा पश्यामि चीरिणम् ॥

कौशिकैः कोशजैः । नीटी.

[4]यच्च तद्रुक्मपात्रीभिर्ब्राह्मणेभ्यः सहस्रशः ।
ह्रियते ते गृहादन्नं संस्कृतं सार्वकामिकम् ॥

यतीनामगृहाणां ते तथैव गृहमेधिनाम् ।
दीयते भोजनं राजन्नतीव गुणवत्प्रभो ॥

अगृहाणां ब्रह्मचारिणाम् । नीटी.

[5]सत्कृतानि सहस्राणि सर्वकामैः पुरा गृहे ।
सर्वकामैः सुविहितैर्यदपूजयथा द्विजान् ॥

सहस्राणि सहस्रसंज्ञानि सत्रपरिवेषणपात्राणि, 'तेषां यत्सहस्रं सत्रपरिवेषणं तत्ते स्वर्यन्तो दास्यन्ति' इति बह्वृच-ब्राह्मणे दर्शनात् । सत्कृतानि प्रत्यहमुपयोगात् संभावितानि । सर्वकामैः काम्यमानैरन्नैः । यत् यैः सहस्रैः सर्वैः कामैः मनोरथैः द्विजान् अपूजयथाः । वने तु एकमेव सूर्यदत्तं परिवेषणपात्रमित्यर्थः । नीटी.

[6]तच्च राजन्नपश्यन्त्याः का शान्तिर्हृदयस्य मे ॥

( १ ) भा. ३।२८।१२; भामु. ३।२७।१२.

( २ ) भा. ३।२८।१३; भामु. ३।२७।१३ सा त्वा ( सा त्वां ).

( ३ ) भा. ३।२८।१४; भामु. ३।२७।१४ वै त्वा ( त्वाऽहं ) र्बहुधनैः ( राच्छादितं ) सा त्वा ( सा त्वां ).

( ४ ) भा. ३।२८।१५–१६; भामु. ३।२७।१५–१६.

( ५ ) भामु. ३।२७।१७.

( ६ ) भा. ३।२८।१६; भामु. ३।२७।१८.

[1]यांस्ते भ्रातॄन्महाराज युवानो मृष्टकुण्डलाः ।
अभोजयन्त मृष्टान्नैः सूदाः परमसंस्कृतैः ॥

[2]सर्वांस्तानद्य पश्यामि वने वन्येन जीवतः ।
अदुःखार्हान्मनुष्येन्द्र नोपशाम्यति मे मनः ॥

[3]भीमसेनमिमं चापि दुःखितं वनवासिनम् ।
ध्यायन्तं किं न मन्युस्ते प्राप्ते काले विवर्धते ॥

मन्युः क्रोधः । नीटी.

[4]भीमसेनं हि कर्माणि स्वयं कुर्वाणमच्युत ।
सुखार्हं दुःखितं दृष्ट्वा कस्मान्मन्युर्न वर्धते ॥

[5]सत्कृतं विविधैर्यानैर्वस्त्रैरुच्चावचैस्तथा ।
तं ते वनगतं दृष्ट्वा कस्मान्मन्युर्न वर्धते ॥

[6]कुरूनपि हि यः सर्वान् हन्तुमुत्सहते प्रभुः ।
त्वत्प्रसादं प्रतीक्षंस्तु सहतेऽयं वृकोदरः ॥

[7]योऽर्जुनेनार्जुनस्तुल्यो द्विबाहुर्बहुबाहुना ।
शरातिसर्गे शीघ्रत्वात्कालान्तकयमोपमः ॥

अर्जुनेन कार्तवीर्येण । शरावमर्दे बाणपाते । नीटी.

[8]यस्य शस्त्रप्रतापेन प्रणताः सर्वपार्थिवाः ।
यज्ञे तव महाराज ब्राह्मणानुपतस्थिरे ॥

( १ ) भा. ३।२८।१७; भामु. ३।२७।१८–१९ यांस्ते ( यत्ते ).

( २ ) भा. ३।२८।१८; भामु. ३।२७।१९–२० जीवतः ( जीविनः ).

( ३ ) भा. ३।२८।१९; भामु. ३।२७।२०–२१ ध्यायन्तं ( ध्यायतः ).

( ४ ) भा. ३।२८।२०; भामु. ३।२७।२१–२२ च्युत ( च्युतम् ).

( ५ ) भा. ३।२८।२१; भामु. ३।२७।२२–२३.

( ६ ) भा. ३।२८।२२; भामु. ३।२७।२३–२४ कुरूनपि हि यः ( अयं कुरून् रणे ) त्प्रसादं ( त्प्रतिज्ञां ).

( ७ ) भा. ३।२८।२३; भामु. ३।२७।२४–२५ तिसर्गे ( वमर्दे ).

( ८ ) भा. ३।२८।२४; भामु. ३।२७।२५–२६.

[1]तमिमं पुरुषव्याघ्रं पूजितं देवदानवैः ।
ध्यायन्तमर्जुनं दृष्ट्वा कस्मान्मन्युर्न वर्धते ॥
[2]दृष्ट्वा वनगतं पार्थमदुःखार्हं सुखोचितम् ।
न च ते वर्धते मन्युस्तेन मुह्यामि भारत ॥
यो देवांश्च मनुष्यांश्च सर्पांश्चैकरथोऽजयत् ।
तं ते वनगतं दृष्ट्वा कस्मान्मन्युर्न वर्धते ॥
[3]यो यानैरद्भुताकारैर्हयैर्नागैश्च संवृतः ।
प्रसह्य वित्तान्यादत्त पार्थिवेभ्यः परंतपः ॥
आदत्त आत्तवान् । नीटी.
[4]क्षिपत्येकेन वेगेन पञ्च बाणशतानि यः ।
तं ते वनगतं दृष्ट्वा कस्मान्मन्युर्न वर्धते ॥
श्यामं बृहन्तं तरुणं चर्मिणामुत्तमं रणे ।
नकुलं ते वने दृष्ट्वा कस्मान्मन्युर्न वर्धते ॥
चर्मिणां खड्गचर्मधराणाम् । नीटी.
[5]दर्शनीयं च शूरं च माद्रीपुत्रं युधिष्ठिर ।
सहदेवं वने दृष्ट्वा कस्मान्मन्युर्न वर्धते ॥
[6]द्रुपदस्य कुले जातां स्नुषां पाण्डोर्महात्मनः ।
मां ते वनगतां दृष्ट्वा कस्मान्मन्युर्न वर्धते ॥

(१) भा. ३।२८।२५; भासु. ३।२७।२६–२७ न्मन्युर्न वर्धते (न्राजन्न कुप्यसि).

(२) भा. ३।२८।२६–२७; भासु. ३।२७।२७–२९.

(३) भा. ३।२८।२८; भासु. ३।२७।२९–३० तपः (तप).

(४) भा. ३।२८।२९–३०; भासु. ३।२७।३०–३२.

(५) भा. ३।२८।३१; भासु. ३।२७।३२–३३ न्मन्युर्न वर्धते (रक्षमसि पार्थिव), अस्माच्छ्लोकादूर्ध्वम् 'नकुलं सहदेवं च दृष्ट्वा ते दुःखितावुभौ । अदुःखार्हौ मनुष्येन्द्र कस्मान्मन्युर्न वर्धते ॥' इत्यधिकम्.

(६) भा. ३।२८।३२; भासु. ३।२७।३४–३५ प्रथमार्धानन्तरम् 'धृष्टद्युम्नस्य भगिनीं वीरपत्नीमनुव्रताम् ।' इत्यधिकम्, ते (वै) न्मन्युर्न वर्धते (रक्षमसि पार्थिव).

[1]नूनं च तव नैवास्ति मन्युर्भरतसत्तम ।
यत्ते भ्रातॄंश्च मां चैव दृष्ट्वा न व्यथते मनः ॥
[2]न निर्मन्युः क्षत्रियोऽस्ति लोके निर्वचनं स्मृतम् ।
तदद्य त्वयि पश्यामि क्षत्रिये विपरीतवत् ॥
निर्वचनं क्षत्रियशब्दस्य क्षरते हिनस्तीति क्षत्रमिति । नीटी.
यो न दर्शयते तेजः क्षत्रियः काल आगते ।
सर्वभूतानि तं पार्थ सदा परिभवन्त्युत ॥
हिंस्रत्वं निन्द्यमिति चेत्तत्राऽऽह– यो नेति । तेजः क्रोधः । नीटी.
तत्त्वया न क्षमा कार्या शत्रून्प्रति कथंचन ।
तेजसैव हि ते शक्या निहन्तुं नात्र संशयः ॥
तथैव यः क्षमाकाले क्षत्रियो नोपशाम्यति ।
अप्रियः सर्वभूतानां सोऽमुत्रेह च नश्यति ॥
द्रौपद्युवाच–
[3]अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
प्रह्लादस्य च संवादं बलेर्वैरोचनस्य च ॥
असुरेन्द्रं महाप्राज्ञं धर्माणामागतागमम् ।
बलिः पप्रच्छ दैत्येन्द्रं प्रह्लादं पितरं पितुः ॥
आगतागमं प्राप्तरहस्यम् । नीटी.
[4]क्षमा स्विच्छ्रेयसी तात उताहो तेज इत्युत ।
एतन्मे संशयं तात यथावद्ब्रूहि पृच्छते ॥
[5]श्रेयो यदत्र धर्मज्ञ ब्रूहि मे तदसंशयम् ।
करिष्यामि हि तत्सर्वं यथावदनुशासनम् ॥

(१) भा. ३।२८।३३; भासु. ३।२७।३६ नैवास्ति (वै नास्ति).

(२) भा. ३।२८।३४–३७; भासु. ३।२७।३७–४०.

(३) भा. ३।२९।१–२; भासु. ३।२८।१–२.

(४) भा. ३।२९।३; भासु. ३।२८।३ 'बलिरुवाच' इत्यधिकम्.

(५) भा. ३।२९।४–६; भासु. ३।२८।४–६.

श्रेयः प्रशस्ततरम्। अत्र क्षमातेजसोर्मध्ये। नीटी.

तस्मै प्रोवाच तत्सर्वमेवं पृष्टः पितामहः।
सर्वनिश्चयवित् प्राज्ञः संशयं परिपृच्छते॥

प्रह्लाद उवाच–

न श्रेयः सततं तेजो न नित्यं श्रेयसी क्षमा।
इति तात विजानीहि द्वयमेतदसंशयम्॥
[1]यो नित्यं क्षमते तात बहून्दोषान्स विन्दति।
भृत्याः परिभवन्त्येनमुदासीनास्तथैव च॥
[2]सर्वभूतानि चाप्यस्य न नमन्ते कदाचन।
तस्मान्नित्यं क्षमा तात पण्डितैरपवादिता॥

अस्य एनम्। नीटी.

[3]अवज्ञाय हि तं भृत्या भजन्ते बहुदोषताम्।
आदातुं चास्य वित्तानि प्रार्थयन्तेऽल्पचेतसः॥
यानं वस्त्राण्यलङ्कारांञ्छयनान्यासनानि च।
भोजनान्यथ पानानि सर्वोपकरणानि च॥
आददीरन्नधिकृता यथाकाममचेतसः।
प्रदिष्टानि च देयानि न दद्युर्भर्तृशासनात्॥

अधिकृताः अन्नपानादिसंरक्षणे नियुक्ताः। प्रदिष्टानि इदमस्मै देयमित्याज्ञापितानि। नीटी.

[4]न चैनं भर्तृपूजाभिः पूजयन्ति कदाचन।
अवज्ञानं हि लोकेऽस्मिन्मरणादपि गर्हितम्॥

एनं क्षमिणम्। भर्तृपूजाभिः स्वाम्युचितमानेन। नीटी.

[5]क्षमिणं तादृशं तात ब्रुवन्ति कटुकान्यपि।
प्रेष्याः पुत्राश्च भृत्याश्च तथोदासीनवृत्तयः॥

(१) भा. ३।२९।७; भासु. ३।२८।७ स्तथैव च (स्तथाऽरयः).

(२) भा. ३।२९।८; भासु. ३।२८।८ रपवादिता (रपि वर्जिता).

(३) भा. ३।२९।९–११; भासु. ३।२८।९–११.

(४) भा. ३।२९।१२; भासु. ३।२८।१२ कदा (कथं).

(५) भा. ३।२९।१३; भासु. ३।२८।१३.

[1]अप्यस्य दारानिच्छन्ति परिभूय क्षमावतः।
दाराश्चास्य प्रवर्तन्ते यथाकाममचेतसः॥
[2]तथा च नित्यमुदिता यदि स्वल्पमपीश्वरात्।
दण्डमर्हन्ति दुष्यन्ति दुष्टाश्चाप्यपकुर्वते॥

नित्यमुदिताः नित्यं होलकाद्युत्सवपराः। नीटी.

[3]एते चान्ये च बहवो नित्यं दोषाः क्षमावताम्।
अथ वैरोचने दोषानिमान्विद्ध्यक्षमावताम्॥
अस्थाने यदि वा स्थाने सततं रजसाऽऽवृतः।
क्रुद्धो दण्डान्प्रणयति विविधान्स्वेन तेजसा॥

तेजसा क्रोधेन। नीटी.

[4]मित्रैः सह विरोधं च प्राप्नुते तेजसाऽऽवृतः।
प्राप्नोति द्वेष्यतां चैव लोकात्स्वजनतस्तथा॥
[5]सोऽवमानादर्थहानिमुपालम्भमनादरम्।
संतापद्वेषलोभांश्च शत्रूंश्च लभते नरः॥

उपालम्भं धिक्कारम्। नीटी.

[6]क्रोधाद्दण्डान्मनुष्येषु विविधान्पुरुषो नयन्।
भ्रश्यते शीघ्रमैश्वर्यात्प्राणेभ्यः स्वजनादपि॥
[7]योऽपकर्तॄंश्च कर्तॄंश्च तेजसैवोपगच्छति।
तस्मादुद्विजते लोकः सर्पाद्वेश्मगतादिव॥

(१) भा. ३।२९।१४; भासु. ३।२८।१४ अप्य (अथा).

(२) भा. ३।२९।१५; भासु. ३।२८।१५ स्वल्प (नाल्प).

(३) भा. ३।२९।१६–१७; भासु. ३।२८।१६–१७ साऽऽवृतः (सा वृतः).

(४) भा. ३।२९।१८; भासु. ३।२८।१८ साऽऽवृतः (सा वृतः) प्राप्नो (आप्नो).

(५) भा. ३।२९।१९; भासु. ३।२८।१९ लोभांश्च (मोहांश्च).

(६) भा. ३।२९।२०; भासु. ३।२८।२० नयन् (ऽनयात्).

(७) भा. ३।२९।२१; भासु. ३।२८।२१ कर्तॄंश्च ते (हर्तॄंश्च ते).

उपकर्तॄनिति छेदः । संधिरार्षः । उपकर्तॄन् कोशादिवृद्धिकरान् । हर्तॄन् चोरान् । नीटी.

[1]यस्मादुद्विजते लोकः कथं तस्य भवो भवेत् ।
अन्तरं ह्यस्य दृष्ट्वैव लोको विकुरुते ध्रुवम् ।
तस्मान्नात्युत्सृजेत्तेजो न च नित्यं मृदुर्भवेत् ॥

भवः ऐश्वर्यम् । अन्तरं छिद्रम् । विकुरुते प्रथयति । नीटी.

[2]काले काले तु संप्राप्ते मृदुस्तीक्ष्णोऽपि वा भवेत् ॥

[3]काले मृदुर्यो भवति काले भवति दारुणः ।
स वै सुखमवाप्नोति लोकेऽमुष्मिन्निहैव च ॥
क्षमाकालांस्तु वक्ष्यामि शृणु मे विस्तरेण तान् ।
ये ते नित्यमसंत्याज्या यथा प्राहुर्मनीषिणः ॥

असंत्याज्याः क्रोधेन अनतिक्रमणीयाः । नीटी.

[4]पूर्वोपकारी यस्तु स्यादपराधेऽगरीयसि ।
उपकारेण तत्तस्य क्षन्तव्यमपराधिनः ॥

पूर्वेषां पूर्वकाले वा उपकारी उपकर्ता । नीटी.

[5]अबुद्धिमाश्रितानां च क्षन्तव्यमपराधिनाम् ।
न हि सर्वत्र पाण्डित्यं सुलभं पुरुषेण वै ॥

अबुद्धिं मौढ्यम् । नीटी.

[6]अथ चेद्बुद्धिजं कृत्वा ब्रूयुस्ते तदबुद्धिजम् ।
पापान्स्वल्पेऽपि तान्हन्यादपराधे तथाऽनृजून् ॥
सर्वस्यैकोऽपराधस्ते क्षन्तव्यः प्राणिनो भवेत् ।
द्वितीये सति वध्यस्तु स्वल्पेऽप्यपकृते भवेत् ॥

अपकृते अपकारे । नीटी.

अजानता भवेत्कश्चिदपराधः कृतो यदि ।
क्षन्तव्यमेव तस्याऽऽहुः सुपरीक्ष्य परीक्षया ॥

[1]मृदुना मार्दवं हन्ति मृदुना हन्ति दारुणम् ।
नासाध्यं मृदुना किंचित्तस्मात्तीक्ष्णतरो मृदुः ॥

मृदुना साम्ना । नीटी.

[2]देशकालौ तु संप्रेक्ष्य बलाबलमथाऽऽत्मनः ।
नादेशकाले किंचित्स्याद्देशः कालः प्रतीक्ष्यते ।
तथा लोकभयाच्चैव क्षन्तव्यमपराधिनः ॥

सामापि देशकालापेक्षयैव कर्तव्यमित्याह— देशेति । नीटी.

[3]एत एवंविधाः कालाः क्षमायाः परिकीर्तिताः ।
अतोऽन्यथाऽनुवर्तत्सु तेजसः काल उच्यते ॥

द्रौपद्युवाच—

तदहं तेजसः कालं तव मन्ये नराधिप ।
धार्तराष्ट्रेषु लुब्धेषु सततं चापकारिषु ॥
न हि कश्चित्क्षमाकालो विद्यतेऽद्य कुरून्प्रति ।
तेजसश्चाऽऽगते काले तेज उत्स्रष्टुमर्हसि ॥

उत्स्रष्टुं प्रयोक्तुम् । नीटी.

[4]मृदुर्भवत्यवज्ञातस्तीक्ष्णादुद्विजते जनः ।
काले प्राप्ते द्वयं ह्येतद्यो वेद स महीपतिः ॥

---

(१) भा. ३।२९।२२; भामु. ३।२८।२२–२३ ह्यस्य (तस्य).

(२) भामु. ३।२८।२३.

(३) भा. ३।२९।२३–२४; भामु. ३।२८।२४–२५.

(४) भा. ३।२९।२५; भामु. ३।२८।२६ यस्तु (यस्ते).

(५) भा. ३।२९।२६; भामु. ३।२८।२७ च (तु).

(६) भा. ३।२९।२७–२९; भामु. ३।२८।२८–३०.

(१) भा. ३।२९।३०; भामु. ३।२८।३१ मार्दवं (दारुणं) हन्ति दा (हन्त्यदा) त्तीक्ष्णतरो मृदुः (त्तीव्रतरं मृदु).

(२) भा. ३।२९।३१; भामु. ३।२८।३२ चतुर्थचरणे (देशकालौ प्रतीक्षताम्).

(३) भा. ३।२९।३२–३४; भामु. ३।२८।३३–३५ (द्रौपद्युवाच० ).

(४) भा. ३।२९।३५; भामु. ३।२८।३६ त्वव (त्वनु) ह्येत (चैत).

युधिष्ठिरप्रोक्तः क्षमामहिमा

**युधिष्ठिर उवाच–**

**[1]क्रोधो हन्ता मनुष्याणां क्रोधो भावयिता पुनः ।**
**इति विद्धि महाप्राज्ञे क्रोधमूलौ भवाभवौ ॥**

परैरपकृताः आर्तैश्चोद्दीपिताः सामर्थ्यवन्तोऽपि सन्तः क्षमामेव श्रयन्ते इत्यध्यायतात्पर्यम् । भावयिता वर्धयिता, जितः सन्निति शेषः । नीटी.

**[2]यो हि संहरते क्रोधं भावस्तस्य सुशोभने ।**
**यः पुनः पुरुषः क्रोधं नित्यं न सहते शुभे ।**
**तस्याभावाय भवति क्रोधः परमदारुणः ॥**

तदेवाऽऽह— यो हीति । नीटी.

**[3]क्रोधमूलो विनाशो हि प्रजानामिह दृश्यते ।**
**तत् कथं मादृशः क्रोधमुत्सृजेल्लोकनाशनम् ॥**

लोकः आत्मा स्वर्गो वा, तन्नाशनम् । नीटी.

**क्रुद्धः पापं नरः कुर्यात् क्रुद्धो हन्याद्गुरूनपि ।**
**क्रुद्धः परुषया वाचा श्रेयसोऽप्यवमन्यते ॥**

तदेवाऽऽह— क्रुद्ध इति । श्रेयसः श्रेष्ठान् । श्रेयोऽपि प्राप्य इति वा ल्यब्लोपे पञ्चमीमाश्रित्य व्याख्येयम् । नीटी.

**वाच्यावाच्ये हि कुपितो न प्रजानाति कर्हिचित् ।**
**नाऽकार्यमस्ति क्रुद्धस्य नावाच्यं विद्यते तथा ॥**

**[4]हिंस्यात्क्रोधादवध्यांश्च वध्यान्संपूजयेदपि ।**
**आत्मानमपि च क्रुद्धः प्रेषयेद्यमसादनम् ॥**

**[5]एतान्दोषान्प्रपश्यद्भिर्जितः क्रोधो मनीषिभिः ।**
**इच्छद्भिः परमं श्रेय इह चामुत्र चोत्तमम् ॥**

**तं क्रोधं वर्जितं धीरैः कथमस्मद्विधश्चरेत् ।**
**एतद् द्रौपदि संधाय न मे मन्युः प्रवर्धते ॥**

'तं क्रोधं विक्रमं धीरैः' इति पाठे विपरीतः क्रमः येन तमित्यर्थः । चरेत् आचरेत् । नीटी.

**[1]आत्मानं च परं चैव त्रायते महतो भयात् ।**
**क्रुध्यन्तमप्रतिक्रुध्यन्द्वयोरेष चिकित्सकः ॥**

अप्रतिक्रुध्यन् त्रायते । द्वयोः आत्मपरयोः चिकित्सकः दोषापहर्ता । नीटी.

**[2]मूढो यदि क्लिश्यमानः क्रुध्यतेऽशक्तिमान्नरः ।**
**बलीयसां मनुष्याणां त्यजत्यात्मानमन्ततः ॥**

एतदेवाऽऽह— मूढ इति । बलीयसामुपरि यदि अशक्तिमान् क्लिश्यते क्रुध्यते तर्हि आत्मानं देहं त्यजति । नीटी.

**[3]तस्याऽऽत्मानं संत्यजतो लोका नश्यन्त्यनात्मनः ।**
**तस्माद्द्रौपद्यशक्तस्य मन्योर्नियमनं स्मृतम् ॥**

अनात्मनः अजितचित्तस्य । नियमनं कर्तव्यमिति स्मृतम् । अशक्तः क्रोधं जित्वा आत्मानम् आत्महत्यादोषात् परं च परहत्यादोषात् त्रायते इत्यर्थः । नीटी.

**[4]विद्वांस्तथैव यः शक्तः क्लिश्यमानो न कुप्यति ।**
**स नाशयित्वा क्लेष्टारं परलोके च नन्दति ॥**

शक्तस्यापि क्रोधजये आत्मपरत्रातृत्वमाह— विद्वानिति । नीटी.

---

(१) भा. ३।३०।१; भामु. ३।२९।१.

(२) भा. ३।३०।२; भामु. ३।२९।२ भाव (भव).

(३) भा. ३।३०।३--५; भामु. ३।२९।३--५.

(४) भा. ३।३०।६; भामु. ३।२९।६ येदपि (यीत च).

(५) भा. ३।३०।७--८; भामु. ३।२९।७--८.

(१) भा. ३।३०।९; भामु. ३।२९।९ रं चैव (रांश्चैव).

(२) भा. ३।३०।१०; भामु. ३।२९।१० क्रुध्य (क्लिश्य) मन्ततः (मात्मना).

(३) भा. ३।३०।११; भामु. ३।२९।११.

(४) भा. ३।३०।१२; भामु. ३।२९।१२ स नाश (अनाश).

**[1]तस्माद्बलवता चैव दुर्बलेन च नित्यदा ।**
**क्षन्तव्यं पुरुषेणाऽऽहुरापत्स्वपि विजानता ॥**
**मन्योर्हि विजयं कृष्णे प्रशंसन्तीह साधवः ।**
**क्षमावतो जयो नित्यं साधोरिह सतां मतम् ॥**
**सत्यं चानृततः श्रेयो नृशंसाच्चानृशंसता ।**
**तमेवं बहुदोषं तु क्रोधं साधुविवर्जितम् ।**
**मादृशः प्रसृजेत् कस्मात् सुयोधनवधादपि ॥**

प्रसृजेत् प्रकर्षेण प्रयुञ्जीत । सुयोधनवधादपि सुयोधनाद्वधं प्राप्यापीर्थः । नीटी.

**तेजस्वीति यमाहुर्वै पण्डिता दीर्घदर्शिनः ।**
**न क्रोधोऽभ्यन्तरस्तस्य भवतीति विनिश्चितम् ॥**

यदुक्तं 'तेजसश्चाऽऽगते काले तेज उत्स्रष्टुमर्हसि' (भा. ३।२८।३५) इति, तत्राऽऽह— तेजस्वीति । क्रोधजिदेव तेजस्वी, न तु क्रोधीत्यर्थः । नीटी.

**यस्तु क्रोधं समुत्पन्नं प्रज्ञया प्रतिबाधते ।**
**तेजस्विनं तं विद्वांसो मन्यन्ते तत्त्वदर्शिनः ॥**
**[2]क्रुद्धो हि कार्यं सुश्रोणि न यथावत्प्रपश्यति ।**
**न कार्यं न च मर्यादां नरः क्रुद्धोऽनुपश्यति ॥**

प्रत्युत क्रोधाजये दोषमाह— क्रुद्धो हीति । नीटी.

**[3]हन्त्यवध्यानपि क्रुद्धो गुरून् रूक्षैस्तुदत्यपि ।**
**तस्मात्तेजसि कर्तव्ये क्रोधो दूरात्प्रतिष्ठितः ॥**

तुदति व्यथयति परुषोक्त्यादिना । तेजसि सति । क्रोधजयित्वमेव तेजः, नान्यदित्यर्थः । नीटी.

**[4]दाक्ष्यं ह्यमर्षः शौर्यं च शीघ्रत्वमिति तेजसः ।**
**गुणाः क्रोधाभिभूतेन न शक्याः प्राप्तुमञ्जसा ॥**

एतदेव तेजोलक्षणप्रदर्शनेन प्रतिपादयति— दाक्ष्यमिति । दाक्ष्यं कर्मसु कौशलम् । अमर्षः शत्रोरपकारोपायचिन्तनम् । शौर्यं पराभिभवशक्तिः । शीघ्रत्वम् आशुकारिता । अञ्जसा आर्जवेन । नीटी.

**क्रोधं त्यक्त्वा तु पुरुषः सम्यक् तेजोऽभिपद्यते ।**
**कालयुक्तं महाप्राज्ञे क्रुद्धैस्तेजः सुदुःसहम् ॥**

क्रुद्धैः कालयुक्तं देशकालोपपन्नं तेजः सुदुःसहम् । नीटी.

**[1]क्रोधस्त्वपण्डितैः शश्वत्तेज इत्यभिधीयते ।**
**रजस्तल्लोकनाशाय विहितं मानुषान् प्रति ॥**

पण्डितैरित्युपहासः । मूर्खैरित्यर्थः । 'अपण्डितैः' इति गौडपाठः स्वच्छः । रजः रजोगुणपरिणामः । नीटी.

**[2]तस्माच्छश्वत्त्यजेत्क्रोधं पुरुषः सम्यगाचरन् ।**
**श्रेयान् स्वधर्मानपगो न क्रुद्ध इति निश्चितम् ॥**

स्वधर्मान् अपगः अपहाय गच्छतीति तथा । द्वितीयाया अलुगार्षः । जातिभ्रष्टात् पतितादपि क्रोधी हीन इत्यर्थः । नीटी.

**[3]यदि सर्वमबुद्धीनामतिक्रान्तममेधसाम् ।**
**अतिक्रमो मद्विधस्य कथं स्वित्स्यादनिन्दिते ॥**

सर्वं क्षमार्जवादिकम् अबुद्धीनां मूढैः अतिक्रान्तं लङ्घितम् । अनिन्दिते प्रशस्ते विषये क्षमादौ । नीटी.

**[4]यदि न स्युर्मनुष्येषु क्षमिणः पृथिवीसमाः ।**
**न स्यात्संधिर्मनुष्याणां क्रोधमूलो हि विग्रहः ॥**
**[5]अभिषक्तो ह्यभिषजेदाहन्याद्गुरुणा हतः ।**
**एवं विनाशो भूतानामधर्मः प्रथितो भवेत् ॥**

---

(१) भा. ३।३०।१३--१७; भामु. ३।२९।१३--१८.

(२) भा. ३।३०।१८; भामु. ३।२९।१८ न कार्यं (नाकार्यं).

(३) भा. ३।३०।१९; भामु. ३।२९।१९ रूक्षै (क्रुद्ध) कर्तव्ये (कर्तव्यः) रात्प्र (रे प्र).

(४) भा. ३।३०।२०–२१; भामु. ३।२९।२०–२१.

---

(१) भा. ३।३०।२२; भामु. ३।२९।२२ स्त्वप (स्तु प) धीयते (निश्चितम्) स्तल्लो (स्तु लो) नुषान् (नुषं).

(२) भा. ३।३०।२३; भामु. ३।२९।२३.

(३) भा. ३।३०।२४; भामु. ३।२९।२४ मेध (चेत).

(४) भा. ३।३०।२५; भामु. ३।२९।२५ र्मनुष्ये (र्मानुषे).

(५) भा. ३।३०।२६; भामु. ३।२९।२६.

अभिषक्तः तापितः अभिषजेत् तापयेत् । गुरुणाऽपि हतः तम् आहन्यात् ताडयेत् , किमुतान्यमिति भावः। एवं विनाशः अधर्मश्च प्रथितो भवेत् । नीटी.

[1]आक्रुष्टः पुरुषः सर्वः प्रत्याक्रोशेदनन्तरम् ।
प्रतिहन्याद्धतश्चैव तथा हिंस्याच्च हिंसितः ॥

आक्रुष्टः वाचा ताडितः । हतः अन्येनाभिगतः । हिंसितः ताडितः । नीटी.

[2]हन्युर्हि पितरः पुत्रान् पुत्राश्चापि तथा पितॄन् ।
हन्युश्च पतयो भार्याः पतीन् भार्यास्तथैव च ॥
एवं संकुपिते लोके जन्म कृष्णे न विद्यते ।
प्रजानां संधिमूलं हि जन्म विद्धि शुभानने ॥

जन्म उत्पत्तिः । तत्र हेतुः प्रजानां संधिः दम्पत्योः प्रीतिः । ' शम ' इति पाठे क्षमा । नीटी.

[3]ताः क्षीयेरन् प्रजाः सर्वाः क्षिप्रं द्रौपदि तादृशे ।
तस्मान्मन्युर्विनाशाय प्रजानामभवाय च ॥

तादृशे क्रोधपरे राज्ञि सति क्षिपेरन् नश्येयुः । अभवाय अनैश्वर्याय । नीटी.

[4]यस्मात्तु लोके दृश्यन्ते क्षमिणः पृथिवीसमाः ।
तस्माज्जन्म च भूतानां भवश्च प्रतिपद्यते ॥

जन्म प्रतिपद्यते, अन्यथा क्रोधप्राबल्ये पूर्ववयस्येव दम्पत्योर्नाशात् जन्मासंभव इत्यर्थः । नीटी.

[5]क्षन्तव्यं पुरुषेणेह सर्वास्वापत्सु शोभने ।
क्षमा भवो हि भूतानां जन्म चैव प्रकीर्तितम् ॥

(१) भा. ३।३०।२७; भाम. ३।२९।२७ सर्वः (सर्वे).

(२) भा. ३।३०।२८–२९; भामु. ३।२९।२८–२९.

(३) भा. ३।३०।३०; भामु. ३।२९।३० क्षीये (क्षिपे).

(४) भा. ३।३०।३१; भामु. ३।२९।३१.

(५) भा. ३।३०।३२; भामु. ३।२९।३२ स्वापत्सु (पत्सु सु) भा भवो (भावतो).

[1]आक्रुष्टस्ताडितः क्रुद्धः क्षमते यो बलीयसा ।
यश्च नित्यं जितक्रोधो विद्वानुत्तमपूरुषः ॥
प्रभाववानपि नरस्तस्य लोकाः सनातनाः ।
क्रोधनस्त्वल्पविज्ञानः प्रेत्य चेह च नश्यति ॥

बलीयसा बलवत्तरेण स्वाम्यादिना यथा आक्रुष्टस्ताडितो वा अशक्तः क्षमते तथा यः प्रभाववानपि क्षमते तस्य लोकाः इति सार्धश्लोको वाक्यम् । अन्यथा दोषमाहार्धेन— क्रोधनस्त्विति । नीटी.

[2]अत्राप्युदाहरन्तीमा गाथा नित्यं क्षमावताम् ।
गीताः क्षमावता कृष्णे काश्यपेन महात्मना ॥

क्षमावतां गाथाः प्रशंसाः। क्षमावतां मध्ये महात्मना । नीटी.

[3]क्षमा धर्मः क्षमा यज्ञः क्षमा वेदाः क्षमा श्रुतम् ।
यस्तामेवं विजानाति स सर्वं क्षन्तुमर्हति ॥

क्षमाहीनस्य धर्मादिरनर्थकर इत्यर्थः । यः धर्मादिफलार्थी । नीटी.

[4]क्षमा ब्रह्म क्षमा सत्यं क्षमा भूतं च भावि च ।
क्षमा तपः क्षमा शौचं क्षमया चोद्धृतं जगत् ॥

ब्रह्म ब्राह्मणजातिः । सत्यं परं ब्रह्मापि क्षमाप्राप्यम् । भूतं संचितं तपः भावि च क्षमैव रक्षति । नीटी.

[5]अति ब्रह्मविदां लोकानति चापि तपस्विनाम् ।
अति यज्ञविदां चैव क्षमिणः प्राप्नुवन्ति तान् ॥

(१) भा. ३।३०।३३–३४; भामु. ३।२९।३३–३४.

(२) भा. ३।३०।३५; भामु. ३।२९।३५; वता (वतां).

(३) भा. ३।३०।३६; भामु. ३।२९।३६ यस्तामेवं वि (य एतदेवं).

(४) भा. ३।३०।३७; भामु. ३।२९।३७ या चोद्धृतं (येदं धृतं).

(५) भा. ३।३०।३८ ; भामु. ३।२९।३८ चैव (लोकान्) तान् (च) व्यत्यासपठितौ श्लोकार्धौ.

अति अतिक्रम्य प्राप्नुवन्ति, तदूर्ध्वं पदमिति शेषः। ब्रह्मविदां वेदविदाम्। नीटी.

[1]अन्ये वै यजुषां लोकाः कर्मिणामपरे तथा।
क्षमावतां ब्रह्मलोके लोकाः परमपूजिताः॥

यजुषां त्रेताग्निसाध्यकर्मवताम्। कर्मिणां वापीकूपादि-धर्मवताम्। नीटी.

[2]क्षमा तेजस्विनां तेजः क्षमा ब्रह्म तपस्विनाम्।
क्षमा सत्यं सत्यवतां क्षमा दानं क्षमा यशः॥

[3]तां क्षमामीदृशीं कृष्णे कथमस्मद्विधस्त्यजेत्।
यस्यां ब्रह्म च सत्यं च यज्ञा लोकाश्च विष्ठिताः।
भुज्यन्ते यज्वनां लोकाः क्षमिणामपरे तथा॥

[4]क्षन्तव्यमेव सततं पुरुषेण विजानता।
यदा हि क्षमते सर्वं ब्रह्म संपद्यते तदा॥

सर्वं मनःप्राणेन्द्रियाणां वेगं क्षमते सोढुं शक्नोति। नीटी.

[5]क्षमावतामयं लोकः परश्चैव क्षमावताम्।
इह संमानमृच्छन्ति परत्र च शुभां गतिम्॥

[6]येषां मन्युर्मनुष्याणां क्षमया निहतः सदा।
तेषां परतरे लोकास्तस्मात्क्षान्तिः परा मता॥

परतरे सत्यलोके। लोकाः भोग्यपदार्थाः। नीटी.

[7]इति गीताः काश्यपेन गाथा नित्यं क्षमावताम्।
श्रुत्वा गाथाः क्षमायास्त्वं तुष्य द्रौपदि मा क्रुधः॥

(१) भामु. ३।२९।३९.

(२) भा. ३।३०।३९ ; भामु. ३।२९।४० दानं (यज्ञः) यशः (शमः).

(३) भा. ३।३०।४० ; भामु. ३।२९।४१ क्षमामी (क्षमां ता) विष्ठि (धिष्ठि) तृतीयार्धं नास्ति.

(४) भा. ३।३०।४१ ; भामु. ३।२९।४२.

(५) भा. ३।३०।४२ ; भामु. ३।२९।४३ संमा (सन्मा).

(६) भा. ३।३०।४३ ; भामु. ३।२९।४४ यां निं (याऽभि).

(७) भा. ३।३०।४४ ; भामु. ३।२९।४५.

तुष्य तुष्टा भव। नीटी.

[1]पितामहः शान्तनवः शमं संपूजयिष्यति।
कृष्णश्च देवकीपुत्रः शमं संपूजयिष्यति॥
आचार्यो विदुरः क्षत्ता शममेव वदिष्यतः।
कृपश्च संजयश्चैव शममेव वदिष्यतः॥

[2]सोमदत्तो युयुत्सुश्च द्रोणपुत्रस्तथैव च।
पितामहश्च नो व्यासः शमं वदति नित्यशः॥
एतैर्हि राजा नियतं चोद्यमानः शमं प्रति।
राज्यं दातेति मे बुद्धिर्न चेल्लोभान्नशिष्यति॥

राजा धृतराष्ट्रः तत्पुत्रो वा। दाता दास्यति। नीटी.

[3]कालोऽयं दारुणः प्राप्तो भरतानामभूतये।
निश्चितं मे सदैवैतत्पुरस्तादपि भामिनि॥

अभूतये नाशाय। नीटी.

[4]सुयोधनो नार्हतीति क्षमामेवं न विन्दति।
अर्हस्तस्याहमित्येव तस्मान्मां विन्दते क्षमा॥

नार्हति, राज्यमिति शेषः। तत्र हेतुः— इतीति। एवम् उक्तरीत्या। नीटी.

[5]एतदात्मवतां वृत्तमेष धर्मः सनातनः।
क्षमा चैवाऽऽनृशंस्यं च तत्कर्तास्म्यहमञ्जसा॥

अञ्जसा तत्त्वतः। नीटी.

(१) भा. ३।३०।४५ द्वितीयार्धं नास्ति; भामु. ३।२९।४६–४७.

(२) भा. ३।३०।४६–४७ ; भामु. ३।२९।४८–४९.

(३) भा. ३।३०।४८ ; भामु. ३।२९।५० भामिनि (भाविनि).

(४) भा. ३।३०।४९ ; भामु. ३।२९।५१ स्तस्याहमित्येव (स्तत्राहमित्येवं).

(५) भा. ३।३०।५० ; भामु. ३।२९।५२.

उपायाश्चत्वारः , तेषां परीक्षा समासव्यासाभ्यां कर्तव्या

[1]राज्ञामुपायाश्चत्वारो बुद्धिमन्त्रः पराक्रमः ।
निग्रहानुग्रहौ चैव दाक्ष्यं तत्कार्यसाधनम् ॥
[2]साम्ना दानेन भेदेन दण्डेनोपेक्षणेन च ।
साधनीयानि कार्याणि समासव्यासयोगतः ॥

( समासः ? ) सामादिपञ्चके एकेन द्वित्रैर्वा कार्यसाधनं व्यासः , सर्वैस्तत्सिद्धिः ( समासः ) । नीटी.

उपायचतुष्टयप्रयोगविवेकः

[3]साम्ना दानेन वा कृष्ण ये न शाम्यन्ति शत्रवः ।
मोक्तव्यस्तेषु दण्डः स्याज्जीवितं परिरक्षता ॥
[4]कथं हि स्वजने भेदमुपेक्षेत महामतिः ।
भिन्नं हि स्वजनेन त्वां प्रसहिष्यन्ति शत्रवः ॥
[5]या हि शक्या महाराज साम्ना दानेन वा पुनः ।
निस्तर्तुमापदः स्वेषु दण्डं कस्तत्र पातयेत् ॥
[6]दानेनान्यं बलेनान्यं तथा सूनृतयाऽपरम् ।
सर्वतः प्रतिगृह्णीयाद्राज्यं प्राप्येह धार्मिकः ॥
[7]पित्र्यमंशं महाबाहो निमग्नं पुनरुद्धर ।
साम्ना दानेन भेदेन दण्डेनाथ नयेन च ॥

( १ ) भा. ३।१४९।४१ ; भामु. ३।१५०।४१ ( राज्ञामुपायश्चारश्च बुद्धिमन्त्रपराक्रमाः । विग्रहप्रग्रहौ चैव दाक्ष्यं वै कार्यसाधकम् ॥ ).
( २ ) भा. ३।१४९।४२ ; भामु. ३।१५०।४२ कार्याणि ( कर्माणि ).
( ३ ) भा. ५।८०।१२ ; भामु. ५।८२।१३ मोक्त ( योक्त ).
( ४ ) भा. ५।१२७।१४ ; भामु. ५।१२९।१४ महामतिः ( महीपतिः ) प्रसहि ( प्रहसि ).
( ५ ) भा. ५।१२७।१५ ; भामु. ५।१२९।१५ दानेन ( भेदेन ).
( ६ ) भा. ५।१३०।२७ ; भामु. ५।१३२।२९.
( ७ ) भा. ५।१३०।३० ; भामु. ५।१३२।३२ दानेन भेदेन ( भेदेन दानेन ) च ( वा ).



[1]साम चोपप्रदानं च भेदो दण्डश्च पाण्डव ।
उपेक्षा पञ्चमी चात्र कार्त्स्न्येन समुदाहृता ॥

सामादिचतुष्टयं उपेक्षा च पञ्चमी इत्युपायाः । नीटी.

[2]साम आदौ प्रयुक्तं मे राजन् सौभ्रात्रमिच्छता ॥
अभेदात्कुरुवंशस्य प्रजानां च विवृद्धये ॥

साम्यं साम्नो भावः । सामेति यावत् । नीटी.

[3]पुनर्भेदश्च मे युक्तो यदा साम न गृह्यते ।
कर्मानुकीर्तनं चैव देवमानुषसंहितम् ॥

पुनर्भेदश्च कर्णेन सह उपसंवादेन । नीटी.

यदा नाऽऽद्रियते वाक्यं सामपूर्वं सुयोधनः ।
तदा मया समानीय भेदिताः सर्वपार्थिवाः ॥
[4]अद्भुतानि च घोराणि दारुणानि च भारत ।
अमानुषाणि कर्माणि दर्शितानि च मे विभो ॥
[5]भर्त्सयित्वा तु राज्ञस्तांस्तृणीकृत्य सुयोधनम् ।
राधेयं भीषयित्वा च सौबलं च पुनः पुनः ॥
[6]न्यूनतां धार्तराष्ट्राणां निन्दां चैव पुनः पुनः ।
भेदयित्वा नृपान् सर्वान् वाग्भिर्मन्त्रेण चासकृत् ॥

( १ ) भा. १२।५९।३५ ; भामु. १२।५९।३५ चोप ( भेदः ) भेदो ( ततो ) पाण्डव ( पार्थिव ).
( २ ) भा. ५।१४८।७ ; भामु. ५।१५०।८ साम आदौ ( साम्यमादौ ) दात्कुरु ( दायास्य ).
( ३ ) भा. ५।१४८।८–९ ; भामु. ५।१५०।९–१०.
( ४ ) भा. ५।१४८।१० ; भामु. ५।१५०।११ च मे ( मया ).
( ५ ) भा. ५।१४८।११ ; भामु. ५।१५०।१२ भर्त्सयित्वा तु ( निर्भर्त्सयित्वा ).
( ६ ) भा. ५।१४८।१२ ; भामु. ५।१५०।१३ न्यूनतां ( चूततो ) चैव पुनः ( कृत्वा तथा ).

[1]पुनः सामाभिसंयुक्तं संप्रदानमथाब्रुवम् ।
अभेदात्कुरुवंशस्य कार्ययोगात्तथैव च ॥
[2]ते बाला धृतराष्ट्रस्य भीष्मस्य विदुरस्य च ।
तिष्ठेयुः पाण्डवाः सर्वे हित्वा मानमधश्चराः ॥
[3]प्रयच्छन्तु च ते राज्यमनीशास्ते भवन्तु च ।
यथाऽऽह राजा गाङ्गेयो विदुरश्च तथाऽस्तु तत् ॥
[4]सर्वं भवतु ते राज्यं पञ्च ग्रामान् विसर्जय ।
अवश्यं भरणीया हि पितुस्ते राजसत्तम ॥

पञ्चग्राममात्रस्वीकारेण कृत्स्नराज्यसमर्पणरूपं दानमपि प्रयुक्तम् । नीटी.

उपायस्य दण्डस्य जघन्यता

[5]एवमुक्तस्तु दुष्टात्मा नैव भावं व्यमुञ्चत ।
दण्डं चतुर्थं पश्यामि तेषु पापेषु नान्यथा ॥

दण्ड एवोपायो नान्य इत्याह– दण्डमिति । नीटी.

[6]निर्याताश्च विनाशाय कुरुक्षेत्रं नराधिपाः ।
एतत्ते कथितं सर्वं यद्वृत्तं कुरुसंसदि ॥
[7]न ते राज्यं प्रयच्छन्ति विना युद्धेन पाण्डव ।
विनाशहेतवः सर्वे प्रत्युपस्थितमृत्यवः ॥
[8]संभृत्य महतीं सेनां चतुरङ्गां महीपतिः ।
उपायपूर्वं मेधावी यतेत सततोत्थितः ॥

(१) भा. ५।१४८।१३ ; भामु. ५।१५०।१४.

(२) भा. ५।१४८।१४ ; भामु. ५।१५०।१५ बाला ( शूरा ).

(३) भा. ५।१४८।१५ ; भामु. ५।१५०।१६ तथाऽस्तु तत् ( हितं तव ).

(४) भा. ५।१४८।१६ ; भामु. ५।१५०।१७.

(५) भा. ५।१४८।१७; भामु. ५।१५०।१८ मुक्तस्तु ( मुक्तोऽपि ) भावं ( मार्गं ).

(६) भा. ५।१४८।१८ ; भामु. ५।१५०।१९ सर्वे ( राजन् ).

(७) भा. ५।१४८।१९ ; भामु. ५।१५०।२०.

(८) भा. ६।४।३१ ; भामु. ६।३।८० संभृत्य ( सत्कृत्य ).

[1]उपायविजयं श्रेष्ठमाहुर्भेदेन मध्यमम् ।
जघन्य एष विजयो यो युद्धेन विशां पते ।

उपायविजयं लाभपूर्वकं जयम् । साम्ना प्रार्थनया दानेन वा शत्रुणा वाचा प्रार्थितस्य धनेन वा संतर्पितस्य मुख्यो जयः, शत्रुं भेदयतो मध्यमः, निघ्नतोऽधम इत्यर्थः । नीटी.

[2]वर्जनीयं सदा युद्धं राज्यकामेन धीमता ॥
[3]उपायैस्त्रिभिरादानमर्थस्याऽऽह बृहस्पतिः ।
सान्त्वेनानुप्रदानेन भेदेन च नराधिप ।
यमर्थं शक्नुयात्प्राप्तुं तेन तुष्येद्धि पण्डितः ॥

बलिनो राष्ट्रं कर्षन् दुर्बलस्ततः सान्त्वेन अर्थं यत् यावत् प्राप्तुं शक्नुयात् तेन तुष्येत । 'भवद्भिर्मत्तो वार्षिकः करो न ग्राह्यो मया च भवतां राष्ट्रं नोपहन्तव्यम्' इति सान्त्वम् । 'मह्यं ग्रामद्वयं देयम्, तेनाहं शमिष्ये' इत्युक्त्या अर्थप्रदानम् । भेदेन राजामात्यान् भेदयित्वा राज्ञः स्वोपरि प्रयाणस्य विघ्नादिकं वा कर्तव्यमित्यादिना । क्षीणः प्रबलेन सह वैरं चेत् संग्रामं विना एवमुपायत्रयेण स्वार्थं साधयेदित्यर्थः । नीटी.

[4]संभृत्य महतीं सेनां चतुरङ्गां युधिष्ठिर ।
साम्नैवाऽऽवावर्तने पूर्वं प्रयतेथास्ततो युधि ॥
जघन्य एष विजयो यद्युद्धं नाम भारत ।
यादृच्छिको युधि जयो दैवो वेति विचारणम् ॥
[5]संनिपातो न गन्तव्यः शक्ये सति कथंचन ।
सान्त्वभेदप्रदानानां युद्धमुत्तरमुच्यते ॥

संनिपातः युद्धम् । नीटी.

(१) भा. ६।४।३२ ; भामु. ६।३।८१.

(२) भा. १२।६९।२२ ; भामु. १२।६९।२३.

(३) भा. १२।६९।२३ ; भामु. १२।६९।२३–२४ नानुप्र ( न तु प्र ) यमर्थं ( यदर्थं ) ष्येद्धि ( ष्येत ).

(४) भा. १२।१०३।१६–१७ ; भामु. १२।१०२।१६–१७ वाऽऽवर्तने ( व वर्तयेः ).

(५) भा. १२।१०३।२२ ; भामु. १२।१०२।२२ गन्त ( मन्त ).

विकल्पेन समुच्चित्य वा उपायचतुष्टयस्य प्रयोगः युक्त्या विवेकेन च

युधिष्ठिर उवाच—

[1]कथं मृदौ कथं तीक्ष्णे महापक्षे च पार्थिव ।
अरौ वर्तेत नृपतिस्तन्मे ब्रूहि पितामह ॥

भीष्म उवाच—

[2]अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
बृहस्पतेश्च संवादमिन्द्रस्य च युधिष्ठिर ॥
बृहस्पतिं देवपतिरभिवाद्य कृताञ्जलिः ।
उपसंगम्य पप्रच्छ वासवः परवीरहा ॥

इन्द्र उवाच—

[3]अहितेषु कथं ब्रह्मन् वर्तयेयमतन्द्रितः ।
असमुच्छिद्य चैवेनान्नियच्छेयमुपायतः ॥
[4]सेनयोर्व्यतिषङ्गेण जयः साधारणो भवेत् ।
किं कुर्वाणं न मां जह्याज्ज्वलिता श्रीः प्रतापिनी ॥

व्यतिषङ्गेण मिश्रणेन । युद्धेनेत्यर्थः । साधारणः नियतः । नीटी.

ततो धर्मार्थकामानां कुशलः प्रतिभानवान् ।
राजधर्मविधानज्ञः प्रत्युवाच पुरंदरम् ॥

प्रत्युवाच गुरुः । नीटी.

बृहस्पतिरुवाच—

[5]न जातु कलहेनेच्छेन्नियन्तुमपकारिणः ।
बालसंसेवि[illegible]त ह्येतद्यदमर्षो यदक्षमा ।
न शत्रुर्वि[illegible]वृतः कार्यो वधमस्याभिकाङ्क्षता ॥

विवृतः सावधानः । सार्धः श्लोकः । नीटी.

[1]क्रोधं बलममर्षं च नियम्याऽऽत्मजमात्मनि ।
अमित्रमुपसेवेत विश्वस्तवदविश्वसन् ॥
[2]प्रियमेव वदेन्नित्यं नाप्रियं किंचिदाचरेत् ।
विरमेच्छुष्कवैरेभ्यः कण्ठायासं च वर्जयेत् ॥

कण्ठायासान् मुखरत्वम् । नीटी.

[3]यथा वतंसिको युक्तो द्विजानां सदृशास्वनः ।
तान् द्विजान् कुरुते वश्यांस्तथा युक्तो महीपतिः ।
वशं चोपनयेच्छत्रून्निहन्याच्च पुरंदर ॥

वितंसः पक्षिबन्धनोपायः । तदुपजीवी वैतंसिकः । नीटी.

[4]न नित्यं परिभूयारीन् सुखं स्वपिति वासव ।
जागर्त्येव च दुष्टात्मा संकरेऽग्निरिवोत्थितः ॥

स्वपिति महीपतिरित्यनुकर्षः । 'संकरोऽग्निचटत्कारः' इति मेदिनी । नीटी.

[5]न संनिपातः कर्तव्यः सामान्ये विजये सति ।
विश्वास्यैवोपसंन्यास्यो वशे कृत्वा रिपुः प्रभो ॥

सामान्ये अनिश्चिते । रिपुर्वशे कृत्वा उपसन्नार्थः लम्भितार्थः कृतश्चेत् स एनं काले प्रहरेदिति सार्धयोर्द्वयोः संबन्धः । नीटी.

---

(१) भा. १२।१०४।१ ; भामु. १२।१०३।१ अरौ (आदौ).

(२) भा. १२।१०४।२–३ ; भामु. १२।१०३। २–३.

(३) भा. १२।१०४।४ ; भामु. १२।१०३।४ वर्तये (प्रवर्ते) चैवेना (चैवैता).

(४) भा. १२।१०४।५–६ ; भामु. १२।१०३। ५–६.

(५) भा. १२।१०४।७ ; भामु. १२।१०३।७–८ बालसं (बालैरा).

(१) भा. १२।१०४।८ ; भामु. १२।१०३।८–९ बलममर्षं (भयं च हर्षं) म्याऽऽत्मज (म्य स्वय).

(२) भा. १२।१०४।९ ; भामु. १२।१०३।९–१० यासं च (यासांश्च).

(३) भा. १२।१०४।१० ; भामु. १२।१०३। १०–११.

(४) भा. १२।१०४।११ ; भामु. १२।१०३।१२ च (हि).

(५) भा. १२।१०४।१२ ; भामु. १२।१०३।१३ संन्यास्यो (सन्नार्थो).

[1]संप्रधार्य सहामात्यैर्मन्त्रविद्भिर्महात्मभिः ।
उपेक्षमाणोऽवज्ञाते हृदयेनापराजितः ॥
[2]अथास्य प्रहरेत्काले किंचिद्विचलिते पदे ।
दण्डं च दूषयेदस्य पुरुषैराप्तकारिभिः ॥

किंच अस्य दण्डं सेनां च भेदेन दूषयेत् सः । नीटी.

[3]आदिमध्यावसानज्ञः प्रच्छन्नं च विचारयेत् ।
बलानि दूषयेदस्य जानंश्चैव प्रमाणतः ॥

प्रच्छन्नं यथा स्यात्तथा विधारयेत् मनसि विषमं धारयेत् । नीटी.

[4]भेदेनोपप्रदानेन संसृजन्नौषधैस्तथा ।
न त्वेव चेलसंसर्गं रचयेदरिभिः सह ॥

औषधैः विषादिभिः । फलितमाह— न त्विति । नीटी.

[5]दीर्घकालमपि क्षान्त्वा विहन्यादेव शात्रवान् ।
कालाकाङ्क्षी यामयेच्च यथा विस्रम्भमाप्नुयुः ॥

यथा विस्रम्भं विश्वासं आप्नुयुस्तथा कुर्यात् । नीटी.

[6]न सद्योऽरीन् विनिर्हन्याद्दृष्टस्य विजयोऽज्वरः ।
न यः शल्यं घट्टयति नवं च कुरुते व्रणम् ॥

द्रष्टव्यः प्रदर्शनीयः । नेति सार्धः । नीटी.

(१) भा. १२।१०४।१३ ; भासु. १२।१०३।१४ उपेक्ष (उपेक्ष्य) ज्ञाते (ज्ञातो).

(२) भा. १२।१०४।१४ ; भासु. १२।१०३।१५.

(३) भा. १२।१०४।१५ ; भासु. १२।१०३।१६ चार (धार) नंश्चैव (नन्नेव).

(४) भा. १२।१०४।१६ ; भासु. १२।१०३।१७ जन्नौ (जेदौ) त्वेव चेल (त्वेवं खलु) रच (रोच).

(५) भा. १२।१०४।१७ ; भासु. १२।१०३।१८ पि क्षान्त्वा वि (पीक्षेत नि) यामयेच्च (हि क्षपयेद्) स्रम्भ (श्रम्भ).

(६) भा. १२।१०४।१८ ; भासु. १२।१०३।१९ निर्हन्याद्दृष्टस्य (हन्याच्च द्रष्टव्यो) ऽज्वरः (ध्रुवः) यः शल्यं घट्ट (शल्यं वा घट) नवं च (न प्राचा).

[1]प्राप्ते च प्रहरेत् काले न स संवर्तते पुनः ।
हन्तुकामस्य देवेन्द्र पुरुषस्य रिपुं प्रति ॥

रिपून् प्रति हन्तुकामस्य पुनः कालो न संवर्तते नोपसंपद्यते, अतः प्राप्ते काले प्रहरेदेव, न तु कालान्तरं प्रतीक्षेतेत्यर्थः । नीटी.

[2]यः कालो हि व्यतिक्रामेत्पुरुषं कालकाङ्क्षिणम् ।
दुर्लभः स पुनः कालः कालधर्मचिकीर्षुणा ॥
[3]औजस्थ्यं विजयेदेवं संगृह्णन् साधुसंमतान् ।
कालेन साधयेन्नित्यं नाप्राप्तेऽभिनिपीडयेत् ॥

ओजः सामर्थ्यम् । शत्रौ अकाले प्राप्ते सति स्वकार्यं न साधयेत्, नापि तं प्रपीडयेत्, काले च नातिक्रामेतेत्यर्थः । नीटी.

[4]विहाय कामं क्रोधं च तथाऽहंकारमेव च ।
युक्तो विवरमन्विच्छेदहितानां पुरंदर ॥
[5]मार्दवं दण्ड आलस्यं प्रमादश्च सुरोत्तम ।
मायाश्च विविधाः शक्र साधयन्त्यविचक्षणम् ॥
[6]निहत्यैतानि चत्वारि मायां प्रतिविधाय च ।
ततः शक्नोति शत्रूणां प्रहर्तुमविचारयन् ॥

(१) भा. १२।१०४।१९ ; भासु. १२।१०३।२० स (च) रिपुं (रिपून्).

(२) भा. १२।१०४।२० ; भासु. १२।१०३।२१ यः कालो हि (यो हि कालो) कालः कालधर्म (तेन कालः कर्म).

(३) भा. १२।१०४।२१ ; भासु. १२।१०३।२२ (ओजश्च विनयेदेव संगृह्णन् साधुसंमतम् । अकाले साधयेन्मित्रं न च प्राप्ते प्रपीडयेत् ॥).

(४) भा. १२।१०४।२२ ; भासु. १२।१०३।२३ पुरंदर (पुनः पुनः).

(५) भा. १२।१०४।२३ ; भासु. १२।१०३।२४ याश्च विविधाः (याः सुविहिताः) साध (साद).

(६) भा. १२।१०४।२४ ; भासु. १२।१०३।२५ धाय (हाय).

चत्वारि मार्दवादीनि । नीटी.

[1]यदैवैकेन शक्येत गुह्यं कर्तुं तदाऽऽचरेत् ।
यच्छन्ति सचिवा गुह्यं मिथो विद्रावयन्त्यपि ॥

मन्त्रविप्लवभयाद्यदेकेनैव कर्तुं शक्यं तत्तं प्रति वक्तव्यम्, न बहून् प्रतीत्याह— यदिति । यच्छन्ति निगृह्णन्ति । कर्तुं न प्रयच्छन्तीत्यर्थः । नीटी.

[2]अशक्यमिति कृत्वा वा ततोऽन्यैः संविदं चरेत् ।
ब्रह्मदण्डमदृष्टेषु दृष्टेषु चतुरङ्गिणीम् ॥

अन्यैः सह संविदं संमतिं चरेत् यदि पूर्वो मन्त्रं विघ्नयेदित्यर्थः । ततश्च अदृष्टेषु दूरस्थेषु ब्रह्मदण्डं पुरोहितद्वारमभिचारं प्रयुञ्ज्यात्, दृष्टे प्रत्यक्षशत्रौ चतुरङ्गिणीमपि प्रयुञ्ज्यादित्याह— ब्रह्मेति । नीटी.

[3]भेदं च प्रथमं युञ्ज्यात्तूष्णींदण्डं तथैव च ।
काले प्रयोजयेद्राजा तस्मिंस्तस्मिंस्तदा तदा ॥

[4]प्रणिपातं च गच्छेत काले शत्रोर्बलीयसः ।
युक्तोऽस्य वधमन्विच्छेदप्रमत्तः प्रमाद्यतः ॥

[5]प्रणिपातेन दानेन वाचा मधुरया ब्रुवन् ।
अमित्रमुपसेवेत न तु जातु विशङ्कयेत् ॥

न विशङ्कयेत् शङ्कायत्तं न कुर्यात् । नीटी.

[6]स्थानानि शङ्कितानां च नित्यमेव विवर्जयेत् ।
न च तेष्वाश्वसेद्द्रुग्ध्वा जाग्रतीह निराकृताः ॥

तदेवाऽऽह— स्थानानीति । निराकृताः स्वशत्रुभिः सह प्रीतिं कुर्वाणानन्यान् शत्रुत्वेन पश्यन्ति, तदीयमित्रत्वे च न विश्वसन्तीत्यर्थः । नीटी.

[1]न ह्यतो दुष्करं कर्म किंचिदस्ति सुरोत्तम ।
यथा विविधवृत्तानामैश्वर्यममराधिप ॥

विविधवृत्तानाम् अस्थिराणाम् । स्थिरचित्त एव भवेदित्यर्थः । नीटी.

[2]तथा विविधशीलानामपि संभव उच्यते ।
यतेत योगमास्थाय मित्रामित्रानवारयन् ॥

[3]मृदुमप्यवमन्यन्ते तीक्ष्णादुद्विजते जनः ।
मा तीक्ष्णो मा मृदुर्भूस्त्वं तीक्ष्णो भव मृदुर्भव ॥
यथा वप्रे वेगवति सर्वतःसंप्लुतोदके ।
नित्यं विवरणाद्बाधस्तथा राज्यं प्रमाद्यतः ॥

वेगवति पूरे सति वप्रे तटे विवरणात् विदारणात् बाधः इति योजना । नीटी.

न बहूनभियुञ्जीत यौगपद्येन शात्रवान् ।
साम्ना दानेन भेदेन दण्डेन च पुरंदर ॥

[4]एकैकमेषां निष्पिषञ् शिष्टेषु निपुणं चरेत् ।
न च शक्तोऽपि मेधावी सर्वानिवारभेन्नृपः ॥

निपुणं कुशलमारभेत्, पेष्टुमिति शेषः । नीटी.

[5]यदा स्यान्महती सेना हयनागरथाकुला ।
पदातियन्त्रबहुला स्वनुरक्ता षडङ्गिनी ॥

---

(१) भा. १२।१०४।२५ ; भासु. १२।१०३।२६ द्राव (श्राव).

(२) भा. १२।१०४।२६ ; भासु. १२।१०३।२७.

(३) भा. १२।१०४।२७ ; भासु. १२।१०३।२८ ष्णींदण्डं (ष्णीमपि).

(४) भा. १२।१०४।२८ ; भासु. १२।१०३।२९.

(५) भा. १२।१०४।२९ ; भासु. १२।१०३।३० मुप (मपि) तु (च).

(६) भा. १२।१०४।३० ; भासु. १२।१०३।३१ द्रुग्ध्वा (राजा).

(१) भा. १२।१०४।३१ ; भासु. १२।१०३।३२.

(२) भा. १२।१०४।३२ ; भासु. १२।१०३।३३ शीला (वृत्ता) यतेत (यतते) मित्रानवारयन् (मित्रं विचारयेत्).

(३) भा. १२।१०४।३३–३५ ; भासु. १२।१०३। ३४–३६.

(४) भा. १२।१०४।३६ ; भासु. १२।१०३।३७ ष्पिषञ् (ष्पिष्य) न्नृपः (न्नृप).

(५) भा. १२।१०४।३७ ; भासु. १२।१०३।३८ स्वनु (अनु).

षडङ्गिनी रथ-तुरग-मातङ्ग-पदाति-कोश-वणिक्पथ-वती। नीटी.

[1]यदा बहुविधां वृद्धिं मन्यते प्रतिलोमतः।
तदा विवृत्य प्रहरेद्दस्यूनामविचारयन्॥

प्रतिलोमतः शत्रोरपेक्षया। विवृत्य प्रकटीभूय। दस्यूनां दस्यून्। नीटी.

[2]न साम दण्डोपनिषत्प्रशस्यते
न मार्दवं शत्रुषु यात्रिकं सदा।
न सस्यघातो न च संकरक्रिया
न चापि भूयः प्रकृतेर्विचारणा॥

उक्तमेवार्थं संगृह्णाति— न सामेति। बलवति शत्रौ साम न प्रशस्यते। किं तर्हि? दण्डोपनिषत् रहस्यदण्डः। 'न शत्रुर्विवृतः कार्यः' (भामु. १२।१०३।८) इत्यादिना प्रागुक्तरीत्या छलेनैव स नाशनीय इत्यर्थः। अत एव शत्रुषु मार्दवं पार्यन्तिकं न कार्यम्। नापि यात्रिकं सदा कार्यम्, जयस्य अनियतत्वात्। यात्रायां हि सस्यानां घातः, संकरक्रिया विषादिना जलादीनां नाशनम्, भूयः पुनः पुनः प्रकृतेः सप्तविधायाः विचारणा— कथं दण्डः? कथं कोशः? कथममात्यः? इत्यादिसंदेहश्चाऽऽपतति। तत् त्रयमपि न कार्यं हिंसामूलत्वात् चिन्तावृद्धिकरत्वाच्च। तस्मात् कपटपूर्वको दण्ड एव श्रेयानित्यर्थः। नीटी.

[3]मायाविभेदानुपसर्जनानि
पापं तथैव स्पशसंप्रयोगात्।
आप्तैर्मनुष्यैरुपचारयेत
पुरेषु राष्ट्रेषु च संप्रयुक्तः॥

एतदेव विवृणोति— मायेति। मायाविभेदान् नानाविधा मायाः प्रयुञ्जीत। ततः उपसर्जनानि परस्परमितरेषां शत्रूणामुत्थापनादीनि तथैव शत्रुषु पापं कपटं च प्रयुञ्ज्यात्। कथम्? यशसः प्रयोगात् (?)। प्रयोगे हि यशो न नाशनीयम्। प्राक् फलोदयात् अयमनेन अस्मासु अपकारश्चिन्तित आसीदित्यकीर्तिं गूढमन्त्रतया न कुर्यात्। किं तर्हि कुर्यादत आह— आप्तैरिति। नीटी.

[1]पुराणि चैषामनुसृत्य भूमिपाः
पुरेषु भोगान्निखिलानिहाजयन्।
पुरेषु नीतिं विहितां यथाविधि
प्रयोजयन्तो बलवृत्रसूदन॥

एषाम् एतान् शत्रून् पुरेषु तत्तत्स्थानेषु अनुसृत्य भोगान् तदीयान् जयन्ति। नीतिं पुरेषु स्वीयेषु। नीटी.

[2]प्रदाय गूढानि वसूनि नाम
प्रच्छिद्य भोगानवधाय च स्वान्।
दुष्टाः स्वदोषैरिति कीर्तयित्वा
पुरेषु राष्ट्रेषु च योजयन्ति॥

अनुसरणमेवाऽऽह— प्रदायेति। एतेन ममामात्याः दुष्टाः मां त्यक्त्वा राजान्तरं प्रति गता इति लोकमुखात् कीर्तयित्वा परेषां पुरेषु राष्ट्रेषु च तान् योजयन्ति। नीटी.

[3]तथैव चान्यै रतिशास्त्रवेदिभिः
स्वलंकृतैः शास्त्रविधानदृष्टिभिः।
सुशिक्षितैर्भाष्यकथाविशारदैः
परेषु कृत्यानुपधारयस्व॥

कृत्यामिव कृत्यां मृत्युकारिणीं देवताम्। नीटी.

(१) भा. १२।१०४।३८; भामु. १२।१०३।३९ मन्यते (मन्येत).

(२) भा. १२।१०४।३९; भामु. १२।१०३।४०.

(३) भा. १२।१०४।४०; भामु. १२।१०३।४१ पापं तथैव स्पशसं (तथैव पापं न यशः) युक्तः (युक्तान्).

(१) भा. १२।१०४।४१; भामु. १२।१०३।४२ पुराणि (पुराऽपि) न्निखिलानिहाजयन् (नखिलान् जयन्ति).

(२) भा. १२।१०४।४२; भामु. १२।१०३।४३ नाम (राजन्) दुष्टाः (दुष्टान्).

(३) भा. १२।१०४।४३; भामु. १२।१०३।४४ न्यै रति (न्यैरपि) नुपधारयस्व (मुपधारयेच्च).

भीष्म उवाच–

[1]स तद्वचः शत्रुनिबर्हणे रत-
स्तथा चकारावितथं बृहस्पतेः ।
चचार काले विजयाय चारिहा
वशं च शत्रूननयत् पुरंदरः ॥

[2]शूरमञ्जलिपातेन भीरुं भेदेन भेदयेत् ।
लुब्धमर्थप्रदानेन समं तुल्येन विग्रहः ॥

युधिष्ठिर उवाच–

[3]साम्ना वाऽपि प्रदाने वा ज्यायः किं भवतो मतम् ।
प्रब्रूहि भरतश्रेष्ठ यदत्र व्यतिरिच्यते ॥

भीष्म उवाच–

[4]साम्ना प्रसाद्यते कश्चिद्दानेन च तथाऽपरः ।
पुरुषः प्रकृतिं ज्ञात्वा तयोरेकतरं भजेत् ॥

## वाल्मीकिरामायणम्

उपायचतुष्टयप्रयोगः पात्रविवेकेन

[5]अवकाशो न सान्त्वस्य राक्षसेष्वधिगम्यते ।
न दानस्य न भेदस्य नैव युद्धस्य दृश्यते ॥

[6]चतुर्णामेव हि गतिर्वानराणां महात्मनाम् ।
वालिपुत्रस्य नीलस्य मम राज्ञश्च धीमतः ॥

[1]न साम रक्षःसु गुणाय कल्पते
न दानमर्थोपचितेषु वर्तते ।
न भेदसाध्या बलदर्पिता जनाः
पराक्रमस्त्वेव ममेह रोचते ॥

[2]अथेमे सर्वकार्येषु चत्वारः समुदाहृताः ।
उपायाः कार्यसिद्ध्यर्थं तान्निबोध यदीच्छसि ॥
साम चैव प्रदानं च भेदो दण्डश्च सर्वशः ।
एते सर्वात्मना राज्ञा प्रयोक्तव्या विधानतः ॥

[3]तत्र साम प्रयोक्तव्यमार्येषु गुणवत्सु च ।
दानं लुब्धेषु भेदश्च शङ्कितेष्विति निश्चयः ॥

[4]दण्डः स्तब्धेषु पापेषु नित्यं राजन् दुरात्मसु ।
अपकारिषु नित्यं च सोऽयं शास्त्रविनिश्चयः ॥

## कौटिलीयमर्थशास्त्रम्

उपायचतुष्टयम्

[5]उपायाः सामोपप्रदानभेददण्डाः ॥

शासनाधीनत्वं संधिविग्रहयोरुक्तमधस्तात् । संधिविग्रहानुष्ठानस्य उपायप्रयोगसापेक्षत्वात् तेष्वपि व्युत्पत्तिः शासनलेखकस्यापेक्षितेति कृत्वा तान् दर्शयति— उपाया इत्यादि । श्रीमूला.

एकैकशः समुच्चित्य विकल्पेन वा सामदानभेददण्डानामुपायानां प्रयोगः बाह्याभ्यन्तरापद्विशेषविवेकेन

* [6]तुष्टान् भूयः पूजयेत् । अतुष्टांस्तुष्टिहेतोस्त्यागेन साम्ना च प्रसादयेत् । परस्पराद्वा भेद-

(१) भा. १२।१०४।५२ ; भासु. १२।१०३।५३.

(२) भासु. १२।१४०।६३.

(३) भा. १३।१२५।१ ; भासु. १३।१२४।१ साम्ना वा (साम्नि चा) वा (च).

(४) भा. १३।१२५।२ ; भासु. १३।१२४।२, पः प्र (पप्र).

(५) वारा. ५।१।२९ ; वाराकु. ५।२।२९ सान्त्वस्य (सान्त्वस) ष्वधि (ष्वभि).

(६) वारा. ५।१।३० ; वाराकु. ५।२।३०.

* व्याख्यानं 'प्रणिधिः' इत्यस्मिन् प्रकरणे (पृ. १६४९–१६५१) द्रष्टव्यम् ।

(१) वारा. ५।३८।३ ; वाराकु. ५।४१।३ वर्त (युज्य).

(२) वारा. ५।८२।६–७.

(३) वारा. ५।८२।८ ; राक. १२९ ; राप्र. ४०४.

(४) वारा. ५।८२।९ ; राक. १२९ (दण्डस्तस्यैव पात्यश्च नित्यकाले दुरात्मसु ।) पू. ; राप्र. ४०४ (दण्डस्तयैव पात्यश्च नित्यकालं दुरात्मसु ।) पू.

(५) कौ. २।१०. (६) कौ. १।१३.

**येदेनान् सामन्ताटविकतत्कुलीनावरुद्धेभ्यश्च । तथाप्यतुष्यतो दण्डकरसाधनाधिकारेण वा जनपदविद्वेषं ग्राहयेत् । विद्विष्टानुपांशुदण्डेन जनपदकोपेन वा साधयेत् ॥**

**तुष्टानर्थमानाभ्यां पूजयेत् । अतुष्टान् सामदानभेददण्डैः साधयेत् ॥**

**[1]लभेत सामदानाभ्यां कृत्यांश्च परभूमिष ।**
**अकृत्यान् भेददण्डाभ्यां परदोषांश्च दर्शयेत् ॥**

**[2]संध्यादीनामयथोद्देशावस्थापनमपनयः । तस्मादापदः संभवन्ति ॥**

'बाह्याभ्यन्तराश्चाऽऽपदः' इति सूत्रम् । बाह्याः राष्ट्रमुख्यान्तपालादिप्रभवाः अभ्यन्तरा मन्त्रिपुरोहितादिप्रभवाः इत्युभयविधाः आपदः, चकारात् तत्प्रतिविधानं च उच्यते इति सूत्रार्थः ।

तासां कारणमाह— संध्यादीनामिति । संधिविग्रहादीनां षण्णां गुणानां अयथोद्देशावस्थापनं स्वस्वविषयातिक्रमेण प्रयोगः अपनयः। इति नाम्ना उच्यते इतिशेषः । तस्मात् अपनयात् आपदः संभवन्ति । श्रीमूला.

**बाह्योत्पत्तिरभ्यन्तरप्रतिजापा । अभ्यन्तरोत्पत्तिर्बाह्यप्रतिजापा । बाह्योत्पत्तिर्बाह्यप्रतिजापा । अभ्यन्तरोत्पत्तिरभ्यन्तरप्रतिजापा । इत्यापदः ॥**

बाह्याभ्यन्तरयोरापदोरुपजपितृप्रतिजपितृभेदात् प्रत्येकं द्वैविध्यं दर्शयन्नापदां चातुर्विध्यमाह— बाह्योत्पत्तिरिति । बाह्यात् राष्ट्रमुख्यादेः उपजापकात् उत्पत्तिर्यस्याः सा तथाभूता अभ्यन्तरप्रतिजापा अभ्यन्तरः मन्त्र्यादिः प्रतिजापः प्रतिजपिता यथोपजापानुष्ठानाभ्युपगन्ता यस्याः सा तथाभूता विपत् प्रथमा । अभ्यन्तरोत्पत्तिः मन्त्र्याद्यभ्यन्तरोपजपितृका बाह्यप्रतिजापा राष्ट्रमुख्यान्तपालादिप्रतिजपितृका द्वितीया । बाह्योत्पत्तिर्बाह्यप्रतिजापेति । बाह्योपजपितृका बाह्यप्रतिजपितृका तृतीया । अभ्यन्तरोत्पत्तिरभ्यन्तरप्रतिजपितृकेति चतुर्थी । इत्यापद इति । उभयजातीयोपजपितृप्रतिजपितृके द्वे एकजातीयोपजपितृप्रतिजपितृके द्वे इत्याहत्य चतूरूपा आपद इत्यर्थः । श्रीमूला.

**यत्र बाह्या अभ्यन्तरानुपजपन्त्यभ्यन्तरा वा बाह्यान् तत्रोभययोगे प्रतिजपतः सिद्धिर्विशेषवती । सुव्याजा हि प्रतिजपितारो भवन्ति, नोपजपितारः । तेषु प्रशान्तेषु नान्यान् शक्नुयुरुपजपितुमुपजपितारः । कृच्छ्रोपजापा हि बाह्यानामभ्यन्तरास्तेषामितरे वा । महतश्च प्रयत्नस्य वधः, परेषामर्थानुबन्धश्चाऽऽत्मनोऽन्य इति ॥**

तासूभययोगवत्योराद्ययोर्विपदोः परिहारार्थे उपजपितृसमाधानात् प्रतिजपितुः समाधानं प्रशस्तमित्याह— यत्र बाह्या इत्यादि । सिद्धिः सामदानादिना समाधानम् । विशेषवती श्रेयसी । श्रेयस्त्वे हेतुमाह— सुव्याजा हीति । हि यतः प्रतिजपितारः सुव्याजाः— व्याजाः उपजपितृप्रयुक्तोपजापाङ्गीकारकारणानि धनग्रहणादीनि, तानि सुखोपलभ्यानि सुबहूनि च येषां ते तथाभूताः भवन्ति । उपजपितारः न सुव्याजाः अचिन्त्योपजपनकारणा इत्यर्थः । प्रतिजपितुरेकैकस्य प्रशमने कृतेऽपि नवनवप्रतिजपितृप्रादुर्भावे प्रशमयितव्यापरिसमाप्तिः प्रसज्येतेत्याशङ्कायामाह— तेष्वित्यादि । प्रतिजपितृषु केषुचित् कृतसमाधानेषु उपजपितारोऽन्यानुपजपितुमुपजापोद्भेदभयादपारयन्तः स्वयमेव शाम्येयुरित्यभिप्रायः । अशक्यश्च कर्तुमुपजापो बाह्यैराभ्यन्तराणाम् आभ्यन्तरैश्च बाह्यानाम्, असामानाधिकरण्यात् इत्यभिप्रायवानाह— कृच्छ्रोपजापा हीत्यादि । यद्युपजप्यमानैरन्यैरुपजापो नाभ्युपगम्येत नीयेत चोद्भेदम्, तर्हि उपजपितुरुपजपनविषयोऽतिमहान् यत्नो निष्फलः स्यात्, उपजाप्यानां स्वामिप्रसादरूपार्थानुवृत्तिः सिध्येत्, आत्मनः स्वामिप्रकोपानर्थश्चोत्पद्येतेत्याह— महतश्चेत्यादि । वधः घातः नैष्फल्यम् । आत्मनः स्वस्य उपजपितुः । अन्यः अर्थानुबन्धादितरः अनर्थानुबन्ध इत्यर्थः । इदमादर्शविशेषावेक्षितपाठानुरोधि व्याख्यानम् । माधवस्तु 'महतश्च प्रयत्नस्य वधः परेषामर्थानुबन्धश्चाऽऽत्मनः' इति पाठमाश्रित्यान्यथा व्याचष्टे । तद्यथा— 'यदि बाह्याभ्यन्तराणा-

(१) कौ. ९।१४.
(२) कौ. ९।५.

मन्योन्यस्योपजापो दुष्करः तर्हि त्याज्य एवायमित्यत्राऽऽह— महतश्चेत्यादि । उपजापेन परोत्साहवधः स्वोत्साहफलातिशयश्च स्यादिति भावः ' इति । श्रीमूला.

**अभ्यन्तरेषु प्रतिजपत्सु सामदाने प्रयुञ्जीत । स्थानमानकर्म सान्त्वम् । अनुग्रहपरिहारौ कर्मस्वायोगो वा दानम् ॥**

प्रतिजपितृप्रशमनोपायानाह— अभ्यन्तरेष्वित्यादि । मन्त्र्यादिषु प्रतिजपत्सु बाह्यकृतोपजापानुष्ठानाभ्युपगन्तृषु सामदाने प्रयुञ्जीत प्रयुज्य तान् प्रशमयेत् । तत्र साम्नः प्रकारमाह— स्थानमानकर्म सान्त्वमिति । विशिष्टाधिकारयोजनलक्षणं स्थानकर्म, छत्रचामरादिप्रतिपादनलक्षणं मानकर्म च सान्त्वापरपर्यायं सामेत्यर्थः । दानस्याऽऽह— अनुग्रहपरिहारावित्यादि । अनुग्रहो धनदानम्, परिहारः आदेयाग्रहणं करमोक्षणं वा, तौ कर्मसु आयोगो वा विशिष्टेषु कर्मसु समग्रफलग्रहणाभ्यनुज्ञा वा दानम् । श्रीमूला.

**बाह्येषु प्रतिजपत्सु भेददण्डौ प्रयुञ्जीत । सत्रिणो मित्रव्यञ्जना वा बाह्यानां चारमेषां ब्रूयुः 'अयं वो राजा दूष्यव्यञ्जनैरतिसंधातुकामः, बुध्यध्वम्' इति । दूष्येषु वा दूष्यव्यञ्जनाः प्रणिहिता दूष्यान् बाह्यैर्भेदयेयुः, बाह्यान् वा दूष्यैः । दूष्याननुप्रविष्टा वा तीक्ष्णाः शस्त्ररसाभ्यां हन्युः । आहूय वा बाह्यान् घातयेयुरिति ॥**

अभ्यन्तरप्रतिजपितृविषयं प्रशमोपायमुक्त्वा बाह्यविषयमाह— बाह्येष्विति । राष्ट्रमुख्याटविकादिषु प्रतिजपत्सु भेददण्डौ प्रयुञ्जीत भेददण्डयोः प्रयोगेण तान् प्रशमयेदित्यर्थः । तत्र भेदप्रयोगप्रकारमाह— सत्रिण इति । ते एषां बाह्यानां प्रतिजपतां मित्रव्यञ्जनाः मित्रभावमभिनयन्तः चारं राज्ञः कपटप्रयोगं ब्रूयुः । कथमिति ? अयं राजा दूष्यव्यञ्जनैः आत्मनः प्रियैरेवाप्रियवेषैर्मन्त्र्यादिभिराभ्यन्तरैरुपजपितृभावं गमितैः वः युष्मान् अतिसंधातुकामः वञ्चयितुमिच्छति, बुध्यध्वम् इदं रहस्यं ज्ञात्वा प्रतिजपितृकर्मणि मा प्रवर्तध्वमित्यर्थः, इति । मित्रव्यञ्जनत्वस्वीकारेण भेदनमुक्त्वा दूष्यव्यञ्जनत्वस्वीकारेण भेदनमाह— दूष्येषु वेति । राजाप्रियेषु अभ्यन्तरेषु मन्त्र्यादिषु राष्ट्रमुख्यादिषु बाह्येषु वा प्रतिजपत्सु विषये दूष्यव्यञ्जनाः प्रणिहिताः राजाप्रियवेषतया प्रयुक्ता गूढपुरुषाः दूष्यान् अर्थात् प्रतिजपतोऽभ्यन्तरान् बाह्यैर्भेदयेयुः बाह्यैरुपजपितृभिरेव करणभूतैर्भेदयेयुः । 'य एते व उपजपितारस्ते राजप्रणिहिताः' इति छलोक्त्या तान् प्रतिजपितृकर्मानुष्ठानात् निवर्तयेयुरित्यर्थः । बाह्यान् वा दूष्यैरिति । दूष्यैराभ्यन्तरैरुपजपितृभिः करणभूतैर्बाह्यान् प्रतिजपितॄन् भेदयेत् । पूर्ववच्छलोक्त्या तान् प्रतिजपितृकर्मानुष्ठानान्निवर्तयेदित्यर्थः । दण्डप्रयोगप्रकारमाह— दूष्यानिति । तान् अनुप्रविष्टा वा कार्यव्याजेन तैः सह संभूय वा तीक्ष्णाः शस्त्ररसाभ्यां हन्युः । आहूय वेति । 'भवदनुष्ठेयप्रतिजापकर्मानुगुणमाचरिष्यामि' इति वचनेन विश्वास्य वा बाह्यान् प्रतिजपितॄन् घातयेयुः । इति । श्रीमूला.

**अत्र बाह्या बाह्यानुपजपन्ति, अभ्यन्तरान् अभ्यन्तरा वा, तत्रैकान्तयोग उपजपितुः सिद्धिर्विशेषवती । दोषशुद्धौ हि दूष्या न विद्यन्ते । दूष्यशुद्धौ हि दोषः पुनरन्यान् दूषयति ॥**

इत्थमुभययोगवत्योराद्ययोरापदोः प्रतिक्रियामुक्त्वा एकयोगवत्योरनन्तरयोराह— यत्रेत्यादि । या बाह्योत्पत्तिर्बाह्यप्रतिजापा, या चाभ्यन्तरोत्पत्तिराभ्यन्तरप्रतिजापा, तयोरुभयोरपि उपजपितृसमाहितिः प्रशस्तेत्यर्थः । तत्र हेतुमाह— दोषशुद्धौ हीति । दोषः उपजापः, तस्य उपजपितृदमनेन प्रतिषेधसिद्धौ दूष्या न विद्यन्ते नैव स्युः । उपजापेन हि दूष्याणामभिनिर्वृत्तिः, सा कथमुपजापाभावे स्यादिति भावः । दूष्यशुद्धौ हीति । दूष्याः उपजापदूषितबुद्धयः प्रतिजपितारः, तेषां शुद्धौ समाधाने तु कृते दोषः उपजापः पुनः भूयः अन्यान् दूषयति । उपजपितारः अप्रशान्तत्वात् नवनवान् दूष्यान् उपजापकरणेन अभिनिर्वर्तयेयुरिति भावः । श्रीमूला.

**तस्माद् बाह्येषूपजपत्सु भेददण्डौ प्रयुञ्जीत । सत्रिणो मित्रव्यञ्जना वा ब्रूयुः— 'अयं वो राजा स्वयमादातुकामः, विगृहीताः स्थानेन राज्ञा, बुध्य-**

**ध्वम्' इति । प्रतिजपितुर्वाऽततो दूतदण्डाननुप्रविष्टास्तीक्ष्णाः शस्त्ररसादिभिरेषां छिद्रेषु प्रहरेयुः । ततः सत्त्रिणः प्रतिजपितारमभिशंसेयुः ॥**

तस्मादिति । उपजपितुरेव शोध्यत्वात् बाह्येषु उपजपत्सु भेददण्डौ प्रयुञ्जीत भेदं दण्डं च प्रयुज्योपजापं प्रतिकुर्यात् । भेदप्रकारमाह— सत्त्रिणो मित्रव्यञ्जना वेति । ते ब्रूयुः, अर्थादुपजपितॄन् । किमिति ? अयं राजा वः युष्मान् स्वयम् आदातुकामः प्रतिजपितृद्वारेण ग्रहीतुमिच्छति । अनेन राज्ञा विगृहीताः स्थ भवथ । बुध्यध्वं जागृत । न कंचिदपि विश्वस्य उपजपतेत्यर्थः । इति । दण्डप्रकारमाह— प्रतिजपितुर्वेति । प्रतिजापकसकाशाद्वा अततः उपजपितारमुद्दिश्य संभाषार्थं गच्छतः । अथवा प्रतिजपितुरिति षष्ठ्यन्तं बोध्यम् । तत इति तु अव्ययम् । यत्रोपजपिता तत्रेत्यर्थः, प्रस्थितानिति च शेषः । दूतदण्डान् दूतान् दण्डांश्च अनुप्रविष्टाः, भूत्वेति शेषः, तीक्ष्णाः शस्त्ररसादिभिः एषाम् उपजपितॄणां छिद्रेषु प्रहरेयुः प्रमादस्थानान्युपलभ्य तान् हन्युरित्यर्थः । तत इति । उपजपितृवधानन्तरं सत्त्रिणः प्रतिजपितारम् अभिशंसेयुः 'उपजपितृवधकारयिता अयम्' इति मिथ्या ख्यापयेयुः । उपजिजपिषोः प्रतिजापकेष्वविश्वासार्थमित्यभिप्रायः । श्रीमूला.

**अभ्यन्तरानभ्यन्तरेषूपजपत्सु यथार्हमुपायं प्रयुञ्जीत । तुष्टलिङ्गमतुष्टं विपरीतं वा साम प्रयुञ्जीत ॥**

इत्थं बाह्येषु उपजपत्सु भेददण्डयोः प्रयोगमुक्त्वा अभ्यन्तरेषु उपजपत्सु सामादीनुपायान् यथायोग्यं प्रयुञ्जीतेत्याह— अभ्यन्तरानित्यादि । कथंभूतं साम प्रयोक्तव्यमित्याह— तुष्टलिङ्गमित्यादि । तुष्टिसूचकं वस्तुतः अतुष्टं साम वा तद्विपरीतम् अतुष्टिसूचकं वस्तुतस्तुष्टं साम वा प्रयुञ्जीतेत्यर्थः । श्रीमूला.

**शौचसामर्थ्यापदेशेन व्यसनाभ्युदयापेक्षणेन वा प्रतिपूजनमिति दानम् ॥**

दानप्रकारमाह— शौचेत्यादि । शौचं सामर्थ्यं च निमित्तीकृत्य वा बन्धुवियोगादिव्यसनावसरं पुत्रजन्माद्यभ्युदयावसरं वा अपेक्ष्य वस्त्राभरणादिना यत् सत्करणं तज्जातीयं दानं प्रयुञ्जीतेत्यर्थः । श्रीमूला.

**मित्रव्यञ्जनो वा ब्रूयादेतान्— चित्तज्ञानार्थमुपधास्यति वो राजा, तदस्याऽऽख्यातव्यमिति । परस्पराद्वा भेदयेदेनान्— असौ चासौ च वो राजन्येवमुपजपति । इति भेदः ॥**

भेदप्रकारमाह— मित्रव्यञ्जनो वेति । तथाभूतो वा सत्री एतान् अभ्यन्तरानुपजपितॄन् ब्रूयात् । कथमिति ? 'चित्तज्ञानार्थं राजा वः युष्मान् उपधास्यति अर्थाद्युपधया परीक्षिष्यते, तत् स्वचित्तम् अस्य राज्ञः आख्यातव्यम्' इति । एवं हि उच्यमानाः प्रतिजापकाः उपजापं भयान्नाभ्युपगच्छेयुरित्याशयः । प्रकारान्तरमाह— परस्पराद्वेति । मिथो वा भेदयेत् एनान् अभ्यन्तरान् । कथमुक्त्वा ? असौ च असौ च राजनि राज्ञः सकाशे एवम् अनेन प्रकारेण वः उपजपति युष्मान् प्रति दोषं बोधयति । इति । इति भेदः एवंप्रकारो भेदः प्रयोक्तव्य इत्यर्थः । श्रीमूला.

**दाण्डकर्मिकवच्च दण्डः ॥**

दण्डप्रकारमाह— दाण्डकर्मिकवच्च दण्ड इति । दाण्डकर्मिकोक्तः उपांशुदण्डः इह प्रयोक्तव्य इत्यर्थः । श्रीमूला.

**एतासां चतसृणामापदामभ्यन्तरामेव पूर्वं साधयेत् । 'अहिभयादभ्यन्तरकोपो बाह्यकोपात् पापीयान्' इत्युक्तं पुरस्तात्* ॥**

इत्थं निरूपितप्रकारासु चतसृषु आपत्सु अभ्यन्तरा कृच्छ्रप्रतिकार्यत्वात् अनर्थातिशयहेतुत्वाच्च प्रथमं प्रतिर्तव्येत्याह— एतासां चतसृणामित्यादि । श्रीमूला.

**पूर्वां पूर्वां विजानीयाल्लघ्वीमापदमापदाम् । उत्थितां बलवद्भ्यो वा गुर्वीं लघ्वीं विपर्यये ॥**

आपदां 'बाह्योत्पत्तिरभ्यन्तरप्रतिजापा' इत्यादिनोक्तानां चतसृणां मध्ये पूर्वां पूर्वां लघ्वीम् उत्तरोत्तरापेक्षया विजानीयात् । अर्थाच्च पूर्वपूर्वापेक्षया उत्तरोत्तरां

* कौ. ८।२ इत्यत्र ।

गुर्वीम् । अयमुत्सर्गः । अस्यापवादमाह— उत्थिता-मित्यादि । पूर्वा वा भवतु उत्तरा वा, या बलवद्भ्यः उपजपितृभ्यः उत्पन्ना तां पूर्वामपि दुर्बलोपजपितृकोत्तरा-पेक्षया गुर्वी विजानीयात् । दुर्बलेभ्यश्च उपजपितृभ्यः उत्पन्नाम् उत्तरामपि प्रबलोपजपितृकपूर्वापेक्षया लघ्वीं विजानीयादित्यर्थः । श्रीमूला.

**[1]दूष्येभ्यः शत्रुभ्यश्च द्विविधाः शुद्धाः ॥**

' दूष्यशत्रुसंयुक्ताः ' इति सूत्रम् । पूर्वसूत्रमिहानु-वर्तते । दूष्याः राजावग्रहचारिणो मुख्याः , शत्रवः सहज-कृत्रिमादयः , तत्संयुक्ताः तत्संबद्धाः तदुत्पन्नाः बाह्याभ्य-न्तराः आपदः तत्प्रतीकारश्च अभिधीयन्ते इति सूत्रार्थः ।

तासां शुद्धमिश्रभेदं मनसि निधाय शुद्धा विभजते — दूष्येभ्य इत्यादि । दूष्येभ्य एव केवलेभ्य उत्थिताः शत्रुभ्य एव केवलेभ्य उत्थिता इति द्विप्रकाराः शुद्धा इत्यर्थः । श्रीमूला.

**दूष्यशुद्धायां पौरेषु जानपदेषु वा दण्डवर्जा-नुपायान् प्रयुञ्जीत । दण्डो हि महाजने क्षेप्तु-मशक्यः, क्षिप्तो वा तं चार्थं न कुर्यात् । अन्यं चानर्थमुत्पादयेत् । मुख्येषु त्वेषां दाण्डकर्मिक-वच्चेष्टेतेति ॥**

दूष्यशुद्धायाः प्रतीकारमाह— दूष्यशुद्धायामिति । तस्यां विषये पौरेषु जानपदेषु वा दण्डवर्जान् उपायान् सामदानभेदान् प्रयुञ्जीत । दण्डस्य वर्जने हेतुमाह— दण्डो हीत्यादि । स हि महाजने पौरजानपदसमूहलक्षणे प्रयोक्तुं न शक्यः, तद्विरोधोत्पादकत्वात् , प्रयुक्तो वा साध्यमर्थं न साधयेत् अनर्थं च नवमुत्थापयेदित्यर्थः । सामादिभिरशान्तौ किं कर्तव्यं तत्राऽऽह— मुख्येषु त्वेषा-मित्यादि । ये पौरजानपदानामुपजपितारो मुख्याः तेषु दाण्डकर्मिकोक्तं विधिम् उपांशुदण्डप्रयोगलक्षणम् आच-रेत् । तावतैव ते शाम्येयुरित्यभिप्रायः । श्रीमूला.

**शत्रुशुद्धायां यतः शत्रुः प्रधानः कार्यो वा ततः सामादिभिः सिद्धिं लिप्सेत ॥**

शत्रुशुद्धायां प्रतीकारमाह— शत्रुशुद्धायामिति । शत्रुमात्रो-त्पादितायां मित्रसंकररहितायामापदि, अर्थात् स्वयमेव शत्रुणा साक्षादुत्पादितायां तन्मन्त्र्युत्पादितायां तदमात्यो-त्पादितायां तन्मन्त्रितदमात्योभयोत्पादितायां च इति चतुष्प्रकारायां यतः शत्रुः यस्मिन्नधीनः सामन्तः , यतः प्रधानः यस्मिन्नधीनो मन्त्री, यतः कार्यो वा अमात्यादिर्वा यस्मिन्नधीनः , ततः सामादिभिः सिद्धिं लिप्सेत । तान् सामदानादिभिरभिमुखीकृत्य चतुर्षु पूर्वोक्तापत्प्रकारेषु यथाक्रमं प्रतीकारमन्विच्छेदित्यर्थः । श्रीमूला.

**स्वामिन्यायत्ता प्रधानसिद्धिः, मन्त्रिष्वायत्ता-ऽऽयत्तसिद्धिः, उभयायत्ता प्रधानायत्तसिद्धिः ॥**

कस्मिन्नधीनः प्रधानः ? कस्मिन्नधीनः कार्यः ? इति विवरीतुमाह— स्वामिन्यायत्तेत्यादि । प्रधानसिद्धिः प्रधान-प्रतिक्रिया । आयत्तसिद्धिः कार्यशब्दितस्य अमात्यस्य प्रतिक्रिया । उभयायत्ता स्वामिमन्त्र्युभयमुखसाध्या । प्रधानायत्तसिद्धिः प्रधानायत्तयोः संहत्याऽऽपदुत्पादकयो-र्मन्त्र्यमात्ययोः प्रतिक्रिया । ननु स्वयमेव साक्षादाप-दुत्पादकः शत्रुर्यस्मिन्नधीनः स कस्मान्नोक्तः ? उच्यते । स हि शत्रोर्मित्रं वा मित्रमित्रं वा मध्यमादिर्वा स्यात् इति अनियतः आपदनुत्पादकश्च, नियतस्त्विह वक्तुं प्रक्रान्तम् आपदुत्पादकश्चेत्यदोषः । श्रीमूला.

**दूष्यादूष्याणामामिश्रितत्वादामिश्रा । आमि-श्रायामदूष्यतः सिद्धिः । आलम्बनाभावे ह्या-लम्बिता न विद्यते । मित्रामित्राणामेकीभावात् परमिश्रा । परमिश्रायां मित्रतः सिद्धिः । सुकरो हि मित्रेण संधिर्नामित्रेणेति ॥**

आमिश्रामाह— दूष्यादूष्याणामामिश्रितत्वादिति । दूष्या-दूष्यैरुभयैर्मिलित्वा जनितत्वात् आमिश्रा तदाख्या दूष्यशुद्धा । आमिश्रायामिति । तस्याम् अदूष्यतः सिद्धिः प्रतिक्रिया कार्या । प्रतिक्रियया ह्यदूष्ये दूष्यालम्बन-भूते शान्ते तमालम्ब्य चेष्टमानो दूष्यः स्वयमेव शाम्यती-त्याह— आलम्बनाभाव इत्यादि । मिश्रान्तरमाह— मित्रा-मित्राणामिति । मित्राणाममित्राणां च एकीभावात् मिश्रणात्, जनिता इति शेषः, परमिश्रा शत्रुमिश्रा नाम ।

(१) कौ. ९।६.

परमिश्रायामिति । तस्यां मित्रतः सिद्धिः प्रतिक्रिया । तत्र हेतुमाह— सुकरो हीत्यादि । श्रीमूला.

**मित्रं चेन्न संधिमिच्छेत्, अभीक्ष्णमुपजपेत्, ततः सत्रिभिरमित्राद्भेदयित्वा मित्रं लभेत । मित्रामित्रसंघस्य वा योऽन्तस्थायी तं लभेत । अन्तस्थायिनि लब्धे मध्यस्थायिनो भिद्यन्ते । मध्यस्थायिनं वा लभेत । मध्यस्थायिनि वा लब्धे नान्तस्थायिनः संहन्यन्ते । यथा चैषामाश्रयभेदः तानुपायान् प्रयुञ्जीत ॥**

संधिमनभिलषति मित्रे तत् पुनःपुनरुपजप्य ततः सत्रिभिरमित्रात् भेदयित्वा स्ववशे कुर्यादित्याह— मित्रं चेत्यादि । भूम्येकान्तरत्वभूम्यनन्तरत्वक्रमेण संनिविष्टस्य मित्रामित्राणां संघस्य अवसाने यस्तिष्ठति तं लभेतेत्याह— मित्रामित्रसंघस्य वेत्यादि । अन्तस्थायिनि लब्धे मध्यस्थायिनः सर्वे भिन्ना भवन्तीत्याह— अन्तस्थायिनीत्यादि । यः संघस्य मध्ये तिष्ठति तं वा लभेत, तेन चान्तस्थायिनः सर्वे भिन्ना भवन्तीत्याह— मध्यस्थायिनं वेत्यादि । न संहन्यन्ते परस्परसात् भिद्यन्ते । सर्वथा च मित्रामित्रा यैरुपायप्रकारैराश्रयात् भिन्ना भवेयुस्तानुपायप्रकारान् प्रयुञ्जीतेत्याह— यथा चैषामित्यादि ।

श्रीमूला.

**धार्मिकं जातिकुलश्रुतवृत्तस्तवेन संबन्धेन पूर्वेषां त्रैकाल्योपकारानपकाराभ्यां वा सान्त्वयेत् ॥**

धार्मिकविषयं साम्नः प्रकारमाह— धार्मिकमित्यादि । तं जातिकुलश्रुतवृत्तस्तवेन— जातेः असंकरविशुद्धत्वादिना, कुलस्य उदितोदितत्वादिना, श्रुतस्य नानाशास्त्रविषयत्वादिना, वृत्तस्य विहितानुष्ठाननिष्ठत्वादिना च यः स्तवः तेन संबन्धेन योनिविद्यादिनिमित्तेन पूर्वेषां कुलवृद्धानां त्रैकाल्योपकारानपकाराभ्यां कालत्रयेऽप्युपकर्तृत्वानपकर्तृत्वाभ्यां वा सान्त्वयेत् । श्रीमूला.

**निवृत्तोत्साहं विग्रहश्रान्तं प्रतिहतोपायं क्षयव्ययाभ्यां प्रवासेन चोपततं शौचेनान्यं लिप्समानमन्यस्माद्वा शङ्कमानं मैत्रीप्रधानं वा कल्याणबुद्धिं साम्ना साधयेत् ॥**

सामसाध्यमाह— निवृत्तोत्साहमिति । निरुत्साहम्, विग्रहश्रान्तं चिरयुद्धकरणखिन्नम्, प्रतिहतोपायं विफलितसामाद्युपायप्रयोगम्, क्षयव्ययाभ्यां युग्यपुरुषापचयहिरण्यधान्याद्यपचयाभ्यां प्रवासेन च दूराध्वगतागतेन च उपततं संततम्, शौचेनान्यं लिप्समानं शुचित्वगुणापेक्षया कमप्यन्यं मित्रत्वेन लब्धुमिच्छन्तम्, अन्यस्माद्वा शङ्कमानं पराविश्वासिनं वा, मैत्रीप्रधानं वा सर्वत्र मित्रभावेन व्यवहार एव परम इति मन्यमानम्, कल्याणबुद्धिम् अशठं साम्ना साधयेत् ।

श्रीमूला.

**लुब्धं क्षीणं वा तपस्विमुख्यावस्थापनापूर्वं दानेन साधयेत् ॥**

दानसाध्यमाह—लुब्धमिति । गृध्नुं क्षीणं वा अर्थकृशं वा तपस्विमुख्यावस्थापनापूर्वं— तपस्विनां मुख्यानां च अवस्थापना दानविश्वासार्थं स्थेयीकरणम्, तत्पूर्वकं दानेन साधयेत् । श्रीमूला.

**तत् पञ्चविधं देयविसर्गः, गृहीतानुवर्तनम्, आत्तप्रतिदानम्, स्वद्रव्यदानमपूर्वम्, परस्वेषु स्वयंग्राहदानं चेति दानकर्म ॥**

दानस्य पञ्च प्रकारानाह— तत् पञ्चविधमित्यादि । देयविसर्गः गृहीतभूमौ ब्रह्मदेयादेर्यथापूर्वविमोक्षणम् । गृहीतानुवर्तनं गृहीतस्य पूर्वपुरुषैः पूर्वमात्तस्य भूम्यादेः भोगाप्रतिषेधः । आत्तप्रतिदानं गृहीतस्य भूम्यादेः प्रत्यर्पणम् । स्वद्रव्यदानमपूर्वं स्वद्रव्यस्यैव अदत्तपूर्वस्य प्रतिनवं दानम् । परस्वेषु स्वयंग्राहदानं शत्रुदेशावस्कन्दने तदीयद्रव्येषु त्वया ह्रियमाणं द्रव्यं तवैव भविष्यति इत्येवंरूपं दानम् । श्रीमूला.

**परस्परद्वेषवैरभूमिहरणशङ्कितमतोऽन्यतमेन भेदयेत् । भीरुं वा प्रतिघातेन, 'कृतसन्धिरेष त्वयि कर्म करिष्यति, मित्रमस्य निसृष्टम्', 'सन्धौ वा नाभ्यन्तरः' इति ॥**

भेदनमेवाऽऽह— परस्परद्वेषवैरभूमिहरणशङ्कित-मित्यादि। तत्कालापकारजो द्वेषः। चिरानुवृत्तापकार-प्ररूढं वैरम्। मित्रामित्राणां मध्ये परस्परद्वेषशङ्काविषयभूतं परस्परवैरशङ्काविषयभूतं परस्परभूमिहरणशङ्काविषयभूतं च अतोऽन्यतमेन एषां द्वेषादीनामेकतमेन भेदयेत्। भेदनस्य प्रकारान्तराण्याह— भीरुं वेति। तं प्रति-घातेन शत्रुबलीयस्तया त्वदभियोगः प्रतिहतो भविष्यतीति प्रतिघातविभीषिकया भेदयेत्। कृतसंधिः विजिगीषुणा कृतसंधानः एषः, त्वयि कर्म अभियोगं करिष्यति। करिष्यतीति कथं ज्ञायते? तत्राऽऽह— मित्रमिति। मित्रमस्य निसृष्टं संधिकरणार्थं विजिगीषुसकाशे प्रेषितम् इत्युक्त्वा भेदयेत्। संधौ, मित्रामित्रैः क्रियमाणे इति शेषः, त्वं नाभ्यन्तरः बहिष्कृतः इत्यर्थः, इत्युक्त्वा वा भेदयेत्। श्रीमूला.

**यस्य वा स्वदेशादन्यदेशाद्वा पण्यानि पण्या-गारतयाऽऽगच्छेयुः, तान्यस्य 'यातव्याल्लब्धानि' इति सत्रिणश्चारयेयुः। बहुलीभूते शासनमभि-व्यक्तेन प्रेषयेत्— 'एतत् ते पण्यम्, पण्यागारं वा मया ते प्रेषितम्, सामवायिकेषु विक्रमस्व, अपगच्छ वा, ततः पणशेषमवाप्स्यसि' इति। ततः सत्रिणः परेषु ग्राहयेयुरेतदरिप्रदत्तमिति॥**

प्रकारान्तरमाह— यस्य वेत्यादि। मित्रामित्राणामन्य-तमस्य यस्य स्वदेशात् अन्यदेशात् वा पण्यानि पण्या-गारतया पण्यागाराङ्गतया आगच्छेयुः तानि अस्य यात-व्यात् लब्धानि यातव्येनैव गूढकृतसंधिना प्रहितानि इति अनेन प्रकारेण सत्रिणः चारयेयुः मृषा वृत्तान्तं प्रवर्त-येयुः। बहुलीभूते मिथ्यावृत्तान्तेऽस्मिन् सर्वतः प्रसृते सति शासनं मिथ्यालेखम् अभिव्यक्तेन— निश्चितवध्यभावः अभिव्यक्तः, तस्य हस्ते दत्त्वेत्यर्थः, प्रेषयेत्। कीदृ-गर्थकं शासनमित्याह— एतदिति। एतत् ते पण्यं यत्किंचिदल्पं मया प्रेषितम्, पण्यागारं वा प्रभूतपण्यवर्ग-वत्तया पण्यगृहसदृशं पण्यशकटादि वा मया ते प्रेषितम्, सामवायिकेषु संभूयोत्थायिषु मच्छत्रुसाह्यकारिषु विक्रमस्व अभियुङ्क्ष्व, अथवा अपगच्छ तेभ्योऽपसर अर्थान्मदुपकारार्थम्। ततः विक्रमणापसरणान्यतरानुष्ठाना-नन्तरं पणशेषं पणितार्थावशिष्टमर्थम् अवाप्स्यसि मत्स-काशादधिगमिष्यसि। इति एवंप्रकारार्थकमित्यर्थः। तत इति। प्रेषणानन्तरं सत्रिणः परेषु अन्येषु सामवायि-केषु एतत् कूटशासनं अरिप्रदत्तमिति विजिगीषुणा प्रति-पादितमिति, अपदिश्येति शेषः, ग्राहयेयुः। श्रीमूला.

**शत्रुप्रख्यातं वा पण्यमविज्ञातं विजिगीषुं गच्छेत्। तदस्य वैदेहकव्यञ्जनाः शत्रुमुख्येषु विक्रीणीरन्। ततः सत्रिणः परेषु ग्राहयेयुः— 'एतत् पण्यमरिप्रदत्तम्'॥**

प्रकारान्तरमाह— शत्रुप्रख्यातं वेति। शत्रुरिह साम-वायिकान्यतमः, तत्संबन्धित्वेन प्रख्यातं पण्यं रत्नादि अविज्ञातं गूढं यथा भवति तथा विजिगीषुं गच्छेत् विजिगीषोरेव केनाप्युपायेन वशं प्राप्नुयात्। तत् अस्य वैदेहकव्यञ्जनाः वणिग्वेषाः गूढपुरुषाः शत्रुमुख्येषु शत्रुधर्माणो येऽन्ये सामवायिकास्तेषां मुख्येषु विक्रीणीरन्। ततः तत् सत्रिणः परेषु सामवायिकान्तरेषु ग्राहयेयुः रक्षिपुरुषैर्ग्राहितं कुर्युः। कथं कृत्वा? एतत् पण्यम् अरिप्रदत्तं अरिणा विजिगीषुणा विक्रयार्थं प्रेषितम् इति अनेन प्रकारेणापदिश्य। एवं कृते सामवायिकान्यतमो विजिगीषुणा सह कृतसंधिः इति सामवायिकान्तराणां बुद्धिरुत्पद्येत इत्यभिप्रायः। श्रीमूला.

**महापराधानर्थमानाभ्यामुपगृह्य वा शस्त्ररसा-ग्निभिरमित्रे प्रणिदध्यात्। अथैकममात्यं निष्पात-येत्। तस्य पुत्रदारमुपगृह्य रात्रौ हतमिति ख्याप-येत्। अथामात्यः शत्रोस्तानेकैकशः प्ररूपयेत्। ते चेद् यथोक्तं कुर्युः, न चैनान् ग्राहयेत्। अशक्तिमतो वा ग्राहयेत्। आप्तभावोपगतो मुख्यादस्याऽऽत्मानं रक्षणीयं कथयेत्, अथामित्र-शासनं मुख्यायोपघाताय प्रेषितमुभयवेतनो ग्राहयेत्॥**

अन्यं प्रकारमाह— महापराधानिति। महान् अपराधो यैरात्मनः कृतस्तथाभूतान् अमात्यान् अर्थमानाभ्यां भूहिरण्यादिदानेन छत्रचामरादिदानेन च उपगृह्य

स्ववशीकृत्य शस्त्ररसादिना अमित्रे प्रणिदध्यात् 'युष्माभिः शत्रुः शस्त्रेण विषेणाग्निना वा हन्तव्यः' इत्यादिश्य गूढं प्रेषयेत्। प्रेषणे क्रममाह— अथेति। प्रथमं एकम् अमात्यं निष्पातयेत् स्वान्तिकान्निष्पात्य शत्रुपार्श्वे प्रापयेत्। तस्य पुत्रदारं पुत्रान् दारांश्च उपगृह्य छन्नरक्षितं कृत्वा रात्रौ हतमिति राज्ञा व्यापादित इति ख्यापयेत् मृषाप्रवादमुत्पादयेत्। एतच्च निष्पतितं प्रति शत्रोर्विजिगीषुद्वेषविश्वासार्थम्। अथ शत्रावात्मास्पदलाभानन्तरं अमात्यः पूर्वनिष्पतितः शत्रोः तान् अन्यानमात्यान् एकैकशः एकैकक्रमेण प्ररूपयेत् विजिगीषुद्वेषनिष्पतिता एते भवत्पार्श्वोपस्थानयोग्या इत्येवं प्रदर्शयेत्। ते निष्पतिता अमात्याः यथोक्तं कुर्युश्चेत् शस्त्रादिना शत्रुं हन्युश्चेत् एनान् न च ग्राहयेत् उभयवेतनमुखेन नैव ग्राहयेत्। अशक्तिमतो वा यथोक्तशत्रुघातासमर्थान् वा ग्राहयेत् महापराधतया तेषां वध्यत्वादित्यभिप्रायः। एवं विजिगीषुनिष्पतितोऽमात्यः सामवायिकमुख्यं यथा भेदयेत् तथाऽऽह— आप्तभावोपगत इत्यादि। अयमर्थः— शत्र्वाप्तत्वं गतोऽमात्यः सामवायिकमुख्यसकाशात् त्वया स्वात्मा रक्षणीयः तस्य अविश्वास्यत्वात् इत्येवं शत्रुमुपजपेत्। पश्चाचामित्रशासनं कूटकृतं अमुख्योपघातादेशकं मुख्याय प्रेषितं उभयवेतनो रक्षिपुरुषैर्ग्राहयेदिति। 'अमुख्याय' इति पाठेऽपि तुल्योऽर्थः। श्रीमूला.

**उत्साहशक्तिमतो वा प्रेषयेत्— 'अमुष्य राज्यं गृहाण, यथास्थितो न संधिः' इति। ततः सत्रिणः परेषु ग्राहयेयुः॥**

प्रकारान्तरमाह— उत्साहेत्यादि। शासनमिति पूर्वतः संबध्यते। उत्साहशक्तिमतो वा विक्रमशक्तियुक्तस्य वा सामवायिकान्यतमस्य शासनं कूटनिर्मितं प्रेषयेत्। तत् कीदृगर्थकम्? अमुष्य सामवायिकमुख्यस्य राज्यं गृहाण, यथास्थितो न संधिः स्थितप्रकारः संधिर्नाङ्गीकृतः इति ईदृशार्थकमित्यर्थः। ततः पश्चात् सत्रिणः परेषु सामवायिकान्तरेषु ग्राहयेयुः। अर्थात् तदेव शासनम्। श्रीमूला.

**एकस्य स्कन्धावारं विवधमासारं वा घातयेयुः, इतरेषु मैत्रीं ब्रुवाणाः। तं सत्रिणः— 'त्वमेतेषां घातयितव्यः' इत्युपजपेयुः॥**

अन्यं पक्षमाह— एकस्येति। सामवायिकान्यतमस्य स्कन्धावारं सेनानिवेशम्, विवधं स्वदेशधान्याद्यागमम्, आसारं वा सुहृद्बलागमं वा घातयेयुः वारयेयुः अर्थात् सत्रिणः। कथंभूताः? इतरेषु मैत्रीं ब्रुवाणाः सामवायिकान्तरेषु मित्रभावं वदन्तः। अर्थात् तेभ्यो गोपनाय तमिति। तं च सामवायिकान्यतमं सत्रिणः उपजपेयुः। कथमुपजपेयुः? त्वं एतेषां सामवायिकानां पातयितव्यः। तत् कुतः एतैस्ते संधिरिति भावः। इति अनेन प्रकारेण। श्रीमूला.

**यस्य वा प्रवीरपुरुषो हस्ती हयो वा म्रियेत, गूढपुरुषैर्हन्येत ह्रियेत वा, तं सत्रिणः परस्परोपहतं ब्रूयुः। ततः शासनमभिशस्तस्य प्रेषयेत्— 'भूयः कुरु, ततः पणशेषमवाप्स्यसि' इति। तदुभयवेतना ग्राहयेयुः॥**

प्रकारान्तरमाह — यस्य वेति। यस्य सामवायिकान्यतमस्य संबन्धी प्रवीरपुरुषः हस्ती हयो वा म्रियेत, स्वयमिति शेषः, गूढपुरुषैः हन्येत ह्रियेत वा, तं सामवायिकान्यतमं सत्रिणः परस्परोपहतं ब्रूयुः सामवायिकान्तरैरेव परस्परेण हतं बोधयेयुः अर्थात् प्रवीरादिम्। ततः पश्चात् शासनं कूटलेखं अभिशस्तस्य आरोपितहननदोषस्य सामवायिकस्य प्रेषयेत्। शासनार्थमाह— भूयः पुनरपि कुरु प्रवीरपुरुषादिं घातय, ततः पणशेषं अवाप्स्यसि। इति अनेन प्रकारेण लिखितार्थमित्यर्थः। तदिति। तच्च शासनं उभयवेतनाः विजिगीषोरभिशस्तसामवायिकाच्चोभयतो भृतिग्राहिणः ग्राहयेयुः अर्थात् गूढपुरुषैः। श्रीमूला.

**भिन्नेष्वन्यतमं लभेत॥**

उक्तैर्भेदनोपायैर्भेदं प्राप्तेषु सामवायिकेषु एकतमं स्वायत्तं कुर्यात् विजिगीषुः। श्रीमूला.

**तेन सेनापतिकुमारदण्डचारिणो व्याख्याताः॥**

यदिदमुपदिष्टं भेदनोपायजातं तत् सेनापतियुवराजसैन्यचारिणां भेदनेऽपि यथायोगं उपयोक्तव्यमित्याशयेनाऽऽह— तेनेत्यादि । श्रीमूला.

**सांधिकं च भेदं प्रयुञ्जीत । इति भेदकर्म ॥**

संघवृत्ताधिकरणे वक्ष्यमाणो भेदप्रकारोऽप्यत्र प्रयोक्तव्य इत्याह— सांधिकं चेत्यादि । इति भेदकर्मेति । व्याख्यातमिति शेषः । श्रीमूला.

**तीक्ष्णमुत्साहिनं व्यसनिनं स्थितशत्रुं वा गूढपुरुषाः शस्त्राग्निरसादिभिः साधयेयुः । सौकर्यतो वा तेषामन्यतमः । तीक्ष्णो ह्येकः शस्त्ररसाग्निभिः साधयेत् । अयं सर्वसंदोहकर्म विशिष्टं वा करोति । इत्युपायचतुर्वर्गः ॥**

अथ दण्डविधिप्रकारं तत्प्रयोगविषयं चाऽऽह— तीक्ष्णमित्यादि । तीक्ष्णं अतिमात्रामर्षम् उत्साहिनं विक्रमिणं व्यसनिनं मृगयादिप्रसक्तं स्थितशत्रुं वा दुर्गवन्तं शत्रुं वा गूढपुरुषाः शस्त्राग्निरसादिभिः साधयेयुः हन्युः, अर्थात् संभूय । तेष्वन्यतमेन येन शक्ततरतया घातः सुकरः स वा तान् हन्यादित्याह— सौकर्यतो वेत्यादि । तमेवान्यतमं विवृणोति— तीक्ष्णो हीति । स हि गूढपुरुषविशेषरूपः एकः असहायः सन् शस्त्ररसाग्निभिः साधयेत् अमर्षिविक्रमिप्रभृतीन् हन्यात् । न केवलं सर्वविधगूढपुरुषसमुदायसाध्यं कर्म अयमेकाकी करोति, किंतु तदपेक्षयोत्कृष्टमपि कर्म करोतीत्याह— अयमित्यादि । इत्युपायचतुर्वर्ग इति । उपायसंबन्धी चतुर्वर्गः सामदानभेददण्डचतुष्टयात्मा, निरूपित इति शेषः । श्रीमूला.

**पूर्वः पूर्वश्चास्य लघिष्ठः । सान्त्वमेकगुणम् । दानं द्विगुणं सान्त्वपूर्वम् । भेदस्त्रिगुणः सान्त्वदानपूर्वः । दण्डश्चतुर्गुणः सान्त्वदानभेदपूर्वः ॥**

अस्य उपायवर्गस्य मध्ये पूर्वः पूर्व उपायः लघिष्ठः उत्तरोत्तरापक्षेया अल्पावयवत्वात् अनायासप्रयोज्यः । अल्पावयवतां विवृणोति— सान्त्वमिति । साम एकगुणम् एकः आत्मैव एकः गुणः अवयवः यस्य तत् तथाभूतम् । दानं हि द्विगुणं सान्त्वपूर्वं सान्त्वदानोभयावयवकम् । भेदः त्रिगुणः सान्त्वदानपूर्वः सान्त्वदानभेदत्रितयावयवकः । दण्डः चतुर्गुणः सान्त्वदानभेदपूर्वः सान्त्वदानभेददण्डाख्यचतुर्गुणोपेतः । श्रीमूला.

**इत्यभियुञ्जानेषूक्तम् । स्वभूमिष्ठेषु तु त एवोपायाः । विशेषस्तु । स्वभूमिष्ठानामन्यतमस्य पण्यागारैरभिज्ञातान् दूतमुख्यानभीक्ष्णं प्रेषयेत्, त एनं संधौ परहिंसायां वा योजयेयुः, अप्रतिपद्यमानं 'कृतो नः संधिः' इत्यावेदयेयुः । तमितरेषामुभयवेतनाः संक्रामयेयुः— अयं वो राजा दुष्ट इति ॥**

ये मित्रामित्राः यातव्यमभियोक्तुं प्रस्थिताः कृतशिबिराः तेषु विषये सामादिविधानमनेन प्रकारेणोक्तमित्यर्थः । तेष्वप्रस्थितेषु स्वस्वभूमिस्थितेष्वपि ते इमे उपायप्रयोगाः समाना इत्याह— स्वभूमिष्ठेषु त्वित्यादि । तुश्चार्थे । विशेषस्त्विति । तत्र विशेषस्तु, अभिधीयत इति शेषः । स्वभूमिष्ठानामिति । संभूयप्रस्थानात् प्राक् स्वस्वभूमिस्थितानां मित्रामित्राणाम् अन्यतमस्य पण्यागारैः प्रभूतैः मणिमुक्तादिभिः पण्यैः, सहितानिति शेषः, अभिज्ञातान् परविदितान् दूतमुख्यान् अभीक्ष्णं पुनः पुनः प्रेषयेत् विजिगीषुः । ते प्रेषिताश्च दूताः एनं मित्रामित्रान्यतमं संधौ परहिंसायां वा योजयेयुः । विजिगीषुणा संधत्स्व, तद्विरोधिषु च विक्रमस्व इति चोदयेयुरित्यर्थः । अप्रतिपद्यमानमिति । संधिमनभ्युपगच्छन्तमेव तं मित्रामित्रान्यतमं 'कृतो नः संधिः' इति आवेदयेयुः मिथ्या वदेयुः । तमिति । तं विजिगीषुणा सह कृतसंधित्वेन मिथ्याप्रख्यायमानं मित्रामित्रान्यतमम्, अथवा मिथ्याकथ्यमानं संधिमितरेषां तदन्येषां मित्रामित्राणां उभयवेतनाः विजिगीषुसकाशात् मित्रामित्रान्यतमसकाशाच्च उभयतो वेतनग्राहिणः संक्रामयेयुः बोधयेयुः । कथम् ? अयं वो राजा दुष्ट इति । युष्माकमन्योन्यसंधेयानामन्यतमोऽयं नृपतिः दुष्टः स्वयं विजिगीषुणा संधिं कृत्वा प्रच्छादनात् दुर्जनः इति अनेन प्रकारेण, वदन्त इति शेषः । एवं बोधिताः मित्रामित्राः स्वान्यतमात् तस्मात् भिद्येरन्नित्यभिप्रायः । श्रीमूला.

**यस्य वा यस्माद्भयं वैरं द्वेषो वा, तं तस्माद्भेदयेयुः–' अयं ते शत्रुणा संधत्ते, पुरा त्वामतिसंधत्ते, क्षिप्रतरं संधीयस्व, निग्रहे चास्य प्रयतस्व ' इति ॥**

अन्यं प्रकारमाह– यस्य वेति । यस्य यस्मात् भयं वैरं द्वेषो वा, यस्मिन्नित्यार्थम्, तं भयवैरद्वेषान्यतमवन्तं तस्मात् भयवैरद्वेषगोचरात् भेदयेयुः, अर्थात् गूढपुरुषाः । कथमुक्त्वा ? – अयं ते शत्रुणा विजिगीषुणा सह संधत्ते । त्वां पुरा अतिसंधत्ते अतिसंधास्यते । क्षिप्रतरं अतिशीघ्रं संधीयस्व विजिगीषुणा संहितो भव । निग्रहे चास्य प्रयतस्व त्वदतिसंधित्सोरेतस्य मित्रामित्रान्यतमस्यापकारे प्रकर्षेण यत्नं कुरु । इति एवम्, उक्त्वेति शेषः ।

श्रीमूला.

**आवाहविवाहाभ्यां वा कृत्वा संयोगमसंयुक्तान् भेदयेत् ॥**

अन्यं दण्डप्रकारमाह – आवाहविवाहाभ्यां वेति । आवाहः कन्यास्वीकरणम्, विवाहः कन्यादानम्, ताभ्यां वा संयोगं संबन्धं कृत्वा असंयुक्तान् संबन्धरहितान् भेदयेत् । ते इमे स्वभूमिष्ठेषु भेदनप्रकाराः । श्रीमूला.

**सामन्ताटविकतत्कुलीनावरुद्धैश्चैषां राज्यं निघातयेत् । सार्थव्रजाटवीर्वा । दण्डं वाऽभिसृतम् । परस्परापाश्रयाश्चैषां जातिसंघाश्छिद्रेषु प्रहरेयुः । गूढाश्चाग्निरसशस्त्रेण ॥**

अथ दण्डप्रकारमाह– सामन्तेत्यादि । सामन्तैः भूम्यनन्तरैः आटविकैः अरण्यपतिभिः तत्कुलीनैः तेषां मित्रामित्राणां कुलभवैः अवरुद्धैः नियन्त्रितैस्तत्पुत्रैश्च एषां मित्रामित्राणां राज्यं पुरजनपदादिकं निघातयेत्, अर्थात् विजिगीषुः । 'सार्थव्रजाटवीर्वा' इति माधवपाठः । सार्थान् वणिक्संभारवाहिपशुवृन्दानि, व्रजान् गोमहिषादीन्, अटवीः द्रव्यहस्तिवनानि च निघातयेत् । दण्डं वा अभिसृतं वनाजीवादिप्रसक्तं सैन्यं च निघातयेत् । 'सार्थव्रजाटवीभिर्वा' इति मूलादर्शदृष्टे तृतीयान्तपाठे सार्थादिभिः अभिसृतं रक्षकत्वेन आश्रितं दण्डं च निघातयेदिति योज्यम् । किंतु तत्र द्वितीयो वाशब्दश्चकारार्थः । परस्परापाश्रयाश्चेति । अन्योन्योपोद्बलिताश्च जातिसंघाः संघवृत्ते वक्ष्यमाणा विच्छिलिकादयः एषां मित्रामित्राणां छिद्रेषु प्रमादस्थानेषु प्रहरेयुः अर्थादेनान् । गूढाश्च तीक्ष्णरसदादयो गूढपुरुषाश्च अग्निरसशस्त्रेण वह्निविषायुधैः प्रहरेयुः । श्रीमूला.

**वितंसगिलवच्चारीन् योगैराचरितैः शठः ।**
**घातयेत्परमिश्रायां विश्वासेनाऽऽमिषेण च ॥**

वक्तव्यशेषं वदन् प्रकरणमुपसंहरति– वितंसेत्यादि । परमिश्रायां मित्रामित्रमिश्रणजनितायामापदि शठः विजिगीषुः गूढवृत्तिः सन् वितंसगिलवत् – ' वितंसः पक्षिविश्वासार्थपक्षिरूपालेख्ययोगी देहाच्छादनपटः ' इति माधवः, गिलः भक्षः आमिषम्, ताभ्यां तुल्यं वर्तमानैः योगैः कपटोपायैः आचरितैः प्रयुक्तैः विश्वासेन स्वस्मिन् विश्वासोत्पादनेन आमिषेण च सारपण्यादिदानेन च अरीन् घातयेत् । श्रीमूला.

**(1)कामादिरुत्सेकः स्वाः प्रकृतीः कोपयति, अपनयो बाह्याः । तदुभयमासुरी वृत्तिः । स्वजनविकारः कोपः परवृद्धिहेतुष्वापदर्थोऽनर्थः संशय इति ॥**

' अर्थानर्थसंशययुक्ताः ' इति सूत्रम् । अर्थः हिरण्यभूम्यादिः, अनर्थः तन्नाशः शरीरनाशश्च, संशयः अर्थानर्थयोः संदेहः, तैः फलभूतैर्युक्ताः प्रकृतत्वादापदः उच्यन्ते इति सूत्रार्थः । बाह्योपजापाभ्यन्तरप्रतिजापादयो या आपदः पूर्वमुक्ताः तासामापत्त्वमर्थानर्थप्रयोजकत्वादिति निरूपयितुं प्रकरणमिदमारभ्यते ।

कामादिरुत्सेक इति । कामक्रोधादिर्दोषः स्वाः प्रकृतीः मन्त्र्याद्याभ्यन्तरप्रकृतीः कोपयति विकारयति । अपनयः संधिविग्रहादीनामयथावत्प्रयोगः बाह्याः राष्ट्रमुख्यान्तपालादिरूपाः बाह्यप्रकृतीः कोपयति । तत् उभयं कामादिरपनयश्चेत्येतत् द्वयं आसुरी वृत्तिः असुरयोग्यो धर्मः मायावृत्तिर्वा । अतोऽस्य वर्जने महान् यत्नो राजभिः कर्तव्य इत्यभिप्रायः । अस्य स्वजनकोप-

(१) कौ. ९।७.

हेतोः पूर्वमुक्तस्येदं पुनर्वचनमासुरवृत्तित्वेन निन्दार्थम् । स्वजनेत्यादि । तदुभयप्रभवः स्वजनविकारलक्षणो यः कोपः स एव शत्रुवृद्धिनिमित्तेषु जायमानेषु आपद्रूपतां प्रतिपद्यते । सा च आपत् अर्थरूपा अनर्थरूपा तदुभयसंशयरूपा चेत्यर्थः । श्रीमूला.

**योऽर्थः शत्रुवृद्धिमप्राप्तः करोति, प्राप्तः प्रत्यादेयः परेषां भवति, प्राप्यमाणो वा क्षयव्ययोदयो भवति, स भवत्यापदर्थः । यथा— सामन्तानामामिषभूतः, सामन्तव्यसनजो लाभः, शत्रुप्रार्थितो वा स्वभावाधिगम्यो लाभः, पश्चात्कोपेन पार्ष्णिग्राहेण वा विगृहीतः पुरस्ताल्लाभः, मित्रोच्छेदेन संधिव्यतिक्रमेण वा मण्डलविरुद्धो लाभ इत्यापदर्थः ॥**

तत्र कोऽसावापदर्थ इत्याह— योऽर्थ इत्यादि । योऽर्थः उपेक्षावशात् स्वहस्तमप्राप्तः सन् शत्रोरेव वृद्धिं करोति सोऽर्थः एक आपदर्थो भवति । योऽर्थः स्वहस्तप्राप्तोऽपि परैः प्रत्यादेयो भवति सोऽपर आपदर्थः । यो वाऽर्थः प्राप्यमाणतायामतिप्रवृद्धक्षयव्यययोगी भवति सोऽन्य आपदर्थ इत्यर्थः । तमुदाहृत्य दर्शयति— यथेत्यादि । सामन्तानाम्, आमिषभूतः बहुसामन्तभोग्य एकेन गृहीतो लाभः । स हि तैः संभूयाभियोगिभिः प्रत्यादेयत्वादापदर्थो भवति । सामन्तव्यसनजो लाभ इति । सामन्तस्य गुणप्रातिलोम्यादिव्यसनदशायां तस्मादपहृतो लाभः । स हि तद्व्यसनापगमे प्रत्यादेयत्वादापदर्थः । शत्रुप्रार्थितो वेत्यादि । स्वभावात् प्रार्थनां विनैव लब्धुं योग्य एव शत्रुणा प्रार्थितः प्रत्यादेयत्वादापदर्थः । 'शत्रुप्रार्थ्यः' इति पाठे शत्रुकाम्य इत्यर्थः । पश्चात्कोपेनेति । मूले दूष्यादिकोपेन पार्ष्णिग्राहेण वा पृष्ठशत्रुणा वा विगृहीतः बाधितः पुरस्ताल्लाभः यातव्यसकाशलभ्यो लाभः आपदर्थः । मित्रोच्छेदेनेति । मित्रस्य दुर्गहरणादिना संधिव्यतिक्रमेण कृतसंध्युल्लङ्घनेन वा निमित्तेन मण्डलविरुद्धः राजमण्डलाननुज्ञातः लाभः । इत्यापदर्थ इति । एवंजातीयो लाभ आपदर्थो विज्ञेय इत्यर्थः । श्रीमूला.

**स्वतः परतो वा भयोत्पत्तिरित्यनर्थः ॥**

अनर्थमाह— स्वत इत्यादि । स्वतः योऽर्थो गृह्यते तस्मात्, परतो वा गृह्यमाणमर्थं निमित्तीकृत्यान्यतो वा भयोत्पत्तिः इत्यनर्थः एवंप्रकारोऽनर्थः । श्रीमूला.

**तयोः 'अर्थो न वा' इति, 'अनर्थो न वा' इति, 'अर्थोऽनर्थः' इति, 'अनर्थोऽर्थः' इति संशयः ॥**

उक्तयोरर्थानर्थयोः संशयमाह— तयोरित्यादि । अर्थानर्थयोः 'अर्थो न वा' इति संशयः 'अर्थस्य किं भावः उत अभावः' इत्येवमाकारः अर्थतदभावकोटिकः संशयः एकः । 'अनर्थो न वा' इति 'किमनर्थस्य भावः उत अभावः' इति अनर्थतदभावकोटिको द्वितीयः । 'अर्थोऽनर्थः' इति 'किं अर्थः उत अनर्थः' इति अर्थानर्थकोटिकस्तृतीयः । 'अनर्थोऽर्थः' इति 'किमनर्थः उत अर्थः' इति अनर्थार्थकोटिकश्चतुर्थः । श्रीमूला.

**शत्रुमित्रमुत्साहयितुमर्थो न वेति संशयः । शत्रुबलमर्थमानाभ्यामावाहयितुमनर्थो न वेति संशयः । बलवत्सामन्तां भूमिमादातुमर्थोऽनर्थ इति संशयः । ज्यायसा संभूययानमनर्थोऽर्थ इति संशयः ॥**

इमान् क्रमेणोदाहरति— शत्रुमित्रमिति । शत्रोर्मित्रम् उत्साहयितुं शत्रावभियोजयितुं शत्रावभियोजनमित्यर्थः, अर्थो न वेति अर्थभावाभावकोटिकः संशयः । शत्रुबलमित्यादि । शत्रोः सैन्यम् अर्थमानाभ्यां भूम्यादिदानबहुमानाभ्यां आवाहयितुं आह्वातुम् अनर्थो नवेति अनर्थभावाभावकोटिकः । बलवत्सामन्तामिति । प्रबलप्रत्यमित्रां भूमिमादातुम् अर्थोऽनर्थ इति अर्थानर्थकोटिकः । ज्यायसेति । बलाधिकेन सह संभूययानं यातव्याभियानम् अनर्थोऽर्थः अनर्थो वाऽर्थो वा इत्यनर्थार्थकोटिकः संशयः । अत्र आद्ये अनर्थस्य द्वितीये अर्थस्य तृतीये अर्थाभावस्य च शङ्का नेति बोद्धव्यम् । श्रीमूला.

**तेषामर्थसंशयमुपगच्छेत् ॥**

उक्तानां संशयानां मध्ये अर्थसंशयम् अर्थमात्रविषयमनर्थस्पर्शरहितं संशयम् 'अर्थो न वा' इत्येवंलक्षणं

संशयमुपगच्छेत् उपगम्य तथाभूते विषये समुद्युञ्जीतेत्यर्थः । श्रीमूला.

**अर्थोऽर्थानुबन्धः, अर्थो निरनुबन्धः, अर्थोऽनर्थानुबन्धः, अनर्थोऽर्थानुबन्धः, अनर्थो निरनुबन्धः, अनर्थोऽनर्थानुबन्ध इत्यनुबन्धषड्वर्गः ॥**

अथ अर्थानर्थयोः प्रत्येकमनुबन्धयोगात् तदयोगाच्चानुबन्धनिबन्धनः षड्वर्गो जायते इत्याह— अर्थ इत्यादि । अर्थः 'योऽर्थः शत्रुवृद्धिमप्राप्तः करोति' इत्यादिनोक्तः आपदर्थः, तस्य तथाविधेनार्थेनानुबन्धः, अथ तथाविधार्थानुबन्धाभावः, अथ 'स्वतः परतो वा भयोत्पत्तिरित्यनर्थः' इत्युक्तलक्षणेनानर्थेनानुबन्ध इति त्रयः । तथा अनर्थस्य अर्थेन अनुबन्धः, अनुबन्धाभावः, अनर्थेन अनुबन्ध इति त्रयः । इत्याहत्य षट् ।

श्रीमूला.

**शत्रुमुत्पाट्य पार्ष्णिग्राहादानमर्थोऽर्थानुबन्धः ॥**

तेष्वाद्यमुदाहरति— शत्रुमुत्पाट्येति । यातव्यमरिमुत्साद्य पार्ष्णिग्राहादानं पृष्ठशत्रोर्ग्रहणं अर्थोऽर्थानुबन्धः ।

श्रीमूला.

**उदासीनस्य दण्डानुग्रहः फलेनार्थो निरनुबन्धः ॥**

द्वितीयमुदाहरति— उदासीनस्येति । तस्य फलेन धनादिग्रहणेन दण्डानुग्रहः स्वसैन्यदानेन उपकारः अर्थो निरनुबन्धः । अर्थस्यानर्थस्य वा तेनानुत्पादादित्यभिप्रायः । श्रीमूला.

**परस्यान्तरुच्छेदनमर्थोऽनर्थानुबन्धः ॥**

अर्थमनर्थानुबन्धमुदाहरति— परस्येति । शत्रोः अन्तरुच्छेदनम् । इह अन्तःशब्देन 'अरेर्नेतुश्च मध्यस्थो दुर्बलोऽन्तर्धिरुच्यते । प्रतिघातो बलवतः' (कौ. ७। १३) इति पार्ष्णिग्राहचिन्तोक्तलक्षणः अन्तर्धिरुच्यते । अन्तर्धेरुच्छेदनं अर्थोऽनर्थानुबन्धः, बलवतः शत्रोरनिवारणादित्यभिप्रायः । इत्थमर्थत्रिवर्ग उदाहृतः ।

श्रीमूला.

**शत्रुप्रतिवेशस्यानुग्रहः कोशदण्डाभ्यामनर्थोऽर्थानुबन्धः ॥**

अनर्थत्रिवर्गमुदाहरति— शत्रुप्रतिवेशस्येति । शत्रोः प्रतिवेशः भूम्यनन्तरः, तस्य कोशदण्डाभ्यां अनुग्रहः शत्रुविरोधे कोशदण्डदानेन सहकरणम् अनर्थोऽर्थानुबन्धः तदात्वानर्थरूपोऽपि आयतौ अर्थानुबन्धः शत्रुनिग्रहहेतुत्वात् । ननु अर्थत्रिवर्गे अर्थोऽर्थानुबन्धः प्रथमं कथितः । तत्क्रमेण इह अनर्थोऽनर्थानुबन्धः प्रथमं कथनीयः, न तु अनर्थोऽर्थानुबन्ध इति चेत्, सत्यम् । किंतु 'तस्य पूर्वः पूर्वः श्रेयानुपसंप्राप्तुम्' इति वक्ष्यति, तदानुगुण्यार्थमत्र क्रमान्यत्वमादृतम् । श्रीमूला.

**हीनशक्तिमुत्साह्य निवृत्तिरनर्थो निरनुबन्धः ॥**

दुर्बलं उत्साह्य 'अहं ते सहकरिष्यामि' इति शत्र्वभियोगे संनाह्य निवृत्तिः ततः स्वयं निवर्तनम् अनर्थो निरनुबन्धः । धनव्ययादिहेतुत्वात् तदात्वे अनर्थरूपः, तेन शत्रुनिग्रहसिद्ध्या नार्थानुबन्धः न वा हीनशक्तिकोपस्य अकिंचित्करतया अनर्थानुबन्ध इत्यतो निरनुबन्धश्चेत्यर्थः । श्रीमूला.

**ज्यायांसमुत्थाप्य निवृत्तिरनर्थोऽनर्थानुबन्धः ॥**

प्रबलं उत्थाप्य 'तव सहकारी भविष्यामि' इत्युत्साह्य निवृत्तिः अनर्थोऽनर्थानुबन्धः । धनव्ययहेतुत्वात् तदात्वे अनर्थः, प्रबलकोपनिमित्तकेन अनर्थान्तरेण अनुबध्यते चेत्यर्थः । श्रीमूला.

**तस्य पूर्वः पूर्वः श्रेयानुपसंप्राप्तुम् । इति कार्यावस्थापनम् ॥**

अनुबन्धषड्वर्गस्य मध्ये अर्थत्रिवर्गे पूर्वपूर्वः उपादेयतया प्रतिपत्तुमर्हः, अनर्थत्रिवर्गे तु परिहर्तव्यतया प्रतिपत्तुमर्ह इत्यर्थः । इति कार्यावस्थापनमिति । कार्ययोरर्थानर्थयोः अवस्थापनं स्वरूपतो व्यवस्थापनम् । श्रीमूला.

**समन्ततो युगपदर्थोत्पत्तिः समन्ततोर्थापद्भवति । सैव पार्ष्णिग्राहविगृहीता समन्ततोर्थसंशयापद्भवति ॥**

अथ देशतोऽवस्थापनमाह— समन्तत इत्यादि । अग्रतः पृष्ठतः पार्श्वतश्च सर्वतो यौगपद्येनार्थोत्पत्तिः

समन्ततोर्थापद्भवति । सैवेत्यादि । समन्ततो युगपदर्थोत्पत्तिरेव पार्ष्णिग्राहेण विरोधिता समन्ततोर्थसंशयापद्भवति । श्रीमूला.

**तयोर्मित्राक्रन्दोपग्रहात्सिद्धिः ॥**

उक्तयोरर्थापदर्थसंशयापदोः प्रतीकारमाह— तयोरिति । समन्ततोर्थापत्समन्ततोर्थसंशयापदोः मित्राक्रन्दोपग्रहात् मित्रस्य पुरस्तान्मित्रस्य आक्रन्दस्य पृष्ठतोमित्रस्य च उपग्रहात् संधानेन सहायीकरणात् सिद्धिः प्रतिक्रिया । श्रीमूला.

**समन्ततः शत्रुभ्यो भयोत्पत्तिः समन्ततोनर्थापद्भवति ॥**

समन्ततः युगपत् शत्रुभ्यो भयोत्पत्तिः समन्ततोनर्थापदित्याह— समन्ततः शत्रुभ्य इत्यादि । श्रीमूला.

**सैव मित्रविगृहीता समन्ततोनर्थसंशयापद्भवति ॥**

समन्ततोनर्थापदेव मित्रेण स्वानुकूलेन विरोधिता समन्ततोनर्थसंशयापत् भवतीत्याह— सैव मित्रविगृहीतेत्यादि । श्रीमूला.

**तयोश्चलामित्राक्रन्दोपग्रहात्सिद्धिः । परमिश्राप्रतीकारो वा ॥**

तयोः प्रतीकारमाह— तयोरिति । समन्ततोनर्थापत्समन्ततोनर्थसंशयापदोः चलामित्राक्रन्दोपग्रहात् चलामित्रस्य दुर्गरहितस्य शत्रोः आक्रन्दस्य पृष्ठतोमित्रस्य च उपग्रहात् स्वानुकूलीकरणात् सिद्धिः प्रतीकारः । परमिश्राप्रतीकारो वेति । परमिश्राया आपदो यः प्रतीकारः 'परमिश्रायां मित्रतः सिद्धिः' इति दूष्यामित्रसंयुक्तप्रकरणे कथितः, स वा तयोः प्रतीकार इत्यर्थः । श्रीमूला.

**इतो लाभ इतरतो लाभ इत्युभयतोर्थापद्भवति । तस्यां समन्ततोर्थायां च लाभगुणयुक्तमर्थमादातुं यायात् । तुल्ये लाभगुणे प्रधानमासन्नमनतिपातिनम्, ऊनो वा येन भवेत्तमादातुं यायात् ॥**

एकतोऽपरतश्चेत्युभयतो लाभो यस्यां भवति सा उभयतोर्थापदित्याह— इतो लाभ इत्यादि । प्रतीकारमाह— तस्यामिति । उभयतोर्थापदि समन्ततोर्थायां च समन्ततोर्थापदि च लाभगुणयुक्तम् 'आदेयः प्रत्यादेयः प्रसादकः' इत्यादिना क्षयव्ययलाभविपरिमर्शप्रकरणे (कौ. ९।४) ये लाभगुणा उक्ताः तैर्युक्तम् अर्थम् आदातुं यायात् । पूर्वमेका प्रतिक्रिया समन्ततोर्थापदि 'तयोर्मित्रान्क्रदोपग्रहात् सिद्धिः' इत्युक्ता, अन्या त्वत्रोपदिष्टा । तुल्ये लाभगुण इति । लाभगुणे समाने प्रधानं वा प्रशस्ततरफलं वा आसन्नं वा देशतः संनिकृष्टं वा अनतिपातिनं वा कालातिक्रमासहम् आसन्नकालं वा । 'अतिपातिनम्' इति पाठे आत्ययिकमित्यर्थः । ऊनो वा येन भवेत् तं यस्मिन्ननुपात्ते हीनत्वमात्मनः स्यात् तं वा अर्थाल्लाभम् आदातुं यायात् । श्रीमूला.

**इतोऽनर्थ इतरतोऽनर्थ इत्युभयतोनर्थापत् । तस्यां समन्ततोनर्थायां च मित्रेभ्यः सिद्धिं लिप्सेत ॥**

उभयतोनर्थापदमाह— इतोऽनर्थ इतरतोऽनर्थ इत्यादि । तस्यां प्रतीकारमाह— तस्यामिति । उभयतोनर्थापदि समन्ततोनर्थायां च मित्रेभ्यः सिद्धिं प्रतिक्रियां लिप्सेत । समन्ततोनर्थायाः 'तयोश्चलामित्राक्रन्दोपग्रहात् सिद्धिः' इति प्रतिक्रिया पूर्वमभिहिता, प्रतिक्रियान्तरं तु अत्रोच्यते । श्रीमूला.

**मित्राभावे प्रकृतीनां लघीयस्यैकतोनर्थां साधयेत् । उभयतोनर्थां ज्यायस्या । समन्ततोनर्थां मूलेन प्रतिकुर्यात् । अशक्ये सर्वमुत्सृज्यापगच्छेत् । दृष्टा हि जीवता पुनरापत्तिः, यथा सुयात्रोदयनाभ्याम् ॥**

एष एव मित्रद्वारकः प्रतीकारः एकतोनर्थायामपि भवतीत्यभिसंधिं मनसि कुर्वन् मित्राभावपक्षे तस्याः उभयतोनर्थायाः समन्ततोनर्थायाश्च प्रतीकारमाह— मित्राभाव इति । मित्रसाहाय्यालाभे प्रकृतीनां मध्ये लघीयस्या लघुतरया प्रकृत्या, तथाविधप्रकृतित्यागेनेत्यर्थः, एकतोनर्थां साधयेत् प्रतिकुर्यात् । उभयतोनर्थां ज्यायस्या प्रशस्यतर-

प्रकृतित्यागेन प्रतिकुर्यात् । समन्ततोनर्थो मूलेन— मूलं स्थानीयम्, तत्त्यागेन प्रतिकुर्यात् । अशक्य इति । प्रतीकारे लघुतरप्रकृत्यादित्यागैरशक्ये सति सर्वमुत्सृज्य स्वात्मातिरिक्तं सर्वस्वं परित्यज्य अपगच्छेत् । अन्यत्रापसृत्याऽऽत्मानं रक्षेदित्यर्थः । तथा आत्मरक्षणस्य प्रयोजनं पुनःस्वपदप्राप्तिरूपं संभावितमित्याह— दृष्टा हीति । जीवता विपदि अन्यत्रापसृत्य यत्नेन आत्मानं रक्षता पुनरापत्तिः दृष्टा हि पुनः स्वस्थानप्रतिलम्भोऽनुभूतो हि । आत्मरक्षणेन स्वपद्पुनःप्राप्तिदर्शनस्य ऐतिहासिकमहापुरुषसमुदाचारसिद्धतां दर्शयितुमाह— यथा सुयात्रोदयनाभ्यामिति । सुयात्रः नलः, उदयनः वत्सराजः, ताभ्यां विपदि आत्मानं रक्षद्भ्यां पुनरापत्तिर्दृष्टेत्यर्थः । इह ' जीवतः पुनरावृत्तिः ' इत्यपि पाठः । तदा तु दृष्टेत्यस्य लोकः कर्ता गम्यः । यथा सुयात्रोदयनाभ्यामित्यस्य च जीवित्वा पुनरावृत्तिं प्राप्तवद्भ्यां नलवत्सराजाभ्यां निदर्शनभूताभ्यामित्यर्थः ।

श्रीमूला.

**इतो लाभ इतरतो राज्याभिमर्श इत्युभयतोर्थानर्थापद्भवति । तस्यामनर्थसाधको योऽर्थः तमादातुं यायात्, अन्यथा हि राज्याभिमर्शं वारयेत् ॥**

उभयतोर्थानर्थामाह— इतो लाभ इति । एकतो लाभः इतरतो राज्याभिमर्शः स्वजनपदाक्रमणम् इति एवम् उभयतोऽर्थानर्थाभ्यां युक्तेत्यर्थः, उभयतोर्थानर्थापत् भवति । तत्र प्रतीकारमाह— तस्यामित्यादि । उक्तायामापदि योऽर्थ आदीयमानोऽनर्थस्यापि प्रतीकारं प्रयोजयेत् तमर्थमादातुं यायात् । स चेदर्थः अनर्थप्रतीकाराक्षमः तर्हि अर्थलाभमुपेक्ष्य राज्याभिमर्शमेव प्रतिकुर्यादित्यर्थः ।

श्रीमूला.

**एतया समन्ततोर्थानर्थापद् व्याख्याता ॥**

उभयतोर्थानर्थापदः उक्तां प्रतिक्रियां समन्ततोर्थानर्थापदि अतिदिशति— एतया समन्ततोर्थेत्यादि ।

श्रीमूला.

**इतोऽर्थ इतरतोऽर्थसंशय इत्युभयतोनर्थार्थसंशया । तस्यां पूर्वमनर्थं साधयेत्, तत्सिद्धावर्थसंशयम् ॥**

अनर्थनिश्चयार्थसंशयवतीमाह— इतोऽनर्थ इति । एकतः अनर्थनिश्चयः अन्यतः अर्थसंशयः इत्युभयवती उभयतोनर्थार्थसंशया नाम । तत्प्रतिक्रियामाह— तस्यामित्यादि । तस्यां प्रथममनर्थं प्रतिकुर्यात् । अनर्थप्रतीकारे जाते पश्चादर्थसंशयं प्रतिकुर्यादित्यर्थः ।

श्रीमूला.

**एतया समन्ततोनर्थार्थसंशया व्याख्याता ॥**

उभयतोनर्थार्थसंशयायामुक्तं प्रतिक्रियाक्रमं समन्ततोनर्थार्थसंशयायामतिदिशति— एतया समन्ततोनर्थेत्यादि ।

श्रीमूला.

**इतोऽर्थ इतरतोऽनर्थसंशय इत्युभयतोर्थानर्थसंशयापत् ॥**

अथ अनर्थसंशयार्थनिश्चयवतीमापदमाह— इतोऽर्थ इतरतोऽनर्थसंशय इत्यादि ।

श्रीमूला.

**एतया समन्ततोर्थानर्थसंशया व्याख्याता ॥**

उभयतोर्थानर्थसंशयया समानलक्षणा समानप्रतीकारा च समन्ततोर्थानर्थसंशया इत्यभिप्रायेणाऽऽह — एतया समन्ततोर्थानर्थसंशयेत्यादि ।

श्रीमूला.

**तस्यां पूर्वां पूर्वां प्रकृतीनामनर्थसंशयान्मोक्षयितुं यतेत । श्रेयो हि मित्रमनर्थसंशये तिष्ठत्, न दण्डः । दण्डो वा, न कोश इति ॥**

तत्प्रतीकारमाह— तस्यामित्यादि । उभतोर्थानर्थसंशयापदि प्रकृतीनां स्वाम्यमात्यजनपददुर्गकोशदण्डमित्रलक्षणानां मध्ये पूर्वां पूर्वां प्रकृतिमनर्थसंशयात् मोक्षयितुं यतेत उत्तरोत्तरस्याः प्रागेव मोचयितुं यत्नं कुर्यात् । पूर्वपूर्वामपेक्ष्य उत्तरोत्तरस्याः अप्राधान्यात् अप्रधानप्रकृत्यनर्थमोक्षणस्य पश्चात्करणे अनतिदोषादित्यभिप्रायः । अप्रधानप्रकृत्यनर्थमोक्षणविलम्बस्यानतिपीडावहत्वं प्रधानप्रकृत्यनर्थमोक्षणविलम्बस्यातिपीडावहत्वं च प्रकृतिविशेषनिदर्शनेन स्पष्टयति— श्रेयो हीति । अनर्थसंशये तिष्ठत् मित्रं श्रेयः अनतिपीडाहेतुतया वरमित्यर्थः । न दण्डः

दण्डस्तु अनर्थसंशये तिष्ठन् अतिपीडाहेतुतया नैव वरमित्यर्थः। दण्डो वा न कोश इति। दण्डो वा अनर्थसंशये तिष्ठन् श्रेयान्, न तु कोशोऽनर्थसंशये तिष्ठन्नित्यर्थः। इतिशब्दः प्रकारे। अनेन प्रकारेण अन्यस्यापि पूर्वपूर्वस्य अनर्थसंशये तिष्ठतः मोक्षणीयत्वम् उत्तरोत्तरस्य तदभावश्च बोद्धव्यमित्यभिप्रायः। श्रीमूला.

**समग्रमोक्षणाभावे प्रकृतीनामवयवान् मोक्षयितुं यतेत। तत्र पुरुषप्रकृतीनां च बहुलमनुरक्तं वा तीक्ष्णलुब्धवर्जम्। द्रव्यप्रकृतीनां सारं महोपकारं वा। संधिनाऽऽसनेन द्वैधीभावेन वा लघूनि विपर्ययैर्गुरूणि॥**

प्रकृतयो हि पुरुषाः द्रव्याणि च। तेषां सर्वेषां मोक्षणस्य अशक्यतायां प्रकृतीनां अवयवान् मोक्षयितुं यतेत। तत्र विशेषमाह— तत्रेति। अवयवमोचने पुरुषप्रकृतीनां बहुलमनुरक्तं वा तीक्ष्णलुब्धवर्जं तीक्ष्णलुब्धाभ्यां वर्जितं मोक्षयितुं यतेत। द्रव्यप्रकृतीनां मध्ये सारं महामूल्यं महोपकारं वा मोक्षयितुं यतेत। संधिनेत्यादि। तेन आसनेन द्वैधीभावेन वा लघुभूतेन गुणेनेत्यार्थम्, लघूनि लघुद्रव्याणि मोक्षयितुं यतेत। विपर्ययैः संध्यादिविपर्ययरूपैर्गुणैः अर्थात् विग्रहयानसमाश्रयरूपैः गुरूणि गुरुद्रव्याणि मोक्षयितुं यतेत। एवं तावत् मोक्षयितव्यं मोक्षणौपयिकं चाभिहितम्। श्रीमूला.

**क्षयस्थानवृद्धीनां चोत्तरोत्तरं लिप्सेत। प्रातिलोम्येन वा क्षयादीनाम्। आयत्यां विशेषं पश्येत्॥**

अथ मोक्षणपरिपाटीमाह— क्षयस्थानवृद्धीनां चेति। शक्तिसिद्ध्योरपचयः क्षयः। स्थानं साम्यं प्रकृतिस्थता। शक्तिसिद्ध्योरुपचयो वृद्धिः। क्षयादीनां मध्यात् उत्तरोत्तरं लिप्सेत। क्षयात् स्थानं स्थानात् वृद्धिं च प्राप्तुमीहेत, न तु क्षयात् वृद्धिमित्यभिप्रायः। प्रातिलोम्येन वा क्षयादीनामिति। प्राप्तवृद्धिरेव वृद्धेः स्थानं स्थानात् क्षयं च प्रतिलोमगत्या लिप्सेतेत्यर्थः। किमर्थमियं प्रतिलोमगत्या लिप्सेत्याकाङ्क्षायामायतौ वृद्धिविशेषलाभार्थमित्याह— आयत्यां विशेषं पश्येदिति। अनया प्रतिलोमगत्या कमपि वृद्धेरतिशयमुत्तरकाले लभेयेति यदि जानीयादित्यर्थः। श्रीमूला.

**इति देशावस्थापनम्॥**

अनेन प्रकारेण देशनिमित्तापदां व्यवस्थापनमुक्तमित्यर्थः। श्रीमूला.

**एतेन यात्रादिमध्यान्तेष्वर्थानर्थसंशयानामुपसंप्राप्तिर्व्याख्याता॥**

उक्तं देशनिमित्तापद्विषयं विधिं कालनिमित्तापदि अतिदिशति— एतेनेत्यादि। उक्तेन देशनिमित्तापत्स्वरूपप्रतिविधानकथनेन यात्रादिमध्यान्तेषु यात्रायाः आदौ मध्येऽन्ते च अर्थानर्थसंशयानां उपसंप्राप्तिः अर्थात् प्रतिक्रिया च व्याख्याता उक्तप्राया। देशस्योक्ताः समन्ततोयुगपदर्थोत्पत्यादय आपदस्तत्प्रतिक्रियाश्च पार्ष्णिग्राहाक्रन्दमित्रोपग्रहादयो यात्राया आदिमध्यान्तकालेष्वपि भवन्तीति भावः। श्रीमूला.

**निरन्तरयोगित्वाच्चार्थानर्थसंशयानां यात्रादावर्थः श्रेयानुपसंप्राप्तुं पार्ष्णिग्राहासारप्रतिघाते क्षयव्ययप्रवासप्रत्यादेयमूलरक्षणेषु च भवति। तथाऽनर्थः संशयो वा स्वभूमिष्ठस्य विषह्यो भवति॥**

तत्र यात्रायाः आद्यवस्थायां युगपदर्थाद्युत्पत्तावाह— निरन्तरेत्यादि। यात्रादौ यात्राया आरम्भे अर्थानर्थसंशयानां निरन्तरयोगित्वात्, युगपत् योगे सतीत्यर्थः, अर्थः उपसंप्राप्तुं आदातुं श्रेयान् भवति। श्रेयस्त्वं चार्थस्य पार्ष्णिग्राहासारप्रतिघातादिसाधकत्वादित्यभिप्रायेणाऽऽह— पार्ष्णिग्राहासारप्रतिघाते इति। पार्ष्णिग्राहस्य पृष्ठशत्रोः आसारस्य यातव्यसुहृद्बलस्य च प्रतिघाते प्रतिघातार्थमित्यर्थः। क्षयव्ययप्रवासप्रत्यादेयमूलरक्षणेषु च। क्षयः युग्यपुरुषापचयः। व्ययः हिरण्यधान्याद्यपचयः। प्रवासः दूराध्वगमनम्। प्रत्यादेयं यातव्यात् प्रत्यादातुं योग्यं तदपहृतं भूम्यादिकम् अर्थादर्थसाध्यसहायोपग्रहनिर्वर्त्यं प्रत्यादेयप्रत्यादानम्। मूलरक्षणं स्थानीयस्य रक्षणम्। इत्येतेषु च फलभूतेष्वित्यर्थः। अर्थो यथा तथा अनर्थः संशयो वा यात्रादौ स्वभूमिस्थितस्य विजिगीषोः सुख-

साध्यो भवतीत्याह– तथाऽनर्थ इत्यादि। विषह्यः सोढुं शक्यः। साध्य इत्यर्थः। श्रीमूला.

**एतेन यात्रामध्येऽर्थानर्थसंशयानामुपसंप्राप्तिर्व्याख्याता ॥**

यात्रादाविव यात्रामध्येऽपि अर्थानर्थसंशयानां पार्ष्णिग्राहासारप्रतिबन्धादिप्रयोजनवत्त्वाविशेषात् उपसंप्राप्तिर्बोद्धव्येत्याह– एतेनेत्यादि। श्रीमूला.

**यात्रान्ते तु कर्शनीयमुच्छेदनीयं वा कर्शयित्वोच्छिद्य वाऽर्थः श्रेयानुपसंप्राप्तुं नानर्थः संशयो वा पराबाधभयात् ॥**

यात्रायाः अन्ते तु कर्शनीयमुच्छेदनीयं वा शत्रुं कर्शयित्वोच्छिद्य वा परभूमौ स्थितस्य विजिगीषोरर्थ एवोपसंप्राप्तियोग्यो भवति, न त्वनर्थः संशयो वा, परस्य रन्ध्रान्वेषिणः सकाशात् आबाधस्य संभावनादित्याह– यात्रान्ते त्वित्यादि। श्रीमूला.

**सामवायिकानामपुरोगस्य तु यात्रामध्यान्तगोऽनर्थः संशयो वा श्रेयानुपसंप्राप्तुमनिबन्धगामित्वात् ॥**

सामवायिकानां प्रधानस्यैष विधिः। अप्रधानस्य त्वाह– सामवायिकानामिति। तेषां अपुरोगस्य तु अप्रधानस्य तु यात्रामध्यान्तगः यात्राया मध्येऽन्ते वा संभूतः अनर्थः संशयो वा उपसंप्राप्तुं प्रतिकर्तुं श्रेयान्। कुतः? अनिबन्धगामित्वात् पुरोगस्य धूर्वहतया सप्रतिबन्धत्वेन अन्यत्र गन्तुमशक्तत्वेऽपि अपुरोगस्य प्रतिबन्धरहितस्य अन्यत्र गतिसंभवादित्यर्थः। श्रीमूला.

**अर्थो धर्मः काम इत्यर्थत्रिवर्गः। तस्य पूर्वः पूर्वः श्रेयानुपसंप्राप्तुम् ॥**

अथ अर्थानर्थसंशयानां प्रत्येकं त्रिवर्गं दर्शयन् वर्ग्याणामितरेतरापेक्षं श्रेयस्त्वमाह– अर्थ इत्यादि। अर्थत्रिवर्गः उपादेयत्रिवर्गः। तस्येति। अर्थत्रिवर्गस्य मध्ये पूर्वः पूर्वः उपसंप्राप्तुं श्रेयान्। कामात् धर्मः प्रशस्ततरः धर्मश्चार्थ इत्यर्थः। श्रीमूला.

**अनर्थोऽधर्मः शोक इत्यनर्थत्रिवर्गः। तस्य पूर्वः पूर्वः श्रेयान् प्रतिकर्तुम् ॥**

अनर्थत्रिवर्गः परिहार्यत्रिवर्गः। श्रीमूला.

**अर्थोऽनर्थ इति, धर्मोऽधर्म इति, कामः शोक इति संशयत्रिवर्गः। तस्योत्तरपक्षसिद्धौ पूर्वपक्षः श्रेयानुपसंप्राप्तुम् ॥**

संशयत्रिवर्गमाह– अर्थोऽनर्थ इतीत्यादि। तस्येति। संशयत्रिवर्गस्य मध्ये उत्तरपक्षसिद्धौ। अत्र हि वर्गे अर्थानर्थरूपपक्षद्वयात्मकः प्रथमो वर्ग्यः, धर्माधर्मरूपपक्षद्वयात्मको द्वितीयः, कामशोकरूपपक्षद्वयात्मकस्तृतीय इति त्रयो वर्ग्याः। तेषु एकैकस्मिन् उत्तरपक्षस्य अनर्थादेः सिद्धौ प्रतिक्रियायां कृतायां पूर्वपक्षः अर्थादिः उपसंप्राप्तुं श्रेयान्। श्रीमूला.

**इति कालावस्थापनम्। इत्यापदः ॥**

इति कालावस्थापनमिति। अनेन प्रकारेण यात्रादिमध्यान्तकालिकार्थानर्थादिसंबद्धा व्यवस्था निरूपितेत्यर्थः। इत्यापद इति। प्रपञ्चिता इति शेषः। श्रीमूला.

**तासां सिद्धिः पुत्रभ्रातृबन्धुषु सामदानाभ्यां सिद्धिरनुरूपा, पौरजानपददण्डमुख्येषु दानभेदाभ्यां सामन्ताटविकेषु भेददण्डाभ्याम् ॥**

'तासामुपायविकल्पजाः सिद्धयः' इति सूत्रम्। उक्तानामापदां सामदानाद्युपायभेदप्रयोगनिबन्धनाः प्रतिक्रिया उच्यन्ते इति सूत्रार्थः। पूर्वं तावत् 'तयोर्मित्राक्रन्दोपग्रहात् सिद्धिः' इत्यादिना मित्राद्युपग्रहः साधकतयोक्तः, तदुपायास्त्विदानीमभिधीयन्ते।

तानुपायान् यथाविषयमवस्थापयति– तासां सिद्धिरिति। आपदां प्रतिक्रिया या पूर्वमुक्ता सा पुत्रभ्रातृबन्धुषु विषये सामदानाभ्यां सिद्धिरनुरूपा सामदानलक्षणाभ्यामुपायाभ्यां भवन्ती समुचिता सिद्धिः। तेषु सहजानुरागवत्तया विधेयेषु उपायान्तरप्रयोगानौचित्यात् इत्यभिप्रायः। पौरजानपददण्डमुख्येषु पौरादीनां मुख्येषु विषये, यद्वा पौरादिषु राष्ट्रमुख्यान्तेषु चतुर्षु विषये दानभेदाभ्यां भवन्ती सिद्धिः अनुरूपा सिद्धिः। तेषु सहजस्नेहादिरहिततया सामदण्डप्रयोगानौचित्यादिति भावः। सामन्ताटविकेषु विषये भेददण्डाभ्यां भवन्ती सिद्धिः अनुरूपा सिद्धिः। निसर्गविरोधिषु सामदानप्रयोगानौचित्यादित्यर्थः। श्रीमूला.

**एषाऽनुलोमा । विपर्यये प्रतिलोमा । मित्रामित्रेषु व्यामिश्रा सिद्धिः । परस्परसाधका ह्युपायाः ॥**

उक्ता सामाद्युपायद्वारिका नैयमिकी सिद्धिः अनुलोमा क्रमनियमयुक्ता । औत्सर्गिकस्वस्वगुणानुवर्तित्वलक्षणानुलोम्ययुक्तपुत्रादिविषयत्वात् इति भावः । विपर्यये पुत्राद्यानुलोम्याभावे प्रतिलोमा अव्यवस्थितक्रमा सिद्धिः । द्रोहवृत्तितया प्रतिलोमेषु पुत्रादिष्वपि दण्डप्रयोगात् सिद्धिरेषितव्या भवति, श्लाघ्यगुणयोगान्निर्वैरवृत्तितया अनुलोमेषु सामन्तादिष्वपि सामप्रयोगात् सिद्धिरेषितव्या भवतीत्यभिप्रायः । मित्रामित्रेष्विति । मित्रेषु अमित्रेषु च विषये व्यामिश्रा सिद्धिः प्रतिक्रिया संकीर्णा भवति । तेषां हि विकारापत्तौ तत्तद्विकारप्रशमानुगुणतया सर्वे एवोपायाः व्यस्ता मिश्रिता वा अनियमेन प्रयोक्तव्या भवन्तीति भावः । तत्र उपायसमुच्चयपक्षे द्वयोर्विरुद्धस्वभावयोरुपाययोः कथमेकार्थसाधकता ? इत्याशङ्कायामाह— परस्परसाधका ह्युपाया इति । परस्परविरुद्धा अप्युपाया एकस्मिन्नर्थे साध्ये परस्परसहकारिणो भवन्तीत्यर्थः । श्रीमूला.

**शत्रोः शङ्कितामात्येषु सान्त्वं प्रयुक्तं शेषप्रयोगं निवर्तयति, दूष्यामात्येषु दानम् । संघातेषु भेदः । शक्तिमत्सु दण्ड इति ॥**

उपायविषयं नियमविशेषमाह— शत्रोः शङ्कितामात्येष्विति । शत्रुसंबन्धिषु क्रुद्धत्वादिदोषात् कृत्यत्वेन शङ्कयमानेषु अमात्येषु विषये सान्त्वं साम प्रयुक्तं सत् शेषप्रयोगं दानाद्युपायप्रयोगं निवर्तयति । सान्त्वेनैव कृत्यसिद्ध्या शेषानपेक्षणादिति भावः । दूष्यामात्येष्विति । शत्रोर्दूष्या येऽमात्यास्तेषु दानं प्रयुक्तं सत् शेषप्रयोगं निवर्तयति । संघातेष्विति । इह शत्रोरिति निवृत्तम् । संघातेषु विषये भेदः प्रयुक्तः सन् शेषप्रयोगं निवर्तयति । शक्तिमत्स्विति । उत्साहादिशक्तियुक्तेषु विषये दण्ड इति । नियम इति शेषः । दण्ड एवेत्यर्थः । इत्थमुपायानां विषयापेक्षा व्यवस्थाऽभिहिता । श्रीमूला.

**गुरुलाघवयोगाच्चाऽऽपदां नियोगविकल्पसमुच्चया भवन्ति ॥**

आपद्गुरुलघुभावापेक्षया उपायानां नियोगविकल्पसमुच्चया भवन्तीत्याह— गुरुलाघवयोगाच्चेत्यादि । श्रीमूला.

**'अनेनैवोपायेन, नान्येन' इति नियोगः । 'अनेन वाऽन्येन वा' इति विकल्पः । 'अनेनान्येन च' इति समुच्चयः ॥**

नियोगविकल्पसमुच्चयानां स्वरूपमाह— अनेनैवेत्यादि । इह वाक्यत्रयेऽपि 'सिद्धिः' इति शेषो द्रष्टव्यः । श्रीमूला.

**तेषामेकयोगाश्चत्वारस्त्रियोगाश्च, द्वियोगाः षट्, एकश्चतुर्योग इति पञ्चदशोपायाः । तावन्तः प्रतिलोमाः ॥**

नियोगादियोगनिबन्धनानुपायानां प्रकारान् संचष्टे— तेषामिति । सामादीनां मध्ये एकयोगाः । एकेति भावप्रधानो निर्देशः । एकेन एकत्वेनैव, न तु द्वित्वत्रित्वादिना, योगः प्रयोगः येषां ते तथाभूताः । अर्थात् सामैव केवलं प्रयोक्तव्यम्, दानमेव केवलम्, भेद एव केवलः, दण्ड एव केवलः इत्येवं व्यवस्थायुक्ताः चत्वारः । त्रियोगाश्च त्रिप्रयोगयुक्ताश्च चत्वारः । यथा— सामदानभेदाः, सामदानदण्डाः, सामभेददण्डाः, दानभेददण्डाः इत्येवं चतुष्प्रकाराः । द्वियोगाः द्विप्रयोगयुक्ताः षट् । यथा— सामदाने, सामभेदौ, सामदण्डौ, दानभेदौ, दानदण्डौ, भेददण्डौ इत्येवं षट्प्रकाराः । एकः चतुर्योगः चतुष्प्रयोगयुक्त एकः प्रकारः । इति एवं पञ्चदश पञ्चदशप्रकाराः उपायाः । ते चैतेऽनुलोमक्रमप्रयोज्याः । प्रतिलोमक्रमप्रयोज्या अपि पञ्चदशेत्याह— तावन्तः प्रतिलोमा इति । तद्यथा— दण्डभेददानसामानि ऐकैकश्येन चत्वार उपायाः । दण्डभेददानानि, दण्डभेदसामानि, भेददानसामानि, दण्डदानसामानि इति त्रियोगाश्चत्वारः । दण्डभेदौ, दण्डदाने, दण्डसामनी, भेददाने, भेदसामनी, दानसामनी इति द्वियोगाः षट् ।

दण्डादिचतुष्टययुक्तः एकः । इत्याहत्य पञ्चदश प्रतिलोमक्रमिका उपायाः । श्रीमूला.

**तेषामेकेनोपायेन सिद्धिरेकसिद्धिः, द्वाभ्यां द्विसिद्धिः, त्रिभिस्त्रिसिद्धिः, चतुर्भिश्चतुःसिद्धिरिति ॥**

एकद्वित्रिचतुर्योगनिबन्धनमुपायानां चातुर्विध्यं तन्निर्वर्त्यानां प्रतिक्रियाणामपि चातुर्विध्यं प्रयोजयतीत्यभिप्रायेणाऽऽह– तेषामित्यादि । इतिशब्दानन्तरं चतुर्विधाः सिद्धय इति शेषः । श्रीमूला.

**धर्ममूलत्वात्कामफलत्वाच्चार्थस्य धर्मार्थकामानुबन्धा याऽर्थस्य सिद्धिः सा सर्वार्थसिद्धिः ॥**

या एताः प्रतिक्रियालक्षणाः सिद्धयः प्रपञ्चिताः ताभिः सिध्यत्सु नानाप्रकारेषु लाभेषु मध्येऽर्थस्य लाभ एव परम इत्युपदेष्टुं तं स्तौति– धर्ममूलत्वादिति । धर्मं प्रति हेतुत्वात् कामफलत्वात् कामोपभोगसाधकत्वात् चकारात् अर्थसाधकत्वाच्च धर्मार्थकामानुबन्धा धर्मादिसमुच्चयप्राप्तिलक्षणफलोपधायिका या अर्थस्य सिद्धिः लाभः सा सर्वार्थसिद्धिः । धर्मादित्रितयातिरेकेण लोके लब्धव्यार्थाभावादिति भावः । श्रीमूला.

**इति सिद्धयः ॥**

अनेन प्रकारेण सिद्धयः प्रतिक्रियाः अर्थात् अपनयप्रभवाणां मानुषीणामापदाम् । व्याख्याता इति शेषः । श्रीमूला.

**दैवादग्निरुदकं व्याधिः प्रमारो विद्रवो दुर्भिक्षमासुरी सृष्टिरित्यापदः ॥**

दैवीस्ता आह– दैवादित्यादि । दैवात् पूर्वजन्मसंचितादृष्टात् । प्रमारः संघशो मरणम् । विद्रवः राष्ट्रात् पलायनम् । दुर्भिक्षं ईतिबाधा । आसुरी सृष्टिः मूषिकादीनां प्रभूतोत्पत्तिरिति माधवः । श्रीमूला.

**तासां दैवतब्राह्मणप्रणिपाततः सिद्धिः ॥**

दैवीनामापदां दैवतब्राह्मणनमस्करणात् प्रतीकारो भवतीत्याह– तासामित्यादि । श्रीमूला.

**अवृष्टिरतिवृष्टिर्वा सृष्टिर्वा याऽऽसुरी भवेत् ।**
**तस्यामाथर्वणं कर्म सिद्धारम्भाश्च सिद्धयः ॥**

वृष्ट्यभावः, अतिवृष्टिर्वा अतिमात्रवर्षणं वा, आसुरी सृष्टिर्वा मूषिकादिप्रभूतोत्पत्तिरूपा वा या आपत् भवेत् तस्यां विषये आथर्वणं कर्म अथर्ववेदोक्तं शान्तिकादि सिद्धारम्भाश्च सिद्धानां तपःसिद्धियुक्तानां महताम् आरम्भाः शान्तिकर्माणि च सिद्धयः प्रतीकाराः भवन्ति । श्रीमूला.

## चाणक्यसूत्राणि

उपायमहिमा

**[1]उपायपूर्वं न दुष्करं स्यात् ॥**
**अनुपायपूर्वं कार्यं कृतमपि नश्यति ॥**
**कार्यार्थिनामुपाय एव सहायः ॥**
**सर्वाश्च संपदः सर्वोपायेन परिग्रहेत् ॥**
**दुःसाधमपि सुसाधं करोत्युपायज्ञः ॥**

## वृद्धचाणक्यः

लक्ष्यभेदेन उपायभेदः

**[2]उत्तमं प्रणिपातेन शूरं भेदेन योजयेत् ।**
**नीचमल्पप्रदानेन समशक्तिं पराक्रमैः ॥**

## चाणक्यसारसंग्रहः

सामादीनां क्रमेण प्रयोगः

**[3]साम्ना दानेन भेदेन क्रमेण च बलेन च ।**
**सर्वथा सदा शत्रुर्घातनीयो नराधिपैः ॥**

## मनुः

आपद्विशेषानुसंधानेन समुच्चयविकल्पाभ्यां प्रयोक्तव्याः सामादयो विजयोपायाः, प्रथमत्रयासंभवे दण्डप्रयोगः

**[4]एवं विजयमानस्य येऽस्य स्युः परिपन्थिनः ।**
**तानानयेद्वशं सर्वान् सामादिभिरुपक्रमैः ॥**

---

(१) चासू. ९४–९६, ११४, ११८.

(२) वृचा. ७।७ ; चासा. २१६ नीचमल्प ( लुब्धमर्थं ) समशक्तिं ( समं तुल्य ) ; चासा. २।१८ चमल्प ( चं स्वल्प ).

(३) चासा. २१४.

(४) मस्मृ. ७।१०७ ; राक. १२६ ; रार. ६० ; राप्र. ४०४.

(१) ये परिपन्थिनः प्रतिपक्षतया वर्तन्ते ते वशमानेतव्याः, न त्वानुकूल्येन ये वर्तन्ते। तेऽपि सामादिभिः पूर्वम्, न प्रथमत एव दण्डेन। मेधा.

(२) एवं उक्तनीत्या जेतुं प्रवृत्तस्य राज्ञः ये विजयप्रतिकूलाः स्युः तान् सर्वान् साममेददानदण्डैरुपायैर्वशीकुर्यात्। * गोरा.

(३) राज्ञः सदैवारातिजयायेतिकर्तव्यतामाह— एवमिति चतुर्भिः। परिपन्थिनः शत्रवः। उपक्रमैः उप समीपं क्रम्यन्ते शत्रवो यैस्ते उपक्रमाः उपायाः, तैरिति। मच.

**[1]यदि ते तु न तिष्ठेयुरुपायैः प्रथमैस्त्रिभिः।**
**दण्डेनैव प्रसह्यैतांश्छनकैर्वशमानयेत्॥**

(१) सामादिभिरशक्याः दण्डेन वशमानेतव्याः इति यदुक्तं तदिदम्। दण्डेन प्रसह्य अभिभूय शनकैः यादृशो दण्डोपक्रमस्तेन, न साहसिकतया। मेधा.

(२) ते च परिपन्थिनः यदि आद्यैः सामदानभेदैरुपायैः वशं नाऽऽयान्ति तदा दण्डेनैव देशोपमर्दादिना हठादेव शनकैः यादृशो दण्डक्रमस्तेन वशं नयेत्। † गोरा.

(३) तत्र चतुर्थे दण्डस्य कालमाह— यदीति। सामदानभेदैः प्रथमैः प्राथमिकैः। एतान् दण्डेन वशमानयेदित्यन्वयः। तत्र चतुर्णां दण्डादीनां साम्ना साधून् वशयति, दण्डेन उग्रान्, दानेन भिन्नान् लुब्धान् वा, भेदेन संहतान्। तैरसाध्यत्वे दण्डयेदिति। तत्रापि शनैः, अन्यथा ते प्राणोद्यता न वशमेयुरिति भावः। मच.

(४) उपक्रमेषु क्रममाह— यदि ते त्विति। ते परिपन्थिनः तिष्ठेयुः। वशे इति विभक्तिविपरिणामः। प्रथमैः सामदानप्रभेदैः। अपिशब्देन दण्डस्य मुख्यत्वं सूचितम्। नन्द.

**[2]सामादीनामुपायानां चतुर्णामपि पण्डिताः।**
**सामदण्डौ प्रशंसन्ति नित्यं राष्ट्राभिवृद्धये॥**

(१) वक्ष्यमाणानां सामादीनामुपायानां सामदण्डौ निगद्येते प्रशस्यतया। सति साम्नि क्षिप्रं कम्पो न भवति। दण्डे तु सर्वसिद्धिः। मेधा.

(२) सामादीनां चतुर्णामप्युपायानां मध्यात् सामदण्डौ राष्ट्रविवृद्ध्यर्थं प्रशस्तौ नित्यं विद्वांसो मन्यन्ते, साम्नि क्षयव्ययायासानामभावात्, दण्डे च युद्धाद्यनर्थोत्पादे च (? अपि) सिद्ध्यतिशयात्। * गोरा.

(३) सामदण्डौ प्रशंसन्ति, साम्नि धनादिक्षयाभावात्, दण्डे च दैवात् जये कीर्तिः मृत्यौ स्वर्ग इति। मवि.

(४) तत्र च स्वराष्ट्रे सामदण्डौ परराष्ट्रे दानभेदौ तावेव प्रशस्ताविल्याह— सामादीनामिति। मच.

(५) शत्रुष्वेवायं क्रमः, न राष्ट्रे इत्याह— सामादीनामिति। साधुषु साम प्रयोक्तव्यम्, असाधुषु दण्डम्, तेन राष्ट्राभिवृद्धिरित्यर्थः। नन्द.

**[1]उपजप्यानुपजपेद्बुध्येतैव च तत्कृतम्।**
**युक्ते च दैवे युध्येत जयप्रेप्सुरपेतभीः॥**

(१) † तस्मिंश्च काले भूयो भूयः— उपजप्यानिति। उपजप्याः क्रुद्धारयः कुलीनाः स्वराज्याभिलाषिणः, तानुपजपेदिति हेतुः। कर्तरि कर्तव्यव्यपदेशमुपजपेदित्यर्थः।

---

* मवि., ममु., नन्द. गोरागतम्।

† मवि. ममु., भाच. गोरागतम्।

(१) मस्मृ. ७।१०८; राक. १२६ तृतीयचरणे (दण्डेनाभिप्रसह्यैनं); राप्र. ४०४ नैव प्र (नाभिप्र); नन्द. नैव प्र (नापि प्र).

* ममु. गोरावत्।

† यात्राकाले इत्यर्थः। अशुद्धोऽयं ग्रन्थः।

(१) मस्मृ. ७।१०९; मेधा. ७।१५९ तृतीयपादः; राक. १२६ राष्ट्रा (राज्या); ममु. ७।१५९ उत्त.; मच. ७।१५९ उत्त.; राप्र. २७९ राकवत्.

(२) मस्मृ. ७।१९७; राक. १२५–१२६ जप्या (रुध्या) द्बुध्ये (द्युध्ये); रार. ३८ ध्येतैव (ध्येच्चैव). दैवे (देवे): ५८; पमा. ४०२–४०३ जप्या (जाप्या) ध्येतैव च (ध्येच्चैव हि); राप्र. ४०४.

उपजपेत् ग्राहयेदित्यर्थः । उपजापः आश्रयाद्विश्लेषात्महितानुष्ठानप्रतिपादनम् । तेन च अरिणा (सु ?)कृतमप्यभिमतं दुर्गस्थेन वा किंचित्प्रारब्धं बलाटविकपार्ष्णिग्राहादिकोपनार्थं मध्यमोदासीनानामन्यतरेण सह संधानमित्यादि बुध्येत । युक्ते च दैवे विजिगीषोरनुकूलदैवे इत्यर्थः । नक्षत्रग्रहदैवसुमुहूर्तेषु साधकेषु दृष्टस्वप्नदर्शननिमित्तेषु चानुगुणेषु अनुलोमवातादिषु जयमिच्छन् निर्गतभयः दुर्गस्थानानि यथा प्रथमं योद्धुं गच्छेत् । मेधा.

(२) तदन्वयिनो राज्यार्थिनः क्रुद्धान् भृत्यांश्च उपजपार्हान् उपजपेत् । तत्कृतं च (यत् ?)तत्कृत्यं (च) यत् तज्जानीयात् । ग्रहसौम्यादिनाऽनुकूले दैवे सति विजयेप्सुरपगतभयो युध्येत । * गोरा.

(३) उपजपेत् भेदयेत् । उपजापेन आत्मसात्कृतानां तेषां चेष्टाः स्वपरपक्षपातान् जानीयादिति ।

† मच.

(४) तत्कृतं शत्रुकृतम् । उपजापमिति शेषः ।

¶ नन्द.

**[1]साम्ना दानेन भेदेन समस्तैरथवा पृथक् ।**
**विजेतुं प्रयतेतारीन्न युद्धेन कदाचन ॥**

(१) न सहसा युध्येत । एतावत्प्रथमं विशिष्टस्थापनोपदेशनं सुमुखं च मिथः सहासनकथासहदारदर्शनादि । दानविधानं द्रव्याणां हिरण्यादीनां प्रीत्युत्पादनार्थं प्रतिपादनम् । भेदः तत्कुलीनादेरुपसंग्रहः । ततो विशेषेणाच्च तत्रावित्रासनमित्याद्यकारणम् । मेधा.

(२) साम्ना प्रीत्यादरदर्शनहितकथनाद्यात्मकेन, दानेन च हिरण्यादीनाम्, भेदनेन च तत्प्रकृतीनां तदन्वयिनां च विश्लेषणेन । एवं तैर्व्यस्तैः समस्तैर्वा यथोपयोगं विजेतुमरीन् प्रयतेत, न पुनः कदाचिद्युध्येत ।

* गोरा.

(३) कदाचन सामादिसंभवे । मवि.

(४) प्रकारान्तरेणारिवश्यत्वे युद्धं न कुर्यादित्याह— साम्नेति । पृथक् प्रत्येकम् । तत्र सामादि संबध्यते । समस्तैः त्रिभिर्वा । मच.

**[2]अनित्यो विजयो यस्माद् दृश्यते युध्यमानयोः ।**
**पराजयश्च संग्रामे तस्माद्युद्धं विवर्जयेत् ॥**

(१) यस्मान्नायं नियमो दृश्यते— यो जयति सोऽत्यन्तबलवानवश्यम्, तेन यश्च पराजीयते सोऽत्यन्तं दुर्बलश्चावश्यमिति, अनित्यो विजयः । † मेधा.

(२) यस्मात् युध्यमानयोर्बहुलबलत्वाद्यल्पबलत्वाद्यनपेक्षमेव अनियमेन जयपराजयौ दृश्येते तस्मात् सत्युपायान्तरे युद्धं परिहरेत् । $ ममु.

(३) न युद्धेनेति (यदुक्तं) तत्र हेतुः— अनित्य इति, पराजयोऽपीति । ‡ मच.

(४) विजयः अनित्यः, पराजयोऽपि संग्रामेऽनित्यः । भाच.

**[3]त्रयाणामप्युपायानां पूर्वोक्तानामसंभवे ।**
**तथा युध्येत संपन्नो विजयेत रिपून् यथा ॥**

---

* मवि. ममु. भाच. गोरागतम् ।

† शेषं गोरागतम् । राप्र. मचगतम् ।

¶ शेषं गोरागतम् ।

(१) मस्मृ. ७।१९८ ; गोरा. युद्धेन ( युध्येत ) ; राक. १२९ दानेन भेदेन ( भेदेन दानेन ) रथवा (रुत वा); रार. ५८ ; पमा. ४०३ ; राप्र. ४०४ राकवत्.

* ममु. गोरावत् । नन्द. गोरागतम् ।

† मवि. मेधागतम् ।

$ गोराव्याख्यानमशुद्धिसंदेहान्नोद्धृतम् । तच्च ममुगतम् ।

‡ नन्द. मचगतम् ।

(१) मस्मृ. ७।१९९ ; राक. १२९ ; रार. ५८ ; पमा. ४०३ ; मच. जयश्च ( जयोऽपि ) ; राप्र. ४०४ ; भाच. मचवत्पाठसंभवः .

(२) मस्मृ. ७।२०० ; गोरा. संपन्नो ( संयत्तो ) ; राक. १२९–१३० नामसंभवे ( नां परिक्षये ) यथा ( तथा ) ; पमा. ४०३ संपन्नो ( संयत्तो ) रिपून् ( रिपुं ) ; मच. नामसंभवे ( नां परिक्षये ) ; राप्र. ४०४ मचवत् ; भाच. संपन्नो ( संयत्तो ) शेषं मचवत् .

( १ ) सामादीनामसाधकः( ? मसंभवः ) तदा संदिग्धेऽपि जये, ( समानेऽपि, किं पुना रूपेण सह ? ) तेन प्रकारेण युद्ध्येत येन प्रकारेणाऽऽत्मनो जयः स्यात्। जये राज्यं वधेऽपि स्वर्ग इत्युभयथाऽपि जयः । परप्रत्यूहकल्पना कूटयुद्धादिप्रकारः अत्यन्तोच्छेदानुसरणपीडनाभ्यां सहसा निष्कार्यः । तथा च व्यास आह— 'पुनरावर्तमानानां निराशानां च जीविनाम् । न शक्येद( ? ता)-ग्रतः स्थातुं शक्रेणापि धनंजय ॥' । यदा संदिग्धं पराजयं तदा( ? यदाऽसंदिग्धः पराजयस्तदा )ऽपक्रमणं युक्तम् । निर्गतो हि जीवो न कार्यमासादयति येन भद्राणि पश्यति, स्वर्गमर्जयति मृत इति । मेधा.

( २ ) सामादीनां पूर्वोक्तानामुपायानामसाधकत्वे सति जयपराजयसंदेहे तथा सावधानो युद्ध्येत यथा शत्रून् विजयेत । यदि नो जयेत् तदा स्वर्गः । निःसंदिग्धे पुनः पराजये निष्पतनं साधीयः । यथा वक्ष्यति— 'आत्मानं सर्वतो रक्षेत्' ( मस्मृ. ७।२१३ ) इति ।

* गोरा.

( ३ ) यथा येन प्रकारेण वञ्चनादिनाऽपि विजयते । मवि.

( ४ ) उपसंहरति— त्रयाणामपीति । नन्द.

**'सह सर्वाः समुत्पन्नाः प्रसमीक्ष्याऽऽपदो भृशम् ।**
**संयुक्तांश्च वियुक्तांश्च सर्वोपायान् सृजेद्बुधः ॥**

( १ ) आपदः दैवमानुषाणि व्यसनानि । तानि प्रकृतिविभ्रयाणि युगपदुपजातानि, अत्यर्थमपि यथा स्युस्तथा । संयुक्तांश्च सामपुरःसरं दानम्, सामपूर्वकं भेदम्, साम दानभेदसहितम्, (वियुक्तांश्च) दण्डमेव वा दानमेव वेत्यादिकान् सर्वोपायान् विसृजेद्बुध इति । यत्र यत् प्राप्तं तत् समीक्ष्य विचार्य प्रयुञ्जीतेत्यर्थः, न तु विषण्ण आसीत । † मेधा.

( २ ) प्रकृतिकोपकोशक्षयमित्रव्यसनादिकाः युगपत् सर्वा आपदः अत्यर्थमुत्पन्नाः ज्ञात्वा न मोहमुपेयात्, अपि तु व्यस्तान् समस्तान् वा सामादीनुपायान् सर्वान् वा प्राज्ञः प्रयुञ्जीत सर्वथा । * गोरा.

( ३ ) संयुक्तान् समुदितान् । वियुक्तान् पृथक्पृथग्भूतान् । नयेत् प्रयोजयेत् । राप्र. ४१३

**'उपेतारमुपेयं च सर्वोपायांश्च कृत्स्नशः ।**
**एतत्त्रयं समाश्रित्य प्रयतेतार्थसिद्धये ॥**

( १ ) कथमित्यपेक्षायामाह— उपेतारमिति । 'साधयेत्कार्यमात्मनः' इति पाठान्तरम् । तत्र उपेतारम् आत्मानं प्राप्य कार्यं मित्रवत्साधयेत् । सर्वोपायाः समस्ता व्यस्ता एव । अयमपि ( ? उपेयमिति ) उपेयसामान्यनिर्देशमाह । समाश्रित्य अङ्गीकृत्य । समर्थचिन्तनेनैतत्समावृतं ( ? माश्रितं ) भवति । किमर्थमुपायाः समर्थेनानुमताः समर्थस्तथा किं युक्तमिति विचार्येयता केनोपायेन एषामिदं प्राप्नुयादिति । कृत्स्नश इति त्रयविशेषणम् । कृत्स्नमित्यर्थः । एवं च यो यदुपायसाध्यो यदा यथा युक्तस्तत्र तदा तथा प्रयुञ्जीत स्वकार्यसिद्ध्यर्थमुपायम् । एतासामवस्थानां चाऽऽनन्त्यात्सर्वं तन्त्रेणाशक्यं वक्तुमिति समासेनोक्तम्, अतः परीक्षामुपाचरेत् । उपेत्य विशेषभावतोऽप्याह— 'स तु युक्तो हि संधत्ते युक्त आत्मपराक्रमः । तावुभौ नयसंपन्नौ स्तेनोऽप्ययसमन्वितः ॥' इति । मेधा.

( २ ) उपेता आत्मा, उपेयं च प्राप्तव्यम्, सर्वे च सामादयः उपायाः, ते च परिपूर्णा इत्येतत्त्रयम् । सामर्थ्ये सति आत्मसिद्ध्यर्थं यतेतेत्युपसंहारः ।

§ गोरा.

---

* ममु., मच., भाच., गोरागतम् ।

† मवि. मेधागतम् ।

( १ ) मस्मृ. ७।२१४ ; राक. १४३ न्सृजे ( न्जये ); राप्र. ४१३ न्सृजे ( न्नये ).

* ममु., मच., नन्द., भाच., गोरागतम् ।

§ ममु. गोरावत् ।

( १ ) मस्मृ. ७।२१५ ; मेधा. चतुर्थचरणे 'साधयेत्कार्यमात्मनः' इत्यपि पाठः ; गोरा. तार्थ ( ताऽऽत्म ) ; राक. १४३ गोरावत् ; पमा. ४११ ; राप्र. ३१९, ४१३ गोरावत् ; नीम. ३९ गोरावत् .

(३) उपेतारं आत्मानमुपायस्रष्टारम् । उपेयम् उपायसाध्यम् । समाश्रित्य मनसा बलाबलादिद्वारा निश्चित्य । * मवि.

(४) उपेतारम् आत्मानम्, उपेयं प्राप्तव्यम्, सर्वोपायांश्च समाश्रित्य किं त्याज्यं किं नेति विचार्य आत्मसिद्धये आत्मरक्षार्थं प्रयतेत । उपेता चेज्जीवति सर्वं भविष्यतीति भावः । मच.

(५) एवं प्रतिपादितां नीतिं विजिगीषां संक्षिप्य निगमयति— उपेतारमिति । उपेतारम् अमात्यादिकं वर्गम् । उपेयं भूम्यादिकम् । सर्वशब्देन मायोपेक्षेन्द्रजालानां ग्रहणम् । कृत्स्नशः समाश्रित्य न्यूनमधिकं च । नन्द.

## याज्ञवल्क्यः

उपायाश्चत्वारः, सामाद्यसंभवे दण्डः

‡[1]क्रमशो मण्डलं चिन्त्यं सामादिभिरुपक्रमैः ॥
[2]उपायाः साम दानं च भेदो दण्डस्तथैव च ।
सम्यक्प्रयुक्ताः सिध्येयुर्दण्डस्त्वगतिका गतिः ॥

(१) कस्मात् पुनर्यथार्हं सामादियोजना ? यस्मात्— उपाया इति । उपायत्वादेव च— साम वाचिकं कायिकं च । दानं दीयमानस्याकोपेन ग्रहणम्, स्वकीयस्य च दानम् । भेदः संहतयोरुपजाप्यविश्लेषणम् । दण्डः हठात् प्रसाधनम् । तेऽमी व्यस्ताः समस्ताश्च यथार्हं योज्याः । आद्योपायत्रयक्षये दण्डः । तत्र अरिस्त्रिविधः सहजः कृत्रिमो भूम्यनन्तरश्च । अनन्तरो दण्डसाध्य एव । तथा मित्रं सहजकृत्रिमानन्तरपरत्वेन । अनन्तरपरः सामोपप्रदानगोचरः । सामैव उदासीनेषु । अरिपक्ष्याः सर्वदा भेद्या एव । इत्येवमादिप्रकारो बहुधा प्रयोगानुसारात् द्रव्यशुद्धिवत् 'देशं कालं तथाऽऽत्मानम्' इत्यवेक्ष्य सामादिप्रयुक्तिनियमः । * विश्व.

(२) 'सामादिभिरुपक्रमैः' इत्युक्तम्, इदानीं तानुपायानाह— उपाया इति । साम प्रियभाषणम् । दानं सुवर्णादेः । भेदः भेदकरणं तत्सामन्तादीनां परस्परतो वैरस्योत्पादनेन । दण्डः उपांशुप्रकाशाभ्यां धनापहारादिवधपर्यन्तः अपकारः । एते सामादयः परिपन्थ्यादिसाधनोपायाः । एते च देशकालाद्यनुसारेण सम्यक्प्रयुक्ताः सिध्येयुः । तेषां च मध्ये दण्डस्त्वगतिका गतिः, उपायान्तरसंभवे सति न प्रयोक्तव्यः । एतच्च पीडनीयकर्शनीयाभिप्रायेण । यातव्योच्छेत्तव्ययोस्तु दण्ड एव मुख्यः । एते सामादयो न केवलं राज्यव्यवहारविषयाः, अपि तु सकललोकव्यवहारविषयाः । यथा— 'अधीष्व पुत्रकाधीष्व दास्यामि तव मोदकान् । यद्वाऽन्यस्मै प्रदास्यामि कर्णमुत्पाटयामि ते ॥' । § मिता.

(३) उक्तानामरिप्रभृतीनां वशीकारोपायाः सामादयश्चत्वारो वेदितव्याः । ते सम्यक् यथावत् प्रयुक्ताः सिध्येयुः कार्यसिद्धिसमर्थाः स्युरित्यर्थः । एषां दण्डो गत्यन्तराभावे गतिः । उपायान्तराभावे दण्डोऽभ्युपाय इत्यर्थः । तस्य धनव्ययशरीरायाससाध्यत्वात् । साम प्रियभाषणम् । दानं प्रसिद्धम् । भेदः स्वामिभृत्यानां विमतीकरणम् । दण्डः वित्तस्य शरीरस्य वा पीडनम् । अप.

(४) सामादीन् कथयन्नेव मन्त्रस्य फलमाह— उपाया इति । सामादय उपायाः सम्यक् मन्त्रानुसारेण प्रयुक्ताः आचरिताः सिध्येयुः स्वफलपर्याप्ता भवन्ति । परंतु दण्डस्तेषां मध्ये अगतिका गत्यन्तरासत्त्वनिबन्धना गतिः उपायः । दण्डः राज्याक्रमणवधादिरूपः । चकारादिभिश्चतुर्भिरव्ययैश्चतुर्णामुपायानां यथासंभवं परस्परं

---

* राप्र., भाच. मविगतम् ।

‡ व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च 'राजमण्डलविचारः' इत्यस्मिन् प्रकरणे (पृ. १८५६) द्रष्टव्यः ।

(१) यास्मृ. १।३४५.

(२) यास्मृ. १।३४६ ; विश्व. १।३४२ ; मिता. ; अप. १।३४४–३४५ ; राक. १२६ ; रार. ५७ ; वीमि. ; राप्र. २७८–२७९ ; नीम. ४६.

* दीक. विश्वगतम् ।

§ रार., नीम. मितागतम् ।

नैरपेक्ष्येण क्वचित्, क्वचिच्च परस्परसापेक्षतया फलनिष्पादकत्वमुक्तम्। * वीमि.

## नारदः

उपायाश्चत्वारः

[1]राजा त्ववहितः सर्वानाश्रमान् परिपालयेत्।
उपायैः शास्त्रविहितैश्चतुर्भिः प्रकृतैस्तथा ॥

चतुर्भिः सामादिभिः। गतार्थः शेषः।

नाभा.

## बार्हस्पत्यसूत्रम्

उपायप्रकाराः

[2]अन्याभियोधी सामदानभेदमायोपेक्षादिभिः ॥

पात्रभेदेनोपायभेदप्रयोगः समुच्चयविकल्पाभ्याम्, सप्तोपायाः

बहिरन्तर्दण्डदानावनुजीविषु ॥
सामभेददानानि मन्त्रिषु ॥
सामभेददानार्थमायपिण्डानि ज्ञातिषु ॥
अतिभेदयेन्नातिसामं नातिदानं न च स्त्रीषु दण्डो न च मायोपेक्षा न कर्तव्या ॥
[3]चत्वार उपायाः ॥
त्रयश्च ॥
मायोपेक्षा वधश्च ॥
सूरिषु साम ॥
शङ्कितेषु सामभेदौ ॥
लुब्धेषु सामदानभेदाः ॥
कष्टेषु सामभेददानमायोपेक्षावधाः ॥
साम पूर्वं प्रयोक्तव्यम् ॥
मनसोऽभिप्रायं वाचः प्रीतिकर्म च ॥

* शेषं मितागतम्।

(१) नासं. १९।५.

(२) बासू. १।३१,४६–४८,५२.

(३) बासू. ५।१–९.

## बृहत्पराशरः

उपायचतुष्टये युद्धमधम उपायः

[1]न युद्धमाश्रयेत् प्राज्ञो न कुर्यात् स्वबलक्षयम्।
साम्ना भेदेन दानेन त्रिभिरेव वशं नयेत् ॥
वदन्ति सर्वे नीतिज्ञा दण्डस्यागतिका गतिः।
तद्वर्जं वशमायाति यथा शत्रुस्तथा चरेत् ॥
आक्रान्ता दर्भसूच्योऽपि भिन्द्युर्मृद्योऽपि भूतलम्।
नातो यतेत युद्धाय युद्धसिद्धिरसिद्धिवत् ॥

## आश्वलायनः

लक्ष्यभेदेन उपायभेदः

[2]शत्रून्मित्रानुदासीनान्त्रीनुपायचतुष्टयैः।
वशे कुर्याद्विदित्वैतान्देशान्कालांश्च तत्त्वतः ॥
[3]साम्ना समानरीन् भेदैर्बलिष्ठं दुर्बलाँस्तथा।
विग्रहेणाथवा दानैः प्रबलांस्तु वशं नयेत् ॥

## मत्स्यपुराणम्

उपायाः सप्त

मनुरुवाच—
[4]उपायांस्त्वं समाचक्ष्व सामपूर्वान् महाद्युते।
लक्षणं च तथा तेषां प्रयोगं च सुरोत्तम ॥

मत्स्य उवाच—
[5]साम भेदस्तथा दानं दण्डश्च मनुजेश्वर।
उपेक्षा च तथा माया इन्द्रजालं च पार्थिव ॥

(१) बृपसं. १२।४०–४२.

(२) आश्वस्मृ. ८।४४–४५.

(३) आश्वस्मृ. ८।४६–४७.

(४) मत्स्य. २२२।१; विध. २।६७।१ च सुरोत्तम (वरुणात्मज); राप्र. २७९.

(५) मत्स्य. २२२।२; विध. २।६७।२ पूर्वार्धे (सामभेदौ तथा राम [?] दण्डं च मनुजोत्तम।) पार्थिव (भार्गव); राक. १२६–१२७ मनुजेश्वर (मनुजोत्तम); राप्र. २७९.

[1]प्रयोगाः कथिताः सप्त तन्मे निगदतः शृणु ॥

## हरिवंशः

उपायाः सिद्धिकारणम्

[2]उपायतः समारब्धाः सर्वे सिध्यन्त्युपक्रमाः ॥

## गरुडपुराणम्

पात्रभेदेनोपायभेदप्रयोगः

[3]लुब्धमर्थप्रदानेन श्लाघ्यमञ्जलिकर्मणा ।
मूर्खं छन्दानुरोधेन याथातथ्येन पण्डितम् ॥
सद्भावेन हि तुष्यन्ति देवाः सत्पुरुषा द्विजाः ।
इतरे खाद्यपानेन मानदानेन पण्डिताः ॥
उत्तमं प्रणिपातेन शठं भेदेन योजयेत् ।
नीचं स्वल्पप्रदानेन समं तुल्यपराक्रमैः ॥

## अग्निपुराणम्

उपायाः सिद्धिकारणम्, सप्तोपायाः, पात्रभेदेनोपायभेदप्रयोगः समासव्यासाभ्याम्

[4]सामादिभिरुपायैस्तु सर्वे सिध्यन्त्युपक्रमाः ।
साम चोपप्रदानं च भेददण्डौ तथाऽपरौ ॥
मायोपेक्षेन्द्रजालं च उपायाः सप्त तान् शृणु ॥
[5]साम दानं च भेदश्च दण्डोपेक्षेन्द्रजालकम् ।
मायोपायाः सप्त परे निक्षिपेत् साधनाय तान् ॥
मैत्रीप्रधानं कल्याणबुद्धिं सान्त्वेन साधयेत् ॥
लुब्धं क्षीणं च दानेन मित्रानन्योन्यशङ्कया ।
दण्डस्य दर्शनाद्दुष्टान् पुत्रभ्रात्रादि सामतः ॥
दानभेदैश्चमूमुख्यान् योधाञ्जनपदादिकान् ।
सामन्ताटविकान् भेददण्डाभ्यामपराद्धकान् ॥

(१) मत्स्य. २२२।३ ; विध. २।६७।३ ; राक. १२७ तन्मे (तान् मे) ; राप्र. २७९.
(२) हरि. १।५।५३.
(३) गरुड. १।१०९।१०–१२.
(४) अग्नि. २२६।५–६.
(५) अग्नि. २४१।४६, ६०–६२.

## कालिकापुराणम्

उपायप्रयोगविवेकः

[1]साम दानं च भेदश्च दण्डश्चेति चतुष्टयम् ॥
ज्ञात्वोपायांस्तु तत्काले तदुपायान् प्रयोजयेत् ॥
साम्नस्तु विषये भेदो मध्यमः परिकीर्तितः ॥
दानस्य विषये साम योग्यमेवोपलक्ष्यते ।
दानस्य विषये दण्डो ह्यधमः परिकीर्तितः ॥
दण्डस्य विषये दानं तदप्यधममुच्यते ।
साम्नस्तु गोचरे दण्डो ह्यधमादधमः स्मृतः ॥
सौजन्यं सततं ज्ञेयं भूभृतो भेददण्डयोः ।
साम्नो दानस्य च तथा सौजन्यं याति गोचरे ॥

## कामन्दकीयनीतिसारः

युक्त्या उपायप्रयोगः सिद्धिदः

*[2]पश्यद्भिर्दूरतोऽपायान् सूपायप्रतिपत्तिभिः ।
भवन्तीह फलायैव विद्वद्भिर्मन्त्रिताः क्रियाः ॥
उपायपूर्वं लिप्सेत कालं वीक्ष्य समुत्पतेत् ।
पश्चात्तापाय भवति विक्रमैकरसज्ञता ॥
[3]सहसोत्पत्य दुष्टेभ्यो दुष्करं संपदार्जनम् ।
उपायेन पदं मूर्ध्नि न्यस्यते मत्तहस्तिनः ॥
न किंचित् क्वचिदस्तीह वस्त्वसाध्यं विपश्चिताम् ।
अयोऽभेद्यमुपायेन द्रवतामुपनीयते ॥
वाह्यमानमयःपिण्डं महच्चापि न कृन्तति ।
तदल्पमपि धारावत् भवतीप्सितसिद्धये ॥
लोकप्रसिद्धमेवैतद्वारि वह्नेर्नियामकम् ।
उपायोपगृहीतेन तत्तेनैव विशोष्यते ॥

* एतदादिश्लोकषट्कस्य व्याख्यासंग्रहः शेषस्थलादिनिर्देशश्च 'मन्त्रः' इत्यस्मिन्प्रकरणे (पृ. १७८५, १७८९) द्रष्टव्यः ।

(१) कालिका. ८७।३३–३७.
(२) कानी. १२।९–१०.
(३) कानी. १२।२६–२९.

[1]महाप्रज्ञानसंपन्नः सत्त्वदैवोपबृंहितः ।
उद्योगाध्यवसायाभ्यामुपायान् निक्षिपेत् परे ॥

(१) एवं शुभाशुभनिमित्तदर्शनाल्लब्धोत्साहः शत्रौ विजिगीषुरुपायान् प्रयुञ्जीत, शत्रुजयस्योपायसाध्यत्वादित्युपायविकल्प उच्यतेऽस्मिन् सर्गे । यदाह— महाप्रज्ञानसंपन्न इत्यादि । महती अष्टाङ्गा प्रज्ञा यस्य सः महाप्रज्ञानः, संपन्नश्च सहायैः । यदा सहायसंपदादयः षट् सिद्धिहेतवो गुणाः स्युस्तदा शत्रौ निक्षिपेदुपायान् । जम.

(२) वैरिपुराभ्यासे स्कन्धावारनिवेशं कृत्वा सहसा न युध्येत, किंतु पापप्रयोगपूर्वकं मन्त्रयुद्धारम्भः कर्तव्य इति दर्शयन्नाह— महेति । महाप्रज्ञानसंपन्नः । महाप्रज्ञानं गुणाष्टकयुक्ता प्रज्ञा । गुणाष्टकं तु शुश्रूषाश्रवणग्रहणधारणविज्ञानोहापोहतत्त्वाभिनिवेशरूपम्, तेन संपन्नः युक्तः । सत्त्वदैवे कृतलक्षणे । ताभ्यामुपबृंहितः वर्धितः । उद्योगाध्यवसायाभ्याम् उक्तस्वरूपाभ्यां कारणभूताभ्याम् उपायान् सामदानविग्रहभेदादीन् निक्षिपेत् प्रयुञ्ज्यात् परे यातव्ये । उनिसा.

उपायाः सप्त

[2]साम दानं च भेदश्च दण्डश्चेति चतुष्टयम् ।
मायोपेक्षेन्द्रजालं च सप्तोपायाः प्रकीर्तिताः ॥

(१) के पुनरुपाया इत्याह— सामेत्यादि । तत्र सामादिचतुष्टयं सर्वेषामेवाऽऽचार्याणामभीष्टमिति पृथक् निर्दिष्टम् । मायादिभिः सह सप्तोपायाः प्रकीर्तिताः कैश्चित् । जम.

(२) उपायानभिधातुमाह— सामेति । सुगमः श्लोकार्थः । उनिसा.

पात्रभेदेनोपायभेदप्रयोगः

[3]अलसं विक्रमश्रान्तं विहतोपायचेष्टितम् ।
क्षयव्ययप्रवासैश्च श्रमेण विपरिद्रुतम् ॥

[1]भीरुं मूर्खं स्त्रियं बालं धार्मिकं दुर्जनं पशुम् ।
मैत्रीप्रधानं कल्याणबुद्धिं सान्त्वेन साधयेत् ॥

(१) सामादीनां विषयभेदेनैकद्वित्रिचतुर्योगात् तद्भेदानष्टादशभिः श्लोकैराह— अलसमित्यादि । विक्रमेण श्रान्तं खिन्नम् । विहतोपायचेष्टितं निष्फलसामादिप्रयोगम् । क्षयव्ययौ उक्तलक्षणौ । विपरिद्रुतं विक्षिप्तसैन्यम् । मूर्खं अशास्त्रचक्षुष्कम् । बालं अप्राप्तव्यवहारम् । दुर्जनं अयुक्तकारिणम् । पशुं लोकव्यवहारबाह्यम् । मैत्रीप्रधानं सख्यैकनिष्ठम् । कल्याणबुद्धिं अविसंवादकम् । जम.

(२) इदानीं विषयविभागेनोपायानां प्रयोगमभिधातुं सामप्रयोगविषयानेव तावदाह— अलसमिति । अलसं निरुत्साहम् । विक्रमे युद्धादौ श्रान्तं निर्विण्णम् । 'शान्तम्' इति पाठे निर्व्यापारमित्यर्थः । विहितोपायचेष्टितम्— विहिताः उपायाः सामादयः, चेष्टितं शरीरव्यापारः येन तम् । क्षयव्ययप्रवासैः— क्षयः सैन्यादिविनाशः, व्ययः अर्थनाशः, प्रवासः युद्धार्थं चिरप्रोषितम्, एतैः संतप्तं प्राप्तविरागम् । परिविद्रुतं संग्रामं त्यक्त्वा पलायितम् । भीतं प्रतापादेव त्रस्तम् । मूर्खं अविज्ञातनीतिशास्त्रम् । धार्मिकं प्राणिहिंसाभीतम् । दुर्जनं दोषयुक्तम् । पशुं पशुकल्पम् । मैत्रीप्रधानं स्वभावत एव हृतवैरम् । कल्याणबुद्धिं सर्वत्राहितबुद्धिरहितम् । एतान् सान्त्वेन कृतलक्षणेन सामविशेषेण साधयेत् प्रशमं नयेत् । विनोपक्षयं सुखसाध्यत्वात्तेषामिति भावः । 'क्षयव्ययप्रसारैः' इति मुद्रितपुस्तकपाठात् 'क्षयव्ययप्रवासैः' इति हस्तलिखितपाठः समीचीनः । उनिसा.

[2]लुब्धं क्षीणं च दानेन सत्कृत्य वशमानयेत् ।
अन्योन्यशङ्कयाऽभिन्नान् दुष्टान् वै दण्डदर्शनात् ॥

---

(१) कानी. १८।१.

(२) कानी. १८।३.

(३) कानी. १८।४५ ; उनिसा. क्रम (क्रमे) हतो (हितो) श्रमेण विपरि (संतप्तं परिवि).

(१) कानी. १८।४६ ; उनिसा. भीरुं (भीतं).

(२) कानी. १८।४७ ; उनिसा. याऽभि (योद्धि) वै दण्डदर्शनात् (दण्डस्य कारणात्).

(१) ननु च परिक्षीणः लुब्धवर्गे पठितः । सत्यम् । लोभातिशयख्यापनार्थं पृथङ्निर्दिष्टः स इति । अन्योन्यशङ्कयाऽभिन्नानिति । परस्परशङ्काजननेन अभिन्नान् संहतान् वशमानयेदिति संबन्धः । दुष्टान् दण्डस्य दर्शनात् । विकृतान् दण्डेन वशमानयेत् । एते एकयोगाश्चत्वारः । जम.

(२) दानोपायसाध्यानभिधातुमाह– लुब्धमिति । लुब्धम् अर्थगृध्नुम्, क्षीणं हीनकोषम्, अन्योन्यशङ्कयोद्विग्नान् परस्परशङ्कया उद्विग्नान्, दण्डस्य कारणात् स्वपक्षे विपक्षे च अनुचितदण्डकारणात् दुष्टान् जातवैरान् दानेन अर्थदानेन वशं स्वायत्तताम् आनयेत् । उनिसा.

**'पुत्रान् भ्रातॄंश्च बन्धूंश्च साम्नाऽर्थेन च साधयेत् ।**
**एतैः कः सदृशो लोके दूरं विप्रकृतैरपि ॥**

(१) साम्नाऽर्थेन चेति । पुत्रादीनां मानित्वात् भोगादिकाङ्क्षित्वाच्च सामदानाभ्यां साधनम्, न तु दण्डेनेत्याह– एतैरित्यादि । अनेन ' कर्कटकसधर्माणो हि राजपुत्रा जनकं भक्षयन्ति । तेषामजातस्नेहे पितर्युपांशुदण्डः श्रेयानिति भरद्वाजः । ' (कौ. १।१७) इत्येतन्निवर्तयति । विप्रकृतैरपि राजापथ्यकारिभिरपि । जम.

(२) सामदानोभयसाध्यानाह– पुत्रेति । पुत्रान्, भ्रातॄन्, बन्धूंश्च । साम्नाऽर्थेन च । साम्ना कृतलक्षणेन । अर्थेन धनेन, दानेनेति यावत् । एतैः पुत्रादिभिः सदृशः तुल्यः कः को रिपुः लोके जगति ? वर्तते इति शेषः । न कोऽपीति भावः । अपिः संभावनायाम् । पुत्रादिः केनचित् कारणेन जातवैरः चेत् तदा अवश्यंभावी पराजय इति भावः । ' साम्नाऽर्थेन च ' इत्यत्र ' सामर्थ्येन च ' इति मुद्रितपुस्तकपाठो न समीचीनः । उनिसा.

**'सामैतेषु प्रयुञ्जीत दैवात्प्रस्खलितेष्वपि ।**
**दुष्करां यान्ति विकृतिमार्याः शीलनिबन्धनाः ॥**

(१) कानी. १८।४८.

(२) कानी. १८।४९ ; उनिसा. चतुर्थचरणे ( स्पर्धाशीलनिबन्धनात् ).

(१) तस्मात् सामदानाभ्यामेव साधयेदित्याह– सामैतेष्विति । दानसहितमिति शेषः । दैवात् अनयलक्षणात् प्रस्खलितेषु । अपिशब्दात् मानुषतोऽप्यनयात् । विकृतिं पुत्रादिषु नृशंसताम् । जम.

(२) दैवात् अकस्मात् प्रस्खलितेषु प्राप्तविकारेषु एतेषु पुत्रादिषु अपि निश्चितं साम उक्तलक्षणं प्रियवचनं प्रयुञ्जीत । अन्यथा एते स्पर्धाशीलनिबन्धनात् स्पर्धास्वभावकारणात् दुष्करां दुरपनेयां विकृतिं वैरूप्यं यान्ति प्राप्नुवन्ति । ' दुष्करम् ' इत्यत्र ' दुष्कराम् ', 'विकृति' इत्यत्र च ' विकृतिम् ' इत्येव पाठः समीचीनः । उनिसा.

**'कुलं शीलं दया दानं धर्मः सत्यं कृतज्ञता ।**
**अलोभ इति येष्वेते तानार्यान् परिचक्षते ॥**

(१) कुलादयो गुणा व्याख्यातप्रायाः । जम.

(२) नीतिशिक्षोपयोगिन आचार्यस्य लक्षणमाह– कुलमिति । कुलं सद्वंशः, शीलं सत्स्वभावः, दया निरुपधिपरदुःखप्रहरणेच्छा, दानं वदान्यता, धर्मः पुण्यकर्मानुष्ठानम्, सत्यम् ऋतवाक्यम्, कृतज्ञता उपकाराङ्गीकारः, अद्रोहः अनिष्टचिन्ताराहित्यम्, इत्येतत् सर्वं येषु पुरुषेषु, वर्तते इति शेषः । तान् आचार्यान् उपदेशगुरून् प्रचक्षते वदन्ति । उनिसा.

**'पौरान् जानपदांश्चैव दण्डमुख्यांश्च दण्डवित् ।**
**साधयेद्दानभेदाभ्यां यथायोगेन चापरान् ॥**

(१) पौराः दुर्गनिवासिनः । दण्डमुख्याः सेनानायकादयः । तान् साधयेत् दानभेदाभ्याम् । अन्यथा हि ते लोभात् परोपजापं लिप्सन्ते । संहताश्च अवश्या भवन्ति । दण्डमुख्याश्च दण्डमुपहन्युरिति दण्डविद्ग्रहणम् । जम.

(१) कानी. १८।५० ; उनिसा. उत्तरार्धे ( अद्रोह इति येष्वेतदाचार्यास्तान् प्रचक्षते ॥ ).

(२) कानी. १८।५१ ; उनिसा. पौरान्जा ( पौरजा) ख्यांश्च ( ख्यश्च ) चतुर्थचरणे ( दानभेदविचक्षणः ).

( २ ) दानभेदोभयसाध्यानभिधातुमाह— पौरेति । दण्डमुख्यः दण्डप्रधानः दानभेदविचक्षणः दानभेदप्रयोगनिपुणः दण्डवित् दण्डविधानज्ञः पौरजानपदांश्च पौरान् पुरवासिनः जानपदान् जनपदवासिनश्च दानभेदाभ्यां साधयेत् वशमानयेत् । उनिसा.

**'अवरुद्धांस्तत्कुलीनान् सामन्तांश्च विचक्षणः ।**
**साधयेद्भेददण्डाभ्यां यथायोगेन चापरान् ॥**

( १ ) अवरुद्धाः निर्वासिताः । तत्कुलीनाः पुत्रभ्रातृव्यतिरेकेण । सामन्ताः अबलवन्तो राजानः । तान् साधयेत् भेददण्डाभ्याम् । अन्यथा हि ते संहता दण्डेन चानुपतप्ताः पुनरपकुर्वन्ति । एते द्वियोगास्त्रय उक्ताः । यथायोगेन चापरानिति । यो यस्य योगः असौ यथायोगः, तेनान्यान् साधयेत् । अलसं संहतबलं सामभेदाभ्याम्, लुब्धं दुष्टं दानदण्डाभ्याम्, अलसं दुष्टं सामदण्डाभ्यामिति अपरे द्वियोगादयः पूर्वैश्च त्रिभिः षड् भवन्ति । अलसं लुब्धं संहतबलं सामदानभेदैः, लुब्धं संहतबलं दुष्टं दानभेददण्डैः, संहतबलं दुष्टमलसं भेददण्डसामभिः, दुष्टमलसं लुब्धं दण्डसामदानैरिति त्रियोगाश्चत्वारः । अलसं लुब्धं संहतबलं दुष्टं सामदानभेददण्डैरिति चतुर्योग एकः । एवं समुदायेन पञ्चदश योगाः । उक्तं हि 'तेषामेकयोगाश्चत्वारः, द्वियोगाश्च षट्, त्रियोगाश्चत्वारः, एकश्चतुर्योग इति पञ्चदशयोगा अनुलोमास्तावन्तः प्रतिलोमाः' ( कौ. ९।७ ) । जम.

( २ ) सुस्निग्धान् कोमलान्तःकरणान् अपराद्धान् कृतापराधान् स्नेहोक्त्या स्नेहवचनेन मानदानतः संमानपूर्वकार्थदानतः साधयेत् वशमानयेत् । अपरान् स्निग्धेतरान् यथायोगेन यत्र यः फलिष्यति तत्र तादृशोपायावलम्बनेन भेददण्डाभ्याम् साधयेत् । उनिसा.

**'इत्युपायाः समाख्याता नाना नानार्थसाधकाः ।**
**साम तेषु हि कालज्ञो यथाकालं प्रयोजयेत् ॥**

**सामभेदौ तु कर्तव्यौ दानमानपुरःसरौ ।**
**दानेन हि समायुक्तावेतावप्यर्थसिद्धये ॥**

( १ ) नाना भिन्नस्वरूपाः । नानार्थसाधका इति । ततोऽलसादीनां साधकं साम, लुब्धस्य दानम्, संहतबलस्य भेदः, दुष्टस्य दण्ड इति । एतेषु च सामदानयोरधिको व्यापार इत्याह— सामेत्यादि । यथाकालमिति दानकाले साम प्रयोजयेत्, दानमपि सामकाले भेदकाले च । यदाह— दानमानपुरःसराविति । जम.

( २ ) उपसंहरन्नाह— इतीति । अर्थः सुगमः । दानातिरिक्तोपायप्रयोगस्य दानपूर्वकत्वेनैव साफल्यं दानापूर्वकत्वेन वैफल्यं चाऽऽह— सामभेदावित्यादिश्लोकद्वयेन । अर्थः प्रतीतः । उनिसा.

**दानरिक्तेन सर्वत्र साम्ना कृत्यं तृणेन वा ।**
**निर्दानं साम नाऽऽयाति कलत्रेष्वपि संस्थितिम् ॥**

कृत्यं प्रयोजनम् । तृणेन वा । वाशब्दश्चार्थे इवार्थे वा । तत्साध्यं तृणेनेव करणीयम्, दानरिक्तस्य साम्नो लघुत्वात् । जम.

**'इति ह्युपायान् निपुणं नयज्ञो**
**विनिक्षिपेच्छत्रुबले निजे च ।**
**निरभ्युपायो नियतं प्रपातं**
**विचेष्टमानोऽन्ध इवाभ्युपैति ॥**

( १ ) प्रकरणार्थमुपसंहरति श्लोकद्वयेन । नयज्ञः उपायप्रयोगज्ञः । निजे आत्मीये बले । प्रपातं विनाशम् । जम.

( २ ) उपायानवलम्बने दोषमाह— इत्येति । नयज्ञः नीतिज्ञः शत्रुबले यातव्यबले निजबले वा स्वकीयबले च इत्याद्युपायान् प्रागुक्तान् सामादीन् निपुणं यथा स्यात्तथा विनिक्षिपेत् प्रयुञ्ज्यात् । निरभ्युपायः उपायविहीनः, विजिगीषुरिति शेषः, विचेष्टमानः अन्ध इव नियतं सदा प्रयाणं गमनं अभ्युपैति प्राप्नोति ।

---

( १ ) कानी. १८।५२ ; उनिसा. पूर्वार्धे ( अपराद्धांस्तु सुस्निग्धान् स्नेहोक्त्या मानदानतः । ).

( २ ) कानी. १८।६२–६४.

( १ ) कानी. १८।६५ ; उनिसा. इति ह्यु ( इत्याद्यु ) प्रपातं ( प्रयाणं ).

यथा अन्धः सयत्नोऽपि गच्छन् अभीष्टफलं न प्राप्नोति तथा उपायविहीनो विजिगीषुः युद्धयात्रादिकं कुर्वन्नपि विजयफलं न प्राप्नोति इति भावः। उनिसा.

**[1]अवश्यमायान्ति वशं विपश्चिता-**
**मुपायसंदंशबलेन संपदः।**
**भवत्युदारं विधिवत्प्रयोजिते**
**फलं हि राज्ञां क्वचिदर्थसिद्धये॥**

(१) उपाय एव संदंशः, तेनाऽऽकृष्यमाणत्वात्। तद्बलेन तत्सामर्थ्येन। उदारं महत् फलमिति संबन्धः। विधिवत्प्रयोजिते उपाये क्वचिदर्थसिद्धये इति संबन्धः। जम.

(२) विपश्चितां नीतिपण्डितानाम् उपायसंदंशबलेन— उपायाः सामादयः, ते एव संदंशः लोहकारोपकरणम्, स एव बलम्, तेन संपदः विभूतयः अवश्यं वशं स्वायत्तताम् आयान्ति प्राप्नुवन्ति। यथा संदंशेन सुवर्णादिकं बलादाकृष्य वशीक्रियते तथा उपायसंदंशबलेन संपदः वशीक्रियन्त इति भावः। हि यस्मात् राज्ञां विजिगीषूणामुदारम् उत्कृष्टं विधिवत् यथाशास्त्रं प्रयोजितं कृतप्रयोगं फलम् उपायजातं क्वचित् स्थलविशेषे अर्थसिद्धये कार्यसाधनाय भवति। 'उपायसंदंशबलेन' इत्यत्र 'उपायसंदर्शबलेन' इति, 'भवत्युदारं विधिवत् प्रयोजितम्' इत्यत्र 'भवन्त्युदारा विधिवत् प्रयोज्यते' इति च मुद्रितपुस्तकपाठो न समीचीनः। 'पुत्रान् भ्रातॄंश्च' इत्यादयः 'इत्याद्युपायान्निपुणम्' इत्यन्ताः (कानी. १८।४८–६५) श्लोका हस्तलिखितपुस्तके न सन्ति। उनिसा.

प्रथमत्रयासंभवे दण्डप्रयोगः

**[2]सामादीनामुपायानां त्रयाणां विफले नये।**
**विनयेन्नयसंपन्नो दण्डं दण्डयेषु दण्डवित्॥**

(१) चतुरङ्गबलं मुक्त्वा मन्त्रेण कोशेन च जयेदरीन्। तदसिद्धौ च दण्डं निक्षिपेदित्याह— सामादीनामित्यादि। विफले नये। प्रयोगः नयः। दण्डं दण्डयेष्विति। तथाहि सामाद्यसाध्यत्वात् दण्डार्हास्त इति। जम.

(२) चतुर्थोपायकालमभिधातुमाह— सामेति। सामादीनाम् उक्तलक्षणानां त्रयाणामुपायानां नये प्रयोगे विफले निष्फले सति नयसंपन्नः नीतिमान् दण्डवित् दण्डविधानज्ञः, विजिगीषुरिति शेषः, दण्डयेषु कृतापराधेषु नयं नीतिशास्त्रोक्तं दण्डं विनयेत् प्रयुञ्जीत। उनिसा.

(१) कानी. १८।६६; उनिसा. जिते (जितं).
(२) कानी. १९।१; उनिसा. दण्डं (नयं).

## शुक्रनीतिः

समुच्चयविकल्पाभ्यां पात्रभेदेनोपायभेदप्रयोगः

**[1]भेदनीयाः कर्षणीयाः पीडनीयाश्च शत्रवः।**
**विनाशनीयास्ते सर्वे सामादिभिरुपक्रमैः॥**

ते सर्वे शत्रवः सामादिभिः सामदानभेददण्डैः उपक्रमैः उपायैः भेदनीयाः प्रकृतिषु मनोभङ्गं प्रापणीयाः, कर्षणीयाः कृशीकरणीयाः, विनाशनीयाश्च। शुनीटी.

**मित्रं शत्रुं यथायोग्यैः कुर्यात्स्ववशवर्तिनम्।**
**उपायेन यथा व्यालो गजः सिंहोऽपि साध्यते॥**

यथा उपायेन व्यालः सर्पः, सिंहः, गजः हस्ती च साध्यते वशीक्रियते तथा यथायोग्यैः, उपायैरित्यर्थः, मित्रं शत्रुं च स्वस्य वशवर्तिनं कुर्यात्। शुनीटी.

**भूमिष्ठाः स्वर्गमायान्ति वज्रं भिन्दन्त्युपायतः॥**

उपायतः उपायेन भूमिष्ठाः पृथिवीस्थाः जनाः स्वर्गमायान्ति गच्छन्ति वज्रं भिन्दन्ति च। शुनीटी.

**सुहृत्संबन्धिस्त्रीपुत्रप्रजाशत्रुषु ते पृथक्।**
**सामदानभेददण्डाश्चिन्तनीयाः स्वयुक्तितः॥**

ते सामदानभेददण्डाः स्वयुक्तितः निजयुक्त्यनुसारेण सुहृत्सु संबन्धिषु स्त्रीषु पुत्रेषु प्रजासु शत्रुषु च पृथक् पृथक् चिन्तनीयाः। शुनीटी.

**एकशीलवयोविद्याजातिव्यसनवृत्तयः।**
**साहचर्यं भवेन्मित्रमेभिर्यदि तु सार्जवैः॥**

(१) शुनी. ४।१।२४–३०, ३२–४३.

**त्वत्समस्तु सखा नास्ति मित्रे साम इदं स्मृतम् ।**
**मम सर्वं तवैवास्ति दानं मित्रे सजीवितम् ॥**

एकः समानः शीलम्, वयः वयःक्रमः, विद्या, जातिः, व्यसनं दोषः, वृत्तिः जीवनोपायश्च येषां ते तथोक्ताः सार्जवैः अकपटैः एभिः साहचर्ये यदि मित्रं मित्रत्वमित्यर्थः, भावप्रधानो निर्देशः, भवेत् तदा तस्मिन् मित्रे 'त्वया समः सखा नास्ति' इदं साम सान्त्ववचनं स्मृतम् । किंच, तथाविधे मित्रे 'मम सर्वं वस्तु तवैव अस्ति इदं सजीवितं जीवनसहितम्' (इति) दानं- दानवाक्यम्, स्मृतमिति शेषः । शुनीटी.

**मित्रेऽन्यमित्रसुगुणान् कीर्तयेद्भेदनं हि तत् ।**
**मित्रे दण्डो न करिष्ये मैत्रीमेवंविधोऽसि चेत् ॥**

मित्रे अन्येषां मित्राणां सुगुणान् उत्तमगुणान् यत्कीर्त- येत् तत्कीर्तनं तस्य मित्रस्य भेदनं मनोभङ्गकरणं हि । चेत् यदि त्वं एवंविधः एतादृशः असि तदा त्वया सह मैत्रीं न करिष्ये इति वचनं मित्रे दण्डः, स्मृत इति शेषः । शुनीटी.

**परस्परमनिष्टं न चिन्तनीयं त्वया मया ।**
**सुसाहाय्यं हि कर्तव्यं शत्रौ साम प्रकीर्तितम् ॥**

त्वया मया च परस्परं परस्परस्य अनिष्टं न चिन्त- नीयम्, प्रत्युत सुसाहाय्यं कर्तव्यं हि इति वचनं शत्रौ साम प्रकीर्तितम् । शुनीटी.

**करैर्वा प्रमितैर्ग्रामैर्वैत्सरे प्रबलं रिपुम् ।**
**तोषयेत्तद्धि दानं स्याद्यथायोग्येषु शत्रुषु ॥**

यथायोग्येषु शत्रुषु मध्ये प्रबलं रिपुं शत्रुं वत्सरे वत्सरे प्रमितैः परिमितैः करैः राजस्वैः ग्रामैर्वा, त्यक्तै- रिति शेषः, यत् तोषयेत् तत् हि तदेव तादृशे शत्रौ दानम्, प्रकीर्तितमिति शेषः । शुनीटी.

**शत्रुसाधकहीनत्वकरणात्प्रबलाश्रयात् ।**
**तद्धीनतोज्जीवनाच्च शत्रुभेदनमुच्यते ॥**

शत्रोः साधकं पराजयसाधनं यत् हीनत्वकरणं लाघवसंपादनं तस्मात्, प्रबलस्य शत्रोरधिकस्य बलवतः आश्रयात्, तस्मात् शत्रोः ये हीनाः खर्वाः निकृष्टा इत्यर्थः, तेषां भावः तद्धीनता, तस्याः उज्जीवनात्, तन्निकृष्टानां प्रबलीकरणाच्चेत्यर्थः, शत्रुभेदनं शत्रौ भेद उच्यते । शुनीटी.

**दस्युभिः पीडनं शत्रोः कर्षणं धनधान्यतः ।**
**तच्छिद्रदर्शनादुग्रबलैर्नीत्या प्रभीषणम् ।**
**प्राप्तयुद्धानिवृत्तित्वैस्त्रासनं दण्ड उच्यते ॥**

दस्युभिः शत्रोः पीडनम्, धनधान्यतः कर्षणं खर्वी- करणं च, तथा तस्य छिद्रदर्शनात् दोषदर्शनात् उग्रबलैः समधिकबलशालिभिः नीत्या प्रभीषणं भयदर्श- नम्, किंच प्राप्तं युद्धात् अनिवृत्तित्वं यैः तादृशैः, युद्धादपराङ्मुखैरित्यर्थः, त्रासनं भयजननं दण्डः, शत्रौ इति शेषः, उच्यते । शुनीटी.

**क्रियाभेदादुपाया हि भिद्यन्ते च यथार्हतः ॥**

उपायाः सामादयः यथार्हतः यथायोग्यतः क्रिया- भेदात् अनुष्ठानतारतम्येनेत्यर्थः, उपायाः भिद्यन्ते हि । हिशब्दश्चावधारणार्थः । शुनीटी.

**सर्वोपायैस्तथा कुर्यान्नीतिज्ञः पृथिवीपतिः ।**
**यथा स्वाभ्यधिका न स्युर्मित्रोदासीनशत्रवः ॥**

यथा मित्राणि उदासीनाः शत्रवश्च न स्वस्मात् अभ्यधिकाः अतिप्रबला न स्युः, नीतिज्ञः पृथिवीपतिः सर्वैः उपायैः तथा कुर्यात् । शुनीटी.

उपायचतुष्टयप्रयोगविवेकः, प्रथमत्रयासंभवे दण्डप्रयोगः

**सामैव प्रथमं श्रेष्ठं दानं तु तदनन्तरम् ।**
**सर्वदा भेदनं शत्रोर्दण्डनं प्राणसंशये ॥**

प्रथमं साम सान्त्वमेव श्रेष्ठम् । तदनन्तरं तदशक्ता- वित्यर्थः, दानम् । तथाऽप्यशक्तौ सर्वथा सर्वैः प्रकारैः भेदनं मनोभङ्गकरणम् । तथाऽप्यशक्तौ प्राणसंशये जीवन- संकटे उपस्थित इत्यर्थः, शत्रोः दण्डनम्, कर्तव्यमिति शेषः । शुनीटी.

**प्रबलेऽरौ सामदाने साम भेदोऽधिके स्मृतौ ।**
**भेददण्डौ समे कार्यौ दण्डः पूज्यः प्रहीनके ॥**

अरौ शत्रौ प्रबले सामदानौ उपायौ, दानशब्दः पुंलिङ्गोऽत्राऽऽर्षः, स्मृतौ । अधिके बलाधिके रिपौ साम भेदश्च, स्मृत इति शेषः । समे समाने रिपौ भेद-दण्डौ उपायौ कार्यौ । प्रहीनके दुर्बले शत्रौ दण्डः पूज्यः प्रशंसनीयः । शुनीटी.

**मित्रे च सामदाने स्तो न कदा भेददण्डने ॥**

मित्रे सुहृदि सामदानौ स्तः । कदाऽपि भेददण्डने न, प्रयोज्ये इति शेषः । शुनीटी.

**रिपोः प्रजानां संभेदपीडनं स्वजयाय वै ।**
**रिपुप्रपीडितानां च साम्ना दानेन संग्रहः ।**
**गुणवतां च दुष्टानां हितं निर्वासनं सदा ॥**

प्रजानां संभेदेन योगेन रिपोः पीडनं स्वस्य जयाय, भवतीति शेषः । रिपुभिः प्रपीडितानां जनानां साम्ना दानेन च संग्रहः, कार्य इति शेषः । किंच, गुणवतां दुष्टानां सदा निर्वासनं देशात् बहिष्करणं हितम् । तेषां देशस्थितौ महानिष्टकरणसंभवादिति भावः । शुनीटी.

**स्वप्रजानां न भेदेन नैव दण्डेन पालनम् ।**
**कुर्वीत सामदानाभ्यां सर्वदा यत्नमास्थितः ॥**

सर्वदा यत्नमास्थितः यत्नवान् सन् सामदानाभ्यां स्वस्य प्रजानां पालनं कुर्वीत, भेदेन मनोभङ्गापादनेन न, दण्डेन च ( नैव ) । शुनीटी.

**स्वप्रजादण्डभेदैश्च भवेद्राज्यविनाशनम् ।**
**हीनाधिका यथा न स्युः सदा रक्ष्यास्तथा प्रजाः ॥**

स्वप्रजानां दण्डैः भेदैश्च राज्यविनाशनं भवेत् । तस्मात् यथा प्रजाः हीना वा अधिकाः प्रबलाः न स्युः तथा सदा सर्वस्मिन् काले रक्ष्याः पालनीयाः । शुनीटी.

***[1]यथा हि शत्रुसेनाया भेदोऽवश्यं भवेत्तथा ।**
**कौटिल्येन प्रदानेन द्राक्कुर्यान्नृपतिः सदा ॥**

* श्लोकत्रयस्य व्याख्यानं 'प्रकृतयः—बलम्' इत्यस्मिन् प्रकरणे ( पृ. १५३० ) द्रष्टव्यम् ।

( १ ) शुनी. ४।७।१८७–१८९, २९२–२९५.

**सेवयाऽत्यन्तप्रबलं नत्या चारिं प्रसाधयेत् ।**
**प्रबलं मानदानाभ्यां युद्धैर्हीनबलं तथा ।**
**मैत्र्या जयेत्समबलं भेदैः सर्वान् वशं नयेत् ॥**
**शत्रुसंसाधनोपायो नान्यः सुबलभेदतः ॥**
**सदुपायैश्च सन्मन्त्रैः कार्यसिद्धिरथोद्यमैः ।**
**भवेदल्पजनस्यापि किं पुनर्नृपतेर्न हि ॥**

अल्पजनस्य इतरस्यापि सदुपायैः सन्मन्त्रैः उत्कृष्ट-मन्त्रबलैः अथवा उद्यमैः चेष्टाभिः कार्यसिद्धिः भवेत् । नृपतेः पुनः किं न हि कार्यसिद्धिर्भवेत्? अपि तु भवेदेवेत्यर्थः । शुनीटी.

**उद्योगेनैव सिध्यन्ति कार्याणि न मनोरथैः ।**
**न हि सुप्तमृगेन्द्रस्य निपतन्ति गजा मुखे ॥**

उद्योगेन चेष्टया एव कार्याणि सिध्यन्ति, मनोरथैः न हि । तथाहि गजाः सुप्तस्य सिंहस्य मुखे न हि निपतन्ति । शुनीटी.

**अयोऽभेद्यमुपायेन द्रवतामुपनीयते ।**
**लोकप्रसिद्धमेवैतत् वारि वह्नेर्नियामकम् ॥**

अभेद्यम् अयः लोहम् उपायेन द्रवताम् उपनीयते प्राप्यते । एतच्च लोकप्रसिद्धं यत् वारि जलं वह्नेः नियामकं निवारकम् । शुनीटी.

**उपायोपगृहीतेन तेनैतत् परिशोष्यते ।**
**उपायेन पदं मूर्ध्नि न्यस्यते मत्तहस्तिनाम् ॥**

उपायोपगृहीतेन तेन वह्निना च एतत् वारि परि-शोष्यते परिशोषं नीयते । उपायेन मत्तानां दन्तिनां मूर्ध्नि पदं न्यस्यते । शुनीटी.

## योगयात्रा

पात्रभेदेनोपायप्रयोगः, सामाद्यसंभवे दण्डः

**[1]बुद्ध्वा शक्तिं स्वपरबलयोः सामभेदप्रदानैः**
**कृत्वोपायैर्व्यसनसमरोपायसंरक्षणैश्च ।**
**साम्ना साधून् धनविरहितानर्थलुब्धांश्च दानै-**
**र्भेद्यान् भेदैस्त्रिभिरपि न ये साधयेत्तांश्च दण्डैः ॥**

( १ ) योया. १।१२.

## नीतिवाक्यामृतम्

उपायमहिमा

**[1]उपायोपपन्नविक्रमोऽनुरक्तप्रकृतिरल्पदेशोऽपि भूपतिर्भवति सार्वभौमः ॥**

अथाल्पदेशाधिपोऽपि राजा भवति यथा सार्वभौमस्तदाह— उपायोपन्नेति । यो राजा उपायोपपन्नविक्रमो भवति । उपायाः सामादयः , तैः उपपन्नः युक्तः विक्रमः पराक्रमः ( यस्य तथाभूतः ) भवति । तथा योऽनुरक्तप्रकृतिर्भवति । प्रकृतिशब्देन राज्यपालादिकाः समीपवर्तिनः सेवकाः कथ्यन्ते । ते अनुरक्ताः भक्ताः यस्य । सः राजा स्वल्पदेशोऽपि चक्रवर्ती प्रजायते । नीवाटी.

**न हि कुलागता कस्यापि भूमिः किंतु वीरभोग्या वसुंधरा ॥**

अथ राज्ञो भूमिर्यथा भवति तत्स्वरूपमाह— नेति । यस्य भूमिः कुलागता पितृपैतामहिका सा किं विक्रमरहितस्य भूपतेर्वशा भवति ? किंतु ' वीरभोग्या वसुंधरा इति लोकोक्तिरेषा । परकीयाऽपि भूमिर्वीरव्रतस्य आत्मीया भवति । तथा च शुक्रः— ' कातराणां न वश्या स्याद्यद्यपि स्यात्क्रमागता । परकीयाऽपि चाऽऽत्मीया विक्रमो यस्य भूपतेः ॥ ' । नीवाटी.

उपायचतुष्टयम्

**सामोपप्रदानभेददण्डा उपायाः ॥**

अथ भूपालानां सामादीनां नामानि लिख्यन्ते— सामोपप्रदानेति । गतार्थमेतत् । नीवाटी.

( १ ) नीवा. २९।६७–६९.

## युक्तिकल्पतरुः

उपायाश्चत्वारः

**[1]सामदानदण्डभेदा इत्युपायचतुष्टयम् ॥**

उपायप्रयोगविवेकः

**[2]तत्र साम प्रयोक्तव्यं कार्येषु गुणावत्स्वपि ॥**
**दानं लुब्धेऽपि भेदश्च शङ्कितेष्वपि निश्चयः ॥**

## मानसोल्लासः

उपायगुणतारतम्यविवेकः

**[3]उपायेषूत्तमं साम भेदो मध्यम इष्यते ।**
**उपप्रदानमधमं दण्डः कष्टतमः स्मृतः ॥**

**अपायरहितत्वाच्च द्रव्यहानेरभावतः ।**
**सिद्धिमायान्ति कार्याणि ततः सामोत्तमं मतम् ॥**

**कुत्सिता भेदमायान्ति न ते विश्वासभूमयः ।**
**अतः संदेहरूपत्वाद्भेदोऽयं मध्यमः स्मृतः ॥**

**वित्तस्य संक्षयः पूर्वं सिद्धिर्दैवे व्यवस्थिता ।**
**उपप्रदानमधमं तेन प्रोक्तं मनीषिभिः ॥**

**लाभार्थं क्रियते युद्धं रणे संशयितो जयः ।**
**राज्यं च जीवितं चैव दण्डः कष्टतमस्ततः ॥**

( १ ) युक. १४।९९.
( २ ) युक. १६।११४–११५.
( ३ ) मासो. २।९७२–९७६.

# उपायाः– साम

## महाभारतम्

बृहस्पत्युक्तः सान्त्वमहिमा

**भीष्म उवाच–**

[1]अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
बृहस्पतेश्च संवादं शक्रस्य च युधिष्ठिर ॥

अत्र मन्त्रमूलभूते प्रजासंग्रहणे विषये । नीटी.

**शक्र उवाच–**

किं स्विदेकपदं ब्रह्मन् पुरुषः सम्यगाचरन् ।
प्रमाणं सर्वभूतानां यशश्चैवाप्नुयान्महत् ॥

एकपदं यत्र सर्वे गुणाः अन्तर्भवन्ति तदेव कर्तव्यं वस्तु । प्रमाणं संमतम् । नीटी.

**बृहस्पतिरुवाच–**

सान्त्वमेकपदं शक्र पुरुषः सम्यगाचरन् ।
प्रमाणं सर्वभूतानां यशश्चैवाऽऽप्नुयान्महत् ॥

सान्त्वं निष्कपटं प्रियवचनम् । नीटी.

एतदेकपदं शक्र सर्वलोकसुखावहम् ।
आचरन् सर्वभूतेषु प्रियो भवति सर्वदा ॥

[2]यो हि नाऽऽभाषते किंचित्सततं भ्रुकुटीमुखः ।
द्वेष्यो भवति भूतानां स सान्त्वमिह नाचरन् ॥

नाऽऽभाषते तूष्णीमास्ते । नाचरन् अनाचरन् ।
नीटी.

[3]यस्तु पूर्वमभिप्रेक्ष्य पूर्वमेवाभिभाषते ।
स्मितपूर्वाभिभाषी च तस्य लोकः प्रसीदति ॥

यः राजा पूर्वं स्वदुःखनिवेदनात् प्रागेव किमर्थमागतोऽसीत्यादि भाषते । नीटी.

---

(१) भा. १२।८५।१–४ ; भामु. १२।८४।१–४.

(२) भा. १२।८५।५ ; भामु. १२।८४।५ सततं (सर्वदा).

(३) भा. १२।८५।६ ; भामु. १२।८४।६ पूर्वम (सर्वम).

[1]दानमेव हि सर्वत्र सान्त्वेनानभिजल्पितम् ।
न प्रीणयति भूतानि निर्व्यञ्जनमिवाशनम् ॥

दानमेव दानमपि सान्त्वहीनं न प्रीणयतीत्यर्थः ।
नीटी.

[2]अदाता ह्यपि भूतानां मधुरामीरयन् गिरम् ।
सर्वलोकमिमं शक्र सान्त्वेन कुरुते वशे ॥

सर्वस्वं गृहीत्वाऽपि सान्त्वं प्रयुञ्जतो वशे लोको भवतीत्याह– आदानादपीति । नीटी.

[3]तस्मात्सान्त्वं प्रकर्तव्यं दण्डमाधित्सतामिह ।
फलं च जनयत्येवं न चास्योद्विजते जनः ॥

[4]सुकृतस्य हि सान्त्वस्य श्लक्ष्णस्य मधुरस्य च ।
सम्यगासेव्यमानस्य तुल्यं जातु न विद्यते ॥

**भीष्म उवाच–**

[5]इत्युक्तः कृतवान्सर्वं तथा शक्रः पुरोधसा ।
तथा त्वमपि कौन्तेय सम्यगेतत्समाचर ॥

## कौटिलीयमर्थशास्त्रम्

साम पञ्चविधम्

[6]तत्र साम पञ्चविधम्– गुणसंकीर्तनं संबन्धोपाख्यानं परस्परोपकारसंदर्शनमायतिप्रदर्शनमात्मोपनिधानमिति ॥

---

(१) भा. १२।८५।७ ; भामु. १२।८४।७.

(२) भा. १२।८५।८ ; भामु. १२।८४।८ अदाता ह्य (आदानाद).

(३) भा. १२।८५।९. ; भामु. १२।८४।९ कर्त (योक्त) तामिह (तोऽपि हि).

(४) भा. १२।८५।१० ; भामु. १२।८४।१०.

(५) भा. १२।८५।११ ; भामु. १२।८४।११ तथा श (यथा श).

(६) कौ. २।१०.

तत्र साम्नः पञ्च प्रभेदानुद्दिशति— तत्र सामेत्यादि । श्रीमूला.

**तत्राभिजनशरीरकर्मप्रकृतिश्रुतद्रव्यादीनां गुणागुणग्रहणं प्रशंसा स्तुतिर्गुणसंकीर्तनम् ॥**

तत्र प्रथमं सामप्रभेदं व्याचष्टे— तत्राभिजनेत्यादि । अभिजनः कुलम् । शरीरं कर्म च प्रसिद्धे । प्रकृतिः स्वभावः । श्रुतं शास्त्रजनितः संस्कारः । द्रव्यं रथगजतुरगादिपरिग्रहः । आदिपदेन वयोरूपादिग्रहणम् । अभिजनादीनामेषां गुणग्रहणं गुणस्य वस्तुसतः स्वरूपाख्यानम्, 'गुणागुणग्रहणम्' इति पाठे गुणागुणयोर्वस्तुसतोः स्वरूपाख्यानम्, प्रशंसा सश्लाघमाख्यानम्, स्तुतिः अविद्यमानगुणकीर्तनं च गुणसंकीर्तनं नाम भवति । श्रीमूला.

**ज्ञातियौनमौखस्रौवकुलहृदयमित्रसंकीर्तनं संबन्धोपाख्यानम् ॥**

संबन्धोपाख्यानं व्याचष्टे— ज्ञातीत्यादि । ज्ञातिः समानकुलोत्पन्नः । यौनः योनिकृतः संबन्धो विवाहाख्यः । मौखः मुखकृतः संबन्धो वाक्संबन्धः शिष्याचार्यभावलक्षणः । स्रौवः स्रुवनामकयज्ञपात्रविशेषकृतः संबन्धो याज्ययाजकभावरूपः । कुलं पूर्वपुरुषपरंपरा । हृदयं मनोनिबन्धः । मित्रं उपकारकम् । ज्ञात्यादीनां सप्तानां संकीर्तनं संबन्धोपाख्यानमित्युच्यते । श्रीमूला.

**स्वपक्षपरपक्षयोरन्योन्योपकारसंकीर्तनं परस्परोपकारसंदर्शनम् ॥**

स्वपक्षपरपक्षयोः अन्योन्योपकारसंकीर्तनं परस्परोपकारो यथा स्यात् तथा कथनं परस्परोपकारसंदर्शनं नाम सामभेदः । श्रीमूला.

**अस्मिन्नेवं कृत इदमावयोर्भवतीत्याशाजननमायतिप्रदर्शनम् ॥**

अस्मिन् कार्ये एवं कृते अनेन प्रकारेणानुष्ठिते सति आवयोरिदं भवति तव च मम चैतत् फलं भविष्यति इत्याशाजननं आयतिप्रदर्शनं नाम । श्रीमूला.

**योऽहं स भवान्, यन्मम द्रव्यं तद्भवता स्वकृत्येषु प्रयोज्यतामित्यात्मोपनिधानमिति ॥**

योऽहं स भवान्, आवामभिन्नौ, तस्मात् मम यत् द्रव्यं भूमिहिरण्याद्यस्ति तत् भवता स्वकृत्येषु प्रयोज्यतां स्वीयद्रव्यनिर्विशेषमुपयुज्यताम् इति ईदृशं आत्मोपनिधानं नाम पञ्चमः सामप्रभेदः । श्रीमूला.

## मत्स्यपुराणम्

साम द्विविधम्, साधवः सामसाध्याः

**[1]द्विविधं कथितं साम तथ्यं चातथ्यमेव च ॥**
**[2]तत्राप्यतथ्यं साधूनामाक्रोशायैव जायते ।**
**तत्र साधुः प्रयत्नेन सामसाध्यो नरोत्तम ॥**
**[3]महाकुलीना ऋजवो धर्मनित्या जितेन्द्रियाः ।**
**सामसाध्या न चातथ्यं तेषु साम प्रयोजयेत् ॥**
**[4]तथ्यं साम च कर्तव्यं कुलशीलादिवर्णनम् ।**
**तथा तदुपचाराणां कृतानां चैव वर्णनम् ॥**
**[5]अनयैव तथा युक्त्या कृतज्ञाख्यापनं स्वकम् ।**
**एवं साम्ना च कर्तव्या वशगा धर्मतत्पराः ॥**

तत्र साम । तच्च शत्रोः तदीयानाममात्यादीनां च गुणवर्णनमुपकारादिसारणं च विधाय स्वस्य कृतज्ञताख्यापनपुरःसरं स्वापराधक्षमापणम् । राप्र. २७९

(१) मत्स्य. २२२।३ ; विध. २।६७।३ ; राक. १२७ ; राप्र. २७९.

(२) मत्स्य. २२२।४ ; विध. २।६७।४ उत्तरार्धे (तच्च साधुप्रियं ते च सामसाध्या न राम ते ॥); राक. १२७ तत्र (तथा) ; राप्र. २७९.

(३) मत्स्य. २२२।५ ; विध. २।६७।५ नित्या (निष्ठा) ; राक. १२७ ; राप्र. २७९.

(४) मत्स्य. २२२।६ ; विध. २।६७।६ साम च (च साम) पचाराणां (भर्य राम) ; राक. १२७ ; राप्र. २७९ चाराणां (काराणां).

(५) मत्स्य. २२२।७ ; विध. २।६७।७ कृतज्ञा (कृतज्ञ) साम्ना च (सान्त्वेन) ; राक. १२७ विधवत् ; राप्र. २७९–८० साम्ना च (सान्त्वेन).

[1]साम्ना यद्यपि रक्षांसि गृह्णन्तीति परा श्रुतिः ।
तथाऽप्येतदसाधूनां प्रयुक्तं नोपकारकम् ॥

गृह्णन्ति वशीकुर्वन्ति । राप्र. २८०

[2]अतिशङ्कितमित्येवं पुरुषं सामवादिनम् ।
असाधवो विजानन्ति तस्मात्तत्तेषु वर्जयेत् ॥

अतिशङ्कितम् । अतिशयिता शङ्का यस्मिन् स तथा । सामवेदिनं सामप्रयोक्तारम् । * राक. १२८

[3]ये शुद्धवंशा ऋजवः प्रणीता
धर्मे स्थिताः सत्यपरा विनीताः ।
ते सामसाध्याः पुरुषाः प्रदिष्टाः
मनोन्नता ये सततं च राजन् ॥

## अग्निपुराणम्

साधवः सामसाध्याः, द्विविधं चतुर्विधं च साम

[4]द्विविधं कथितं साम तथ्यं चातथ्यमेव च ॥
तत्राप्यतथ्यं साधूनामाक्रोशायैव जायते ।
महाकुलीना ह्यृजवो धर्मनित्या जितेन्द्रियाः ॥
सामसाध्या अतथ्यैश्च गृह्यन्ते राक्षसा अपि ।
तथा तदुपकाराणां कृतानां चैव वर्णनम् ॥
[5]चतुर्विधं स्मृतं साम उपकारानुकीर्तनात् ।
मिथः संबन्धकथनं मृदुपूर्वं च भाषणम् ॥
आयाते दर्शनं वाचा तवाहमिति चार्पणम् ॥

* राप्र. राकवत् ।

(१) मत्स्य. २२२।८ ; विध. २।६७।८ ; राक. १२७ ; राप्र. २८०.

(२) मत्स्य. २२२।९ ; विध. २।६७।९ शङ्कित-मित्येवं ( संधिकमित्येव ) वर्जयेत् ( वर्जितम् ) ; राक. १२७ वादि ( वेदि ) वर्जयेत् ( वर्जितम् ) ; राप्र. २८० शङ्कित ( शङ्कक ) विजा ( ऽवजा ).

(३) मत्स्य. २२२।१० ; विध. २।६७।१० णीता ( तीता ) राजन् ( राम ) ; राप्र. २८०.

(४) अग्नि. २२६।६–८.

(५) अग्नि. २४१।४७–४८ ; राप्र. २८० कीर्तनात् ( कीर्तनम् ) याते द ( यतेर्द ) तवा ( तत्रा ).

[1]प्रलिम्पन्निव चेतांसि दृष्ट्वा साधु पिबन्निव ।
ग्रसन्निवामृतं साम प्रयुञ्जीत प्रियं वचः ॥

## कामन्दकीयनीतिसारः

सामलक्षणम् , साम पञ्चविधम्

[2]परस्परोपकाराणां दर्शनं गुणकीर्तनम् ।
संबन्धस्य समाख्यानमायतेः संप्रकाशनम् ॥

(१) तत्र *चतुष्टयस्य स्वरूपभेदं षड्भिः श्लोकैराह– परस्परोपकाराणामित्यादि । त्वयेदमस्मासूपकृतम्, मया युष्मासु इदमिति पूर्वकृतानामुपकाराणां दर्शनम् । गुणकीर्तनं शूरः श्रुतवान् यद्वा रूपवानित्यादि । संबन्धस्य समाख्यानम्– या त्वद्भगिनी सा मद्भ्रातृभार्या इति यौनस्य, अस्मत्पितुः सकाशात् त्वयाऽधीतमिति मौलस्य । आयतिसंप्रकाशनम् अस्मिन् एवं कृते इदमावयोर्भविष्यति इति आशाजननम् । जम.

(२) सामरूपमाख्यातुमाह– परस्परेति । परस्परोपकाराणां कीर्तनं भवद्भिरस्माकं अस्माभिश्च भवताम् इत्थमन्योन्योपकारकथनम् । गुणकर्मसु वंश–रूप–विद्या–वित्त–चरित्रादिषु कीर्तनं श्लाघनम् । 'कर्मसु' इति सप्तम्यर्थो विषयत्वम् । गुणकर्मविषयककीर्तनमिति यावत् । संबन्धस्य समाख्यानं संबन्धस्य वंशपारंपर्यस्य मित्रतारूपस्य वा समाख्यानं कथनम् । आयत्याः संप्रकाशनं आयतिः उत्तरफलम् , तस्याः संप्रकाशनं प्रकटनम् । उनिसा.

[3]वाचा पेशलया साधु तवाहमिति चार्पणम् ।
इति सामप्रभेदज्ञैः साम पञ्चविधं स्मृतम् ॥

(१) पेशलया हृदयहारिण्या । तद्यथा– योऽहं स भवान् , यन्मम द्रव्यं तत् भवता स्वकृत्येष्वुपयुज्यतामिति । जम.

* सामाद्युपायचतुष्टयस्येत्यर्थः ।

(१) अग्नि. २४१।५४.

(२) कानी. १८।४ ; उनिसा. द्वितीयचरणे ( कीर्तनं गुणकर्मसु ) मायतेः ( मायत्याः ).

(३) कानी. १८।५.

(२) तवाहमिति पेशलया वाचा मृदुवचनेन साधु सम्यक् अर्पणम् आत्मसमर्पणम् । इति उक्तप्रकारेण । अन्यत् स्पष्टम् । उनिसा.

**[1]प्रलिम्पन्निव चेतांसि दृष्ट्या साधु पिबन्निव ।**
**स्रवन्निवामृतं साम प्रयुञ्जीत प्रियं वचः ॥**

(१) यथा सामादीन् प्रयुञ्जीत तथा दर्शयति श्लोकचतुष्टयेन— प्रलिम्पन्नित्यादि । साम प्रयुञ्जीत, किं तत् सामेत्याह— प्रियं वच इति । जम.

(२) कया रीत्या साम प्रयोक्तव्यमित्याह— प्रविशन्निवेति । चेतांसि अन्तःकरणानि प्रविशन्निव दृष्ट्या दर्शनेन साधु सम्यक् पिबन्निव अत्यादरेण पश्यन्निव स्रवत् क्षरत् अमृतमिव सुधेव प्रियं वचः साम प्रियवाक्यरूपं साम प्रयुञ्जीत । विजिगीषुरिति शेषः । 'दृष्ट्या' इत्यत्र 'दृष्ट्वा' इति मुद्रितपुस्तकपाठः न समीचीनः । उनिसा.

**[2]वागनुद्वेगजननी सामेति परिकीर्त्यते ।**
**सामाख्या सूनृते सान्त्वे प्रिये स्तोत्रे च कीर्त्यते ॥**

(१) तदेव पञ्चविधं सूचयन्नाह— वागित्यादि । अनुद्वेगजननी विस्रम्भजननी । सा वाक् । परस्परोपकाराणां दर्शने आख्याने संबन्धाख्याने सूनृते समाख्याने (?) । सान्त्वे तवाहमिति चार्पणे । प्रिये आयतिसंप्रकाशने । स्तोत्रे गुणकीर्तने । जम.

(२) साम्नो लक्षणमाह— वागिति । अनुद्वेगजननी वाक् चित्तक्षोभाजननी वाक् साम इति परिकीर्त्यते उच्यते । तत् साम यदा सत्यं यथार्थं तदा सामाख्यं सूनृतमुच्यते । यदा प्रियं प्रीतिजनकं तदा सामाख्यं स्तोत्रमुच्यते । उनिसा.

(१) कानी. १८।१५ ; उनिसा. लिम्प (विश).

(२) कानी. १८।१६ ; जम. सामाख्या (साऽऽख्याने); उनिसा. उत्तरार्धं (सामाख्यं सूनृतं सत्यं प्रियं स्तोत्रं च कीर्त्यते ॥).



***आत्मनो विषयमिव कुर्वन् दद्यात्समीहितम् ।**
**जलवत्पर्वताञ्छत्रून् भिन्द्यादनुपलक्षितः ॥**

साम्नः प्रकारान्तरमाह— आत्मन इति । आदौ समीहितं शत्रुचेष्टितं कार्यमिति यावत्, आत्मनः स्वस्य विषयमिव कार्यमिव कुर्वन् सूचयन् दद्यात् यच्छेत् । निजकार्येष्विव शत्रुकार्येषु प्रयत्नं प्रदर्शयेदिति भावः । पश्चात् विजिगीषुः अनुपलक्षितः अप्रकटितः सन् पर्वतान् पर्वतसदृशदुर्भेद्यान् शत्रून् रिपून् जलवत् जलमिव भिन्द्यात् भेदं प्रापयेत् । उनिसा.

**[2]साम्नाऽर्थसिद्धये विद्वान् यतेत यतमानसः ।**
**सामसिद्धिं प्रशंसन्ति सर्वतश्च विपश्चितः ॥**

एते च सामादयो यथाक्रमं प्रयोक्तव्याः । तत्र श्लोकद्वयेन सामप्रयोगमाह— साम्नेत्यादि । अर्थसिद्धये यतेत यतमानसः, असंयतचेतसो हि सामाभावात् । सर्वतः सर्वत्र चतुर्ष्वप्युपायेषु सर्वेभ्य उपायेभ्यः । जम.

**[3]क्षीरोदो मथितः साम्ना फलायामरदानवैः ।**
**निजघ्निरे धार्तराष्ट्राः सामप्रद्वेषिणोऽचिरात् ॥**

(१) सामप्रधानस्य सामद्वेषिणश्च गुणदोषावाह— क्षीरोद इति । पुरा किल क्षुज्ज्वरापीडिताः देवाः ब्रह्माणमुपगम्य तत्पीडोपशमं पप्रच्छुः । स तानाह— क्षीरोदं निर्मथ्य अमृतं पिबत इति । ते तत्स्तुतिपराश्चिरकालं तमाराध्य दानवसहायाः ममन्थुरिति । धार्तराष्ट्राः

* अयं श्लोकः उपाध्यायनिरपेक्षानुसारिणीमनुसृत्य तत्सहितोऽस्मिन् प्रकरणे संगृहीतः । जयमङ्गलामनुसृत्य तु एतच्छ्लोकस्य पूर्वोत्तरार्धे क्रमेण दानभेदप्रकरणयोः समावेशिते, जयमङ्गलाऽपि च तत्रैव संगृहीता ।

(१) कानी. १८।१७ ; जम. विषय (विक्रय).

(२) कानी. १८।१९ उपाध्यायनिरपेक्षानुसारिण्यामयं श्लोको नास्ति.

(३) कानी. १८।२० ; उनिसा. रोदो म (राब्धिर्म) राष्ट्राः (राष्ट्रान्).

दुर्योधनादयः । ते विक्रमैकरसाः मानिनः सामसाध्येषु पाण्डुषु विक्रममाणास्तैर्निहताः इत्यतिप्रतीतम् । जम.

( २ ) साम्नां गुणमाह— क्षीरेति । अमरदानवैः देवासुरैः फलाय अमृतादिरूपफलप्राप्त्यै साम्ना उक्तलक्षणेन प्रियवचनेन क्षीराब्धिः क्षीरसमुद्रः मथितः आलोडितः । सामप्रद्वेषे दोषमाह— निजघ्निर इति । सामप्रद्वेषिणः सामावशायिनः धार्तराष्ट्रान् दुर्योधनादीन् अचिरात् शीघ्रं निजघ्निरे विनाशितवन्तः , पाण्डवा इति शेषः । उनिसा.

## नीतिवाक्यामृतम्

पञ्चविधं साम, साम प्रथमोपायः

**[१]तत्र पञ्चविधं साम गुणसंकीर्तनं संबन्धोपाख्यानं परोपकारदर्शनमायतिप्रदर्शनमात्मोपनिबन्धन( ? निधान )मिति ॥**

अथ साम्नो लक्षणमाह— तत्र पञ्चविधमिति । प्रथमं गुणकीर्तनं तावत् परस्य गुणाः केवलाः कीर्त्यन्ते । द्वितीयं संबन्धोपाख्यानं येन प्रकारेण संबन्धः संधिर्भवति तं वदति । तृतीयं परोपकरणम् । तथा आयतिप्रदर्शनं नित्यत्वदर्शनं चतुर्थम् । तथा आत्मोपनिबन्धनं यत्र आत्मा उपनिबन्धनं क्रियते तत् पञ्चमं साम । तथा च व्यासः— ' साम्ना यत्सिद्धिदं कृत्यं ततो नो विकृतिं व्रजेत् । सज्जनानां यथा चित्तं दुरुक्तैरपि कीर्तितैः ॥ '। अथ परमनेन साम्नो माहात्म्यमाह— ' साम्नैव यत्र सिद्धिर्न तत्र दण्डो बुधेन विनियोज्यः । पित्तं यदि शर्करया शाम्यति तत्किं पटोलेन ॥ ' । नीवाटी.

**यन्मम द्रव्यं तद्भवता स्वकृत्येषु प्रयुज्यतामित्यात्मोपनिधानम् ॥**

* अथोपप्रदानस्वरूपमाह— यन्ममेति । आत्मशब्देन उपप्रदानमुच्यते । यत् आत्मनः निधानम् आत्मद्रव्यस्य विनिवेदनं क्रियते विजिगीषुणा शत्रोः तत् उपप्रदानम् । एवं वदता यत् मम द्रव्यं तत् भवता स्वकृत्येषु प्रयुज्यतामिति यः शत्रोः प्रोच्यते तद्बोधोपप्रदानम् । नीवाटी.

**'सामसाध्यं युद्धसाध्यं न कुर्यात् ॥**

अथ राज्ञा यथा कार्यं तदाह— सामसाध्यमिति । यत्कार्ये प्रयोजनं साम्ना सिध्यति तत् युद्धेन न सिध्यति । तथा च वल्लभदेवः— ' साम्नैव यत्र सिद्धिस्तत्र न दण्डो बुधैर्वि( ? बुधेन वि )नियोज्यः । पित्तं यदि शर्करया शाम्यति ( ततः ? ) किं तत् पटोलेन ॥ ' । नीवाटी.

**गुडादभिप्रेतसिद्धौ को नाम विषं भुञ्जीत ॥**

अथ भूयोऽपि साममाहात्म्यमाह— गुडादभिप्रेतसिद्धाविति । गुडेन भक्षितेन यदि अभिप्रेतसिद्धिः वाञ्छितसिद्धिः भवति शरीरस्य तत् को नामाहो विषमुपभुञ्जीत विषं भक्षयेत् ? तथा च हारीतः— ' गुडास्वादनतः शक्तिर्यदि गात्रस्य जायते । आरोग्यलक्षणा नाम तद्भक्षयति को विषम् ॥ ' । नीवाटी.

## युक्तिकल्पतरुः

साम प्रशस्ततमम्

**[२]सामसिद्धं प्रशंसन्ति सर्वतश्च विपश्चितः ।**
**अवन्निवामृतं वाचा सामोपायं समाचरेत् ॥**

## मानसोल्लासः

पञ्चविधं साम, साम प्रथमोपायः

**[३]कुपितस्य प्रियं वाक्यं कोपवृद्धौ प्रजायते ।**
**यथाऽऽज्यस्य प्रततस्य ज्वालायै जलबिन्दवः ॥**
**कुलीनेषु कृतज्ञेषु सार्द्रचित्तेषु साधुषु ।**
**कार्यार्थिषु च मेधावी पूर्वं साम प्रयोजयेत् ॥**
**प्रथमं कर्णसुभगं द्वितीयं दैविकं तथा ।**
**तृतीयं स्मारकं प्रोक्तं चतुर्थं लोभजं स्मृतम् ॥**

---

* व्याख्यानमिदं प्रामादिकम् । वस्तुतः साम्नः पञ्चमप्रकार आत्मोपनिधानमेवात्र लक्षितमिति स्पष्टं प्रतीयते । प्रकारान्तरलक्षणग्रन्थस्तूच्छिन्न इति कल्प्यते ।

( १ ) नीवा. २९।७०–७१.

( १ ) नीवा. ३०।२५–२६.
( २ ) युक. १४।१००.
( ३ ) मासो. २।९७७–९८५.

तथैवं पञ्चमं साम निजार्पणमिति स्मृतम् ।
उपायेषूत्तमं साम कथितं निरुपद्रवम् ॥

मधुरैः सुखसंलापैरन्यैश्च हृदयंगमैः ।
एवं वचोभिर्यत्साम तत्कर्णसुभगं स्मृतम् ॥

विश्वासजननोपायैः शपथैर्देवपूर्वकैः ।
क्रियते यच्च नीतिज्ञैः साम तद्दैविकं विदुः ॥

यदासीद्बान्धवं पूर्वं सांप्रतं विस्मृतं त्वया ।
इति संस्मार्यते यत्र स्मारकं साम तत्स्मृतम् ॥

ग्रामं पुरं तथा राष्ट्रं वाजिनं वारणं धनम् ।
दास्यामीति च यत्साम स्मृतं तदिह लोभजम् ॥

भवत्कार्ये मदीयं स्वं शरीरं च मयाऽर्पितम् ।
इति वागर्पिते साम्नि कथितं तन्निजार्पणम् ॥

# दानम्

## कौटिलीयमर्थशास्त्रम्

दानलक्षणम्

[1]उपप्रदानमर्थोपकारः ॥

उपप्रदानाख्यं द्वितीयमुपायं व्याचष्टे– उपेत्यादि । अर्थोपकारः भूमिहिरण्यादिरूपार्थदानेनोपकारकरणं उपप्रदानम् । श्रीमूला.

## मत्स्यपुराणम्

दानं जयोपायः भेदकारणं वशीकरणं च

मत्स्य उवाच–

[2]सर्वेषामप्युपायानां दानं श्रेष्ठतमं मतम् ।
सुदत्तेनेह भवति दानेनोभयलोकजित् ॥
[3]न सोऽस्ति राजन् दानेन वशगो यो न जायते ।
दानेन वशगा देवा भवन्तीह सदा नृणाम् ॥
[4]दानमेवोपजीवन्ति प्रजाः सर्वा नृपोत्तम ।
प्रियो हि दानवाँल्लोके सर्वस्यैवोपजायते ॥
[5]दानवानचिरेणैव तथा राजा परान् जयेत् ।
दानवानेव शक्नोति संहतान् भेदितुं परान् ॥
[6]यद्यप्यलुब्धगम्भीराः पुरुषाः सागरोपमाः ।
न गृह्णन्ति तथाऽप्येते जायन्ते पक्षपातिनः ॥

[1]अन्यत्रापि कृतं दानं करोत्यन्यान् यथा वशे ।
उपायेभ्यः प्रशंसन्ति दानं श्रेष्ठतमं जनाः ॥
[2]दानं श्रेयस्करं पुंसां दानं श्रेष्ठतमं परम् ।
दानवानेव लोकेषु पुत्रत्वे ध्रियते सदा ॥
[3]न केवलं दानपरा जयन्ति
भूर्लोकमेकं पुरुषप्रवीराः ।
जयन्ति ते राजसुरेन्द्रलोकं
सुदुर्जयं यो विबुधाधिवासः ॥

## अग्निपुराणम्

दानं वशीकरणोपायः, पञ्चविधं दानम्

[4]उपायश्रेष्ठं दानं स्याद्दानादुभयलोकभाक् ।
न सोऽस्ति नाम दानेन वशगो यो न जायते ॥
दानवानेव शक्नोति संहतान् भेदितुं परान् ।
[5]यः संप्राप्तधनोत्सर्ग उत्तमाधममध्यमः ॥
[6]प्रतिदानं तदा तस्य गृहीतस्यानुमोदनम् ।
द्रव्यदानमपूर्वं च स्वयंग्राहप्रवर्तनम् ॥

---

(१) कौ. २।१०.

(२) मत्स्य. २२४।१ ; विध. २।६९।१ नेह (नैव); राक. १२९ ; राप्र. २८२.

(३) मत्स्य. २२४।२ ; विध. २।६९।२ न सोऽस्ति राजन् (स नास्ति राम) उत्तरार्धे (दानवान् गोचरं नैति तथा रामाऽऽपदां क्वचित् ।।); राप्र. २८२–२८३.

(४) मत्स्य. २२४।३ ; राप्र. २८३.

(५) मत्स्य. २२४।४ ; विध. २।६९।३ उत्त. ; राप्र. २८३.

(६) मत्स्य. २२४।५ ; विध. २।६९।३–४ लुब्धग (लुब्धा ग) ; राक. १२९ ; राप्र. २८३.

(१) मत्स्य. २२४।६ ; विध. २।६९।४–५ यथा वशे (तथा परैः) शंस (यच्छ) जनाः (नराः) ; राप्र. २८३.

(२) मत्स्य. २२४।७ ; विध. २।६९।५–६ श्रेयस्करं पुंसां (संवर्धनं श्रेष्ठं) श्रेष्ठतमं (श्रेयस्करं) त्वे ध्रि (वत्प्री) ; राप्र. २८३.

(३) मत्स्य. २२४।८ ; विध. २।६९।६ र्लोक (लोक) वीराः (वीर) राजसु (राम सु) यो वि (यद्वि) वासः (वासम्) ; राप्र. २८३ र्लोक (लोक) जेयं (जैयो).

(४) अग्नि. २२६।१२–१३.

(५) अग्नि. २४१।४८ ; राप्र. २८२.

(६) अग्नि. २४१।४९ ; राप्र. २८२ स्वयंग्राह (तथैवेष्ट).

[1]देयश्च प्रतिमोक्षश्च दानं पञ्चविधं स्मृतम् ॥

अथ दानम् । तच्च स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पादनानुकूलो व्यापारः । तस्य दानस्य पञ्चविधत्वमुक्तमग्निपुराणे— यः संप्राप्तेत्यादिना । राप्र. २८२

## कामन्दकीयनीतिसारः

दानं पञ्चविधम्

[1]यः संप्राप्तधनोत्सर्ग उत्तमाधममध्यमः ।
प्रतिदानं तथा तस्य गृहीतस्यानुमोदनम् ॥

( १ ) उत्तमाधममध्यम इति । सारासारो मध्यमोपायः । संप्राप्तः गृहीतः धनोत्सर्गः द्रव्यसंपत् । तस्य गृहीतस्य तथा सारासारादिभेदेन प्रतिदानं प्रत्यर्पणम् । अनुप्रतिदानमित्यर्थः । गृहीतस्य अनुमोदनम् अनुज्ञानम् । जम.

( २ ) दानमपि पञ्चविधमभिधातुमाह— य इति । संप्राप्तधनोत्सर्गः संप्राप्तधनवितरणम् । सः संप्राप्तिवैलक्षण्येन उत्तमाधममध्यमः स्मृतः । इति दानसामान्यलक्षणम् । प्रतिदानं न्यस्तवस्तुनः प्रत्यर्पणम् । गृहीतस्यानुमोदनम् । गृहीतस्य दानं विना नीतस्य अनुमोदनं 'यन्नीतं तत्साधु कृतम्' इत्यनेन कार्यवशात् संमतिदानम् । उनिसा.

[2]द्रव्यदानमपूर्वं च स्वयंग्राहप्रवर्तनम् ।
देयस्य प्रतिमोक्षश्च दानं पञ्चविधं स्मृतम् ॥

( १ ) द्रव्यदानमपूर्वं च भाण्डागारादुद्धृत्य यदभिनवं दानम् । स्वयंग्राहप्रवर्तनम्, परस्वेष्विति शेषः, 'अमुष्मात् द्रव्यं गृहाण, तवैव भविष्यति' इति । देयस्य प्रतिमोक्षणं ऋणादिप्रतिमोचनम् । जम.

( २ ) द्रव्यदानमपूर्वं द्रव्यं यदभिनवं दीयते तत् । स्वयंग्राहप्रवर्तनं ग्रहीतुरभिलाषानुसारेण दानम् । देयस्य प्रतिमोक्षश्च देयस्य प्रतिवर्षंदातव्यस्य प्रतिमोक्षः । एतदपि दानम् । इत्येवं दानं पञ्चविधं स्मृतम् । उनिसा.

दानरीतिः

*[1]आत्मनो विक्रयमिव कुर्वन् दद्यात्समीहितम् ॥

विक्रयमिव कुर्वन्निति अङ्गार्पणेनाऽऽत्मानं विक्रीणन्निव । दद्यात् समीहितं यत् दातुमभिप्रेतम् । जम.

[2]दारुणं विग्रहं विद्वान् दानेन प्रशमं नयेत् ।
इन्द्रोऽपचारे शुक्रस्य दानेन शममेयिवान् ॥

( १ ) श्लोकत्रयेण दानप्रयोगमाह— दारुणमित्यादि । यदा साम्ना न सिद्धिस्तदा दारुणो विग्रहो भवति । इन्द्रोऽपचार इति । दानवानामिन्द्रो वृषपर्वा नामासुरो दुहित्रा कृतेऽपचारे शुक्रस्य दानेन स्वदुहितुः शममेयिवान् । जम.

( २ ) दानमाहात्म्यमाह— दारुणमिति । विद्वान् नीतिनिपुणः दारुणम् उपायान्तरेणाप्रतिविधेयं विग्रहं विरोधं प्रशमं शान्तिं नयेत् प्रापयेत् । एतदेव दृष्टान्तेन द्रढयति— इन्द्र इति । इन्द्रः देवराजः अपचारे मारणोच्चाटनविद्वेषणादिभिः देवानामुपद्रवे मृतदैत्यसंजीवनादिभिः कृतमहापकारे च शुक्रस्य दानेन शमं शान्तिम् ईयिवान् प्राप्तः । 'शमम्' इत्यत्र 'समम्' इति दन्त्यसकारादिः पाठो मुद्रितपुस्तके वर्तते, स न समीचीनः । उनिसा.

[3]अपराधेन दुहितुः कुपिते भृगुनन्दने ।
वृषपर्वा प्रदानेन दानवेन्द्रोऽभवत्सुखी ॥

( १ ) तदेव स्फुटयन्नाह— अपराधेनेत्यादि । वृषपर्वणो दानवेन्द्रस्य दुहिता शर्मिष्ठा नाम तन्मन्त्रिणः शुक्रस्य दुहित्रा देवयान्या सह स्नातुं गता । तत्र स्नाता देवयानी विसंवादानुबद्धवस्त्रया शर्मिष्ठया परुषमभिहिता

---

( १ ) अग्नि. २४१।५० ; राप्र. २८२ देयश्च ( देयं च ) मोक्षश्च ( मोक्षं च ).

( २ ) कानी. १८।६.

( ३ ) कानी. १८।७.

* एतद्वचनस्य उनिसाव्याख्यानं सामपरत्वात् 'उपायाः—साम' इत्यस्मिन् प्रकरणे संगृहीतम् ।

( १ ) कानी. १८।१७ ; उनिसा. विक्रय ( विषय ).

( २ ) कानी. १८।२१ ; उनिसा. मेयि ( मीयि ).

( ३ ) कानी. १८।२२.

संजातखेदा च पित्रे न्यवेदयत् । शुक्रोऽपि तच्छ्रुत्वा संजातामर्षस्तद्राष्ट्रादन्यत्र गच्छन्नसुरैः प्रसाद्यमानस्तानाह– 'यद्यस्मद्दुहित्रे वृषपर्वा शर्मिष्ठां दासीत्वेन प्रयच्छति तदा प्रतिनिवृत्तोऽहम् ।' इति । ततोऽसौ दुहितुः प्रदानेन अभवत् सुखीति । जम.

(२) दुहितुः दानवेन्द्रस्य वृषपर्वणः सुतायाः शर्मिष्ठाभिधायाः अपराधेन कूपनिक्षेपणरूपदोषेण भृगुनन्दने शुक्राचार्ये कुपिते स्वदुहितुर्देवयान्याः कूपक्षेपजनितक्रोधयुक्ते सति वृषपर्वा दानवेन्द्रः असुरराजः प्रदानेन स्वदुहितुः शर्मिष्ठायाः देवयानीशुश्रूषार्थसमर्पणेन सुखी अभवत् । तद्यथा वृषपर्वसुतायाः शर्मिष्ठायाः शुक्रदुहितुर्देवयान्याश्च परस्परं संजाते कलहे शर्मिष्ठया देवयानी कूपे निक्षिप्ता, एतदपराधेन भृगुनन्दनेन वृषपर्वणः मन्त्रित्वं परित्यक्तमिति वृषपर्वणा स्वसुतां देवयान्यै दासीं दत्त्वा भृगुनन्दनः अनुग्राहित इति पौराणिकी कथाऽत्रानुसंधेया । उनिसा.

**'उपच्छन्द्यापि दातव्यं बलिने शान्तिमिच्छता ।**
**समूलमेव गान्धारिरप्रयच्छन् गतः क्षयम् ॥**

(१) उपच्छन्द्य बलेनानिच्छतेऽपि । गान्धारिः दुर्योधनः । स हि वनवासाज्ञातवासौ यथासमयमुषित्वा स्वमंशं याचमानेभ्योऽपि पाण्डवेभ्यः अप्रयच्छन् समूलमेव ननाश । जम.

(२) शान्तिमिच्छता आत्मनोऽभ्युदयमिच्छता, जनेनेति शेषः, बलिने अधिकबलयुक्ताय उपगम्यापि समीपं गत्वाऽपि दातव्यम् । गान्धार्याः सुबलतनयायाः, अपत्यमिति शेषः, दुर्योधनः अप्रयच्छन् पञ्चापि ग्रामान् अददत् समूल एव मूलसहित एव क्षयं विनाशं गतः प्राप्तः । उनिसा.

(१) कानी. १८।२३ ; **उनिसा.** च्छन्द्या (गम्या) गान्धारिर (गान्धार्या अ).

## नीतिवाक्यामृतम्

दानरीतिः

**'बह्वर्थसंरक्षणायाल्पार्थप्रदानेन परप्रसादनमुपप्रदानम् ॥**

अथान्यदप्युपप्रदानमाह– बह्वर्थेति । यद्बलीयसा (? सः) शत्रोर्बह्वर्थरक्षणाय स्वल्पार्थो दीयते परप्रसादनं तच्च प्रोक्तमुपप्रदानम् । तथा च शुक्रः– ' बह्वर्थः स्वल्पवित्तेन यदा शत्रोः प्ररक्ष्यते । परप्रसादनं तत्र प्रोक्तं तच्च विचक्षणैः ॥ ' । नीवाटी.

## युक्तिकल्पतरुः

दानं वशीकरणोपायः

**'लुब्धं क्षीणं प्रदानेन सत्कृत्य वशमानयेत् ॥**

## मानसोल्लासः

दानप्रयोगविषयाः, षोडशविधं दानम्

**'अर्थभारप्रदानेन स्वाधिकारकुलेन च ।**
**अलब्धवेतनत्वेन द्रव्यापहरणेन च ॥**
**द्विषतां कारणैरेभिर्विरक्ता ये च मन्त्रिणः ।**
**अमात्याः सचिवाश्चैव तथा सामन्तमान्यकाः ॥**
**भृत्याश्च बान्धवाश्चैव ये चान्तर्वर्तिनो जनाः ।**
**युद्धबुद्धिसहाया ये तेषां दानं प्रयोजयेत् ॥**
**अन्ये ये लोभसंयुक्ता व्यसनासक्तचेतसः ।**
**तेभ्योऽपि दानं युञ्जीत नृपः शत्रुजिघांसया ॥**
**एवं रागविहीना ये स्वकीयाः सचिवादयः ।**
**तेषामपि प्रयुञ्जीत दानं राज्याभिवृद्धये ॥**
**अभीष्टं हायनं देश्यं करजं दन्तिसप्तिजम् ।**
**ग्रामजं शासनं भूषा वसनं प्रतिपत्तिजम् ॥**
**आकरं रुक्मजं कन्या वैश्यं वेलाकरं तथा ।**
**उपप्रदानमेवं तु प्रोक्तं षोडशधा बुधैः ॥**

(१) नीवा. २९।७२.
(२) युक. १४।१०१.
(३) मासो. २।१००५–१०३०.

यस्मै यद् रोचते वस्तु तस्मै योग्यानुसारतः ।
यद् दीयते तदाख्यातमभीष्टं दानमुत्तमम् ॥
एकं संवत्सरं यावत्कुटुम्बभरणक्षमम् ।
यस्य यद्दीयते तस्य तद्दानं हायनं स्मृतम् ॥
राष्ट्रं प्रदीयते यत्तु तद्दानं देश्यमुच्यते ।
राष्ट्रोत्थकरदानं यत्तत्स्मृतं करजं बुधैः ॥
वारणस्य प्रदानं यत्तद्दानं दन्तिसंज्ञितम् ।
हयस्य दानमाख्यातं सप्तिजं नीतिकोविदैः ॥
अगृहीतकरो वाऽपि प्रगृहीतकरोऽपि वा ।
ग्रामः प्रदीयते यत्तु तद्दानं ग्रामजं मतम् ॥
पुत्रपौत्रप्रपौत्रेण दत्तं नैव विलुप्यते ।
अचाल्यत्वेन यत्किंचित्तद्दानं शासनं स्मृतम् ॥
रत्नेन जातरूपेण घटितं चारु भूषणम् ।
दीयते यत्तु तद्दानं भूषाख्यं समुदाहृतम् ॥
नानावर्णविचित्राणि नानासूत्रमयानि च ।
नानादेशसमुत्थानि सूक्ष्माणि च घनानि च ॥
वस्त्राण्यतिमनोज्ञानि प्रभूतानि प्रसादतः ।
दीयते यत्तु तद्दानं वसनं परिकीर्तितम् ॥
आसनं चामरं छत्रं यानं संमाननोचितम् ।
मानवद्दीयते यत्तु तद्दानं प्रतिपत्तिकम् ॥

रौप्यकाञ्चनरत्नानि संजायन्ते यतो भुवः ।
सा खनिर्दीयते यत्तु तदाकरमितीरितम् ॥
दीयन्ते यत्र निष्काणि प्रभूतानि वराणि च ।
तद्दानं रुक्मजं प्रोक्तमर्थशास्त्रविचक्षणैः ॥
भूषणैर्भूषिता कन्या लक्षणैश्च समन्विता ।
विधिवद्दीयते यत्तु कन्यादानं तु तद्विदुः ॥
रूपयौवनसंपन्ना नृत्यगीतविशारदा ।
वेश्या प्रदीयते यत्तु तद्दानं वैश्यमुच्यते ॥
यत्राऽऽढ्या बहवः सन्ति वहित्रस्योपजीविनः ।
रत्नाकरस्य वेलायां बहुपण्यप्रचारिणः ॥
अपूर्वोपायनोपेतं पट्टनं बहुवस्तुदम् ।
दीयते यत्तु तद्दानं वैलाकरमिति स्मृतम् ॥
यदसाध्यं हि भेदस्य तद्दानेन प्रसिध्यति ।
*पशुदत्तेनेह भवति दानेनोभयलोकजित् ॥
न सोऽस्ति लोके दानेन वशगो यो न जायते ।
देवा अपि भवन्तीह वशगाः सर्वदेहिनाम् ॥
दानं श्रेयस्करं श्रेष्ठं दानं सर्वार्थसाधकम् ।
दानशीलो नृपो लोके देववत् पूज्यते जनैः ॥

* 'पशु' इति साधुत्वार्थकमव्ययम् । छन्दोभङ्गं परिहर्तुं 'पशुदत्तेनेह' इत्यत्र 'पशुदत्तेन' इत्येव सुवचम् ।

## कौटिलीयमर्थशास्त्रम्

भेदलक्षणम्

[1]शङ्काजननं निर्भर्त्सनं च भेदः ॥

तृतीयमुपायं व्याचष्टे– शङ्केत्यादि । मित्रेष्वेकस्यापकाराधानेनान्येषां हृदि 'अस्मानप्यसावुच्छेत्स्यति' इति शङ्काया अपरागस्पर्धाहेतोरुत्पादनमेको भेदः । 'त्वामविधेयमभिघातयिष्यामि' इत्येवंप्रकारं निर्भर्त्सनपरो भेदः ।

श्रीमूला.

स्वदेशवासिनां परदेशवासिनां च उपायैर्वशीकरणम्

*[2]क्रुद्धलुब्धभीतावमानिनस्तु परेषां कृत्याः । तेषां कार्तान्तिकनैमित्तिकमौहूर्तिकव्यञ्जनाः परस्पराभिसंबन्धममित्रप्रतिसंबन्धं वा विद्युः । तुष्टानर्थमानाभ्यां पूजयेत् । अतुष्टान् सामदानभेददण्डैः साधयेत् ॥

एवं स्वविषये कृत्यानकृत्यांश्च विचक्षणः ।
परोपजापात्संरक्षेत्प्रधानान् क्षुद्रकानपि ॥

[3]कृत्याकृत्यपक्षोपग्रहः स्वविषये व्याख्यातः परविषये वाच्यः । संश्रुत्यार्थान् विप्रलब्धः, तुल्यकारिणोः शिल्पे वोपकारे वा विमानितः, वल्लभावरुद्धः, समाहूय पराजितः, प्रवासोपतप्तः, कृत्वा व्ययमलब्धकार्यः, स्वधर्माद् दायाद्याद् वोपरुद्धः, मानाधिकाराभ्यां भ्रष्टः, कुल्यैरन्तर्हितः, प्रसभाभिमृष्टस्त्रीकः, काराभिन्यस्तः, परोक्तदण्डितः, मिथ्याचारवारितः, सर्वस्वमाहारितः, बन्धनपरिक्लिष्टः, प्रवासितबन्धुरिति क्रुद्धवर्गः । स्वयमुपहतः, विप्रकृतः, पापकर्माभिख्यातः, तुल्यदोषदण्डेनोद्विग्नः, पर्यात्तभूमिः, दण्डेनोपहतः, सर्वाधिकरणस्थः, सहसोपचितार्थः, तत्कुलीनोपाशंसुः, प्रद्विष्टो राज्ञा, राजद्वेषी चेति भीतवर्गः । परिक्षीणः, अत्यात्तस्वः, कदर्यः, व्यसनी, अत्याहितव्यवहारश्चेति लुब्धवर्गः । आत्मसंभावितः, मानकामः, शत्रुपूजामर्षितः, नीचरुपहितः, तीक्ष्णः, साहसिकः, भोगेनासंतुष्ट इति मानिवर्गः । तेषां मुण्डजटिलव्यञ्जनैर्यो यद्भक्तिः कृत्यपक्षीयस्तं तेनोपजापयेत् । 'यथा मदान्धो हस्ती मत्तेनाधिष्ठितो यद्यदासादयति तत्सर्वं प्रमृद्नात्येवमयमशास्त्रचक्षुरन्धो राजाऽन्धेन मन्त्रिणाऽधिष्ठितः पौरजानपदवधायाभ्युत्थितः, शक्यमस्य प्रतिहस्तिप्रोत्साहनेनापकर्तुम्, अमर्षः क्रियताम्' इति क्रुद्धवर्गमुपजापयेत् । 'यथा लीनः सर्पो यस्माद्भयं पश्यति तत्र विषमुत्सृजत्येवमयं राजा जातदोषाशङ्कस्त्वयि पुरा क्रोधविषमुत्सृजति, अन्यत्र गम्यताम्' इति भीतवर्गमुपजापयेत् । 'यथा श्वगणिनां धेनुः श्वभ्यो दुग्धे न ब्राह्मणेभ्य एवमयं राजा सत्त्वप्रज्ञावाक्यशक्तिहीनेभ्यो दुग्धे नाऽऽत्मगुणसंपन्नेभ्यः । असौ राजा पुरुषविशेषज्ञः सेव्यताम्' इति लुब्धवर्गमुपजापयेत् । 'यथा चण्डालोदपानश्चण्डालानामेवोपभोग्यो नान्येषामेवमयं राजा नीचो नीचानामेवोपभोग्यो न त्वद्विधानामार्याणाम् । असौ राजा पुरुषविशेषज्ञः तत्र गम्यताम्' इति मानिवर्गमुपजापयेत् ॥

तथेति प्रतिपन्नांस्तान् संहितान् पणकर्मणा ।
योजयेत यथाशक्ति सापसर्पान् स्वकर्मसु ॥

* व्याख्यानं 'प्रणिधिः' इत्यस्मिन् प्रकरणे (पृ. १६४९–१६५१) द्रष्टव्यम् ।

(१) कौ. २।१०.

(२) कौ. १।१३.

(३) कौ. १।१४.

लभेत सामदानाभ्यां कृत्यांश्च परभूमिषु ।
अकृत्यान् भेददण्डाभ्यां परदोषांश्च दर्शयेत् ॥

## बृहत्पराशरः

भेदसाधनरीतिः भेदनिरसनरीतिश्च

[1]निर्भेदं स्वबलं कुर्याच्चिहन्याद्भिन्नचेतनम् ।
दासीकर्मकरान् दासान् भिन्दतो रक्षयेन्नृपः ॥
निकटस्थायिनो नित्यं जानन्ति चेष्टितं प्रभोः ।
तस्मात्ते यत्नतो रक्ष्या भेदमूलं यतस्त्वमी ॥
एते परस्य यत्नेन भेदनीयास्ततोऽपरे ।
यथा परो न जानाति तथा भेदं समाचरेत् ॥
परामात्यप्रधानानां *व्यलीकदूतशब्दितम् ।
उत्थापयेत्स्वसेनायाः स्याद्यथा चित्तभेदना ॥

## मत्स्यपुराणम्

भेदविषयाः दुष्टक्रुद्धभीतावमानिताः, अन्तःकोप-
निवारणाय ज्ञातिभेदसाधनम्

मत्स्य उवाच—
[2]परस्परं तु ये दुष्टाः क्रुद्धा भीतावमानिताः।
तेषां भेदं प्रयुञ्जीत भेदसाध्या हि ते मताः ॥

अथ भेदः । स च शत्रुवर्गे परस्परं वैमत्योत्पादनम् । तदुक्तं मत्स्यपुराणे— परस्परमिति । राप्र. २८०

[3]ये तु येनैव दोषेण परस्मान्नापि बिभ्यति ।
ते तु तद्दोषपातेन भेदनीया भृशं ततः ॥
[4]आत्मीयां दर्शयेदाशां परस्माद्दर्शयेद्भयम् ।
एवं हि भेदयेद्भिन्नान् यथावद्वशमानयेत् ॥

---

* 'दूतशब्दितम्' इत्यत्र 'शब्ददूषितम्' इति पाठान्तरम् ।

(१) बृपसं. १२।३०–३३.

(२) मत्स्य. २२३।१ ; विध. २।६८।१ ; राक. १२७ तु (च) ; राप्र. २८० दुष्टाः (द्विष्टाः).

(३) मत्स्य. २२३।२ ; विध. २।६८।२ न्नापि (द्राम) पातेन (पालेन) ; राप्र. २८० न्नापि (न्नाम).

(४) मत्स्य. २२३।३; विध. २।६८।३ यां द (याद) ; राक. १२७ ; राप्र. २८०–२८१.



[1]संहता हि विना भेदं शक्रेणापि सुदुःसहाः ।
भेदमेव प्रशंसन्ति तस्मान्नयविशारदाः ॥
[2]स्वमुखेनाऽऽश्रयेद्भेदं भेदं परमुखेन च ।
परीक्ष्य साधु मन्येत भेदं परमुखाच्छ्रुतम् ॥
[3]सद्यः स्वकार्यमुद्दिश्य कुशलैर्ये हि भेदिताः ।
भेदितास्ते विनिर्दिष्टा नैव राज्ञाऽर्थवादिभिः ॥
अन्तःकोपो बहिःकोपो यत्र स्यातां महीक्षिताम् ।
[4]अन्तःकोपो महांस्तत्र नाशकः पृथिवीक्षिताम् ॥
[5]सामन्तकोपो बाह्यस्तु कोपः प्रोक्तो महीभृतः ।
महिषीयुवराजाभ्यां तथा सेनापतेर्नृप ॥
[6]अमात्यमन्त्रिणां चैव राजपुत्रे तथैव च ।
अन्तःकोपो विनिर्दिष्टो दारुणः पृथिवी-
क्षिताम् ॥

---

(१) मत्स्य. २२३।४ ; विध. २।६८।४ संह (संहि) सहाः (सहा) ; राक. १२८ संहता (संगतां) सुदुःसहाः (तु दुःसहा) ; राप्र. २८१.

(२) मत्स्य. २२३।५ ; विध. २।६८।५ नाऽऽश्रये (नाथ य) मन्येत (मन्येऽहं) ; राप्र. २८१ साधु (साधुं).

(३) मत्स्य. २२३।६ ; विध. २।६८।६ सद्यः (भेद्या) राज्ञा (राजा) ; राप्र. २८१ राज्ञा (राजा).

(४) मत्स्य. २२३।७ ; विध. २।६८।७ कोपो बहिः-कोपो (कोपबहिःकोपौ) नाशकः (नाशनः) ; राप्र. २८१ कोपो बहिःकोपो (कोपबहिःकोपौ).

(५) मत्स्य. २२३।८ ; विध. २।६८।८ महीभृतः (मनीषिभिः) नृप (द्विज) ; राक. १२८ उत्तरार्धे (महिषी युवराजश्च तथा सेनापतिर्द्विज ॥) उत्त. ; राप्र. २८१.

(६) मत्स्य. २२३।९ ; विध. २।६८।९ पूर्वार्धे (अमात्यान्मन्त्रिपुत्रांश्च राजपुत्रांस्तथैव च ।) ; राक. १२८ (अमात्या मन्त्रिणश्चैव राजपुत्रास्तथैव च । अन्तः-कोपा विनिर्दिष्टा दारुणा पृथिवीक्षिताम् ॥) ; राप्र. २८१.

[1]बाह्यकोपे समुत्पन्ने सुमहत्यपि पार्थिवः।
शुद्धान्तस्तु महाभाग शीघ्रमेव जयी भवेत्॥
शुद्धान्तः अन्तःप्रकोपरहितः। राप्र. २८१

[2]अपि शक्रसमो राजा अन्तःकोपेन नश्यति।
सोऽन्तःकोपः प्रयत्नेन तस्माद्रक्ष्यो महीभृता॥

[3]परतः कोपमुत्पाद्य भेदेन विजिगीषुणा।
ज्ञातीनां भेदनं कार्यं परेषां विजिगीषुणा॥

[4]रक्ष्यश्चैव प्रयत्नेन ज्ञातिभेदस्तथाऽऽत्मनः।
ज्ञातयः परितप्यन्ते सततं परितापिताः॥

[5]तथाऽपि तेषां कर्तव्यं सुगम्भीरेण चेतसा।
ग्रहणं दानमानाभ्यां भेदस्तेभ्यो भयंकरः॥

[6]न ज्ञातिमनुगृह्णन्ति न ज्ञातिं विश्वसन्ति च।
ज्ञातिभिर्भेदनीयास्तु रिपवस्तेन पार्थिवैः॥

[7]भिन्ना हि शक्या रिपवः प्रभूताः
स्वल्पेन सैन्येन निहन्तुमाजौ।
सुसंहतानां हि तदस्तु भेदः
कार्यो रिपूणां नयशास्त्रविद्भिः॥

(१) मत्स्य. २२३।१०; विध. २।६८।१० बाह्य (वहिः) जयी भवेत् (जयेदरीन्); राप्र. २८१.

(२) मत्स्य. २२३।११; विध. २।६८।११ अन्तः-कोपेन (कोपेनान्तर्वि) उत्तरार्धे (स्वान्तःकोपं प्रयत्नेन तस्माद्यत्नात् परीक्षता॥); राप्र. २८१ भृता (क्षिता).

(३) मत्स्य. २२३।१२; विध. २।६८।१२ परतः (परान्तः) पू.; राप्र. २८१ परतः (परान्तः).

(४) मत्स्य. २२३।१३; विध. २।६८।१२–१३ परितापिताः (यद्यपि श्रिया); राप्र. २८१.

(५) मत्स्य. २२३।१४; विध. २।६८।१३–१४ ग्रह (ग्राह); राप्र. २८१.

(६) मत्स्य. २२३।१५; विध. २।६८।१४–१५ पूर्वार्धे (नाज्ञातिरनुगृह्णाति नाज्ञातिः स्नेहमिच्छति।); राप्र. २८१–२८२ न ज्ञातिं (नाज्ञातिं).

(७) मत्स्य. २२३।१६; विध. २।६८।१६ हतानां हि तदस्तु (हितेनाथ ततस्तु); राप्र. २८२ तानां हि तदस्तु (तैश्चापि ततस्तु).

## ब्रह्मपुराणम्

भेददोषाः

[1]स्वपक्षभेदो यत्नेन न कर्तव्यः कदाचन।
दुर्गं कोशश्च दण्डश्च परराष्ट्रभयं विना।
स्वभेदेनैव नश्यन्ति बद्धमूला अपि प्रजाः॥
परराष्ट्रभयं विनेति। स्वपक्षभेदे हि परचक्रभयं विनाऽपि दुर्गादिकं नश्यतीत्यर्थः। * राक. १२८

## अग्निपुराणम्

भेदविषयाः क्रुद्धभीतादयः, ज्ञातिभेदस्येष्टता, त्रिविधो भेदः, भेदोपायाः

[2]परस्परं तु ये द्विष्टाः क्रुद्धभीतावमानिताः।
तेषां भेदं प्रयुञ्जीत परमं दर्शयेद्भयम्।
आत्मीयां दर्शयेदाशां येन दोषेण बिभ्यति।
परास्तेनैव ते भेद्या रक्ष्यो वै ज्ञातिभेदकः॥
सामन्तकोपो बाह्यस्तु मन्त्रामात्यात्मजादिकः।
अन्तःकोपं चोपशाम्य कुर्वन् शत्रोश्च तं जयेत्॥

[3]स्नेहरागापनयनसंहर्षोत्पादनं तथा।
मिथो भेदश्च भेदज्ञैर्भेदश्च त्रिविधः स्मृतः॥

[4]मिथ्याभिशस्तः श्रीकाम आहूयाप्रतिमानितः।
राजद्वेषी चातिकरस्त्वात्मसंभावितस्तथा॥
विच्छिन्नधर्मकामार्थः क्रुद्धो मानी विमानितः।
अकारणात्परित्यक्तः कृतवैरोऽपि सान्त्वितः॥
हृतद्रव्यकलत्रश्च पूजार्होऽप्रतिपूजितः।
एतांस्तु भेदयेच्छत्रौ स्थितान्नित्यान्
सुशङ्कितान्॥
आगतान् पूजयेत्कामैर्निजांश्च प्रशमं नयेत्।
सामदृष्टानुसंधानमत्युग्रभयदर्शनम्॥

* राप्र. राकवत्।

(१) राक. १२८ दण्ड (देश); राप्र. २८२.

(२) अग्नि. २२६।९–११.

(३) अग्नि. २४१।५०–५१.

(४) अग्नि. २४१।५५–५९.

**प्रधानदानमानं च भेदोपायाः प्रकीर्तिताः ।**
**मित्रं हतं काष्ठमिव घुणजग्धं विशीर्यते ॥**

## कामन्दकीयनीतिसारः

त्रिविधो भेदः, भेदविषयाः, भेदोपायाः

**[1]स्नेहरागापनयनं संघर्षोत्पादनं तथा ।**
**संतर्जनं च भेदज्ञैर्भेदस्तु त्रिविधः स्मृतः ॥**

(१) भेदस्त्रिविध इति । परस्माद्विश्लेषणं भेदः । स द्विविध उक्तः कौटिलीये— शङ्काजननमभिभर्त्सनं च । भेदानुग्रहेण वृद्धः प्रासादतरुवत् स्वमाश्रयमेवोच्छेत्स्यति इत्याशङ्काजननम् । अस्य त्वस्मिन् मित्राभिग्रहस्य परिणामोऽसत्तो भविष्यति इत्येवंप्रकारसंतर्जनम् अभिभर्त्सनम् । तत्र शङ्काजननं कार्यद्वारेण द्विधा विभज्य इह त्रिविध उक्तः । उत्पादिता हि शङ्का स्नेहं भक्तिं चापनयति स्पर्धां चोत्पादयति । जम.

(२) त्रिविधं भेदमभिधातुमाह— स्नेहेति । स्नेहरागापनयनम् — स्नेहः सोदर्यजा प्रीतिः, रागः अनुरागः, तयोः अपनयनं दूरीकरणम्, भङ्ग इति यावत् । संहर्षोत्पादनम् — संहर्षः स्पर्धा, तस्य उत्पादनम् । संतर्जनं सम्यग्रूपेण भर्त्सनम् । इत्येवं त्रिविधो भेदः भेदज्ञैः स्मृतः । उनिसा.

**[2]जलवत्पर्वताञ्छत्रून् भिन्द्यादनुपलक्षितः ॥**

जलवत् भिन्द्यात् शनैः शनैः । जम.

**[3]किंचित्प्रयच्छन् भूयस्या तृष्णया विप्रलोभयन् ।**
**भिन्द्याच्चतुर्विधान् भेद्यान् प्रविश्योभयवेतनैः ॥**

(१) अष्टादशभिः श्लोकैर्भेदप्रयोगमाह— किंचिदित्यादि । प्रयच्छन् तदात्वे । तृष्णया आगामिन्या । भेदसौकर्यार्थमत्र मात्रया दानप्रयोगः । चतुर्विधान् भेद्यान् क्रुद्धलुब्धभीतमानिनः कृत्यान् । प्रविश्य उभयवेतनैः द्वारभूतैः । जम.

(२) भेदप्रयोगमभिधातुमाह— किंचिदिति । किंचित् स्वल्पं प्रयच्छन् ददत् । अधिकदानेन शत्रुवृद्धिशङ्कयेति शेषः । भूयस्या तृष्णया परिलोभयन् बहुतराशां जनयन् । उभयवेतनैः विजिगीषुयातव्योभयपक्षवेतनग्राहिभिः चरैः प्रविश्य अन्तरङ्गतां गत्वा चतुर्विधान् चतुःप्रकारान् क्रुद्धलुब्धभीतावमानितानिति यावत् । भेद्यान् भेदयोग्यान् भिन्द्यात् विश्लेषयेत्, विजिगीषुरिति शेषः । उनिसा.

**[1]अलब्धवेतनो लुब्धो मानी चाप्यवमानितः ।**
**क्रुद्धश्च कोपितोऽकस्मात्तथा भीतश्च भीषितः ॥**

**[2]यथाभिलषितैः कामैर्भिन्द्यादेतांश्चतुर्विधान् ।**
**परपक्षे स्वपक्षे च यथावत्प्रशमं नयेत् ॥**

(१) अलब्धवेतनः अलब्धलाभः । नन्वत्र विमानितो मानी क्रुद्धवर्गे भवति । सत्यम् । आशुभेदप्रतिपत्त्यर्थं विशेषणम् । एवं चालब्धवेतनो लुब्धः क्रुद्धश्च कोपितः भीतश्च भीषित इत्यपि विशेषणमर्थवत् । कामैः भोगैः भिन्द्यादेतान् परपक्षे इति संबन्धः । स्वपक्षे च यथावत् प्रशमं नयेत् सामादिभिरकृत्यतां नयेत् । जम.

(२) एतमेव व्याख्यातुमाह— अलब्धेति । लुब्धः लोभपरतन्त्रः अलब्धस्वपणः अप्राप्तवेतनः, तथा मानी मानधनः अवमानितः हतमानः, तथा क्रुद्धः कोपनस्वभावः कस्मात् कुतश्चित् कारणात् कोपितः कोपवशतां नीतः, तथा भीतः भयशीलः कुतश्चित् कारणात् भीषितः त्रासितः । एतान् चतुर्विधान् परपक्षे परपक्षस्थितान् यथाभिलषितैः कामैः भिन्द्यात् विश्लेषयेत् । स्वपक्षे स्वपक्षस्थितान् लुब्धादीन् चतुर्विधान् यथाभिलषितैः कामैः प्रशमं शान्तिं नयेत् प्रापयेत् । उनिसा.

---

(१) कानी. १८।८ ; उनिसा. वर्षो ( हर्षो ).
(२) कानी. १८।१७.
(३) कानी. १८।२४ ; उनिसा. विप्र ( परि ).

(१) कानी. १८।२५ ; उनिसा. वेतनो ( स्वपणो ). पितोऽक ( पितः क ).
(२) कानी. १८।२६.

**[1]भेदं कुर्वीत यत्नेन मन्त्र्यमात्यपुरोधसाम् ।**
**तेषु भिन्नेषु भिन्नं हि युवराजे तथोर्जिते ॥**

(१) अमात्यः कर्मसचिवः । स चात्र अक्षपटलिको विज्ञेयः । ऊर्जिते लब्धप्रभावे । जम.

(२) युवराजस्य भेदोपायमाह— भेदमिति । मन्त्र्यमात्यपुरोधसाम्— मन्त्रिणः परामर्शदातुः अमात्यस्य सचिवस्य पुरोधसः पुरोहितस्य भेदं यत्नेन प्रयासेन कुर्वीत । विजिगीषुरिति शेषः । तेषां भेदस्य प्रयोजनमाह— तेष्विति । हि यतः तेषु मन्त्र्यमात्यपुरोधःसु भिन्नेषु भेदं प्राप्तेषु ऊर्जिते बलवति युवराजे भेदः, सुकर इति शेषः । उनिसा.

**[2]अमात्यो युवराजश्च भुजावेतौ महीपतेः ।**
**मन्त्री नेत्रं हि तद्भिन्न एतस्मिन्नपि तद्वधः ॥**

(१) भुजावेतौ, ताभ्यां राज्यभारस्योह्यमानत्वात् । पुरोहितस्य अमात्ये अन्तर्भावः । मन्त्री नेत्रम्, तेन संध्यादिपदार्थस्य आलोच्यमानत्वात् । तद्वधः महीपतिविनाशः । जम.

(२) अमात्यादीनामेकस्मिन् भिन्ने अन्यस्य भेदः सुकर इत्यभिधातुमाह— अमात्य इति । हि यतः महीपतेः राज्ञः अमात्यः युवराजश्च एतौ भुजौ बाहुभूतौ । मन्त्री नेत्रं चक्षुःस्वरूपः । तस्मात् अस्मिन्नेकस्मिन्नपि अमात्यादीनां यस्मिन् कस्मिन्नपि भिन्ने भेदं प्राप्ते तद्विधः तत्सदृशः, अन्यः भेद्यो भवतीति शेषः । उनिसा.

**[3]सर्वावस्थं तु मेधावी तत्कुलीनं विकारयेत् ।**
**विकृतस्तत्कुलीनस्तु स्वयोनिं ग्रसतेऽग्निवत् ॥**

(१) सर्वावस्थं क्षयलोभविरागप्राप्तं विकारयेत् संघर्षयेत् । अग्निवत् । अग्निर्हि अरणिमेव नाशयति । जम.

(२) यातव्यस्य कुलस्थितादीनां भेद्यत्वमभिधातुमाह— सर्वेति । मेधावी धीमान् सर्वावस्थं हि सर्वावस्थमेव तत्कुलीनं तस्य यातव्यस्य कुलीनं कुलस्थितं विकारयेत् विकारं प्रापयेत् । विकृतस्तु प्राप्तविकारः पुनः कुलीनः कुलस्थितः अग्निवत् अग्निरिव स्वयोनिं स्वस्य आत्मनः योनिम् आश्रयं ग्रसते नाशं प्रापयति । उनिसा.

**[4]तत्कुलीनेन तुल्यस्तु पुमानभ्यन्तरोषितः ।**
**तस्मादेतौ परे भिन्द्याच्छमं चाऽऽत्मनि संनयेत् ॥**

(१) तत्कुलीनेन तुल्यः, सर्वावस्थत्वात् । अभ्यन्तरोषितः विश्वासी । सोऽपि विकारितः तत्कुलीनवत् ग्रसते । तस्मादेतौ परे भिन्द्यात् । शममात्मनि संनयेत्, विकृतौ प्रशमयेदित्यर्थः । जम.

(२) अभ्यन्तरोषितः यातव्यपुराभ्यन्तरे कृतवासः पुमान् पुरुषः तत्कुलीनेन यातव्यकुलस्थितेन तुल्यः सदृशः । तस्मात् कारणात् एतौ कुलीनाभ्यन्तरोषितपुरुषौ परम् अतिशयं भिन्द्यात् भेदं प्रापयेत् । आत्मनि स्वपक्षे एतौ शमं शान्तिं संधयेत् प्रापयेत् । उनिसा.

**[5]तत्रोपजापः कर्तव्यो यः कोपानुग्रहक्षमः ।**
**स कल्याणः शठो वेति परीक्ष्यः सूक्ष्मया धिया ॥**

(१) कोपानुग्रहक्षम इति । कोपं कर्तुं शमयितुं च समर्थः । तत्र भेदः कार्यः । कल्याणः अविसंवादकः । शठः तद्विपरीत इति । जम.

(२) यः पुरुषः कोपानुग्रहक्षमः कोपे अनुग्रहे च शक्तः तत्र तस्मिन् पुरुषे उपजापः भेदः कर्तव्यः । सः

---

(१) कानी. १८।२७ ; नीम. ५७ भिन्नं ( भेदे ) र्जिते ( जितम् ) ; उनिसा. भिन्नं ( भेदो ).

(२) कानी. १८।२८ ; नीम. ५७ उत्तरार्धे ( मन्त्री नेत्रे हि भिन्नेऽस्मिन्नेकस्मिन्नपि तद्विधः ॥ ) ; उनिसा. उत्तरार्धे ( मन्त्री नेत्रं हि भिन्नेऽस्मिन्नेकस्मिन्नपि तद्विधः ॥ ).

(३) कानी. १८।२९ ; नीम. ५७ स्थं तु ( स्थं हि ) त्तत्कु ( न कु ) पू. ; उनिसा. स्थं तु ( स्थं हि ) स्तत्कु ( स्तु कु ).

(१) कानी. १८।३० ; उनिसा. परे ( परं ) संन ( संध ).

(२) कानी. १८।३१ ; नीम. ५७ पू.

पुरुषः कल्याणः शुभाकाङ्क्षी शठो वा धूर्तो वेति सूक्ष्मया निर्मलया धिया बुद्ध्या परीक्ष्यः परीक्षणीयः ।
उनिसा.

**'कल्याणस्तु यथाशक्ति करोति सफलं वचः ।**
**शठः पक्षौ चलयति द्वावप्यर्थोपलिप्सया ॥**

( १ ) सफलं कार्यानुष्ठानेन । पक्षौ चलयति अरिपक्षं विजिगीषुपक्षं च । संचाल्य अर्थमादत्ते केवलम्, न कार्यं घटयति । जम.

( २ ) कल्याणस्त्विति । कल्याणः शुभाकाङ्क्षी यथाशक्ति शक्तिमनतिक्रम्य वचः प्रभुवाक्यं सफलं फलयुक्तं करोति । अथ शठः धूर्तः अर्थोपलिप्सया धनलाभेच्छया द्वावपि पक्षौ यातव्यविजिगीषुपक्षौ चलयति चाञ्चल्ययुक्तौ करोति । यातव्यमन्त्रणां विजिगीषुपक्षे विजिगीषुमन्त्रणां यातव्यपक्षे च प्रकाशयतीति भावः । उनिसा.

**'पूर्वं संभाषितोऽनीचः कालयापनमाश्रितः ।**
**मिथ्याऽभिशस्तः श्रीकाम आहूयाप्रतिमानितः ॥**

( १ ) क्रुद्धादीन् भेदयेदित्युक्तम्, के क्रुद्धादय इत्याह— पूर्वं संभाषित इत्यादि । 'इदं ते दास्यामि' इति पूर्वमाभाषितः । अनीचः महात्मा । स तस्मादलब्धार्थः केवलं कालयापनमाश्रितः, नाऽऽत्मयापनया । स तेन राज्ञा संश्रुत्य अर्थात् विप्रलब्धः तस्मै कुप्यति विसंवादकोऽयमिति । मिथ्याऽभिशस्तः 'इदमनेन प्रतिषिद्धमाचरितम्' इति मिथ्यादूषितः कुप्यति । श्रीकामः व्यवहारे विजयार्थी । सः 'सम्यगहमेव ते व्यवहारं द्रक्ष्यामि' इत्याहूय अप्रतिमानितः पराजितः क्रुध्यति । एते त्रयः क्रुद्धवर्गे द्रष्टव्याः । जम.

( २ ) सप्तभिः श्लोकैरन्यान् भेद्यानाह— पूर्वेति । नीचः कुतश्चिदपराधात् पदच्युतः कालयापनमाश्रितः जीविकानिर्वाहार्थं यथाकथंचिन्निर्दिष्टवृत्तिकः पूर्वसेनापतिः भूतपूर्वसैन्याध्यक्षः । तथा मिथ्याऽभिशस्तः मिथ्याऽपवादग्रस्तः । राजपुरुष इति शेषः । श्रीकामः राज्यलक्ष्मीलोलुपः । आहूयाप्रतिमानितः आह्वानानन्तरं तिरस्कृतः । एतान् भिन्द्यादिति परेणान्वयः । एवमुत्तरत्रापि । उनिसा.

**'राजद्वेषी तत्कुलीनो द्विष्यते यश्च भूभुजा ।**
**आहितव्यवहारश्च तथा कारनिवेशितः ॥**

( १ ) राजद्वेषी स्वचित्तदोषादेव । स राज्ञो भीत इवाऽऽस्ते । तत्कुलीनः राज्याभिलाषी । तस्माच्छङ्काऽवश्यमेव । द्विष्यते यश्च भूभुजेति राजदोषात् दौर्भाग्याद्वा । स 'कथं द्वेष्योऽहम्?' इति ततः शङ्कित एव तिष्ठति । एते त्रयो भीतवर्गे । आहितव्यवहारः सर्वत्रैव निवेशितसंव्यवहारः । स बहूनां धारकस्तद्वित्तग्रहणार्थं लुभ्यति इत्ययं लुब्धवर्गे । कारनिवेशितः — कारः दण्डः, तत्र गुरुतरे नियुक्तः 'त्वयेदमाशु नेयम्' इति । स तस्मै कुप्यन् क्रुद्धवर्गे द्रष्टव्यः । जम.

( २ ) राजद्वेषी राजविरागी तत्कुलीनः राजकुलस्थितः, पुरुष इति शेषः । यश्च पुरुषः भूभुजा राज्ञा दूष्यते दोषास्पदीक्रियते । आहितव्यवसायः गृहीतजीविकोपायः । करनिवेशितः निष्करः सकरीकृतः ।
उनिसा.

**'रणप्रियः साहसिक आत्मसंभावितस्तथा ।**
**विच्छिन्नधर्मकामार्थः क्रुद्धो मानी विमानितः ॥**

( १ ) रणप्रियः स्वत एव मानी भवति । साहसिकः अविमृश्य यः सहसाऽऽचरति । स मानाधिक्यात् कार्याकार्यानपेक्षी । आत्मसंभावितः विद्याभिजनादिभिः कोऽन्योऽस्मदधिक इति । एते त्रयो मानिवर्गे । विच्छिन्नधर्मकामार्थः । धर्मादीनामर्थसाध्यत्वात् तदर्थं लुभ्यतीत्ययं लुब्धवर्गे । क्रुद्धः तीक्ष्णः, योऽहंकारमपि न सहते । स मानिवर्गे । मानी च विमानितः क्रुद्धवर्गे ।
जम.

---

( १ ) कानी. १८।३२.

( २ ) कानी. १८।३३ ; उनिसा. प्रथमचरणे ( पूर्वसेनापतिर्नीचः ).

( १ ) कानी. १८।३४ ; उनिसा. द्विष्य (दूष्य) हार (साय) कार (कर).

( २ ) कानी. १८।३५.

(२) रणप्रियः युद्धप्रियः । साहसिकः अविमृश्यकारी । आत्मसंभावितः आत्मनैव आत्मानं संभावयति, विद्याशौर्यादिभिः मत्समानोऽन्यो नास्तीति मन्यते यः सः । विच्छिन्नधर्मकामार्थः उन्मूलितधर्मादित्रिवर्गः । अन्यत् स्पष्टम् । उनिसा.

**[1]भीतः स्वदोषवित्रस्तः कृतवैरोऽतिसान्त्वितः ।**
**अतुल्येन सहाऽऽसक्तस्तुल्यमानान्निराकृतः ॥**

(१) भीतः राज्ञः प्रचण्डात् । स्वदोषवित्रस्तः आत्मदुश्चरितेन शङ्कितः । कण्टकान् मर्दयिष्यामीति राजकीयं दण्डं याचित्वाऽन्यान् हतवान् । स स्वयमुपहतत्वात् भीत एव तिष्ठति । कृतवैरः सान्त्वितः । स हि पूर्वकृतवैरात् ततोऽपकारमुत्प्रेक्षमाणो भीत एवाऽऽस्ते । एते त्रयो भीतवर्गे । अतुल्येन सहाऽऽसक्तः नीचेन सह कर्मसु नियुक्तः । स नीचेनोपहतत्वात् नष्टोत्कर्षमात्मानं मन्यमानो मानिवर्गे द्रष्टव्यः तुल्यमानादन्यस्मात् समानजातीयान्निराकृतः कृतहीनमानो राज्ञे कुप्यति विषमवृत्तोऽयमिति । अयं क्रुद्धवर्गे । जम.

(२) भीतः संजातभयः । स्वदोषाभिग्रस्तः स्वकृतापराधेन संजातत्रासः । कृतवैरोऽभिसान्त्वितः आदौ कृतवैरः कृतद्वेषः पश्चात् अभिसान्त्वितः कृतसान्त्वनः । 'अभिशान्त्वितः' इति मुद्रितपुस्तकपाठो न समीचीनः । अतुल्येन सहाऽऽदिष्टः अतुल्येन अयोग्येन सह आदिष्टः कर्मणि नियुक्तः । 'अतुल्येन सहाशक्तः' इति मुद्रितपुस्तकपाठो न सम्यक् । तुल्यमानान्निराकृतः तुल्यमानात् उपयुक्तसंमानात् निराकृतः प्रत्यादिष्टः । यः यादृक्संमानयोग्यः स तादृक्संमानवञ्चित इति भावः । 'तुल्यमानो निराकृतः' इति मुद्रितपुस्तकपाठो न सम्यक् । उनिसा.

**[2]अकारणनिरुद्धश्च कारणाच्च विशेषतः ।**
**अकारणात्परित्यक्तः पूजार्होऽप्रतिपूजितः ॥**

(१) अकारणनिरुद्ध इति शिल्पात् (?) स्वामिना यो बद्धः, कारणाच्च तद्दोषात् विशेषतः अत्यन्तं निरुद्धः । स बन्धनपरिक्लिष्टस्तस्मै कुप्यति । एवमकारणात् परित्यक्तः निर्वासितः । तदुभयं क्रुद्धवर्गे । पूजार्होऽप्रतिपूजितः मानिवर्गे क्रुद्धवर्गे वा । जम.

(२) अकारणात् कारणं विना निरुद्धः कृतनिरोधः । कारणाच्च उभयोः तुल्यापराधरूपकारणाच्च विशेषितः कृतविशेषदण्डैकतरः । उभयोः तुल्यापराधे पक्षपातेन एकः सापराधः कृतः अपरः परित्यक्तश्चेत् तदा यः सापराधः कृतः स भेद्यो भवतीति भावः । अन्यत् स्पष्टम् । उनिसा.

**[1]हृतद्रव्यकलत्रश्च महाभोगाभिकाङ्क्षितः ।**
**परिक्षीणो बहिर्बन्धुर्बहिर्द्रव्यो बहिष्कृतः ॥**

(१) हृतद्रव्यकलत्र इति । गृहीतं तु बहुद्रव्यं यस्याल्पस्वच्छचेतसोऽत्यन्तस्वल्पया यात्रया पूर्वराशिमादातुकामो दत्ततृष्णावकाशो लुब्धवर्गे । प्रसभात् भुक्तकलत्रश्च क्रुद्धवर्गे । महाभोगाभिकाङ्क्षितः भोगेनासंतुष्टोऽभिवर्धमानो महाभोगस्याभिकाङ्क्षिता मानिवर्गे । परिक्षीणः परितो युग्याद्यपचयात् दुर्भिक्षादेश्च कारणात् प्रासक्षयो लुभ्यन् लुब्धवर्गे । बहिर्बन्धुः प्रवासितबन्धुः घातितोऽनेन मे बन्धुरिति । बहिर्द्रव्यः दापितसर्वस्वः । स सर्वस्वमाहारितत्वात् छन्नतृष्णाबीजः कुप्यति । तदुभयं क्रुद्धवर्गे । बहिष्कृतः पापेन कर्मणा । सोऽसत्कर्माभिख्यातो भीत एवाऽऽस्ते किमयं करिष्यतीति । अयं भीतवर्गे । जम.

(२) हृतद्रव्यकलत्रः अपहृतधनदारः । महाभोगाभिकाङ्क्षकः महाभोगाभिलाषी । परिक्षीणः अल्पवित्तः । बहिर्बन्धुः बहिष्कृतबन्धुः । बहिर्द्रव्यः बहिष्कृतविभ्रयः । बहिष्कृतः पुरान्निःसारितः । एतत्त्रितयस्य बहिर्भावात् भेद्यत्वम् । 'महाभोगाभिकाङ्क्षितः' इति मुद्रितपुस्तकपाठः । तत्र महाभोगे अभिकाङ्क्षितम् अभिकाङ्क्षा यस्येति विग्रहः । भावे निष्ठाप्रत्ययः । उनिसा.

---

(१) कानी. १८।३६ ; उनिसा. षवित्र (षाभिग्र) ऽति (ऽभि) सक्त (दिष्ट).

(२) कानी. १८।३७ ; उनिसा. षतः (षितः).

(१) कानी. १८।३८; उनिसा. क्षितः (क्षकः).

[1]इति भेद्याः समाख्याता भिन्द्यादेतान् परे स्थितान् ।
आगतान् पूजयेत्कामैर्निजांश्च प्रशमं नयेत् ॥

(१) भिन्द्यादेतान् परे स्थितान् मुण्डजटिलव्यञ्जनैः । तद्यथा– "मदान्धो हस्ती मत्तेनाधिष्ठितो यद्यदासादयति तत्तत् प्रमृद्नाति, एवमयमशास्त्रचक्षुरन्धो राजा पौरजानपदानां वधायाभ्युत्थितः । शक्यमस्य प्रतिहस्तिप्रोत्साहनेनापकर्तुम् । अमर्षः क्रियताम्' इति क्रुद्धवर्गम् । 'यथा भीतः सर्पो यस्माद्भयं पश्यति तत्र पुरा क्रोधविषमुत्सृजति, एवमयं राजा जातदोषाशङ्कः त्वयि पुरा क्रोधविषमुत्सृजति । अन्यत्र गम्यताम्' इति भीतवर्गम् । 'यथा श्वगणिनां धेनुः श्वभ्यो दुग्धे न ब्राह्मणेभ्यः, एवमयं राजा सत्त्वप्रज्ञावाक्यशक्तिसंपन्नेभ्यो न दुग्धे न चाऽऽत्मगुणसंपन्नेभ्यः । असौ राजा पुरुषविशेषज्ञस्तत्र गम्यताम्' इति लुब्धवर्गम् । 'यथा चण्डालोदपानश्चण्डालानामेवोपभोग्यो नान्येषाम्, एवमयं राजा नीचो नीचानामेवोपभोग्यः न त्वद्विधानामार्याणाम् । असौ राजा पुरुषविशेषज्ञस्तत्र गम्यताम्' इति मानिवर्गम् ।" (कौ. १।१४) । कामैः तदभिलषितैः । निजान् आत्मीयान् ।　　जम.

(२) इति पूर्वोक्ताः भेद्याः भेदार्हाः समाख्याताः कथिताः । परस्थितान् यातव्यपक्षस्थितान् एतान् भिन्द्यात् विश्लेषयेत् । आगतान् उपजापक्रियया उपस्थितान् कामैः ये यस्य कामाः तैः पूजयेत् संमानयेत् । निजांश्च स्वपक्षस्थितांश्च प्रागुक्तभेद्यान् परिसाधयेत् । प्रशमं नयेत् ।　　उनिसा.

[2]समतृष्णानुसंधानमत्युग्रभयदर्शनम् ।
प्रधानं दानमानं च भेदोपायाः प्रकीर्तिताः ॥

(१) 'जलवत् भिन्द्यात्' इति लेशतो भेदस्योपाय उक्तः, तमेव स्पष्टमाह– समतृष्णानुसंधानमिति । अस्यानुष्ठाने यथा मे लाभस्तथा तवापीति । अननुष्ठाने त्वमेव न भविष्यसीति उग्रभयदर्शनम् । प्रधानम् उत्कृष्टम् ।　　जम.

(२) क्रोधादीनामपनयनेन भेदोपायमभिधातुमाह– सामेति । साम कृतलक्षणं भेदोपायो भवति । प्रियंवदे अनुरागो युक्तः । तृष्णानुसंधानं भेद्यानां विषयाभिलाषानुसंधानं भेदोपायो भवति । भेद्यतृष्णायामनुसंहितायां तद्विषयाशाप्रदर्शनेन भेद्यत्वं सुकरमिति भावः । समन्युभयदर्शनं क्रोधपूर्वकं भयप्रदर्शनं भेदोपायो भवति । प्रधानं भेदोपायानां मध्ये श्रेष्ठं दानमानं च । दानं अर्थार्पणम्, मानं गौरवम् । भेदोपायाः प्रागुक्तभेदसाधनानि ।　　उनिसा.

[1]भेदं कुर्वीत मतिमान् विगृहीतो बलीयसा ।
शण्डामर्कौ सुरैर्भित्त्वा बलवन्तौ पराजितौ ॥

(१) भेदव्याख्यानकं दर्शयितुमाह– भेदमिति । शण्डामर्कौ सुन्दोपसुन्दौ सोदर्यौ सुरैर्भित्त्वा पराजितौ तिलोत्तमां प्रणिधाय ।　　जम.

(२) भेदविषयमभिधातुमाह– भेदमिति । मतिमान् नीतिज्ञो विजिगीषुः बलीयसा अभ्युदितशक्तिना विगृहीतः विप्रकृतः सन् भेदं कुर्वीत । तमेवार्थं दृष्टान्तेन द्रढयति– षण्डेति । सुरैः देवैः बलवन्तौ अतिप्रबलौ षण्डामर्कौ षण्डामर्काभिधानौ भित्त्वा भेदं प्रापय्य पराजितौ ।　　उनिसा.

[2]दण्डेन हि समाहन्याद्भित्त्वाऽरेः संहतं बलम् ।
भिन्नं हि तत्काष्ठमिव घुणजग्धं विशीर्यते ॥

---

(१) कानी. १८।३९ ; नीम. ५७ त्कामैर्नि (त्स्वामी नि) प्रशमं न (परिसान्त्व) उत्त. ; उनिसा. परे स्थि (परस्थि) प्रशमं न (परिसाध).

(२) कानी. १८।४० ; उनिसा. सम (साम) नमत्युग्र (नं समन्यु).

(१) कानी. १८।४१ ; नीम. ५७ विगृ (निगृ) पू. ; उनिसा. शण्डा (षण्डा).

(२) कानी. १८।४२ ; नीम. ५७ घुण (जन्तु) ; उनिसा. घुणजग्धं (तृणदग्धं).

(१) * दण्डप्रयोगं श्लोकत्रयेणाऽऽह– दण्डेनेत्यादि। समाहन्यादिति। अरिबलं भित्त्वा पश्चाच्चतुरङ्गेण बलेन प्रकाशवधं कुर्यादित्यर्थः। जम.

(२) भेदफलमभिधातुमाह– दण्डेनेति। अरेः यातव्यस्य संहतं मिलितं बलं सैन्यं भित्त्वा भेदोपायैः भिन्नं कृत्वा दण्डेन दण्डविधिना समाहन्यात् नाशं प्रापयेत्। हि तथाहि इव यथा तृणदग्धं तृणप्रमाणं काष्ठम् इन्धनं विशीर्यते खण्डशो भवति तथा तत् सैन्यं भिन्नं सत् विशीर्यते। 'तृणदग्धम्' इत्यत्र 'घुणजग्धम्' इति पाठे घुणजग्धं घुणाख्येन कीटविशेषेण जग्धं भक्षितमित्यर्थः। उनिसा.

**[1]इति भेदं नृपः कृत्वा ततो यायाद्रिपोः पुरम्॥**

एवं सामदानभयादिना भेदं कृत्वेत्यर्थः। नीम. ५७

## शुक्रनीतिः

भेदमहिमा, भेदविषयाः

**[2]उपायेषूत्तमो भेदः षड्गुणेषु समाश्रयः।**
**कार्यौ द्वौ सर्वदा तौ तु नृपेण विजिगीषुणा॥**

उपायेषु सामादिषु मध्ये भेदः तथा षड्गुणेषु मध्ये समाश्रयः उत्तमः श्रेष्ठः। विजिगीषुणा नृपेण तौ द्वौ भेदसमाश्रयौ तु सर्वदा कार्यौ। शुनीटी.

**ताभ्यां विना नैव कुर्याद्युद्धं राजा कदाचन॥**

राजा ताभ्यां भेदसमाश्रयाभ्यां विना युद्धं कदाचन नैव कुर्यात्। शुनीटी.

**परस्परं प्रातिकूल्यं रिपुसेनपमन्त्रिणाम्।**
**भवेद्यथा तथा कुर्यात् तत्प्रजायाश्च तत्स्त्रियाः॥**

रिपूणां ये सेनपाः सेनापतयः मन्त्रिणश्च तेषां तथा तेषां प्रजायाश्च तथा तेषां स्त्रियाश्च यथा परस्परं प्रातिकूल्यं मनोभङ्गः भवेत् तथा कुर्यात्। शुनीटी.

* वस्तुतोऽत्र दण्डानुवादेन भेदस्यैव विधेयत्वं स्वरसतः प्रतीयते। नीम. उनिसा. इत्येतयोरप्यत्र संप्रतिपत्तिः।

(१) नीम. ५७.

(२) शुनी. ४।७।२९६–२९८.

## नीतिवाक्यामृतम्

भेदलक्षणम्

**[1]योगतीक्ष्णगूढपुरुषोभयवेतनैः परबलस्य परस्परशङ्काजननं निर्भर्त्सनं वा भेदः॥**

अथ भेदस्य स्वरूपमाह– योगतीक्ष्णेति। *परयोगः सैन्यस्य नायकः क्रियते। तीक्ष्णं विषम्, तद्यत्र संजायते। तथा गूढपुरुषाः अलक्षितपुरुषाः यत्र संजायन्ते। तथा उभयवेतनैः पुरुषैः यत्र शत्रोश्चेष्टितं ज्ञात्वा परस्परम् अन्योन्यं बलस्य परस्य च शत्रोः शङ्का उत्पद्यते निर्भर्त्सनं क्रियते वा स भेदः। तथा च गुरुः– 'सैन्यं विषं तथा गुप्ताः पुरुषाः सेवकात्मकाः। तैश्च भेदः प्रकर्तव्यो मिथः सैन्यस्य भूपतेः॥'। नीवाटी.

## युक्तिकल्पतरुः

भेदविषयाः

**[2]भेदं कुर्वीत यत्नेन मल्लामात्यपुरोधसाम्॥**

## मानसोल्लासः

भेदसाध्याः, भेदप्रकाराः

**[3]सामोपायैरसाध्या ये शत्रवो मदमोहिताः।**
**भेदोपायेन ते साध्या नृपेण विजिगीषुणा॥**
**क्षीरं नीरं यथा हंसो विश्लेषयति संहतम्।**
**तथा सुसंहताञ्शत्रून्भेदाद्विविश्लेषयेत्तु तान्॥**
**शत्रुस्थैरात्मपुरुषैर्गूढैरुभयवेतनैः।**
**भीतापमानितान् क्रुद्धान् भेदयेच्च नृसंगतान्॥**
**प्राणापहो मानभङ्गो धनहानिश्च बन्धकः।**
**दाराभिलाषोऽङ्गभङ्ग इति भेदोऽत्र षड्विधः॥**
**मन्त्रः सम्यङ्मया ज्ञातो नृपस्त्वां हन्तुमुद्यतः।**
**अद्य श्वो वाऽतितीक्ष्णैश्च किंचिन्नाद्यापि बुध्यसे॥**

* इदं व्याख्यानमप्रामाणिकम्। सूत्रार्थस्तु अतिरोहितः।

(१) नीवा. २९।७३.

(२) युक. १४।१०१.

(३) मासो. २।९८६–१००४.

पैशुन्येनाप्यनाख्याप्यहेतुभिः प्रत्ययात्मकैः ।
भीतिरुत्पद्यते यत्र स भेदः प्राणहा स्मृतः ॥
त्वद्द्विषत्प्रेरितो राजा तव मानं हरिष्यति ।
एवं विद्वेष्य यो भेदो मानभङ्गः स वर्णितः ॥
धनिकोऽयं महानेव तव किंचिन्न दित्सति ।
केनाप्युपायेन तस्माद्धनमाहर्तुमर्हति ॥
इति संमन्त्र्य भूपेन तद् ब्रूते धनिकाय च ।
अर्थलुब्धो ह्ययं राजा तव द्रव्यं हरिष्यति ॥
यत्रैवं पिशुनत्वेन भिनत्त्युभयवेतनः ।
धनहानिस्त्वयं भेदो नीतिज्ञैः समुदाहृतः ॥
न करोति तव स्वामी विश्वासं त्वयि कर्हिचित् ।
बन्धयित्वा तु निगडैः कारागारे निधास्यति ॥
इति विश्वासमुद्भाव्य निजस्वामिहिते रतः ।
यद्भिनत्ति परं बुद्ध्या स भेदो बन्धकः स्मृतः ॥

विलासी चपलो भोगी रूपवाँस्तरुणो विटः ।
अन्तःपुरे मदीयां स्त्रीं कटाक्षैः स्प्रष्टुमीहते ॥
वध्योऽयमिति भूपालो मया सार्धममन्त्रयत् ।
इति यं कुरुते भेदं स स्याद् दाराभिलाषकः ॥
त्वद्भार्यां रूपसंपन्नां नवयौवनशालिनीम् ।
ममाग्रे वर्णयन् राजा सापेक्ष इति लक्षितः ॥
त्वयि जीवत्यलभ्यत्वात्तव द्रोहं विधास्यति ।
दाराभिलाषभेदोऽयमेवं वा परिकीर्तितः ॥
अयमस्मिन्कुले जातः कदाचिद्राज्यमिच्छति ।
अङ्गुली वा तथा नेत्रे संततः साधनानि च ॥
छेत्तुं निश्चितवान् राजा सर्वथा तत् करिष्यति ।
इति यो निर्मितो भेदः सोऽङ्गभङ्गः प्रकीर्तितः ॥
सम्यग्भेदेन शत्रूणां भिनत्ति प्रकृतिं तु यः ।
भेदवज्रेण तद्भिन्नं हृदयं प्रतिभूभृतः ॥

## * दण्डः

—♦—

### गौतमः

न्याय्यदण्डत्वम्

[1]दण्डो दमनादित्याहुस्तेनादान्तान् दमयेत् ॥

( १ ) दमयत्यदान्तान् दम्यन्ते वाऽस्मिन्निति दण्डः । यतश्च दमनयोगाद्दण्ड इत्येवं मन्वादय आहुः । यथाऽऽह मनुः– 'देवदानवगन्धर्वा रक्षांसि पतगोरगाः । तेऽपि भोगाय कल्पन्ते दण्डेनैव निपीडिताः ॥' ( मस्मृ. ७।२३ ) इति । अतो यो यथा दम्यते वाचा धनादिना वा । यथाऽऽह मनुः– 'धिग्दण्डं प्रथमं कुर्याद्वाग्दण्डं तदनन्तरम् । तृतीयं धनदण्डं तु वधदण्डं त्वतः परम् ॥' ( मस्मृ. ८।१२९ ) इति । एवं कुर्याद्दौःशील्यादिना विकर्मस्थान् । † मभा.

‡[2]न्याय्यदण्डत्वम् ॥

[3]पुरुषशक्त्यपराधानुबन्धविज्ञानाद्दण्डनियोगः ॥

( १ ) पुरुषविज्ञानाज्जात्यादि ज्ञात्वेत्यर्थः । शक्तिः दुर्बलत्वादिः । अपराधः साहसभाषणादिः । यथाऽऽह वसिष्ठः– 'स्तेनोऽनुप्रवेशान्न दुष्यते, शस्त्रधारी सहोढो व्रणसंपन्नश्च व्यपदिष्टस्त्वेकेषाम्' ( वस्मृ. १९।२६ ) इति । अनुबन्धः अध्यवसायः । एतानवधार्य दण्डधारणं कर्तव्यम् । मभा.

( २ ) पुरुषः ब्राह्मणादिजातिः । शक्तिः अर्थदण्डे बह्वर्थोऽल्पार्थ इति, शरीरदण्डे दुर्बलः प्रबलो वेति चिन्ता । अपराधः साक्षात्कर्तृत्वं साचिव्यकर्तृत्वं वेति । अनुबन्धः अभ्यासः । एतान् पुरुषादीन् विज्ञाय तदनुरूपो दण्डो नियोक्तव्य इति । गौमि.

### वृद्धहारीतः

[1]न्यायेन दण्डनं राज्ञः स्वर्गकीर्तिकरं भवेत् ।
अन्यायदण्डनं राज्ञः स्वर्गकीर्तिविनाशनम् ॥
अदण्ड्यान्दण्डयन्राजा तथा दण्ड्यानदण्डयन् ।
अयशो महदाप्नोति नरकं चाधिगच्छति ॥
धिग्दण्डस्त्वथ वाग्दण्डो धनदण्डो वधस्तथा ।
ज्ञात्वाऽपराधं देशं च जनं कालमथाऽपि वा ॥
वयः कर्म च वित्तं च दण्डं न्यायेन पातयेत् ।
निश्चित्य शास्त्रमार्गेण विद्वद्भिः सह पार्थिवः ॥
गुरूणां तु गुरुं दण्डं पापानां च लघोर्लघुम् ।
व्यवहारान्स्वयं पश्यन्कुर्यात्सद्भिर्वृतोऽन्वहम् ॥
अदण्डयित्वा दुर्वृत्तांस्तत्पापं पृथिवीपतिः ।
संप्राप्य निरयं गच्छेत्तस्मात्तान्दण्डयेत्तथा ॥

---

* स्वविषयदण्डः परविषयदण्डश्चेति द्विविधो दण्डः । तत्र स्तेयाद्यपराधमूलकः स्वप्रजाविषयको दण्डः स्वविषयदण्डः, शत्रुविषयकः परविषयदण्डः । स उभयविधोऽपि दण्डः उपायविशेषबोधकदण्डशब्दबोध्य इति विष्णुधर्मोत्तरीयादौ राजनीतिप्रकाशे च स्पष्टम् । तत्र स्वविषयदण्डो व्यवहारकाण्डस्य विषय इति तत्र विस्तरेण संगृहीतः, अत्र तु दिङ्मात्रं संगृहीतम् । परविषयदण्डस्तु एतत्प्रकरणस्यैव विषय इति कृत्स्नोऽत्र संगृहीतः ।

† गौमि. मभागतम् ।

‡ व्याख्यानसंग्रहः 'राजकर्तव्यानि' इत्यस्मिन्प्रकरणे ( पृ. १०२१ ) द्रष्टव्यः ।

( १ ) गौध. ११।३० ; मभा. ; गौमि. ११।२८.

( २ ) गौध. १०।८ ; मभा. ; गौमि. 'न्यायदण्डत्वम्' इत्यपि पाठः.

( ३ ) गौध. १२।४८ ; मभा. ; गौमि.

( १ ) वृहास्मृ. ७।१९३–१९७, २२१.

## आपस्तम्बः

प्रायश्चित्तीया दण्ड्याश्च, अपराधानुरूपो दण्डः, दण्डने राजाऽधिकृतः

**[1]शास्त्रैरधिगतानामिन्द्रियदौर्बल्याद्विप्रतिपन्नानां शास्ता निर्वेषमुपदिशेद्यथाकर्म यथोक्तम् ॥**

यथाशास्त्रं गर्भाधानादिभिः संस्कारैः संस्कृताः शास्त्रैरधिगताः, तेषाम् इन्द्रियदौर्बल्यात् अजितेन्द्रियतया विप्रतिपन्नानां स्वकर्मतश्च्युतानां निषिद्धेषु च प्रवृत्तानां शास्ता शासिता आचार्यादिः निवर्षं प्रायश्चित्तम् उपदिशेत् यथाकर्म कर्मानुरूपम्, यथोक्तं धर्मशास्त्रेषु । उ.

**तस्य चेच्छास्त्रमतिप्रवर्तेरन् राजानं गमयेत् ॥**

तस्य चेत् शासितुः शास्त्रं शासनम् अतिप्रवर्तेरन् न तत्र तिष्ठेयुः, राजानं गमयेत्— 'एवमसौ करोति' इति । उ.

**राजा पुरोहितं धर्मार्थकुशलम् ॥**

स राजा धर्मशास्त्रेष्वर्थशास्त्रेषु कुशलं च पुरोहितं गमयेत्— 'विनीयतामसौ' इति । उ.

**स ब्राह्मणान्नियुञ्ज्यात् ॥**

सः पुरोहितः ब्राह्मणाश्चेदतिक्रमणकारिणः प्रापिताः तान् नियुञ्ज्यात् अनुरूपेषु प्रायश्चित्तेषु नियुञ्जीत । उ.

**बलविशेषेण वधदास्यवर्जं नियमैरुपशोषयेत् ॥**

अथ यदि ते तत्रापि न तिष्ठेयुस्तदा किं कर्तव्यमित्यत आह— बलविशेषेणेति । ततस्तान् नियमैः उपवासादिभिः उपशोषयेत् बलविशेषेण बलानुरूपं वधदास्यवर्जम्, वधः ताडनादि, वधं दास्यं ज वर्जयित्वा । सर्वमन्यत् बन्धनादिकं बलानुरूपं कारयेत् यावत्ते मन्येरन् चरेम प्रायश्चित्तमिति । उ.

**इतरेषां वर्णानामा प्राणविप्रयोगात्समवेक्ष्य तेषां कर्माणि राजा दण्डं प्रणयेत् ॥**

(१) आध. २।१०।१३–२।११।४.

एवं ब्राह्मणविषये उक्तम् । इतरेषामाह— इतरेषामिति । इतरेषां ब्राह्मणव्यतिरिक्तानां वर्णानां राजा पुरोहितोक्तं दण्डं स्वयमेव प्रणयेत् तेषां कर्माणि समवेक्ष्य तदनुरूपमा प्राणविप्रयोगात् । अभिविधौ आकारः । उ.

**न च संदेहे दण्डं कुर्यात् ॥**

अपराधसंदेहे राजा दण्डं न कुर्यात् । उ.

**सुविचितं विचित्याऽऽदैवप्रश्नेभ्यो राजा दण्डाय प्रतिपद्येत ॥**

आ दैवप्रश्नेभ्यः साक्षिप्रश्नादिभिः शपथान्तैः सुविचितं यथा भवति तथा विचित्य निरूप्य राजा दण्डाय प्रतिपद्येत उपक्रमेत । उ.

**एवंवृत्तो राजोभौ लोकावभिजयति ॥**

एवं कुर्वतः फलमाह— एवंवृत्त इति । एवंभूतं वृत्तं यस्य स एवंवृत्तः । अत्र मनुः— 'अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् । अयशो महदाप्नोति प्रेत्य स्वर्गाच्च हीयते ॥' (मस्मृ. ८।१२८) इति । उ.

**[1]प्राप्तनिमित्ते दण्डाकर्मणि राजानमेनः स्पृशति ॥**

प्राप्तं दण्डनिमित्तं यस्य तस्मिन् पुरुषे दण्डाकर्मणि दण्डस्याक्रियायां यदि दययाऽर्थलोभेन वा प्राप्तदण्डं न कुर्यात् तदा तदेनो राजानमेव स्पृशति । उ.

## वसिष्ठः

चत्वारो वर्णाः स्वधर्मापचारे राज्ञा दण्ड्याः, दण्ड्यस्य अदण्डने राजपुरोहितौ प्रायश्चित्तार्हौ

**[2]देशधर्मजातिधर्मकुलधर्मान् सर्वानेवैताननुप्रविश्य राजा चतुरो वर्णान् स्वधर्मे स्थापयेत् ॥**

**तेष्वपचरत्सु दण्डं धारयेत् ॥**

**दण्डस्तु देशकालधर्मवयोविद्यास्थानविशेषैर्हिंसाक्रोशयोः कल्प्य आगमाद् दृष्टान्ताच्च ॥**

**दण्ड्योत्सर्गे राजैकरात्रमुपवसेत् ॥**

(१) आध. २।२८।१४.

(२) वस्मृ. १९।५–७, २६–३१.

त्रिरात्रं पुरोहितः ॥
कृच्छ्रमदण्ड्यदण्डने पुरोहितः ॥
त्रिरात्रं राजा ॥
अथाप्युदाहरन्ति–
अन्नादे भ्रूणहा मार्ष्टि पत्यौ भार्याऽपचारिणी ।
गुरौ शिष्यश्च याज्यश्च स्तेनो राजनि किल्बिषम् ॥
राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः ।
निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥
एनो राजानमृच्छति उत्सृजन्तं सकिल्बिषम् ।
तं चेद्घातयते राजा हन्ति धर्मेण दुष्कृतम् ॥
इति ॥

## विष्णुः

दण्डः अपराधानुरूपो राज्ञा प्रणेयः, दण्ड्योत्सर्गे राजा स्वयं दण्डार्हः

[1]अपराधानुरूपं च दण्डं दण्ड्येषु दापयेत् ॥
सम्यग्दण्डप्रणयनं कुर्यात् ॥
द्वितीयमपराधं न स कस्यचित् क्षमेत ॥
स्वधर्ममपालयन्नादण्डयो नामास्ति राज्ञः ॥
[2]स्वराष्ट्रे न्यायदण्डः स्याद्भृशदण्डश्च शत्रुषु ।
सुहृत्स्वजिह्मः स्निग्धेषु ब्राह्मणेषु क्षमान्वितः ॥
[3]अपराधेषु चान्येषु ज्ञात्वा जातिं धनं वयः ।
दण्डं प्रकल्पयेद्राजा संमन्त्र्य ब्राह्मणैः सह ॥
[4]दण्ड्यं प्रमोचयन्दण्ड्याद्द्विगुणं दण्डमावहेत् ।
नियुक्तश्चाप्यदण्ड्यानां दण्डकारी नराधमः ॥
यस्य चौरः पुरे नास्ति नान्यस्त्रीगो न दुष्टवाक् ।
न साहसिकदण्डघ्नौ स राजा शक्रलोकभाक् ॥

---

(१) विस्मृ. ३।९१–९४, ९६.
(२) विस्मृ. ३।९६.
(३) विस्मृ. ५।१९४ ; पमा. ३९८ अपराधेषु चा (आगःस्वपि तथा) प्रकल्पये (तु प्रणये) संमन्त्र्य (सामन्त).
(४) विस्मृ. ५।१९५–१९६.

## महाभारतम्

दण्डप्रकाराः

*[1]विभज्य दण्डः कर्तव्यो धर्मेण न यदृच्छया ।
दुर्वाचा निग्रहो बन्धो हिरण्यं बाह्यतः क्रिया ॥
व्यङ्गत्वं च शरीरस्य वधो वा नाल्पकारणात् ।
शरीरपीडास्तास्तास्तु देहत्यागो विवासनम् ॥

उपायानां दण्डः प्रधानः

[2]नित्यमुद्यतदण्डः स्यान्नित्यं विवृतपौरुषः ।
अच्छिद्रश्छिद्रदर्शी च परेषां विवरानुगः ॥
[3]नित्यमुद्यतदण्डस्य भृशमुद्विजते जनः ।
तस्मात्सर्वाणि भूतानि दण्डेनैव प्ररोधयेत् ॥
[4]एवमेव प्रशंसन्ति पण्डितास्तत्त्वदर्शिनः ।
तस्माच्चतुष्टये तस्मिन् प्रधानो दण्ड उच्यते ॥
[5]परिमाणं विदित्वा च दण्डं दण्ड्येषु भारत ।
प्रणयेयुर्यथान्यायं पुरुषास्ते युधिष्ठिर ॥

परिमाणं दण्ड्यधनस्य अपराधस्य च । नीटी.

[6]आदानरुचयश्चैव परदाराभिमर्शनः ।
उग्रदण्डप्रधानाश्च मिथ्या व्याहारिणस्तथा ॥
[7]आक्रोष्टारश्च लुब्धाश्च हन्तारः साहसप्रियाः ।
सभाविहारभेत्तारो वर्णानां च प्रदूषकाः ।
हिरण्यदण्ड्या वध्याश्च कर्तव्या देशकालतः ॥

---

* अस्य श्लोकद्वयस्य व्याख्यानं शेषस्थलादिनिर्देशश्च 'राजनीतेः सामान्यसिद्धान्ताः ०' इत्यस्मिन् प्रकरणे (पृ. ६२१) द्रष्टव्यः ।
(१) भा. १२।१२२।४०–४१.
(२) भा. १२।१३८।७ ; भामु. १२।१४०।७.
(३) भा. १२।१३८।८ ; भामु. १२।१४०।८ जनः (नरः) रोध (साध).
(४) भा. १२।१३८।९ ; भामु. १२।१४०।९ वमेव (वं दण्डं).
(५) भा. १५।१०।२ ; भामु. १५।५।२८–२९.
(६) भा. १५।१०।३ ; भामु. १५।५।२९–३० मर्शः (मर्शि).
(७) भा. १५।१०।४ ; भामु. १५।५।३०–३१ हन्ता (हर्ता).

आदानरुचयः उत्कोचोपजीविनः चौरा वा । हिरण्यदण्ड्या वध्याः । पूर्वोक्ताः सर्वे देशकालानुरोधेन दण्ड्या वा वध्या वेति ज्ञेयम् । नीटी.

## वाल्मीकिरामायणम्

### दण्डस्य उपायता

[1]उपायांस्त्रीनतिक्रम्य तत्त्वयोगांस्तथैव च ।
दुर्बलेन तु रामेण वयं दण्डेन तर्जिताः ॥
न तु नाम वयं युक्तास्तेन सामादिभिर्गुणैः ।
दुर्बलेन बलैर्युक्ताः सर्वशस्त्रैः प्रसाधितुम् ॥
दण्डस्तस्य तु पर्याप्त एतदेवात्र कारणम् ।
उपायांस्त्रीनतिक्रम्य यद्दण्डरुचिरेव सः ॥
एवं कृत्वा यथान्यायं दण्डस्तस्य तु साधकः ।
दण्डस्तस्य तु योक्तव्यो ह्यनुरूपश्च सर्वथा ॥
सुखं चैव हि नो युक्तमनुरूपं च सर्वदा ।
अथवा अस्य वैगुण्यं बुद्धेः प्रत्यादिशन्ति च ॥
सामादीनग्रतः कर्तुं भवेद्युक्तं निदर्शनम् ।
तत्रापि सुमहान् दोषः सर्वतः प्रतिभाति मे ॥
यत्परः सहसा कुर्याद्विग्रहं बलवानिव ।
शास्त्रविद्वाक्यकुशलः सुहृत्सप्रतिभः शुचिः ॥
कुले महति चोत्पन्नो दूत एष सतां मतः ।
विपरीतगुणो राजन् रामेण प्रहितश्चरः ॥
आत्मकार्यविघातार्थमनयं संप्रदर्शयन् ।
ईदृशस्य ततः कर्तुं कथं युक्तं भवेदिह ।
युद्धकाले सहायस्य बुद्धिमोहादिहेश्वर ॥
एवमभ्याहितः श्रीमान् युद्धकालोऽयमागतः ।
चिरात्प्रभृति योधानामनिशं युद्धकाङ्क्षिणाम् ॥

### दण्डमहिमा

[2]प्रशमश्च क्षमा चैव मार्दवं प्रियवादिता ।
असामर्थ्यफला ह्येते निर्गुणेषु सदा गुणाः ॥

[1]आत्मप्रशंसानिरतं धृष्टं वाऽप्रियवादिनम् ।
सर्वत्रोत्सृष्टदण्डं च लोकः सत्कुरुते नरम् ॥
[2]न साम्ना शक्यते कीर्तिर्न साम्ना शक्यते यशः ।
प्राप्तुं लक्ष्मण लोकेऽस्मिञ्जयो वा रणमूर्धनि ॥
[3]क्षमया च समायुक्तं मामयं वरुणालयः ।
असमर्थं विजानीते धिक् क्षमामीदृशे जने ॥
[4]चापमानय सौमित्रे शरांश्चाऽऽशीविषोपमान् ।
क्रूरस्योद्धतदण्डस्य लोकोऽयमनुवर्तते ॥
[5]दण्ड एव परो लोके दुर्जने प्रतिभाति नः ।
न क्षमाद्यकृतज्ञेषु सान्त्वदानमथापि वा ॥
[6]तितीर्षोः सागरजलं सेतुकर्मचिकीर्षया ।
ददौ दण्डभयाद्गाधं राघवस्य महोदधिः ॥

### सान्त्वादि त्रयं शुभम्, युद्धमशुभम्

[7]सान्त्वं भेदस्तथा दानं राज्ञामेतत्त्रयं शुभम् ॥
[8]अशुभं तु स्मृतं युद्धं तस्माद्युद्धं विवर्जयेत् ।
त्रिभिर्नैर्यर्जितं तत्र विक्रमेण जितं भवेत् ॥

---

(१) वारा. ५।८२।१०-१९.

(२) वारा. ५।९५।५ ; वाराकु. ६।२१।१५ मार्दवं (आर्जवं) र्थ्यफला ह्येते (र्थ्यं फलन्त्येते) सदा (सतां).

---

(१) वारा. ५।९५।६ ; वाराकु. ६।२१।१६ पूर्वार्धे (आत्मप्रशंसिनं दुष्टं धृष्टं विपरिधावकम् ।).

(२) वारा. ५।९५।७ ; वाराकु. ६।२१।१७.

(३) वारा. ५।९५।८ ; वाराकु. ६।२१।२१ च (हि) वरुणा (मकरा) जानीते (जानाति).

(४) वारा. ५।९५।९ ; वाराकु. ६।२१।२३ पू.

(५) वारा. ५।९७।५ ; वाराकु. ६।२२।४७ (दण्ड एव वरो लोके पुरुषस्येति मे मतिः । धिक् क्षमामकृतज्ञेषु सान्त्वं दानमथापि वा ॥ ).

(६) वारा. ५।९७।६ ; वाराकु. ६।२२।४८ पूर्वार्धे (अयं हि सागरो भीमः सेतुकर्मदिदृक्षया । ) घवस्य (घवाय).

(७) वारा. ६।३५।३९ ; वाराकु. ६।५८ तः उत्तरं प्रक्षिप्तः१।३८ भेदस्त (भेदं त).

(८) वारा. ६।३५।४० ; वाराकु. ६।५८ तः उत्तरं प्रक्षिप्तः१।३८ स्मृतं (स वै) वर्जे (सर्जे) उत्तरार्धे (त्रिभिर्नैर्यैर्जितं मन्ये सहितं विक्रमेण तु ॥ ).

[5]चञ्चला युद्धसिद्धिस्तु जीयते न च जीयते ।
तस्माद्युद्धं न रोचेत संधिं कुरु दशानन ॥

राज्ञः कर्तव्यं न्याय्यदण्डप्रणयनम्

[2]सम्यक् प्रणिहिते दण्डे प्रजा भवति रक्षिता ॥
[3]भृग्वाङ्गिरसकुत्साद्या वसिष्ठादिसकश्यपाः ।
धर्मपाठकमुख्याश्च सचिवा नैगमास्तथा ।
एते चान्ये च बहवः पण्डितास्तत्र संगताः ॥
[4]अवध्यो ब्राह्मणोऽदण्ड्य एवं शास्त्रविदो विदुः ।
ब्रुवते राघवं सर्वे राजधर्मेष्वधिष्ठिताः ॥
[5]ततः परमसंहृष्टः प्रत्युवाच महातपाः ॥
[6]प्रीतोऽस्मि परमोदार कर्ता चासि न संशयः ।
दण्डेन च प्रजा रक्षन्न च दण्डमकारणम् ॥
[7]अपराधेषु यो दण्डः पात्यते पुरुषर्षभ ।
स दण्डो विधिवद्युक्तः स्वर्गं नयति पार्थिवम् ॥
[8]तस्मिन्दण्डे महाबाहो यत्नवान् भव पुत्रक ।
धर्मस्ते परमो लोके कृत एव भविष्यति ॥

(१) वारा. ६।३५।४२ ; वाराकु. ६।५८ ततः उत्तरं प्रक्षिप्तः १।४० द्वितीयचरणे ( हन्यते तेजसाऽपि वा ).

(२) वारा. ७।६२।२८ ; वाराकु. ७।५९ ततः उत्तरं प्रक्षिप्तः २।३०.

(३) वारा. ७।६२।२९ ; वाराकु. ७।५९ ततः उत्तरं प्रक्षिप्तः २।३१ भृग्वा ( भृग्व ) द्वितीयचरणे ( वसिष्ठश्च सकाश्यपः ) पाठक ( पालक ).

(४) वारा. ७।६२।३० ; वाराकु. ७।५९ ततः उत्तरं प्रक्षिप्तः २।३२ ऽदण्ड्य एवं ( दण्डैरिति ) ष्वधि ( षु नि ).

(५) वारा. ७।८१।७ ; वाराकु. ७।७९।७ ( ततः परमसंतुष्टो मनुः पुत्रमुवाच ह ॥ ).

(६) वारा. ७।८१।८ ; वाराकु. ७।७९।८ कर्ता चासि ( त्वं कर्ताऽसि ) रक्षन्न ( रक्ष मा ) रणम् ( रणे ).

(७) वारा. ७।८१।९ ; वाराकु. ७।७९।९ राधेषु ( राधिषु ) पुरुषर्षभ ( मानवेषु वै ) द्युक्तः ( न्मुक्तः ).

(८) वारा. ७।८१।१० ; वाराकु. ७।७९।१० स्मिन्द ( स्माद् ) धर्मस्ते ( धर्मो हि ) कृत एव ( कुर्वतस्ते ).

## कौटिलीयमर्थशास्त्रम्

दण्डलक्षणम्

[1]वधः परिक्लेशोऽर्थहरणं दण्ड इति ॥

दण्डं व्याचष्टे— वध इत्यादि । वधः व्यापादनम् । परिक्लेशः बन्धनताडनादिभिः दुःखोत्पादनम् । अर्थहरणं धनापहारः । इदं त्रयं दण्डः । श्रीमूला.

## मनुः

नित्योद्यतदण्डत्वं राजधर्मः

*[2]नित्यमुद्यतदण्डः स्यात् ॥

(१) उद्यतदण्डो विपरिताचारेषु । मवि.

(२) अथवा दण्डः दण्ड्यानां दण्डनम्, तत् उद्यतं यस्य स तादृशः । राप्र. १३४

(३) धर्मान्तरमाह— नित्यमिति । उद्यतदण्डः स्यात् कृतापराधदमनोद्यतः स्यात् । नन्द.

[3]नित्यमुद्यतदण्डस्य कृत्स्नमुद्विजते जगत् ।
तस्मात्सर्वाणि भूतानि दण्डेनैव प्रसाधयेत् ॥

(१) सर्वाणि भूतानि स्वकर्तव्येऽनवस्थितानि । मवि.

(२) समुद्यतदण्डस्य प्रत्यक्षं फलमाह— नित्यमिति । उद्विग्नं सत् जगत् अस्वातन्त्र्यान्नानिष्टाय समर्थमिति नित्यदण्डः प्रशस्त इति भावः । मच.

(३) उद्विजते बिभेति । तेन च प्रतापख्यातिर्भवतीत्यर्थः । राप्र. १३४

* दण्डशब्दः सैन्यपरो दण्ड्यदमनपरश्च । तत्र सैन्यपराणि अस्याग्रिमश्लोकस्य च व्याख्यानानि 'बलम्' इत्यस्मिन्प्रकरणे ( पृ. १५१० ) संगृहीतानि । दमनपराणि तु केवलमत्र संगृहीतानि ।

(१) कौ. २।१०.

(२) मस्मृ. ७।१०२ ; राक. १५१ मुद्यत (मुद्धृत) ; राप्र. १३३.

(३) मस्मृ. ७।१०३ ; राक. १५१ मुद्यत (मुद्धृत) ; राप्र. १३४.

देशकालादिसापेक्षं दण्डविधानम्

**[१]तं देशकालौ शक्तिं च विद्यां चावेक्ष्य तत्त्वतः।**
**यथार्हतः संप्रणयेन्नरेष्वन्यायवर्तिषु ॥**

(१) अन्यायवर्तिनो ये राजापथ्यकारिणो महामात्यादयस्तेषामयं दण्ड उच्यते। अन्येषां तु परस्परव्यवहारिणाम् 'अनुबन्धं परिज्ञाय' (मस्मृ. ८।१२६) इत्यत्रोच्यते। तत्रैव चायं श्लोको व्याख्यातः। विद्याऽत्राधिका, सा च वेदार्थविषया। यथार्हतः यथार्हं यो यस्य योग्य इत्यर्थः। संप्रणयेत् प्रवर्तयेत् कुर्यादिति यावत्। एतत्सर्वम् अवेक्ष्य निरूप्य तत्तदपेक्षो दण्डः कर्तव्यः। अन्यथाप्रणीतो राज्ञो दृष्टमनर्थमावहेत्। दृष्टादृष्टभेदेन स्वप्रकृतिजनपदभेदेन सप्तमाष्टमयोर्दण्डमातृकाश्लोकयोर्भेदः। मेधा.

(२) तं दण्डं ग्राम्यारण्यादिदिवानक्ताद्यपराधकत्वाद्राजकत्वस्वगतदेशकालौ (?) विचार्य अपराधिसंबन्धि च शरीरधनसामर्थ्यं वेदाध्ययनादि सम्यगवेक्ष्य अन्यायकारिषु नरेषु अपराधानुरूपं कुर्वीत। * गोरा.

(३) देशकालादि तु अरण्यरात्र्यादिकृतत्वेन दण्डाधिक्यात्। शक्तिं धनदाने। विद्यामिति वेदादिपाठशीलतया दण्डाल्पतार्थम्। मवि.

(४) कष्टं (? कथं) तत्प्रणयनमित्याह— तमिति। दण्डस्य देशकालौ शास्त्रानुसारेणावेक्ष्य यथार्हतः यस्मिन्नपराधे यो यं दण्डमर्हति तदनतिक्रमेण संप्रणयेत्। देशं दूरनिकटादिम्। कालं दुर्भिक्षादिम्। विद्यां अस्त्रशिक्षादिकां वेदविद्यां च। अन्यायवर्तिषु अन्यथागामिषु। मच.

(५) शक्तिं सहनशक्तिम्। राप्र. २८४

(६) शक्तिः बालो वृद्धो दरिद्रो धनवानित्यादिरूपा। † नन्द.

---

* शेषं मेधागतम्। ममु. भाच. गोरागतम्।

† शेषं मचगतम्।

(१) मस्मृ. ७।१६; राक. ६ तत्त्वतः (शक्तितः); राप्र. २८४, २९२.

**[१]अनुबन्धं परिज्ञाय देशकालौ च तत्त्वतः।**
**सारापराधौ चाऽऽलोक्य दण्डं दण्ड्येषु पातयेत् ॥**

(१) उक्तानुक्तदण्ड्येष्वपराधेषु मातृकाश्लोकोऽयम्। एतदर्थानुसारेण सर्वत्र दण्डक्लृप्तिः कर्तव्या। तत्र पौनःपुन्येन प्रवृत्तिः अनुबन्धः प्रवृत्तिकरणं वा, अनुबध्यते प्रयुज्यते येन तस्मिन् कर्मणि। तं परिज्ञाय। किमयमात्मकुटुम्बक्षुदवसादेन धर्मतन्त्रप्रसङ्गेन वा, अथ मद्यद्यूतादिशौण्डतया, तथा प्रमादात् बुद्धिपूर्वं वा, परप्रयुक्तः स्वेच्छया वेत्यादिरनुबन्धः। देशः ग्रामारण्यगृहजलजन्मप्रसवभूम्यादिः। कालः नक्तंदिवादिः सुभिक्षदुर्भिक्षबाल्ययौवनादि वा। सारः शक्त्यशक्ती आढ्यत्वदारिद्र्ये। अपराधः अष्टादशानां पदानामन्यतमः। एतत्सर्वं पौर्वापर्येण निरूप्य तथा दण्डं पातयेत् कुर्यात् यथा स्थितिः सांसारिकी न भ्रश्यतीति। मेधा.

(२) पुनःपुनरिच्छतोऽपराधकरणमवलोक्य ग्रामारण्यादि चापराधस्थानं दिवारात्र्यादिकं चापराधकालं सम्यगवेक्ष्य सारं चापराधकारिणो धनशरीरादिसामर्थ्यम् अपराधं च गुरुलघुभावेन आलोक्य दण्डनीयेषु दण्डं कुर्यात्। इतीदमुक्तानुक्तदण्डशेषभूतम्। * गोरा.

(३) सारं चित्तस्य गुरुताम्। † मवि.

(४) दण्ड्येषु राज्ञा तावद्यत्नवता भाव्यमित्याह— अनुबन्धमिति। † मच.

(५) दण्डविधाने राज्ञा बोद्धव्यमाह— अपराधमिति। सारासारं दण्डस्य बलाबलम्। नन्द.

---

* ममु. गोरावत्।

† शेषं गोरागतम्।

(१) मस्मृ. ८।१२६; मेधा. ७।१६ प्रतीकमात्रम्; गोरा. ७।१६ प्रतीकमात्रम्; पमा. ३९८ परिज्ञाय (परीक्ष्याथ) तृतीयचरणे (सापराधमथाऽऽलोच्य); मच. लोक्य (लोच्य); नन्द. अनुबन्धं (अपराधं) पराधौ चा (सारं तथा).

अन्याय्यदण्डफलम्

**[1]अधर्मदण्डनं लोके यशोघ्नं कीर्तिनाशनम् ।**
**अस्वर्ग्यं च परत्रापि तस्मात्तत्परिवर्जयेत् ॥**

(१) अधर्मप्रधानं दण्डनम् अधर्मदण्डनं पूर्वोक्तमनपेक्ष्य दण्डशास्त्रपाठमात्रेण राजेच्छया रागद्वेषादिभिर्वा । तत् यशोनाशकं कीर्तेश्च विच्छेदकम् । स्वदेशे गुणख्यातिः यशः, देशान्तरे कीर्तिः । जीवतो वा पूर्वकालिकं यशः, उत्तरकालिकी कीर्तिः । निर्दोषगुणवती कीर्तियशसी । अन्यो वा भेद उन्नेयः, अर्थवादत्वात् । अस्वर्ग्यं स्वर्गप्राप्तौ कर्मान्तरजन्यायां प्रतिबन्धकम् । परत्रापीति श्लोकपूरणार्थम्, स्वर्गस्य आमुष्मिकत्वात् । § मेधा.

(२) यशः बहुभिः परैर्गुणानां ज्ञानम् । कीर्तिः तत्कथनम् । * मवि.

(३) वैपरीत्ये दोषमाह— अधर्मेति द्वाभ्याम् । अधर्मेण दण्डने अयशः जीवति, मृते अकीर्तिः इत्यनयोः कथंचिद्भेदः इति केचित् । ' यशः ज्ञातिप्रशंसा कीर्तिः जनप्रशंसा ' इति नृसिंहतापनीयभाष्ये । अस्वर्ग्यम्, अधर्मदण्डनेन पापोत्पत्तेः । मच.

**[2]अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् ।**
**अयशो महदाप्नोति नरकं चैव गच्छति ॥**

(१) पूर्वश्लोकः अनुबन्धादिनिरूपणविधिशेषः । अनेन तु अनपराधानां दण्डनं प्रतिषिध्यते सापराधानां च विधीयते वृत्त्यर्थतां दण्डस्य मन्यमानोऽनुग्रहेण मा हासीदिति । ¶ मेधा.

(२) राजा दण्डानर्हान् दण्डयन् दण्डार्हांश्चोत्सृज्य महदयशः प्राप्नोति नरकं च गच्छति । † गोरा.

(३) अयशः यशोनाशम् । मवि.

(४) अस्वर्ग्यमित्यनेन स्वर्गायोग्यत्वमुक्तम् । न केवलमेतत्, प्रत्युत नरकं चैवे(?वै)तीत्याह— अदण्ड्यानिति । मच.

(५) दण्ड्यादण्डनेऽपि राज्ञां दोषमाह— अदण्ड्यानिति । अयशः अस्मिन् लोके, परस्मिन् नरकम् । नन्द.

चतुर्विधदण्डस्यानुष्ठानक्रमः

**[1]वाग्दण्डं प्रथमं कुर्याद्धिग्दण्डं तदनन्तरम् ।**
**तृतीयं धनदण्डं तु वधदण्डमतः परम् ॥**

(१) यः गुणवान् ईषत्प्रथममेवापराद्धः स वाचा निर्भर्त्स्यते ' न साधु कृतवानसि, मा पुनरेवं कार्षीः ' इति । तथा विनीयमाने यदि न निवर्तते, ' कोऽत्र दोषः ' इति वा प्रतिजानीयात् तदा धिग्धिगादिशब्दैः परुषवचनैः कुत्सार्थैः क्षिप्यते । ततोऽप्यनिवर्तमानो यथाशास्त्रं धनेन दण्डनीयः । तदप्यगणयन् ऐश्वर्यादिना हन्तव्यः । वधदण्डश्च ताडनाङ्गच्छेदनादि, न मारणमेव । ‡ मेधा.

(२) वाग्दण्डं ' ताडयतैनम् ' इत्युक्तम् । प्रथमं कूटसाक्ष्यादौ प्रथमप्रवृत्तौ । धिग्दण्डं धिक्त्वमिति तदनन्तरं द्वितीये । तृतीये तृतीयवारकरणे । अतः परं चतुर्थवारापराधे वधदण्डम् अङ्गच्छेदम् । मवि.

(३) दण्डनक्रममाह— वाग्दण्डमिति । वाग्दण्डं परुषभाषणम् । धिग्दण्डः सदोमध्यात् वाचा निर्भर्त्स्य निष्कासनम् । धनदण्डः स्वर्णादानम् । वधदण्डः शरीर-

---

§ गोरा., ममु., भाच. मेधागतम् ।

* नन्द. मविगतम् ।

¶ पमा. मेधागतम् ।

† ममु. गोरावत् ।

(१) मस्मृ. ८।१२७.

(२) मस्मृ. ८।१२८ ; पमा. ३९१ ; नीम. ४६.

* राप्रव्याख्यानं ' शारीरश्चार्थदण्डश्च ' ( नासं. १९।१११ ) इत्यादिवचने द्रष्टव्यम् ।

‡ गोरा., ममु., मच. मेधावत् । भाच. मेधागतम् ।

(१) मस्मृ. ८।१२९ ; मिता. १।३६७ वाग्द (धिग्द) द्धिग्द ( द्वाग्द ) ; मभा. ११।३० ण्डमतः ( ण्डं त्वतः ) शेषं मितावत् ; गौमि. ११।२८ ण्डमतः ( ण्डं ततः ) शेषं मितावत् ; मवि. तृतीयं ( तृतीये ) ; राप्र. २९३ मितावत्.

पीडनम् । कुत एतत् ? उत्तरश्लोकानुगुण्यात् । एते दण्डाः क्रमादल्पतरे अल्पे महति महत्तरे वाऽपि प्रयोज्या अपराधे । नन्द.

अधार्मिकः पूज्योऽपि स्वयं राजाऽपि च दण्डनीयः, राज्ञो दण्डः सहस्रगुणः

**[1]पिताऽऽचार्यः सुहृन्माता भार्या पुत्रः पुरोहितः।**
**नादण्ड्यो नाम राज्ञोऽस्ति यः स्वधर्मे न तिष्ठति ॥**

(१) 'भार्या पुत्रः स्वका तनुः' (मस्मृ. ४।१८४) आत्मीयं शरीरम् । कः पुनरात्मनो दण्डः ? प्रायश्चित्त-(? त्तं)तपोधनदानादि विचलितो(? ल्तो) धर्मात् स्वकात्। यो यः स्वधर्मान्नानुतिष्ठति स सर्वो दण्ड्यः । मेधा.

(२) पित्राचार्यमित्रमातृभार्यापुत्रपुरोहितानां मध्यात् यः स्वधर्मे न प्रवर्तेत स नादण्डनीयो नाम राज्ञो वर्तते, अपितु सोऽपि दण्डनीयः । पितृमात्रादीनां गौरवस्नेहाभ्यामदण्डशङ्कायामिदं वचनम् । ‡ गोरा.

(३) येषां हिंसायां पापातिशयस्तेषामपि दण्ड्यान्तरवद्दण्डने न दोष इत्यर्थः । मवि.

(४) * एतच्च मातापित्रादिव्यतिरेकेण, 'अदण्ड्यौ मातापितरौ स्नातकपुरोहितपरिव्राजकवानप्रस्थाः श्रुतशीलशौचाचारवन्तस्ते हि धर्माधिकारिणः' इति विज्ञानेश्वरलिखितस्मृतेः । मातापितृवत् बहुश्रुतोऽपि न दण्ड्यः, 'स एष बहुश्रुतो भवति' इत्युपक्रम्य 'षड्भिः परिहार्यो राज्ञाऽवध्यश्चाबन्ध्यश्चादण्ड्यश्चाबहिष्कार्यश्चापरिवाद्यश्चापरिहार्यश्च' (गौध. ८।४, १२) इति गौतमोक्तेः । अन्यः पुनर्ब्राह्मणो दण्ड्य एव, 'सचिह्नं ब्राह्मणं कृत्वा स्वराष्ट्राद्विप्रवासयेत्' (यास्मृ. २।२७०) इति याज्ञवल्क्योक्तेः । राप्र. २९१

(५) पित्रादिष्वप्यपराधिषु राज्ञा दण्डो धारयितव्यः, किं पुनरन्येषु ? इत्यभिप्रायेणाऽऽह– पिताऽऽचार्य इति । नन्द.

(६) † अदण्ड्यानाह– पितेति । भाच.

**[1]कार्षापणं भवेद्दण्ड्यो यत्रान्यः प्राकृतो जनः ।**
**तत्र राजा भवेद्दण्ड्यः सहस्रमिति धारणा ॥**

(१) प्राकृतो जनः सामान्यपुरुषो यो नातिगुणसंयुक्तः । तस्य यत्र यस्मिन्नपराधे यावान् दण्डः तत्सहस्रगुणो राज्ञः । कार्षापणग्रहणस्य दण्डपरिमाणोपलक्षणार्थत्वम्, दृष्टार्थत्वाद्दण्डस्य । तस्य चाऽऽत्मानमनियम्य परो नियन्तुं न शक्यत इति युक्तं प्रत्यपराधे राज्ञो दण्डार्हत्वम् । महाधनत्वादल्पं दण्डं न विगणयेत् । राजाधिकृतानां मन्त्रिपुरोहितादीनामनयैव कल्पनया न्यूनाधिकभावः । धनदण्डश्च ब्राह्मणेभ्यः अप्सु प्रवेशनेन वरुणाय वा । यतो वक्ष्यति– 'राज्ञां दण्डधरो हि सः' (मस्मृ. ९।२४५) । * मेधा.

(२) किं बहुना ? आत्माऽऽपि दण्ड्य एवेत्याह– कार्षापणमिति । तच्च द्रव्यं ब्राह्मणेभ्यो देयमिति तात्पर्यम् । प्राकृतः । अधन इति वाच्ये प्राकृत इत्यैश्वर्यापेक्षया राजामात्यादीनामप्यधिकदण्डत्वमुक्तम् । धारणा निश्चयः । मवि.

(३) ननु नृपतेर्दण्डो नास्ति चेत्प्राप्तं व्यभिचारादिकम्, अस्ति चेत्कथं दण्ड्यः ? तत्राऽऽह– कार्षेति । यत्रापराधे प्राकृतः कार्षापणं दण्डमर्हति तस्मिन् राजा सहस्रं पणानां ब्राह्मणाय दद्यात्, 'विद्वान्सर्वस्वमर्हति' इत्युक्तेः । मच.

(४) अथ शक्तितारतम्यतो दण्डतारतम्यमाह– कार्षेति । यत्र अपराधे । राजशब्दोऽयमाढ्यवचनः । ० नन्द.

‡ ममु., मच. गोरागतम् ।

* चिन्त्यमिदम् । मातृपितृपुरोहितानां प्रकृतविधानाविषयत्वे तदुक्तिविरोधः, तदुक्तेरन्यथा संगमनीयत्वेऽपि न संगमितेति न्यूनता वा । किंच, 'अपि भ्राता सुतोऽर्घ्यो वा' इति प्रकृतवचनसमानविषयकयाज्ञवल्क्यवचनीयेन 'अपि चेत्यनेन पितृमात्रादिसमुच्चयः' इति स्वोपज्ञव्याख्यानेन विरोधः ।

(१) मस्मृ. ८।३३५ ; पमा. ३९१ यः स्वधर्मे न (यस्त्वधर्मेण) ; राप्र. २९१.

† प्रामादिकोऽयं ग्रन्थ इति वा, 'न दण्ड्यो नाम' इति विरुद्धतात्पर्यकः पाठभेदोऽभिप्रेत इति वा कल्पनीयम् ।

* गोरा, ममु. मेधागतम् ।

० भाच. नन्दगतम् ।

(१) मस्मृ. ८।३३६.

## याज्ञवल्क्यः

धर्मदण्डनाधर्मदण्डनफलानि, अधार्मिको न कश्चिददण्ड्यः

***'तदवाप्य नृपो दण्डं दुर्वृत्तेषु निपातयेत् ।**
**धर्मो हि दण्डरूपेण ब्रह्मणा निर्मितः पुरा ॥**
**स नेतुं न्यायतोऽशक्यो लुब्धेनाकृतबुद्धिना ।**
**सत्यसंधेन शुचिना सुसहायेन धीमता ॥**
**यथाशास्त्रं प्रयुक्तः सन् सदेवासुरमानवम् ।**
**जगदानन्दयेत्सर्वमन्यथा तत्प्रकोपयेत् ॥**
**अधर्मदण्डनं स्वर्गकीर्तिलोकविनाशनम् ।**
**सम्यक्तु दण्डनं राज्ञः स्वर्गकीर्तिजयावहम् ॥**
**²अपि भ्राता सुतोऽर्घ्यो वा श्वशुरो मातुलोऽपि वा ।**
**नादण्ड्यो नाम राज्ञोऽस्ति धर्माद्विचलितः स्वकात् ॥**

(१) यस्माच्च सम्यग्दण्डनात् स्वर्गादिप्राप्तिः तस्मात्— अपीति । विश्व.

(२) अर्घ्यः अर्घार्हः आचार्यादिः । शेषः प्रसिद्धः । एते भ्रातृसुतादयोऽपि स्वधर्माच्चलिता दण्ड्याः, किमुतान्ये ? यतः स्वधर्माच्चलितः अदण्ड्यो नाम राज्ञः कोऽपि नास्ति । एतच्च मातापित्रादिव्यतिरेकेण । तथा च स्मृत्यन्तरम्— 'अदण्ड्यौ मातापितरौ स्नातकपुरोहितपरिव्राजकवानप्रस्थाः श्रुतशीलशौचाचारवन्तस्ते हि धर्माधिकारिणः' इति । मिता.

(३) दण्ड्यमाह—अपीति । स्वकीयवर्णाश्रमादिधर्ममकुर्वन् दण्ड्यः । न तस्य संबन्धिविशेषात् गुरुत्वाद्वा दण्डनीयत्वनिवृत्तिः । यत्तु स्मृत्यन्तरम्— 'अदण्ड्यौ मातापितरौ । स्नातकपुरोहितपरिव्राजकवानप्रस्थश्रुतशीलशौचाचारवन्तस्ते हि धर्माधिकारिणः' इति, तत्स्वल्पापराधविषयम्, न सर्वात्मना दण्डाभावाभिप्रायम् । अत एव दक्षः— 'पारिव्राज्यं गृहीत्वा तु यः स्वधर्मे न तिष्ठति । श्वपादेनाङ्कयित्वा तं राजा शीघ्रं विवासयेत् ॥' । * अप.

(४) दण्डौदास्यं व्यवच्छिनत्ति । तदेव स्पष्टयति— अपीति । 'अपि च' इत्यनेन पितृमात्रादिसमुच्चयः । भ्रात्रादिरपि स्वीयाद्धर्माद्विचलितः तद्विरुद्धकारी राज्ञः, नाम संभावनायाम्, अदण्ड्यो नास्तीत्यर्थः । 'अपि भ्राता' इति अपिकारेण किमुतोदासीनः शत्रुर्वेति सूचितम् । * वीमि.

**+¹यो दण्ड्यान् दण्डयेद्राजा सम्यग्वध्यांश्च घातयेत् ।**
**इष्टं स्यात्क्रतुभिस्तेन समाप्तवरदक्षिणः ॥**

(१) एवं चाऽऽलोच्य क्रत्वर्थहिंसावत् चोरादिहिंसाऽपि धर्म्यैवेत्यभिप्रायः । सहस्रशतदक्षिणो राजसूयः । क्रतुबहुत्वाद्बहुवचनम् । यद्वा शतदक्षिणाः अग्निष्टोमादयः, सहस्रदक्षिणाः अभिजिदादयः । स्पष्टमन्यत् । विश्व.

(२) किंच । यस्तु दण्ड्यान् स्वधर्मचलनादिना दण्डयोग्यान् सम्यक् शास्त्रदृष्टेन मार्गेण धिग्धनदण्डादिना दण्डयति, वध्यान् वधार्हान् घातयति, तेन राज्ञा भूरिदक्षिणैः क्रतुभिरिष्टं भवति । बहुदक्षिणक्रतुफलं प्राप्नोतीत्यर्थः । नच फलश्रवणाद्दण्डप्रणयनं काम्यमिति मन्तव्यम्, अकरणे प्रायश्चित्तस्मरणात् । यथाऽऽह वसिष्ठः— 'दण्डोत्सर्गे राजैकरात्रमुपवसेत्, त्रिरात्रं

---

* एतदादिश्लोकचतुष्टयस्य व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च 'राजनीतेः सामान्यसिद्धान्ताः०' इत्यस्मिन्प्रकरणे (पृ. ७१४–७१६) द्रष्टव्यः ।

(१) यास्मृ. १।३५४–३५७.

(२) यास्मृ. १।३५८ ; विश्व. १।३५४ ; मिता. ; अप. १।३५६–३५७ ; पमा. ३९१ ऽर्घ्यो वा (भार्या) ; वीमि. ; राप्र. २९०–२९१.

* शेषं मितागतम् ।

+ वीमिव्याख्यानं 'व्यवहारदर्शनम्' इत्यस्मिन् प्रकरणे (पृ. १८१८) द्रष्टव्यम् ।

(१) यास्मृ. १।३५९ ; विश्व. १।३५५ समाप्तवर (सहस्रशत) ; मिता. ; अप. १।३५७–३५८ ; रार. ६४ घात (पात) ; पमा. ३९१ ; वीमि. विश्ववत्, आदर्शवदपि पाठः ; राप्र. २९१ क्रतु (च्छ्रुति).

पुरोहितः। कृच्छ्रमदण्ड्यदण्डने पुरोहितस्त्रिरात्रं राजा।' (वस्मृ. १९।२६–२७) इति। मिता.

(३) न केवलं दण्डनीयान् दण्डयतो राज्ञः प्रत्यवायाभावः, किंतु अभ्युदयविशेषोऽपि भवतीत्याह— य इति। धिग्दण्डादिभिर्दण्डनीयान् दण्डयता वधार्हांश्च घातयता सम्यक् आप्ता लब्धा वरा दक्षिणा यैः तैः क्रतुभिरिष्टं स्यात्। * अप.

**'कुलानि जातीः श्रेणीश्च गणाञ्जानपदानपि।**
**स्वधर्माच्चलितान् राजा विनीय स्थापयेत्पथि॥**

(१) किंच— कुलानीति। कुलानि कुटुम्बानि। जातयः ब्राह्मणाद्या वर्णाः। श्रेणयः कारुकसमुदायः। गणाः ब्राह्मणादिसमूहाः। जनपदः। दुर्गाश्रयोऽत्र जनोऽभिप्रेतः। सोऽपि राज्ञा स्वधर्माच्चलितो दण्ड्य इत्यभिप्रायः। सर्वश्चेतरजनो वा जनपदः। सर्वथा सर्वः स्वधर्माच्चलितो राज्ञा दण्ड्य इत्यभिप्रायः। × विश्व.

(२) कुलानि ब्राह्मणादीनाम्। जातयः मूर्धावसिक्तप्रभृतयः। श्रेणयः ताम्बूलिकादीनाम्। गणाः † हेलावुक्कादीनाम्। जानपदाः कारुकादयः। एतान् स्वधर्मात् चलितान् प्रच्युतान् राजा यथापराधं विनीय दण्डयित्वा पथि स्वधर्मे स्थापयेत्। 'दण्डं दुर्वृत्तेषु निपातयेत्' इत्युक्तम्। स च दण्डो द्विविधः— शारीरोऽर्थदण्डश्चेति। यथाऽऽह नारदः— 'शारीरश्चार्थदण्डश्च दण्डो हि द्विविधः स्मृतः॥ शारीरस्ताडनादिस्तु मरणान्तः प्रकीर्तितः। काकिण्यादिस्त्वर्थदण्डः सर्वस्वान्तस्तथैव च॥' (नासं. १९।१११–११२) इति। द्विविधोऽपि अपराधानुसारेण अनेकधा भवति। आह स— 'शारीरो दशधा प्रोक्तो ह्यर्थदण्डस्त्वनेकधा' (नासं. १९।१११) इति। § मिता.

(३) श्रेणीः सुवर्णकाराद्याः, गणान् मठब्राह्मणादीन्, जनपदान् राष्ट्राणि। पूर्वत्र एकैकस्य दण्डो विहितः, अत्र तु बहूनामित्यपुनरुक्तता। $ अप.

(४) चकारो गोरक्षकादिसमुच्चयार्थः। अपिकारः स्वराज्यवर्तिनामनुक्तानां समुच्चयार्थः। * वीमि.

चतुर्विधदण्डानां व्यस्तसमस्तानां यथापराधं प्रयोगः

**'धिग्दण्डस्त्वथ वाग्दण्डो धनदण्डो वधस्तथा।**
**योज्या व्यस्ताः समस्ता वा ह्यपराधवशादिमे॥**

(१) अथ किं सर्वापराधेषूत्तमसाहसाद्यपेक्षया दण्डः प्रयोज्यः? नेत्युच्यते— वाग्दण्ड इति। वाग्दण्डः स्वरूपाभिधानमात्रम्। धिग्दण्डः कुत्सनम्। धनदण्ड उक्तः। वधदण्डः शारीरः। तथाशब्दः उच्चाटनाद्यर्थः। स्पष्टमन्यत्। विश्व.

(२) दण्डभेदानाह— धिगिति। धिग्दण्डः धिग्धिगिति कुत्सनम्। वाग्दण्डस्तु परुषशापवचनात्मकः। धनदण्डः धनापहारात्मकः। वधदण्डः शारीरः अवरोधादिजीवितान्तः। एते चतुर्विधाः दण्डाः व्यस्ताः एकैकशः समस्ताः द्वित्राः त्रिचतुरो वा अपराधानुसारेण प्रयोक्तव्याः। उक्तक्रमेण पूर्वपूर्वासाध्ये उत्तर उत्तरः प्रयोक्तव्यः। यथाऽऽह मनुः— 'धिग्दण्डं प्रथमं कुर्याद्वाग्दण्डं तदनन्तरम्। तृतीयं धनदण्डं तु वधदण्डमतः परम्॥' (मस्मृ. ८।१२९)। + मिता.

---

* शेषं मितागतम्।

× राप्र. विश्वगतम्।

† हेलावुक्काः अश्वव्यवहारिणः।

(१) याස्मृ. १।३६१; विश्व. २।३४ जातीः श्रेणीश्च (जातयः श्रेण्यो) ञ्जान (ञ्जन); मिता.; अप. १।३५९–३६० ञ्जान (ञ्जन); पमा. ३९० लिता (किता); वीमि. ञ्जान (ञ्जन); राप्र. २९१.

§ दीक. मितागतम्।

$ शेषं विश्वगतं मितागतं च।

* शेषं मितागतम्।

+ अप., रार., दीक., राप्र. मितागतम्।

(१) यास्मृ. १।३६७; विश्व. १।३६२ धिग्द (वाग्द) वाग्द (धिग्द) ह्यप (ऽप्यप) वशा (बला); मिता.; अप. १।३६५–३६६ ह्यप (ऽप्यप); रार. ६३ स्ता वा (स्ताश्च); वीमि.; राप्र. २९५ अपवत्.

(३) दण्डस्य दृष्टादृष्टार्थफलकत्वम्, धनदण्डवधदण्डयोरुक्तत्वात्। तदाह मनुः— 'सर्वो दण्डजितो लोकः' (मस्मृ. ७।२२–२८) इत्यादिना। रार. ६३.

(४) अथ दण्डान् विभजन्नेव तत्प्रयोगविकल्पानाह— धिगिति। धिग्दण्डः 'धिक् त्वाम्' इति भर्त्सनम्। वाग्दण्डः 'त्वं पापिष्ठोऽसि, त्वां ताडयिष्यामि' इत्यादियथेष्टपरुषभाषणरूपः। धनदण्डः धनदानरूपः। वधः अङ्गादिच्छेदरूपः मारणरूपश्च। तथाशब्देन बन्धनताडनसमुच्चयः। हिशब्दः अवधारणे। तेन अपराधानुसारिदण्डव्यवच्छेदः। * वीमि.

अपराध–देश–कालाद्यनुरोधेन दण्डपातनम्

**[1]ज्ञात्वाऽपराधं देशं च कालं बलमथापि वा।**
**वयः कर्म च वित्तं च दण्डं दण्ड्येषु पातयेत्॥**

(१) अयं चात्र व्यवहारनीतिसंक्षेपः— ज्ञात्वेति। अपराधपुनर्वचनं दृष्टान्तार्थम्। यथैव अपराधं ज्ञात्वा तदपेक्षया दण्डप्रकल्पनं तथैव च देशकालाद्यपेक्षयाऽपीत्यभिप्रायः। ज्ञात्वेति पुनर्वचनं निर्णीतेऽपि व्यवहारे धर्मानुसारेण पुनर्व्यवहारोद्धरणार्थम्। स्पष्टमन्यत्। विश्व.

(२) दण्डव्यवस्थानिमित्तान्याह— ज्ञात्वेति। यथा अपराधं ज्ञात्वा तदनुसारेण दण्डप्रणयनं एवं देशकालवयःकर्मवित्तानि ज्ञात्वा तदनुसारेण दण्ड्येषु दण्डार्हेषु दण्डप्रणयनं कुर्यात्। तथा बुद्धिपूर्वाबुद्धिपूर्वसकृदावृत्त्यनुसारेण च। मिता.

(३) अपराधादि ज्ञात्वा दण्डं दण्ड्येषु पातयेत् प्रयुञ्जीत। अत्र च पूर्ववाक्यप्राप्तत्वादपराधज्ञानमनूद्यते। देशादिज्ञानं तु विधीयते। क्वचिद्धि देशे स्वल्पेनैव शीतेनाऽऽतपेन वा स्वल्पकालीनेन भोजननिवारणेनाधिका पीडा भवति। क्वचित्तु महताऽपि न तावती। तथा काले शरदादौ। तथा दण्डनीयबलं विदित्वा ताडनादिदण्डो विधेयः। तथा वयःकर्मवित्तानि। अन्यथा तत्स्वरूपनाशोऽग्निहोत्रादिकर्मलोपो वित्ताप्राप्तिश्च स्यात्। देशादि विदित्वा तु दण्डप्रणयने योगक्षेमावुपपद्येते इति। अप.

(४) अपराधं सकृत्कृतमज्ञानकृतं च, देशं ग्रामारण्यादिकम्, कालं दिवारात्रिसंध्यात्मकम्, बलं सामर्थ्यम्, वयः बाल्यादि, कर्म हिंस्रत्वादि सदाचारश्च(? रं च) दण्ड्येषु दण्डनीयेषु ज्ञात्वा वाग्दण्डादि कुर्यात्। दीक.

(५) न केवलमपराधानुसारादेव दण्डः, किंत्वपराधवद्देशादिरप्यनुसर्तव्य इत्याह— ज्ञात्वेति। अपराधं सकृदसकृत्कृतं लघुगुरुरूपं च, देशम् उपद्रुतानुपद्रुतम्, कालं सुभिक्षदुर्भिक्षादियुक्तम्, बलं शरीरसामर्थ्यमुत्कृष्टं च, वयः बाल्यादि, कर्म अग्निहोत्रादि सूनाधिष्ठानादि च दण्ड्यस्य ज्ञात्वा सम्यग्विचार्य दण्ड्येषु अपराधकारिषु दण्डं पातयेत् योजयेदिति। वीमि.

(६) वयः अशीत्यादि वार्धकं प्रागुपनयनादि (? नात्) शैशवं च। § राप्र. २९५.

## नारदः

अपराधिषु यथापराधं दण्डधारणम्

**[1]*यो यो वर्णोऽपहीयेत यो वोद्रेकमनुव्रजेत्।**
**तं तं दृष्ट्वा स्वतो मार्गात्प्रच्युतं स्थापयेत्पथि॥**

**अशास्त्रोक्तेषु चान्येषु पापयुक्तेषु कर्मसु।**
**प्रसमीक्ष्याऽऽत्मना राजा दण्डं दण्ड्येषु पातयेत्॥**

---

* शेषं मितागतम्।

(१) यास्मृ. १।३६८; विश्व. १।३६३ वा (च) चतुर्थचरणे (ज्ञात्वा दण्डं प्रकल्पयेत्); मिता.; अप. १।३६६; रार. ६३ देशं च कालं (कालं च देशं) कर्म (कार्य); वीमि.; राप्र. २९५.

§ शेषं अपगतम्।

* अस्य श्लोकद्वयस्य व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च 'राजनीतेः सामान्यसिद्धान्ताः०' इत्यस्मिन् प्रकरणे (पृ. ७१८) द्रष्टव्यः।

(१) नासं. १९।६–७.

दण्डविधिः, दण्डयानां वृत्तिसाधनानि न हरणीयानि

**[1]राज्ञा प्रवर्तितान् धर्मान् यो नरो नानुपालयेत्।**
**दण्डयः स पापो वध्यश्च लोपयन्राजशासनम्॥**
**[2]आयुधान्यायुधीयानां वाह्यादीन् वाह्यजीविनाम्**
**वेश्यास्त्रीणामलंकारान् वाद्यातोद्यादि तद्विदाम्॥**
**[3]यच्च यस्योपकरणं येन जीवन्ति कारुकाः।**
**सर्वस्वहरणेऽप्येतन्न राजा हर्तुमर्हति॥**

आयुधजीविनामायुधानि, वाह्यादीन् हस्त्यश्वरथगवादीन् तज्जीविनाम्, वेश्यानामाभरणानि, वाद्यातोद्यानि वीणामुखा(? मुरजा)दीनि तज्जीविनाम्, येन जीवन्त्युपकरणेन शिल्पिनः तेषां यद्यस्योपकरणं कुम्भकारस्य चक्रादि, तक्ष्णो वास्यादि, एवमादीन्यन्यान्यन्येषां सर्वस्वहरणेऽपि प्राप्ते न राजा हरेत्, किं पुनः अन्यस्मिन्नपराधे? एतैर्विना न जीवन्ति, तस्मात् वधादर्वाक् न हर्तव्यानि। नाभा.

दण्डप्रकाराः

**[4]शारीरश्चार्थदण्डश्च दण्डस्तु द्विविधः स्मृतः।**
**शारीरो दशधा प्रोक्तो ह्यर्थदण्डस्त्वनेकधा॥**

(१) नासं. १९।१० दण्ड्यः (वध्यः); नास्मृ. २०।१३.।

(२) नासं. १९।११ वेश्या (वेश) द्यादि (द्यानि); नास्मृ. २०।१० द्वितीयचरणे (शिल्पद्रव्याणि शिल्पिनाम्) कारान् (कारं).

(३) नासं. १९।१२ तन्न (तान्न); नास्मृ. २०।११ रुकाः (रवः) तन्न (तान्न); मिता. २।३०२; अप. २।३०१ नास्मृवत्.

(४) नासं. १९।१११ दशधा (द्विविधः); नास्मृ. २१।५३ शारीरो (शारीरं) प्रोक्तो ह्यर्थ (प्रोक्तमर्थ); मिता. १।३६१ दण्डस्तु (दण्डो हि) अर्धयोर्मध्ये 'काकिण्यादिः' इत्यादिश्लोकः पठितः; रार. ६२–६३ दण्डस्तु (दण्डश्च) स्त्वनेकधा (स्तथैव च) श्लोकक्रमो मितावत्; पमा. ३९१ दण्डस्तु (दण्डश्च) पू.; राप्र. २९३ पमावत्, पू.

**[1]काकण्यादिस्त्वर्थदण्डः सर्वस्वान्तस्तथैव च।**
**शारीरस्त्ववरोधादिर्जीवितान्तस्तथा स्मृतः॥**

(१) द्विविधो दण्डः— अर्थदण्डः शारीरश्च। शारीरो दशधा, अर्थदण्डस्तु अनेकधा इत्युक्तम्। तदुक्तमुभयं विशेष्यते— शारीर इति। संक्षेपेण तावदुभयमुच्यते— अर्थदण्डः काकण्याः आरम्य यावत् सर्वस्वम्। शारीरः अवरोधाद्यारम्य यावन्मरणम्। * नाभा.

(२) स च दण्डः द्विविधः। तदाह नारदः— शारीरश्चेति। यत्तु मनुना— 'धिग्दण्डं प्रथमं कुर्याद्वाग्दण्डं तदनन्तरम्। तृतीयं धनदण्डं तु वधदण्डमतः परम्॥' (मस्मृ. ८।१२९) इति चतुर्विधत्वमुक्तम्, तत्र आद्यं द्वयमल्पापराधविषयम्। वधदण्डः शारीरो दण्डः। स च ब्राह्मणव्यतिरिक्तस्य कर्तव्य इति तत्स्थानानि वदता उक्तं मनुना— 'दश स्थानानि दण्डस्य मनुः स्वायंभुवोऽब्रवीत्। त्रिषु वर्णेषु यानि स्युरक्षतो ब्राह्मणो व्रजेत्॥ उपस्थमुदरं जिह्वा हस्तौ पादौ च पञ्चमम्। चक्षुर्नासा च कर्णौ च धनं देहस्तथैव च॥' (मस्मृ. ८।१२४–१२५) इति। एतेषां यन्निमित्तोऽपराधः तत्रैव उपस्थादौ निग्रहः कार्यः। धनदानाशक्तस्य दण्डद्वयमाह कात्यायनः— 'धनदानासहं बुद्ध्वा स्वाधीनं कर्म कारयेत्। अशक्तौ बन्धनागारं प्रवेश्यो ब्राह्मणादृते॥' इति। यत्तु आपस्तम्बः— 'चक्षुर्निरोधो ब्राह्मणस्य' (आध. २।२७।१७) इति, तत् पुरात् निर्वासनकाले वस्त्रादिना चक्षुर्निरोधः कार्य इति व्याख्येयम्, निरोधपदस्वारस्यात्

* रार., पमा. नाभागतम्।

(१) नासं. १९।११२; नास्मृ. २१।५४ रस्त्ववरोधादि (रः संनिरोधादिः) स्तथा स्मृतः (स्तथैव च); मिता. १।३६१ उत्तरार्धे (शारीरस्ताडनादिस्तु मरणान्तः प्रकीर्तितः॥) श्लोकार्धौ व्यत्यासपठितौ; रार. ६२–६३ काकण्या (काकीन्या) उत्तरार्धे (शारीरस्ताडनादिस्तु मारणान्तः प्रकीर्तितः॥) श्लोकार्धौ व्यत्यासपठितौ; पमा. ३९१ काकण्या (काकिन्या) शेषं मितावत्; राप्र. २९३ पमावत्.

पूर्वोदाहृतवचनविरोधाच्च । शारीरदण्डवच्च अर्थदण्डोऽपि उत्तमसाहसादिभेदेन अनेकधा । अशीत्यधिकसहस्रसंख्याकाः पणाः उत्तमसाहसाख्यो दण्डः । चत्वारिंशदधिकपञ्चशतसंख्यपणात्मकः मध्यमसाहसाख्यः । सप्तत्यधिकशतद्वयसंख्याकपणात्मकः अधमसाहसाख्यः । स एव च शास्त्रान्तरे प्रथमसाहसाख्यः इत्युच्यते । यत्तूक्तं मनुना— 'पणानां द्वे शते सार्धे प्रथमः साहसः स्मृतः । मध्यमः पञ्च विज्ञेयः सहस्रं त्वेव चोत्तमः ॥' ( मस्मृ. ८।१३८ ) इति, तदल्पापराधविषयम् ।

राप्र. २९३–२९५.

## बृहस्पतिः

चतुर्विधो दण्डः, स यथापराधं कल्पनीयः

[1]वाग्धिग्वधः स्वकं चैव चतुर्धा कल्पितो दमः ।
पुरुषे दोषविभवं ज्ञात्वा संपरिकल्पयेत् ॥

दण्ड्यभेदेन दण्डव्यवस्था

गुरून्पुरोहितान्विप्रान्वाग्दण्डेनैव दण्डयेत् ।
विवादिनो नरांश्चान्यान्दोषिणोऽर्थेन दण्डयेत् ॥
महापराधयुक्तांश्च वधदण्डेन दण्डयेत् ॥
जगत्सर्वमिदं हन्याद्ब्राह्मणस्य न तत्समम् ।
तस्मात्तस्य वधं राजा मनसाऽपि न चिन्तयेत् ॥
अवध्यान् ब्राह्मणानाहुः सर्वपापेष्ववस्थितान् ।
यद्यद्विप्रेषु कुशलं तत्तद्राजा समाचरेत् ।
राष्ट्रादेनं बहिः कुर्यात्समग्रधनमक्षतम् ॥

## कात्यायनः

दण्ड्यभेदेन दण्डव्यवस्था, दण्डप्रकाराः

[2]मित्रादिषु प्रयुञ्जीत वाग्दण्डं धिक्तपस्विनाम् ।
यथोक्तं तस्य तत्कुर्युरनुक्तं साधुकल्पितम् ॥
अधार्मिकं त्रिभिर्न्यायैर्निगृह्णीयात्प्रयत्नतः ।
निरोधनेन बन्धेन विविधेन वधेन च ॥

[1]धनदानासहं बुद्ध्वा स्वाधीनं कर्म कारयेत् ।
अशक्तौ बन्धनागारं प्रवेश्यो ब्राह्मणादृते ॥

धनदानाशक्तस्य दण्डद्वयमाह— धनदानेति ।

राप्र. २९३

## बृहत्पराशरः

दण्ड्यभेदेन दण्डव्यवस्था, दण्डप्रकाराः, देशकालाद्यनुगुणो दण्डः, दण्डफलम्

[2]सदा साधुषु संमानं विपरीतेषु घातनम् ।
दण्डं दम्येषु कुर्वाणो राजा यज्ञफलं लभेत् ॥
मातुलः श्वशुरो बन्धुरन्यो वाऽपि हि योजितः ।
अदण्ड्यः कोऽपि नास्त्येव राजनीतिविदो विदुः ॥

दुर्वृत्तसद्वृत्तनरेषु दण्डं
राजा विधत्ते निपुणोऽर्थसिद्ध्यै ।
दण्डस्य मत्वोर्जितवित्तसत्त्वं
पुंसोऽर्थहीनस्य दमं तु हीनम् ॥
अन्यायतो ये तु जनं नरेशाः
संपीड्य वित्तानि हरन्ति लोभात् ।
तत्क्रोधवह्नौ परिदग्धदेहा
गतायुषस्ते तु भवन्ति भूपाः ॥
दण्डो महान् मध्यमकाधमस्तु
मानं तु तेषां त्रसरेणुकादि ।
सोऽशीतिसाहस्रपणो महान् स्या-
दर्धार्धकस्तस्य तदर्धको वा ॥
सर्वार्थपादश्च हरश्च दण्डौ
पात्यौ नृपेणेति वदन्ति सन्तः ।
पाण्यादिपच्छेदनमारणं च
निर्वासनं राष्ट्रत एव सद्यः ॥
ज्ञात्वाऽपराधं मनुजस्य यस्तु
देशं च कालं च वपुर्वयश्च ।

( १ ) पमा. ३९८–३९९.
( २ ) पमा. ३९८–३९९.

( १ ) राप्र. २९३.
( २ ) बृपसं. १२।२१–२२, ५७, ८०–८६.

दण्ड्येषु दण्डं विदधाति भूभृत्
सामर्थ्यं स बध्नाति पुरंदरस्य ॥
यः शास्त्रदृष्टेन पथा नरेशो
दण्डं विदध्याद्विधिवत्करांश्च ।
सोऽतीव कीर्तिं वितनोति गुर्वीं
आयुश्च दीर्घं दिवि देवभोगान् ॥
यस्त्यक्तमार्गाणि कुलानि राजा
श्रेणीश्च जातीश्च गणांश्च लोकान् ।
आनीय मार्गे विदधाति धर्म्ये
नाकेऽपि गीर्वाणगणैः प्रशस्यते ॥

## मत्स्यपुराणम्

उपायत्रितयासाध्ये दण्ड उपायः, अधार्मिको न कोऽप्यदण्ड्यः, अदण्ड्यदण्डनफलम्

मत्स्य उवाच—

[1]न शक्या ये वशे कर्तुमुपायत्रितयेन तु ।
दण्डेन तान् वशीकुर्याद्दण्डो हि वश-
कृन्नृणाम् ॥
[2]सम्यक्प्रणयनं तस्य तथा कार्यं महीक्षिता ।
धर्मशास्त्रानुसारेण सुसहायेन धीमता ॥
[3]तस्यासम्यक्प्रणयनं त्रिदशानपि पीडयेत् ।
वानप्रस्थांश्च धर्मज्ञान्निर्ममान्निष्परिग्रहान् ॥
[4]स्वदेशे परदेशे वा धर्मशास्त्रविशारदान् ।
समीक्ष्य प्रणयेद्दण्डं सर्वं दण्डे प्रतिष्ठितम् ॥

(१) मत्स्य. २२५।१ ; विध. २।७०।१ वशे कर्तुमुपाय (स्वयं कर्तुं चोपाय) कृन्नृणाम् (कृत्परः) ; राक. १२९ वशे (वशी) कृन्नृणाम् (कृत्तमः) ; राप्र. २८४.

(२) मत्स्य. २२५।२ ; विध. २।७०।२ तथा (सदा) ; राप्र. २८४.

(३) मत्स्य. २२५।३ पूर्वार्धे (तस्य सम्यक्प्रणयनं यथा कार्यं महीक्षिता ।) ; विध. २।७०।३ ज्ञान्निर्ममा (ज्ञ निर्देशा) ; राप्र. २८४–२८५.

(४) मत्स्य. २२५।४ ; विध. २।७०।४ वा (च) रदान् (रदाः) ; राप्र. २८५.

[1]आश्रमी यदि वा वर्णी पूज्यो वाऽथ गुरु-
र्महान् ।
नादण्ड्यो नाम राज्ञोऽस्ति यः स्वधर्मे न
तिष्ठति ॥
[2]अदण्ड्यान्दण्डयन्राजा दण्ड्यांश्चैवाप्यदण्ड-
यन् ।
इह राज्यात्परिभ्रष्टो नरकं च प्रपद्यते ॥
[3]तस्माद्राज्ञा विनीतेन धर्मशास्त्रानुसारतः ।
दण्डप्रणयनं कार्यं लोकानुग्रहकाम्यया ॥

## विष्णुधर्मोत्तरपुराणम्

स्वविषयदण्डः परविषयदण्डश्चेति दण्डद्वैविध्यम्, परविषयदण्डस्वरूपम्

[4]दण्डप्रणयनं सम्यक् श्रोतुमिच्छामि तत्त्वतः ।
कथं स्वविषये तस्य दण्डनीतिर्भवेद् ध्रुवा ॥
[5]कथं च दण्डं प्रणयन्नरेन्द्रो
धर्मेण युज्येद्यशसा च वीर ।
अर्थेन कामेन च सर्वमेतद्
ब्रवीहि यादोगणनाथपुत्र ॥

पुष्कर उवाच—

[6]दण्डप्रणयनं राम स्वदेशे शृणु भूभुजाम् ।
यस्य सम्यक् प्रणयनात् स्वर्गभाक् पार्थिवो
भवेत् ॥ *

* अतः परं स्वविषयदण्डो विस्तरेणोक्तो विष्णुधर्मोत्तरे, राजनीतिप्रकाशे स सर्वः संगृहीतश्च । अस्माभिस्तु प्रागुक्तमनुसृत्य न संगृहीतः ।

(१) मत्स्य. २२५।५ ; विध. २।७०।५ नाम राज्ञोऽस्ति (राम राज्ञा तु) ; राप्र. २८५.

(२) मत्स्य. २२५।६ ; विध. २।७०।६ ज्यात्प (ज्य प) च प्र (प्रति) ; राप्र. २८५.

(३) मत्स्य. २२५।७; विध. २।७०।७; राप्र. २८५.

(४) विध. २।७१।१३ ; राप्र. २९६ : ३०३ : ध्रुवा (ध्रुवम्) उत्त.

(५) विध. २।७१।१४ ; राप्र. २९६ यादोगण (मे यादव).

(६) विध. २।७२।१ ; राप्र. २९६.

अयं च दण्डो द्विविधः— स्वविषयदण्डः परविषयदण्डश्च । तत्राऽऽद्यः 'दण्डप्रणयनं राम' इत्यादिना उच्यते । द्वितीयस्तु— 'द्विविधः कथितो दण्डः परदेशे पुरातनैः' इत्यादिना अग्रे कथयिष्यते । राप्र. २९६

**राम उवाच—**

**[1]सामभेदौ तथा प्रोक्तौ दानदण्डौ तथैव च ।**
**दण्डः स्वदेशे कथितः परदेशे ब्रवीहि मे ॥**

'कथं स्वविषये तस्य दण्डनीतिर्भवेद् ध्रुवम्' इत्यादिना स्वदेशे दण्डनिरूपणे कृते परविषयेऽपि कथं दण्डः कर्तव्य इत्यपेक्षायां विष्णुधर्मोत्तरे— 'राम उवाच— सामभेदौ तथा .... ॥' । राप्र. ३०३

**पुष्कर उवाच—**

**[2]द्विविधः कथितो दण्डः परदेशे पुरातनैः ।**
**प्रकाशश्चाप्रकाशश्च तं निबोध द्विजोत्तम ॥**
**[3]लुण्ठनं ग्रामघातश्च सस्यघातस्तथैव च ।**
**चतुरङ्गेण दण्डेन परेषां च तथा वधः ॥**

चतुरङ्गेण दण्डेन रथाश्वगजपदातिरूपसैन्येन । राप्र. ३०३

**[4]प्रकाशः कथितो दण्डः प्रत्यक्षं वह्निदीपनम् ।**
**अप्रकाशो विष वह्निर्गूढश्च पुरुषैर्वधः ॥**
**दूषणं यवसादीनामुदकानां च दूषणम् ।**
**रसक्रियाश्च विविधाः सुभगाभेदनादिकम् ॥**

परराज्ञः अन्तःपुरे या सुभगा तस्याः केनचिदुपायेन भेदनादिकम् । आदिपदेन सामदानयोरुपादानम् । राप्र. ३०३—३०४

**[5]एवमादीनि कार्याणि परचक्रे महीक्षिता ।**
**स्वराष्ट्रे च द्विजश्रेष्ठ दूषणं बलिनामपि ॥**

**[1]चत्वार एते कथिताभ्युपायाः**
**प्रधानभूता भुवि पार्थिवानाम् ।**
**अतः परं ते कथयामि राम**
**शेषास्त्रयस्ते न मयेरिता ये ॥**

## अग्निपुराणम्

उपायत्रयासाध्ये दण्डप्रयोगः, अन्याय्यदण्डने नाशः, मर्यादानुत्क्रमणं दण्डफलम्, दण्डशब्दव्युत्पत्तिः

**[2]त्रयासाध्यं साधयेत्तं दण्डेन च कृतेन च ॥**
**दण्डे सर्वं स्थितं दण्डो नाशयेदुष्प्रणीकृतः ।**
**अदण्ड्यान् दण्डयन् नश्येद्दण्ड्यान् राजाऽप्यदण्डयन् ॥**
**देवदैत्योरगनराः सिद्धा भूताः पतत्रिणः ।**
**उत्क्रमेयुः स्वमर्यादां यदि दण्डान्न पालयेत् ॥**
**यस्माददान्तान् दमयत्यदण्ड्यान् दण्डयत्यपि ।**
**दमनाद्दण्डनाच्चैव तस्माद्दण्डं विदुर्बुधाः ॥**

परदेशप्रयोज्यदण्डनिरूपणम्

**[3]प्रकाशश्चाप्रकाशश्च द्विविधो दण्ड उच्यते ।**
**लुण्ठनं ग्रामघातश्च सस्यघातोऽग्निदीपनम् ॥**
**प्रकाशोऽथ विषं वह्निर्विविधैः पुरुषैर्वधः ।**
**दूषणं चैव साधूनामुदकानां च दूषणम् ॥**
**दण्डप्रणयनं प्रोक्तम् ॥**
**[4]वधोऽर्थहरणं चैव परिक्लेशस्त्रिधा दमः ॥**
**प्रकाशश्चाप्रकाशश्च लोकद्विष्टान् प्रकाशतः ।**
**उद्विजेत हतैर्लोकस्तेषु पिण्डः* प्रशस्यते ॥**
**विषेणोपनिषद्योगैर्हन्याच्छस्त्रादिना द्विषः ।**
**जातिमात्रं द्विजं नैव हन्यात् सामोत्तरं वशे ॥**
**[5]त्रिशक्तिर्देशकालज्ञो दण्डेनास्तं नयेदरीन् ॥**

(१) विध. २।१४६।१ स्वदेशे (सुदेशे); राप्र. ३०३.
(२) विध. २।१४६।२ ; राप्र. २९६ पू., ३०३.
(३) विध. २।१४६।३ ; राप्र. ३०३ रङ्गेण (रङ्गेन).
(४) विध. २।१४६।४—५ ; राप्र. ३०३.
(५) विध. २।१४६।६; राप्र. ३०४ दूषणं (दूष्याणां).

* 'तेषु पिण्डः' इत्यत्र 'तेषूपांशुः' इति शुद्धिर्भवेत् ।
(१) विध. २।१४६।७ ; राप्र. ३०४ भ्युपा (भुपा).
(२) अग्नि. २२६।१३—१६.
(३) अग्नि. २३४।२—४.
(४) अग्नि. २४१।५१—५३.
(५) अग्नि. २४१।६०.

## कामन्दकीयनीतिसारः

शत्रौ प्रयोज्यदण्डनिरूपणम्

**[1]वधोऽर्थहरणं चैव परिक्लेशस्तथैव च ।**
**इति दण्डविभागज्ञैर्दण्डस्तु त्रिविधः स्मृतः ॥**

( १ ) वधः प्रवासनम् । परिक्लेशः बन्धनताडनादिभिर्दुःखोत्पादनम् । जम.

( २ ) दण्डमभिधातुमाह— वध इति । वधः विनाशः । अर्थग्रहणम् अर्थपरिग्रहः । परिक्लेशः यातना । इत्येवं त्रिविधदण्डः दण्डविधानज्ञैः स्मृतः । उनिसा.

**[2]प्रकाशश्चाप्रकाशश्च वधो द्विविध उच्यते ।**
**प्रकाशदण्डं कुर्वीत लोकद्विष्टे तथा रिपौ ॥**

( १ ) वधाख्यस्य दण्डस्य विषयभेदं चतुर्भिः श्लोकैर्दर्शयति— प्रकाश इत्यादि । पूर्वे द्विविध उच्यते वधाख्यो दण्डः । लोकद्विष्टाः चोरपारदारिकादयः रिपवश्च प्रकाशं हताः न दोषाय । जम.

( २ ) वधरूपदण्डस्य द्वैविध्यमाह— प्रकाशेति । पूर्वः वधरूपो दण्डः । प्रकाशः सर्वजनविदितः, अप्रकाशः न केनापि विदितः, इत्येवं द्विविधः । लोकद्विष्टान् चौरपारदारिकादीन् तथा रिपूंश्च शत्रूंश्च प्रकाशदण्डान् कुर्वीत । उनिसा.

**[3]उद्विज्यते हतैर्लोको यैर्ये स्युर्नृपवल्लभाः ।**
**बाधन्तेऽभ्यधिका ये तु तेषूपांशु प्रशस्यते ॥**

( १ ) हतैर्यैर्दृष्टैरपि । नृपवल्लभाः स्यालादयः । तेऽपि लोके दृढभक्तिताख्यापनार्थम् अप्रकाशं हन्तव्याः । ये च अभ्यधिकाः बलीयांसः प्रकाशं हन्तुमशक्याः । जम.

( २ ) अप्रकाशदण्डार्हानाह— यैरिति । यैः लोकः उद्विजेत उद्वेगं याति, ये च स्नेहलोभात् स्नेहाभिलाषात् नृपवल्लभाः राजप्रियाः, ये च नृपवल्लभा भूत्वा प्रजा अधिकं बाधन्ते पीडयन्ति, तेषु उपांशु विजने वधदण्डः प्रवर्तते । उनिसा.

**[1]विषेणोपनिषद्योगैः शस्त्रेणोद्वर्तनेन वा ।**
**तथोपांशु नयेद्दण्डं यथाऽन्यो न विभावयेत् ॥**

( १ ) स चोपांशुदण्डः कथं प्रयोक्तव्य इत्याह— विषेणेत्यादि । अभ्यवहार्यादिसंसृष्टेन विषेण । उपनिषद्योगैः रहस्यप्रयोगैरग्न्यादिभिः । शस्त्रेण तीक्ष्णप्रयुक्तेन । उद्वर्तनेनेति । के(न)चित् स्फोटादिजनकेन विलेपनेन । जम.

( २ ) उपांशुवधस्वरूपमभिधातुमाह— विषेणेति । विषेण कृत्रिमेण अकृत्रिमेण वा । उपनिषद्योगैः अभिचारादिदूषणादिभिः । शस्त्रेण गूढप्रयुक्तायुधेन । उद्वर्तनेन विलेपनविशेषेण । तथा तेन प्रकारेण उपांशु विजने दण्डं वधरूपं नयेत् प्रयुञ्ज्यात् यथा येन प्रकारेण अन्यः न विभावयेत् न जानीयात् । उनिसा.

**[2]ब्राह्मणे जातिमात्रेऽपि धार्मिके चान्त्यजेऽपि वा ।**
**धर्मोन्निनीषया धीमान् न वधं दण्डमादिशेत् ॥**

( १ ) अन्त्यजे चण्डालादौ । धर्मोन्निनीषया धर्मोद्भिावयिषया न वधदण्डमादिशेत् । परिक्लेशार्थहरणे तु विनयाधानार्थम् आदिशेदेव । जम.

( २ ) यत्र दण्डो न प्रयोज्यस्तदाह— ब्राह्मण इति । विद्वान् धीमान् धर्मोन्निनीषया धर्मम् उन्नतिं नेतुमिच्छया ब्राह्मणे जातिमात्रेऽपि जात्या ब्राह्मणमात्रेऽपि अन्त्यजेऽपि नीचजातावपि धार्मिके धर्माचरणशीले वधरूपं दण्डं न आदिशेत् न प्रयुञ्ज्यात् । उनिसा.

**[3]उपेक्षया वा हन्तव्या येषूपांशु प्रशस्यते ।**
**उपेक्षां चापि निपुणः प्रत्यक्षं परिवर्जयेत् ॥**

---

( १ ) कानी. १८।९ ; उनिसा. हरणं ( ग्रहणं ) भाग ( धान ).

( २ ) कानी. १८।१० ; उनिसा. वधो ( पूर्वो ) उत्तरार्धे ( प्रकाशदण्डान् कुर्वीत लोकद्विष्टांस्तथा रिपून् ॥ ).

( ३ ) कानी. १८।११ ; उनिसा. ( यैरुद्विजेतेह लोको ये चैव नृपवल्लभाः । बाधन्ते व्यधिकं ये च तेषूपांशु प्रवर्तते ॥ ).

( १ ) कानी. १८।१२.

( २ ) कानी. १८।१३ ; उनिसा. धीमान् ( विद्वान् ).

( ३ ) कानी. १८।१४.

(१) विधानान्तरमाह– उपेक्षया वेत्यादि । उपेक्षां वक्ष्यति । नृपवल्लभादीनां यद्यन्ये हन्तारः स्युस्तदा तैरेव हन्यतामित्युपेक्षां कुर्यात् । प्रत्यक्षं परिवर्जयेत् वधस्य हि प्रत्यक्षमुपेक्षामाचरंस्तैरेव हन्येत अस्मद्विनाशमुपेक्षत इति । जम.

(२) उपांशुप्रकारमभिधातुमाह– उपेक्षयेति । येषु दण्ड्येषु उपांशु प्रशस्यते उपांशुवधो युज्यते ते उपेक्षया औदासीन्येन हन्तव्याः विनाशयितव्याः । निपुणः नीतिज्ञः प्रत्यक्षं साक्षात् उपेक्षाम् औदासीन्यं परिवर्जयेत् त्यजेत् । साक्षात् अन्यैर्हन्यमानाः अनुग्राह्या इति भावः । प्रत्यक्षोपेक्षया तु शङ्कनीयः स्यात् । उनिसा.

**[१]दण्डपाणिरिवाधृष्यो दण्डं दण्ड्येषु पातयेत् ॥**

दण्डपाणिरिव यम इव भूतानामधृष्यः । जम.

**[२]उत्साहदेशकालैस्तु संयुक्तः सुसहायवान् ।**
**युधिष्ठिर इवात्यर्थं दण्डेनास्तं नयेदरीन् ॥**

(१) अभित्त्वाऽपि अभ्युचितः प्रकाशं हन्यादित्याह– उत्साहेत्यादि । उत्साहः विक्रमबलम् । सुसहायवान् सामवायिकाभ्युचितः । युधिष्ठिरो हि भ्रातॄणां दिव्यास्त्रसंयोगादुत्साहशक्तिं समुद्वीक्ष्य देशकालौ सहायसंपदश्च सप्ताक्षौहिणीसमवायी विग्रहेण सपत्नानवधीत् । जम.

(२) दण्डप्रयोगकालमभिधातुमाह– उत्साहेति । उत्साहदेशकालैस्तु । उत्साहः कर्तव्यार्थेषु स्थेयान् प्रयत्नः । देशः युद्धोपयोगि स्थानम् । कालः अनुकूलसमयः, शरत्काल इति यावत् । एतैः संयुक्तः समन्वितः सुसहायवान् उत्कृष्टसहकारिसंपन्नः । विजिगीषुरिति शेषः । युधिष्ठिर इव दण्डेन दण्डविधिना अरीन् शत्रून् अस्तं विनाशं नयेत् प्रापयेत् । उत्साहेत्यादिविशेषणद्वयं युधिष्ठिरेऽपि योज्यम् । युधिष्ठिरपक्षे सुसहायवान् इत्यस्य वासुदेवादिसहायसंपन्न इत्यर्थः । उनिसा.

(१) कानी. १८।१८ ; उपाध्यायनिरपेक्षानुसारिण्यां नास्ति.

(२) कानी. १८।४३.

**[१]आत्मनः शक्तिमुद्वीक्ष्य दण्डमप्यधिके नयेत् ।**
**एकाकी शक्तिसंपन्नो रामः क्षत्रं पुराऽवधीत् ॥**

(१) सामवायिकाभावेऽप्येकाकी पराक्रमशक्त्याधिक्यमवेक्ष्य विगृह्णीयादित्याह– आत्मन इति । अधिकेऽपि ज्यायस्यपि । रामः पितृवधामर्षितो निःशेषं क्षत्रमवधीत् । जम.

(२) आत्मन इति । आत्मनः स्वस्य शक्तिम् उत्साहशक्तिम् उद्वीक्ष्य समीक्ष्य सत्त्वसंपन्नः उत्साहशक्तिसंपन्नः अधिकमपि अधिकबलशालिनमपि शत्रुं दण्डं नयेत् प्रापयेत् । तमेवार्थं दृष्टान्तेन द्रढयति– एकाकीति । एकाकी प्रभुशक्तिरहितः रामः परशुरामः पुरा पूर्वं क्षत्रं क्षत्रियकुलम् अवधीत् एकविंशतिवारं विनाशितवान् । 'दण्डमप्यधिकम्' इत्यत्र 'दण्डमभ्यधिकम्' इति मुद्रितपुस्तकपाठो न समीचीनः । उनिसा.

## शुक्रनीतिः

दण्डसामान्यस्वरूपम्, दण्डप्रकाराः

**[२]निवृत्तिरसदाचाराद्दमनं दण्डतश्च तत् ।**
**येन संदम्यते जन्तुरुपायो दण्ड एव सः ॥**

दण्डतः दण्डात् असदाचारात् निवृत्तिः दमनं च तत् तस्मात् येन उपायेन जन्तुः जीवः संदम्यते सम्यक् शास्यते सः उपायः दण्ड एव । शुनीटी.

**स उपायो नृपाधीनः स सर्वस्य प्रभुर्यतः ॥**

सः दण्डरूपः उपायः नृपाधीनः राजायत्तः । यतः सः राजा सर्वस्य लोकस्य प्रभुः स्वामी । दण्डकर्तृत्वं स्वामिन एव युज्यते इति भावः । शुनीटी.

**निर्भर्त्सनं चापमानोऽनशनं बन्धनं तथा ।**
**ताडनं द्रव्यहरणं पुरान्निर्वासनाङ्कने ॥**
**व्यस्तक्षौरमसद्यानमङ्गच्छेदो वधस्तथा ।**
**युद्धमेते ह्युपायाश्च दण्डस्यैव प्रभेदकाः ॥**

(१) कानी. १८।४४ ; उनिसा. धिके (धकं) शक्तिसं (सत्त्वसं).

(२) शुनी. ४।१।४४–६९, ९३–९७, १११–११४, ४।४।३–४, ३९.

निर्भर्त्सनं तिरस्कारः । अपमानः मानच्युतिकरणम् । अनशनं अनाहारेण अवस्थापनम् । बन्धनं ताडनं प्रहारः । द्रव्यहरणम् । पुरात् नगरात् निर्वासनं बहिष्करणम् । अङ्कनं शरीरे चिरस्थायिचिह्नकरणम् । व्यस्तक्षौरं मस्तकमुण्डनादिरूपं विपरीतं क्षौरकर्म । असद्यानं गर्दभाद्यारोहणेन गमनम् । अङ्गस्य अवयवस्य हस्तपादादेः छेदः । वधः प्राणदण्डः । तथा युद्धम् । एते निर्भर्त्सनादयः उपायाः दण्डस्यैव प्रभेदकाः विशेषा इत्यर्थः । शुनीटी.

दण्डप्रयोजनम्

***जायते धर्मनिरता प्रजा दण्डभयेन च ।**
**करोत्याधर्षणं नैव तथा चासत्यभाषणम् ॥**
**क्रूराश्च मार्दवं यान्ति दुष्टा दौष्ट्यं त्यजन्ति च ।**
**पशवोऽपि वशं यान्ति विद्रवन्ति च दस्यवः ॥**
**पिशुना मूकतां यान्ति भयं यान्त्याततायिनः ।**
**करदाश्च भवन्त्यन्ये वित्रासं यान्ति चापरे ।**
**अतो दण्डधरो नित्यं स्यान्नृपो धर्मरक्षणे ॥**
**गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।**
**उत्पथं प्रतिपन्नस्य कार्यं भवति शासनम् ॥**

अवलिप्तस्य उद्धतस्य कार्याकार्यं कर्तव्याकर्तव्यम् अजानतः उत्पथं प्रतिपन्नस्य गतस्य गुरोरपि शासनं दण्डनं कार्यं करणीयं भवति । शुनीटी.

**राज्ञां सदण्डनीत्या हि सर्वे सिध्यन्त्युपक्रमाः ।**
**दण्ड एव हि धर्माणां शरणं परमं स्मृतम् ॥**

राज्ञां सदण्डनीत्या सदण्डया दण्डसहितया नीत्या सर्वे उपक्रमाः कार्याणि सिध्यन्ति हि । हि यतः दण्ड एव धर्माणां परमं शरणम् आश्रयः स्मृतम् । शुनीटी.

**अहिंसैवासाधुहिंसा पशुवच्छ्रुतिचोदनात् ॥**

श्रुतिचोदनात् शास्त्रदर्शनात् पशुवत् असाधूनां हिंसा अहिंसा एव । यथा यज्ञे पशुवधः शास्त्रीयत्वादहिंसैवेति भावः । शुनीटी.

**दण्ड्यस्यादण्डनान्नित्यमदण्ड्यस्य च दण्डनात् ।**
**अतिदण्डाच्च गुणिभिस्त्यज्यते पातकी भवेत् ॥**

दण्ड्यस्य दण्डार्हस्य अदण्डनात् दण्डाकरणात् अदण्ड्यस्य अदण्डनीयस्य दण्डनात् तथा नित्यं सततम् अतिदण्डात् अधिकदण्डनाच्च गुणिभिः विद्वद्भिः त्यज्यते । राजेति कर्मपदमध्याहार्यम् । पातकी पापी भवेच्च, तत्कारी राजेति शेषः । शुनीटी.

**अल्पदानान्महत् पुण्यं दण्डप्रणयनात् फलम् ।**
**शास्त्रेषूक्तं मुनिवरैः प्रवृत्त्यर्थं भवाय च ॥**

अल्पदानात् यत्किंचनदानात् महत् पुण्यं प्रवृत्त्यर्थं दानादिधर्मकार्ये प्रवर्तनाय । तथा दण्डप्रणयनात् यथाशास्त्रदण्डकरणात् महत् फलं भयाय लोकानां भयप्रदर्शनाय मुनिवरैः शास्त्रेषु उक्तं कथितम् ।

शुनीटी.

**अश्वमेधादिभिः पुण्यं तत् किं स्यात् स्तोत्रपाठतः ।**
**क्षमया यत्तु पुण्यं स्यात् तत्किं दण्डनिपातनात् ॥**

अश्वमेधादिभिः यागैः यत् पुण्यम्, भवतीति शेषः, तत् स्तोत्रपाठतः स्तवपाठात् किं स्यात्? नैवेत्यर्थः । तथा क्षमया यत् पुण्यं स्यात् दण्डनिपातनात् तत् पुण्यं किं स्यात्? नैवेत्यर्थः । शुनीटी.

**स्वप्रजादण्डनाच्छ्रेयः कथं राज्ञो भविष्यति ।**
**तद्दण्डाज्जायते कीर्तिधनपुण्यविनाशनम् ॥**

स्वस्य प्रजानां दण्डनात् राज्ञः श्रेयः कथं भविष्यति? नैवेत्यर्थः । प्रत्युत तद्दण्डात् तासां दण्डनात् कीर्तिधनपुण्यानां विनाशनं भवति । शुनीटी.

**नृपस्य धर्मपूर्णत्वाद्दण्डः कृतयुगे न हि ।**
**त्रेतायुगे पूर्णदण्डः पादाधर्माः प्रजा यतः ॥**

कृतयुगे नृपस्य धर्मपूर्णत्वात् दण्डः न हि आसीदित्यर्थः । त्रेतायुगे यतः प्रजाः पादाधर्माः अधर्मैकपादनिष्ठा इत्यर्थः । अतः पूर्णदण्डः आसीत् । शुनीटी.

* अस्य श्लोकत्रयस्य व्याख्यानं 'राजनीतेः सामान्यसिद्धान्ताः०' इत्यस्मिन् प्रकरणे (पृ. ७६५) द्रष्टव्यम् ।

**द्वापरे चार्धधर्मत्वात् त्रिपाद्दण्डो विधीयते ।**
**प्रजा निःस्वा राजदौष्ट्याद्दण्डार्धं तु कलौ यथा ॥**

द्वापरे तु अर्धधर्मत्वात् त्रिपात् दण्डः विधीयते व्यवस्थीयते । यथा यतः कलौ राज्ञः दौष्ट्यात् दोषात् प्रजाः निःस्वाः निर्धनाः भवन्ति, अतः दण्डार्धम् अर्धदण्डः, विधीयते इति शेषः । शुनीटी.

यथा राजा तथा प्रजा, न्याय्यदण्डत्वम्

***युगप्रवर्तको राजा धर्माधर्मप्रशिक्षणात् ।**
**युगानां न प्रजानां न दोषः किंतु नृपस्य हि ॥**
**प्रसन्नो येन नृपतिस्तदाचरति वै जनः ।**
**लोभाद्भयाच्च किं तेन शिक्षितं नाऽऽचरेत् कथम् ॥**
**सुपुण्यो यत्र नृपतिर्धर्मिष्ठास्तत्र हि प्रजाः ।**
**महापापी यत्र राजा तत्राधर्मपरो जनः ॥**
**न कालवर्षी पर्जन्यस्तत्र भूर्न महाफला ।**
**जायते राष्ट्रह्रासश्च शत्रुवृद्धिर्धनक्षयः ॥**
**सुराप्यपि वरो राजा न स्त्रैणो नातिकोपवान् ।**
**लोकांश्चण्डस्तापयति स्त्रैणो वर्णान् विलुम्पति ॥**
**मद्यप्येकश्च भ्रष्टः स्याद् बुद्धया च व्यवहारतः ।**
**कामक्रोधौ मद्यतमौ सर्वमद्याधिकौ यतः ॥**
**धनप्राणहरो राजा प्रजायाश्चातिलोभतः ।**
**तस्मादेतत्त्रयं त्यक्त्वा दण्डधारी भवेन्नृपः ॥**
**अन्तर्मृदुर्बहिः क्रूरो भूत्वा स्वां दण्डयेत् प्रजाम् ।**
**अत्युग्रदण्डकल्पः स्यात् स्वभावा हितकारिणः ॥**
**राष्ट्रं कर्णेजपैर्नित्यं हन्यते च स्वभावतः ।**
**अतो नृपः सूचितोऽपि विमृशेत् कार्यमादरात् ॥**
**आत्मनश्च प्रजायाश्च दोषदर्श्युत्तमो नृपः ।**
**विनियच्छति चाऽऽत्मानमादौ भृत्यांस्ततः प्रजाः ॥**

* एतदादिश्लोकदशकस्य व्याख्यानं 'राजकर्तव्यानि' इत्यस्मिन् प्रकरणे (पृ. ११५१–११५२) द्रष्टव्यम् ।

**न निहन्याच्च भूतानि त्विति जागर्ति वै श्रुतिः ।**
**तस्मात् सर्वप्रयत्नेन वधदण्डं त्यजेन्नृपः ॥**

भूतानि प्राणिनः न निहन्यात् इति श्रुतिः जागर्ति । वैशब्दः अवधारणार्थः । तस्मात् नृपः सर्वप्रयत्नेन वधदण्डं त्यजेत् । शुनीटी.

**अवरोधाद्बन्धनेन ताडनेन च कर्षयेत् ।**
**लोभान्न कर्षयेद्राजा धनदण्डेन वै प्रजाम् ॥**

राजा अवरोधात् बन्धनेन ताडनेन प्रहारेण च प्रजां कर्षयेत् पीडयेत् । लोभात् धनदण्डेन न कर्षयेत् । शुनीटी.

**नासहायास्तु पित्राद्या दण्डयाः स्युरपराधिनः ।**
**क्षमाशीलस्य वै राज्ञो दण्डग्रहणमीदृशम् ॥**

अपराधिनः जनस्य असहायाः पित्राद्याः परिजनाः न दण्डयाः दण्डनीयाः स्युः । क्षमाशीलस्य राज्ञः ईदृशम् उक्तरूपं दण्डग्रहणं शासनमित्यर्थः । शुनीटी.

**नापराधं तु क्षमते प्रदण्डो धनहारकः ।**
**नृपो यदा तदा लोकः क्षुभ्यते भिद्यते परैः ॥**

यदा नृपः प्रदण्डः तीक्ष्णदण्डः तथा धनहारकः सन् न क्षमते तदा लोकः क्षुभ्यते विरज्यते । परैः राजशत्रुभिः भिद्यते । संसृज्यते इति यावत् । शुनीटी.

**अतः सुभागदण्डी स्यात् क्षमावान् रञ्जको नृपः ॥**

अतः अस्मात् कारणात् नृपः सुभागदण्डी सुष्ठु विभज्य दण्डयतीति तथोक्तः क्षमावान् तथा रञ्जकः, प्रजानामिति शेषः, स्यात् भवेत् । शुनीटी.

शत्रुवशेषु दण्डः प्रयोज्यः, गणं भित्त्वा व्यक्तिभेदेन दण्डः प्रयोज्यः

**राज्ञो राष्ट्रस्य विकृतिं तथा मन्त्रिगणस्य च ।**
**इच्छन्ति शत्रुसंबन्धाद्ये तान् हन्याद्धि द्राङ् नृपः ॥**

ये जनाः शत्रुसंबन्धात् शत्रोरुपजापात् । परामर्शादित्यर्थः । राज्ञः राष्ट्रस्य राज्यस्थजनस्य तथा मन्त्रि-

गणस्य विकृतिं वैपरीत्यम् इच्छन्ति । नृपः द्राक् झटिति तान् हन्यात् हि नाशयेदेव । हिशब्दः अवधारणार्थः । शुनीटी.

**नेच्छेच्च युगपद् ह्रासं गणदौष्ट्ये गणस्य च ।**
**एकैकं घातयेद्राजा वत्सोऽश्नाति यथा स्तनम् ॥**

राजा गणानां समूहानां दौष्ट्ये दुष्टतायां गणस्य समूहस्य युगपत् समकालमेव ह्रासं विनाशं न इच्छेत् । यथा वत्सः शिशुः स्तनम् एकैकमित्यर्थः, अश्नाति पिबति तथा एकैकं दुर्जनं क्रमशः घातयेत् । तद्दर्शनेन अपरे तत्पापात् निवर्तन्तामिति भावः । शुनीटी.

**अधर्मशीलो नृपतिर्यदा तं भीषयेज्जनः ।**
**धर्मशीलातिबलवद्रिपोराश्रयतः सदा ॥**

यदा नृपतिः अधर्मशीलः दुराचारः भवेत् तदा जनः धर्मशीलस्य अतिबलवतः रिपोः राजविपक्षस्य आश्रयतः आश्रयेण तं नृपतिं सदा भीषयेत् भयं दर्शयेत् । शुनीटी.

**यावत्तु धर्मशीलः स्यात्स नृपस्तावदेव हि ।**
**अन्यथा नश्यते लोको द्राङ् नृपोऽपि विनश्यति ॥**

यावत् नृपः धर्मशीलः स्यात् तावदेव स नृपः राजा सन् तिष्ठतीति भावः । अन्यथा तस्य अधर्मशीलत्वे इत्यर्थः, लोकः नश्यते, नृपोऽपि सः द्राक् झटिति विनश्यति । शुनीटी.

दण्ड्या नोपेक्षणीयाः

**वर्तयन्त्यन्यथा दण्ड्या या वर्णाश्रमजातयः ॥**

याः वर्णानां ब्राह्मणादीनाम् आश्रमाणां च जातयः अन्यथा अन्येन प्रकारेण शास्त्रबाह्यमार्गेणेत्यर्थः, वर्तयन्ति व्यवहरन्ति ताः दण्ड्याः, राज्ञेति शेषः । शुनीटी.

**कुलान्यकुलतां यान्ति ह्यकुलानि कुलीनताम् ।**
**यदि राज्ञोपेक्षितानि दण्डतोऽशिक्षितानि च ॥**

यदि राज्ञा उपेक्षितानि तथा दण्डतः दण्डेन अशिक्षितानि तदा कुलानि अकुलतां तथा अकुलानि कुलीनतां यान्ति प्राप्नुवन्ति । सर्वे यथेच्छचारिणो भवन्तीत्यर्थः । शुनीटी.

**स्वस्वजात्युक्तधर्मो यः पूर्वैराचरितः सदा ।**
**तमाचरेच्च सा जातिर्दण्ड्या स्यादन्यथा नृपैः ॥**

यः पूर्वैः पूर्वपुरुषैः स्वस्वजातिविहितः धर्मः आचरितः सा जातिः तज्जातीयो नरः सदा तं धर्ममाचरेत् । अन्यथा नृपैः दण्ड्या दण्डनीया स्यात् । शुनीटी.

युद्धनिमित्तविचारः

[१]**उपायान् षड्गुणान् वीक्ष्य शत्रोः स्वस्यापि सर्वदा ।**
**युद्धं प्राणात्यये कुर्यात् सर्वस्वहरणे सति ॥**

शत्रोः स्वस्य आत्मनः अपि उपायान् सामादीन् तथा षड्गुणान् संध्यादीन् सर्वदा वीक्ष्य प्राणात्यये तथा सर्वस्वहरणे आपतिते सति युद्धं कुर्यात् । शुनीटी.

## योगयात्रा

दण्ड्येषु दण्डः प्रयोज्यः

[२]**क्षमान्वितोऽस्मीति विचिन्त्यमेत-**
**द्दण्ड्येषु दण्डक्षमणं न धर्मः ।**
**दण्डप्रभावो हि स दुर्जनस्य**
**हस्ते न यज्जीवति साधुवर्गः ॥**

[३]**सुतरामभिवर्धतेऽभिमानो**
**नीचानां क्षमयाऽन्वितेषु यस्मात् ।**
**अत उग्रतरेण ते निवर्त्या**
**येनान्येऽपि खलास्तथा न भूयः ॥**

[४]**यस्मिन् गृहीते सदृशापराधो**
**महाजनस्त्रासमुपैति तस्मिन् ।**

---

(१) शुनी. ४।७।२९९.

(२) योया. २।२८ ; नीम. ३८ मेतद्द ( चैवं द ) यज्जीवति साधु ( यो जीवति जीव ).

(३) योया. २।२९; नीम. ३८ षु यस्मात् ( नृपे च ).

(४) योया. २।३०–३१ ; नीम. ३८.

दण्डो निपात्यो मनुजेश्वरेण
कालान्तरेऽन्यद्व्यपदिश्य कार्यम् ॥
द्विरद इव मदेन विप्रयुक्तो
विषरहितो भुजगो व्यसिश्च कोशः ।
परिभवमुपयाति नापराधे
यदि मनुजाधिपतिः करोति दण्डम् ॥
[1]एकस्य तुल्योदरपाणिपादा
दण्डात्प्रभीताः प्रणमन्ति मर्त्याः ।
अत्युग्रदण्डादपि चोद्विजन्ते
दण्डोऽपराधप्रतिमः शिवाय ॥

## नीतिवाक्यामृतम्

दण्डलक्षणम् , दण्डयो दण्डसाध्यो रिपुः

[2]**वधः परिक्लेशोऽर्थहरणं च दण्डः ॥**

अथ दण्डस्य स्वरूपमाह— वध इति । यत्र शत्रोर्वधः क्रियते परिक्लेशो वा अर्थहरणं वा क्रियते स दण्ड उच्यते । तथा च जैमिनिः— 'वधस्तु क्रियते यत्र परिक्लेशोऽथवा रिपोः । अर्थस्य ग्रहणं भूरिर्दण्डः स परिकीर्तितः ॥' । नीवाटी.

[3]**दण्डसाध्ये रिपावुपायान्तरमग्नावाहुतिप्रदानमिव ॥**

अथ दण्डसाध्यस्य रिपोर्यः सामादीनुपायान् करोति तस्य यद्भवति तादह— दण्डेति । यो राजा दण्डसाध्ये युद्धसाध्ये शत्रौ उपायान्तरं करोति तत्तस्य उपायान्तरं किंविशिष्टम् ? अग्नौ घृताहुतिप्रदानमिव । यथा वैश्वानरो घृताहुत्या ज्वालां मुञ्चति तथा शत्रुरपि क्रोधमुद्गिरति । तथा च माघः— 'सामवादाः सकोपस्य तस्य प्रत्युत दीपकाः । प्रतप्तस्येव सहसा सर्पिषस्तोयबिन्दवः ॥' (शिशुपालवधम् २।५५) । नीवाटी.

[4]**अपराधानुरूपो दण्डः पुत्रेऽपि प्रणेतव्यः ॥**

(१) योवा. २।३२ ; नीम. ३८ दण्डात्प्र (दण्डाय).
(२) नीवा. २९।७४.
(३) नीवा. ३०।३९.
(४) नीवा. २६।४१.

अथ राज्ञा यथा दण्डः पातयितव्यः तथाऽऽह— अपराधानुरूप इति । प्रणेतव्यः पातनीयः । कोऽसौ ? दण्डः । किंविशिष्टः ? अपराधानुरूपः । कस्मिन् ? पुत्रेऽपि, आस्तां तावदन्येषु । तथा च शुक्रः— 'अपराधानुरूपोऽत्र दण्डः कार्यो महीभुजा । पुत्रस्यापि किमन्येषां ये स्युः पापपरायणाः ॥' । नीवाटी.

## युक्तिकल्पतरुः

दण्ड्येषु दण्डः प्रयोज्यः नादण्ड्येषु

[1]**यथाबलं प्रकुर्वीत दुष्टदण्डनिपातनम् ॥**

[2]**अपराद्धेषु भूपालो दण्डं कुर्याद्यथाविधि ।**
**अन्यथाकरणात्तस्य राजा भवति किल्बिषी ॥**
**विपक्षवचनादन्यो भृत्यो दण्डं न चार्हति ।**
**विपक्षवचनाद्दण्डः स्वामिनं नरकं नयेत् ॥**

## मानसोल्लासः

उपायत्रितयस्याविषये दण्डः प्रयोज्यः ,
पञ्चदशविधा दण्डाः

[3]**उपायत्रितयेनापि यो न शक्यो भवेद्रिपुः ।**
**तस्य दण्डं प्रयुञ्जीत बलवान् यदि भूपतिः ॥**
**सामादीनां प्रयोक्तारमशक्तं मन्यते द्विषः ।**
**तस्माद्दण्डं प्रयुञ्जीत दण्डो हि वशकृन्नृणाम् ॥**
**बलिष्ठेन तथा कार्या दण्डा द्वादशभेदजाः ।**
**अशक्तेन त्रयः कार्या एवं पञ्चदश स्मृताः * ॥**
**अन्ये च दण्डाः कर्तव्या भूभृता धर्मवर्तिना ।**
**वधः क्लेशोऽर्थहरणो जनानां वृत्तरक्षकः ॥**

* पञ्चदशसु दण्डेषु दुर्गभङ्गः, युद्धवधः, विषम्, घातः, अभिचारश्चेत्येतेषां दण्डानां निरूपणं यात्रावान्तरप्रकरणेषु यथायथं संगृहीतम् ।

(१) युक. १४।१०२.
(२) युक. १५।१०६, १०८.
(३) मासो. २।१०३१–१०४७.

देशनाशश्च शत्रूणां जनाङ्गच्छेदकस्तथा ।
गोग्रहो धान्यहरणो बन्दिग्राहस्तथाऽपरः ॥
देशहारो धनादानः सर्वस्वहरणोऽपरः ।
दुर्गभङ्गः स्थानदाहो देशनिर्वासकस्तथा ॥
युद्धावहो(? युद्धवधो) महादण्डः शत्रुसंहार-
कारकः ।
उपायानां तुरीयश्च कथितः सोमभूभुजा ॥
वनानि यत्र छेद्यन्ते भेद्यन्ते च जलाशयाः ।
ग्रामाश्च यत्र दह्यन्ते स दण्डो देशनाशकः ॥
नासिका श्रवणद्वन्द्वं छिद्यते देशवासिनाम् ।
जनानां यत्र दण्डोऽसौ जनाङ्गच्छेदनो मतः ॥
देशजाः पशवः सर्वे गृह्यन्ते सहसा बलात् ।
दण्डोऽसौ गोग्रहो नाम विख्यातः परभूमिषु ॥
गर्भेषु पिहितं धान्यं क्षेत्रसस्यशिखाहतम् ।
आपणे पुञ्जितं यच्च खले राशीकृतं च यत् ॥
तत् सर्वं ह्रियते यत्तु रिपुराष्ट्रेषु संस्थितम् ।
दण्डोऽसौ धान्यहरणो देशदुर्भिक्षकारकः ॥
कुटुम्बिनो गृहस्था ये धनिका व्यवहारिणः ।
नीयन्ते यत्र बद्ध्वा ते बन्दिग्राहः स उच्यते ॥
जनानामभयं दत्त्वा तत्र स्थित्वा तथाऽन्यजम् ।
आत्मसात् क्रियते राष्ट्रं स दण्डो देशहारकः ॥
आक्रम्य सैनिकैर्ग्रामान् बलात्कृत्वा सुसंगतिम् ।
आहरेत्काञ्चनं दण्डो बला(? धना)दानः स
उच्यते ॥
महत्या सेनया युक्तः ख्यातं नगरपट्टनम् ।
आवेष्ट्य लुप्यते यत्र धनधान्यगवादिकम् ॥
लोहभाण्डानि वस्त्राणि गृहोपकरणानि च ।
यस्माच्च गृह्यते सर्वं सर्वस्वहरणो हि सः ॥
[1]यस्मिन् पुरे वसेच्छत्रुः सपुत्रबलवाहनः ।
तत् पुरं राजनिलयं साट्टप्राकारतोरणम् ॥
अन्तःपुरे पुरंध्रीणां रम्याणि भवनानि च ।
निकेतनानि पुत्राणाममात्यानां गृहाणि च ॥

(१) मासो. २।१०७५–१०८१.

सचिवानां निवासाश्च मन्त्रिणां सदनानि च ।
अन्येषां च मनुष्याणां मन्दिराणि बहूनि च ॥
मन्दुरा गजशालाश्च विविधानापणानपि ।
भस्मसात् कुरुते यत्तु स दण्डः स्थानदाहकः ॥
देशत्यागपरिभ्रष्टः कृतभोगपरिच्युतः ।
गिरिकन्दरकान्तारनिकुञ्जभवनाश्रयः ॥
वियुक्तो दारपुत्रैश्च बन्धुभिः सचिवैस्तथा ।
क्षुत्पिपासापरीतश्च चिन्ताशोकसमन्वितः ॥
यानासनविहीनश्च गजवाजिविवर्जितः ।
शत्रोरेवंविधो दण्डो देशनिर्वासकः स्मृतः ॥
[1]विशेश्च(?)दन्ति–भुजग–शस्त्रानल–जला-
दिभिः ।
पापानां प्राणहरणं वधदण्डः प्रकीर्तितः ॥
केशानां कर्णयोरक्ष्णोर्नासिकायास्तथैव च ।
जिह्वायाः करयोस्तद्वदङ्गुलीप्रजनस्य च ॥
पादयोरेवमादीनामङ्गानां छेदनं च यत् ।
अपराधानुसारेण क्लेशदण्डः स उच्यते ॥
बन्धनं ताडनं वाचा रूक्षया भर्त्सनं तथा ।
एवंविधप्रकारोऽपि क्लेशदण्डः प्रकीर्तितः ॥
पणानां द्वे शते सार्धे प्रथमः साहसः स्मृतः ।
मध्यमः पञ्च विज्ञेयः सहस्रं चैव चोत्तमः ॥
विवादेन समः क्वापि द्विगुणः क्वापि कथ्यते ।
त्रिगुणो वा क्वचित् प्रोक्तः क्वचिदुक्तश्चतुर्गुणः ॥
सर्वस्वस्याधिकः क्वापि दमः सर्वस्वमेव वा ।
दोषद्रव्यानुसारेण दण्डोऽर्थहरणः स्मृतः ॥

## अनिर्दिष्टकर्तृकवचनानि

दण्डलक्षणम्, दण्डपातविवेकः, अदण्ड्याः

[2]दण्डो दमनमित्याहुः ॥

येन शत्रवः स्वप्रकृतयो विषयवासिनश्चान्यायकारिणो दम्यन्ते स दण्डः अमात्यादिसंपत् । मेधा.

(१) मासो. २।१२८७–१२९३.
(२) मेधा. ७।४३.

[1]देशकालवयःशक्तिबलं संचिन्त्य कर्मणि ।

तथाऽपराधं वाऽवेक्ष्य दण्डं दण्ड्येषु पातयेत् ॥

( १ ) बौवि. १।१८।२० स्मृत्यन्तरम्.

* [1]अदण्ड्यौ मातापितरौ स्नातकपुरोहितपरिव्राजकवानप्रस्थाः श्रुतशीलशौचाचारवन्तस्ते हि धर्माधिकारिणः ॥

* इदं वचनं व्यवहारविषयकनिबन्धेषु क्वचित् शङ्खस्य क्वचित् शङ्खलिखितयोश्चेति व्यवहारकाण्डे स्पष्टम् ।

( १ ) मिता. १।३५८ स्मृत्यन्तरम् ; अप. १।३५६—३५७ स्थाः श्रु (स्थश्रु) स्मृत्यन्तरम् ; राप्र. २९१.

# उपेक्षा

## विष्णुधर्मोत्तरपुराणम्

सामादेरुपायचतुष्टयस्यायुक्तत्वे उपेक्षा कार्या

पुष्कर उवाच–

[1]यदि मन्येत नृपतिरनेन मम विग्रहे ।
अनर्थायानुबन्धः स्यात्संधिना च तथा भवेत् ॥
[2]साम लज्जास्पदं चात्र दानं चार्थक्षयंकरम् ।
भेदे दण्डेऽनुबन्धः स्यात्तदोपेक्षां समाश्रयेत् ॥
[3]अवज्ञोपहतस्तत्र राज्ञा कार्यो रिपुर्भवेत् ।
उपेक्षैव च धर्मज्ञ श्रेयसी तत्र सा स्मृता ॥
[4]उपेक्षया यत्र तु शक्यमर्थ-
क्षयव्ययायासविहीनया न ।
कार्यं भवेद्ब्राह्मण विग्रहेण
लज्जास्पदेनाप्यथ संधिना वा ॥

यत्र अर्थक्षयव्ययाभ्यां आयासेन च विहीनया उपेक्षया शक्यं कार्यं कर्तुं तत्र हे ब्राह्मण राम, लज्जास्पदेन विग्रहेण संधिना च कार्यं न भवेत् । राप्र. ३०४

## अग्निपुराणम्

सामादेरुपायचतुष्टयस्यायुक्तत्वे उपेक्षा कार्या

[5]......... उपेक्षां शृणु भार्गव ।
यदा मन्येत नृपती रणे न मम विग्रहः ॥
अनर्थायानुबन्धः स्यात्संधिना च तथा भवेत् ।
साम लब्धास्पदं चात्र दानं चार्थक्षयंकरम् ॥
भेददण्डानुबन्धः स्यात्तदोपेक्षां समाश्रयेत् ।
न चायं मम शक्नोति किंचित्कर्तुमुपद्रवम् ॥
न चाहमस्य शक्नोमि तत्रोपेक्षां समाश्रयेत् ।
अवज्ञोपहतस्तत्र राज्ञा कार्यो रिपुर्भवेत् ॥
[1]अन्याये व्यसने युद्धे प्रवृत्तस्यानिवारणम् ।
उपेक्षेयं स्मृता भ्रातोपेक्षितश्च हिडिम्बया ॥

## कामन्दकीयनीतिसारः

अप्रत्यक्षरूपा उपेक्षा कर्तव्या

[2]*उपेक्षया वा हन्तव्या येषूपांशु प्रशस्यते ।
उपेक्षां चापि निपुणः प्रत्यक्षं परिवर्जयेत् ॥
[3]प्रत्यक्षमपि चोपेक्षामप्रत्यक्षमिवाऽऽचरेत् ॥

वधस्य प्रत्यक्षम् उपेक्षां वर्जयेत् इत्युक्तं प्राक् । इदानीं तस्य विशेषः । प्रत्यक्षम् उपेक्षाम् अप्रत्यक्षमिव आचरेत् आकारसंवरणेन । जम.

त्रिविधा उपेक्षा

[4]अन्याये व्यसने युद्धे प्रवृत्तस्यानिवारणम् ।
इत्युपेक्षार्थकुशलैरुपेक्षा त्रिविधा स्मृता ॥

(१) अन्याये अदण्ड्यदण्डनादौ । व्यसने मृगयादौ । युद्धे ज्यायसा सह । जम.

(२) उपेक्षालक्षणमाह– अन्याय इति । अन्याये न्यायविरुद्धे कार्ये, व्यसने कामजे कोपजे च दोषे, युद्धे च प्रवृत्तस्य प्रवृत्तिमतः अनिवारणम् अप्रतिषेधः उपेक्षा । अन्यत् स्पष्टम् । उनिसा.

---

(१) विध. २।१४७।१ यदि (अभि); राप्र. ३०४.

(२) विध. २।१४७।२ चार्थक्षयंकरम् (चात्रक्षयार्थकम्) तदोपेक्षां (तदा पक्षं); राप्र. ३०४.

(३) विध. २।१४७।३ क्षैव च (क्षयैव) श्रेयसी (श्रेयसे); राप्र. ३०४.

(४) विध. २।१४७।४ पूर्वार्धे (उपेक्षया यत्र तु शक्यमर्थं क्षयव्यवाया समता न तत्र ।); राप्र. ३०४.

(५) अग्नि. २३४।४–७.

* अस्य व्याख्यानं 'उपायाः– दण्डः' इत्यस्मिन् प्रकरणे (पृ. १९८१–१९८२) द्रष्टव्यम् ।

(१) अग्नि. २४१।६६.

(२) कानी. १८।१४.

(३) कानी. १८।१८. उपाध्यायनिरपेक्षानुसारिण्यां नास्ति.

(४) कानी. १८।५७–५९.

**अकार्ये सज्जमानस्तु विषयान्धीकृतेक्षणः ।**
**कीचकस्तु विराटेन हन्यतामित्युपेक्षितः ॥**

(१) कीचको विराटेनेति । स हि शौर्यात् राजवाल्लभ्यात् अन्याये व्यसने च प्रवृत्तो भीमसेनेन हन्यतामिति मत्स्यराजेनोपेक्षितः । तथा च महाभारते श्लोकः— 'शौर्यादिवल्लभो राज्ञो महासत्त्वश्च कीचकः । आसीत् प्रहर्ता च नृणां नामशेषः सुदुर्मतिः ॥' (भामु. ४।२५।२-३)। जम.

(२) उपेक्षाया उदाहरणमाह— अकार्य इत्यादि- श्लोकद्वयेन । श्लोकद्वयं स्पष्टम् । उनिसा.

**संरब्धो भीमसेनेन स्वार्थविच्छेदभीतया ।**
**हिडिम्बया निजो भ्राता हन्यतामित्युपेक्षितः ॥**

स्वार्थविच्छेदभीतयेति । हिडिम्बस्य रक्षसो वनमुपगतेषु पाण्डवेषु तद्भगिनी हिडिम्बा भीमसेनं दृष्ट्वा दोलाव्यतिकरात् संजातरागा स्वयं पाणिमग्राहयत् । तद्भ्राता च क्रुद्धो युयुत्सुर्भीमसेनेन हन्यतामित्यनयोपेक्षितो मा भूदनेन संप्रयोगविच्छेदो ममेति । जम.

# माया

✦—✦

## विष्णुधर्मोत्तरपुराणम्

माया नाम कपटप्रयोगाः

पुष्कर उवाच—

[1]उत्पातैरनृतैः कार्यं परस्योद्वेजनं नृपैः ।
अरातिशिबिरस्यात्र वसतिर्यस्य पक्षिणः ॥

अथ माया । सा च विना मन्त्रतन्त्रादिकं अन्यथा-भूतस्यार्थस्यान्यथाभासनोपायः । कपटमिति लोके प्रसिद्धम् । तथा च विष्णुधर्मोत्तरे— 'पुष्कर उवाच— उत्पातैर्विविधैः ...... ॥' । राप्र. ३०५

[2]स्थूलस्य तस्य पुच्छस्थां कृत्वोल्कां विपुलां द्विज ।
विसृज्यैनं ततस्तीव्रमुल्कापातं प्रदर्शयेत् ॥

[3]अनेनैवानुसारेण बुद्ध्या निश्चित्य यत्नतः ।
उत्पातानि तथाऽन्यानि दर्शनीयानि पार्थिवैः ॥

[4]उद्वेजनं तथा कुर्यात्कुहकैर्विविधैर्द्विषाम् ।
सांवत्सरा नवर्षं च नाशं ब्रूयुः परस्य च ॥

सांवत्सराः ज्योतिर्विदः । नवर्षं वृष्ट्यभावम् ।

राप्र. ३०५

[1]जिगीषुः(?षोः) पृथिवीराज्यं तेन चोद्वेजयेत्परान् ।
देवतानां प्रसादानि कीर्तनीयानि तस्य तु ॥

[2]सुस्वप्नलाभांश्च तथा जिगीषुं प्रति कीर्तयेत् ।
दुःस्वप्नलाभं च तथा परेषामिति निश्चयः ॥

[3]आगतं नो मित्रबलं प्रहरध्वमभीतवत् ।
एवं ब्रूयाद्रणे प्राप्ते भग्ना भग्नाः परे इति ॥

[4]क्ष्वेडाकिलकिलाशब्दमस्य शत्रुर्हतस्तथा ।
देवाज्ञाबृंहितो राजा संनद्धः समरं प्रति ॥

[5]एवंप्रकारा द्विजवर्य मायाः
कार्या नरेन्द्रैररिषु प्रहृष्टैः ।
मायाहतः शत्रुरथ प्रसह्य
शक्यः सुखं हन्तुमदीनसत्त्वः ॥

---

(१) विध. २।१४८।१ द्वेज (द्वीज); अग्नि. २३४।८ (मायोपायं प्रवक्ष्यामि उत्पातैरनृतैश्चरन् । शत्रोरुद्वेजनं शत्रोः शिबिरस्थस्य पक्षिणः ।। ); राप्र. ३०५ रनृतैः (र्विवधैः) स्यात्र (स्थाने).

(२) विध. २।१४८।२ स्तीव्र (स्तीर); अग्नि. २३४।९ तृतीयचरणे (विसृजेच्च ततश्चैव ); राप्र. ३०५.

(३) विध. २।१४८।३ वानु (वात्र); अग्नि. २३४।१० (एवमन्ये दर्शनीया उत्पाता बहवोऽपि च ।।) एतावदेव; राप्र. ३०५.

(४) विध. २।१४८।४ र्विवि (र्द्विवि) रा नवर्षं च (रानहार्षश्च); अग्नि. २३४।१०–११ रा नवर्षं च (रास्तापसाश्च); राप्र. ३०५.

(१) विध. २।१४८।५ वीराज्यं (वी राज्ये); अग्नि. २३४।११–१२ वीराज्यं (वीं राजा) उत्तरार्धे (देवतानां प्रसादश्च कीर्तनीयः परस्य तु ॥ ); राप्र. ३०५ चोद्वे (वोद्वे).

(२) विध. २।१४८।६ सुस्व (स स्व); षुं प्रति की (षुः प्रतिकी); राप्र. ३०५.

(३) विध. २।१४८।७ भग्ना भ (मया भ); अग्नि. २३४।१२–१३ भग्ना भग्नाः (भग्नाः सर्वे); राप्र. ३०५.

(४) विध. २।१४८।८ डाकिल (डाः किल) शब्दमस्य (शब्दं मम); अग्नि. २३४।१३–१४ पूर्वार्धे (क्ष्वेडाः किलकिलाः कार्या वाच्यः शत्रुर्हतस्तथा ।); राप्र. ३०५.

(५) विध. २।१४८।९ ; राप्र. ३०५ प्रसह्य शक्यः (प्रशक्यः संख्ये).

## अग्निपुराणम्

मायास्वरूपम्

[1]देवताप्रतिमानां तु पूजयाऽन्तर्गतैर्नरैः ।
पुमान् स्त्रीवस्त्रसंवीतो निशि चाद्भुतदर्शनः ॥
वेतालोल्कापिशाचानां शिवानां च स्वरूपिका । *
कामतो रूपधारित्वं शस्त्राग्न्यश्माम्बुवर्षणम् ॥
तमोऽनिलोऽनलो मेघ इति माया ह्यमानुषी ।
जघान कीचकं भीम आस्थितः स्त्रीस्वरूपताम् ॥

## कामन्दकीयनीतिसारः

मानुषामानुषमायास्वरूपम्

[2]देवताप्रतिमास्तम्भसुषिरान्तर्गता नराः ।
पुमान् स्त्रीवस्त्रसंवीतो निशि चाद्भुतदर्शनः ॥
[3]वेतालोल्कापिशाचानां शिलानां च सरूपता ।
इत्यादिमाया विज्ञेया मानुषी मानुषेश्वरैः ॥

(१) मायादीनां स्वरूपभेदं नवभिः श्लोकैराह— देवतेत्यादि । देवतायाः प्रतिमास्तम्भाश्च उत्कीर्णदेवताः अन्तःसुषिराः तन्मध्यगतैर्नरैर्नित्यपूजया च सांनिध्यख्यापनार्थमुपलक्षिताः स्युः । ततो हि ते निर्गत्य शत्रुमुपगतं हन्युः । स्त्रीवस्त्रसंवीतः स्त्रीवेषधारी शत्रुमतिसंधत्ते वा । निशि चाद्भुतदर्शनः शत्रुविजयख्यापनार्थम् । तच्च अद्भुतं वेतालादीनां सरूपता । जम.

(२) मानुषीं मायां दर्शयन्नाह— देवतेति । देवताप्रतिमास्तम्भसुषिरान्तर्गतैर्नरैः देवताप्रतिमूर्ति-स्तम्भ-विवराभ्यन्तरगतैर्मनुष्यैः, लोका विस्मिताः क्रियन्त इति शेषः । इत्थं यत् विस्मापनं सा माया इति भावः । स्त्रीवस्त्रसंवीतः पुमान् स्त्रीवेशधारी पुरुषः, निशि रात्रौ अद्भुतदर्शनं च आश्चर्यदर्शनं च, वेतालानां पिशाचानां देवानां च सरूपता तुल्यरूपता, इत्यादिमाया मानुषी विज्ञेया । मानुषश्चरन् मानुषः तया मायया चरन् सन् । लोकान् विस्मापयतीति शेषः । 'सुरूपता' इति 'मानुषैश्चरन्' इति च मुद्रितपुस्तकपाठो न सम्यक् । उनिसा.

[1]कामतो रूपधारित्वं शस्त्रास्त्राश्माम्बुवर्षणम् ।
तमोऽनिलोऽचलो मेघ इति माया ह्यमानुषी ॥

(१) कामतो रूपधारित्वम् इच्छया देहस्य रूपान्तरधारणम् । अमानुषी दिव्या माया । जम.

(२) कामतः स्वेच्छया रूपधारित्वं यस्य कस्यचित् रूपधारणम् । शस्त्रास्त्राश्माम्बुवर्षणं मायया शस्त्रास्त्रपाषाणजलानां वर्षणम् । तमोनिलीनता मायया अन्धकारं प्रसार्य तत्र लयः । अन्यत् स्पष्टम् । उनिसा.

[2]जघान कीचकं भीम आश्रितः स्त्रीसरूपताम् ।
चिरं प्रच्छन्नरूपोऽभूद् दिव्यया मायया नलः ॥

(१) द्वयस्य साफल्यमाह— जघानेति । कीचको द्रौपदीं जिहीर्षुर्गान्धर्वशालायां तत्कृतसंकेतोऽभिसृतवान् पूर्वस्थितेन तत्र तद्वेषधारिणा भीमसेनेन हत इति

---

* उक्तमायास्वरूपस्य मानुषत्वात् वक्ष्यमाणस्यामानुषत्वोक्तेश्च मानुषामानुषोभयस्वरूपा मायाऽत्र वर्णनीयेति प्रतीयते । अत एवैतत्समानाक्षरकामन्दकीयनीतिसारवचनान्यनुसृत्यातः परं 'इत्यादिमाया विज्ञेया मानुषी मानुषेश्वरैः' इत्यर्धम्, अन्ते 'चिरं प्रच्छन्नरूपोऽभूद्दिव्यया मायया नलः' इत्यमानुषमायोदाहरणं चोच्छिन्नमिति कल्प्यते । अग्निपुराणनीतिसारयोः कस्यानुवाद्यत्वं कस्य चानुवादकत्वमित्यन्यदेतत् ।

(१) अग्नि. २४१।६३–६५.

(२) कानी. १८।५३ ; उनिसा. ता नराः (तैर्नरैः) दर्शनः (दर्शनम्).

(३) कानी. १८।५४ ; उनिसा. लोल्का (लानां) शिलानां (देवानां) येश्वरैः (षश्चरन्).

(१) कानी. १८।५५; उनिसा. तमोऽनिलोऽचलो (तमोनिलीनता), अर्थापत्तिसिद्धोऽप्यवशिष्टः पाठभेदो व्याख्यानाभावान्न निर्णीयते । 'तमोनिलीनता चैव इति माया च मानुषी' इति मुद्रितपुस्तकपाठः । तत्र 'मानुषी' इत्यंशस्यानुपपन्नता स्पष्टैव.

(२) कानी. १८।५६.

प्रसिद्धमेव । प्रच्छन्नरूपो नल इति । स हि द्यूतेन हारितराज्यो वने भार्यां त्यक्त्वा कर्पटार्धसंवीतः परिभ्रमन् दवाग्निपरीतेनाजगरेण 'आधाव, मामापद्यस्व, अहं च ते प्रत्युपकरिष्यामि' इति प्रार्थितस्तं दवाग्नेर्मोचयित्वा तद्वचनेन स्वपदानि गणयन् प्रस्थितो दशमे पदे 'दश' इति ब्रुवाणः एव तेनादश्यत । तद्दष्टमात्रश्च सद्यो विकृताकृतिरप्रत्यभिज्ञेयो भूत्वा किमेतदिति पृष्टवान् । ततः सोऽजगरेण शुक्लमंशुकं दत्त्वोक्तः— 'एवं विकृतेनानेन रूपेण छन्नोऽप्रत्यभिज्ञायमानः कंचित्कालं चरित्वा यदा कलिप्रवेशान्मुक्तः स्वजनभार्यासमेतो भविष्यसि तदांऽशुकयुगलं परिधाय लब्धस्वरूपः स्वमेव राज्यं प्रतिपद्य शत्रुं च विजित्य सुखी भविष्यसि' इति । ततः स दिव्यमायया प्रच्छन्नरूपः ऋतुपर्णस्य राज्ञो गृहे सूदकर्मणा वसन् दमयन्त्या परिज्ञातः स्वयंवरव्याजात् सह ऋतुपर्णेन विदर्भपुरमानीयमानो मध्येमार्गे कलिना विमुक्तस्तया समेतस्तत्पित्रा विदर्भराजेन सह दमयन्त्या स्वमेव राज्यं प्रापितस्तत्रैव सुखं न्यवसदिति । जम.

(२) मायाया उदाहरणमाह— जघानेति । श्लोकार्थः सुगमः । उनिसा.

## शुक्रनीतिः

### मायास्वरूपम्

[1]**न कूटनीतिरभवच्छ्रीकृष्णसदृशो नृपः ।**
**अर्जुनाद्ग्रा(? नं ग्रा)हिता स्वस्य सुभद्रा भगिनी छलात् ॥**

कश्चिदपि नृपः श्रीकृष्णेन सदृशः कूटनीतिः कपटनीतिमान् न अभवत् । येन स्वस्य भगिनी सुभद्रा छलात् अर्जुनं ग्राहिता प्रापिता । शुनीटी.

**नीतिमतां तु सा युक्तिर्या हि स्वश्रेयसेऽखिला ॥**

नीतिमतां नीतिज्ञानां सा युक्तिः हि सैव युक्तिरित्यर्थः, या अखिला समग्रा स्वस्य आत्मनः श्रेयसे, भवतीति शेषः । शुनीटी.

**आदौ तद्धितकृत्स्नेहं कार्यं स्नेहमनन्तरम् ।**
**कृत्वा सधर्मवादं च मध्यस्थः साधयेद्धितम् ॥**

मध्यस्थः उदासीनः जनः आदौ अग्रतः तस्य आत्मनः हितकृति हितकारिणि मित्रे इत्यर्थः, स्नेहम्, अनन्तरं कार्यं कर्तव्यं धर्मवादसहितं धर्मवचनसमन्वितं स्नेहं च कृत्वा हितं साधयेत् । शुनीटी.

**परस्परं भवेत् प्रीतिस्तथा तद्गुणवर्णनम् ।**
**इष्टान्नधनवसनैर्लोभनं कार्यसिद्धिदम् ॥**

परस्परं यथा प्रीतिः भवेत् तथा तस्य प्रणयस्य गुणवर्णनम्, इष्टेन अभिलषितेन अन्नेन धनेन वसनेन च लोभनं लोभप्रदर्शनम्, कार्यमिति शेषः । तदेव कार्यसिद्धिदं कार्यसाधकं भवतीत्यर्थः । शुनीटी.

**दिव्यावलम्बनं मिथ्यासल्लापं धैर्यवर्धनम् ।**
**इमे उपाया मध्यस्थकुट्टिनीकारिणां मताः ॥**

मध्यस्थानां कुट्टिनीप्रभृतीनां कारिणां कार्ययोजकानामित्यर्थः, दिव्यस्य शपथस्य अवलम्बनं मिथ्यासल्लापः असत्यशिष्टालापः धैर्यवर्धनं संतोषवृद्धिकरणं च इमे उपायाः मताः इष्टाः । शुनीटी.

**नाऽऽत्मसंगोपने युक्तिं चिन्तयेत् स पशोर्जडः ।**
**जारसंगोपने छद्म संश्रयन्ति स्त्रियोऽपि च ॥**

आत्मनः संगोपने युक्तिं न चिन्तयेत् । सः आत्मगोपनार्थीत्यर्थः, पशोः पशुमपेक्ष्य जडः पश्वपेक्षयाऽपि अज्ञ इत्यर्थः । स्त्रियः अपि । अत्र अपिशब्दः एवार्थः, स्त्रिय एवेत्यर्थः । जारस्य उपपतेः संगोपने छद्म छलं संश्रयन्ति । शुनीटी.

**युक्तिश्छलात्मिका प्रायस्तथाऽन्या योजनात्मिका ।**
**यश्छद्मचारी भवति तेन च्छद्म समाचरेत् ॥**

युक्तिः द्विधा— प्रायः बाहुल्येन छलात्मिका कपटरूपा, अन्या अपरा योजनात्मिका घटनरूपा इत्यर्थः । *तेन हेतुना यः छद्मचारी कपटाचारः भवति सः छद्म कपटं समाचरेत् । शुनीटी.

---

(१) शुनी. ५।५४–६३.

* व्याख्यानं प्रामादिकम् । श्लोकार्थस्तु सुगम एव ।

**अन्यथा शीलनाशाय महतामपि जायते ।**
**अस्ति बुद्धिमतां श्रेणिर्न त्वेको बुद्धिमानतः ॥**
**देशे काले च पुरुषे नीतिं युक्तिमनेकधा ।**
**कल्पयन्ति च तद्विद्या दृष्ट्वा रुद्धां तु प्राक्तनाम् ॥**

अन्यथा उक्तवैपरीत्ये छद्मसमाचरणं महतामपि शीलनाशाय चरित्रविनाशाय जायते । किं च, बुद्धिमतां श्रेणिः समूहः अस्ति । न तु एक एव बुद्धिमान् अस्तीत्यर्थः । अतः अस्मात्कारणात् तद्विद्याः तदभिज्ञा जनाः प्राक्तनां पूर्वजन्मार्जितां युक्तिं रुद्धां न्यक्कृताम् अफलामित्यर्थः, दृष्ट्वा देशे काले पुरुषे पात्रे इत्यर्थः, च अनेकधा बहुविधां नीतिं युक्तिं च कल्पयन्ति ।

शुनीटी.

**मन्त्रौषधिपृथग्वेशकालवागर्थसंश्रयात् ।**
**छद्म संजनयन्तीह तद्विद्याकुशला जनाः ॥**

इह जगति तद्विद्याकुशलाः तासु विद्यासु मायासु कुशलाः जनाः मन्त्राणां ओषधीनां पृथक् बिभिन्नानां वेशानां परिच्छदानां कालानां वाचाम् अर्थानां च संश्रयात् छद्म छलं संजनयन्ति उत्पादयन्ति । शुनीटी.

# इन्द्रजालम्

## विष्णुधर्मोत्तरपुराणम्

इन्द्रजालप्रयोगः

पुष्कर उवाच–

[1]चतुरङ्गं बलं राजा मायाजालेन दर्शयेत् ।
सहायार्थमनुप्राप्तान् दर्शयेत्त्रिदिवौकसः ॥
[2]रक्तवृष्टिश्च संदर्श्या परेषां शिबिरं प्रति ।
छिन्नानि रिपुशीर्षाणि प्रासादाग्रेषु दर्शयेत् ॥
[3]आधित्सता संधिमहीनसत्त्व
कार्यं भवेद्राम महेन्द्रजालम् ।
वक्ष्यामि तच्चोपनिषत्सु तुभ्यं
योगानि चान्यानि जयावहानि ॥

अथेन्द्रजालम् । तच्च मन्त्रतन्त्रादिना अन्यथा-स्थितस्य अर्थस्य अन्यथावभासः । राप्र. ३०५

## अग्निपुराणम्

इन्द्रजालस्वरूपम्

[4]इन्द्रजालं प्रवक्ष्यामि इन्द्रं कालेन दर्शयेत् ॥
चतुरङ्गं बलं राजा सहायार्थं दिवौकसाम् ।
बलं तु दर्शयेत्प्राप्तं रक्तवृष्टिं चरेद्रिपौ ॥
छिन्नानि रिपुशीर्षाणि प्रासादाग्रेषु दर्शयेत् ॥

---

(१) विध. २।१४९।१; राप्र. ३०६ माया (इन्द्र).

(२) विध. २।१४९।२ शिबिरं (शिवरं); राप्र. ३०६.

(३) विध. २।१४९।३; राप्र. ३०६ सत्त्व (सत्त्वात्) तच्चोप (तेऽन्योप) तुभ्यं (तुल्य).

(४) अग्नि. २३४।१४–१६.

[1]मेघान्धकारवृष्ट्यग्निपर्वताद्भुतदर्शनम् ।
दूरस्थानां च सैन्यानां दर्शनं ध्वजशालिनाम् ॥
छिन्नपाटितभिन्नानां संसृतानां च दर्शनम् ।
इतीन्द्रजालं द्विषतां भीत्यर्थमुपकल्पयेत् ॥

## कामन्दकीयनीतिसारः

इन्द्रजालस्वरूपम्

[2]मेघान्धकारवृष्ट्यग्निपर्वताद्भुतदर्शनम् ।
दूरस्थानां च सैन्यानां दर्शनं ध्वजमालिनाम् ॥

(१) सैन्यानां हस्त्यश्वरथपदातीनाम् । जम.

(२) इन्द्रजाललक्षणमाह– मेघेत्यादिश्लोकद्वयेन । उनिसा.

छिन्नपाटितभिन्नानां संस्रुतानां प्रदर्शनम् ।
इतीन्द्रजालं द्विषतां भीत्यर्थमुपकल्पयेत् ॥

(१) संस्रुतानां क्षरद्रुधिराणाम् । एते त्रय उपायाः सामादिचतुष्टय एवान्तर्भूताः । तत्र माया दण्डेऽन्तर्भूता, तस्य हि प्रकाशोपांशुत्वभेदेन द्वैविध्यात् । उपेक्षाऽपि दण्ड एव, यस्मात् येषूपांशु प्रशस्यते तत्रोपेक्षा, तत्र च दण्डं स्वयं प्रवर्तयतोऽपरेण प्रवर्तनात् । इन्द्रजालमपि संहतबलस्य शत्रोर्भीत्यर्थं कल्पते । तच्च शङ्काजननात् भेदेऽन्तर्भूतम् । जम.

(२) इति उक्तप्रकारेण इन्द्रजालं ऐन्द्रजालिकविद्यां द्विषतः यातव्यस्य भीत्यर्थं त्रासार्थं उपकल्पयेत् प्रदर्शयेत् । अन्यत् स्पष्टम् । उनिसा.

---

(१) अग्नि. २४१।६७–६८.

(२) कानी. १८।६०–६१.

## सामान्यविचारः

### विष्णुः

गुणषट्कस्य यथाकालमाश्रयः

[1]**संधिविग्रहयानासनसंश्रयद्वैधीभावांश्च यथाकालमाश्रयेत् ॥**

### महाभारतम्

षाड्गुण्यस्य त्रिवर्गद्वयस्य च विवेकः राज्ञा कर्तव्यः

[2]**षाड्गुण्यं च त्रिवर्गं च त्रिवर्गमपरं तथा ।**
**यो वेत्ति पुरुषव्याघ्र स भुनक्ति महीमिमाम् ॥**

[3]**षाड्गुण्यमिति यत्प्रोक्तं तन्निबोध युधिष्ठिर ।**
**संधायासनमित्येव यात्रासंधानमेव च ॥**

संधानासनं संधिं कृत्वाऽवस्थितिः । यात्रासंधानं यानम् । नीटी.

[4]**विगृह्यासनमित्येव यात्रां संपरिगृह्य च ।**
**द्वैधीभावस्तथाऽन्येषां संश्रयोऽथ परस्य च ॥**

विगृह्य वैरं कृत्वा अवस्थानं विग्रहः । यात्रां संपरिगृह्याऽऽसनं शत्रोर्भयप्रदर्शनार्थं यानं प्रदर्श्य स्वस्थानेऽवस्थानम् । द्वैधीभावः उभयत्र संधिकरणम् । परस्य अन्यस्य आश्रयः दुर्गादेर्महाराजस्य वा । नीटी.

[5]**त्रिवर्गश्चापि यः प्रोक्तस्तमिहैकमनाः शृणु ।**
**क्षयः स्थानं च वृद्धिश्च त्रिवर्गमपरं तथा ॥**

(१) विस्मृ. ३।३९.

(२) भा. १२।६९।६४ ; भामु. १२।६९।६६ मपरं ( परमं ) भुनक्ति मही ( भुङ्क्ते पृथिवी ).

(३) भा. १२।६९।६५ ; भामु. १२।६९।६७ याया ( धाना ).

(४) भा. १२।६९।६६ ; भामु. १२।६९।६८.

(५) भा. १२।६९।६७ ; भामु. १२।६९।६९ र्गमपरं ( र्गः परमः ) ; राकौ. २५३ र्गमपरं ( र्गं परमं ).

[1]**धर्मश्चार्थश्च कामश्च सेवितव्योऽथ कालतः ॥**

शत्रुर्वध्यः , नावमन्तव्यः नोपेक्षणीयश्च

[2]**सर्वैः पराक्रमैर्वीर वध्यः शत्रुरमित्रहन् ॥**
**न शत्रुरवमन्तव्यो दुर्बलोऽपि बलीयसा ।**
**योऽपि स्यात् पीठगः कश्चित्किं पुनः समरे स्थितः ॥**

पीठगः स्वासनस्थः अयुध्यमानोऽपीत्यर्थः । नीटी.

[3]**नावज्ञेयो रिपुस्तात प्राकृतोऽपि बुभूषता ॥**

[4]**शत्रुः प्रवृद्धो नोपेक्ष्यो दुर्बलोऽपि बलीयसा ॥**

[5]**महते योऽपकाराय नरस्य प्रभवेन्नरः ।**
**तेन वैरं समासज्य दूरस्थोऽस्मीति नाऽऽश्वसेत् ॥**

[6]**स्त्रीषु राजसु सर्पेषु स्वाध्याये शत्रुसेविषु ।**
**भोगे चाऽऽयुषि विश्वासं कः प्राज्ञः कर्तुमर्हति ॥**

[7]**प्रज्ञाशरेणाभिहतस्य जन्तो-**
**श्चिकित्सकाः सन्ति न चौषधानि ।**
**न होममन्त्रा न च मङ्गलानि**
**नाथर्वणा नाप्यगदाः सुसिद्धाः ॥**

(१) भा. १२।६९।६८ ; भामु. १२।६९।७० ; राकौ. २५३ ऽथ कालतः ( ह्यकामतः ).

(२) भा. ३।२३।२२–२३ ; भामु. ३।२२।२३–२४.

(३) भा. ४।२८।४ ; भामु. ४।२९।४.

(४) भा. ५।९।२१ ; भामु. ५।९।२२.

(५) भा. ५।३७।५२ ; भामु. ५।३७।५६.

(६) भा. ५।३७।५३ ; भामु. ५।३७।५७ द्वितीयचरणे ( स्वाध्यायप्रभुशत्रुषु ) भोगे चाऽऽ ( भोगेष्वा ).

(७) भा. ५।३७।५४ ; भामु. ५।३७।५८.

[1]सर्पश्चाग्निश्च सिंहश्च कुलपुत्रश्च भारत ।
नावज्ञेया मनुष्येण सर्वे ते ह्यतितेजसः ॥

[2]अग्निस्तेजो महल्लोके गूढस्तिष्ठति दारुषु ।
न चोपयुङ्क्ते तद्दारु यावन्नो दीप्यते परैः ॥

[3]स एव खलु दारुभ्यो यदा निर्मथ्य दीप्यते ।
तदा तच्च वनं चान्यन्निर्दहत्याशु तेजसा ॥

[4]एवमेव कुले जाताः पावकोपमतेजसः ।
क्षमावन्तो निराकाराः काष्ठेऽग्निरिव शेरते ॥

[5]अपकृत्वा बुद्धिमतो दूरस्थोऽस्मीति नाऽऽश्वसेत् ।
दीर्घौ बुद्धिमतो बाहू याभ्यां हिंसति हिंसितः ॥

दीर्घौ बाहू बुद्ध्या दूरस्थमप्यादातुं शक्नुत इत्यर्थः । हिंसति हिनस्ति । नीटी.

[6]न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ॥

स्थानवृद्धिक्षयविवेकः

[7]स्थानवृद्धिक्षयज्ञस्य षाड्गुण्यविदितात्मनः ।
अनवज्ञातशीलस्य स्वाधीना पृथिवी नृप ॥

षाड्गुण्याभिज्ञत्वेन विदित आत्मा स्वरूपं यस्य तस्य । स्थानं यथास्थिततत्वावस्था । अनवज्ञातं सत्कृतं शीलमस्य । नीटी.

(१) भा. ५।३७।५५ ; भासु. ५।३७।५९ ते ह्यति (ह्येतेऽति).

(२) भा. ५।३७।५६ ; भासु. ५।३७।६० न्नो दीप्य (न्नोद्दीप्य).

(३) भा. ५।३७।५७ ; भासु. ५।३७।६१ तदा तच्च (तद्दारु च).

(४) भा. ५।३७।५८ ; भासु. ५।३७।६२.

(५) भा. ५।३८।८ ; भासु. ५।३८।८ कृत्वा (कृत्य).

(६) भा. ५।३८।९ ; भासु. ५।३८।९.

(७) भा. ५।३८।२२ ; भासु. ५।३८।२५.

[1]न शत्रुरङ्कमापन्नो मोक्तव्यो वध्यतां गतः ।
अहताद्धि भयं तस्माज्जायते नचिरादिव ।

[2]न वृद्धिर्बहु मन्तव्या या वृद्धिः क्षयमावहेत् ।
क्षयोऽपि बहु मन्तव्यो यः क्षयो वृद्धिमावहेत् ॥

[3]न स क्षयो महाराज यः क्षयो वृद्धिमावहेत् ।
क्षयः स त्विह मन्तव्यो यं लब्ध्वा बहु नाशयेत् ॥

युधिष्ठिरकृष्णसंवादः— संधिप्रशंसा युद्धदोषविवरणं मित्रकाय च

युधिष्ठिर उवाच—

[4]श्रुतं ते धृतराष्ट्रस्य सपुत्रस्य चिकीर्षितम् ।
एतद्धि सकलं कृष्ण संजयो मां यदब्रवीत् ॥

[5]तन्मतं धृतराष्ट्रस्य सोऽस्याऽऽत्मा विवृतान्तरः ।
यथोक्तं दूत आचष्टे वध्यः स्यादन्यथा ब्रुवन् ॥

विवृतान्तरः प्रकाशितभावः । नीटी.

अप्रदानेन राज्यस्य शान्तिमस्मासु मार्गति ।
लुब्धः पापेन मनसा चरन्नसममात्मनः ॥

[6]यत्तद्द्वादश वर्षाणि वने निर्व्युषिता वयम् ।
छद्मना शरदं चैकां धृतराष्ट्रस्य शासनात् ॥

छद्मना अज्ञातचर्यया । नीटी.

[7]स्थाता नः समये तस्मिन् धृतराष्ट्र इति प्रभो ।
नाहास्म समयं कृष्ण तद्धि नो ब्राह्मणा विदुः ॥

(१) भा. ५।३८।२६ ; भासु. ५।३८।२९ शत्रुरङ्क (शत्रुर्वश) पूर्वार्धानन्तरम् + (न्यग् भूत्वा पर्युपासीत वध्यं हन्याद् बले सति ।).

(२) भासु. ५।३९।६.

(३) भा. ५।३९।५ ; भासु. ५।३९।७.

(४) भा. ५।७०।६ ; भासु. ५।७२।६ धृत (धार्त).

(५) भा. ५।७०।७-८ ; भासु. ५।७२।७-८.

(६) भा. ५।७०।९ ; भासु. ५।७२।९ वने निर्व्यु (वनेषु व्यु).

(७) भा. ५।७०।१० ; भासु. ५।७२।१०.

स्थाता स्थास्यति । नः अस्माकम् । तस्मिन् ‘चतुर्दशे वर्षे स्वं राज्यं गृह्णीत’ इत्यस्मिन् । न अहास्म न त्यक्तवन्तो वयम् । नीटी.

**[1]वृद्धो राजा धृतराष्ट्रः स्वधर्मं नानुपश्यति ।**
**पश्यन्वा पुत्रगृद्धित्वान्मन्दस्यान्वेति शासनम् ॥**

**[2]सुयोधनमते तिष्ठन् राजाऽस्मासु जनार्दन ।**
**मिथ्या चरति लुब्धः संश्चरन् प्रियमिवाऽऽत्मनः ॥**

**[3]इतो दुःखतरं किं नु यत्राहं मातरं ततः ।**
**संविधातुं न शक्नोमि मित्राणां वा जनार्दन ॥**

मातरं संविधातुं सम्यक्पोषयितुम् । ततः तत्रस्थामित्यर्थः । मित्राणाम्, कर्मणि षष्ठी । ‘मातुः’ इति पाठे अन्ततः अन्येषां वणिक्प्रभृतीनां नागरिकाणां परित्यागेऽपि मातरं मित्राणि च विदुरादीनि संविधातुमिति प्राग्वत् । नीटी.

**[4]काशिभिश्चेदिपाञ्चालैर्मत्स्यैश्च मधुसूदन ।**
**भवता चैव नाथेन पञ्च ग्रामा वृता मया ॥**

काशिभिः राजभिः । नाथेन नाथवता । भवदनुग्रहात् शक्तेनापीत्यर्थः । नीटी.

**[5]कुशस्थलं वृकस्थलमासन्दी वारणावतम् ।**
**अवसानं च गोविन्द किंचिदेवात्र पञ्चमम् ॥**

अवसीयते संस्थीयते अस्मिन्नित्यवसानं यावज्जीवनं वासस्थानम् । नीटी.

(१) भा. ५।७०।११ ; भामु. ५।७२।११ वृद्धो (गृद्धो) पश्यन्वा (वश्यत्वात्).

(२) भा. ५।७०।१२ ; भामु. ५।७२।१२ प्रियमिवा (हि प्रियमा).

(३) भा. ५।७०।१३ ; भामु. ५।७२।१३ यत्राहं (यदहं).

(४) भा. ५।७०।१४ ; भामु. ५।७२।१४.

(५) भा. ५।७०।१५ ; भामु. ५।७२।१५ कुश (अवि) सन्दी (कन्दी) किंचि (कंचि).

**[1]पञ्च नस्तात दीयन्तां ग्रामा वा नगराणि वा ।**
**वसेम सहिता येषु मा च नो भरता नशन् ॥**

नः अस्माकं कृते भरताः भरतवंश्याः भीष्मादयः मा नशन् मा नश्यन्तु । नीटी.

**न च तानपि दुष्टात्मा धार्तराष्ट्रोऽनुमन्यते ।**
**स्वाम्यमात्मनि मत्वाऽसावतो दुःखतरं नु किम् ॥**

तानपि भरतानपि । नीटी.

**कुले जातस्य वृद्धस्य परवित्तेषु गृध्यतः ।**
**लोभः प्रज्ञानमाहन्ति प्रज्ञा हन्ति हता ह्रियम् ॥**

**[2]ह्रीर्हता बाधते धर्मं धर्मो हन्ति हतः श्रियम् ।**
**श्रीर्हता पुरुषं हन्ति पुरुषस्यास्वता वधः ॥**

कुले इति द्वाभ्यां गर्वजा दोषसंततिरुक्ता । नीटी.

**[3]अस्वतो हि निवर्तन्ते ज्ञातयः सुहृदर्त्विजः ।**
**अपुष्पादफलाद् वृक्षाद्यथा तात पतत्रिणः ॥**

द्विजाः अर्थिनः । नीटी.

**[4]एतच्च मरणं तात यदस्मात् पतितादिव ।**
**ज्ञातयो विनिवर्तन्ते प्रेतसत्त्वादिवासवः ॥**

प्रेतसत्त्वात् प्रगतबुद्धेः, मृतादित्यर्थः । नीटी.

**[5]नातः पापीयसीं कांचिदवस्थां शम्बरोऽब्रवीत् ।**
**यत्र नैवाद्य न प्रातर्भोजनं प्रतिदृश्यते ॥**
**धनमाहुः परं धर्मं धने सर्वं प्रतिष्ठितम् ।**
**जीवन्ति धनिनो लोके मृता ये त्वधना नराः ॥**

धर्मं धर्मकारणम् । सर्वं यज्ञदानादि । ये अधनाः ते मृता एव । नीटी.

(१) भा. ५।७०।१६–१८ ; भामु. ५।७२।१६–१८.

(२) भा. ५।७०।१९ ; भामु. ५।७२।१९ स्वता (धनं).

(३) भा. ५।७०।२० ; भामु. ५।७२।२० अस्वतो हि (अधनाद्धि) दर्त्विजः (दो द्विजाः) तात (कृष्ण).

(४) भा. ५।७०।२१ ; भामु. ५।७२।२१ यदस्मात् (यन्मत्तः).

(५) भा. ५।७०।२२–२३ ; भामु. ५।७२।२२–२३.

[1]ये धनाद्पकर्षन्ति नरं स्वबलमाश्रिताः ।
ते धर्ममर्थं कामं च प्रमथ्नन्ति नरं च तम् ॥
[2]एतामवस्थां प्राप्यैके मरणं वव्रिरे जनाः ।
ग्रामायैके वनायैके नाशायैके प्रवव्रजुः ॥

एतां निर्धनताख्याम् । एके नागरिकाः । ग्रामाय कुग्रामवासार्थम् । वनाय अस्मदादयः । नाशाय मरणाय । नीटी.

[3]उन्मादमेके पुष्यन्ति यान्त्यन्ये द्विषतां वशम् ।
दास्यमेके निगच्छन्ति परेषामर्थहेतुना ॥
[4]आपदेवास्य मरणात्पुरुषस्य गरीयसी ।
श्रियो विनाशस्तद्ध्यस्य निमित्तं धर्मकामयोः ॥

आपत्पदार्थमाह— श्रियो विनाश इति । तद्धि श्रीर्हि । नीटी.

यदस्य धर्म्यं मरणं शाश्वतं लोकवर्त्म तत् ।
समन्तात्सर्वभूतानां न तदत्येति कश्चन ॥

धर्म्यं देहस्वभावात्प्राप्तं न तु दारिद्र्याद्यपराधजं मरणम्, तच्छाश्वतम् अनिमित्तमित्यर्थः । समन्तात् सर्वत्र, अपरिहार्यमिति शेषः । नात्येति नातिक्रामति । नीटी.

न तथा बाध्यते कृष्ण प्रकृत्या निर्धनो जनः ।
यथा भद्रां श्रियं प्राप्य तया हीनः सुखैधितः ॥
स तदाऽऽत्मापराधेन संप्राप्तो व्यसनं महत् ।
सेन्द्रान् गर्हयते देवान्नाऽऽत्मानं च कथंचन ॥

तदा संपत्काले । आत्मापराधेन चित्तदोषेण रागादिना । नाऽऽत्मानं चेत्यस्य न चाऽऽत्मानमित्यर्थः । नीटी.

[1]न चास्मिन् सर्वशास्त्राणि प्रतरन्ति निगर्हणाम् ।
सोऽभिक्रुध्यति भृत्यानां सुहृदश्चाभ्यसूयति ॥

अस्य व्यसनस्य । निबर्हणे नाशनिमित्तम् । नीटी.

[2]तं तदा मन्युरेवैति स भूयः संप्रमुह्यति ।
स मोहवशमापन्नः क्रूरं कर्म निषेवते ॥

तत्तदा सर्वदेत्यर्थः । मन्युः क्रोधः । सः तद्वानेवेत्यर्थः । मुह्यति कार्याकार्ये न जानाति । नीटी.

[3]पापकर्मात्ययायैव संकरं तेन पुष्यति ।
संकरो नरकायैव सा काष्ठा पापकर्मणाम् ॥
[4]न चेत्प्रबुध्यते कृष्ण नरकायैव गच्छति ।
तस्य प्रबोधः प्रज्ञैव प्रज्ञाचक्षुर्न रिष्यति ॥

एवं श्रिया युक्तानां नरकप्राप्तिमुक्त्वा तेषामुद्धारोपायमाह— तस्येति । तस्य श्रीमतः अविद्यया निद्राणस्य प्रज्ञा विवेकः स एव प्रबोधः जागरणम्, यतः प्रज्ञाचक्षुः पुमान् तरिष्यति, अविद्यामिति शेषः । नीटी.

[5]प्रज्ञालाभे हि पुरुषः शास्त्राण्येवान्ववेक्षते ।
शास्त्रनित्यः पुनर्धर्मं तस्य ह्रीरङ्गमुत्तमम् ॥

तरणे क्रममाह— प्रज्ञेति । धर्मम्, करोतीति शेषः । तस्य धर्मस्य । ह्रीः अकार्यकरणान्निवृत्तिहेतुश्चेतोवृत्तिविशेषः । ह्रीहीनेन कृतो धर्मोऽप्यधर्म एवेति भावः । नीटी.

[6]ह्रीमान् हि पापं प्रद्वेष्टि तस्य श्रीरभिवर्धते ।
श्रीमान्स यावद्भवति तावद्भवति पूरुषः ॥

---

(१) भा. ५।७०।२४ ; भासु. ५।७२।२४ श्रिताः (स्थिताः).

(२) भा. ५।७०।२५ ; भासु. ५।७२।२५.

(३) भा. ५।७०।२६ ; भासु. ५।७२।२६ निगच्छ (च गच्छ).

(४) भा. ५।७०।२७–३० ; भासु. ५।७२।२७–३०.

(१) भा. ५।७०।३१ ; भासु. ५।७२।३१ चास्मिन् (चास्य) तरन्ति निगर्हणाम् (भवन्ति निबर्हण).

(२) भा. ५।७०।३२ ; भासु. ५।७२।३२ तं त (तत्त).

(३) भा. ५।७०।३३ ; भासु. ५।७२।३३ कर्मात्ययायैव (कर्मतया चैव).

(४) भा. ५।७०।३४ ; भासु. ५।७२।३४ र्न रि (स्तरि).

(५) भा. ५।७०।३५ ; भासु. ५।७२।३५ नित्यः (निष्ठः).

(६) भा. ५।७०।३६ ; भासु. ५।७२।३६.

[1]धर्मनित्यः प्रशान्तात्मा कार्ययोगवहः सदा ।
नाधर्मे कुरुते बुद्धिं न च पापेषु वर्तते ॥
[2]अह्रीको वा विमूढो वा नैव स्त्री न पुनः पुमान् ।
नास्याधिकारो धर्मेऽस्ति यथा शूद्रस्तथैव सः ॥

अह्रीकः तिर्यक्स्थावरतुल्यः, न मनुष्य इत्यर्थः । नीटी.

ह्रीमानवति देवांश्च पितनात्मानमेव च ॥
तेनामृतत्वं व्रजति सा काष्ठा पुण्यकर्मणाम् ॥
तदिदं मयि ते दृष्टं प्रत्यक्षं मधुसूदन ॥
यथा राज्यात्परिभ्रष्टो वसामि वसतीरिमाः ॥

इदं ह्रीमत्त्वं ते त्वया मयि दृष्टम् । नीटी.

ते वयं न श्रियं हातुमल न्यायेन केनचित् ।
अत्र नो यतमानानां वधश्चेदपि साधु तत् ॥

अत्र श्रीनिमित्तम् । नः अस्माकम् । नीटी.

[3]तत्र नः प्रथमः कल्पो यद्वयं ते च माधव ।
प्रशान्ताः समभूताश्च श्रियं तानश्नुवीमहि ॥

प्रथमः कल्पः मुख्यः पक्षः । समभूताः निर्वैरत्वं गताः । नीटी.

[4]तत्रैषा परमा काष्ठा रौद्रकर्मक्षयोदया ।
यद्वयं कौरवान् हत्वा तानि राष्ट्राण्यशीमहि ॥

रौद्रकर्म रौद्रकर्मणाम् । 'सुपां सुलुक्०' (पा. सू. ७।१।३९) इति सप्तम्याश्च(?) लुक् । क्षयोदया क्षयपूर्वकः उदयो यस्यां सा रौद्रकर्मणां परमा काष्ठेति संबन्धः । नीटी.

(१) भा. ५।७०।३७ ; भामु. ५।७२।३७ पेषु व (पे प्रव).

(२) भा. ५।७०।३८–४१ ; भामु. ५।७२।३८–४१.

(३) भा. ५।७० ४२ ; भामु. ५।७२।४२ सम (शम) तानश्नु (तामश्नु).

(४) भा. ५।७०।४३ ; भामु. ५।७२।४३ ण्यशीमहि (ण्यवाप्नुमः).

[1]ये पुनः स्युरसंबद्धा अनार्याः कृष्ण शत्रवः ।
तेषामप्यवधः कार्यः किं पुनर्ये स्युरीदृशाः ॥

असंबद्धाः अबान्धवाः । अवधः वधविरुद्धं पालनम् । ईदृशा इति । बान्धवा आर्या अशत्रवश्च ये तेषामवधः कार्य इति किमाश्चर्यमित्यर्थः । नीटी.

[2]ज्ञातयश्च हि भूयिष्ठाः सहाया गुरवश्च नः ।
तेषां वधोऽतिपापीयान् किं नु युद्धेऽस्ति शोभनम् ॥

तदेवाऽऽह— ज्ञातय इति । भूयिष्ठाः अतिमहान्तः । नीटी.

[3]पापः क्षत्रियधर्मोऽयं वयं च क्षत्रबान्धवाः ।
स नः स्वधर्मोऽधर्मो वा वृत्तिरन्या विगर्हिता ॥
[4]शूद्रः करोति शुश्रूषां वैश्या विपणिजीविनः ।
वयं वधेन जीवामः कपालं ब्राह्मणैर्वृतम् ॥

कपालं भिक्षापात्रम् । नीटी.

[5]क्षत्रियः क्षत्रियं हन्ति मत्स्यो मत्स्येन जीवति ।
श्वा श्वानं हन्ति दाशार्ह पश्य धर्मो यथागतः ॥

यथा येन प्रकारेण आगतः कुलपरंपरया प्राप्तः । तं पश्येति योजना । नीटी.

[6]युद्धे कृष्ण कलिर्नित्यं प्राणाः सीदन्ति संयुगे ।
बलं तु नीतिमात्राय हठे जयपराजयौ ॥

(१) भा. ५।७०।४४; भामु. ५।७२।४४.

(२) भा. ५।७०।४५ ; भामु. ५।७२।४५ श्च हि (श्चैव).

(३) भा. ५।७०।४६ ; भामु. ५।७२।४६ बान्धवाः (बन्धवः).

(४) भा. ५।७०।४७ ; भामु. ५।७२।४७ विपणिजीविनः (वै पण्यजीविकाः).

(५) भा. ५।७०।४८ ; भामु. ५।७२।४८.

(६) भा. ५।७०।४९ ; भामु. ५।७२।४९ मात्राय हठे (माधाय युध्ये).

[1]नाऽऽत्मच्छन्देन भूतानां जीवितं मरणं तथा ।
नाप्यकाले सुखं प्राप्यं दुःखं वाऽपि यदूत्तम ॥

बलमिति । नीतिमेव बलं कृत्वा युध्ये योत्स्ये । जयपराजयौ तु आत्मच्छन्देन स्वेच्छया न भवतः । तथा तद्वत् भूतानां जीवितं मरणं च स्वेच्छया न स्तः । नीटी.

एको ह्यपि बहून् हन्ति घ्नन्त्येकं बहवोऽप्युत ।
शूरं कापुरुषो हन्ति अयशस्वी यशस्विनम् ॥
[2]जयश्चैवोभयोर्दृष्ट उभयोश्च पराजयः ।
तथैवापचयो दृष्टो व्यपयाने क्षयव्ययौ ॥

पराजयभयात् व्यपयाने पलायनेऽपि अपचयः क्षयव्ययौ च दृष्टौ भवत एव । अपचयः दीनता । क्षयः मरणम् । तत्र हेतुः व्ययः द्रव्यादेर्नाशः । नीटी.

[3]सर्वथा वृजिनं युद्धं को घ्नन्न प्रतिहन्यते ।
हतस्य च हृषीकेश समौ जयपराजयौ ॥
पराजयश्च मरणान्मन्ये नैव विशिष्यते ।
यस्य स्याद्विजयः कृष्ण तस्याप्यपचयो ध्रुवम् ॥

विजयोऽप्य(?प्यप)जयः पराजय एव इष्टजन-नाशादित्याह— यस्येति । नीटी.

अन्ततो दयितं घ्नन्ति केचिदप्यपरे जनाः ।
तस्याङ्ग बलहीनस्य पुत्रान्भ्रातॄनपश्यतः ।
निर्वेदो जीविते कृष्ण सर्वतश्चोपजायते ॥

दयितं पुत्रादि । हे अङ्ग ! बलहीनस्य जातिबल-हीनस्य । नीटी.

[4]ये ह्येव वीरा ह्रीमन्त आर्याः करुणवेदिनः ।
त एव युद्धे हन्यन्ते यवीयान्मुच्यते जनः ॥

यवीयान् कनिष्ठः । नीटी.

(१) भा. ५।७०।५०–५१ ; भामु. ५।७२।५०–५१.

(२) भा. ५।७०।५२ ; भामु. ५।७२।५२ पूर्वार्धे (जयो नैवोभयोर्दृष्टो नोभयोश्च पराजयः ।).

(३) भा. ५।७०।५३–५५ ; भामु. ५।७२।५३–५६.

(४) भा. ५।७०।५६ ; भामु. ५।७२।५६–५७ वीरा (धीरा).

[1]हत्वाऽप्यनुशयो नित्य परानपि जनार्दन ।
अनुबन्धश्च पापोऽत्र शेषश्चाप्यवशिष्यते ॥

अनुशयः पश्चात्तापः । अनुबन्धः दोषोत्पादः, स च पापः कष्टप्रदः । नीटी.

[2]शेषो हि बलमासाद्य न शेषमवशेषयेत् ।
सर्वोच्छेदे च यतते वरस्यान्तविधित्सया ॥

शेषः शत्रोः । शेषं स्वस्य । नीटी.

[3]जयो वैरं प्रसृजति दुःखमास्ते पराजितः ।
सुखं प्रशान्तः स्वपिति हित्वा जयपराजयौ ॥
[4]जातवैरश्च पुरुषो दुःखं स्वपिति नित्यदा ।
अनिर्वृतेन मनसा ससर्प इव वेश्मनि ॥

अनिर्वृत्तेन अस्वस्थेन । नीटी.

[5]उत्सादयति यः सर्वं यशसा स वियुज्यते ।
अकीर्तिं सर्वभूतेषु शाश्वतीं स नियच्छति ॥
[6]न हि वराणि शाम्यन्ति दीर्घकालकृतान्यपि ।
आख्यातारश्च विद्यन्ते पुमांश्चोत्पद्यते कुले ॥
[7]न चापि वैरं वैरेण केशव व्युपशाम्यति ।
हविषाऽग्निर्यथा कृष्ण भूय एवाभिवर्धते ॥
अतोऽन्यथा नास्ति शान्तिर्नित्यमन्तरमन्ततः ।
अन्तरं लिप्समानानामयं दोषो निरन्तरः ॥

(१) भा. ५।७०।५७ ; भामु. ५।७२।५७–५८.

(२) भा. ५।७०।५८ ; भामु. ५।७२।५८–५९ मव (मनु).

(३) भा. ५।७०।५९ ; भामु. ५।७२।५९–६०.

(४) भा. ५।७०।६० ; भामु. ५।७२।६०–६१ वृंतेन (वृंत्तेन).

(५) भा. ५।७०।६१ ; भामु. ५।७२।६१–६२ युज्य (मुच्य).

(६) भा. ५।७०।६२ ; ५।७२।६२–६३ कृता (धृता) श्चोत्प (श्चेद्वि).

(७) भा. ५।७०।६३–६४ ; भामु. ५।७२।६३–६५.

यतः अन्तरं छिद्रं नित्यम् अपरिहार्यम् अतो हेतोः अन्ततः अन्यथा स्वस्य शत्रोर्वा नाशं विना शान्तिर्नास्ति । अयं दोषः नाशाख्यः । नीटी.

**[1]पौरुषेयो हि बलवानाधिर्हृदयबाधनः ।**
**तस्य त्यागेन वा शान्तिर्निवृत्त्या मनसोऽपि वा ॥**
**[2]अथवा मूलघातेन द्विषतां मधुसूदन ।**
**फलनिर्वृत्तिरिद्धा स्यात्तन्नृशंसतरं भवेत् ॥**

अन्तत इत्येतद्व्याचष्टे– पौरुषेय इति सार्धेन । द्विषतां मूलघातेन फलनिर्वृत्तिः निष्कण्टकराज्यप्राप्तिः इद्धा प्रदीप्ता स्यात् । तावता च नृशंसतरं न भवेत् । नृशंसं तु भवेदेवेत्यर्थः । अतः शम एव श्रेयानिति भावः । नीटी.

**[3]या तु त्यागेन शान्तिः स्यात्तदृते वध एव सः ।**
**संशयाच्च समुच्छेदाद्द्विषतामात्मनस्तथा ॥**

त्यागेन, राज्यस्येति शेषः । तदृते राज्यं विना । द्विषतां संशयात् 'किं शत्रवश्छिद्रे प्रहरिष्यन्ति उत उपेक्षां करिष्यन्ति' इत्येवंरूपात् । आत्मनः भ्रष्टश्रीकस्य सद्यः समुच्छेदात् नाशसंभवात् । अतो राज्यत्यागो न युक्त इति भावः । नीटी.

**न च त्यक्तुं तदिच्छामो न चेच्छामः कुलक्षयम् ।**
**अत्र या प्रणिपातेन शान्तिः सैव गरीयसी ॥**

सिद्धान्तमाह– न चेति । नीटी.

**[4]सर्वथा यतमानानामयुद्धमभिकाङ्क्षताम् ।**
**सान्त्वे प्रतिहते युद्धं प्रसिद्धमपराक्रमम् ॥**

सर्वथा सामदानभेदैः राज्यार्थे यतमानानां युद्धं प्रसिद्धम्, अवश्यं कर्तव्यमित्यर्थः । न तु अपराक्रमः क्लीबत्वम्, युक्तः इति शेषः । नीटी.

**[1]प्रतिघातेन सान्त्वस्य दारुणं संप्रवर्तते ॥**
**तच्छुनामिव गोपादे पण्डितैरुपलक्षितम् ॥**

दारुणं युद्धम्, तच्छुनामिव निन्द्यमित्यर्थः । नीटी.

**[2]लाङ्गूलचालनं क्ष्वेडः प्रतिरावो विवर्तनम् ।**
**दन्तदर्शनमारावस्ततो युद्धं प्रवर्तते ॥**

दृष्टान्तं विवृणोति– लाङ्गूलेति । अत्र लाङ्गूलेन ध्वज उपमीयते । क्ष्वेडा ध्वनिकौटिल्यं परस्परच्छिद्रान्वेषणं च । प्रतिवाचः परस्परनिन्दा स्वप्रशंसा च । विवर्तनं भूमौ लुण्ठनम् । दन्तदर्शनं मुखस्य व्यादानेन । आरावः भषणम्, पक्षे सिंहनादः । नीटी.

**[3]तत्र यो बलवान् कृष्ण जित्वा सोऽत्ति तदामिषम् ।**
**एवमेव मनुष्येषु विशेषो नास्ति कश्चन ॥**
**सर्वथा त्वेतदुचितं दुर्बलेषु बलीयसाम् ।**
**अनादरो विरोधश्च प्रणिपाती हि दुर्बलः ॥**

अनादरे राज्यस्याप्राप्तिः । युद्धे कुलक्षयः । प्रणिपाते तु दौर्बल्यप्रसिद्धिः । नीटी.

**पिता राजा च वृद्धश्च सर्वथा मानमर्हति ।**
**तस्मान्मान्यश्च पूज्यश्च धृतराष्ट्रो जनार्दन ॥**
**[4]पुत्रस्नेहस्तु बलवान् धृतराष्ट्रस्य माधव ।**
**स पुत्रवशमापन्नः प्रणिपातं प्रहास्यति ॥**

---

(१) भा. ५।७०।६५ ; भामु. ५।७२।६५ चतुर्थचरणे (मरणेनापि वा भवेत्).

(२) भा. ५।७०।६६ ; भामु. ५।७२।६६ स्यात्तन्नृ (स्यान्न नृ).

(३) भा. ५।७०।६७–६८ ; भामु. ५।७२।६७–६८.

(४) भा. ५।७०।६९ ; भामु. ५।७२।६९ चतुर्थचरणे (प्रसिद्धं नापराक्रमः).

(१) भा. ५।७०।७० ; भामु. ५।७२।७० गोपादे (संपाते).

(२) भा. ५।७०।७१ ; भामु. ५।७२।७१ क्ष्वेडः (क्ष्वेडा) रावो (वाचो).

(३) भा. ५।७०।७२–७४ ; भामु. ५।७२।७२–७४.

(४) भा. ५।७०।७५ ; भामु. ५।७२।७५ स्तु (श्च).

अन्त्यः पक्षोऽपि न सेत्स्यतीत्याह— पितेति द्वाभ्याम्। प्रहास्यति न स्वीकरिष्यति। नीटी.

[1]तत्र किं मन्यसे कृष्ण प्राप्तकालमनन्तरम्।
कथमर्थाच्च धर्माच्च न हीयेमहि माधव॥
[2]ईदृशे ह्यर्थकृच्छ्रेऽस्मिन् कमन्यं मधुसूदन।
उपसंप्रष्टुमर्हामि त्वामृते पुरुषोत्तम॥
[3]प्रियश्च प्रियकामश्च गतिज्ञः सर्वकर्मणाम्।
को हि कृष्णास्ति नस्त्वादृक्सर्वनिश्चयवि-
त्सुहृत्॥

वैशंपायन उवाच—

एवमुक्तः प्रत्युवाच धर्मराजं जनार्दनः।
उभयोरेव वामर्थे यास्यामि कुरुसंसदम्॥
शमं तत्र लभेयं चेद्युष्मदर्थमहापयन्।
पुण्यं मे सुमहद्राजंश्चरितं स्यान्महाफलम्॥
मोचयेयं मृत्युपाशात्संरब्धान् कुरुसृञ्जयान्।
पाण्डवान् धार्तराष्ट्रांश्च सर्वां च पृथिवी-
मिमाम्॥
[4]न च शत्रुरवज्ञेयः प्राकृतोऽपि बलीयसा॥
[5]शृणुष्वागमने हेतुं विदुरावहितो भव॥
दौरात्म्यं धार्तराष्ट्रस्य क्षत्रियाणां च वैरिताम्।
सर्वमेतदहं जानन् क्षत्तः प्राप्तोऽद्य कौरवान्॥
पर्यस्तां पृथिवीं सर्वां साश्वां सरथकुञ्जराम्।
यो मोचयेन्मृत्युपाशात्प्राप्नुयाद्धर्ममुत्तमम्॥

पर्यस्ताम् अन्यथाभूताम्। नीटी.

[1]धर्मकार्यं यतञ्शक्त्या न चेच्छक्नोति मानवः।
प्राप्तो भवति तत्पुण्यमत्र मे नास्ति संशयः॥

यतन् यतमानः। नीटी.

[2]मनसा चिन्तयन् पापं कर्मणा नाभिरोचयन्।
न प्राप्नोति फलं तस्य एवं धर्मविदो विदुः॥
[3]सोऽहं यतिष्ये प्रशमं क्षत्तः कर्तुममायया।
कुरूणां सृञ्जयानां च संग्रामे विनशिष्यताम्॥
सेयमापन्महाघोरा कुरुष्वेव समुत्थिता।
कर्णदुर्योधनकृता सर्वे ह्येते तदन्वयाः॥
[4]व्यसनैः क्लिश्यमानं हि यो मित्रं नाभिपद्यते।
अनुनीय यथाशक्ति तं नृशंसं विदुर्बुधाः॥

तं नृशंसमनर्थाय विदुरिति संबन्धः। 'अनुनीय' इत्यपि पाठः। नीटी.

[5]आ केशग्रहणान्मित्रमकार्यात्संनिवर्तयन्।
अवाच्यः कस्य चिद्भवति कृतयत्नो यथाबलम्॥
तत्समर्थं शुभं वाक्यं धर्मार्थसहितं हितम्।
धार्तराष्ट्रः सहामात्यो ग्रहीतुं विदुरार्हति॥
हितं हि धार्तराष्ट्राणां पाण्डवानां तथैव च।
पृथिव्यां क्षत्रियाणां च यतिष्येऽहममायया॥

हितम्, कर्तुमिति शेषः। नीटी.

हिते प्रयतमानं मां शङ्केद्दुर्योधनो यदि।
हृदयस्य च मे प्रीतिरानृण्यं च भविष्यति॥

---

(१) भा. ५।७०।७६; भामु. ५।७२।७६.

(२) भा. ५।७०।७७; भामु. ५।७२।७७ ह्यर्थ (ऽस्यर्थ).

(३) भा. ५।७०।७८–८१; भामु. ५।७२।७८–८१.

(४) भा. ५।८१।१३; भामु. ५।८३।१३ प्राकृतो (दुर्बलो).

(५) भा. ५।९१।३–५; भामु. ५।९३।३–५.

(१) भा. ५।९१।६; भामु. ५।९३।६ न चेच्छक्नोति (नो चेत्प्राप्नोति).

(२) भा. ५।९१।७; भामु. ५।९३।७ नाभि (नाति) तस्य एवं (तस्येत्येवं).

(३) भा. ५।९१।८–९; भामु. ५।९३।८–९.

(४) भा. ५।९१।१०; भामु. ५।९३।१० व्यसनैः (व्यसने) अनुनीय (अनर्थाय).

(५) भा. ५।९१।११–१४; भामु. ५।९३।११–१४.

[1]ज्ञातीनां हि मिथो भेदे यन्मित्रं नाभिपद्यते ।
सर्वयत्नेन मध्यस्थं न तन्मित्रं विदुर्बुधाः ॥

नाभिपद्यते नोपकरोति । नीटी.

[2]न मां ब्रूयुरधर्मज्ञा मूढा असुहृदस्तथा ।
शक्तो नावारयत्कृष्णः संरब्धान्कुरुपाण्डवान् ॥

[3]उभयोः साधयन्नर्थमहमागत इत्युत ।
तत्र यत्नमहं कृत्वा गच्छेयं नृष्ववाच्यताम् ॥
मम धर्मार्थयुक्तं हि श्रुत्वा वाक्यमनामयम् ।
न चेदादास्यते बालो दिष्टस्य वशमेष्यति ॥

[4]अहापयन् पाण्डवार्थं यथाव-
च्छमं कुरूणां यदि चाऽऽचरेयम् ।
पुण्यं च मे स्याच्चरितं महार्थं
मुच्येरंश्च कुरवो मृत्युपाशात् ॥

[5]अपि वाच भाषमाणस्य काव्यां
धर्मारामामर्थवतीमहिंस्राम् ।
अवेक्षेरन् धार्तराष्ट्राः समर्थां
मां च प्राप्तं कुरवः पूजयेयुः ॥

[6]संयुगे व महाराज दृश्यते सुमहान् क्षयः ।
क्षये चोभयतो राजन् कं धर्ममनुपश्यसि ॥

[7]न युद्धे तात कल्याणं न धर्मार्थौ कुतः सुखम् ।
न चापि विजयो नित्यं मा युद्धे चेत आधिथाः ॥

(१) भा. ५।९१।१५ ; भासु. ५।९३।१५ मध्य (माध्य).

(२) भा. ५।९१।१६ ; भासु. ५।९३।१६ धर्मज्ञा (धर्मिष्ठा) असु (ह्यसु).

(३) भा. ५।९१।१७–१८ ; भासु. ५।९३।१७–१८.

(४) भा. ५।९१।१९ ; भासु. ५।९३।१९ महार्थं (महात्मन्).

(५) भा. ५।९१।२० ; भासु. ५।९३।२० समर्थां (शमार्थं).

(६) भा. ५।९३।२८ ; भासु. ५।९५।२८.

(७) भा. ५।१२७।३९ ; भासु. ५।१२९।२८.

संधिर्हीयमानेन विग्रहश्च वर्धमानेन कार्यः

[1]हीयमानेन वै संधिः पर्येष्टव्यः समेन च ।
विग्रहो वर्धमानेन नीतिरेषा बृहस्पतेः ॥

[2]ते वयं पाण्डुपुत्रेभ्यो हीनाः स्वबलशक्तितः ।
अत्र ते पाण्डवैः सार्धं संधिं मन्ये क्षमं प्रभो ॥

विग्रहकालः

[3]तरसा बुद्धिपूर्वं वा निग्राह्या एव शत्रवः ।
पापैः सह न संदध्याद्राष्ट्रं पण्यं न कारयेत् ॥

[4]न च शत्रुरवज्ञेयो दुर्बलोऽपि बलीयसा ।
अल्पोऽपि हि दहत्यग्निर्विषमल्पं हिनस्ति च ॥

संधिविग्रहकालौ

[5]यदा तु हीनं नृपतिर्विद्यादात्मानमात्मना ।
अमात्यैः सह संमन्त्र्य कुर्यात्संधिं बलीयसा ॥

[6]अज्ञायमानो हीनत्वे कुर्यात्संधिं परेण वै ।
लिप्सुर्वा कंचिदेवार्थं त्वरमाणो विचक्षणः ॥

[7]गुणवन्तो महोत्साहा धर्मज्ञाः साधवश्च ये ।
संदधीत नृपस्तैश्च राष्ट्रं धर्मेण पालयन् ॥

तैः द्वारभूतैः तान् द्वारीकृत्य संदध्यात् बलवद्भिर्नृपैः सह संधिं कुर्यात् । नीटी.

उच्छिद्यमानमात्मानं ज्ञात्वा राजा महामतिः ।
पूर्वापकारिणो हन्याल्लोकद्विष्टांश्च सर्वशः ॥

(१) भा. ९।३।४२ ; भासु. ९।४।४३ च (वा) नीति (मति).

(२) भा. ९।३।४३ ; भासु. ९।४।४४ स्वबल (स बल) अत्र ते (तदत्र).

(३) भा. १२।२५।१५ ; भासु. १२।२४।१६ द्राष्ट्रं पण्यं न (द्राज्यं पुण्यं च)

(४) भा. १२।५८।१७ ; भासु. १२।५८।१७.

(५) भा. १२।६९।१४ ; भासु. १२।६९।१४.

(६) भा. १२।६९।१५ ; भासु. १२।६९।१५ मानो (माने) कुर्यात्संधिं (संधिं कुर्यात्).

(७) भा. १२।६९।१६–१७ ; भासु. १२।६९।१६–१७.

पूर्वापकारिणः पूर्वं दुष्टा इति अपकृताः पश्चाद्दयया-ऽनुगृहीताः ते पूर्वापकारवन्तः तान्। नीटी.

[1]यो नोपकर्तुं शक्नोति नापकर्तुं महीपतिः।
अशक्यरूपश्चोद्धर्तुमुपेक्ष्यस्तादृशो भवेत् ॥

तत्रापि विशेषमाह— य इति। नीटी.

[2]यात्रां यायादविज्ञातमनाक्रन्दमनन्तरम्।
व्यासक्तं च प्रमत्तं च दुर्बलं च विचक्षणः ॥

यात्रायां यदि इच्छा स्यात्तर्हि दुर्बलत्वादिना विज्ञातं शत्रुं प्रत्येव यात्रामाज्ञापयेदित्युत्तरेण संबन्धः। 'यात्रां यायादविज्ञातम्' इति पाठे दुर्बलं शत्रुमुद्दिश्य तेनाविज्ञातं यथा स्यात्तथा यात्रां यायादिति योजना। अनाक्रन्दं मित्रहीनम्। अनन्तरं बन्धुजनहीनम्। व्यासक्तं अन्येन युद्धं कुर्वाणम्। प्रमत्तं अनवहितम्। नीटी.

[3]यात्रामाज्ञापयेद्वीरः कल्यपुष्टबलः सुखी।
पूर्वं कृत्वा विधानं च यात्रायां नगरे तथा ॥

विधानं रक्षणं रक्षणादिसामग्रीसंपादनम्। नीटी.

[4]न च वश्यो भवेदस्य नृपो यद्यपि वीर्यवान्।
हीनश्च बलवीर्याभ्यां कर्शयंस्तं परावसेत् ॥

कर्षयन् वीर्यवन्तं तत्परः कर्षणपरः। नीटी.

[5]राष्ट्रं च पीडयेत्तस्य शस्त्राग्निविषमूर्च्छनैः।
अमात्यवल्लभानां च विवादांस्तस्य कारयेत्।
वर्जनीयं सदा युद्धं राज्यकामेन धीमता ॥

कर्षणमेवाऽऽह— राष्ट्रं चेति। कारयेत् भृत्यादिद्वारा। नीटी.

[1]उपायैस्त्रिभिरादानमर्थस्याऽऽह बृहस्पतिः।
सान्त्वेनानुप्रदानेन भेदेन च नराधिप।
यमर्थं शक्नुयात्प्राप्तुं तेन तुष्येद्धि पण्डितः ॥

बलिनो राष्ट्रं कर्षन् दुर्बलः ततः सान्त्वेन अर्थं यत् यावत् प्राप्तुं शक्नुयात् तेन तुष्येत। 'भवद्भिर्मत्तो वार्षिकः करो न ग्राह्यो मया च भवतां राष्ट्रं नोपहन्तव्यम्' इति सान्त्वम्। 'मह्यं ग्रामद्वयं देयम्, तेनाहं शमिष्ये' इत्युक्त्या अर्थप्रदानम्। भेदेन राजामात्यान् भेदयित्वा राज्ञः स्वोपरि प्रयाणस्य विघ्नादिकं वा कर्तव्यमित्यादिना। क्षीणः प्रबलेन सह वैरं चेत्संग्रामं विना एवमुपायत्रयेण स्वार्थं साधयेदित्यर्थः। नीटी.

राज्ञा अन्ये राजानोऽन्ववेक्षणीयाः

[2]ये केचिद् भूमिपतयस्तान् सर्वानन्ववेक्षयेत्।
सुहृद्भिरनभिख्यातैस्तेन राजा न रिष्यते ॥

सुहृद्भिः चारैः। अनभिख्यातैः स्वेषां परेषां चाविदितैः। नीटी.

[3]अपकृत्य बलस्थस्य दूरस्थोऽस्मीति नाऽऽश्वसेत्।
श्येनानुचरितैर्ह्येते निपतन्ति प्रमाद्यतः ॥

[4]दृढमूलस्त्वदुष्टात्मा विदित्वा बलमात्मनः।
अबलानभियुञ्जीत न तु ये बलवत्तराः ॥

[5]के माऽनुरक्ता राजानः के भयात्समुपाश्रिताः।
मध्यस्थदोषाः के चैषामिति नित्यं विचिन्तयेत् ॥

(१) भा. १२।६९।१८; भामु. १२।६९।१८ अशक्य (न शक्य).

(२) भा. १२।६९।१९; भामु. १२।६९।१९ यात्रां यायादवि (यात्रायां यदि वि).

(३) भा. १२।६९।२०; भामु. १२।६९।२० कल्य (कल्यः).

(४) भा. १२।६९।२१; भामु. १२।६९।२१ यद्यपि (यश्चाति) कर्शयंस्तं परा (कर्षयंस्तत्परो).

(५) भा. १२।६९।२२; भामु. १२।६९।२२–२३.

(१) भा. १२।६९।२३; भामु. १२।६९।२३–२४ नानु (न तु) यमर्थं (यदर्थं) तुष्येद्धि (तुष्येत).

(२) भा. १२।९४।१९; भामु. १२।९३।१९ यस्तान् सर्वा (यः सर्वांस्ता) न रिष्यते (ऽतिरिच्यते).

(३) भा. १२।९४।२०; भामु. १२।९३।२० नुचरितैर्ह्येते (भिपतनैरेते).

(४) भा. १२।९४।२१; भामु. १२।९३।२१.

(५) भा. १२।९४।३५; भामु. १२।९३।३६ के मा (के वा).

[1]न जातु बलवान् भूत्वा दुर्बले विश्वसेत् क्वचित् ।
भारुण्डसदृशा ह्येते निपतन्ति प्रमाद्यतः ॥

क्षीणबलाय क्षेमदर्शनाम्ने राजपुत्राय कालकवृक्षीयमुने-
रुपदेशः— धार्मिकस्य हीनसंपदो राज्ञः निवृत्तिर्धर्मः,
अथवा अर्थेप्सोः पराभिभूतस्य राज्ञः हीनसंपदः
निकृतिर्दम्भयोगाश्च जयोपायाः, निकृति-
दम्भयोगापवर्जकेन शुद्धसत्त्वेन राज्ञा
सुवृत्तो राजा आश्रयणीयः

युधिष्ठिर उवाच—
[2]धार्मिकोऽर्थानसंप्राप्य राजामात्यैः प्रबाधितः ।
च्युतः कोशाच्च दण्डाच्च सुखमिच्छन् कथं चरेत् ॥

अधार्मिकस्य छलादिकं विधेयमित्युक्तम्, धार्मिकस्य हीनसंपदो विजिगीषमाणस्य कर्तव्यं पृच्छति— धार्मिक इति । नीटी.

भीष्म उवाच—
[3]अत्रायं क्षेमदर्शीयमितिहासोऽनुगीयते ।
तत्तेऽहं संप्रवक्ष्यामि तन्निबोध युधिष्ठिर ॥
[4]क्षेमदर्शं नृपसुतं यत्र क्षीणबलं पुरा ।
मुनिः कालकवृक्षीय आजगामेति नः श्रुतम् ।
तं पप्रच्छोपसंगृह्य कृच्छ्रामापदमास्थितः ॥

राजोवाच—
[5]अर्थेषु भागी पुरुष ईहमानः पुनः पुनः ।
अलब्ध्वा मद्विधो राज्यं ब्रह्मन् किं कर्तुमर्हसि ॥

(१) भा. १२।९४।३६ ; भामु. १२।९३।३७.

(२) भा. १२।१०५।१ ; भामु. १२।१०४।१.

(३) भा. १२।१०५।२ ; भामु. १२।१०४।२ यमिति (य इति)

(४) भा. १२।१०५।३ ; भामु. १२।१०४।३ दर्शं (दर्शी) सुतं (सुतो) बलं (बलः).मुनिः (मुनिं) क्षीय आ (क्षीयमा) च्छोप (च्छानु).

(५) भा. १२।१०५।४ ; भामु. १२।१०४।४.

भागी भागार्हः । ईहमानः यतमानः । नीटी.

[1]अन्यत्र मरणात् स्तेयादन्यत्र परसंश्रयात् ।
क्षुद्रादन्यत्र चाऽऽचारात् तन्ममाऽऽचक्ष्व सत्तम ॥

[2]व्याधिना चाभिपन्नस्य मानसेनेतरेण वा ।
बहुश्रुतः कृतप्रज्ञस्त्वद्विधः शरणं भवेत् ॥

इतरेण शारीरेण । नीटी.

[3]निर्विद्य हि नरः कामान्नियम्य सुखमेधते ।
त्यक्त्वा प्रीतिं च शोकं च लब्ध्वाऽप्रीतिमयं वसु ॥

निर्विद्यति विरज्यते । कामात् विषयभोगात् । बुद्धिमयं वसु ज्ञानरूपं धनम् । नीटी.

[4]सुखमर्थाश्रयं येषामनुशोचामि तानहम् ।
मम ह्यर्थाः सुबहवो नष्टाः स्वप्न इवाऽऽगताः ॥
[5]दुष्करं बत कुर्वन्ति महतोऽर्थांस्त्यजन्ति ये ।
वयं त्वेनान् परित्यक्तुमसतोऽपि न शक्नुमः ॥
[6]इमामवस्थां संप्राप्तं दीनमार्तं श्रियश्च्युतम् ।
यदन्यत् सुखमस्तीह तद् ब्रह्मन्ननुशाधि माम् ॥
[7]कौसल्येनैवमुक्तस्तु राजपुत्रेण धीमता ।
मुनिः कालकवृक्षीयः प्रत्युवाच महाद्युतिः ॥

(१) भा. १२।१०५।५ ; भामु. १२।१०४।५ स्तेया (दैन्या).

(२) भा. १२।१०५।६ ; भामु. १२।१०४।६ तृतीयचरणे (धर्मज्ञश्च कृतज्ञश्च).

(३) भा. १२।१०५।७ ; भामु. १२।१०४।७ निर्विद्य हि (निर्विद्यति) न्नियम्य (न्निर्विद्य) ऽप्रीति (बुद्धि).

(४) भा. १२।१०५।८ ; भामु. १२।१०४।८.

(५) भा. १२।१०५।९ ; भामु. १२।१०४।९ त्वेनान् (त्वेतान्).

(६) भा. १२।१०५।१० ; भामु. १२।१०४।१० यश्च्युतं (या च्युतम्).

(७) भा. १२।१०५।११ ; भामु. १२।१०४।११.

मुनिरुवाच-

[1]पुरस्तादेव ते बुद्धिरियं कार्या विजानतः।
अनित्यं सर्वमेवेदमहं च मम चास्ति यत् ॥

इयं 'निर्विद्यति' इति श्लोकेन त्वया प्रोक्ता। अहं च यच्च मम अस्ति एतत्सर्वमनित्यमिति जानता। नीटी.

[2]यत्किंचिन्मन्यसेऽस्तीति सर्वं नास्तीति विद्धि तत्।
एव न व्यथते प्राज्ञः कृच्छ्रामप्यापदं गतः ॥

नास्ति, तुच्छत्वात्। नीटी.

[3]यद्धि भूतं भविष्यच्च ध्रुवं तन्न भविष्यति।
एवं विदितवेद्यस्त्वमधर्मेभ्यः प्रमोक्ष्यसे ॥

सर्वं तन्नाभूत् न भविष्यति। दृष्टिसमसमयैव सृष्टिरिति भावः। नीटी.

[4]यच्च पूर्वे समाहारे यच्च पूर्वतरे परे।
सर्वं तन्नास्ति तच्चैव तज्ज्ञात्वा कोऽनुसंज्वरेत् ॥

यच्च पूर्वं प्राचीनं समाहारे राशौ समुदाये धान्यादिकम्, यच्च पूर्वं परे परे पूर्वस्मिन् पूर्वस्मिन् राशि, तत्सर्वं ते तव नास्त्येवेति तज्ज्ञात्वा सर्वत्र ममतां त्यक्त्वेति भावः। नीटी.

[5]भूत्वा च न भवत्येतदभूत्वा च भवत्यपि।
शोके न ह्यस्ति सामर्थ्यं शोकं कुर्यात् कथं नरः ॥

सामर्थ्यं धनार्जनवीर्यम्। कथं च कथमपि न कुर्यात् शोकम्। नीटी.

[1]क्व नु तेऽद्य पिता राजन् क्व नु तेऽद्य पितामहः।
न त्वं पश्यसि तानद्य न त्वा पश्यन्ति तेऽपि च ॥

[2]आत्मनोऽध्रुवतां पश्यंस्तांस्त्वं किमनुशोचसि।
बुद्ध्या चैवानुबुद्ध्यस्व ध्रुवं हि न भविष्यसि ॥

आत्मनः देहस्य। अध्रुवतामिति च्छेदः। न भविष्यसि मरिष्यसि। नीटी.

[3]अहं च त्वं च नृपते शत्रवः सुहृदश्च ते।
अवश्यं न भविष्यामः सर्वं च न भविष्यति ॥

[4]ये तु विंशतिवर्षा वै त्रिंशद्वर्षाश्च मानवाः।
अर्वागेव हि ते सर्वे मरिष्यन्ति शरच्छतात् ॥

[5]अपि चेन्महतो वित्ताद्विप्रमुच्येत पूरुषः।
नैतन्ममेति तन्मत्वा कुर्वीत प्रियमात्मनः ॥

न प्रमुच्येत प्रत्यक्षेण त्यागो न संभवति चेत् ममत्वं बान्धवादौ त्याज्यमित्याह— अपीति। नीटी.

[6]अनागतं यन्न ममेति विद्या-
दतिक्रान्तं यन्न ममेति विद्यात्।
दिष्टं बलीय इति मन्यमाना-
स्ते पण्डितास्तत्सतां स्थानमाहुः ॥

विद्यात् विद्युः। तत् निर्ममत्वम्। नीटी.

---

(१) भा. १२।१०५।१२; भामु. १२।१०४।१२ जानतः (जानता) मेवेदमहं (मेवैतदहं).

(२) भा. १२।१०५।१३; भामु. १२।१०४।१३.

(३) भा. १२।१०५।१४; भामु. १२।१०४।१४ ष्यच्च (ष्यं च) ध्रुवं (सर्वं).

(४) भा. १२।१०५।१५; भामु. १२।१०४।१५ पूर्वे (पूर्वं) पूर्वतरे (पूर्वं परे) तच्चैव (ते चैव).

(५) भा. १२।१०५।१६; भामु. १२।१०४।१६ भवत्यपि (भविष्यति) नरः (च न).

(१) भा. १२।१०५।१७; भामु. १२।१०४।१७ त्वा (त्वां).

(२) भा. १२।१०५।१८; भामु. १२।१०४।१८.

(३) भा. १२।१०५।१९; भामु. १२।१०४।१९ शत्रवः सुहृदश्च (सुहृदः शत्रवश्च).

(४) भा. १२।१०५।२०; भामु. १२।१०४।२०.

(५) भा. १२।१०५।२१; भामु. १२।१०४।२१ द्विप्र (न्न प्र).

(६) भा. १२।१०५।२२; भामु. १२।१०४।२२.

[1]अनाढ्याश्चापि जीवन्ति राज्यं चाप्यनुशासते ।
बुद्धिपौरुषसंपन्नास्त्वया तुल्याधिका जनाः ॥
[2]न च त्वमिव शोचन्ति तस्मात् त्वमपि मा शुचः ।
किं नु त्वं तैर्नं वै श्रेयांस्तुल्यो वा बुद्धि-पौरुषैः ॥

राजपुत्र उवाच–

[3]यादृच्छिकं ममाऽऽसीत्तद्राज्यमित्येव चिन्तये ।
ह्रियते सर्वमेवेदं कालेन महता द्विज ॥

यादृच्छिकम् अयत्नादागतम् । नीटी.

[4]तस्यैवं ह्रियमाणस्य स्रोतसेव तपोधन ।
फलमेतत् प्रपश्यामि यथालब्धेन वर्तये ॥

एतत् शोकाख्यं फलं यथालब्धेन वर्तयन् जीवन्नपि पश्यामि । यादृच्छिकस्य नाशेन जीवनालोपेऽपि शोको न नश्यतीत्यर्थः । नीटी.

मुनिरुवाच–

[5]अनागतमतीतं च यथा तथ्यविनिश्चयात् ।
नानुशोचसि कौसल्य सर्वार्थेषु तथा भव ॥
[6]अवाप्यान्कामयस्वार्थान्नानवाप्यान् कदाचन ।
प्रत्युत्पन्नाननुभवन् मा शुचस्त्वमनागतान् ॥

[1]यथा लब्धोपपन्नार्थस्तथा कौसल्य रंस्यसे ।
कच्चिच्छुद्धस्वभावेन श्रिया हीनो न शोचसि ॥
[2]पुरस्ताद्भूतपूर्वत्वाद्धीनभाग्यो हि दुर्मतिः ।
धातारं गर्हते नित्यं लब्धार्थांश्च न मृष्यते ॥

न मृष्यते तैर्न संतुष्यति । नीटी.

[3]अनर्हानपि चैवान्यान् मन्यते श्रीमतो जनान् ।
एतस्मात् कारणादेतद्दुःखं भूयोऽनुवर्तते ॥

अनर्हान् म्लेच्छादीन्नीचान् । नीटी.

[4]ईर्ष्यातिच्छेदसंपन्ना राजन्पुरुषमानिनः ।
कच्चित्त्वं न तथा प्राज्ञ मत्सरी कोसलाधिप ॥
[5]सहस्व श्रियमन्येषां यद्यपि त्वयि नास्ति सा ।
अन्यत्रापि सतीं लक्ष्मीं कुशला भुञ्जते जनाः ।
अभिविष्यन्दते श्रीर्हि सत्यपि द्विषतो जनात् ॥

सहस्वेति सार्धम् । अन्यत्र शत्रौ कुशलाः निर्मत्सराः जनं द्विषतः सकाशात् अभिनिस्यन्दते प्रस्रवति । नीटी.

[6]श्रियं च पुत्रपौत्रं च मनुष्या धर्मचारिणः ।
त्यागधर्मविदो वीराः स्वयमेव त्यजन्त्युत ॥
[7]बहु संकसुकं दृष्ट्वा विवित्सासाधनेन च ।
तथाऽन्ये संत्यजन्त्येनं मत्वा परमदुर्लभम् ॥

---

(१) भा. १२।१०५।२३ ; भासु. १२।१०४।२३ शासते ( शासति ).

(२) भा. १२।१०५।२४ ; भासु. १२।१०४।२४ नु ( न ) र्नं वै ( र्नरैः ).

(३) भा. १२।१०५।२५ ; भासु. १२।१०४।२५ राजपुत्र उवाच ( राजोवाच ) ममाऽऽसीत्तद्राज्यमित्येव ( सर्वमासीत्तद्राज्यमिति ).

(४) भा. १२।१०५।२६ ; भासु. १२।१०४।२६ तस्यैवं ( तस्यैव ) वर्तये ( वर्तयन् ).

(५) भा. १२।१०५।२७ ; भासु. १२।१०४।२७ यथा तथ्य ( याथातथ्य ) शोचसि ( शोचेत ).

(६) भा. १२।१०५।२८ ; भासु. १२।१०४।२८ स्वार्था ( न्नर्था ).

(१) भा. १२।१०५।२९; भासु. १२।१०४।२९ न्नार्थ ( न्नार्थै ).

(२) भा. १२।१०५।३० ; भासु. १२।१०४।३० र्थांश्च ( र्थंश्च ).

(३) भा. १२।१०५।३१ ; भासु. १२।१०४।३१.

(४) भा. १२।१०५।३२ ; भासु. १२।१०४।३२ तिच्छेद ( भिमान ) प्राज्ञ ( राजन् ).

(५) भा. १२।१०५।३३ ; भासु. १२।१०४।३३ जनाः ( सदा ) विष्य ( निस्य ) जनात् ( जनम् ).

(६) भा. १२।१०५।३४ ; भासु. १२।१०४।३४ त्याग ( योग ) वीराः ( धीराः ).

(७) भा. १२।१०५।३५ ; भासु. १२।१०४।३५ संक ( संकु ) विवित्सा ( विधित्सा ) न्त्येनं ( न्त्येव ).

विधित्सा क्रियाणामनुपरमः, तेन साधनेन । संकुसुकम् अस्थिरं नित्यं नवं नवमारम्भं कुर्वाणं दृष्ट्वा अन्ये प्राकृताः तत् संत्यजन्त्येव । नीटी.

[१]त्वं पुनः प्राज्ञरूपः सन्कृपणं परितप्यसे ।
अकाम्यान्कामयानोऽर्थान्पराचीनानुपद्रुतान् ॥

[२]तां बुद्धिमुपजिज्ञासुस्त्वमेवैनान्परित्यज ।
अनर्थाश्चार्थरूपेण अर्थाश्चानर्थरूपतः ॥

उपद्रवान् अस्थिरान् । अर्थरूपेण भासमानाः । नीटी.

[३]अर्थायैव हि केषांचिद्धननाशो भवत्युत ।
अनन्त्यं तं सुखं मत्वा श्रियमन्यः परीक्षते ॥

[४]रममाणः श्रिया कश्चिन्नान्यच्छ्रेयोऽभिमन्यते ।
तथा तस्येहमानस्य समारम्भो विनश्यति ॥

आद्यस्योदाहणम्— अर्थायेति । द्वितीयस्योदाहरणम्— रममाण इति । नीटी.

[५]कृच्छ्राल्लब्धमभिप्रेतं यदा कौसल्य नश्यति ।
तदा निर्विद्यते सोऽर्थात्परिभग्नक्रमो नरः ॥

परिभग्नक्रमः नष्टारम्भः । नीटी.

[६]धर्ममेकेऽभिपद्यन्ते कल्याणाभिजना नराः ।
परत्र सुखमिच्छन्तो निर्विद्येयुश्च लौकिकात् ॥

(१) भा. १२।१०५।३६ ; भामु. १२।१०४।३६ चीना (धीना) द्रुतान् (द्रवान्).

(२) भा. १२।१०५।३७ ; भामु. १२।१०४।३७ वैना (वैता) अनर्था (अनर्था) चतुर्थचरणे (ह्यर्थाश्चानर्थरूपिणः).

(३) भा. १२।१०५।३८ ; भामु. १२।१०४।३८ अनन्त्यं तं (आनन्त्यं तत्) क्षते (प्सति).

(४) भा. १२।१०५।३९ ; भामु. १२।१०४।३९.

(५) भा. १२।१०५।४० ; भामु. १२।१०४।४० यदा (यदि).

(६) भा. १२।१०५।४१ ; भामु. १२।१०४।४१.

[१]जीवितं संन्त्यजन्त्येके धनलोभपरा नराः ।
न जीवितार्थं मन्यन्ते पुरुषा हि धनादृते ॥

[२]पश्य तेषां कृपणतां पश्य तेषामबुद्धिताम् ।
अध्रुवे जीविते मोहादर्थतृष्णामुपाश्रिताः ॥

[३]संचये च विनाशान्ते मरणान्ते च जीविते ।
संयोगे विप्रयोगान्ते को नु विप्रणयेन्मनः ॥

विप्रणयेत् दद्यात् । नीटी.

[४]धनं वा पुरुषं राजन् पुरुषो वा पुनर्धनम् ।
अवश्यं प्रजहात्येतत् तद्विद्वान् कोऽनुसंज्वरेत् ॥

[५]अन्येषामपि नश्यन्ति सुहृदश्च धनानि च ।
पश्य बुद्ध्या मनुष्याणां राजन्नापदमात्मनः ।
नियच्छ यच्छ संयच्छ इन्द्रियाणि मनो गिरम् ॥

अन्येषामपीति सार्धः । बुद्ध्या कल्पितामापदं पश्य । कथमत आह— नियच्छेति । यथाक्रमेणान्वयः । इन्द्रियादीनां निरोधे हि जगत्तत्वं सम्यक् स्फुरति, तेन आपदां कल्पितत्वं स्फुटीभवतीति भावः । नीटी.

[६]प्रतिषिद्धानवाप्येषु दुर्लभेष्वहितेषु च ।
प्रतिकृष्टेषु भावेषु व्यतिकृष्टेष्वसंभवे ।
प्रज्ञानतृप्तो विक्रान्तस्त्वद्विधो नानुशोचति ॥

(१) भा. १२।१०५।४२ ; भामु. १२।१०४।४२ नराः (जनाः).

(२) भा. १२।१०५।४३ ; भामु. १२।१०४।४३ तृष्णा (दृष्टि).

(३) भा. १२।१०५।४४ ; भामु. १२।१०४।४४ विप्रयो (च वियो).

(४) भा. १२।१०५।४५ ; भामु. १२।१०४।४५ पुरुषं (पुरुषो) षो वा (षं वा) त्येतत् (त्येव).

(५) भा. १२।१०५।४६ ; भामु. १२।१०४।४६—४७.

(६) भा. १२।१०५।४७ ; भामु. १२।१०४।४७—४८ प्रथमद्वितीयार्धयोः (प्रतिषेद्धा न चाप्येषु दुर्बलेष्वहितेष्वपि । प्राप्तिसृष्टेषु भावेषु व्यपकृष्टेष्वसंभवे ।).

भावेषु अर्थेषु प्राप्तिसृष्टेषु दर्शनमात्रोत्पन्नेषु प्रतिषेद्धा न विद्यते। अप्रत्याख्येयदर्शनाः सर्वे वर्तमानाः पदार्था इत्यर्थः। व्यपकृष्टेषु देशतः कालतश्च व्यवहितेषु अतीतानागतदूरस्थेषु दर्शनस्यासंभवे च ज्ञाते सति तद्विधो नानुशोचति इष्टानिष्टसंयोगवियोगयोरिति सार्धार्थः।

नीटी.

**[1]अल्पमिच्छन्नचपलो मृदुर्दान्तः सुसंशितः।**
**ब्रह्मचर्योपपन्नश्च त्वद्विधो नैव मुह्यति॥**
**[2]न त्वेव जाल्मीं कापालीं वृत्तिमेषितुमर्हसि।**
**नृशंसवृत्तिं पापिष्ठां दुःखां कापुरुषोचिताम्॥**
**[3]अपि मूलफलाजीवो रमस्वैको महावने।**
**वाग्यतः संगृहीतात्मा सर्वभूतदयान्वितः॥**
**[4]सदृशं पण्डितस्यैतदीषादन्तेन दन्तिना।**
**यदेको रमतेऽरण्ये यच्चाप्यल्पेन तुष्यति॥**
**[5]महाह्रदः संक्षुभित आत्मनैव प्रसीदति।**
**एतदेवंगतस्याहं सुखं पश्यामि केवलम्॥**
**असंभवे श्रियो राजन् हीनस्य सचिवादिभिः।**
**दैवे प्रतिनिविष्टे च किं श्रेयो मन्यते भवान्॥**

**मुनिरुवाच–**

**[6]अथ चेत्पौरुषं किंचित्क्षत्रियाऽऽत्मनि पश्यसि।**
**ब्रवीमि हन्त ते नीतिं राज्यस्य प्रतिपत्तये॥**

(१) भा. १२।१०५।४८ ; भामु. १२।१०४।४९ संशितः ( निश्चितः ) मुह्यति ( शोचति ).

(२) भा. १२।१०५।४९ ; भामु. १२।१०४।५० दुःखां ( दुष्टां ).

(३) भा. १२।१०५।५० ; भामु. १२।१०४।५१.

(४) भा. १२।१०५।५१ ; भामु. १२।१०४।५२ ण्ये यचाप्यल्पेन ( ण्येष्वारण्येनैव ).

(५) भा. १२।१०५।५२–५३ ; भामु. १२।१०४।५३–५४ केवलम् ( जीवितुम् ).

(६) भा. १२।१०६।१ ; भामु. १२।१०५।१ हन्त ( तां तु ).

एवं दुर्बलस्य हीनसंपदः परैर्निर्जितस्य निवृत्तिधर्म एव श्रेयानित्युक्तम्। प्रबलस्य तु तादृशस्य निकृत्याख्यं जयोपायं वक्तुमध्याय आरभ्यते– अथ चेदिति। नीटी.

**[1]तां चेच्छक्ष्यस्यनुष्ठातुं कर्म चैव करिष्यसि।**
**शृणु सर्वमशेषेण यत्त्वां वक्ष्यामि तत्त्वतः॥**
**[2]आचरिष्यसि चेत्कर्म महतोऽर्थानवाप्स्यसि।**
**राज्यं राज्यस्य मन्त्रं वा महतीं वा पुनः श्रियम्।**
**यद्येतद्रोचते राजन् पुनर्ब्रूहि ब्रवीमि ते॥**

**राजपुत्र उवाच–**

**[3]ब्रवीतु भगवान्नीतिमुपपन्नोऽस्म्यहं प्रभो।**
**अमोघमिदमद्यास्तु त्वया सह समागतम्॥**

उपपन्नोऽस्मि, पौरुषेणेति शेषः। नीटी.

**मुनिरुवाच–**

**[4]हित्वा स्तम्भं च मानं च क्रोधहर्षौ भयं तथा।**
**प्रत्यमित्रं निषेवस्व प्रणिपत्य कृताञ्जलिः॥**
**[5]तमुत्तमेन शौचेन कर्मणा चाभिराधय।**
**दातुमर्हति ते वृत्तिं वैदेहः सत्यसंगरः॥**
**[6]प्रमाणं सर्वभूतेषु प्रग्रहं च गमिष्यसि।**
**ततः सहायान्सोत्साहाँल्लप्स्यसेऽव्यसनाञ्शुचीन्॥**

(१) भा. १२।१०६।२ ; भामु. १२।१०५।२ च्छक्ष्यस्यनुष्ठातुं ( च्छक्नोषि निर्मातुं ).

(२) भा. १२।१०६।३ ; भामु. १२।१०५।३–४ यद्ये ( अथै ).

(३) भा. १२।१०६।४ ; भामु. १२।१०५।४–५ राजपुत्र उवाच ( राजोवाच ) उत्तरार्धे ( अमोघोऽयं भवत्वद्य त्वया सह समागमः ॥ ).

(४) भा. १२।१०६।५ ; भामु. १२।१०५।५–६ ( हित्वा दम्भं च कामं च क्रोधं हर्षं भयं तथा। अप्यमित्राणि सेवस्व प्रणिपत्य कृताञ्जलिः ॥ ).

(५) भा. १२।१०६।६ ; भामु. १२।१०५।६–७ राधय ( धारय ) वृत्तिं ( वित्तं ).

(६) भा. १२।१०६।७ ; भामु. १२।१०५।७–८ गमि ( भवि ).

वित्तं वेतनरूपम् । प्रमाणं विश्वासम् । प्रग्रहमिव प्रग्रहं भुजत्वम् । तस्य बाहुस्थानीयो भविष्यसीत्यर्थः । 'प्रग्रहस्तु तुलासूत्रे बन्द्यां नियमने भुजे' इति मेदिनी । नीटी.

**[1]वर्तमानः स्वशास्त्रे वै संयतात्मा जितेन्द्रियः ।**
**अभ्युद्धरति चाऽऽत्मानं प्रसादयति च प्रजाः ॥**

स्वशास्त्रेण नीतिशास्त्रेण । नीटी.

**[2]तेनैव त्वं धृतिमता श्रीमता चाभिसत्कृतः ।**
**प्रमाणं सर्वभूतेषु गत्वा प्रग्रहणं महत् ॥**

ग्रहणम् आदरम् । 'ग्रहणं स्वीकारादरकरोपरागोपलब्धिबन्दिषु' इति मेदिनी । नीटी.

**[3]ततः सुहृद्बलं लब्ध्वा मन्त्रयित्वा सुमन्त्रितम् ।**
**अन्तरैर्भेदयित्वाऽरीन् बिल्वं बिल्वेन शातय ।**
**परैर्वा संविदं कृत्वा बलमप्यस्य घातय ॥**

बिल्वं बिल्वेनेति । अन्यपराजयोऽपीष्ट इति मत्वा जनकेन अन्यं विपरीतं वा घातय । अस्य वैदेहस्य । नीटी.

**[4]अलभ्या ये शुभा भावाः स्त्रियश्चाऽऽच्छादनानि च ।**
**शय्यासनानि यानानि महार्हाणि गृहाणि च ॥**

**[5]पक्षिणो मृगजातानि रसा गन्धाः फलानि च ।**
**तेष्वेव सज्जयेथास्त्वं यथा नश्येत्स्वयं परः ॥**

(१) भा. १२।१०६।८ ; भाम. १२।१०५।८–९ शास्त्रे वै (शास्त्रेण).

(२) भा. १२।१०६।९ ; भामु. १२।१०५।९–१० प्रग्र (च ग्र).

(३) भा. १२।१०६।१० ; भामु. १२।१०५।१०–११ मन्त्रितम् (मन्त्रिभिः) अन्त (आन्त) शात (भेद).

(४) भा. १२।१०६।११ ; भामु. १२।१०५।१२.

(५) भा. १२।१०६।१२; भामु. १२।१०५।१३ रसा ग (रसग) नश्येत्स्वयं) (नश्यत्वयं).

**[1]यद्येव प्रतिषेद्धव्यो यद्युपेक्षणमर्हति ।**
**न जातु विवृतः कार्यः शत्रुर्विनयमिच्छता ॥**

प्रतिषेधस्थाने तदकरणे अयं मां न प्रतिषिद्धवानिति मम शत्रुरिति विवृतत्वं भवति, तद्रक्ष्यमित्यर्थः । नीटी.

**[2]वसस्व परमामित्रविषये प्राज्ञसंमते ।**
**भजस्व श्वेतकाकीयैर्मित्राधममनर्थकैः ॥**

हे परम, अमित्रे शत्रुसमीपे श्वेतकाकीयैः— श्वा च एतश्च काकश्च, तेषामिमे धर्माः क्रमेण नित्यं जागरूकत्वभयचकितत्वपरेङ्गितज्ञत्वानि, तैः उपायैः मित्रधर्मे भजस्व । श्वेत इत्यत्र 'ओमाङोश्च' (पा. ६।१।९५) इति पररूपम् । एतः मृगः । नीटी.

**[3]आरम्भांश्चास्य महतो दुष्करांस्त्वं प्रयोजय ।**
**नदीबन्धविरोधांश्च बलवद्भिर्विरुध्यताम् ॥**

आरम्भान् विरोधांश्च महानदीवद्दुस्तरान् । नीटी.

**[4]उद्यानानि महार्हाणि शयनान्यासनानि च ।**
**प्रतिभोगसुखेनैव कोशमस्य विरेचय ॥**

**[5]यज्ञदानप्रशंसाऽस्मै ब्राह्मणेष्वनुवर्ण्यताम् ।**
**ते त्वत्प्रियं करिष्यन्ति तं चेष्यन्ति वृका इव ॥**

प्रतिकरिष्यन्ति प्रत्युपकारेण स्वस्त्ययनादिना उपकरिष्यन्ति । नीटी.

(१) भा. १२।१०६।१३; भामु. १२।१०५।१४ द्येव (द्येवं) त्रुर्वि (त्रुः सु).

(२) भा. १२।१०६।१४; भामु. १२।१०५।१५ मित्रवि (मित्रे वि) मते (मतः) त्राधम (त्रधर्म).

(३) भा. १२।१०६।१५; भामु. १२।१०५।१६ दुष्करांस्त्वं (दुश्चरांश्च) बन्ध (वच).

(४) भा. १२।१०६।१६; भामु. १२।१०५।१७.

(५) भा. १२।१०६।१७; भामु. १२।१०५।१८ (यज्ञदाने प्रशाध्यस्मै ब्राह्मणाननुवर्ण्य तान् । ते त्वां प्रतिकरिष्यन्ति तं भोक्ष्यन्ति वृका इव ॥).

¹असंशयं पुण्यशीलः प्राप्नोति परमां गतिम् ।
त्रिविष्टपे पुण्यतमं स्थानं प्राप्नोति पार्थिवः ।
कोशक्षये त्वमित्राणां वशं कौसल्य गच्छति ॥

धर्माधर्माभ्यां कोशक्षये सति । नीटी.

²उभयत्र प्रसक्तस्य धर्मे चाधर्म एव च ।
बलार्थमूलं व्युच्छिद्येत्तेन नन्दन्ति शत्रवः ॥

फलस्य स्वर्गादेः अर्थस्य जयादेः मूलकारणं कोशः । व्युच्छिद्येत् विशेषत उच्छेदं गच्छेत् । दैवं जयादिकम् । नीटी.

³निन्द्यास्य मानुषं कर्म दैवमस्योपवर्णय ।
असंशयं दैवपरः क्षिप्रमेव विनश्यति ॥

⁴याजयैनं विश्वजिता सर्वस्वेन वियुज्यताम् ।
ततो गच्छत्वसिद्धार्थः पीड्यमानो महाजनम् ॥

⁵त्यागधर्मविदं मुण्डं कंचिदस्योपवर्णय ।
अपि त्यागं बुभूषेत कच्चिद्गच्छेदनामयम् ॥

⁶सिद्धेनौषधयोगेन सर्वशत्रुविनाशिना ।
नागानश्वान् मनुष्यांश्च कृतकैरुपघातय ॥

गच्छसि अवगच्छसि । सिद्धार्थः कृतयज्ञादिप्रयोजनः महाजनपीडां तस्मै निवेदयेत् तत्परिहारार्थमाचार्यं च वर्णयेत् । तद्द्वारा राज्यं त्याजयेदित्याह— अपीति । यद्वा औषधाद्यैरस्य नागादीन् घातयेदिति सार्धः । नीटी.

(१) भा. १२।१०६।१८; भामु. १२।१०५। १९–२० पार्थिवः (मानवः).

(२) भा. १२।१०६।१९; भामु. १२।१०५। २०–२१ प्रस (प्रयु) धर्मे चा (धर्मेणा) बला (फला).

(३) भा. १२।१०६।२०; भामु. १२।१०५। २१–२२ निन्द्यास्य (न चास्मै).

(४) भा. १२।१०६।२१; भामु. १२।१०५।२२–२३ ज्यताम् (ज्य तम्) त्वसि (सि सि) मानो (मानं).

(५) भा. १२।१०६।२२; भामु. १२।१०५। २३–२४ त्याग (योग) मुण्डं (पुण्यं) वर्णय (वर्णयेत्).

(६) भा. १२।१०६।२३; भामु. १२।१०५।२४ पघ (पधि) घातय (घातयेत्).

¹एते चान्ये च बहवो दम्भयोगाः सुनिश्चिताः ।
शक्या विषहता कर्तुं नक्लीबेन नृपात्मज ॥

राजपुत्र उवाच—

²न निकृत्या न दम्भेन ब्रह्मन्निच्छामि जीवितुम् ।
नाधर्मयुक्तानिच्छेयमर्थान् सुमहतोऽप्यहम् ॥

निकृतिं कपटं च कर्तुमनिच्छोः धर्मिष्ठस्य क्षीणस्य सामाख्यं जयोपायमाह— न निकृत्येत्यादिना । नीटी.

³पुरस्तादेव भगवन् मयैतदपवर्जितम् ।
येन मां नाभिशङ्केत यद्वा कृत्स्नं हितं भवेत् ॥

⁴आनृशंस्येन धर्मेण लोके ह्यस्मिन् जिजीविषुः ।
नाहमेतदलं कर्तुं नैतन्मय्युपपद्यते ॥

मुनिरुवाच—

⁵उपपन्नस्त्वमेतेन यथा क्षत्रिय भाषसे ।
प्रकृत्या ह्युपपन्नोऽसि बुद्ध्या चाद्भुतदर्शन ॥

⁶उभयोरेव वामर्थे यतिष्ये तव तस्य च ।
संश्लेषं वा करिष्यामि शाश्वतं ह्यनपायिनम् ॥

वां युवयोः । तस्य विदेहस्य । नीटी.

त्वादृशं हि कुले जातमनृशंसं बहुश्रुतम् ।
अमात्यं को न कुर्वीत राज्यप्रणयकोविदम् ॥

त्वादृशं राजानं लब्ध्वा अमात्यकर्म को न कुर्वीत ? अपितु सर्वोऽपि मादृशः कुर्वीतैवेत्यर्थः । नीटी.

(१) भा. १२।१०६।२४; भामु. १२।१०५।२५ निश्चिताः (चिन्तिताः) चतुर्थचरणे (पुरुषेण कृतात्मना).

(२) भा. १२।१०७।१; भामु. १२।१०६।१ राजपुत्र उवाच (राजोवाच).

(३) भा. १२।१०७।२ भामु. १२।१०६।२.

(४) भा. १२।१०७।३; भामु. १२।१०६।३ न्मय्यु (त्वय्यु).

(५) भा. १२।१०७।४; भामु. १२।१०६।४ चाद्भुतदर्शन (वा बहुदर्शनः).

(६) भा. १२।१०७।५–६; भामु. १२।१०६।५–६.

[1]यस्त्वं प्रव्रजितो राज्याद्व्यसनं चोत्तमं गतः ।
आनृशंस्येन वृत्तेन क्षत्रियेच्छसि जीवितुम् ॥

उत्तमं महत् । नीटी.

[2]आगन्ता मद्गृहं तात वैदेहः सत्यसंगरः ।
यथाऽहं तं नियोक्ष्यामि तत्करिष्यत्यसंशयम् ॥

[3]भीष्म उवाच–
तत आहूय वैदेहं मुनिर्वचनमब्रवीत् ।
अयं राजकुले जातो विदिताभ्यन्तरो मम ॥

[4]आदर्श इव शुद्धात्मा शारदश्चन्द्रमा इव ।
नास्मिन्पश्यामि वृजिनं सर्वतो मे परीक्षितः ॥

[5]तेन ते संधिरेवास्तु विश्वसास्मिन् यथा मयि ।
न राज्यमनमात्येन शक्यं शास्तुममित्रहन् ॥

[6]अमात्यः शूर एव स्याद् बुद्धिसंपन्न एव च ।
ताभ्यां चैव भयं राज्ञः पश्य राज्यस्य योजनम् ।
धर्मात्मनां क्वचिल्लोके नान्यास्ति गतिरीदृशी ॥

ताभ्यां शौर्यबुद्धिभ्याम् । उभयं लोकद्वयम् । नीटी.

[1]कृतात्मा राजपुत्रोऽयं सतां मार्गमनुष्ठितः ।
सुसंगृहीतस्त्वेवैष त्वया धर्मपुरोगमः ।
संसेव्यमानः शत्रूंस्ते गृह्णीयान्महतो गणान् ॥

गणान् शत्रुसंघान् । नीटी.

[2]यद्ययं प्रतियुद्ध्येत्त्वां स्वकर्म क्षत्रियस्य तत् ।
जिगीषमाणस्त्वां युद्धे पितृपैतामहे पदे ॥

[3]त्वं चापि प्रतियुध्येथा विजिगीषुव्रते स्थितः ।
अयुद्ध्वैव नियोगान्मे वशे वदेह ते स्थितः ॥

[4]स त्वं धर्ममवेक्षस्व त्यक्त्वाऽधर्ममसांप्रतम् ।
न हि कामान्न च द्रोहात्स्वधर्मं हातुमर्हसि ॥

असांप्रतम् अनुचितम् । नीटी.

[5]नैव नित्यं जयस्तात नैव नित्यं पराजयः ।
तस्माद्भोजयितव्यश्च भोक्तव्यश्च परो जनः ॥

परो जनः शत्रुजनः भोजनादिना संधेयः । दण्डापेक्षया सामैव श्रेय इत्यर्थः । नीटी.

[6]आत्मन्येव हि संदृश्यावुभौ जयपराजयौ ।
निःशेषकारिणां तात निःशेषकरणाद्भयम् ॥

[7]इत्युक्तः प्रत्युवाचेदं वचनं ब्राह्मणर्षभम् ।
अभिपूज्याभिसत्कृत्य पूजार्हमनुमान्य च ॥

---

(१) भा. १२।१०७।७; भामु. १२।१०६।७ व्रजि (च्यावि).

(२) भा. १२।१०७।८; भामु. १२।१०६।८ यथाऽहं (अथाहं).

(३) भा. १२।१०७।९; भामु. १२।१०६।९ (भीष्म उवाच०).

(४) भा. १२।१०७।१०; भामु. १२।१०६।१० मा इव (मा यथा).

(५) भा. १२।१०७।११; भामु. १२।१०६।११ ममित्रहन् (मपि त्र्यहम्).

(६) भा. १२।१०७।१२; भामु. १२।१०६। १२–१३ च (वा) द्वितीयार्धे (ताभ्यां चैवोभयं राजन् पश्य राज्यप्रयोजनम् । ).

(१) भा. १२।१०७।१३; भामु. १२।१०६। १३–१४ कृता (महा).

(२) भा. १२।१०७।१४; भामु. १२।१०६।१५ यद्ययं (यद्यहं).

(३) भा. १२।१०७।१५; भामु. १२।१०६।१६ वैदेह ते (कुरुहिते).

(४) भा. १२।१०७।१६; भामु. १२।१०६।१७ त्यक्त्वा धर्मं (हित्वा लोभ) हि (च).

(५) भा. १२।१०७।१७; भामु. १२।१०६।१८.

(६) भा. १२।१०७।१८; भामु. १२।१०६।१९ न्येव हि (न्यपि च).

(७) भा. १२।१०७।१९; भामु. १२।१०६।२० अभिपू (प्रतिपू).

[1]यथा ब्रूयान्महाप्राज्ञो यथा ब्रूयाद्बहुश्रुतः ।
श्रेयस्कामो यथा ब्रूयादुभयोर्यत् क्षमं भवेत् ॥

[2]तथा वचनमुक्तोऽस्मि करिष्यामि च तत्तथा ।
एतद्धि परमं श्रेयो न मेऽत्रास्ति विचारणा ॥

[3]ततः कौसल्यमाहूय वैदेहो वाक्यमब्रवीत् ।
धर्मतो नीतितश्चैव बलेन च जितो मया ॥

[4]सोऽहं त्वया त्वात्मगुणैर्जितः पार्थिवसत्तम ।
आत्मानमनवज्ञाय जितवद्वर्ततां भवान् ॥

जितवत् प्राप्तजय इव । नीटी.

[5]नावमन्ये च ते बुद्धिं नावमन्ये च पौरुषम् ।
नावमन्ये जयामीति जितवद्वर्ततां भवान् ॥

[6]यथावत् पूजितो राजन् गृहं गन्तासि मे गृहात् ।
ततः संपूज्य तौ विप्रं विश्वस्तौ जग्मतुर्गृहान् ॥

[7]वैदेहस्त्वथ कौसल्यं प्रवेश्य गृहमञ्जसा ।
पाद्यार्घ्यमधुपर्कैस्तं पूजार्हं प्रत्यपूजयत् ॥

[8]ददौ दुहितरं चास्मै रत्नानि विविधानि च ।
एष राज्ञां परो धर्मः सह्यौ जयपराजयौ ॥

(१) भा. १२।१०७।२०; भामु. १२।१०६।२१ द्बहु (न्महा) र्यत् क्षमं भवेत् (रेव तत्क्षमम्).

(२) भा. १२।१०७।२१; भामु. १२।१०६।२२ तथा व (यथद्व).

(३) भा. १२।१०७।२२; भामु. १२।१०६।२३ वैदेहो (मैथिलो) बलेन च (लोकश्च वि).

(४) भा. १२।१०७।२३; भामु. १२।१०६।२४ सोऽहं (अहं) त्वात्म (चाऽऽत्म).

(५) भा. १२।१०७।२४; भामु. १२।१०६।२५ मन्ये च ते (मन्यामि ते).

(६) भा. १२।१०७।२५; भामु. १२।१०६।२६ गृहात् (भृशम्).

(७) भा. १२।१०७।२६; भामु. १२।१०६।२७.

(८) भा. १२।१०७।२७; भामु. १२।१०६।२८ सह्यौ (नित्यौ).

दुर्बलस्य राज्ञः बलीयसा विरोधे वैतसवृत्तिः श्रेयस्करी, आत्मरक्षणाय च संधिः कर्तव्यः

युधिष्ठिर उवाच–

[1]राजा राज्यमनुप्राप्य दुर्बलो भरतर्षभ ।
अमित्रस्यातिवृद्धस्य कथं तिष्ठेदसाधनः ॥

'राजा राज्यम्' इत्यध्यायो बलवति रिपौ विनय एव श्रेयानित्यर्थकः । नीटी.

भीष्म उवाच–

[2]अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
सरितां चैव संवादं सागरस्य च भारत ॥

सुरारिनिलयः शश्वत् सागरः सरितां पतिः ।
पप्रच्छ सरितः सर्वाः संशयं जातमात्मनः ॥

सागर उवाच–

[3]समूलशाखान्पश्यामि निहतांश्छायिनो द्रुमान् ।
युष्माभिरिह पूर्णाभिरन्यांस्तत्र न वेतसम् ॥

निहतान् उन्मूलितान् । कायिनः महाशरीरान् । अन्यान् वृक्षान्, आनीतानिति शेषः । नीटी.

[4]अकायश्चाल्पसारश्च वेतसः कूलजश्च वः ।
अवज्ञाय नशक्यो वा किंचिद्वा तेन वः कृतम् ॥

अकायः अल्पकायः । नीटी.

(१) भा. १२।११४।१; भामु. १२।११३।१ दुर्बलो (दुर्लभं).

(२) भा. १२।११४।२–३; भामु. १२।११३।२–३.

(३) भा. १२।११४।४ (सागर उवाच०); भामु. १२।११३।४ तांश्छा (तान्का) रन्यां (नंघ).

(४) भा. १२।११४।५; भामु. १२।११३।५ उत्तरार्धे (अवज्ञया वा नाऽऽनीतः किं च वा तेन वः कृतम् ॥).

[1]तदहं श्रोतुमिच्छामि सर्वासामेव वो मतम् ।
यथा कूलानि चेमानि भित्त्वा नानीयते वशम् ॥
[2]ततः प्राह नदी गङ्गा वाक्यमुत्तरमर्थवत् ।
हेतुमद् ग्राहकं चैव सागरं सरितां पतिम् ॥
गङ्गोवाच—
[3]तिष्ठन्त्येते यथास्थानं नगा ह्येकनिकेतनाः ।
ततस्त्यजन्ति तत् स्थानं प्रातिलोम्यादचेतसः ॥

एकनिकेतनाः स्तब्धा इत्यर्थः । प्रातिलोम्यात् अस्माकं प्रातिकूल्यात् । नीटी.

[4]वेतसो वेगमायान्तं दृष्ट्वा नमति नेतरः ।
स च वेगेऽभ्यतिक्रान्ते स्थानमासाद्य तिष्ठति ॥
[5]कालज्ञः समयज्ञश्च सदा वश्यश्च नोद्रुमः ।
अनुलोमस्तथास्तब्धस्तेन नाभ्येति वेतसः ॥
[6]मारुतोदकवेगेन ये नमन्त्युन्नमन्ति च ।
ओषध्यः पादपा गुल्मा न ते यान्ति पराभवम् ॥
भीष्म उवाच—
[7]यो हि शत्रोर्विवृद्धस्य प्रभोर्वधविनाशने ।
पूर्वं न सहते वेगं क्षिप्रमेव स नश्यति ॥

(१) भा. १२।११४।६; भामु. १२।११३।६ उत्तरार्धे (यथा चेमानि कूलानि हित्वा नाऽऽयाति वेतसः ॥).
(२) भा. १२।११४।७; भामु. १२।११३।७ ततः (तत्र) मुत्तर (मुत्तम).
(३) भा. १२।११४।८ (गङ्गोवाच०); भामु. १२।११३।८ तृतीयचरणे (ते त्यजन्ति ततः स्थानं) दचे (न्न वे).
(४) भा. १२।११४।९; भामु. १२।११३।९ यान्तं (यातं) नेतरः (नापरे) स च वेगे (सरिद्वेगे).
(५) भा. १२।११४।१०; भामु. १२।११३।१० नोद्रुमः (नोद्धतः) तथास्तब्ध (तथा लब्ध).
(६) भा. १२।११४।११; भामु. १२।११३।११.
(७) भा. १२।११४।१२ (भीष्म उवाच०); भामु. १२।११३।१२ वंध (वैन्ध) स नश्य (विनश्य).

[1]सारासारं बलं वीर्यमात्मनो द्विषतश्च यः ।
जानन् विचरति प्राज्ञो न स याति पराभवम् ॥
[2]एवमेव यदा विद्वान् मन्येतातिबलं रिपुम् ।
संश्रयेद्वैतसीं वृत्तिमेवं प्रज्ञानलक्षणम् ॥

वैतसीं वृत्तिम् अस्तब्धत्वम् । नीटी.

[3]उच्छ्रितानाश्रयेत् स्फीतान्नरेन्द्रानचलोपमान् ।
श्रयेच्छायामविज्ञातां गुप्तं शरणमाश्रयेत् ॥

छायां परदुर्गाधिपतिना संधिं कृत्वा देवतादर्शनादिव्याजेनाकस्मात्परदुर्गं गत्वा प्रविश्य तन्नाशयेदित्याह— उच्छ्रितानिति । नीटी.

युधिष्ठिर उवाच—
[4]क्षीणस्य दीर्घसूत्रस्य सानुक्रोशस्य बन्धुषु ।
विरक्तपौरराष्ट्रस्य निर्द्रव्यनिचयस्य च ॥
परिशङ्कितमुख्यस्य स्रुतमन्त्रस्य भारत ।
असंभावितमित्रस्य भिन्नामात्यस्य सर्वशः ॥

पूर्वस्मिन्नध्याये यायिनः आपदि आगतायां प्रजापीडनेन अपि कोशं संपाद्याऽऽपदं तरेदित्युक्तम् । इदानीं स्थायिनः एवाऽऽपद्यागतायां पृच्छति— क्षीणस्येत्यादिना । क्षीणस्य धान्यकोशादिसंग्रहरहितस्य । दीर्घसूत्रस्य अलसस्य । सानुक्रोशस्य बन्धुक्षयभयात् दुर्गात् बहिर्निर्गत्य युद्धं दातुमसमर्थस्य । परिशङ्कितवृत्तस्य अमात्येषु शङ्कावतः । यतः श्रुतमन्त्रस्य, लोकैरिति शेषः । अगुप्तमन्त्रस्येत्यर्थः । विभक्तानि शत्रुभिर्विभज्य गृहीतानि पुरराष्ट्राणि यस्य । अत एव निर्द्रव्यनिचयस्य । द्रव्याभावादेव न संभावितानि

(१) भा. १२।११४।१३; भामु. १२।११३।१३.
(२) भा. १२।११४।१४; भामु. १२।११३।१४ न्येता (न्यतेऽ) मेवं (मेतत्).
(३) भा. १२।१२०।१२; भामु. १२।१२०।१२ नाश्र (न्नाश) शरणमा (रणमुपा).
(४) भा. १२।१२९।१–२ ; भामु. १२।१३१।१–२ रक्तपौर (भक्तपुर) मुख्यस्य स्रुत (वृत्तस्य श्रुत) द्वितीयतृतीयार्धे व्यत्यासपठिते.

आवर्जितानि मित्राणि येन तस्य । मित्रबलहीनत्वादेव भिन्नाः शत्रुभिर्वशीकृताः अमात्या यस्य । नीटी.

**[1]परचक्राभियातस्य दुर्बलस्य बलीयसा ।**
**आपन्नचेतसो ब्रूहि किं कार्यमवशिष्यते ॥**

परचक्रमभिजातं संमुखं यस्य । परचक्रेणाभिभूतस्येत्यर्थः । बलीयसा शत्रुणा आपन्नं व्याकुलीकृतं चेतो यस्य । नीटी.

**भीष्म उवाच—**

**[2]बाह्यश्चेद्विजिगीषुः स्याद्धर्मार्थकुशलः शुचिः ।**
**जवेन संधिं कुर्वीत पूर्वान् पूर्वान् विमोक्षयन् ॥**

बाह्यः यायी यदि धर्मपूर्वके अर्थार्जने कुशलः तर्हि शीघ्रं संधिः कर्तव्यः । स्वीयपूर्वैर्भुक्तान् ग्रामनगरादीन् तेनाऽऽक्रान्तान् क्रमशः ततो मोचयेत्, साम्नैवेत्यर्थः । नीटी.

**[3]अधर्मविजिगीषुश्चेद्बलवान् पापनिश्चयः ।**
**आत्मनः संनिरोधेन संधिं तेनाभियोजयेत् ॥**

स चेत् दुष्टात्मा तर्हि संनिरोधेन कतिपयग्रामदानेनापि संधिमेव कुर्यादित्याह— य इति । अधर्मेति छेदः । अधर्मप्रधानो विजगीषुः अधर्मविजिगीषुः । नीटी.

**[4]अपास्य राजधानीं वा तरेदन्येन वाऽऽपदम् ।**
**तद्भावभावे द्रव्याणि जीवन् पुनरुपार्जयेत् ॥**

स चेत् दुष्टतरस्तदा किं कर्तव्यं तदाह— अपास्येति । तद्भावयुक्तः राजत्वगुणयुक्तश्चेत् । नीटी.

(१) भा. १२।१२९।३; भामु. १२।१३१।३ यात (जात).

(२) भा. १२।१२९।४; भाम. १२।१३१।४ चतुर्थचरणे (पूर्वमुक्तान् विमोचयेत्).

(३) भा. १२।१२९।५; भामु. १२।१३१।५ अधर्म (योऽधर्म) षुश्चे (षुः स्या) भियोज (पि रोच).

(४) भा. १२।१२९।६; भामु. १२।१३१।६ दन्येन वा (द्रव्येण चा) भावे (युक्तो).

**[1]यास्तु स्युः केवलत्यागाच्छक्यास्तरितुमापदः ।**
**कस्तत्राधिकमात्मानं संत्यजेदर्थधर्मवित् ॥**

दुष्टतमे तु राज्यधनं त्यक्त्वा आत्मानं रक्षेदित्याह— यास्त्विति । नीटी.

**[2]अवरोधाज्जुगुप्सेत का सपत्नधने दया ।**
**न त्वेवाऽऽत्मा प्रदातव्यः शक्ये सति कथंचन ॥**

अवरोधान् अन्तःपुराणि जुगुप्सेत पालयितुमिच्छेत् । तत्राशक्तौ तेषु शत्रुसाद्भूतेषु दया स्नेहो न कार्यः । तानुपेक्ष्यापि केवलमात्मानमेव रक्षेदित्यर्थः । नीटी.

आपदि संधिसंग्रामयोर्विवेकः

**युधिष्ठिर उवाच—**

**[3]आभ्यन्तरे प्रकुपिते बाह्ये चोपनिपीडिते ।**
**क्षीणे कोशे स्रुते मन्त्रे किं कार्यमवशिष्यते ॥**

आभ्यन्तरे अमात्यादौ । बाह्ये दुर्गराष्ट्रादौ । उपनिपीडिते आक्रान्ते । नीटी.

**भीष्म उवाच—**

**[4]क्षिप्रं वा संधिकामः स्यात्क्षिप्रं वा तीक्ष्णविक्रमः ।**
**पदापनयनं क्षिप्रमेतावत्सांपरायिकम् ॥**

धर्मिष्ठे बाह्ये क्षिप्रं संधिः, अधर्मिष्ठे तु तीक्ष्णः पराक्रमः कर्तव्यः । यदा त्वेवं तदा अपनयनं शत्रोः दूरीकरणं क्षिप्रमेव भवति । अथवा सांपरायिकं धर्मयुद्धेन मरणे परलोकहितं भवति । नीटी.

(१) भा. १२।१२९।७; भामु. १२।१३१।७ स्युः केवल (कोशबल).

(२) भा. १२।१२९।८; भामु. १२।१३१।८ धाज्जु (धान्जु).

(३) भा. १२।१२९।९ ; भामु. १२।१३१।९ स्रुते (श्रुते).

(४) भा. १२।१२९।१०; भामु. १२।१३१।१० पदा (तदा).

[१]अनुरक्तेन पुष्टेन हृष्टेन जगतीपते ।
अल्पेनापि हि सैन्येन महीं जयति पार्थिवः ॥

[२]हतो वा दिवमारोहेद्विजयी क्षितिमावसेत् ।
युद्धे तु संत्यजन् प्राणाञ् शक्रस्यैति सलोकताम् ॥

विक्रमे पक्षद्वयमपि संभावितमित्याह द्वाभ्याम्— अनुरक्तेनेति । नीटी.

[३]सर्वलोकागमं कृत्वा मृदुत्वं गन्तुमेव च ।
विश्वासाद्विनयं कुर्याद्व्यवस्येद्वाऽप्युपानहौ ॥

यस्मिन् काले मृदुत्वं गन्तुं युद्धपक्षं त्यक्तुं सर्वलोकागमं सर्वस्य लोकस्य प्रसिद्धमागमं शपथाद्युपायं छलं मा भूदिति बुद्ध्या कृत्वा विश्वासात् विश्वासं प्रापय्य विनयं कुर्यात् मृदुर्भवेत्, न तु युद्धमेव हठेन श्रयेत् । नीटी.

[४]अपक्रमितुमिच्छेद्वा यथाकामं तु सान्त्वयेत् ।
विलिङ्गमित्वा मित्रेण ततः स्वयमुपक्रमेत् ॥

यद्याभ्यन्तरप्रकोपात् युद्धं कर्तुमशक्यं बाह्यप्रकोपात् युद्धं कर्तुमशक्यं बाह्यप्रकोपात् साम चाशक्यं तदा साम्ना अपचिक्रमिषुः दुर्गादपक्रान्तुमिच्छुः स्यात् । अपक्रम्य कंचित् कालं देशं च विलङ्घयित्वा मन्त्रेण मन्त्रबलेन पुनः पृथ्वीं जेतुमुपक्रमेत् । नीटी.

---

(१) भा. १२।१२९।११ ; भामु. १२।१३१।११ पुष्टे (चेष्टे) पते (पतिः) पार्थिवः (भूमिपः).

(२) भा. १२।१२९।१२; भामु. १२।१३१।१२ द्विजयी (द्रुत्वा वा) तु (हि).

(३) भा. १२।१२९।१३; भामु. १२।१३१।१३ चतुर्थचरणे (द्विश्वसेचाप्युपायतः).

(४) भा. १२।१२९।१४; भामु. १२।१३१।१४ (अपचिक्रमिषुः क्षिप्रं साम्ना वा परिसान्त्वयन् । विलङ्घयित्वा मन्त्रेण ततः स्वयमुपक्रमेत् ॥).

कार्याकार्यनिश्चयाय दीर्घदर्शनं प्राप्तकालज्ञानं च इष्टम्

भीष्म उवाच—

[१]अनागतविधाता च प्रत्युत्पन्नमतिश्च यः ।
द्वावेव सुखमेधेते दीर्घसूत्री विनश्यति ॥

[२]अत्रैव चेदमव्यग्रः शृण्वाख्यानमनुत्तमम् ।
दीर्घसूत्रं समाश्रित्य कार्याकार्यविनिश्चये ॥

[३]नातिगाधे जलस्थाये सुहृदः *शकुलास्त्रयः ।
प्रभूतमत्स्ये कौन्तेय बभूवुः सहचारिणः ॥

[४]अत्रैकः प्राप्तकालज्ञो दीर्घदर्शी तथाऽपरः ।
दीर्घसूत्रश्च तत्रैकस्त्रयाणां जलचारिणाम् ॥

सहचारिणः, अन्येऽप्यासन्निति शेषः । नीटी.

[५]कदाचित्तज्जलस्थायं मत्स्यबन्धाः समन्ततः ।
निःस्रावयामासुरथो निम्नेषु विविधैर्मुखैः ॥

जलस्थायं क्षुद्रजलाशयं निम्नेषु प्रदेशेषु विविधमुखैः जलनिर्गमनमार्गैः निःस्रावयामासुः । नीटी.

[६]प्रक्षीयमाणं तं बुद्ध्वा जलस्थायं भयागमे ।
अब्रवीद्दीर्घदर्शी तु तावुभौ सुहृदौ तदा ॥

[७]इयमापत्समुत्पन्ना सर्वेषां सलिलौकसाम् ।
शीघ्रमन्यत्र गच्छामः पन्था यावन्न दुष्यति ॥

---

* शकुलो मत्स्यजातिविशेषः ।

(१) भामु. १२।१३७।१.

(२) भा. १२।१३५।१ ; भामु. १२।१३७।२ ग्रः शृण्वाख्यानमनु (ग्रं शृणुष्वाऽऽख्यानमु) दीर्घसूत्रं समा (दीर्घं सूत्रमुपा).

(३) भा. १२।१३५।२ ; भामु. १२।१३७।३ जलस्थाये (जलाधारे) शकुला (कुशला).

(४) भा. १२।१३५।३ ; भामु. १२।१३७।४ पूर्वार्धे (तत्रैको दीर्घकालज्ञ उत्पन्नप्रतिभोऽपरः ।) जल (सह).

(५) भा. १२।१३५।४ ; भामु. १२।१३७।५ तज्जल (तं जल).

(६) भा. १२।१३५।५ ; भामु. १२।१३७।६ बुध्वा (दृष्ट्वा).

(७) भा. १२।१३५।६; भामु. १२।१३७।७.

[1]अनागतमनर्थं हि सुनयैर्यः प्रबाधते ।
न स संशयमाप्नोति रोचतां वां व्रजामहे ॥
[2]दीर्घसूत्रस्तु यस्तत्र सोऽब्रवीत्सम्यगुच्यते ।
न तु कार्या त्वरा यावदिति मे निश्चिता मतिः॥
[3]अथ संप्रतिपत्तिज्ञः प्राब्रवीद्दीर्घदर्शिनम् ।
प्राप्ते काले न मे किंचिन्न्यायतः परिहास्यते ॥
[4]एवमुक्तो निराक्रामद् दीर्घदर्शी महामतिः।
जगाम स्रोतसैकेन गम्भीरसलिलाशयम् ॥

श्रुत्वा, तयोर्वचने इति शेषः । तेन रेचनमार्गेण । सलिलाशयं जलाशयान्तरम् । नीटी.

[5]ततः प्रस्रुततोयं तं समीक्ष्य सलिलाशयम् ।
बबन्धुर्विविधैर्योगैर्मत्स्यान्मत्स्योपजीविनः ॥

योगैः जलस्याऽऽकुलीकरणादिभिरुपायैः । नीटी.

[6]विलोड्यमाने तस्मिंस्तु स्रुततोये जलाशये ।
अगच्छद्ग्रहणं तत्र दीर्घसूत्रः सहापरैः ॥
[7]उद्दानं क्रियमाणं च मत्स्यानां वीक्ष्य रज्जुभिः ।
प्रविश्यान्तरमन्येषामग्रसत्प्रतिपत्तिमान् ॥

उद्दाने ग्रथने । एतेषां ग्रथितानां मत्स्यानाम् अन्तरं प्रविश्य स्थितः । नीटी.

[1]ग्रस्तमेव तदुद्दानं गृहीत्वाऽऽस्त तथैव सः ।
सर्वानेव तु तांस्तत्र ते विदुर्ग्रथिता इति ॥

तदुद्दानं ग्रथनसूत्रम् । गृह्यम् गृह्णातीति गृह्यम् । सूत्रं मुखेनावलम्ब्यावस्थितं तं मत्स्यं ते मत्स्यवेधाः गृहीत्वा सर्वानेव ग्रथितान् विदुः । स च मत्स्यः तथैव गृहीतवदेव, तत्राऽऽस्त इति शेषः । नीटी.

[2]ततः प्रक्षाल्यमानेषु मत्स्येषु विमले जले ।
त्यक्त्वा रज्जुं विमुक्तोऽभूच्छीघ्रं संप्रतिपत्तिमान् ॥
[3]दीर्घसूत्रस्तु मन्दात्मा हीनबुद्धिरचेतनः ।
मरणं प्राप्तवान्मूढो यथैवोपहतेन्द्रियः ॥
एवं प्राप्ततमं कालं यो मोहान्नावबुध्यते ।
स विनश्यति वै क्षिप्रं दीर्घसूत्रो यथा झषः ॥
आदौ न कुरुते श्रेयः कुशलोऽस्मीति यः पुमान् ।
स संशयमवाप्नोति यथा संप्रतिपत्तिमान् ॥
[4]अनागतविधानं तु यो नरः कुरुते क्षमम् ।
श्रेयः प्राप्नोति सोऽत्यर्थं दीर्घदर्शी यथा ह्यसौ ॥
[5]कलाः काष्ठा मुहूर्ताश्च दिना नाड्यः क्षणा लवाः ।
पक्षा मासाश्च ऋतवस्तुल्याः संवत्सराणि च ॥

---

(१) भा. १२।१३५।७; भाम. १२।१३७।८ धते (धयेत्) न स (स न) वां (भो).

(२) भा. १२।१३५।८; भामु. १२।१३७।९ याव (ताव).

(३) भा. १२।१३५।९; भामु. १२।१३७।१०.

(४) भा. १२।१३५।१०; भामु. १२।१३७।११ एवमुक्तो (एवं श्रुत्वा) क्रामद् (क्रम्य) सैकेन (सा तेन) रस (रं स).

(५) भा. १२।१३५।११; भामु. १२।१३७।१२ स्रुत (स्रुत) समीक्ष्य सलिला (प्रसमीक्ष्य जला).

(६) भा. १२।१३५।१२; भामु. १२।१३७।१३ ग्रहणं (बन्धनं).

(७) भा. १२।१३५।१३; भामु. १२।१३७।१४ उद्दानं (उद्दाने) माणं च (माणे तु) वीक्ष्य (तत्र) मन्येषामग्रसत्प्र (मेतेषां स्थितः संप्र).

(१) भा. १२।१३५।१४; भामु. १२।१३७।१५ पूर्वार्धे (गृह्यमेव तदुद्दानं गृहीत्वा तं तथैव सः ।) तु (च) ता इति (तानिति).

(२) भा. १२।१३५।१५; भामु. १२।१३७।१६ विमले (विपुले) त्यक्त्वा (मुक्त्वा) विमुक्तोऽभूच्छी (प्रमुक्तोऽसौ शी).

(३) भा. १२।१३५।१६–१८; भामु. १२।१३७। १७–१९.

(४) भा. १२।१३५।१९; भामु. १२।१३७।२० (अनागतविधाता च प्रत्युत्पन्नमतिश्च यः । द्वावेव सुखमेधेते दीर्घसूत्रो विनश्यति ॥).

(५) भा. १२।१३५।२०; भामु. १२।१३७।२१ (काष्ठा कला मुहूर्ताश्च दिवा रात्रिस्तथा लवाः । मासाः पक्षाः षड्ऋतवः कल्पः संवत्सरास्तथा ॥).

[1]पृथिवी देश इत्युक्तः कालः स च न दृश्यते।
अभिप्रेतार्थसिद्ध्यर्थं न्यायतो यच्च तत्तथा॥

कालस्य देशस्य च सूक्ष्मतामवहितो जानीयात् इति श्लोकद्वयार्थः। नीटी.

[2]एतौ धर्मार्थशास्त्रेषु मोक्षशास्त्रेषु चर्षिभिः।
प्रधानाविति निर्दिष्टौ कामेशाभिमतौ नृणाम्॥

एतौ दीर्घदर्शिसंप्रतिपत्तिमन्तौ। नीटी.

[3]परीक्ष्यकारी युक्तस्तु सम्यक्समुपपादयेत्।
देशकालावभिप्रेतौ ताभ्यां फलमवाप्नुयात्॥

ताभ्यां पञ्चमी। तदपेक्षयाऽपि परीक्ष्यकारी युक्तश्च विशिष्ट इत्यर्थः। नीटी.

**संधिविग्रहनीतिः मार्जारमूषकाख्यानोपदिष्टा**
**यथा–** शत्रुभिर्ग्रस्तेन बलवता अमित्रेण सह
दुर्बलेनापि संधिर्विधेयः यावदापत्कालः,
निर्गमभयात् प्रशान्तादपि बलवतः
अमित्रात् भेतव्यम्, यथाकालं
संधिः यथाकालं विग्रहश्च
युक्तः

**युधिष्ठिर उवाच–**

[4]सर्वत्र बुद्धिः कथिता श्रेष्ठा ते भरतर्षभ।
अनागता तथोत्पन्ना दीर्घसूत्रा विनाशिनी॥
[5]तदिच्छामि परां बुद्धिं श्रोतुं भरतसत्तम।
यथा राजन्न मुह्येत शत्रुभिः परिवारितः॥

(१) भा. १२।१३५।२१; भामु. १२।१३७।२२ न्यायतो (ध्यायते).

(२) भा. १२।१३५।२२; भामु. १२।१३७।२३ कामेशा (कामे चा).

(३) भा. १२।१३५।२३; भामु. १२।१३७।२४ स्तु सम्यक्समुप (श्च स सम्यगुप).

(४) भा. १२।१३६।१; भामु. १२।१३८।१.

(५) भा. १२।१३६।२; भामु. १२।१३८।२ पूर्वार्धे (तदिच्छामि तदा श्रोतुं बुद्धिं ते भरतर्षभ।) राजन्न (राजा न).

[1]धर्मार्थकुशल प्राज्ञ सर्वशास्त्रविशारद।
पृच्छामि त्वा कुरुश्रेष्ठ तन्मे व्याख्यातुमर्हसि॥

[2]शत्रुभिर्बहुभिर्ग्रस्तो यथा वर्तेत पार्थिवः।
एतदिच्छाम्यहं श्रोतुं सर्वमेव यथाविधि॥

विषमस्थं हि राजानं शत्रवः परिपन्थिनः।
बहवोऽप्येकमुद्धर्तुं यतन्ते पूर्वतापिताः॥

[3]सर्वतः प्रार्थ्यमानेन दुर्बलेन महाबलैः।
एकेनैवासहायेन शक्यं स्थातुं कथं भवेत्॥

उद्धर्तुम् उन्मूलयितुम्। सर्वत्र सर्वदिक्स्थैः प्रार्थ्यमानेन, ग्रसितुमिति शेषः। नीटी.

[4]कथं मित्रमरिं चैव विन्देत भरतर्षभ।
चेष्टितव्यं कथं चात्र शत्रोर्मित्रस्य चान्तरे॥

[5]प्रज्ञातलक्षणे राजन्नमित्रे मित्रतां गते।
कथं नु पुरुषः कुर्यात्किंवा कृत्वा सुखी भवेत्॥
[6]विग्रहं केन वा कुर्यात्संधिं वा केन योजयेत्।
कथं वा शत्रुमध्यस्थो वर्तेताबलवानिति॥

प्राकृतकृत्रिममित्रयोर्मध्ये केन संधिः कर्तव्यः, केन वा वैरम्। नीटी.

(१) भा. १२।१३६।३; भाम. १२।१३८।३ पूर्वार्धे (धर्मार्थकुशलो राजा धर्मशास्त्रविशारदः।) त्वा (त्वां).

(२) भा. १२।१३६।४–५; भामु. १२।१३८।४–५.

(३) भा. १२।१३६।६; भामु. १२।१३८।६ सर्वतः (सर्वत्र) कथं भवेत् (भवेत् कथम्).

(४) भा. १२।१३६।७; भामु. १२।१३८।७ चैव विन्देत (चापि विन्दते).

(५) भा. १२।१३६।८; भामु. १२।१३८।८ राजन्नमित्रे (मित्रे तथैवा) नु (तु) त्किं वा कृत्वा (त्कृत्वा किं वा).

(६) भा. १२।१३६।९; भामु. १२।१३८।९ ताव (त व) निति (नपि).

[1]एतद्धि सर्वकृत्यानां परं कृत्यं परंतप।
नैतस्य कश्चिद्वक्ताऽस्ति श्रोता चापि सुदुर्लभः॥

[2]ऋते शान्तनवाद् भीष्मात्सत्यसंधाज्जितेन्द्रियात्॥
तदन्विष्य महाबाहो सर्वमेतद्वदस्व मे॥

भीष्म उवाच—

[3]त्वद्युक्तोऽयमनुप्रश्नो युधिष्ठिर गुणोदयः।
शृणु मे पुत्र कात्स्न्र्येन गुह्यमापत्सु भारत॥

[4]अमित्रो मित्रतां याति मित्रं चापि प्रदुष्यति।
सामर्थ्ययोगात्कार्याणां तद्गत्या हि सदा गतिः॥

[5]तस्माद्विश्वसितव्यं च विग्रहं च समाचरेत्।
देशं कालं च विज्ञाय कार्याकार्यविनिश्चये॥

[6]संधातव्यं बुधैर्नित्यं व्यवस्यं च हितार्थिभिः।
अमित्रैरपि संधेयं प्राणा रक्ष्याश्च भारत॥

व्यवस्य निश्चित्य। नीटी.

[7]यो ह्यमित्रैर्नरो नित्यं न संदध्यादपण्डितः।
न सोऽर्थमाप्नुयात्किंचित्फलान्यपि च भारत॥

(१) भा. १२।१३६।१० ; भामु. १२।१३८।१० चापि (वाऽपि).

(२) भा. १२।१३६।११ ; भामु. १२।१३८।११ बाहो (भाग) द्वदस्व (द्ब्रवीहि).

(३) भा. १२।१३६।१२ ; भामु. १२।१३८।१२ गुणो (सुखो).

(४) भा. १२।१३६।१३ ; भामु. १२।१३८।१३ तद्गत्या हि (अनित्या वै).

(५) भा. १२।१३६।१४ ; भामु. १२।१३८।१४.

(६) भा. १२।१३६।१५ ; भामु. १२।१३८।१५ वस्यं (वस्य) क्ष्याश्च (क्ष्या हि).

(७) भा. १२।१३६।१६ ; भामु. १२।१३८।१६ र्थमाप्नु (र्थं प्राप्नु).

[1]यस्त्वमित्रेण संधत्ते मित्रेण च विरुध्यते।
अर्थयुक्तिं समालोक्य सुमहद्विन्दते फलम्॥

[2]अत्राप्युदाहरन्तीममितिहासं पुरातनम्।
मार्जारस्य च संवादं न्यग्रोधे मूषकस्य च॥

अत्र पूर्वश्लोकोक्तेऽर्थे। नीटी.

[3]वने महति कस्मिंश्चिन्न्यग्रोधः सुमहानभूत्।
लताजालपरिच्छन्नो नानाद्विजगणायुतः॥

[4]स्कन्धवान् मेघसंकाशः शीतच्छायो मनोरमः।
वैरन्त्यमभितो जातस्तरुर्व्यालमृगाकुलः॥

[5]तस्य मूलं समाश्रित्य कृत्वा शतमुखं बिलम्।
वसति स्म महाप्राज्ञः पलितो नाम मूषकः॥

[6]शाखाश्च तस्य संश्रित्य वसति स्म सुखं पुरः।
लोमशो नाम मार्जारः पक्षिसत्त्वावसादकः॥

[7]तत्र चाऽऽगत्य चाण्डालो वैरन्त्यकृतकेतनः।
अयोजयत्तमुन्माथं नित्यमस्तं गते रवौ॥

उन्माथं कूटयन्त्रं पशुमृगपक्षिबन्धनम्। नीटी.

[8]तत्र स्नायुमयान् पाशान् यथावत्संनिधाय सः।
गृहं गत्वा सुखं शेते प्रभातामेति शर्वरीम्॥

(१) भा. १२।१३६।१७ ; भामु. १२।१३८।१७ धत्ते (दध्यात्).

(२) भा. १२।१३६।१८ ; भामु. १२।१३८।१८ अस्मिन्नध्याये सर्वत्र मूषकशब्दस्थाने मूषिकशब्दं पठति.

(३) भा. १२।१३६।१९ ; भामु. १२।१३८।१९ च्छन्नो (च्छिन्नो) युतः (न्वितः).

(४) भा. १२।१३६।२० ; भामु. १२।१३८।२० वैरन्त्य (अरण्य) तस्तरुर्व्या (तः स तु व्या).

(५) भा. १२।१३६।२१ ; भामु. १२।१३८।२१.

(६) भा. १२।१३६।२२ ; भामु. १२।१३८।२२ शाखाश्च (शाखां) सं (समा) पुरः (पुरा) सत्त्वावसादकः (संघातखादकः).

(७) भा. १२।१३६।२३ ; भामु. १२।१३८।२३ वैरन्त्य (ह्यरण्ये) अयोजयत्तमु (प्रयोजयति चो).

(८) भा. १२।१३६।२४ ; भामु. १२।१३८।२४ निधा (विधा).

[1]तत्र स्म नित्यं बध्यन्ते नक्तं बहुविधा मृगाः ।
कदाचित्तत्र मार्जारस्त्वप्रमत्तोऽप्यबध्यत ॥

[2]तस्मिन् बद्धे महाप्राज्ञः शत्रौ नित्याततायिनि ।
तं कालं पलितो ज्ञात्वा विचचार सुनिर्भयः ॥

पलितः मूषिकः । नीटी.

[3]तेनानुचरता तस्मिन् वने विश्वस्तचारिणा ।
भक्ष्यं विचरमाणेन नचिराद् दृष्टमामिषम् ॥

[4]स तमुन्माथमारुह्य तदामिषमभक्षयत् ।
तस्योपरि सपत्नस्य बद्धस्य मनसा हसन् ॥

तदामिषं तस्योन्माथे धृतमामिषम् । सपत्नस्य सपत्नं बद्धमनादृत्य । नीटी.

आमिषे तु प्रसक्तः स कदाचिदवलोकयन् ।
अपश्यदपरं घोरमात्मनः शत्रुमागतम् ॥

[5]शरप्रसूनसंकाशं महीविवरशायिनम् ।
नकुलं हरिकं नाम चपलं ताम्रलोचनम् ॥

शरः तृणविशेषः, तत्प्रसूनं पुष्पम् । नीटी.

[6]तेन मूषकगन्धेन त्वरमाणमुपागतम् ।
भक्षार्थं लेलिहद्वक्त्रं भूमावूर्ध्वमुख स्थितम् ॥

[1]शाखागतमरिं चान्यदपश्यत्कोटरालयम् ।
उलूकं चन्द्रकं नाम तीक्ष्णतण्ड क्षपाचरम् ॥

[2]गतस्य विषयं तस्य नकुलोलूकयोस्तदा ।
अथास्याऽऽसीदियं चिन्ता तत्प्राप्य सुमहद् भयम् ॥

[3]आपद्यस्यां सुकष्टायां मरणे समुपस्थिते ।
समन्ताद् भय उत्पन्ने कथं कार्यं हितैषिणा ॥

[4]स तथा सर्वतो रुद्धः सर्वत्र समदर्शनः ।
अभवद् भयसंतप्तश्चक्रे चेमां परां गतिम् ॥

[5]आपद्विनाशभूयिष्ठा शतैकीयं च जीवितम् ।
समन्तसंशया चेयमस्मानापदुपस्थिता ॥

गतैः आपद्गतैः जीवितमापद्विनाशेन भूयिष्ठं प्रशस्तं कार्यम् । नीटी.

[6]गतं हि सहसा भूमिं नकुलो मां समाप्नुयात् ।
उलूकश्चेह तिष्ठन्तं मार्जारः पाशसंक्षयात् ॥

---

(१) भा. १२।१३६।२५ ; भामु. १२।१३८।२५ त्तत्र (दत्र) त्तोऽप्य (त्तो व्य).

(२) भा. १२।१३६।२६ ; भामु. १२।१३८।२६ प्राज्ञः (प्राणे) विच (प्रच).

(३) भा. १२।१३६।२७ ; भामु. १२।१३८।२७ उत्तरार्धे (भक्ष्यं मृगयमाणेन चिराद्दृष्टं तदामिषम् ॥).

(४) भा. १२।१३६।२८–२९ ; भामु. १२।१३८। २८–३०.

(५) भा. १२।१३६।३० ; भामु. १२।१३८। ३०–३१ हरिकं (हरिणं).

(६) भा. १२।१३६।३१ ; भामु. १२।१३८। ३१–३२ तृतीयचरणे (भक्ष्यार्थं संलिहानं तं).

(१) भा. १२।१३६।३२ ; भामु. १२।१३८। ३२–३३ चान्यद (चान्यम).

(२) भा. १२।१३६।३३ ; भामु. १२।१३८।३३ –३४ तस्य (तत्र) स्तदा (स्तथा).

(३) भा. १२।१३६।३४ ; भामु. १२।१३८। ३४–३५ समु (प्रत्यु).

(४) भा. १२।१३६।३५ ; भामु. १२।१३८। ३५–३६ सम (भय) चेमां परां गतिम् (च परमां मतिम्).

(५) भा. १२।१३६।३६ ; भामु. १२।१३८। ३६–३७ (आपद्विनाशभूयिष्ठं गतैः कार्यं हि जीवितम् । समन्तात् संशयात् सैषा तस्मादापदुपस्थिता ॥).

(६) भा. १२।१३६।३७ ; भामु. १२।१३८। ३७–३८ हि (मां) मां समाप्नुयात् (भक्षयिष्यति).

[1]न त्वेवास्मद्विधः प्राज्ञः संमोहं गन्तुमर्हति ।
करिष्ये जीविते यत्नं यावदुच्छ्वसनिग्रहम् ॥

[2]न हि बुद्ध्याऽन्विताः प्राज्ञा नीतिशास्त्र-विशारदाः ।
संभ्रमन्त्यापदं प्राप्य महतोऽर्थानवाप्य च ॥

[3]न त्वन्यामिह मार्जाराद्गतिं पश्यामि सांप्रतम् ।
विषमस्थो ह्ययं जन्तुः कृत्यं चास्य महन्मया ॥

[4]जीवितार्थी कथं त्वद्य प्रार्थितः शत्रुभिस्त्रिभिः ।
तस्मादिममहं शत्रुं मार्जारं संश्रयामि वै ॥

[5]क्षत्रविद्यां समाश्रित्य हितमस्योपधारये ।
येनेमं शत्रुसंघातं मतिपूर्वेण वञ्चये ॥

[6]अयमत्यन्तशत्रुर्मे वैषम्यं परमं गतः ।
मूढो ग्राहयितुं स्वार्थे संगत्या यदि शक्यते ॥

[7]कदाचिद् व्यसनं प्राप्य संधिं कुर्यान्मया सह ।
बलिना संनिविष्टस्य शत्रोरपि परिग्रहः ।
कार्य इत्याहुराचार्या विषमे जीवितार्थिना ॥

[1]श्रेयान् हि पण्डितः शत्रुर्न च मित्रमपण्डितम् ।
मम ह्यमित्रे मार्जारे जीवितं संप्रतिष्ठितम् ॥

[2]हन्तैनं संप्रवक्ष्यामि हेतुमात्माभिरक्षणे ।
अपीदानीमयं शत्रुः संगत्या पण्डितो भवेत् ॥

[3]एवं विचिन्तयामास मूषिकः शत्रुचेष्टितम् ॥

[4]ततोऽर्थगतितत्त्वज्ञः संधिविग्रहकालवित् ।
सान्त्वपूर्वमिदं वाक्यं मार्जारं मूषकोऽब्रवीत् ॥

[5]सौहृदेनाभिभाषे त्वा कच्चिन्मार्जार जीवसि ।
जीवितं हि तवेच्छामि श्रेयः साधारणं हि नौ ॥

[6]न ते सौम्य विषत्तव्यं जीविष्यसि यथा पुरा ।
अहं त्वामुद्धरिष्यामि प्राणाञ् जह्यां हि ते कृते ॥

[7]अस्ति कश्चिदुपायोऽत्र पुष्कलः प्रतिभाति-माम् ।
येन शक्यस्त्वया मोक्षः प्राप्तुं श्रेयो यथा मया ॥

---

(१) भा. १२।१३६।३८ ; भामु. १२।१३८।३८–३९ दुच्छ्वासनिग्रहम् ( युक्त्या प्रतिग्रहात् ).

(२) भा. १२।१३६।३९ ; भामु. १२।१३८।४० ( न हि बुध्याऽन्वितः प्राज्ञो नीतिशास्त्रविशारदः । निमज्जत्यापदं प्राप्य महतीं दारुणामपि ॥ ).

(३) भा. १२।१३६।४० ; भामु. १२।१३८।४१ जन्तुः ( शत्रुः ).

(४) भा. १२।१३६।४१ ; भामु. १२।१३८।४२ प्रार्थितः शत्रुभि ( शत्रुभिः प्रार्थित ) दिम ( देन ).

(५) भा. १२।१३६।४२ ; भामु. १२।१३८।४३ क्षत्रविद्यां ( नीतिशास्त्रं ) धारये ( वर्णये ).

(६) भा. १२।१३६।४३ ; भामु. १२।१३८।४४.

(७) भा. १२।१३६।४४ ; भामु. १२।१३८।४५–४६ विष्ट ( कृष्ट ).

(१) भा. १२।१३६।४५ ; भामु. १२।१३८।४६–४७ श्रेयान् ( श्रेष्ठो ) पण्डितम् ( पण्डितः ) ह्यमित्रे ( त्वमित्रे ).

(२) भा. १२।१३६।४६ ; भामु. १२।१३८।४७–४८ हन्तैनं ( हन्तास्मै ).

(३) भामु. १२।१३८।४८.

(४) भा. १२।१३६।४७ ; भामु. १२।१३८।४९.

(५) भा. १२।१३६।४८ ; भामु. १२।१३८।५० त्वा ( त्वां ).

(६) भा. १२।१३६।४९ ; भामु. १२।१३८।५१ विषत्तव्यं ( भयं कार्यं ) यथा पुरा ( यथासुखम् ) चतुर्थचरणे ( यदि मां न जिघांससि ).

(७) भा. १२।१३६।५० ; भामु. १२।१३८।५२ पुष्कलः ( दुष्करः ) माम् ( मे ) श्रेयो यथा ( श्रेयस्तथा ).

[1]मया ह्युपायो दृष्टोऽयं विचार्य मतिमात्मनः।
आत्मार्थे च त्वदर्थे च श्रेयः साधारणं हि नौ॥
[2]इदं हि नकुलोलूकं पापबुद्ध्यभितः स्थितम्।
न धर्षयति मार्जार तेन मे स्वस्ति सांप्रतम्॥
[3]कूजंश्चपलनेत्रोऽयं कौशिको मां निरीक्षते।
नगशाखाग्रहस्तिष्ठंस्तस्याहं भृशमुद्विजे॥
[4]सतां साप्तपदं सख्यं सवासो मेऽसि पण्डितः।
सांवास्यकं करिष्यामि नास्ति ते मृत्युतो भयम्॥
[5]न हि शक्नोषि मार्जार पाशं छेत्तुं विना मया।
अहं छेत्स्यामि ते पाशं यदि मां त्वं न हिंससि॥
[6]त्वमाश्रितो नगस्याग्रं मूलं त्वहमुपाश्रितः।
चिरोषिताविहाऽऽवां वै वृक्षेऽस्मिन् विदितं हि ते॥
[7]यस्मिन्नाश्वसते कश्चिद्यश्च नाऽऽश्वसते क्वचित्।
न तौ धीराः प्रशंसन्ति नित्यमुद्विग्नचेतसौ॥

(१) भा. १२।१३६।५१; भामु. १२।१३८।५३ ह्यु (ऽप्यु).
(२) भा. १२।१३६।५२; भामु. १२।१३८।५४ बुद्ध्यभितः (बुद्ध्याऽभितं).
(३) भा. १२।१३६।५३; भामु. १२।१३८।५५ ग्रहस्तिष्ठं (ग्रगः पाप).
(४) भा. १२।१३६।५४; भामु. १२।१३८।५६ सख्यं सवासो (मैत्रं स सखा) मृत्युतो भयम् (भयमद्य वै).
(५) भा. १२।१३६।५५; भामु. १२।१३८।५७ शक्नोषि (शक्तोऽसि) विना मया (मया विना) ते पाशं (पाशांस्ते).
(६) भा. १२।१३६।५६; भामु. १२।१३८।५८ नग (द्रुम) विहाऽऽवां वै (वुभावावां) हि (च).
(७) भा. १२।१३६।५७; भामु. १२।१३८।५९ न्नाश्व (न्नाश्वा) नाऽऽश्वसते (नाऽऽश्वसिति) चेतसौ (मानसौ).

[1]तस्माद्विवर्धतां प्रीतिः सत्या संगतिरस्तु नौ।
कालातीतमपार्थं हि न प्रशंसन्ति पण्डिताः॥
[2]अर्थयुक्तिमिमां तावद्यथाभूतां निशामय।
तव जीवितमिच्छामि त्वं ममेच्छसि जीवितम्॥
[3]कश्चित्तरति काष्ठेन सुगम्भीरां महानदीम्।
स तारयति तत्काष्ठं स च काष्ठेन तार्यते॥
[4]ईदृशो नौ समायोगो भविष्यति सुनिस्तरः।
अहं त्वां तारयिष्यामि त्वं च मां तारयिष्यसि॥
[5]एवमुक्त्वा तु पलितस्तदर्थमुभयोर्हितम्।
हेतुमद् ग्रहणीयं च कालाकाङ्क्षी व्यपैक्षत॥
[6]अथ सुव्याहृतं तस्य श्रुत्वा शत्रुर्विचक्षणः।
हेतुमद् ग्रहणीयार्थं मार्जारो वाक्यमब्रवीत्॥
[7]बुद्धिमान् वाक्यसंपन्नस्तद्वाक्यमनुवर्णयन्।
तामवस्थामवेक्ष्यात्मां साम्नैव प्रत्यपूजयत्॥
[8]ततस्तीक्ष्णाग्रदशनो वैडूर्यमणिलोचनः।
मूषकं मन्दमुद्वीक्ष्य मार्जारो लोमशोऽब्रवीत्॥

(१) भा. १२।१३६।५८; भामु. १२।१३८।६० सत्या संगतिरस्तु (नित्यं संगतमस्तु) मपार्थं हि (मिहार्थं तु).
(२) भा. १२।१३६।५९; भामु. १२।१३८।६१ तावद्य (तत्र य).
(३) भा. १२।१३६।६०; भामु. १२।१३८।६२.
(४) भा. १२।१३६।६१; भामु. १२।१३८।६३ निस्त (विस्त) त्वं च मां (मां च त्वं).
(५) भा. १२।१३६।६२; भामु. १२।१३८।६४ दर्थं (मर्थं) काङ्क्षी व्यपैक्षत (पेक्षी न्यवेक्ष्य च).
(६) भा. १२।१३६।६३; भामु. १२।१३८।६५ तस्य श्रुत्वा शत्रु (श्रुत्वा तस्य शत्रो).
(७) भा. १२।१३६।६४; भामु. १२।१३८।६६ तृतीयचरणे (स्वामवस्थां समीक्ष्याथ).
(८) भा. १२।१३६।६५; भामु. १२।१३८।६७ वैडूर्यमणि (मणिवैडूर्य).

[1]नन्दामि सौम्य भद्रं ते यो मां जीवन्तमिच्छसि ।
श्रेयश्च यदि जानीषे क्रियतां मा विचारय ॥

[2]अहं हि दृढमापन्नस्त्वमापन्नतरो मया ।
द्वयोरापन्नयोः संधिः क्रियतां मा विचारय ॥

[3]विधत्स्व प्राप्तकालं यत्कार्यं सिध्यतु चाऽऽवयोः ।
मयि कृच्छ्राद्विनिर्मुक्ते न विनङ्क्ष्यति ते कृतम् ॥

[4]न्यस्तमानोऽस्मि भक्तोऽस्मि शिष्यस्त्वद्धितकृत्तथा ।
निदेशवशवर्ती च भवन्तं शरणं गतः ॥

[5]इत्येवमुक्तः पलितो मार्जारं वशमागतम् ।
वाक्यं हितमुवाचेदमभिनीतार्थमर्थवत् ॥

[6]उदारं यद् भवानाह नैतच्चित्रं भवद्विधे ।
विदितो यस्तु मार्गो मे हितार्थं शृणु तं मम ॥

[7]अहं त्वाऽनुप्रवेक्ष्यामि नकुलान्मे महद्भयम् ।
त्रायस्व मां मा वधीश्च शक्तोऽस्मि तव मोक्षणे ॥

(१) भा. १२।१३६।६६ ; भामु. १२।१३८।६८ जीवन्त (जीवितु).

(२) भा. १२।१३६।६७ ; भामु. १२।१३८।६९ दृढ (भृश) मया (मम) विचारय (चिराय च).

(३) भा. १२।१३६।६८ ; भामु. १२।१३८।७० धत्स्व (धास्ये) सिध्यतु चाऽऽवयोः (सिद्धिकरं विभो).

(४) भा. १२।१३६।६९ ; भामु. १२।१३८।७१.

(५) भा. १२।१३६।७० ; भामु. १२।१३८।७२ वत् (वित्).

(६) भा. १२।१३६।७१ ; भामु. १२।१३८।७३ विदितो (विहितो).

(७) भा. १२।१३६।७२ ; भामु. १२।१३८।७४ मां मा वधीश्च (भो मा वधीस्त्वं) मोक्षणे (रक्षणे).

[1]उलूकाच्चैव मां रक्ष क्षुद्रः प्रार्थयते हि माम् ।
अहं छेत्स्यामि ते पाशान् सखे सत्येन ते शपे ॥

तद्वचः संगतं श्रुत्वा लोमशो युक्तमर्थवत् ।
हर्षादुद्वीक्ष्य पलितं स्वागतेनाभ्यपूजयत् ॥

[2]स तं संपूज्य पलितं मार्जारः सौहृदे स्थितः ।
सुविचिन्त्याब्रवीद्धीरः प्रीतस्त्वरित एव हि ॥

[3]क्षिप्रमागच्छ भद्रं ते त्वं मे प्राणसमः सखा ।
तव प्राज्ञ प्रसादाद्धि क्षिप्रं प्राप्स्यामि जीवितम् ॥

[4]यद्यदेवंगतेनाद्य शक्यं कर्तुं मया तव ।
तदाज्ञापय कर्ताऽहं संधिरेवास्तु नौ सखे ॥

[5]अस्मात्ते संशयान्मुक्तः समित्रगणबान्धवः ।
सर्वकार्याणि कर्ताऽहं प्रियाणि च हितानि च ॥

[6]मुक्तश्च व्यसनादस्मात्सौम्याहमपि नाम ते ।
प्रीतिमुत्पादयेयं च प्रतिकर्तुं च शक्नुयाम् ॥

[7]प्रत्युपकुर्वन् बह्वपि
न भाति पूर्वोपकारिणा तुल्यः ।
एकः करोति हि कृते
निष्कारणमेव कुरुतेऽन्यः ॥

(१) भा. १२।१३६।७३–७४ ; भामु. १२।१३८।७५–७६.

(२) भा. १२।१३६।७५ ; भामु. १२।१३८।७७ स तं संपूज्य (तं संपूज्याथ) सुवि (स वि).

(३) भा. १२।१३६।७६ ; भामु. १२।१३८।७८ क्षिप्र (शीघ्र) क्षिप्रं (प्रायः).

(४) भा. १२।१३६।७७ ; भामु. १२।१३८।७९ नाद्य (नाथ) ऽहं (ऽस्मि).

(५) भा. १२।१३६।७८ ; भामु. १२।१३८।८० त्ते संशया (त्तु संकटा).

(६) भा. १२।१३६।७९ ; भामु. १२।१३८।८१ चतुर्थचरणे (प्रीतिकर्तुश्च सत्क्रियाम्).

(७) भामु. १२।१३८।८२.

भीष्म उवाच–
[1]ग्राहयित्वा तु तं स्वार्थं मार्जारं मूषकस्तदा ।
प्रविवेश सुविस्रब्धः सम्यगर्थाश्चचार ह ॥
[2]एवमाश्वासितो विद्वान् मार्जारेण स मूषकः ।
मार्जारोरसि विस्रब्धः सुष्वाप पितृमातृवत् ॥
[3]लीनं तु तस्य गात्रेषु मार्जारस्याथ मूषकम् ।
तौ दृष्ट्वा नकुलोलूकौ निराशौ जग्मतुर्गृहान् ॥
[4]तथैव तौ सुसंत्रस्तौ दृढमागततन्द्रितौ ।
दृष्ट्वा तयोः परां प्रीतिं विस्मयं परमं गतौ ॥
बलिनौ मतिमन्तौ च सुवृत्तौ चाप्युपासितौ ।
अशक्तौ तु नयात्तस्मात् संप्रधर्षयितुं बलात् ॥
कार्यार्थे कृतसंधी तौ दृष्ट्वा मार्जारमूषिकौ ।
उलूकनकुलौ तूर्णं जग्मतस्तौ स्वमालयम् ॥
[5]लीनस्तु तस्य गात्रेषु पलितो देशकालवित् ।
चिच्छेद पाशान्नृपते कालाकाङ्क्षी शनैः शनैः ॥
[6]अथ बन्धपरिक्लिष्टो मार्जारो वीक्ष्य मूषकम् ।
छिन्दन्तं वै तदा पाशानत्वरन्तं त्वरान्वितः ॥
[7]तमत्वरन्तं पलितं पाशानां छेदने तदा ।
संचोदयितुमारेभे मार्जारो मूषकं तदा ॥

(१) भा. १२।१३६।८० (भीष्म उवाच० ); भामु. १२।१३८।८३ स्तदा (स्तथा) उत्तरार्धे (प्रविवेश तु विश्रम्य क्रोडमस्य कृतागसः ॥ ).

(२) भा. १२।१३६।८१ ; भामु. १२।१३८।८४.

(३) भा. १२।१३६।८२ ; भामु. १२।१३८।८५ स्याथ (स च) तौ दृष्ट्वा (दृष्ट्वा तौ) जग्मतुर्गृहान् (प्रत्यपद्यताम्).

(४) भामु. १२।१३८।८६–८८.

(५) भा. १२।१३६।८३ ; भामु. १२।१३८।८९ लीनस्तु (लीनः स) काङ्क्षी (पेक्षी).

(६) भा. १२।१३६।८४ ; भामु. १२।१३८।९०.

(७) भा. १२।१३६।८५ ; भामु. १२।१३८।९१ ने तदा (ने तथा).

[1]किं सौम्य नाभित्वरसे किं कृतार्थोऽवमन्यसे ।
छिन्धि पाशानमित्रघ्न पुरा श्वपच एति सः ॥
[2]इत्युक्तस्त्वरता तेन मतिमान् पलितोऽब्रवीत् ।
मार्जारमकृतप्रज्ञं वश्यमात्महितं वचः ॥
[3]तूष्णीं भव न ते सौम्य त्वरा कार्या न संभ्रमः ।
वयमेवात्र कालज्ञा न कालः परिहास्यते ॥
[4]अकाले कृत्यमारब्धं कर्तुं नार्थाय कल्पते ।
तदेव काल आरब्धं महतेऽर्थाय कल्पते ॥
[5]अकालविप्रमुक्तान्मे त्वत्त एव भयं भवेत् ।
तस्मात्कालं प्रतीक्षस्व किमिति त्वरसे सखे ॥
[6]यावत्पश्यामि चण्डालमायान्तं शस्त्रपाणिनम् ।
ततश्छेत्स्यामि ते पाशं प्राप्ते साधारणे भये ॥
[7]तस्मिन् काले प्रमुक्तस्त्वं तरुमेवाधिरोहसि ।
न हि ते जीवितादन्यत्किंचित्कृत्यं भविष्यति ॥
[8]ततो भवत्यतिक्रान्ते त्रस्ते भीते च लोमश ।
अहं बिलं प्रवेक्ष्यामि भवाञ् शाखां गमिष्यति ॥

(१) भा. १२।१३६।८६ ; भामु. १२।१३८।९२ नाभि (नाति) सः (च).

(२) भा. १२।१३६।८७ ; भामु. १२।१३८।९३ वश्य (पथ्य).

(३) भा. १२।१३६।८८ ; भामु. १२।१३८।९४.

(४) भा. १२।१३६।८९ ; भामु. १२।१३८।९५ कर्तुं (कर्तुः).

(५) भा. १२।१३६।९० ; भामु. १२।१३८।९६ काल (काले).

(६) भा. १२।१३६।९१ ; भामु. १२।१३८।९७ यावत्प (यदा प) चण्डाल (चाण्डाल) पाशं (पाशान्).

(७) भा. १२।१३६।९२ ; भामु. १२।१३८।९८ रोहसि (रोक्ष्यसे).

(८) भा. १२।१३६।९३ ; भामु. १२।१३८।९९ ष्यति (ष्यप) गमि (भजि).

¹एवमुक्तस्तु मार्जारो मूषकेणाऽऽत्मनो हितम् ।
वचनं वाक्यतत्वज्ञो जीवितार्थी महामतिः ॥

²अथाऽऽत्मकृत्यत्वरितः सम्यक् प्रश्रयमाचरन् ।
उवाच लोमशो वाक्यं मूषकं चिरकारिणम् ॥

³न ह्येवं मित्रकार्याणि प्रीत्या कुर्वन्ति साधवः ।
यथा त्वं मोक्षितः कृच्छ्रात् त्वरमाणेन वै मया ॥

⁴तथैव त्वरमाणेन त्वया कार्यं हितं मम ।
यत्नं कुरु महाप्राज्ञ यथा स्वस्त्यावयोर्भवेत् ॥

⁵अथवा पूर्ववैरं त्वं स्मरन् कालं विकर्षसि ।
पश्य दुष्कृतकर्मत्वं व्यक्तमायुःक्षयो मम ॥

⁶यच्च किंचिन्मयाऽज्ञानात्पुरस्ताद्विप्रियं कृतम् ।
न तन्मनसि कर्तव्यं क्षमये त्वां प्रसीद मे ॥

⁷तमेवंवादिनं प्राज्ञः शास्त्रविद् बुद्धिसंमतः ।
उवाचेदं वचः श्रेष्ठं मार्जारं मूषकस्तदा ॥

⁸श्रुतं मे तव मार्जार स्वमर्थं परिगृह्णतः ।
ममापि त्वं विजानीहि स्वमर्थं परिगृह्णतः ॥

---

(१) भा. १२।१३६।९४ ; भामु. १२।१३८।१००.

(२) भा. १२।१३६।९५ ; भामु. १२।१३८।१०१ कृत्य ( कृत्ये ) प्रश्रय ( प्रश्रित ).

(३) भा. १२।१३६।९६ ; भामु. १२।१३८।१०२.

(४) भा. १२।१३६।९७ ; भामु. १२।१३८।१०३ तथैव ( तथाहि ) स्वस्त्या ( रक्षाऽऽ ).

(५) भा. १२।१३६।९८ ; भामु. १२।१३८।१०४ विकर्षसि ( जिहीर्षसि ) कर्मत्वं ( कर्मस्त्वं ) क्षयो मम ( क्षयं तव ).

(६) भा. १२।१३६।९९ ; भामु. १२।१३८।१०५ यच्च ( यदि ) द्विप्रियं ( द्दुष्कृतं ) क्षमये ( क्षामये ).

(७) भा. १२।१३६।१०० ; भामु. १२।१३८।१०६ विद्बुद्धिसंमतः ( बुद्धिसमन्वितः ).

(८) भा. १२।१३६।१०१ ; भामु. १२।१३८।१०७ जानीहि ( जानासि ).

¹यन्मित्रं भीतवत् साध्यं यन्मित्रं भयसंहितम् ।
सुरक्षितं ततः कार्यं पाणिः सर्पमुखादिव ॥

²कृत्वा बलवता संधिमात्मानं यो न रक्षति ।
अपथ्यमिव तद् भुक्तं तस्यानर्थाय कल्पते ॥

³न कश्चित्कस्यचिन्मित्रं न कश्चित्कस्यचित्सुहृत् ।
अर्थतस्तु निबद्ध्यन्ते मित्राणि रिपवस्तथा ।
अर्थैरर्था निबध्यन्ते गजैर्वनगजा इव ॥

⁴न हि कश्चित्कृते कार्ये कर्तारं समवेक्षते ।
तस्मात्सर्वाणि कार्याणि सावशेषाणि कारयेत् ॥

⁵तस्मिन् कालेऽपि च भवान् दिवाकीर्तिभयान्वितः ।
मम न ग्रहणे शक्तः पलायनपरायणः ॥

⁶छिन्नं तु तन्तुबाहुल्यं तन्तुरेकोऽवशेषितः ।
छेत्स्याम्यहं तदप्याशु निर्वृतो भव लोमश ॥

---

(१) भा. १२।१३६।१०२ ; भामु. १२।१३८। १०८ तं ततः ( तव्यं तत् ).

(२) भा. १२।१३६।१०३ ; भामु. १२।१३८। १०९ स्यानर्था ( स्य नार्था ).

(३) भा. १२।१३६।१०४ द्वितीयार्धं नास्ति ; भामु. १२।१३८।११०–१११ ; मेधा. ७।१७७ त्सुहृत् ( द्रिपुः ) तृतीयार्धे ( सामर्थ्ययोगाद्विज्ञेया मित्राणि रिपवस्तथा ॥ ), द्वितीयार्धं नास्ति, व्यासः ; राक. ९७ सर्वं मेधावत् , द्विज्ञेया ( ज्जायन्ते ) इति विशेषः ; मच. ७।१७७ सर्वं मेधावत् , द्विज्ञेया ( द्विज्ञेयं ) इति विशेषः ; राप्र. २७७ सर्वं राकवत्.

(४) भा. १२।१३६।१०५ ; भामु. १२।१३८। १११–११२ हि ( च ).

(५) भा. १२।१३६।१०६ ; भामु. १२।१३८। ११२–११३ न्वितः ( र्दितः ).

(६) भा. १२।१३६।१०७ ; भामु. १२।१३८। ११३–११४ तदप्या ( तमप्या ).

[1]तयोः संवदतोरेवं तथैवाऽऽपन्नयोर्द्वयोः।
क्षयं जगाम सा रात्रिर्लोमशं चाऽविशद्भयम्॥

[2]ततः प्रभातसमये विकृतः कृष्णपिङ्गलः।
स्थूलस्फिग् विकचो रूक्षः श्वचक्रपरिवारितः॥

[3]शङ्कुकर्णो महावक्त्रः पलितो घोरदर्शनः।
परिघो नाम चण्डालः शस्त्रपाणिरदृश्यत॥

[4]तं दृष्ट्वा यमदूताभं मार्जारस्त्रस्तचेतनः।
उवाच पलितं भीतः किमिदानीं करिष्यसि॥

[5]अथ चापि सुसंत्रस्तौ तं दृष्ट्वा घोरदर्शनम्।
क्षणेन नकुलोलूकौ नैराश्यं जग्मतुस्तदा॥

[6]बलिनौ मतिमन्तौ च संघातं चाप्युपागतौ।
अशक्यौ सुनयात्तस्मात्संप्रधर्षयितुं बलात्॥

[7]कार्यार्थे कृतसंधी तौ दृष्ट्वा मार्जारमूषकौ।
उलूकनकुलौ तूर्णं जग्मतुः स्वं स्वमालयम्॥

(१) भा. १२।१३६।१०८; भामु. १२।१३८।११४–११५ चावि (त्वावि).

(२) भा. १२।१३६।१०९; भामु. १२।१३८।११५–११६ कचो (कृतो) चक्र (यूथ).

(३) भा. १२।१३६।११०; भामु. १२।१३८।११६–११७ पलितो (मलिनो) चण्डालः (चाण्डालः).

(४) भा. १२।१३६।१११; भामु. १२।१३८।११७–११८ पलितं (वचनं).

(५) भा. १२।१३६।११२; भामु. १२।१३८।११८–११९ चापि सु (तावपि) दर्शनम् (संकुलम्) जग्मतुस्तदा (उपजग्मतुः).

(६) भा. १२।१३६।११३; भामु. १२।१३८।११९–१२० घातं (घाते) अशक्यौ (अशक्तौ).

(७) भा. १२।१३६।११४; भामु. १२।१३८।१२०–१२१ पूर्वार्धे (कार्यार्थे कृतसंधानौ दृष्ट्वा मार्जारमूषिकौ।) तूर्णं (तत्र).

[1]ततश्चिच्छेद तं तन्तुं मार्जारस्य स मूषकः।
विप्रमुक्तोऽथ मार्जारस्तमेवाभ्यपतद्द्रुमम्॥

[2]स च तस्माद् भयान्मुक्तो मुक्तो घोरेण शत्रुणा।
बिलं विवेश पलितः शाखां भेजे च लोमशः॥

[3]उन्माथमप्यथाऽऽदाय चण्डालो वीक्ष्य सर्वशः।
विहताशः क्षणेनाथ तस्माद्देशादपाक्रमत्।
जगाम च स्वभवनं चण्डालो भरतर्षभ॥

[4]ततस्तस्माद् भयान्मुक्तो दुर्लभं प्राप्य जीवितम्।
बिलस्थं पादपाग्रस्थः पलितं लोमशोऽब्रवीत्॥

[5]अकृत्वा संविदं कांचित्सहसाऽहमुपप्लुतः।
कृतज्ञं कृतकल्याणं कच्चिन्मां नाभिशङ्कसे॥

[6]गत्वा च मम विश्वासं दत्त्वा च मम जीवितम्।
मित्रोपभोगसमये किं त्वं नैवोपसर्पसि॥

[7]कृत्वा हि पूर्वं मित्राणि यः पश्चान्नानुतिष्ठति।
न स मित्राणि लभते कृच्छ्रास्वापत्सु दुर्मतिः॥

(१) भा. १२।१३६।११५; भामु. १२।१३८।१२१–१२२ तन्तुं (पाशं) स (च).

(२) भा. १२।१३६।११६; भामु. १२।१३८।१२२–१२३ पूर्वार्धे (स तस्मात्संभ्रमावर्तान्मुक्तो घोरेण शत्रुणा।) भेजे च (लेभे स).

(३) भा. १२।१३६।११७; भामु. १२।१३८।१२३–१२४ चण्डालो (चाण्डालो) क्षणेनाथ (क्षणेनाऽऽस्ते) च (स).

(४) भा. १२।१३६।११८; भामु. १२।१३८।१२५.

(५) भा. १२।१३६।११९; भामु. १२।१३८।१२६ साहमुप (सा समव) कल्याणं (कर्माणं).

(६) भा. १२।१३६।१२०; भामु. १२।१३८।१२७ त्वं नैवोप (मां त्वं नोप).

(७) भा. १२।१३६।१२१; भामु. १२।१३८।१२८ कृच्छ्रास्वा (कृच्छ्रात् स्वा).

[1]तत्कृतोऽहं त्वया मित्रं सामर्थ्यादात्मनः सखे ।
स मां मित्रत्वमापन्नमुपभोक्तुं त्वमर्हसि ॥
[2]यानि मे सन्ति मित्राणि ये च मे सन्ति बान्धवाः ।
सर्वे त्वां पूजयिष्यन्ति शिष्या गुरुमिव प्रियम् ॥
[3]अहं च पूजयिष्ये त्वां समित्रगणबान्धवम् ।
जीवितस्य प्रदातारं कृतज्ञः को न पूजयेत् ॥
[4]ईश्वरो मे भवानस्तु शरीरस्य गृहस्य च ।
अर्थानां चैव सर्वेषामनुशास्ता च मे भव ॥
[5]अमात्यो मे भव प्राज्ञ पितेव हि प्रशाधि माम् ।
न तेऽस्ति भयमस्मत्तो जीवितेनाऽऽत्मनः शपे ॥
[6]बुद्धया त्वमुशनाः * साक्षाद् बले त्वधिकृता वयम् ।
त्वन्मन्त्रबलयुक्तो हि विन्देत जयमेव ह ॥

[1]एवमुक्तः परं सान्त्वं मार्जारेण स मूषकः ।
उवाच परमार्थज्ञः श्लक्ष्णमात्महितं वचः ॥
[2]यद् भवानाह तत्सर्वं मया ते लोमश श्रुतम् ।
ममापि तावद् ब्रुवतः शृणु यत्प्रतिभाति माम् ॥
[3]वेदितव्यानि मित्राणि बोद्धव्याश्चापि शत्रवः ।
एतत्सुसूक्ष्मं लोकेऽस्मिन्दृश्यते प्राज्ञसंमतम् ॥
[4]शत्रुरूपाश्च सुहृदो मित्ररूपाश्च शत्रवः ।
सान्त्विताश्ते न बुध्यन्ते रागलोभवशं गताः ॥
[5]नास्ति जात्या रिपुर्नाम मित्रं नाम न विद्यते ।
सामर्थ्ययोगाज्जायन्ते मित्राणि रिपवस्तथा ॥
[6]यो यस्मिन् जीवति स्वार्थं पश्येत्तावत्स जीवति ।
स तस्य तावन्मित्रं स्याद्यावन्न स्याद्विपर्ययः ॥

---

* प्रधानादर्शभूते भाण्डारकरसंस्थापुस्तके सविसर्गोऽयं पाठो व्याकरणविरोधात् पुस्तकान्तरीयनिर्विसर्गपाठस्य टिप्पण्यामसंग्रहाच्च प्रामादिकः । एवं भा. १२।१३७।६६ इत्यत्रापि ज्ञेयम् ।

(१) भा. १२।१३६।१२२ ; भासु. १२।१३८। १२९ तत्कृतो ( सत्कृतो ) मित्रं ( मित्र ).

(२) भा. १२।१३६।१२३ ; भासु. १२।१३८। १३० मे सन्ति बा ( संबन्धिबा ).

(३) भा. १२।१३६।१२४ ; भासु. १२।१३८। १३१.

(४) भा. १२।१३६।१२५; भासु. १२।१३८। १३२ शरीरस्य ( स्वशरीर ).

(५) भा. १२।१३६।१२६ ; भासु. १२।१३८। १३३ व हि ( वेह ).

(६) भा. १२।१३६।१२७ ; भासु. १२।१३८। १३४ मुशनाः ( मुशना ) बले त्व (बलेना) त्वन्म ( त्वं म ) चतुर्थचरणे ( दत्त्वा जीवितमद्य मे ).

(१) भा. १२।१३६।१२८ ; भासु. १२।१३८। १३५ परं सान्त्वं ( परां शान्तिं ) मार्थज्ञः ( मन्त्रज्ञः ).

(२) भा. १२।१३६।१२९ ; भासु. १२।१३८। १३६ माम् ( मे ).

(३) भा. १२।१३६।१३० ; भासु. १२।१३८। १३७ बोद्धव्या (विज्ञेया) ; राक. ९६–९७ ; राप्र. २७८.

(४) भा. १२।१३६।१३१ ; भासु. १२।१३८। १३८ पाश्च सु ( पा हि सु ) सान्त्वि ( संधि ) रागलोभ ( कामक्रोध ).

(५) भा. १२।१३६।१३२ ; भासु. १२।१३८। १३९ जात्या ( जातु ) ; मेधा. राक. मच. राप्र. एतेषां स्थलनिर्देशादि भा. १२।१३६।१०४ इति श्लोके द्रष्टव्यम्.

(६) भा. १२।१३६।१३३ ; भासु. १२।१३८।१४० स्वार्थं ( स्वार्थे ) त्तावत्स ( त्पीडां न ) तावन्मित्रं ( मित्रं तावत् ); राक. ९७ पूर्वार्धे ( योऽस्मिन् जीवितस्वार्थे पश्यन् पीडां न जीवति । ) न्न स्या ( त्तसा ) ; राप्र. २७८ पूर्वार्धे ( यो यस्मिन् जीवितस्वार्थे पश्यन् पीडां न जीवति । ).

[1]नास्ति मैत्री स्थिरा नाम न च ध्रुव-
मसौहृदम्।
अर्थयुक्त्या हि जायन्ते मित्राणि रिपवस्तथा॥
[2]मित्रं च शत्रुतामेति कस्मिंश्चित्कालपर्यये।
शत्रुश्च मित्रतामेति स्वार्थो हि बलवत्तरः॥
[3]यो विश्वसति मित्रेषु न चाऽऽश्वसति शत्रुषु।
अर्थयुक्तिमविज्ञाय चलितं तस्य जीवितम्॥
[4]अर्थयुक्तिमविज्ञाय यः शुभे कुरुते मतिम्।
मित्रे वा यदि वा शत्रौ तस्यापि चलिता
मतिः॥
[5]न विश्वसेदविश्वस्ते विश्वस्तेऽपि न विश्वसेत्।
विश्वासाद् भयमुत्पन्नं मूलान्यपि निकृन्तति॥
[6]अर्थयुक्त्या हि दृश्यन्ते पिता माता सुतास्तथा।
मातुला भागिनेयाश्च तथा संबन्धिबान्धवाः॥
[7]पुत्रं हि मातापितरौ त्यजतः पतितं प्रियम्।
लोको रक्षति चाऽऽत्मानं पश्य स्वार्थस्य सार-
ताम्॥

(१) भा. १२।१३६।१३४; भामु. १२।१३८।१४१ हि (ऽनु); राक. ९७ हि (ऽभि); राप्र. २७८ ध्रुव (चक्र) हि (ऽभि).

(२) भा. १२।१३६।१३५; भामु. १२।१३८।१४२; राक. ९७ हि (तु); राप्र. २७८ राकवत्.

(३) भा. १२।१३६।१३६; भामु. १२।१३८।१४३ सति (सिति) चाऽऽश्वसति (विश्वसिति) चतुर्थचरणे (यः प्रीतौ कुरुते मनः).

(४) भा. १२।१३६।१३७; भामु. १२।१३८।१४४ उक्त.

(५) भा. १२।१३६।१३८; भामु. १२।१३८।१४४–१४५ स्तेऽपि न (स्ते नाति) मूलान्यपि नि (अपि मूलानि).

(६) भा. १२।१३६।१३९; भामु. १२।१३८।१४५–१४६ दृश्यन्ते (जायन्ते) सुता (सुत).

(७) भा. १२।१३६।१४०; भामु. १२।१३८।१४६–१४७.

[1]तं मन्ये निकृतिप्रज्ञ यो मोक्षं प्रत्यनन्तरम्।
कृत्यं मृगयसे कर्तुं सुखोपायमसंशयम्॥
[2]अस्मिन्निलय एव त्वं न्यग्रोधादवतारितः।
पूर्वं निविष्टमुन्माथं चपलत्वान्न बुद्धवान्॥
आत्मनश्चपलो नास्ति कुतोऽन्येषां भविष्यति।
तस्मात्सर्वाणि कार्याणि चपलो हन्त्यसंशयम्॥
[3]ब्रवीति मधुरं कंचित् प्रियो मे ह भवानिति।
तन्मिथ्याकरणं सर्वं विस्तरेणापि मे शृणु॥
[4]कारणात्प्रियतामेति द्वेष्यो भवति कारणात्।
अर्थार्थी जीवलोकोऽयं न कश्चित्कस्यचित्
प्रियः॥
[5]सख्यं सोदरयोर्भ्रात्रोर्दम्पत्योर्वा परस्परम्।
कस्यचिन्नाभिजानामि प्रीतिं निष्कारणामिह॥
[6]यद्यपि भ्रातरः क्रुद्धा भार्या वा कारणान्तरे।
स्वभावतस्ते प्रीयन्ते नेतरः प्रीयते जनः॥
प्रियो भवति दानेन प्रियवादेन चापरः।
मन्त्रहोमजपैरन्यः कार्यार्थं प्रीयते जनः॥
[7]उत्पन्ने कारणे प्रीतिर्नास्ति नौ कारणान्तरे।
प्रध्वस्ते कारणस्थाने सा प्रीतिर्विनिवर्तते॥

(१) भा. १२।१३६।१४१; भामु. १२।१३८।१४७–१४८ पूर्वार्धे (सामान्या निष्कृतिः प्राज्ञ यो मोक्षात्प्रत्यनन्तरम्।) कृत्यं (कृतं) कर्तुं (शत्रुं).

(२) भा. १२।१३६।१४२–१४३; भामु. १२।१३८।१४८–१५०.

(३) भा. १२।१३६।१४४; भामु. १२।१३८।१५०–१५१ वीति (वीषि) कंचित् (यच्च) ह (ऽद्य) थ्याक (त्रका).

(४) भा. १२।१३६।१४५; भामु. १२।१३८।१५१–१५२.

(५) भा. १२।१३६।१४६; भामु. १२।१३८।१५२–१५३ सोदर (सोदर्य).

(६) भा. १२।१३६।१४७–१४८; भामु. १२।१३८।१५३–१५५.

(७) भा. १२।१३६।१४९; भामु. १२।१३८।१५५–१५६ उत्पन्ने (उत्पन्ना) र्नास्ति नौ (र्नाऽऽसीन्नौ).

[1]किं नु तत्कारणं मन्ये येनाहं भवतः प्रियः।
अन्यत्राभ्यवहारार्थात्तत्रापि च बुधा वयम्॥
[2]कालो हेतुं विकुरुते स्वार्थस्तमनुवर्तते।
स्वार्थं प्राज्ञोऽभिजानाति प्राज्ञं लोकोऽनुवर्तते॥
[3]न त्वीदृशं त्वया वाच्यं विदुषि स्वार्थपण्डिते।
अकालेऽविषमस्थस्य स्वार्थहेतुरयं तव॥
[4]तस्मान्नाहं चले स्वार्थात्सुस्थितः संधिविग्रहे।
अभ्राणामिव रूपाणि विकुर्वन्ति क्षणे क्षणे॥
[5]अद्यैव हि रिपुर्भूत्वा पुनरद्यैव सौहृदम्।
पुनश्च रिपुरद्यैव युक्तीनां पश्य चापलम्॥
[6]आसीत्तावत्तु मैत्री नौ यावद्धेतुरभूत्पुरा।
सा गता सह तेनैव कालयुक्तेन हेतुना॥
[7]त्वं हि मेऽत्यन्ततः शत्रुः सामर्थ्यान्मित्रतां गतः।
तत्कृत्यमभिनिर्वृत्तं प्रकृतिः शत्रुतां गता॥
[8]सोऽहमेवं प्रणीतानि ज्ञात्वा शास्त्राणि तत्त्वतः।
प्रविशेयं कथं पाशं त्वत्कृतं तद्वदस्व मे॥

[1]त्वद्वीर्येण विमुक्तोऽहं मद्वीर्येण तथा भवान्।
अन्योन्यानुग्रहे वृत्ते नास्ति भूयः समागमः॥
[2]त्वं हि सौम्य कृतार्थोऽद्य निर्वृत्तार्थास्तथा वयम्।
न तेऽस्त्यन्यन्मया कृत्यं किंचिदन्यत्र भक्षणात्॥
[3]अहमन्नं भवान् भोक्ता दुर्बलोऽहं भवान् बली।
नाऽऽवयोर्विद्यते संधिर्नियुक्ते विषमे स्थले॥
[4]संमन्येऽहं तव प्रज्ञां यन्मोक्षात् प्रत्यनन्तरम्।
भक्ष्यं मृगयसे नूनं सुखोपायमसंशयम्॥
[5]भक्ष्यार्थमेव बद्धस्त्वं स मुक्तः प्रसृतः क्षुधा।
शास्त्रजमभिसंधाय नूनं भक्षयिताऽद्य माम्॥
[6]जानामि क्षुधितं हि त्वामाहारसमयश्च ते।
स त्वं मामभिसंधाय भक्ष्यं मृगयसे पुनः॥
[7]यच्चापि पुत्रदारं स्वं तत्संनिसृजसे मयि।
शुश्रूषां नाम मे कर्तुं सखे मम न तत्क्षमम्॥

---

(१) भा. १२।१३६।१५०; भामु. १२।१३८। १५६–१५७ नु (तु) र्थात्त (र्थं त).

(२) भा. १२।१३६।१५१; भामु. १२।१३८। १५७–१५८.

(३) भा. १२।१३६।१५२; भामु. १२।१३८। १५८–१५९ ऽविषमस्थस्य स्वार्थ (हि समर्थस्य स्नेह).

(४) भा. १२।१३६।१५३; भामु. १२।१३८। १५९–६० स्थितः (स्थिरः).

(५) भा. १२।१३६।१५४; भामु. १२।१३८। १६०–१६१ सौहृदम् (मे सुहृत्).

(६) भा. १२।१३६।१५५; भामु. १२।१३८। १६१–१६२ त्तावत्तु मैत्री नौ (न्मैत्री तु तावन्नौ).

(७) भा. १२।१३६।१५६; भामु. १२।१३८। १६२–१६३ ऽत्यन्ततः (जातितः) निर्वृत्तं (निर्वर्त्यं).

(८) भा. १२।१३६।१५७; भामु. १२।१३८। १६३–१६४ त्कृतं (त्कृते).

(१) भा. १२।१३६।१५८; भामु. १२।१३८। १६४–१६५ विमु (प्रमु).

(२) भा. १२।१३६।१५९; भामु. १२।१३८। १६५–१६६ निर्वृत्ता (निवृत्ता) न्यन्म (द्य म).

(३) भा. १२।१३६।१६०; भामु. १२।१३८। १६६–१६७ र्नियु (र्वियु).

(४) भा. १२।१३६।१६१; भामु. १२।१३८। १६७–१६८ संमन्ये (स मन्ये) मृगय (प्रशंस) पायमसंशयम् (पायेन कर्मणा).

(५) भा. १२।१३६।१६२; भामु. १२।१३८। १६८–१६९ भक्ष्यार्थमेव (भक्षार्थं ह्यव) प्रसृतः (पीडितः) तृतीयचरणे (शास्त्रजां मतिमास्थाय).

(६) भा. १२।१३६।१६३; भामु. १२।१३८। १६९–१७० हि (तु).

(७) भा. १२।१३६।१६४; भामु. १२।१३८। १७०–१७१ पूर्वार्धे (त्वं चापि पुत्रदारस्थो यत्संधिं सृजसे मयि।) नाम मे (यतसे).

[1]त्वया मां सहितं दृष्ट्वा प्रिया भार्या सुताश्च ये ।
कस्मान्मां ते न खादेयुर्हृष्टाः प्रणयिनस्त्वयि ॥
[2]नाहं त्वया समेष्यामि वृत्तो हेतुः समागमे ।
शिवं ध्यायस्व मेऽत्रस्थः सुकृतं स्मर्यते यदि ॥
[3]शत्रोरन्नाद्यभूतः सन् क्लिष्टस्य क्षुधितस्य च ।
भक्ष्यं मृगयमाणस्य कः प्राज्ञो विषयं व्रजेत् ॥
[4]स्वस्ति तेऽस्तु गमिष्यामि दूरादपि तवोद्विजे ।
विश्वस्तं वा प्रमत्तं वा एतदेव कृतं भवेत् ।
नाहं त्वया समेष्यामि निर्वृतो भव लोमश ॥
बलवत्संनिकर्षो हि न कदाचित्प्रशस्यते ।
यदि त्वं सुकृतं वेत्सि तत्सख्यमनुसारय ।
प्रशान्तादपि मे प्राज्ञ भेतव्यं बलिनः सदा ॥
[5]यदि त्वर्थेन मे कार्यं ब्रूहि किं करवाणि ते ।
कामं सर्वं प्रदास्यामि न त्वात्मानं कदाचन ॥
[6]आत्मार्थे संततिस्त्याज्या राज्यं रत्नं धनं तथा ।
अपि सर्वस्वमुत्सृज्य रक्षेदात्मानमात्मना ॥
[7]ऐश्वर्यधनरत्नानां प्रत्यमित्रेऽपि तिष्ठताम् ।
दृष्टा हि पुनरावृत्तिर्जीवतामिति नः श्रुतम् ॥

(१) भा. १२।१३६।१६५ ; भामु. १२।१३८। १७१–१७२ ये (ते) न्मां ते (त्ते मां).

(२) भा. १२।१३६।१६६ ; भामु. १२।१३८। १७२–१७३ ऽत्रस्थः (स्वस्थः) स्मर्यते (स्मरसे).

(३) भा. १२।१३६।१६७ ; भामु. १२।१३८। १७३–१७४ रन्नाद्यभूतः सन् (रन्नार्थभूतस्य).

(४) भा. १२।१३६।१६८–१६९ द्वितीयपञ्चमार्धे न स्तः ; भामु. १२।१३८।१७४–१७७ निर्वृतो (निवृत्तो) प्राज्ञ (पापात्), तृतीयचतुर्थार्धे व्यत्यासपठिते.

(५) भा. १२।१३६।१७० ; भामु. १२।१३८। १७७–१७८ त्वर्थेन मे (स्वार्थं न ते).

(६) भा. १२।१३६।१७१ ; भामु. १२।१३८। १७८–१७९ धनं तथा (धनानि च) सर्वस्व (सर्वं स्व).

(७) भा. १२।१३६।१७२ ; भामु. १२।१३८। १७९–१८० ऽपि तिष्ठ (निवर्त).

[1]न त्वात्मनः संप्रदानं धनरत्नवदिष्यते ।
आत्मा तु सर्वतो रक्ष्यो दारैरपि धनैरपि ॥
[2]आत्मरक्षिततन्त्राणां सुपरीक्षितकारिणाम् ।
आपदो नोपपद्यन्ते पुरुषाणां स्वदोषजाः ॥
[3]शत्रून् सम्यग् विजानन्ति दुर्बला ये बलीयसः ।
तेषां न चाल्यते बुद्धिरात्मार्थे कृतनिश्चया ॥
[4]इत्यभिव्यक्तमेवासौ पलितेनावभर्त्सितः ।
मार्जारो व्रीडितो भत्वा मूषकं वाक्यमब्रवीत् ॥

लोमश उवाच–

[5]सत्यं शपे त्वयाऽहं वै मित्रद्रोहो विगर्हितः ॥
[6]संमन्येऽहं तव प्रज्ञां यस्त्वं मम हिते रतः ।
उक्तवानर्थतत्त्वेन मया संभिन्नदर्शनः ॥
[7]न तु मामन्यथा साधो त्वं विज्ञातुमिहार्हसि ।
प्राणप्रदानजं त्वत्तो मम सौहृदमागतम् ॥
[8]धर्मज्ञोऽस्मि गुणज्ञोऽस्मि कृतज्ञोऽस्मि विशेषतः ।
मित्रेषु वत्सलश्चास्मि त्वद्विधेषु विशेषतः ॥

(१) भा. १२।१३६।१७३ ; भामु. १२।१३८। १८०–१८१ तु सर्वतो (हि सर्वदा).

(२) भा. १२।१३६।१७४ ; भामु. १२।१३८। १८१–१८२ रक्षित (रक्षण).

(३) भा. १२।१३६।१७५ ; भामु. १२।१३८। १८२–१८३ शत्रून् (शत्रुं) यसः (यसम्) तेषां न (न तेषां) धिरात्मार्थे (धिः शास्त्रार्थे).

(४) भा. १२।१३६।१७६ ; भामु. १२।१३८। १८३–१८४ मेवासौ (मेवं स) नाव (नाभि).

(५) भामु. १२।१३८।१८५.

(६) भा. १२।१३६।१७७ ; भामु. १२।१३८। १८५–१८६ संमन्ये (तन्मन्ये).

(७) भा. १२।१३६।१७८ ; भामु. १२।१३८। १८६–१८७ विज्ञातु (ग्रहीतु).

(८) भा. १२।१३६।१७९ ; भामु. १२।१३८। १८७–१८८ त्वद्विधेषु (त्वद्भक्तश्च).

[1]तन्मामेवंगते साधो न यावयितुमर्हसि ।
त्वया हि याच्यमानोऽहं प्राणान् जह्यां सबान्धवः ॥

[2]धिक्शब्दो हि बुधैर्दृष्टो मद्विधेषु मनस्विषु ।
मरणं धर्मतत्त्वज्ञ न मां शङ्कितुमर्हसि ॥

[3]इति संस्तूयमानो हि मार्जारेण स मूषकः ।
मनसा भावगम्भीरं मार्जारं वाक्यमब्रवीत् ॥

[4]साधुर्भवाञ् श्रुतार्थोऽस्मि प्रीयते न च विश्वसे ।
संस्तवैर्वा धनौघैर्वा नाहं शक्यः पुनस्त्वया ॥

[5]न ह्यमित्रवशं यान्ति प्राज्ञा निष्कारणं सखे ।
अस्मिन्नर्थे च गाथे द्वे निबोधोशनसा कृते ॥

[6]शत्रुसाधारणे कृत्ये कृत्वा संधिं बलीयसा ।
समाहितश्चरेद् युक्त्या कृतार्थश्च न विश्वसेत् ॥

[7]न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
नित्यं विश्वासयेदन्यान् परेषां तु न विश्वसेत् ॥

(१) भा. १२।१३६।१८० ; भामु. १२।१३८।१८८–१८९ (तस्मादेवं पुनः साधो मय्याचरितुमर्हसि । त्वया हि वाच्यमानोऽहं जह्यां प्राणान् सबान्धवः ॥).

(२) भा. १२।१३६।१८१ ; भामु. १२।१३८।१८९–१९० धिक्शब्दो (विश्रम्भो) मरणं (तदेतत्) मां (त्वं).

(३) भा. १२।१३६।१८२ ; भामु. १२।१३८।१९०–१९१ हि (ऽपि) म्भीरं (म्भीरो).

(४) भा. १२।१३६।१८३ ; भामु. १२।१३८।१९१–१९२ प्रीयते (प्रीये च).

(५) भा. १२।१३६।१८४ ; भामु. १२।१३८।१९२–१९३ मित्र (मित्रे).

(६) भा. १२।१३६।१८५ ; भामु. १२।१३८।१९३–१९४.

(७) भामु. १२।१३८।१९४–१९५.

[1]तस्मात्सर्वास्ववस्थासु रक्षेज्जीवितमात्मनः ।
द्रव्याणि संततिश्चैव सर्वं भवति जीवतः ॥
संक्षेपो नीतिशास्त्राणामविश्वासः परो मतः ।
नृषु तस्मादविश्वासः पुष्कलं हितमात्मनः ॥

[2]वध्यन्ते न ह्यविश्वस्ताः शत्रुभिर्दुर्बला अपि ।
विश्वस्तास्त्वाशु वध्यन्ते बलवन्तोऽपि दुर्बलैः ॥

[3]त्वद्विधेभ्यो मया ह्यात्मा रक्ष्यो मार्जार सर्वदा ।
रक्ष त्वमपि चाऽऽत्मानं चण्डालाज्जातिकिल्बिषात् ॥

[4]स तस्य ब्रुवतस्त्वेवं संत्रासाज्जातसाध्वसः ।
स्वबिलं हि जवेनाऽऽशु मार्जारः प्रययौ ततः ॥

[5]ततः शास्त्रार्थतत्त्वज्ञो बद्धिसामर्थ्यमात्मनः ।
विश्राव्य पलितः प्राज्ञो बिलमन्यज्जगाम ह ॥
एवं प्रज्ञावता बुद्ध्या दुर्बलेन महाबलाः ।
एकेन बहवोऽमित्राः पलितेनाभिसंधिताः ॥
अरिणाऽपि समर्थेन संधिं कुर्वीत पण्डितः ।
मूषकश्च बिडालश्च मुक्तावन्योन्यसंश्रयात् ॥

[6]इत्येष क्षत्रधर्मस्य मया मार्गोऽनुदर्शितः ।
विस्तरेण महीपाल संक्षेपेण पुनः शृणु ॥

(१) भा. १२।१३६।१८६–१८७ ; भामु. १२।१३८।१९५–१९७.

(२) भा. १२।१३६।१८८ ; भामु. १२।१३८।१९७–१९८ ह्यवि (हि वि) स्त्वाशु (स्तेषु).

(३) भा. १२।१३६।१८९ ; भामु. १२।१३८।१९८–१९९ चण्डा (चाण्डा).

(४) भा. १२।१३६।१९० ; भामु. १२।१३८।१९९–२०० स्वबिलं हि (शाखां हित्वा).

(५) भा. १२।१३६।१९१–१९३ ; भामु. १२।१३८।२००–२०३.

(६) भा. १२।१३६।१९४ ; भामु. १२।१३८।२०३–२०४ (इत्येवं क्षत्रधर्मश्च मया मार्गेषु दर्शितः । विस्तरेण महाराज संक्षेपमपि मे शृणु ॥).

[१]अन्योन्यकृतवैरौ तु चक्रतुः प्रीतिमुत्तमाम् ।
अन्योन्यमभिसंधातुमभूच्चैव तयोर्मतिः ॥
[२]तत्र प्राज्ञोऽभिसंधत्ते सम्यग् बुद्धिबलाश्रयात् ।
अभिसंधीयते प्राज्ञः प्रमादादपि चाबुधैः ॥
[३]तस्मादभीतवद्भीतो विश्वस्तवदविश्वसन् ।
न ह्यप्रमत्तश्चलति चलितो वा विनश्यति ॥
[४]कालेन रिपुणा संधिः काले मित्रेण विग्रहः ।
कार्य इत्येव तत्त्वज्ञाः प्राहुर्नित्यं युधिष्ठिर ॥
[५]एवं मत्वा महाराज शास्त्रार्थमभिगम्य च ।
अभियुक्तोऽप्रमत्तश्च प्राग् भयाद्भीतवच्चरेत् ॥
[६]भीतवत्संविधिः कार्यः प्रतिसंधिस्तथैव च ।
भयादुत्पद्यते बुद्धिरप्रमत्ताऽभियोगजा ॥
[७]न भयं विद्यते राजन् भीतस्यानागते भये ।
अभीतस्य तु विस्रम्भात्सुमहज्जायते भयम् ॥
[८]न भीरुरिति चात्यन्तं मन्त्रोऽदेयः कथंचन ।
अविज्ञानाद्धि विज्ञाते गच्छेदास्पददर्शिषु ॥

(१) भा. १२।१३६।१९५ ; भामु. १२।१३८।२०४--२०५ तुमभूच्चैव ( तुं संबभूव ).

(२) भा. १२।१३६।१९६ ; भामु. १२।१३८।२०५–२०६ बला ( समा ) चाबु ( वा बु ).

(३) भा. १२।१३६।१९७ ; भामु. १२।१३८।२०६–२०७.

(४) भा. १२।१३६।१९८ ; भामु. १२।१३८।२०७–२०८ तत्त्व ( संधि ) युधिष्ठिर ( नराधिप ).

(५) भा. १२।१३६।१९९ ; भामु. १२।१३८।२०८–२०९ एवं मत्वा ( एतज्ज्ञात्वा ) क्तोऽप्रमत्त ( क्तः प्रसन्न ).

(६) भा. १२।१३६।२०० ; भामु. १२।१३८।२०९–२१० विधिः ( निधिः ) योगजा ( योगतः ).

(७) भा. १२।१३६।२०१ ; भामु. १२।१३८।२१०–२११ तु ( च ).

(८) भा. १२।१३६।२०२ ; भामु. १२।१३८।२११–२१२ पूर्वार्धे ( अभीश्चरति यो नित्यं मन्त्रो देयः कथंचन । ) ज्ञाते ( ज्ञातो ).

[१]तस्मादभीतवद् भीतो विश्वस्तवदविश्वसन् ।
कार्याणां गुरुतां बुद्ध्वा नानृतं किंचिदाचरेत् ॥
[२]एवमेतन्मया प्रोक्तमितिहासं युधिष्ठिर ।
श्रुत्वा त्वं सुहृदां मध्ये यथावत् समुपाचर ॥
[३]उपलभ्य मतिं चाग्र्यामरिमित्रान्तरं तथा ।
संधिविग्रहकालं च मोक्षोपायं तथाऽऽपदि ॥
[४]शत्रुसाधारणे कृत्ये कृत्वा संधिं बलीयसा ।
समागमं चरेद्युक्त्या कृतार्थो न च विश्वसेत् ॥
[५]अविरुद्धां त्रिवर्गेण नीतिमेतां युधिष्ठिर ।
अभ्युत्तिष्ठ श्रुतादस्माद् भूयस्त्वं रञ्जयन् प्रजाः ॥
[६]ब्राह्मणैश्चापि ते सार्धं यात्रा भवतु पाण्डव ।
ब्राह्मणा हि परं श्रेयो दिवि चेह च भारत ॥
[७]एते धर्मस्य वेत्तारः कृतज्ञाः सततं प्रभो ।
पूजिताः शुभकर्माणः पूर्वजित्या नराधिप ॥
[८]राज्यं श्रेयः परं राजन् यशः कीर्तिं च लप्स्यसे ।
कुलस्य संततिं चैव यथान्यायं यथाक्रमम् ॥

(१) भा. १२।१३६।२०३ ; भामु. १२।१३८।२१२–२१३ स्तवद ( स्तो बहु ) बुद्ध्वा ( प्राप्य ).

(२) भा. १२।१३६।२०४ ; भामु. १२।१३८।२१३–२१४.

(३) भा. १२।१३६।२०५ ; भामु. १२।१३८।२१४–२१५ कालं ( काले ) पायं तथाऽऽपदि ( पायस्तथैव च ).

(४) भा. १२।१३६।२०६ ; भामु. १२।१३८।२१५–२१६ गमं ( गमे ).

(५) भा. १२।१३६।२०७ ; भामु. १२।१३८।२१६–२१७ युधिष्ठिर ( महीपते ) रञ्ज ( रक्ष ).

(६) भा. १२।१३६।२०८ ; भामु. १२।१३८।२१७–२१८ हि ( वै ).

(७) भा. १२।१३६।२०९ ; भामु. १२।१३८।२१८–२१९ कर्माणः पूर्वजित्या ( कर्तारः पूजयेत्तान् ).

(८) भा. १२।१३६।२१० ; भामु. १२।१३८।२१९–२२०.

[1]द्वयोरिमं भारत संधिविग्रहं
सुभाषितं बुद्धिविशेषकारितम् ।
तथाऽन्ववेक्ष्य क्षितिपेन सर्वदा
निषेवितव्यं नृप शत्रुमण्डले ॥

ब्रह्मदत्तपूजनीसंवादे संधिविग्रहनीतिः यथा– अपकारकर्त्रा अपकारपीडितो नैव विश्वास्यः, तयोः संधिर्निष्फलः, परस्परकृतवैराणां परस्परमविश्वासो युक्तः संधिश्च निष्फलः

**युधिष्ठिर उवाच–**

[2]उक्तो मन्त्रो महाबाहो न विश्वासोऽस्ति शत्रुषु ।
कथं हि राजा वर्तेत यदि सर्वत्र नाऽऽश्वसेत् ॥

अविश्वस्तं यथा स्यात्तथा बहु विश्वसेदित्युक्तम् । तत्र सर्वत्राविश्वासे कार्यस्यासिद्धिरेव स्यादित्याशङ्क्य पूजनीदृष्टान्तेन पूर्वकृतापकारो न विश्वसेदिति निरूपयति– उक्त इत्यध्यायेन । नीटी.

[3]विश्वासाद्धि परं राज्ञो राजन्नुत्पद्यते भयम् ।
कथं वै नाऽऽश्वसन् राजा शत्रूञ्जयति पार्थिव ॥
[4]एतन्मे संशयं छिन्धि मनो मे संप्रमुह्यति ।
अविश्वासकथामेतामुपश्रुत्य पितामह ॥

**भीष्म उवाच–**

[5]शृणु कौन्तेय यो वृत्तो ब्रह्मदत्तनिवेशने ।
पूजन्या सह संवादो ब्रह्मदत्तस्य पार्थिव ॥
पूजन्या चटकया । नीटी.

[1]काम्पिल्ये ब्रह्मदत्तस्य अन्तःपुरनिवासिनी ।
पूजनी नाम शकुनी दीर्घकालं सहोषिता ॥
[2]रुतज्ञा सर्वभूतानां यथा वै जीवजीवकः ।
सर्वज्ञा सर्वधर्मज्ञा तिर्यग्योनिगताऽपि सा ॥

जीवजीवकः शाकुनिकः । स हि ' अयं पक्षी अस्यां दिशि लाभमस्यामलाभं दिशति ' इति वर्णयति । जीवजीवक इति पक्षिविशेष इत्यन्ये । नीटी.

[3]अभिप्रजाता सा तत्र पुत्रमेकं सुवर्चसम् ।
समकालं च राज्ञोऽपि देव्याः पुत्रो व्यजायत ॥

अभिप्रजाता प्रसूतवती । देव्यां राजभार्यायाम् । नीटी.

[4]तयोरर्थे कृतज्ञा सा खेचरी पूजनी सदा ॥
[5]समुद्रतीरं गत्वा सा त्वाजहार फलद्वयम् ।
पुष्ट्यर्थं च स्वपुत्रस्य राजपुत्रस्य चैव ह ॥
[6]फलमेकं सुतायादाद्राजपुत्राय चापरम् ।
अमृतास्वादसदृशं बलतेजोविवर्धनम् ।
आदायाऽऽदाय सैवाऽऽशु तयोः प्रादात्पुनः पुनः ।
तत्रागच्छत्परां वृद्धिं राजपुत्रः फलाशनात् ॥
[7]ततः स धात्र्या कक्षेण उह्यमानो नृपात्मजः ।
ददर्श तं पक्षिसुतं बाल्यादागत्य बालकः ॥

---

(१) भा. १२।१३६।२११ ; भामु. १२।१३८।२२१ कारितम् ( कारकम् ) तथाऽन्व ( यथा त्व ).

(२) भा. १२।१३७।१ ; भामु. १२।१३९।१ न विश्वासोऽस्ति ( विश्वासो नास्ति ).

(३) भा. १२।१३७।२ ; भामु. १२।१३९।२ राज्ञो राजन्नु ( राजन् राज्ञामु ) व ( हि ) पार्थिव ( पार्थिवः ).

(४) भा. १२।१३७।३ ; भामु. १२।१३९।३ मनो मे ( मतिर्मे ).

(५) भा. १२।१३७।४ ; भामु. १२।१३९।४ प्रथमचरणे ( शृणुष्व राजन् यद्वृत्तं ) वादो ( वादं ) पार्थिव ( भूपतेः ).

(१) भा. १२।१३७।५ ; भामु. १२।१३९।५. अन्तः ( त्वन्तः ) शकुनी ( शकुनिः ).

(२) भा. १२।१३७।६ ; भाम. १२।१३९।६. धर्म ( तत्त्व ) ग्योनि ( ग्योनिं ).

(३) भा. १२।१३७।७ ; भामु. १२।१३९।७. देव्याः ( देव्यां ).

(४) भामु. १२।१३९।८.

(५) भा. १२।१३७।८ ; भामु. १२।१३९।८–९. गत्वा सा त्वा ( सा गत्वा आ ).

(६) भा. १२।१३७।९ तृतीयार्धं नास्ति ; भामु. १२।१३९।९–११ तेजोवि ( तेजोभि ) तत्रा ( ततो ).

(७) भामु. १२।१३९।११–१२.

[1]धात्र्या हस्तगतश्चापि तेनाक्रीडत पक्षिणा ।
शून्ये तु तमुपादाय पक्षिणं समजातकम् ।
हत्वा ततः स राजेन्द्र धात्र्या हस्तमुपागमत् ॥
समजातकं समानवयसम् । नीटी.

[2]अथ सा शकुनी राजन्नागमत्फलहारिका ।
अपश्यन्निहतं पुत्रं तेन बालेन भूतले ॥
[3]बाष्पपूर्णमुखी दीना दृष्ट्वा सा तु हतं सुतम् ।
पूजनी दुःखसंतप्ता रुदती वाक्यमब्रवीत् ॥
[4]क्षत्रिये संगतं नास्ति न प्रीतिर्न च सौहृदम् ।
कारणे संभजन्तीह कृतार्थाः संत्यजन्ति च ॥
[5]क्षत्रियेषु न विश्वासः कार्यः सर्वोपघातिषु ।
अपकृत्यापि सततं सान्त्वयन्ति निरर्थकम् ॥
[6]अहमस्य करोम्यद्य सदृशीं वैरयातनाम् ।
कृतघ्नस्य नृशंसस्य भृशं विश्वासघातिनः ॥
[7]सहसंजातवृद्धस्य तथैव सहभोजिनः ।
शरणागतस्य च वधस्त्रिविधं ह्यस्य किल्बिषम् ॥
[8]इत्युक्त्वा चरणाभ्यां तु नेत्रे नृपसुतस्य सा ।
भित्वा स्वस्था तत इदं पूजनी वाक्यमब्रवीत् ॥

(१) भा. १२।१३७।१० ; भामु. १२।१३९।१२–१३ प्रथमचरणे (ततो बाल्याच्च यत्नेन) तु (च) गमत् (गतः).

(२) भा. १२।१३७।११ ; भामु. १२।१३९।१४ शकुनी (पूजनी) हारिका (हारिणी).

(३) भा. १२।१३७।१२ ; भामु. १२।१३९।१५ सा तु हतं (तं रुदती).

(४) भा. १२।१३७।१३ ; भामु. १२।१३९।१६ तृतीयचरणे (कारणात् सान्त्वयन्त्येते).

(५) भा. १२।१३७।१४ ; भामु. १२।१३९।१७ सर्वोपघातिषु (सर्वापकारिषु).

(६) भा. १२।१३७।१५ ; भामु. १२।१३९।१८.

(७) भा. १२।१३७।१६ ; भामु. १२।१३९।१९ ह्यस्य किल्बिषम् (ह्येव पातकम्).

(८) भा. १२।१३७।१७ ; भामु. १२।१३९।२०.

[1]इच्छयैव कृतं पापं सद्य एवोपसर्पति ।
कृतप्रतिक्रियं तेषां न नश्यति शुभाशुभम् ॥
इच्छया बुद्धिपूर्वकम् । उपसर्पति फलरूपेण कर्तारम् । नीटी.

[2]पापं कर्म कृतं किंचिन्न तस्मिन् यदि विद्यते ।
निपात्यतेऽस्य पुत्रेषु न चेत्पौत्रेषु नप्तृषु ॥
कर्तर्यदृष्टं तत् पुत्रादावपि पापं दृश्यत एवेत्याह– पापमिति । तेत्रां महतां पापं अपराधकृतमेनः । नीटी.

[3]ब्रह्मदत्तः सुतं दृष्ट्वा पूजन्याहृतलोचनम् ।
कृते प्रतिकृतं मत्वा पूजनीमिदमब्रवीत् ॥

ब्रह्मदत्त उवाच–

[4]अस्ति वै कृतमस्माभिरस्ति प्रतिकृतं त्वया ।
उभयं तत्समीभूतं वस पूजनि मा गमः ॥
मा गमः मा स्म गमः । नीटी.

पूजन्युवाच–

सकृत्कृतापराधस्य तत्रैव परिलम्बतः ।
न तद्बुधाः प्रशंसन्ति श्रेयस्तत्रापसर्पणम् ॥
परिलम्बतः विश्वासं कुर्वतः । नीटी.

[5]सान्त्वे प्रयुक्ते नृपते कृतवैरे न विश्वसेत् ।
क्षिप्रं प्रबध्यते मूढो नहि वैरं प्रशाम्यति ॥
[6]अन्योन्यं कृतवैराणां पुत्रपौत्रं निगच्छति ।
पुत्रपौत्रे विनष्टे तु परलोकं निगच्छति ॥

(१) भा. १२।१३७।१८ ; भामु. १२।१३९।२१ च्छयैव (च्छयेह) सद्य एवो (सद्यस्तं चो) तृतीयचरणे (कृतं प्रतिकृतं येषां).

(२) भा. १२।१३७।१९ ; भामु. १२।१३९।२२ (पापं कर्म कृतं किंचिद्यदि तस्मिन्न दृश्यते । नृपते तस्य पुत्रेषु पौत्रेष्वपि च नप्तृषु ॥).

(३) भामु. १२।१३९।२३.

(४) भा. १२।१३७।२०–२१ ; भामु. १२।१३९।२४–२५.

(५) भा. १२।१३७।२२ ; भामु. १२।१३९।२६ नृपते (सततं) प्रब (स ब).

(६) भा. १२।१३७।२३ ; भामु. १२।१३९।२७ न्यं कृ (न्यकृ) निग (निय) त्रे विनष्टे तु (त्रविनाशे च).

नियच्छति मृत्युर्नाशयति । ततो नष्टसंततित्वात् परलोकं च नियच्छति । नीटी.

[1]सर्वेषां कृतवैराणामविश्वासः सुखावहः ।
एकान्ततो न विश्वासः कार्यो विश्वासघातकः ॥

[2]न विश्वसेदविश्वस्ते विश्वस्तेऽपि न विश्वसेत् ।
विश्वासाद्भयमुत्पन्नमपि मूल निकृन्तति ।
कामं विश्वासयेदन्यान् परेषां तु न विश्वसेत् ॥

[3]माता पिता बान्धवानां वरिष्ठौ
भार्या जरा बीजमात्रं तु पुत्रः ।
भ्राता शत्रुः क्लिन्नपाणिर्वयस्य
आत्मा ह्येकः सुखदुःखस्य वेत्ता ॥

जरा, वीर्यहरत्वात् । बीजमात्रम् , प्रसवरूपत्वात् । शत्रुः , रिक्थहरत्वात् । क्लिन्नपाणिः उपक्रियमाणः धनादिना । पूज्यमानमेव मित्रं नान्यदित्यर्थः । नीटी.

[4]अन्योन्यकृतवैराणां न संधिरुपपद्यते ।
स च हेतुरतिक्रान्तो यदर्थमहमावसम् ॥

हेतुः पुत्ररक्षा स्नेहो वा । नीटी.

[5]पूजितस्यार्थमानाभ्यां जन्तोः पूर्वापकारिणः ।
चेतो भवत्यविश्वस्तं पूर्वं त्रासयते बलात् ॥

कर्म स्वकृतम् । अबलान् मादृशान् । नीटी.

[6]पूर्वं संमानना यत्र पश्चाच्चैव विमानना ।
जह्यात्तं सत्त्ववान्वासं संमानितविमानितः ॥

[1]उषिताऽस्मि तवागारे दीर्घकालमहिंसिता ।
तदिदं वैरमुत्पन्नं सुखमास्स्व व्रजाम्यहम् ॥

ब्रह्मदत्त उवाच—

[2]यत्कृते प्रतिकुर्याद्वै न स तत्रापराध्नुयात् ।
अनृणस्तेन भवति वस पूजनि मा गमः ॥

पूजन्युवाच—

[3]न कृतस्य न कर्तुश्च सख्यं संधीयते पुनः ।
हृदयं तत्र जानाति कर्तुश्चैव कृतस्य च ॥

अन्योन्यस्यापकारमुभावपि नित्यं स्मरत इत्यर्थः । नीटी.

ब्रह्मदत्त उवाच—

[4]कृतस्य चैव कर्तुश्च सख्यं संधीयते पुनः ।
वैरस्योपशमो दृष्टः पापं नोपाश्नुते पुनः ॥

प्रतिकृतं प्रायश्चित्तं जातमिति मन्वानः साधुः पुनः नापकरोतीत्याशयेनाऽऽह— कृतस्येति । नीटी.

पूजन्युवाच—

[5]नास्ति वैरमुपक्रान्तं सान्त्वितोऽस्मीति नाऽऽश्वसेत् ।
विश्वासाद्बध्यते बालस्तस्माच्छ्रेयो ह्यदर्शनम् ॥

[6]तरसा ये न शक्यन्ते शस्त्रैः सुनिशितैरपि ।
साम्ना ते विनिगृह्यन्ते गजा इव करेणुभिः ॥

न शक्यन्ते, जेतुमिति शेषः । नीटी.

---

(१) भा. १२।१३७।२४ ; भामु. १२।१३९।२८ खावहः ( खोदयः ) घातकः ( घातकैः ).

(२) भा. १२।१३७।२५ द्वितीयार्धं नास्ति ; भामु. १२।१३९।२९ स्तेऽपि न ( स्ते नाति ) तु ( च ).

(३) भा. १२।१३७।२६ ; भामु. १२।१३९।३० वेत्ता ( मोक्ता ) .

(४) भा. १२।१३७।२७ ; भामु. १२।१३९।३१ .

(५) भा. १२।१३७।२८ ; भामु. १२।१३९।३२ चेतो ( मनो ) पूर्वं ( कर्म ) बलात् ( ऽबलान् ) .

(६) भा. १२।१३७।२९ ; भामु. १२।१३९।३३ उत्तरार्धे (जह्याच्चतत्सत्त्ववान् स्थानं शत्रोः संमानितोऽपि सन् ।।).

(१) भा. १२।१३७।३० ; भामु. १२।१३९।३४ लमहिंसिता ( लं समर्चिता ) मास्स्व ( माशु ).

(२) भा. १२।१३७।३१ ; भामु. १२।१३९।३५ यत्कृते ( यः कृते ) .

(३) भा. १२।१३७।३२ ; भामु. १२।१३९।३६ स्य न ( स्य तु ) .

(४) भा. १२।१३७।३३ ; भामु. १२।१३९।३७.

(५) भा. १२।१३७।३४ ; भामु. १२।१३९।३८ मुप ( मति ) बालस्त ( लोके त ) यो ह्य ( योऽप्य ).

(६) भा. १२।१३७।३५ ; भामु. १२।१३९।३९ विनि ( ऽपि नि ) .

ब्रह्मदत्त उवाच–

[1]संवासाज्जायते स्नेहो जीवितान्तकरेष्वपि ।
अन्योन्यस्य च विश्वासः श्वपचेन शुनो यथा ॥

श्वपचः चाण्डालः श्वमांसाहारोऽपि शुना सह सख्यमेति । संवादादेवं मामपि जानीहीत्यर्थः । नीटी.

अन्योन्यकृतवैराणां संवासान्मृदुतां गतम् ॥
नैव तिष्ठति तद्वैरं पुष्करस्थमिवोदकम् ॥

पूजन्युवाच–

[2]वैरं पञ्चसमुत्थानं तच्च बुध्यन्ति पण्डिताः ।
स्त्रीकृतं वास्तुजं वाग्जं ससपत्नापराधजम् ॥

वैरं स्त्रीकृतं कृष्णशिशुपालयोः । वास्तु गृहादिकं स्थानम् , तज्जं कौरवपाण्डवानाम् । वाग्जं द्रोणद्रुपदयोः । सापत्नं जातिवैरं मूषकमार्जारयोः । अपराधजम् आवयोः । तच्च तच्चेति द्वन्द्वः । ताभ्यां सहितं ससापत्नापराधजम् । नीटी.

[3]तत्र दाता निहन्तव्यः क्षत्रियेण विशेषतः ।
प्रकाशं वाऽप्रकाशं वा बुद्ध्वा देशबलादिकम् ॥

कृतवैरोऽपि दाता अर्थादिना मानयिता अर्थाशावता राज्ञा न हन्तव्यः । नीटी.

[4]कृतवैरे न विश्वासः कार्यस्त्विह सुहृद्यपि ।
छन्नं संतिष्ठते वैरं गूढोऽग्निरिव दारुषु ॥

यद्यप्येवं नित्यं फलद्वयदानात् त्वं मां न हनिष्यसीति जानामि, तथाऽपि कृतवैरे विश्वासो नीतिविरुद्ध इत्याह– कृतेति । नीटी.

(१) भा. १२।१३७।३६–३७ ; भासु. १२।१३९।४०–४१.

(२) भा. १२।१३७।३८ ; भासु. १२।१३९।४२ सपत्न ( सापत्न ).

(३) भा. १२।१३७।३९ ; भासु. १२।१३९।४३ निह ( न ह ) देश ( दोष ) दिकम् ( बलम् ).

(४) भा. १२।१३७।४० ; भासु. १२।१३९।४४.

[1]न वित्तेन न पारुष्यैर्न सान्त्वेन न च श्रुतैः ।
वैराग्निः शाम्यते राजन्नौर्वाग्निरिव सागरे ॥

पारुष्यैः गुरुशिक्षार्थं गुरुभिरुक्तैः । नीटी.

[2]न हि वैराग्निरुद्भूतः कर्म वाऽप्यपराधजम् ।
शाम्यत्यदग्ध्वा नृपते विना ह्येकतरक्षयात् ॥

वैराग्निरदग्ध्वा न शाम्यति, अपराधजं कर्म एकतरक्षयाद्विना न शाम्यतीति योजना । नीटी.

[3]सत्कृतस्यार्थमानाभ्यां स्यात्तु पूर्वापकारिणः ।
नैव शान्तिर्न विश्वासः कर्म त्रासयते बलात् ॥

[4]नैवापकारे कस्मिंश्चिदहं त्वयि तथा भवान् ।
विश्वासादुषिता पूर्वं नेदानीं विश्वसाम्यहम् ॥

कस्मिंश्चिदन्यतरे अपकार्ये अन्यतरेण बाध्ये सति अहं च त्वयि तथाऽस्मि एवं भवानपि मयि तथाऽस्तीति योज्यम् । अतो नाऽऽवयोरन्योन्यं विश्वासः संभवतीत्यर्थः । नीटी.

ब्रह्मदत्त उवाच–

[5]कालेन क्रियते कार्यं तथैव विविधाः क्रियाः ।
कालेनैव प्रवर्तन्ते कः कस्येहापराध्यति ॥

कालाधीने जगति आवयोर्मध्ये कस्यापि दोषो नास्तीत्याह– कालेनेत्यादिना । नीटी.

(१) भा. १२।१३७।४१ ; भासु. १२।१३९।४५ सान्त्वेन न च श्रुतैः ( च सान्त्वेन वाऽऽश्रितैः ) वैरा (कोपा) न्नौर्वा ( न्तोया ).

(२) भा. १२।१३७।४२ ; भासु. १२।१३९।४६ वाऽप्य ( चाप्य ).

(३) भा. १२।१३७।४३ ; भासु. १२।१३९।४७ स्यात्तु ( अनु ) नैव शान्तिर्न ( नाऽऽदेयोऽमित्र ) बलात् ( ऽबलान् ).

(४) भा. १२।१३७।४४ ; भासु. १२।१३९।४८ कारे ( कार्ये ) तृतीयचरणे ( उषिताऽस्मि गृहेऽहं ते ).

(५) भा. १२।१३७।४५ ; भासु. १२।१३९।४९ नैव ( नैते ).

[1]तुल्यं चोभे प्रवर्तेते मरणं जन्म चैव ह।
कार्यते चैव कालेन तन्निमित्तं हि जीवति॥

कार्यते जायते। तन्निमित्तं कालनिमित्तम्। न जीवति म्रियते। नीटी.

[2]बध्यन्ते युगपत्केचिदेकैकस्य न चापरे।
कालो दहति भूतानि संप्राप्याग्निरिवेन्धनम्॥

एकैकस्य एकैकेन। नीटी.

[3]नाहं प्रमाणं नैव त्वमन्योन्यकरणे शुभे।
कालो नित्यमुपाधत्ते सुखं दुःखं च देहिनाम्॥

[4]एवं वसेह सस्नेहा यथाकालमहिंसिता।
यत्कृतं तच्च मे क्षान्तं त्वं चैव क्षम पूजनि॥

क्षम क्षमस्व। नीटी.

पूजन्युवाच—

[5]यदि कालः प्रमाणं ते न वैरं कस्यचिद्भवेत्।
कस्मात्त्वपचितिं यान्ति बान्धवा बान्धवे हते॥

[6]कस्माद्देवासुराः पूर्वमन्योन्यमभिजघ्निरे।
यदि कालेन निर्याणं सुखदुःखे भवाभवौ॥

[7]भिषजो भेषजं कर्तुं कस्मादिच्छन्ति रोगिणे।
यदि कालेन पच्यन्ते भेषजैः किं प्रयोजनम्॥

[1]प्रलापः क्रियते कस्मात्सुमहाञ् शोकमूर्छितैः।
यदि कालः प्रमाणं ते कस्माद्धर्मोऽस्ति कर्तृषु॥

कस्माद्धर्मोऽस्ति कर्तृषु तदा विधिनिषेधकथा व्यर्था स्यादिति भावः। नीटी.

[2]तव पुत्रो ममापत्यं हतवान् हिंसितो मया।
अनन्तरं त्वया चाहं बन्धनीया महीपते॥

[3]अहं हि पुत्रशोकेन कृतपापा तवाऽऽत्मजे।
तथा त्वया प्रहर्तव्यं मयि तत्त्वं च मे शृणु॥

[4]भक्षार्थं क्रीडनार्थं वा नरा वाञ्छन्ति पक्षिणः।
तृतीयो नास्ति संयोगो वधबन्धादृते क्षमः॥

[5]वधबन्धभयादेके मोक्षतन्त्रमुपागताः।
मरणोत्पातजं दुःखमाहुर्धर्मविदो जनाः॥

[6]सर्वस्य दयिताः प्राणाः सर्वस्य दयिताः सुताः।
दुःखादुद्विजते सर्वः सर्वस्य सुखमीप्सितम्॥

[7]दुःखं जरा ब्रह्मदत्त दुःखमर्थविपर्ययः।
दुःखं चानिष्टसंवासो दुःखमिष्टवियोगजम्॥

[8]वैरबन्धकृतं दुःखं हिंसाजं स्त्रीकृतं तथा।
दुःखं सुखेन सततं जनाद्विपरिवर्तते॥

---

(१) भा. १२।१३७।४६ ; भासु. १२।१३९।५० हि (न).

(२) भा. १२।१३७।४७ ; भासु. १२।१३९।५१.

(३) भा. १२।१३७।४८ ; भासु. १२।१३९।५२ न्यकरणे (न्यं कारणं) धत्ते (दत्ते).

(४) भा. १२।१३७।४९ ; भासु. १२।१३९।५३ काल (काम) तच्च (तत्तु) चैव (च वै).

(५) भा. १२।१३७।५० ; भासु. १२।१३९।५४ न्धवे हते (न्धवैर्हतैः).

(६) भा. १२।१३७।५१ ; भासु. १२।१३९।५५ सुखदुःखे (सुखं दुःखं).

(७) भा. १२।१३७।५२ ; भासु. १२।१३९।५६ भेषजं (भैषजं) गिणे (गिणः).

(१) भा. १२।१३७।५३ ; भासु. १२।१३९।५७ क्रियते कस्मात्सुमहान् (सुमहान् कस्मात् क्रियते).

(२) भा. १२।१३७।५४ ; भासु. १२।१३९।५८ हिंसितो (स हतो) उत्तरार्धे (अनन्तरं त्वयाऽहं च हन्तव्या हि नराधिप॥).

(३) भा. १२।१३७।५५ ; भासु. १२।१३९।५९ तथा (यथा) मयि (तथा).

(४) भा. १२।१३७।५६ ; भासु. १२।१३९।६० वा (च).

(५) भा. १२।१३७।५७ ; भासु. १२।१३९।६१ देके (देते) गताः (श्रिताः) खमाहुर्धर्म (खं प्राहुर्वेद).

(६) भा. १२।१३७।५८ ; भासु. १२।१३९।६२.

(७) भा. १२।१३७।५९ ; भासु. १२।१३९।६३ गजम् (जनम्).

(८) भा. १२।१३७।६० ; भासु. १२।१३९।६४ वैर (वध) हिंसाजं स्त्रीकृतं (स्त्रीकृतं सहजं) सुखेन (सुतेन).

सुतेन नष्टेन दुष्टेन वा । नीटी.

[1]न दुःखं परदुःखे वै केचिदाहुरबुद्धयः ।
यो दुःखं नाभिजानाति स जल्पति महाजने ॥

यस्तु शोचति दुःखार्तः स कथं वक्तुमुत्सहेत् ।
रसज्ञः सर्वदुःखस्य यथाऽऽत्मनि तथा परे ॥

यत्कृतं ते मया राजंस्त्वया च मम यत्कृतम् ।
न तद्वर्षशतैः शक्यं व्यपोहितुमरिंदम ॥

[2]आवयोः कृतमन्योन्यं तत्र संधिर्न विद्यते ।
स्मृत्वा स्मृत्वा हि ते पुत्रं नवं वरं भविष्यति ॥

कृतम् अलं पर्याप्तम्, सख्यमिति शेषः । नीटी.

[3]वैरमन्तिकमासज्य यः प्रीतिं कर्तुमिच्छति ।
मृन्मयस्येव भग्नस्य तस्य संधिर्न विद्यते ॥

[4]निश्चितश्चार्थशास्त्रज्ञैरविश्वासः सुखोदयः ।
उशनाश्चाथ गाथे द्वे प्रह्लादायाब्रवीत्पुरा ॥

[5]ये वैरिणः श्रद्दधते सत्ये सत्येतरेऽपि वा ।
ते श्रद्दधाना वध्यन्ते मधु शुष्कतृणैर्यथा ॥

वैरिणः, वाक्ये इति शेषः । शत्रुणा दर्शितं पुरःस्थितं मधु श्रद्दधानाः शुष्कतृणैश्छन्ने प्रपाते यथा पतन्ति तद्वदेते इत्यर्थः । नीटी.

[1]न हि वैराणि शाम्यन्ति कुलेष्वा दशमाद्युगात् ।
आख्यातारश्च विद्यन्ते कुले चेद्विद्यते पुमान् ॥

[2]उपगुह्य हि वैराणि सान्त्वयन्ति नराधिपाः ।
अथैनं प्रतिपिंषन्ति पूर्णं घटमिवाश्मनि ॥

[3]सदा न विश्वसेद्राजन् पापं कृत्वेह कस्यचित् ।
अपकृत्य परेषां हि विश्वासाद् दुःखमश्नुते ॥

ब्रह्मदत्त उवाच—

[4]नाविश्वासाच्चिन्वतेऽर्थान्नेहन्ते चापि किंचन ।
भयादेकतरान्नित्यं मृतकल्पा भवन्ति च ॥

सर्वथाऽनाश्वासे नृणां जीवनमेव न स्यादित्याह— नेति । नीटी.

पूजन्युवाच—

[5]यस्येह व्रणिनौ पादौ पद्भ्यां च परिसर्पति ।
क्षण्येते तस्य तौ पादौ सुगुप्तमभिधावतः ॥

स्वयं दोषवती अहं निर्दोषमपि त्वया सह वासं कर्तुं न शक्नोमीत्याह दृष्टान्तमुखेन— यस्येत्यादिना । नीटी.

[6]नेत्राभ्यां सरुजाभ्यां यः प्रतिवातमुदीक्षते ।
तस्य वायुरुजाऽत्यर्थं नेत्रयोर्भवति ध्रुवम् ॥

[7]दुष्टं पन्थानमाश्रित्य यो मोहादभिपद्यते ।
आत्मनो बलमज्ञात्वा तदन्तं तस्य जीवितम् ॥

---

(१) भा. १२।१३७।६१–६३ ; भामु. १२।१३९।६५–६७.

(२) भा. १२।१३७।६४ ; भामु. १२।१३९।६८ तत्र (पुनः).

(३) भा. १२।१३७।६५ ; भामु. १२।१३९।६९ सैज्ज (साद्य) तस्य (यथा).

(४) भा. १२।१३७।६६ ; भामु. १२।१३९।७० पूर्वार्धे (निश्चयः स्वार्थशास्त्रेषु विश्वासश्चासुखोदयः ।) नाश्चाथ (ना चैव) प्रह्ला (प्रह्ला).

(५) भा. १२।१३७।६७ ; भामु. १२।१३९।७१ तृतीयचरणे (वध्यन्ते श्रद्दधानास्तु).

(१) भा. १२।१३७।६८ ; भामु. १२।१३९।७२ द्वितीयचरणे (कुले दुःखगतानि च) चेद्विद्यते (वै म्रियते).

(२) भा. १२।१३७।६९ ; भामु. १२।१३९।७३ गुह्य हि (गृह्य तु) धिपाः (धिप).

(३) भा. १२।१३७।७० ; भामु. १२।१३९।७४ द्राजन् (द्राजा).

(४) भा. १२।१३७।७१ ; भामु. १२।१३९।७५ चिन्वतेऽर्थान्नेहन्ते (द्विन्दतेऽर्थानीहते) देक (स्वेक).

(५) भा. १२।१३७।७२ ; भामु. १२।१३९।७६ क्षण्येते (खन्येते) मभि (मिद्द).

(६) भा. १२।१३७।७३ ; भामु. १२।१३९।७७.

(७) भा. १२।१३७।७४; भामु. १२।१३९।७८ श्रित्य (साद्य) दभि (द्रुप) ज्ञात्वा (ज्ञाय).

[1]यस्तु वर्षमविज्ञाय क्षेत्रं कृषति मानवः ।
हीनं पुरुषकारेण सस्यं नैवाऽऽप्नुते पुनः ॥

[2]यश्च तिक्तं कषायं वाऽप्यास्वादविधुरं हितम् ।
आहारं कुरुते नित्यं सोऽमृतत्वाय कल्पते ॥

[3]पथ्यं भुक्त्वा नरो लोभाद्योऽन्यदश्नाति भोजनम् ।
परिणाममविज्ञाय तदन्तं तस्य जीवितम् ॥

[4]दैवं पुरुषकारश्च स्थितावन्योन्यसंश्रयात् ।
उदात्तानां कर्म तन्त्रं दैवं क्लीबा उपासते ॥

[5]कर्म चाऽऽत्महितं कार्यं तीक्ष्णं वा यदि वा मृदु ।
ग्रस्यतेऽकर्मशीलस्तु सदाऽनर्थैरकिंचनः ॥

अकर्मशील इति च्छेदः । नीटी.

[6]तस्मात्संशयितेऽप्यर्थे कार्य एव पराक्रमः ।
सर्वस्वमपि संत्यज्य कार्यमात्महितं नरैः ॥

अर्थे कालदैवस्वभावाख्यम् । नीटी.

[7]विद्या शौर्यं च दाक्ष्यं च बलं धैर्यं च पञ्चकम् ।
मित्राणि सहजान्याहुर्वर्तयन्तीह यैर्बुधाः ॥

बलं वैराग्यम् । नीटी.

[1]निवेशनं च कुप्यं च क्षेत्रं भार्या सुहृज्जनः ।
एतान्युपचितान्याहुः सर्वत्र लभते पुमान् ॥

कुप्यं ताम्रादि । चात् अकुप्यं स्वर्णरत्नादि । उपहितानि उपमित्राणि । नीटी.

[2]सर्वत्र रमते प्राज्ञः सर्वत्र च विरोचते ।
न विभीषयते कंचिद् भीषितो न बिभेति च ॥

विद्यादीनां फलानि क्रमेणाऽऽह— सर्वत्रेति । कश्चित् , तमिति शेषः । नीटी.

[3]नित्यं बुद्धिमतो ह्यर्थः स्वल्पकोऽपि विवर्धते ।
दाक्ष्येण कुरुते कर्म संयमात्प्रतितिष्ठति ॥

दाक्ष्येण वर्धते । संयमात् दाक्ष्यसंकोचात् प्रतितिष्ठति प्रतिष्ठां स्थितिमेव गच्छति । वर्धते इत्यर्थः । नीटी.

[4]गृहस्नेहावबद्धानां नराणामल्पमेधसाम् ।
कुस्त्री खादति मांसानि माघमा सेगवामिव ॥

बलहीनस्यावस्थामाह— गृहेति । खादति स्वापराधैस्तं संतापयति शुष्कं करोति । माघमां कर्कटीम् । सेगवाः तदपत्यानि । कर्कट्या नाशहेतुर्गर्भ एवेति प्रसिद्धम् । नीटी.

[5]गृहं क्षेत्राणि मित्राणि स्वदेश इति चापरे ।
इत्येवमवसीदन्ति नरा बुद्धिविपर्यये ॥

निर्धैर्यस्याऽऽह— गृहमिति । नीटी.

---

(१) भा. १२।१३७।७५ ; भामु. १२।१३९।७९ कृषति मानवः (कर्षति कर्षकः) हीनं (हीनः) ऽऽप्नुते पुनः (श्नुते ततः).

(२) भा. १२।१३७।७६ ; भामु. १२।१३९।८० यश्च (यस्तु) ऽप्यास्वादविधुरं (स्वादु वा मधुरं).

(३) भा. १२।१३७।७७ ; भामु. १२।१३९।८१ पूर्वार्धे (पथ्यं भुक्त्वा तु यो मोहाद्दुष्टमश्नाति भोजनम् ।).

(४) भा. १२।१३७।७८ ; भामु. १२।१३९।८२ तृतीयचरणे (उदाराणां तु सत्कर्म).

(५) भा. १२।१३७।७९ ; भामु. १२।१३९।८३.

(६) भा. १२।१३७।८० ; भामु. १२।१३९।८४ त्संशयितेऽप्यर्थे (त्सर्वं व्यपोह्यार्थं).

(७) भा. १२।१३७।८१ ; भामु. १२।१३९।८५ ञ्चकम् (ञ्चमम्) यैर्बु (तैर्बु).

(१) भा. १२।१३७।८२ ; भामु. १२।१३९।८६ चिता (हिता).

(२) भा. १२।१३७।८३ ; भामु. १२।१३९।८७ रोच (राज) कंचि (कश्चि).

(३) भा. १२।१३७।८४ ; भामु. १२।१३९।८८ ह्यर्थः (ऽप्यर्थः) ण कुरुते (णाकुर्वतः).

(४) भा. १२।१३७।८५ ; भामु. १२।१३९।८९ चतुर्थचरणे (माघमां सेगवा इव).

(५) भा. १२।१३७।८६ ; भामु. १२।१३९।९०.

[1]उत्पतेत्सरुजाद्देशाद्व्याधिदुर्भिक्षपीडितात् ।
अन्यत्र वस्तुं गच्छेद्वा वसेद्वा नित्यमानितः ॥

[2]तस्मादन्यत्र यास्यामि वस्तुं नाहमिहोत्सहे ।
कृतमेतदनाहार्यं तव पुत्रेण पार्थिव ॥

मे मया । नीटी.

[3]कुभार्यां च कुपुत्रं च कुराजानं कुसौहृदम् ।
कुसंबन्धं कुदेशं च दूरतः परिवर्जयेत् ॥

[4]कुमित्रे नास्ति विश्वासः कुभार्यायां कुतो रतिः ।
कुराज्ये निर्वृतिर्नास्ति कुदेशे न प्रजीव्यते ॥

[5]कुमित्रे संगतं नास्ति नित्यमस्थिरसौहृदे ।
अवमानः कुसंबन्धे भवत्यर्थविपर्यये ॥

[6]सा भार्या या प्रियं ब्रूते स पुत्रो यत्र निर्वृतिः ।
तन्मित्रं यत्र विश्वासः स देशो यत्र जीव्यते ॥

[7]यत्र नास्ति बलात्कारः स राजा तीव्रशासनः ।
न चैव ह्यभिसंबन्धो दरिद्रं यो बुभूषति ॥

यत्र देशे बलात्कारो नास्ति तत्र भीरेव नास्ति । यः राजा दरिद्रं जनं बुभूषति पालयितुमिच्छति स एव तेन सह पाल्यपालकभावलक्षणः संबन्ध इति योज्यम् । नीटी.

भार्या देशोऽथ मित्राणि पुत्रसंबन्धिबान्धवाः ।
एतत् सर्वं गुणवति धर्मनेत्रे महीपतौ ॥

अधर्मज्ञस्य विलयं प्रजा गच्छन्त्यनिग्रहात् ।
राजा मूलं त्रिवर्गस्य अप्रमत्तोऽनुपालयन् ॥

धर्मनेत्रः धर्मनेता । निग्रहात् बन्दीरूपात्, न तु स्वेच्छया । स्वप्रमत्तः सुतरामप्रमत्तः । नीटी.

बलिषड्भागमुद्धृत्य बलिं तमुपयोजयेत् ।
न रक्षति प्रजाः सम्यग् यः स पार्थिवतस्करः ॥

समुपयोजयेत् भक्षयेत्, अथ च न रक्षति । नीटी.

दत्त्वाऽभयं यः स्वयमेव राजा
न तत् प्रमाणं कुरुते यथावत् ।
स सर्वलोकादुपलभ्यपाप-
मधर्मबुद्धिर्निरयं प्रयाति ॥

अभयमिति छेदः । नीटी.

दत्त्वाऽभयं यः स राजा प्रमाणं कुरुते सदा ।
स सर्वसुखकृज्ज्ञेयः प्रजा धर्मेण पालयन् ॥

पिता माता गुरुर्गोप्ता वह्निर्वैश्रवणो यमः ।
सप्त राज्ञो गुणानेतान् मनुराह प्रजापतिः ॥

पिता हि राजा राष्ट्रस्य प्रजानां यो-
ऽनुकम्पकः ।
तस्मिन् मिथ्याप्रणीते हि तिर्यग्गच्छति
मानवः ॥

संभावयति मातेव दीनमभ्यवपद्यते ।
दहत्यग्निरिवानिष्टान् यमयन् भवते यमः ॥

संभावयति इष्टं चिन्तयति । उपपद्यते पालयति । नीटी.

इष्टेषु विसृजत्यर्थान् कुबेर इव कामदः ।
गुरुर्धर्मोपदेशेन गोप्ता च परिपालनात् ॥

यस्तु रञ्जयते राजा पौरजानपदान् गुणैः ।
न तस्य भ्रश्यते राज्यं गुणधर्मानुपालनात् ॥

स्वयं समुपजानन् हि पौरजानपदक्रियाः ।
स सुखं मोदते भूप इहलोके परत्र च ॥

---

(१) भा. १२।१३७।८७ ; भामु. १२।१३९।९१ त्सरु (त्सह).

(२) भा. १२।१३७।८८ ; भामु. १२।१३९।९२ नाहार्यं (नार्यं मे) पुत्रेण (पुत्रे च).

(३) भा. १२।१३७।८९ ; भामु. १२।१३९।९३.

(४) भा. १२।१३७।९० ; भामु. १२।१३९।९४ मित्रे (पुत्रे) न प्रजीव्यते (नास्ति जीविका).

(५) भा. १२।१३७।९१ ; भामु. १२।१३९।९५ गतं (गतिः).

(६) भा. १२।१३७।९२ ; भामु. १२।१३९।९६.

(७) भा. १२।१३७।९३–१०६. शेषस्थलादिनिर्देशः 'राजनीतेः सामान्यसिद्धान्ताः०' इत्यस्मिन् प्रकरणे (पृ. ६३३) द्रष्टव्यः .

नित्योद्विग्नाः प्रजा यस्य करभारप्रपीडिताः ।
अनर्थैर्विप्रलुप्यन्ते स गच्छति पराभवम् ॥

प्रजा यस्य विवर्धन्ते सरसीव महोत्पलम् ।
स सर्वयज्ञफलभाग्राजा लोके महीयते ॥

[1]बलिना विग्रहो राजन् न कथंचित्प्रशस्यते ।
बलिना विगृहीतस्य कुतो राज्यं कुतः सुखम् ॥

भीष्म उवाच—

[2]सैवमुक्त्वा शकुनिका ब्रह्मदत्तं नराधिपम् ।
राजानं समनुज्ञाप्य जगामाथेप्सितां दिशम् ॥

[3]एतत्ते ब्रह्मदत्तस्य पूजन्या सह भाषितम् ।
मयोक्तं भरतश्रेष्ठ किमन्यच्छ्रोतुमिच्छसि ॥

कणिङ्कभरद्वाजप्रोक्ता नीतिः षाड्गुण्यविषयिणी

युधिष्ठिर उवाच—

[4]युगक्षयात्परिक्षीणे धर्मे लोके च भारत ।
दस्युभिः पीड्यमाने च कथं स्थेयं पितामह ॥

भीष्म उवाच—

[5]हन्त ते कथयिष्यामि नीतिमापत्सु भारत ।
उत्सृज्यापि घृणां काले यथा वर्तेत भूमिपः ॥

घृणां दयाम् । नीटी.

[6]अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
भरद्वाजस्य संवादं राज्ञः शत्रुंतपस्य च ॥

[1]राजा शत्रुंतपो नाम सौवीराणां महारथः ।
कणिङ्कमुपसंगम्य पप्रच्छार्थविनिश्चयम् ॥

[2]अलब्धस्य कथं लिप्सा लब्धं केन विवर्धते ।
वर्धितं पालयेत्केन पालितं प्रणयेत्कथम् ॥

[3]तस्मै विनिश्चयार्थं स परिपृष्टार्थनिश्चयः ।
उवाच ब्राह्मणो वाक्यमिदं हेतुमदुत्तरम् ॥

[4]नित्यमुद्यतदण्डः स्यान्नित्यं विवृतपौरुषः ।
अच्छिद्रश्छिद्रदर्शी च परेषां विवरानुगः ॥

[5]नित्यमुद्यतदण्डस्य भृशमुद्विजते जनः ।
तस्मात्सर्वाणि भूतानि दण्डेनैव प्ररोधयेत् ॥

[6]एवमेव प्रशंसन्ति पण्डितास्तत्त्वदर्शिनः ।
तस्माच्चतुष्टये तस्मिन्प्रधानो दण्ड उच्यते ॥

[7]छिन्नमूले ह्यधिष्ठाने सर्वे तज्जीविनो हताः ।
कथं हि शाखास्तिष्ठेयुश्छिन्नमूले वनस्पतौ ॥

[8]मूलमेवाऽऽदितश्छिन्द्यात्परपक्षस्य पण्डितः ।
ततः सहायान्पक्षं च सर्वमेवानुसारयेत् ॥

---

(१) भा. १२।१३७।१०७; भामु. १२।१३९। १११ कथं (कदा) विगृहीतस्य (विग्रहो यस्य).

(२) भा. १२।१३७।१०८; भामु. १२।१३९। ११२ थेप्सि (भीप्सि).

(३) भा. १२।१३७।१०९; भामु. १२।१३९। ११३ भरत (नृपति).

(४) भा. १२।१३८।१; भामु. १२।१४०।१.

(५) भा. १२।१३८।२; भामु. १२।१४०।२ हन्त ते कथ (अत्र ते वर्त).

(६) भा. १२।१३८।३; भामु. १२।१४०।३ भर (भार) तपस (जयस).

(१) भा. १२।१३८।४; भामु. १२।१४०।४ तपो (जयो) राणां (रेषु) कणिङ्कमुपसं (भारद्वाजमुपा).

(२) भा. १२।१३८।५; भामु. १२।१४०।५ लयेत्के (ल्यते के).

(३) भा. १२।१३८।६; भामु. १२।१४०।६ पूर्वार्धे (तस्मै विनिश्चितार्थाय परिपृष्टोऽर्थनिश्चयम् ।) त्तरम् (त्तमम्).

(४) भा. १२।१३८।७; भामु. १२।१४०।७.

(५) भा. १२।१३८।८; भामु. १२।१४०।८ जनः (नरः) प्ररो (प्रसा).

(६) भा. १२।१३८।९; भामु. १२।१४०।९ एवमेव (एवं दण्डं).

(७) भा. १२।१३८।१०; भामु. १२।१४०।१० पूर्वार्धे (छिन्नमूले त्वधिष्ठाने सर्वेषां जीवनं हतम् ।).

(८) भा. १२।१३८।११; भामु. १२।१४०।११ चतुर्थचरणे (मूलमेवानुसाधयेत्).

[1]सुमन्त्रितं सुविक्रान्तं सुयुद्धं सुपलायितम् ।
आपदां पदकालेषु कुर्वीत न विचारयेत् ॥

[2]वाङ्मात्रेण विनीतः स्याद्धृदयेन यथा क्षुरः ।
श्लक्ष्णपूर्वाभिभाषी च कामक्रोधौ विवर्जयेत् ॥

[3]सपत्नसहिते कार्ये कृत्वा संधिं न विश्वसेत् ।
अपक्रामेत्ततः क्षिप्रं कृतकार्यो विचक्षणः ॥

[4]शत्रुं च मित्ररूपेण सान्त्वेनैवाभिसान्त्वयेत् ।
नित्यशश्चोद्विजेत्तस्मात्सर्पाद्वेश्मगतादिव ॥

[5]यस्य बुद्धिं परिभवेत्तमतीतेन सान्त्वयेत् ।
अनागतेन दुष्प्रज्ञं प्रत्युत्पन्नेन पण्डितम् ॥

[6]अञ्जलिं शपथं सान्त्वं प्रणम्य शिरसा वदेत् ।
अश्रुप्रपातनं चैव कर्तव्यं भूतिमिच्छता ॥

[7]वहेदमित्रं स्कन्धेन यावत्कालविपर्ययः ।
अथैनमागते काले भिन्द्याद्घटमिवाश्मनि ॥

[8]मुहूर्तमपि राजेन्द्र तिन्दुकालातवज्ज्वलेत् ।
न तुषाग्निरिवानर्चिर्धूमायेत नरश्चिरम् ॥

(१) भा. १२।१३८।१२ ; भामु. १२।१४०।१२ तृतीयचरणे ( आपदास्पदकाले तु ).

(२) भा. १२।१३८।१३ ; भामु. १२।१४०।१३.

(३) भा. १२।१३८।१४ ; भामु. १२।१४०।१४ क्षिप्रं ( शीघ्रं ).

(४) भा. १२।१३८।१५ ; भामु. १२।१४०।१५ त्सर्पाद्वेश्मगता ( द्गृहात्सर्पयुता ).

(५) भा. १२।१३८।१६ ; भामु. १२।१४०।१६ यस्य बुद्धिं ( यथा बुद्धिः ).

(६) भा. १२।१३८।१७ ; भामु. १२।१४०।१७ पात ( मार्जे ).

(७) भा. १२।१३८।१८ ; भामु. १२।१४०।१८ विपर्ययः ( स्य पर्ययः ) तृतीयचरणे ( प्राप्तकालं तु विज्ञाय ).

(८) भा. १२।१३८।१९ ; भामु. १२।१४०।१९ नरश्चिरम् ( चिरं नरः ).

[1]नानर्थकेनार्थवत्त्वं कृतघ्नेन समाचरेत् ।
अर्थे तु शक्यते भोक्तुं कृतकार्योऽवमन्यते ।
तस्मात्सर्वाणि कार्याणि सावशेषाणि कारयेत् ॥

नानार्थिकः बहुप्रयोजनवान् कृतघ्ने पुरुषे अर्थसंबन्धं न समाचरेत् । 'मानार्थिकः' इति पाठे मानी । यद्याचरेत्तर्हि तत्कार्यसमाप्तेः प्रागेवाऽऽचरेदित्याह— अर्थीति । फलितमाह— तस्मादिति सार्धः । नीटी.

[2]कोकिलस्य वराहस्य मेरोः शून्यस्य वेश्मनः ।
व्याडस्य भक्तिचित्रस्य यच्छ्रेष्ठं तत्समाचरेत् ॥

कोकिलस्य श्रेयः स्वपोष्याणां परैः पोषणम् । तथाहि— 'कृषिर्वणिक्पथो दुर्गं सेतुः कुञ्जरबन्धनम् । खन्याकर-करादानं संचयार्थाष्टकं मतम् ॥' । यः कीनाशः शतं निवर्तनानि भूमेः कर्षति तेन विष्टिरूपेण राजकीयमपि निवर्तनदशकं कर्षणीयं स्वीयवद्रक्षणीयं च । तदुत्पन्नं धान्यादिकं राज्ञे देयम् । एवमेव यो वणिक् शतेन बलीवर्दैः पण्यमाहरति तेन राजकीया अपि दश बलीवर्दा वोढव्याः पोषणीयाश्च । दुर्गे अरण्यादौ 'मार्गं रक्षामः' इति व्यपदेशेन पान्थेभ्यो वेतनं ग्राह्यम् । एवं सेतौ नदीतरणे । प्रतिग्रामं कुञ्जरान्विभज्य बध्नीयात्, ग्रामीणैरेव तेषां पोषणं कर्तव्यम् । इत्येवमादि यथायथ-मूह्यम् । एवं सर्वोऽपि राजकीयः कुटुम्बार्थः प्रजाद्वारैव निर्वोढव्यः । षड्भागहारस्तु कोशार्थमुपयुज्यते । कोशश्च धर्माय परावमर्दाय वोपयुज्यते इत्यन्यत् । वराहस्य श्रेयः वराहश्रेयः मूलोत्खननम्, तच्च राजा शत्रूणां कुर्यात् । मेरोरचञ्चलत्वमनुल्लङ्घनीयत्वं च, तत्स्वयमात्मन इच्छेत् । शून्यस्य वेश्मनः संपदागम इष्टः, तमिच्छेत् । नटस्य नानारूपत्वमिष्टम् । एवं राजा स्निग्धप्रसन्नादीन् गुणान् बिभृयात् । 'व्यालस्य' इति पाठे सर्पवदवन्ध्यकोपत्व-मिष्टम् । भक्तिमित्रस्य स्वाराध्योदयः इष्टः । एवं

(१) भा. १२।१३८।२० ; भामु. १२।१४०।२० प्रथमचरणे ( नानार्थिकोऽर्थसंबन्धं ) अर्थे ( अर्थी ).

(२) भा. १२।१३८।२१ ; भामु. १२।१४०।२१ व्याडस्य ( नटस्य ) चित्रस्य यच्छ्रेष्ठं ( मित्रस्य यच्छ्रेयः ).

स्वप्रतिपाल्यानां प्रजानामुदयो राज्ञा नित्यमेष्टव्य इत्यर्थः । नीटी.

[1]उत्थायोत्थाय गच्छेच्च नित्ययुक्तो रिपोर्गृहान् ।
कुशलं चापि पृच्छेत यद्यप्यकुशलं भवेत् ॥

[2]नालसाः प्राप्नुवन्त्यर्थान्न क्लीबा न च मानिनः ।
न च लोकरवाद्भीता न च शश्वत्प्रतीक्षिणः ॥

[3]नास्य च्छिद्रं परो विद्याद्विद्याच्छिद्रं परस्य तु ।
गूहेत्कूर्म इवाङ्गानि रक्षेद्विवरमात्मनः ॥

[4]बकवच्चिन्तयेदर्थान्सिंहवच्च पराक्रमेत् ।
वृकवच्चावलुम्पेत शशवच्च विनिष्पतेत् ॥

बकादीनामेकाग्रत्वं निर्भयत्वं शीघ्रकारित्वमपरावृत्तित्वं च गुणाः, तान्परार्थादाने राजा श्रयेदित्यर्थः । नीटी.

[5]पानमक्षास्तथा नार्यो मृगया गीतवादितम् ।
एतानि युक्त्या सेवेत प्रसङ्गो ह्यत्र दोषवान् ॥

[6]कुर्यात्तृणमयं चापं शयीत मृगशायिकाम् ।
अन्धः स्यादन्धवेलायां बाधिर्यमपि संश्रयेत् ॥

[7]देशं कालं समासाद्य विक्रमेत विचक्षणः ।
देशकालाभ्यतीतो हि विक्रमो निष्फलो भवेत् ॥

(१) भा. १२।१३८।२२ ; भामु. १२।१४०।२२ च्छेच्च (च्छेत) चापि (चास्य).

(२) भा. १२।१३८।२३ ; भामु. १२।१४०।२३ न च मा (नाभिमा) च शश्व (वै शश्व).

(३) भा. १२।१३८।२४ ; भामु. १२।१४०।२४ नास्य च्छिद्रं परो (नाऽऽत्मच्छिद्रं रिपुः).

(४) भा. १२।१३८।२५ ; भामु. १२।१४०।२५ च्चाव (चाप्य) शश (शर).

(५) भा. १२।१३८।२६ ; भामु. १२।१४०। २६ ; राक. १४५ दितम् (दिते).

(६) भा. १२।१३८।२७ ; भामु. १२।१४०।२७.

(७) भा. १२।१३८।२८ ; भामु. १२।१४०।२८ देशं कालं (देशकालौ) कालाभ्य (कालव्य).

[1]कालाकालौ संप्रधार्य बलाबलमथाऽऽत्मनः ।
परस्परबलं ज्ञात्वा तथाऽऽत्मानं नियोजयेत् ॥

[2]दण्डेनोपनतं शत्रुं यो राजा न नियच्छति ।
स मृत्युमुपगृह्याऽऽस्ते गर्भमश्वतरी यथा ॥

अश्वतरी गर्दभजा अश्वा उदरभेदेनैव प्रसूते इति प्रसिद्धम् । नीटी.

[3]सुपुष्पितः स्यादफलः फलवान्स्याद् दुरारुहः ।
आमः स्यात्पक्कसंकाशो न च शीर्येत कस्यचित् ॥

आशां कालवतीं कुर्यात्तां च विघ्नेन योजयेत् ।
विघ्नं निमित्ततो ब्रूयान्निमित्तं चापि हेतुतः ॥

भीतवत्संविधातव्यं यावद्भयमनागतम् ।
आगतं तु भयं दृष्ट्वा प्रहर्तव्यमभीतवत् ॥

न संशयमनारुह्य नरो भद्राणि पश्यति ।
संशयं पुनरारुह्य यदि जीवति पश्यति ॥

[4]अनागतं विजानीयाद्यच्छेद्भयमुपस्थितम् ।
पुनर्वृद्धिक्षयात्किंचिदभिवृत्तं निशामयेत् ॥

निगृहीतमपि भयं पुनर्विवृद्धिभयादनिवृत्तमिव निशामयेत् जानीयात् । सर्वदा अवहितस्तिष्ठेदिति भावः । नीटी.

[5]प्रत्युपस्थितकालस्य सुखस्य परिवर्जनम् ।
अनागतसुखाशा च नैष बुद्धिमतां नयः ॥

(१) भा. १२।१३८।२९ ; भामु. १२।१४०।२९ स्पर (स्परं) तथा (तत्रा).

(२) भा. १२।१३८।३० ; भामु. १२।१४०।३० गृह्याऽऽस्ते (गृह्णाति).

(३) भा. १२।१३८।३१–३४ ; भामु. १२।१४०। ३१–३४.

(४) भा. १२।१३८।३५ ; भामु. १२।१४०।३५ क्षया (भया) दभि (दनि).

(५) भा. १२।१३८।३६ ; भामु. १२।१४०।३६ नैष (नैव).

[1]योऽरिणा सह संधाय सुखं स्वपिति विश्वसन्।
स वृक्षाग्रप्रसुप्तो वा पतितः प्रतिबुध्यते ॥
[2]कर्मणा येन तेनेह मृदुना दारुणेन वा।
उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत् ॥
[3]ये सपत्नाः सपत्नानां सर्वांस्तानपवत्सयेत्।
आत्मनश्चापि बोद्धव्याश्चाराः प्रणिहिताः परैः ॥
[4]चारः सुविहितः कार्य आत्मनोऽथ परस्य च।
पाषण्डांस्तापसादींश्च परराष्ट्रं प्रवेशयेत् ॥
[5]उद्यानेषु विहारेषु प्रपास्वावसथेषु च।
पानागारेषु वेशेषु तीर्थेषु च सभासु च ॥
[6]धर्माभिचारिणः पापाश्चारा लोकस्य कण्टकाः।
समागच्छन्ति तान्बुद्ध्वा नियच्छेच्छमयेदपि ॥
[7]न विश्वसेदविश्वस्ते विश्वस्ते नापि विश्वसेत्।
विश्वस्तं भयमन्वेति नापरीक्ष्य च विश्वसेत् ॥
[8]विश्वासयित्वा तु परं तत्त्वभूतेन हेतुना।
अथास्य प्रहरेत्काले किंचिद्विचलिते पदे ॥

(१) भा. १२।१३८।३७ ; भासु. १२।१४०।३७ क्षाग्र (क्षाग्रे).

(२) भा. १२।१३८।३८ ; भासु. १२।१४०।३८ नेह (नैव) वा (च).

(३) भा. १२।१३८।३९ ; भासु. १२।१४०।३९ नपवत्स (नुपसेव) प्रणिहिताः (विनिहताः).

(४) भा. १२।१३८।४० ; भासु. १२।१४०।४० रः सुविहि (रस्त्वविदि) राष्ट्रं (राष्ट्रे).

(५) भा. १२।१३८।४१ ; भासु. १२।१४०।४१ गारेषु वे (गारे प्रवे).

(६) भा. १२।१३८।४२ ; भासु. १२।१४०।४२ श्चारा (श्चौरा) येदपि (यीत च).

(७) भा. १२।१३८।४३ ; भासु. १२।१४०।४३ नापि (नाति) तृतीयचरणे (विश्वासाद्भयमभ्येति).

(८) भा. १२।१३८।४४ ; भासु. १२।१४०।४४.

[1]अशङ्क्यमपि शङ्केत नित्यं शङ्केत शङ्कितात्।
भयं हि शङ्किताज्जातं समूलमपि कृन्तति ॥
[2]अवधानेन मौनेन काषायेण जटाजिनैः।
विश्वासयित्वा द्वेष्टारमवलुम्पेद्यथा वृकः ॥
[3]पुत्रो वा यदि वा भ्राता पिता वा यदि वा सुहृत्।
अर्थस्य विघ्नं कुर्वाणा हन्तव्या भूतिवर्धनाः ॥
[4]गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः।
उत्पथप्रतिपन्नस्य दण्डो भवति शासनम् ॥
[5]प्रत्युत्थानाभिवादाभ्यां संप्रदानेन कस्यचित्।
प्रतिपुष्कलघाती स्यात् तीक्ष्णतुण्ड इव द्विजः ॥

अभ्युत्थानादिमृदूपायैः शत्रोः प्रतिपुष्पफलघाती स्यात्। पुष्पफलं पुष्पफलं प्रति इति प्रतिपुष्पफलम्। सर्वं पुष्पं पुरुषार्थसाधनं सर्वं फलं पुरुषार्थरूपं च, तद्विनाशयेत्। तीक्ष्णतुण्डो द्विजः पक्षी यथा सर्वं वृक्षस्य पुष्पं फलं च नाशयति तद्वत्। नीटी.

[6]नाच्छित्त्वा परमर्माणि नाकृत्वा कर्म दारुणम्।
नाहत्वा मत्स्यघातीव प्राप्नोति परमां श्रियम् ॥
[7]नास्ति जात्या रिपुर्नाम मित्रं नाम न विद्यते।
सामर्थ्ययोगाज्जायन्ते मित्राणि रिपवस्तथा ॥

(१) भा. १२।१३८।४५ ; भासु. १२।१४०।४५ हि शङ्कि (ह्यशङ्कि).

(२) भा. १२।१३८।४६ ; भासु. १२।१४०।४६.

(३) भा. १२।१३८।४७ ; भासु. १२।१४०।४७ वर्धनाः (मिच्छता).

(४) भा. १२।१३८।४८ ; भासु. १२।१४०।४८ उत्पथ (उत्पथं).

(५) भा. १२।१३८।४९ ; भासु. १२।१४०।४९ प्रत्यु (अभ्यु) कस्य (केन) पुष्कलघाती स्यात् (पुष्पफलाघाती).

(६) भा. १२।१३८।५० ; भासु. १२।१४०।५० परमां (महतीं).

(७) भा. १२।१३८।५१ ; भासु. १२।१४०।५१ नाम न (वाऽपि न).

समर्थस्य तेजीयांसो रिपवो भवन्ति, अन्ये मित्राणि भवन्तीत्यर्थः । नीटी.

**[1]अमित्रं नैव मुञ्चेत ब्रुवन्तं करुणान्यपि ।**
**दुःखं तत्र न कुर्वीत हन्यात्पूर्वापकारिणम् ॥**

**[2]संग्रहानुग्रहे यत्नः सदा कार्योऽनसूयता ।**
**निग्रहश्चापि यत्नेन कर्तव्यो भूतिमिच्छता ॥**

**[3]प्रहरिष्यन्प्रियं ब्रूयात्प्रहृत्यापि प्रियोत्तरम् ।**
**अपि चास्य शिरश्छित्वा रुद्याच्छोचेद्‌थापि वा ॥**

**[4]निमन्त्रयेत सान्त्वेन संमानेन तितिक्षया ।**
**आशाकारणमित्येतत्कर्तव्यं भूतिमिच्छता ॥**

**[5]न शुष्कवैरं कुर्वीत न बाहुभ्यां नदीं तरेत् ।**
**अपार्थकमनायुष्यं गोविषाणस्य भक्षणम् ।**
**दन्ताश्च परिघृष्यन्ते रसश्चापि न लभ्यते ॥**

शुष्कं लाभशून्यम् । तत्र दृष्टान्तः— गोविषाणस्य भक्षणमिति । शत्रोरियं गौरिति तद्विषाणचर्वणे प्रवृत्तस्याऽऽयासो व्यर्थस्तद्वदित्यर्थः । सार्धः । नीटी.

**[6]त्रिवर्गे त्रिविधा पीडाऽनुबन्धास्त्रय एव च ।**
**अनुबन्धवधौ ज्ञात्वा पीडां हि परिवर्जयेत् ॥**

त्रिवर्गः धर्मार्थकामाः । तत्र त्रिविधा पीडा— धर्मेणार्थस्य पीडा, अर्थेन धर्मस्य, कामेन तयोरिति । अनुबन्धाः फलानि । धर्मस्य अर्थः, अर्थस्य कामः, कामस्य इन्द्रियप्रीतिरिति क्षुद्राः । धर्मस्य चित्तशुद्धिः, अर्थस्य यज्ञः, कामस्य जीवनमात्रमिति प्राज्ञाः । तत्र बलाबलं ज्ञात्वा अनुबन्धान् लिप्सेत । पीडां तु परिवर्जयेदेवेत्यर्थः । नीटी.

**[1]ऋणशेषोऽग्निशेषश्च शत्रुशेषस्तथैव च ।**
**पुनः पुनर्विवर्धेत स्वल्पोऽप्यनिवारितः ॥**

**[2]वर्धमानमृणं तिष्ठत्परिभूताश्च शत्रवः ।**
**आवहन्त्यनयं तीव्रं व्याधयश्चाप्युपेक्षिताः ॥**

**[3]नासम्यक्कृतकारी स्यादप्रमत्तः सदा भवेत् ।**
**कण्टकोऽपि हि दुश्छिन्नो विकारं कुरुते चिरम् ॥**

**[4]वधेन च मनुष्याणां मार्गाणां दूषणेन च ।**
**आकराणां विनाशैश्च परराष्ट्रं विनाशयेत् ॥**

**[5]गृध्रदृष्टिर्बकालीनः श्वचेष्टः सिंहविक्रमः ।**
**अनुद्विग्नः काकशङ्की भुजङ्गचरितं चरेत् ॥**

गृध्रदृष्टिः गृध्रवत् दूरदर्शी । बकवत् आलीनः निश्चलः बकालीनः । श्वचेष्टः शुनकवज्जागरूकश्चोरसूचकश्च । सिंहवद्विक्रमो यस्य अनिर्दयस्य तद्वदेव । काकवत् शङ्की परेङ्गितज्ञः । भुजङ्गचरितम् अकस्मात्परकृते दुर्गादौ प्रवेशनम्, तत्कुर्यात् । नीटी.

---

(१) भा. १२।१३८।५२ ; भामु. १२।१४०।५२ ब्रुवन्तं ( वदन्तं ) कुर्वीत ( कर्तव्यं ).

(२) भा. १२।१३८।५३ ; भामु. १२।१४०।५३.

(३) भा. १२।१३८।५४ ; भामु. १२।१४०।५४ हृत्यापि ( हत्वैव ) उत्तरार्धे ( असिनाऽपि शिरश्छित्वा शोचेत च रुदेत च ॥ ).

(४) भा. १२।१३८।५५ ; भामु. १२।१४०।५५ येत ( यीत ) आशाकारण ( लोकाराधन ).

(५) भा. १२।१३८।५६ ; भामु. १२।१४०।५६ न बाहुभ्यां ( बाहुभ्यां न ) अपा ( अन ) घृष्य ( मृज्य ).

(६) भा. १२।१३८।५७ ; भामु. १२।१४०।५७ ( त्रिवर्गस्त्रिविधा पीडा अनुबन्धास्तथैव च । अनुबन्धं तथा ज्ञात्वा पीडां च परिवर्जयेत् ॥ ).

(१) भा. १२।१३८।५८ ; भामु. १२।१४०।५८ ( ऋणशेषमग्निशेषं शत्रुशेषं तथैव च । पुनः पुनः प्रवर्धन्ते तस्माच्छेषं न धारयेत् ॥ ).

(२) भा. १२।१३८।५९ ; भामु. १२।१४०।५९ तिष्ठ ( तिष्ठे ) आवहन्त्यनयं ( जनयन्ति भयं ).

(३) भा. १२।१३८।६० ; भामु. १२।१४०।६०.

(४) भा. १२।१३८।६१ ; भामु. १२।१४०।६१ आकरा ( अगारा ).

(५) भा. १२।१३८।६२ ; भामु. १२।१४०।६२.

[1]शूरमञ्जलिपातेन भीरुं भेदेन भेदयेत् ।
लुब्धमर्थप्रदानेन समं तुल्येन विग्रहः ॥
[2]श्रेणिमुख्योपजापेषु वल्लभानुनयेषु च ।
अमात्यान्परिरक्षेत भेदसंघातयोरपि ॥

श्रेणीमुख्यः— नानाजातीयाः सन्तः एककार्ये निविष्टाः श्रेणयः, तासां मुख्यस्य( ?ख्यः, तस्य ) उपजापः भेदः । 'उपतापेषु' इति पाठे उपतापः क्लेशो वा । वल्लभानां मित्राणामनुनयेषु अन्यैः क्रियमाणेषु अमात्यान्परिरक्षेत भेदात् संघातात् संभूय कार्यकारित्वाच्च । संहता ह्यमात्याः सद्यो राजानमराजानं कुर्युर्विपरीतं वा कुर्युरित्यर्थः । नीटी.

[3]मृदुरित्यवमन्यन्ते तीक्ष्ण इत्युद्विजन्ति च ।
तीक्ष्णकाले च तीक्ष्णः स्यान्मृदुकाले मृदुर्भवेत् ॥
[4]मृदुना सुमृदुं हन्ति मृदुना हन्ति दारुणम् ।
नासाध्यं मृदुना किंचित्तस्मात्तीक्ष्णतरं मृदु ॥
[5]काले मृदुर्यो भवति काले भवति दारुणः ।
स साधयति कृत्यानि शत्रूंश्चैवाधितिष्ठति ॥
[6]पण्डितेन विरुद्धः सन्दूरेऽस्मीति न विश्वसेत् ।
दीर्घौ बुद्धिमतो बाहू याभ्यां हिंसति हिंसितः ॥
[7]न तत्तरेद्यस्य न पारमुत्तरे-
न्न तद्धरेद्यत्पुनराहरेत्परः ।
न तत्खनेद्यस्य न मूलमुत्खने-
न्न तं हन्याद्यस्य शिरो न पातयेत् ॥

[1]इतीदमुक्तं वृजिनाभिसंहितं
न चैतदेवं पुरुषः समाचरेत् ।
परप्रयुक्तं तु कथं निशामये-
दतो मयोक्तं भवतो हितार्थिना ॥

वृजिनाभिसंहितम् । आपत्कालाभिप्रायेणैतदुक्तम्, न त्वेतदेवं पुरुषः समाचरेत् । परप्रयुक्ते परेणाभियोगे कृते सति इदं मदुक्तं कथं न भावयेत् ? अपि तु भावयेदेव । आपदि एतदनुष्ठानादधर्मो नास्तीति भावः । नीटी.

[2]यथावदुक्तं वचनं हितं तदा
निशम्य विप्रेण सुवीरराष्ट्रियः ।
तथाऽकरोद्वाक्यमदीनचेतनः
श्रियं च दीप्तां बुभुजे सबान्धवः ॥

षाड्गुण्यानुष्ठाने बलाबलविवेकः श्रेयान्

युधिष्ठिर उवाच—

[3]बलिनः प्रत्यमित्रस्य नित्यमासन्नवर्तिनः ।
उपकारापकाराभ्यां समर्थस्योद्यतस्य च ॥
मोहाद्विकत्थनामात्रैरसारोऽल्पबलो लघुः ।
वाग्भिरप्रतिरूपाभिरभिद्रुह्य पितामह ॥
आत्मनो बलमास्थाय कथं वर्तेत मानवः ।
आगच्छतोऽतिक्रुद्धस्य तस्योद्धरणकाम्यया ॥

भीष्म उवाच—

[4]अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
संवादं भरतश्रेष्ठ शल्मलेः पवनस्य च ॥

यदि आपन्नो राजा दैवेन नानुगृह्यते तदा तमेव शरणीकुर्यात् । यदि तु वाक्शूरतया तेन सह विरोधं

---

( १ ) भामु. १२।१४०।६३.

( २ ) भा. १२।१३८।६३ ; भामु. १२।१४०।६४ श्रेणि ( श्रेणी ).

( ३ ) भा. १२।१३८।६४ ; भामु. १२।१४०।६५ मन्यन्ते ( जानन्ति ) च तीक्ष्णः स्यान्मृ ( भवेत्तीक्ष्णो मृ ).

( ४ ) भा. १२।१३८।६५ ; भामु. १२।१४०।६६ प्रथमचरणे ( मृदुनैव मृदुं छिन्धि ) तरं मृदु ( तरो मृदुः ).

( ५ ) भा. १२।१३८।६६ ; भाम. १२।१४०।६७ स साध ( प्रसाध ) शत्रूंश्चैवा ( शत्रुं चाप्य ).

( ६ ) भा. १२।१३८।६७ ; भामु. १२।१४०।६८ द्वितीयचरणे ( न्दूरस्थोऽस्मीति नाऽऽश्वसेत् ).

( ७ ) भा. १२।१३८।६८ ; भामु. १२।१४०।६९ मुत्खने ( मुद्धरे ) पात ( पाल ).

( १ ) भा. १२।१३८।६९ ; भामु. १२।१४०।७० युक्तं तु ( युक्तेन ) निशामये ( विभावये ).

( २ ) भा. १२।१३८।७० ; भामु. १२।१४०।७१ हितं तदा ( हितार्थिना ) राष्ट्रियः ( राष्ट्रपः ).

( ३ ) भामु. १२।१५४।१–३.

( ४ ) भा. १२।१५०।१ ; भामु. १२।१५४।४ अध्यायचतुष्टयेऽपि सर्वत्र शल्मलिशब्दस्थाने शाल्मलिशब्दः पठितः .

करोति तदा कृत्स्नं स्वपरिग्रहं स्वयमेव त्यक्त्वा स्वात्ममात्रं रक्षेत् । एतत् पवनशाल्मलिसंवादाख्यायिकया दर्शयति— अत्रापीत्यादिना । नीटी.

**[1]हिमवन्तं समासाद्य महानासीद्वनस्पतिः ।**
**वर्षपूगाभिसंवृद्धः शाखास्कन्धपलाशवान् ॥**
**[2]तत्र स्म मत्ता मातङ्गा घर्मार्ताः श्रमकर्शिताः ।**
**विश्रमन्ति महाबाहो तथाऽन्या मृगजातयः ॥**
**[3]नल्वमात्रपरीणाहो घनच्छायो वनस्पतिः ।**
**शुकशारिकसंघुष्टः फलवान् पुष्पवानपि ॥**

नल्वः हस्तानां शतचतुष्टयम् । परीणाहः स्थूलत्वम्, वैपुल्यमिति यावत् । शेषं सुगमम् । नीटी.

**[4]सार्थिका वणिजश्चापि तापसाश्च वनौकसः ।**
**वसन्ति वासान् मार्गस्थाः सुरम्ये तरुसत्तमे ॥**
**[5]तस्य ता विपुलाः शाखा दृष्ट्वा स्कन्धांश्च सर्वतः ।**
**अभिगम्याब्रवीदेनं नारदो भरतर्षभ ॥**
**[6]अहो नु रमणीयस्त्वमहो चासि मनोरमः ।**
**प्रीयामहे त्वया नित्यं तरुप्रवर शल्मले ॥**
**[7]सदैव शकुनास्तात मृगाश्चाधस्तथा गजाः ।**
**वसन्ति तव संहृष्टा मनोहरतरास्तथा ॥**

(१) भा. १२।१५०।२ ; भामु. १२।१५४।५ शाखास्कन्ध (शाखी स्कन्धी).

(२) भा. १२।१५०।३ ; भामु. १२।१५४।६ मत्ता मा (मत्तमा) विश्रम (विश्राम्य).

(३) भा. १२।१५०।४ ; भामु. १२।१५४।७ उत्तरार्धे (सारिकाशुकसंजुष्टः पुष्पवान् फलवानपि ॥).

(४) भा. १२।१५०।५ ; भामु. १२।१५४।८ वासान् (तत्र) तरु (नग).

(५) भा. १२।१५०।६ ; भामु. १२।१५४।९ स्कन्धांश्च सर्वतः (स्कन्धं च सर्वशः).

(६) भा. १२।१५०।७ ; भामु. १२।१५४।१० प्रीया (प्रिया).

(७) भा. १२।१५०।८ ; भामु. १२।१५४।११ धस्तथा (थ तथा) हृष्टा (दृष्टा) हरतरास्तथा (हर मनोहराः).

**[1]तव शाखा महाशाख स्कन्धं च विपुलं तथा ।**
**न वै प्रभग्नान् पश्यामि मारुतेन कथंचन ॥**
**[2]किं नु ते मारुतस्तात प्रीतिमानथ वा सुहृत् ।**
**त्वां रक्षति सदा येन वनेऽस्मिन्पवनो ध्रुवम् ॥**
**[3]विवान् हि पवनः स्थानाद् वृक्षानुच्चावचानपि ।**
**पर्वतानां च शिखराण्याचालयति वेगवान् ॥**
**[4]शोषयत्येव पातालं विवान् गन्धवहः शुचिः ।**
**ह्रदांश्च सरितश्चैव सागरांश्च तथैव ह ॥**
**[5]त्वां संरक्षेत पवनः सखित्वेन न संशयः ।**
**तस्माद् बहुलशाखोऽसि पर्णवान् पुष्पवानपि ॥**
**[6]इदं च रमणीयं ते प्रतिभाति वनस्पते ।**
**यदिमे विहगास्तात रमन्ते मुदितास्त्वयि ॥**
**[7]एषां पृथक् समस्तानां श्रूयते मधुरः स्वरः ।**
**पुष्पसंमोदने काले वाशतां सुमनोहरम् ॥**
**[8]तथेमे मुदिता नागाः स्वयूथकुलशोभिनः ।**
**घर्मार्तास्त्वां समासाद्य सुखं विन्दन्ति शल्मले ॥**

(१) भा. १२।१५०।९ ; भामु. १२।१५४।१२ द्वितीयचरणे (स्कन्धांश्च विपुलांस्तथा).

(२) भा. १२।१५०।१० ; भामु. १२।१५४।१३ मारुत (पवन) ऽस्मिन्प (ऽत्र प).

(३) भा. १२।१५०।११ ; भामु. १२।१५४।१४ विवान् हि (भगवान्).

(४) भा. १२।१५०।१२ ; भामु. १२।१५४।१५ विवान् (वहन्) ह्रदांश्च (सरांसि) ह (च).

(५) भा. १२।१५०।१३ ; भामु. १२।१५४।१६ त्वां संरक्षेत (संरक्षति त्वां) तृतीयचरणे (तस्मात् त्वं बहुशाखोऽपि).

(६) भा. १२।१५०।१४ ; भामु. १२।१५४।१७.

(७) भा. १२।१५०।१५ ; भामु. १२।१५४।१८ रः स्वरः (रस्वरः).

(८) भा. १२।१५०।१६; भामु. १२।१५४।१९ मुदिता (गर्जिता) शोभिनः (शोभिताः).

[1]तथैव मृगजातीभिरन्याभिरुपशोभसे ।
तथा सार्थाधिवासैश्च शोभसे मेरुवद् द्रुम ॥
[2]ब्राह्मणैश्च तपःसिद्धैस्तापसैः श्रमणैरपि ।
त्रिविष्टपसमं मन्ये तवाऽऽयतनमेव ह ॥
नारद उवाच–
[3]बन्धुत्वादथ वा सख्याच्छल्मले नात्र संशयः ।
पालयत्येव सततं भीमः सर्वत्रगोऽनिलः ॥
न्यग्भावं परमं वायोः शल्मले त्वमुपागतः ।
तवाहमस्मीति सदा येन रक्षति मारुतः ॥
[4]न तं पश्याम्यहं वृक्षं पर्वतं वाऽपि तं दृढम् ।
यो न वायुबलाद् भग्नः पृथिव्यामिति मे मतिः ।
[5]त्वं पुनः कारणैर्नूनं शल्मले रक्ष्यसे सदा ।
वायुना सपरीवारस्तेन तिष्ठस्यसंशयम् ॥
शल्मलिरुवाच–
[6]न मे वायुः सखा ब्रह्मन्न बन्धुर्न च मे सुहृत् ।
परमेष्ठी तथा नैव येन रक्षति माऽनिलः ॥
[7]मम तेजोबलं वायोर्भीममपि हि नारद ।
कलामष्टादशीं प्राणैर्न मे प्राप्नोति मारुतः ॥

(१) भा. १२।१५०।१७ ; भामु. १२।१५४।२० रुप (रभि) सार्था (सर्वा).

(२) भा. १२।१५०।१८ ; भामु. १२।१५४।२१ रपि (स्तथा) ह (हि).

(३) भा. १२।१५०।१९–२० ; भामु. १२।१५५। १–२.

(४) भा. १२।१५०।२१ ; भामु. १२।१५५।३ वाऽपि तं दृढम् (वेश्म चेदृशम्) यो (यं) भग्नः (भग्नं).

(५) भा. १२।१५०।२२ ; भामु. १२।१५५।४ द्वितीयचरणे (रक्ष्यसे शाल्मले यथा).

(६) भा. १२।१५०।२३ ; भामु. १२।१५५।५ माऽ (वाऽ).

(७) भा. १२।१५०।२४ ; भामु. १२।१५५।६ वायोर्भीममपि (भीमं वायोरपि).

[1]आगच्छन् परमो वायुर्मया विष्टम्भितो बलात् ।
रुजन् द्रुमान् पर्वतांश्च यच्चान्यदपि किंचन ॥
[2]स मया बहुशो भग्नः प्रभञ्जन् वै प्रभञ्जनः ।
तस्मान्न बिभ्ये देवर्षे क्रुद्धादपि समीरणात् ॥
नारद उवाच–
शल्मले विपरीतं ते दर्शनं नात्र संशयः ।
न हि वायोर्बलेनास्ति भूतं तुल्यबलं क्वचित् ॥
[3]इन्द्रो यमो वैश्रवणो वरुणश्च जलेश्वरः ।
न तेऽपि तुल्या मरुतः किं पुनस्त्वं वनस्पते ॥
[4]यद्धि किंचिदिह प्राणि शल्मले चेष्टते भुवि ।
सर्वत्र भगवान् वायुश्चेष्टाप्राणकरः प्रभुः ॥
[5]एष चेष्टयते सम्यक् प्राणिनः सम्यगायतः ।
असम्यगायतो भूयश्चेष्टते विकृतो नृषु ॥
[6]स त्वमेवंविधं वायुं सर्वसत्त्वभृतां वरम् ।
न पूजयसि पूज्यं तं किमन्यद्बुद्धिलाघवात् ॥
[7]असारश्चासि दुर्बुद्धे केवलं बहु भाषसे ।
क्रोधादिभिरवच्छन्नो मिथ्या वदसि शल्मले ॥
[8]मम रोषः समुत्पन्नस्त्वय्येवं संप्रभाषति ।
ब्रवीम्येष स्वयं वायोस्तव दुर्भाषितं बहु ॥

(१) भा. १२।१५०।२५ ; भामु. १२।१५५।७ परमो (परुषो) रुजन् (भञ्जन्).

(२) भा. १२।१५०।२६–२७ ; भामु. १२।१५५। ८–९.

(३) भा. १२।१५०।२८ ; भामु. १२।१५५।१० न ते (नैते).

(४) भा. १२।१५०।२९ ; भामु. १२।१५५।११ पूर्वार्धे (यच्च किंचिदिह प्राणी चेष्टते शाल्मले भुवि ।).

(५) भा. १२।१५०।३० ; भामु. १२।१५५।१२ कृतो (कृतं).

(६) भा. १२।१५०।३१ ; भामु. १२।१५५।१३.

(७) भा. १२।१५०।३२ ; भामु. १२।१५५।१४ सि दुर्बुद्धे (पि दुर्मेधाः).

(८) भा. १२।१५०।३३ ; भामु. १२।१५५।१५.

[1]चन्दनैः स्पन्दनैः शालैः सरलैर्देवदारुभिः ।
वेतसैर्बन्धनैश्चापि ये चान्ये बलवत्तराः ॥
[2]तैश्चापि नैवं दुर्बुद्धे क्षिप्तो वायुः कृतात्मभिः ।
ते हि जानन्ति वायोश्च बलमात्मन एव च ॥
[3]तस्मात्ते वै नमस्यन्ति श्वसनं द्रुमसत्तमाः ।
त्वं तु मोहान्न जानीषे वायोर्बलमनन्तकम् ॥
[4]एवं तस्माद् गमिष्यामि सकाशं मातरिश्वनः ॥

भीष्म उवाच–

[5]एवमुक्त्वा तु राजेन्द्र शल्मलिं ब्रह्मवित्तमः ।
नारदः पवने सर्वं शल्मलेर्वाक्यमब्रवीत् ॥

नारद उवाच–

[6]हिमवत्पृष्ठजः कश्चिच्छल्मलिः परिवारवान् ।
बृहन्मूलो बृहच्छाखः स त्वां वायोऽवमन्यते ॥
[7]बह्वन्याक्षेपयुक्तानि त्वामाह वचनानि सः ।
न युक्तानि मया वायो तानि वक्तुं त्वयि प्रभो ॥
[8]जानामि त्वामहं वायो सर्वप्राणभृतां वरम् ।
वरिष्ठं च गरिष्ठं च क्रोधे वैवस्वतं यथा ॥

भीष्म उवाच–

[9]एवं तु वचनं श्रुत्वा नारदस्य समीरणः ।
शल्मलिं तमुपागम्य क्रुद्धो वचनमब्रवीत् ॥

वायुरुवाच–

[1]शल्मले नारदे यत्तत्त्वयोक्तं मद्विगर्हणम् ।
अहं वायुः प्रभावं ते दर्शयाम्यात्मनो बलम् ॥
[2]नाहं त्वा नाभिजानामि विदितश्चासि मे द्रुम ।
पितामहः प्रजासर्गे त्वयि विश्रान्तवान् प्रभुः ॥
[3]तस्य विश्रमणादेव प्रसादो यः कृतस्तव ।
रक्ष्यसे तेन दुर्बुद्धे नाऽऽत्मवीर्याद् द्रुमाधम ॥
[4]यन्मा त्वमवजानीषे यथाऽन्यं प्राकृतं तथा ।
दर्शयाम्येष आत्मानं यथा मामवभोत्स्यसे ॥

भीष्म उवाच–

[5]एवमुक्तस्ततः प्राह शल्मलिः प्रहसन्निव ।
पवन त्वं वने क्रुद्धो दर्शयाऽऽत्मानमात्मना ॥
[6]मयि वै त्यज्यतां क्रोधः किं मे क्रुद्धः करिष्यसि ।
न ते बिभेमि पवन यद्यपि त्वं स्वयंप्रभुः ॥
[7]बलाधिकोऽहं त्वत्तश्च न भीः कार्या मया तव ।
ये तु बुद्ध्या हि बलिनस्ते भवन्ति बलीयसः ॥
प्राणमात्रबला ये वै नैव ते बलिनो मताः ॥
[8]इत्येवमुक्तः पवनः श्व इत्येवाब्रवीद्वचः ।
दर्शयिष्यामि ते तेजस्ततो रात्रिरुपागमत् ॥

---

(१) भा. १२।१५०।३४ ; भामु. १२।१५५।१६ स्पन्द ( स्यन्द ) बन्ध ( धन्व ).

(२) भा. १२।१५०।३५ ; भामु. १२।१५५।१७ हि ( ऽपि ).

(३) भा. १२।१५०।३६ ; भामु. १२।१५५।१८ ते वै ( तं वै ) द्रुम ( तरु ).

(४) भामु. १२।१५५।१८.

(५) भा. १२।१५१।१ ; भामु. १२।१५६।१.

(६) भा. १२।१५१।२ ; (नारद उवाच० ) ; भामु. १२।१५६।२ च्छाखः ( च्छायः ).

(७) भा. १२।१५१।३ ; भाम. १२।१५६।३ बह्वन्या ( बह्वन्या ) त्वयि प्रभो ( तवाग्रतः ).

(८) भा. १२।१५१।४ ; भामु. १२।१५६।४.

(९) भा. १२।१५१।५ ( भीष्म उवाच० ) ; भामु. १२।१५६।५ एवं तु ( एतत्तु ).

(१) भा. १२।१५१।६ ; ( वायुरुवाच० ) ; भामु. १२।१५६।६ यत्तत्त्वयोक्तं ( गच्छंस्त्वयोक्तो ).

(२) भा. १२।१५१।७ ; भामु. १२।१५६।७ नाहं त्वा नाभि ( अहं त्वामभि ).

(३) भा. १२।१५१।८ ; भामु. १२।१५६।८ देव ( देष ) यः कृ ( मत्कृ ).

(४) भा. १२।१५१।९ ; भामु. १२।१५६।९ यन्मा ( यन्मां ) आत्मानं ( चाऽऽत्मानं ) मामवभोत्स्यसे ( मां नावमन्यसे ).

(५) भा. १२।१५१।१० ( भीष्म उवाच० ) ; भामु. १२।१५६।१० वने ( च मे ).

(६) भा. १२।१५१।११ ; भामु. १२।१५६।११.

(७) भामु. १२।१५६।१२–१३ .

(८) भा. १२।१५१।१२–१३ ; भामु. १२।१५६।१३–१५.

[१]अथ निश्चित्य मनसा शल्मलिर्वातकारितम्।
पश्यमानस्तदाऽऽत्मानमसमं मातरिश्वनः ॥
[२]नारदे यन्मया प्रोक्तं पवनं प्रति तन्मृषा।
असमर्थो ह्यहं वायोर्बलेन बलवान् हि सः ॥
[३]मारुतो बलवान्नित्यं यथैनं नारदोऽब्रवीत्।
अहं हि दुर्बलोऽन्येभ्यो वृक्षेभ्यो नात्र संशयः ॥
[४]किं तु बुद्ध्या समो नास्ति मम कश्चिद्वनस्पतिः।
तदहं बुद्धिमास्थाय भयं मोक्ष्ये समीरणात् ॥
[५]यदि तां बुद्धिमास्थाय चरेयुः पर्णिनो वने।
अरिष्टाः स्युः सदा क्रुद्धात्पवनान्नात्र संशयः ॥
[६]तेऽत्र बाला न जानन्ति यथा नैनान् समीरणः।
समीरयेत संक्रुद्धो यथा जानाम्यहं तथा ॥

भीष्म उवाच—

[६]ततो निश्चित्य मनसा शल्मलिः क्षुभितस्तदा।
शाखाः स्कन्धान् प्रशाखाश्च स्वयमेव व्यशातयत् ॥
[७]स परित्यज्य शाखाश्च पत्राणि कुसुमानि च।
प्रभाते वायुमायान्तं प्रत्यैक्षत वनस्पतिः ॥

(१) भा. १२।१५१।१४ ; भामु. १२।१५६।१५–१६ पवनं (वचनं).

(२) भा. १२।१५१।१५ ; भामु. १२।१५६।१६–१७ यथैनं (यथा वै) हि (तु).

(३) भा. १२।१५१।१६ ; भामु. १२।१५६।१७–१८ मम (मया).

(४) भा. १२।१५१।१७ ; भामु. १२।१५६।१८–१९ चरे (तिष्ठे).

(५) भा. १२।१५१।१८ ; भामु. १२।१५६।१९ ऽत्र (तु) नैनान् (ैव तान्) रयेत (रयति).

(६) भा. १२।१५१।१९ (भीष्म उवाच०) ; भामु. १२।१५७।१.

(७) भा. १२।१५१।२० ; भामु. १२।१५७।२.

[१]ततः क्रुद्धः श्वसन् वायुः पातयन् वै महाद्रुमान्।
आजगामाथ तं देशं स्थितो यत्र स शल्मलिः ॥
[२]तं हीनपर्णं पतिताग्रशाखं
विशीर्णपुष्पं प्रसमीक्ष्य वायुः।
उवाच वाक्यं स्मयमान एनं
मुदा युतं शल्मलिं रुग्णशाखम् ॥

वायुरुवाच—

[३]अहमप्येवमेव त्वां कुर्वाणः शल्मले रुषा।
आत्मना यत्कृतं कृत्स्नं शाखानामपकर्षणम् ॥
[४]हीनपुष्पाग्रशाखस्त्वं शीर्णाङ्कुरपलाशवान्।
आत्मदुर्मन्त्रितेनेह मद्वीर्यवशगोऽभवः ॥

भीष्म उवाच—

[५]एतच्छ्रुत्वा वचो वायोः शल्मलिर्व्रीडितस्तदा।
अतप्यत वचः स्मृत्वा नारदो यत्तदाऽब्रवीत् ॥
[६]एवं यो राजशार्दूल दुर्बलः सन् बलीयसा।
वैरमासज्जते बालस्तप्यते शल्मलिर्यथा ॥
[७]तस्माद्वैरं न कुर्वीत दुर्बलो बलवत्तरैः।
शोचेद्धि वैरं कुर्वाणो यथा वै शल्मलिस्तथा ॥

(१) भा. १२।१५१।२१ ; भामु. १२।१५७।३ शं स्थितो (शमास्ते).

(२) भा. १२।१५१।२२ ; भामु. १२।१५७।४ विशी (निशी) एनं (एवं) युतं शल्मलिं रुग्ण (युतः शाल्मलिमुग्र).

(३) भा. १२।१५१।२३ (वायुरुवाच०) ; भामु. १२।१५७।५ कृत्स्नं (कृच्छ्रं).

(४) भा. १२।१५१।२४ ; भामु. १२।१५७।६ शवान् (शकः) गोऽभवः (गः कृतः).

(५) भा. १२।१५१।२५ (भीष्म उवाच०) ; भामु. १२।१५७।७.

(६) भा. १२।१५१।२६ ; भामु. १२।१५७।८ यो (हि) मासज्जते (मारभते).

(७) भा. १२।१५१।२७–२८ ; भामु. १२।१५७।९–१०.

**न हि वैरं महात्मानो विवृण्वन्त्यपकारिषु ।**
**शनैः शनैर्महाराज दर्शयन्ति स्म ते बलम् ॥**

**[1]वैरं न कुर्वीत नरो दुर्बुद्धिर्बुद्धिजीविना ।**
**बुद्धिर्बुद्धिमतो याति तूलेष्विव हुताशनः ॥**

**[2]न हि बुद्ध्या समं किंचिद्विद्यते पुरुषे नृप ।**
**तथा बलेन राजेन्द्र न समोऽस्तीति चिन्तयेत् ॥**

**[3]तस्मात् क्षमेत बालाय जडाय बधिराय च ।**
**बलाधिकाय राजेन्द्र तद् दृष्टं त्वयि शत्रुहन् ॥**

**[4]अक्षौहिण्यो दशैका च सप्त चैव महाद्युते ।**
**बलेन न समा राजन्नर्जुनस्य महात्मनः ॥**

**[5]हतास्ताश्चैव भग्नाश्च पाण्डवेन यशस्विना ।**
**चरता बलमास्थाय पाकशासनिना मृधे ॥**

**[6]उक्तास्ते राजधर्माश्च आपद्धर्माश्च भारत ।**
**विस्तरेण महाराज किं भूयः प्रब्रवीमि ते ॥**

षाड्गुण्यविवेकार्थं मण्डलानि तेषां बलानि द्विसप्तति-
गुणाश्च ज्ञातव्याः, संधिविग्रहयाननीतिः

**धृतराष्ट्र उवाच—**

**[7]मण्डलानि च बुध्येथाः परेषामात्मनस्तथा ।**
**उदासीनगुणानां च मध्यमानां तथैव च ॥**

मण्डलानीति । अरिमित्रमित्यादीनि । उदासीनादन्यो मध्यमो द्वयोरपि इष्टाकाङ्क्षी । नीटी.

**[1]चतुर्णां शत्रुजातानां सर्वेषामाततायिनाम् ।**
**मित्रं चामित्रमित्रं च बोद्धव्यं तेऽरिकर्शन ॥**

चतुर्णां शत्रुपक्षे जातानां शत्रुः शत्रुमित्रम् उभयो-र्जयार्थी पराजयार्थी चेति । नीटी.

**[2]तथाऽमात्या जनपदा दुर्गाणि विषमाणि च ।**
**बलानि च कुरुश्रेष्ठ भवन्त्येषां यथेच्छकम् ॥**

यथेच्छकं परैर्भेद्यत्वमभेद्यत्वं च भवति । तस्मा-दवहितस्तिष्ठेत् यथा भेदो न भवेदिति । नीटी.

**[3]ते च द्वादश कौन्तेय राज्ञां वै विविधात्मकाः ।**
**मन्त्रिप्रधानाश्च गुणाः षष्टिर्द्वादश च प्रभो ॥**

द्वादश— चत्वारः शत्रुजाताः, षट् आततायिनः, मित्रम् अमित्रमित्रं चेति । षष्टिर्गुणाः— कृष्यादीन्यष्टौ संधानकर्माणि, बालादयो विंशतिरसंधेयाः, नास्तिक्या-दयश्चतुर्दश दोषाः, मन्त्रादीन्यष्टादश तीर्थानीति । एतेषु केचित् हानार्थं ज्ञातव्याः, केचिदुपादानार्थम् । नीटी.

**[4]एतन्मण्डलमित्याहुराचार्या नीतिकोविदाः ।**
**अत्र षाड्गुण्यमायत्तं युधिष्ठिर निबोध तत् ॥**

षाड्गुण्यादयः प्रागेव व्याख्याताः । नीटी.

**[5]वृद्धिक्षयौ च विज्ञेयौ स्थानं च कुरुनन्दन ।**
**द्विसप्तत्या महाबाहो ततः षाड्गुण्यचारिणः ॥**

---

(१) भा. १२।१५१।२९ ; भामु. १२।१५७।११ तूले (तृणे).

(२) भा. १२।१५१।३० ; भामु. १२।१५७।१२ स्तीति चिन्तयेत् (स्तीह कश्चन).

(३) भा. १२।१५१।३१ ; भामु. १२।१५७।१३ जडाय ब (जडान्धब).

(४) भा. १२।१५१।३२ ; भामु. १२।१५७।१४.

(५) भा. १२।१५१।३३ ; भामु. १२।१५७।१५ हतास्ता (निहता).

(६) भा. १२।१५१।३४ ; भामु. १२।१५७।१६ प्रथमचरणे (उक्ताश्च ते राजधर्मा) प्रब्रवीमि ते (श्रोतु-मिच्छसि).

(७) भा. १५।११।१ ; भामु. १५।६।१ गुणा (गणा) मानां तथैव च (स्थानां च भारत).

(१) भा. १५।११।२ ; भामु. १५।६।२ .

(२) भा. १५।११।३ ; भामु. १५।६।३ विषमाणि (विविधानि) भवन्त्ये (भवत्ये).

(३) भा. १५।११।४ ; भामु. १५।६।४ विविधा (विषया).

(४) भा. १५।११।५ ; भामु. १५।६।५.

(५) भा. १५।११।६ ; भामु. १५।६।६ नन्दन (सत्तम) सत्या (सत्यां) चारिणः (जा गुणाः).

[1]यदा स्वपक्षो बलवान् परपक्षस्तथाऽबलः ।
विगृह्य शत्रून् कौन्तेय यायात् क्षितिपतिस्तदा ।
यदा स्वपक्षोऽबलवांस्तदा संधिं समाश्रयेत् ॥

[2]यदा परे च बलिनः स्वपक्षश्चैव दुर्बलः ।
सार्धं विद्वांस्तदा क्षीणः परैः संधिं समाश्रयेत् ॥

[3]द्रव्याणां संचयश्चैव कर्तव्यः स्यान्महांस्तथा ।
यदा समर्थो यानाय न चिरेणैव भारत ॥

[4]तदा सर्वं विधेयं स्यात्स्थानं च न विभाजयेत् ।
भूमिरल्पफला देया विपरीतस्य भारत ॥

[5]हिरण्यं कुप्यभूयिष्ठं मित्रं क्षीणमकोशवत् ।
विपरीतान्न गृह्णीयात्स्वयं संधिविशारदः ॥

[6]संध्यर्थं राजपुत्रं च लिप्सेथा भरतर्षभ ।
विपरीतस्तु तेऽदेयः पुत्र कस्यांचिदापदि ।
तस्य प्रमोक्षे यत्नं च कुर्याः सोपायमन्त्रवित् ॥

संध्यर्थमिति सार्धः । यः संधिं करोति तस्य पुत्रं स्वनिकटे स्थापयेदित्यर्थः । तदकरणे महत्यापदायाति । कदाचित् तस्यामप्यागतायाममोक्षे तत्परिहारे यत्नोऽपि कर्तव्यः । नीटी.

(१) भा. १५।११।७ ; भामु. १५।६।७ यायात् (जेयः) तृतीयार्धं नास्ति.

(२) भामु. १५।६।८.

(३) भा. १५।११।८ ; भामु. १५।६।९ स्यान्म (सुम).

(४) भा. १५।११।९ ; भामु. १५।६।१० द्वितीयचरणे (स्थानेन स विचारयेत्).

(५) भा. १५।११।१० ; भामु. १५।६।११ मकोशवत् (मथो बलम्) न गृह्णीयात् स्वयं (निगृह्णीयात् स्वं हि).

(६) भा. १५।११।११ ; भामु. १५।६।१२–१३ च (वा) तृतीयचरणे (विपरीतं न तच्छ्रेयः) तस्य (तस्याः).

[1]प्रकृतीनां च कौन्तेय राजा दीनां विभावयेत् ।
क्रमेण युगपद्द्वन्द्वं व्यसनानां बलाबलम् ॥

दीनान् अन्धबधिरादीन् विभावयेत् पूजयेत् । युगपत्., वेति कुर्यादिति च शेषः । नीटी.

[2]पीडनं स्तम्भनं चैव कोशभङ्गस्तथैव च ।
कार्यं यत्नेन शत्रूणां स्वराष्ट्रं रक्षता स्वयम् ॥

[3]न च हिंस्योऽभ्युपगतः सामन्तो वृद्धिमिच्छता ।
कौन्तेय तं न हिंसेत यो महीं विजिगीषते ॥

तेन (? तं न) हिंसेत् सः, विजिगीषुरिति शेषः । नीटी.

[4]गणानां भेदने योगं गच्छेथाः सह मन्त्रिभिः ।
साधुसंग्रहणाच्चैव पापनिग्रहणात्तथा ॥

[5]दुर्बलाश्चापि सततं नावष्टभ्या बलीयसा ।
तिष्ठेथा राजशार्दूल वैतसीं वृत्तिमास्थितः ॥

नान्वेष्टव्याः नोच्छेदनीयाः । वैतसीं वृत्तिम्, प्रबलेष्विति शेषः । नीटी.

[6]यद्येवमभियायाच्च दुर्बलं बलवान् नृपः ।
सामादिभिरुपायैस्तं क्रमेण विनिवर्तयेत् ॥

(१) भा. १५।११।१२ ; भामु. १५।६।१३–१४ कौन्तेय (राजेन्द्र) दीनां (दीनान्) उत्तरार्धे (क्रमेण युगपत्सर्वं व्यवसायं महाबलः ॥) ; रार. ४६ (प्रकृतीनां च राजेन्द्र चाराणां च विभावयेत् । क्रमेण युगपत्सर्वं व्यवसायं महाबलम् ॥).

(२) भा. १५।११।१३ ; भामु. १५।६।१४–१५ राष्ट्रं (राज्यं).

(३) भा. १५।११।१४ ; भामु. १५।६।१५–१६ हिंसेत (हिंसेत्स).

(४) भा. १५।११।१५ ; भामु. १५।६।१६–१७ गच्छेथाः (ईप्सेथाः).

(५) भा. १५।११।१६ ; भामु. १५।६।१७–१८ श्चापि (श्चैव) वष्टभ्या (न्वेष्टव्या).

(६) भा. १५।११।१७ ; भामु. १५।६।१८–१९ द्येव (द्येन) दुर्बलं बलवान् (बलवान्दुर्बलं) र्तयेत् (र्तयेः).

एनं त्वाम्। नीटी.

[1]अशक्नुवंस्तु युद्धाय निष्पतेत्सह मन्त्रिभिः।
कोशेन पौरैर्दण्डेन ये चान्ये प्रियकारिणः॥

[2]असंभवे तु सर्वस्य यथामुख्येन निष्पतेत्।
क्रमेणानेन मोक्षः स्याच्छरीरमपि केवलम्॥

असंभवे उपायान्तरस्य मुख्येन शरीरेणैव युद्धाय निष्पतेत्। एवं शरीरमोक्षणे मुक्तिः शूरस्य स्यादित्यर्थः। नीटी.

धृतराष्ट्र उवाच–

[3]संधिविग्रहमप्यत्र पश्येथा राजसत्तम।
द्वियोनिं त्रिविधोपायं बहुकल्पं युधिष्ठिर॥

प्रबलप्रतियोगिकौ दुर्बलप्रतियोगिकौ चेति द्वियोनी संधिविग्रहौ। नीटी.

[4]राजेन्द्र पर्युपासीथाश्छित्त्वा द्वैविध्यमात्मनः।
तुष्टपुष्टबलः शत्रुरात्मवानिति च स्मरेत्॥

स्थित्वा स्थिरो भूत्वा द्वैविध्यं बलाबलं ज्ञात्वा शत्रुं पर्युपास्स्वेति भावः। स्मरेत् जयोपायं विचारयेत्, न त्वकस्मात् प्रयायात्। नीटी.

[5]पर्युपासनकाले तु विपरीतं विधीयते।
आमर्दकाले राजेन्द्र व्यपसर्पस्ततो वरः॥

विपरीतं अतुष्टपुष्टबलं प्रयायादित्यर्थः। नीटी.

(१) भा. १५।११।१८; भामु. १५।६।१९–२० वंस्तु (वंश्च) चान्ये (चास्य).

(२) भा. १५।११।१९; भामु. १५।६।२० मोक्षः (मुक्तिः) मपि (मिति).

(३) भा. १५।१२।१; भामु. १५।७।१ त्रिवि (विवि).

(४) भा. १५।१२।२; भामु. १५।७।२ राजेन्द्र (कौरव्य) थाश्छि (थाः स्थि).

(५) भा. १५।१२।३; भामु. १५।७।३ सर्पस्ततो वरः (सर्पेत्ततः परम्).

[1]व्यसनं भेदनं चैव शत्रूणां कारयेत्ततः।
कर्शनं भीषणं चैव युद्धे चापि बहुक्षयम्॥

स्मरेदित्युक्तं विस्पष्टयति– व्यसनमिति। नीटी.

[2]प्रयास्यमानो नृपतिस्त्रिविधं परिचिन्तयेत्।
आत्मनश्चैव शत्रोश्च शक्तिं शास्त्रविशारदः॥

[3]उत्साहप्रभुशक्तिभ्यां मन्त्रशक्त्या च भारत।
उपपन्नो नरो यायाद्विपरीतमतोऽन्यथा॥

त्रिविधां शक्तिम्। तामेवाऽऽह– उत्साहेति। नीटी.

## वाल्मीकिरामायणम्

संधिविग्रहनीतिः

[4]संदधानो हि कालेषु विग्रहं चारिभिः सह।
स्वपक्षवचनं कुर्वन्महदैश्वर्यमश्नुते॥

[5]हीयमानेन पर्येष्यो राज्ञा संधिः समेन च।
न शत्रुरवमन्तव्यो ज्यायान्कुर्वीत विग्रहम्॥

## कौटिलीयमर्थशास्त्रम्

षट् गुणाः, षाड्गुण्यद्वैगुण्यविवेकः, गुणे अन्यतमे अवस्थितिः क्षयस्थानवृद्धिनिश्चयानुसारेण

[6]षाड्गुण्यस्य प्रकृतिमण्डलं योनिः॥

पूर्वस्मिन्नधिकरणे 'शमव्यायामयोर्योनिः षाड्गुण्यम्' इत्युक्तम्। तदिदानीं प्रपञ्चयितुमिदमधिकरणमारभ्यते षाड्गुण्यं नाम। तत्र 'षाड्गुण्यसमुद्देशः' इति प्रथमं सूत्रम्। षाड्गुण्यस्य समुद्देशः संक्षेपः इति सूत्रार्थः।

(१) भा. १५।१२।४; भामु. १५।७।४ कर्शनं (कषणं) चापि बहु (चैव बल).

(२) भा. १५।१२।५; भामु. १५।७।५ विधं (विधां).

(३) भा. १५।१२।६; भामु. १५।७।६ नरो (नृपो) तमतोऽन्यथा (तं च वर्जयेत्).

(४) वारा. ६।११।१०; वाराकु. ६।३५।८ कालेषु विग्रहं (कालेन विगृह्णन्) वचनं (वर्धनं).

(५) वारा. ६।११।११; वाराकु. ६।३५।९ पर्येष्यो (कर्तव्यो) रवमन्तव्यो (मवमन्येत).

(६) कौ. ७।१.

अथवा षाड्गुण्यस्य समुद्देशः पूर्वपक्षनिराकरणपूर्वं स्वपक्षस्थापनमित्यर्थः । 'द्वैगुण्यमिति वातव्याधिः' इति हि पूर्वपक्षं निराकृत्य 'षाड्गुण्यमेवैतदवस्थाभेदादिति कौटल्यः' इत्येवं स्वपक्षः स्थाप्यते । तदभिधीयत इति सूत्रार्थः । पूर्वस्मिन् प्रकरणे दैवमानुषयोर्मानुषं चिन्त्यमुक्तम् । चिन्तनप्रकारस्त्वत्र प्रदर्श्यत इति संबन्धः ।

षाड्गुण्यस्य प्रकृतिमण्डलं योनिरिति । संध्यादीनां षण्णां गुणानां स्वाम्यादिप्रकृतिसप्तकं द्वादशराजमण्डलं च योनिः । श्रीमूला.

**संधिविग्रहासनयानसंश्रयद्वैधीभावाः षाड्गुण्यमित्याचार्याः ॥**

संधिः, विग्रहः, आसनम्, यानम्, आश्रयः, द्वैधीभावः इत्येवं षट् गुणा इत्याचार्याः वदन्ति । श्रीमूला.

**द्वैगुण्यमिति वातव्याधिः, संधिविग्रहाभ्यां हि षाड्गुण्यं संपद्यत इति ॥**

द्वावेव गुणौ संधिविग्रहलक्षणौ इति वातव्याधिः । तत्र हेतुः— संधिविग्रहाभ्यां हि षाड्गुण्यं संपद्यत इतीति । संधिविग्रहौ हि षड्गुणरूपतां प्रतिपद्येते । आसनादयश्चत्वारः सन्धिविग्रहयोरन्तर्भवन्ति । तत्र आसनसंश्रयौ संधौ, यानं विग्रहे, द्वैधीभावः उभयोरित्यतः संधिविग्रहौ द्वावेव प्राधान्यात् गुणाविति । श्रीमूला.

**षाड्गुण्यमेवैतदवस्थाभेदादिति कौटल्यः ॥**

स्वमतमाह— षाड्गुण्यमेवैतदवस्थाभेदादिति कौटल्य इति । एतयोः संधिविग्रहयोरवस्थाभेदेन स्वरूपभेदात् षडेव गुणा गणनीया इति कौटल्यमतम् । श्रीमूला.

**तत्र पणबन्धः संधिः, अपकारो विग्रहः, उपेक्षणमासनम्, अभ्युच्चयो यानम्, परार्पणं संश्रयः, संधिविग्रहोपादानं द्वैधीभाव इति षड् गुणाः ॥**

तान् निरूपयति— तत्रेति । तेषु मध्ये पणबन्धः संधिः 'एवमस्य कार्यस्य करणे भूमिकोशदण्डान्यतमं दास्यामि' इत्युक्त्वा तस्य सत्यशपथादिना दृढीकरणं संधिपदार्थः । अपकारो विग्रह इति । शत्रुं प्रति द्रोहाचरणं विग्रहपदार्थः । उपेक्षणमासनमिति । संध्याद्यप्रयोगः आसनम् । अभ्युच्चयो यानमिति । शक्तिदेशकालाद्यतिशययोगः अभ्युच्चयः । स यानहेतुत्वात् यानमित्युच्यते, कारणे कार्योपचारात् । परार्पणं संश्रय इति । बलवतेऽन्यस्मै राज्ञे स्वात्मस्वपुत्रस्वद्रव्याणामर्पणं संश्रयपदार्थः । संधिविग्रहोपादानं द्वैधीभाव इति । संधिविग्रहयोरुभयोरुपादानं द्वैधीभावः । इदं तु बोद्धव्यम्— उभाभ्यां शत्रुभ्यां सह वाङ्मात्रेणाऽऽत्मसमर्पणं कृत्वा गूढचित्तवृत्तित्वेन वर्तनमेको द्वैधीभावः । यथा कामन्दकेन व्याख्यातः— 'बलिनोर्द्विषतोर्मध्ये वाचाऽऽत्मानं समर्पयन् । द्वैधीभावेन वर्तेत काकाक्षिवदलक्षितः ॥' (कानी. ११।२३) इति । शत्रुणैकेन सह प्रकटं संधानं प्रच्छन्नं द्रोहाचरणं चेत्येवं संधिविग्रहसमुदायानुष्ठानमपरो द्वैधीभावः । अयमिह कण्ठोक्तः । प्रथमस्तु 'सहायसाध्ये कार्ये द्वैधीभावं गच्छेत्' इति वक्ष्यमाणग्रन्थेन सूचित इति । इति षड् गुणाः, निरूपिता इति शेषः । श्रीमूला.

**परस्माद्धीयमानः संदधीत । अभ्युच्चीयमानो विगृह्णीयात् । न मां परो नाहं परमुपहन्तुं शक्त इत्यासीत । गुणातिशययुक्तो यायात् । शक्तिहीनः संश्रयेत । सहायसाध्ये कार्ये द्वैधीभावं गच्छेत् ॥**

अथ गुणानां प्रयोगविषयमाह— परस्मादिति । शत्रोः हीयमानः संदधीत संधिं कुर्यात् परेण । अभ्युचीयमानः उपचीयमानः विगृह्णीयात् शत्रुविषये द्रोहमाचरेत् । न मां पर इत्यादि । 'शत्रुः मामुपहन्तुं न शक्तः, अहं परमुपहन्तुं न शक्तः' इति, मन्यमान इति शेषः, आसीत परमुपेक्षेत । गुणातिशययुक्तो यायादिति । अभियास्यत्कर्माधिकरणोक्तः शक्तिदेशकालादिर्गुणातिशयः, तद्युक्तः अभिषेणनं कुर्यात् । शक्तिहीन इति । सः संश्रयेत प्रबलमाश्रयेत । सहायसाध्य इत्यादि । कार्ये सहायसापेक्षे सति द्वैधीभावं गच्छेत् अनुतिष्ठेत् ।

श्रीमूला.

**इति गुणावस्थापनम् ॥**

एवं विषयभेदेन षट् गुणाः स्थापिताः । इत्थं षाड्गुण्यसमुद्देशो निरूपितः । श्रीमूला.

**तेषां यस्मिन् वा गुणे स्थितः पश्येत् 'इहस्थः शक्ष्यामि दुर्गसेतुकर्मवणिक्पथशून्यनिवेशखनिद्रव्यहस्तिवनकर्माण्यात्मनः प्रवर्तयितुं परस्य चैतानि कर्माण्युपहन्तुम्' इति, तमातिष्ठेत्, सा वृद्धिः ॥**

'क्षयस्थानवृद्धिनिश्चयः' इति सूत्रम् । क्षयः कोशदण्डयोरल्पत्वम् । स्थानं साम्यावस्था । वृद्धिः बाहुल्यम् । एषां निश्चयः स्वरूपावधारणमुच्यते इति सूत्रार्थः । गुणा ह्युक्ताः, तेषां फलभूताः क्षयस्थानवृद्धयः इह निरूप्यन्ते ।

तत्र चरमनिर्दिष्टाऽपि वृद्धिः प्राधान्यात् प्रथमं निरूप्यते— तेषां यस्मिन् वेत्यादि । अयमर्थः— गुणानां मध्ये यं गुणमाश्रितो मन्येत 'अहमस्मिन् गुणे स्थितो दुर्गकर्मसेतुकर्मादीन्यात्मनः प्रवर्तयितुं परस्य तान्युपहन्तुं च शक्तो भविष्यामि' इति, तं गुणमनुतिष्ठेत् । तच्च गुणानुष्ठानं वृद्धिनिमित्तत्वादुपचारात् वृद्धिशब्दितमिति । श्रीमूला.

**'आशुतरा मे वृद्धिर्भूयस्तरा वृद्ध्युदयतरा वा भविष्यति, विपरीता परस्य' इति ज्ञात्वा परवृद्धिमुपेक्षेत । तुल्यकालफलोदयायां वृद्धौ संधिमुपेयात् ॥**

परवृद्ध्युपेक्षाया विषयमाह— आशुतरा मे वृद्धिरित्यादि । 'वृद्धिर्मे शीघ्रं भविष्यति, परस्य चिरात् भविष्यति' इति यदि मन्येत स एको विषयः । यौगपद्येऽपि 'वृद्धिर्मेऽधिकतरा, परस्याल्पा भविष्यति' इति यदि मन्येत सोऽपरो विषयः । 'समाऽपि मे वृद्धिर्वृद्ध्यनुबन्धिनी भविष्यति, परस्य तु वृद्ध्यननुबन्धिनी' इति यदि मन्येत सोऽन्यो विषयः । एषु विषयेषु परस्य वृद्धिं नोपहन्तुं यतेत । तुल्यकालफलोदयायामित्यादि । 'परस्याऽऽत्मनश्च वृद्धिस्तुल्यकाला तुल्यफलोदया च भविष्यति' इति चेन्मन्येत तदा संधिमनुतिष्ठेत् । श्रीमूला.

**यस्मिन् वा गुणे स्थितः स्वकर्मणामुपघातं पश्येन्नेतरस्य तस्मिन्न तिष्ठेत्, एष क्षयः ॥**

यद्गुणानुष्ठाने स्वकर्मोपघातं परकर्मानुपघातं च पश्येत् तं गुणं नानुतिष्ठेत् । तदनुष्ठानं च क्षयनिमित्तत्वादुपचारात् क्षय इत्याह— यस्मिन् वा गुणे स्थितः स्वकर्मणामुपघातमित्यादि । श्रीमूला.

**'चिरतरेणाल्पतरं वृद्ध्युदयतरं वा क्षेष्ये, विपरीतं परः' इति ज्ञात्वा क्षयमुपेक्षेत ॥**

'सुदीर्घतरकालातिक्रमानन्तरं मे क्षयो भविष्यति, शत्रोः शीघ्रम्' इति वा, 'अल्पो मे क्षयो भविष्यति, शत्रोर्बहुतरः' इति वा 'मम क्षयो वृद्ध्युदयानुबन्धी, शत्रोस्तु क्षयानुबन्धी' इति वा यदि मन्येत, एषु त्रिषु विषयेष्वात्मनो जायमानं क्षयमुपेक्षेत, न तु तदुपघाताय यत्नं कुर्यादित्याह— चिरतरेणाल्पतरमित्यादि । श्रीमूला.

**तुल्यकालफलोदये वा क्षये संधिमुपेयात् ॥**

'शत्रोरात्मनश्च क्षयस्तुल्ये काले भविष्यति तुल्यफलोदयश्च' इति यदि पश्येत् तदा संधिमनुतिष्ठेत् । श्रीमूला.

**यस्मिन् वा गुणे स्थितः स्वकर्मवृद्धिं क्षयं वा नाभिपश्येदेतत् स्थानम् ॥**

यद्गुणानुष्ठाने स्वस्य वृद्धिं क्षयं वा न पश्येत् तदिदं तादवस्थ्यहेतुत्वात् स्थानमित्युच्यते इत्याह— यस्मिन् वा गुणे स्थितः स्वकर्मवृद्धिमित्यादि । श्रीमूला.

**'ह्रस्वतरं वृद्ध्युदयतरं वा स्थास्यामि विपरीतं परः' इति ज्ञात्वा स्थानमुपेक्षेत ॥**

'अदीर्घकालं मे स्थानं भविष्यति, परस्य दीर्घकालम्' इति वा, 'मम स्थानं वृद्ध्यनुबन्धि भविष्यति, परस्य तु क्षयानुबन्धि' इति वा यदि मन्येत तदा स्थानमुपेक्षेत । श्रीमूला.

**तुल्यकालफलोदये वा स्थाने संधिमुपेयादित्याचार्याः ॥**

परेण तुल्यकाले तुल्यफले च सति स्थाने संधिम् उपेयात् कुर्यात् । इत्याचार्या इति । उक्तमिदमर्थजातम् आचार्या ऊचुरित्यर्थः । श्रीमूला.

**नैतद् विभाषितमिति कौटल्यः ॥**

इदमाचार्यैर्विशेषेण न भाषितमिति कौटल्यः मन्यते । श्रीमूला.

**यदि वा पश्येत्– ' संधौ स्थितो महाफलैः स्वकर्मभिः परकर्माण्युपहनिष्यामि, महाफलानि वा स्वकर्माण्युपभोक्ष्ये, परकर्माणि वा, संधिविश्वासेन वा योगोपनिषत्प्रणिधिभिः परकर्माण्युपहनिष्यामि, सुखं वा सानुग्रहपरिहारसौकर्यं फललाभभूयस्त्वेन स्वकर्मणां परकर्मयोगावहं जनमास्रावयिष्यामि, बलिनाऽतिमात्रेण वा संहितः परः स्वकर्मोपघातं प्राप्स्यति, येन वा विगृहीतो मया संधत्ते तेनास्य विग्रहं दीर्घं करिष्यामि, मया वा संहितस्य मद्द्वेषिणो जनपदं पीडयिष्यति, परोपहतो वाऽस्य जनपदो मामागमिष्यति ततः कर्मसु वृद्धिं प्राप्स्यामि, विपन्नकर्मारम्भो वा विषमस्थः परः कर्मसु न मे विक्रमेत परतः प्रवृत्तकर्मारम्भो वा ताभ्यां संहितः कर्मसु वृद्धिं प्राप्स्यामि, शत्रुप्रतिबद्धं वा शत्रुणा संधिं कृत्वा मण्डलं भेत्स्यामि, भिन्नमवाप्स्यामि, दण्डानुग्रहेण वा शत्रुमुपगृह्य मण्डललिप्सायां विद्वेषं ग्राहयिष्यामि, विद्विष्टं तेनैव घातयिष्यामि ' इति संधिना वृद्धिमातिष्ठेत् ॥**

स्वयं तु विशेषमाह– यदि वा पश्येदित्यादि । एषोऽर्थः– " संधौ क्रियमाणे महाफलैः स्वकर्मभिर्दुर्गसेतुखनिवणिक्पथादिभिः परकर्मणामुपघातं करिष्यामि, अर्थात् स्वकर्मोत्पादितानां प्रभूतानां साराणां च वस्तूनां परविषये नयनेन परकर्मजनितवस्तूनां मूल्यहानिमुत्पादयिष्यामि ' इति चेन्मन्येत " इत्येको विषयः । अथवा " संधिवशात् महाफलानि कर्माण्यनुभविष्यामि ' इति चेन्मन्येत " इति द्वितीयः । यद्वा " संधिवशात् महाफलानि परस्य कर्माण्यनुभविष्यामि ' इति चेन्मन्येत " इति तृतीयो विषयः । अथवा " संधिना परस्य विश्वासं जनयित्वा गूढपुरुषतीक्ष्णादिप्रयोगलक्षणैर्योगप्रणिधानैः विषधूमाम्बुदूषणादिलक्षणैरुपनिषत्प्रयोगैश्च महाफलानां परकीयकर्मणामुपघातं करिष्यामि ' इति चेन्मन्येत " इति चतुर्थो विषयः । अथवा " संधिविश्वासेन शत्रुकर्मानुष्ठानकारिणं जनं बीजदानाद्युपकारलक्षणानुग्रहेण करमोक्षलक्षणपरिहारेण च कृष्यादिसौकर्यातिशययुक्तं कृत्वा, फललाभेन च भूयसा योजयित्वा, स्वकर्मनियोगार्थे अनायासादाकक्ष्यामि ' इति चेन्मन्येत " इति पञ्चमो विषयः । अथवा " बलवता प्रवृद्धकोशेन स्वशत्रुणा कृतसंधिः शत्रुः तस्मै अतिमात्रधनार्पणेन क्षीणकोशो भूत्वा स्वकर्मोपघातं प्राप्स्यति ' इति चेन्मन्येत " इति षष्ठो विषयः । अथवा " येन विग्रहमनुष्ठातुं मया सह संधिं करोति तेन सहास्य विग्रहं चिरकालाविच्छिन्नमापादयिष्यामि ' इति चेन्मन्येत " इति सप्तमो विषयः । अथवा " मया कृतसंधेर्मच्छत्रोर्जनपदमयं पीडयिष्यति ' इति चेन्मन्येत " इति अष्टमो विषयः । अथवा " परोपहतोऽस्य जनपदः अनेन सहेदानीं संधिकरणे मम वशं गमिष्यति, तेन मे कर्मवृद्धिर्भविष्यति ' इति चेन्मन्येत " इति नवमो विषयः । अथवा " उपहतदुर्गादिकार्यारम्भोऽयं शत्रुः संकटस्थः, अन्यसाह्येन च प्रवृत्तकार्यारम्भोऽसौ संकटस्थः, आभ्यां संधिकरणे कर्मसु विघातो मे न भविष्यति, प्रत्युत वृद्धिर्भविष्यति' इति चेन्मन्येत" इति दशमैकादशौ विषयौ । अथवा " शत्रुणा भेदमप्राप्तं मण्डलं शत्रुणा सह संधिं कृत्वा भेत्स्यामि ' इति चेन्मन्येत " इति द्वादशो विषयः । " भिन्नं च शत्रुं साधयिष्यामि' इति चेन्मन्येत" इति त्रयोदशो विषयः । अथवा " सैन्यसाह्यदानेन शत्रुं वशयित्वा मण्डललाभार्थे यतमाने तस्मिन् मण्डलस्य तेन सह द्वेषं जनयिष्यामि ' इति चेन्मन्येत " इति चतुर्दशो विषयः । " द्विष्टं च तेनैव घातयिष्यामि ' इति चेन्मन्येत " इति पञ्चदशो विषयः ।

एषु पञ्चदशसु विषयेषु अन्येषु चैवंजातीयेषु संध्यनुष्ठानेनाऽऽत्मनो वृद्धिं संपादयेदिति । श्रीमूला.

**यदि वा पश्येत्– 'आयुधीयप्रायः श्रेणीप्रायो वा मे जनपदः शैलवननदीदुर्गैकद्वारारक्षो वा शक्ष्यति पराभियोगं प्रतिहन्तुमिति, विषयान्ते दुर्गमविषह्यमपाश्रितो वा शक्ष्यामि परकर्माण्युपहन्तुमिति, व्यसनपीडोपहतोत्साहो वा परः संप्राप्तकर्मोपघातकाल इति, विगृहीतस्यान्यतो वा शक्ष्यामि जानपदमपवाहयितुम्' इति विग्रहे स्थितो वृद्धिमातिष्ठेत् ॥**

इत्थं संधिकरणेन वृद्धिरुक्ता । विग्रहेण वृद्धिमाह– यदि वा पश्येदित्यादि । 'आयुधजीविक्षत्रियादिप्रचुरः कृषिकर्तृकारयितृश्रेणीबहुलः शैलदुर्गवनदुर्गनदीदुर्गयुक्तः एकद्वारप्रवेशनिर्गमतयाऽनायासरक्ष्यो वा मे जनपदः पराभियोगं प्रतिहन्तुं शक्तो भविष्यति' इति चेन्मन्येत, अथवा 'विषयसीमायामविनाश्यं दुर्गमाश्रितः परकर्माण्युपहन्तुं शक्ष्यामि' इति चेन्मन्येत, अथवा 'शत्रोर्व्यसनपीडाभग्नोत्साहत्वात् तत्कर्मोपघातं मे कर्तुमवसरः प्राप्तः' इति चेन्मन्येत, अथवा 'विगृहीतस्य शत्रोर्जनपदमन्येन पथाऽवस्कन्दितुं शक्ष्यामि' इति चेन्मन्येत, एषु चतुर्षु विषयेषु एवं जातीयेष्वन्येषु च विग्रहमास्थाय वृद्धिमन्विच्छेत् । श्रीमूला.

**यदि वा मन्येत– 'न मे शक्तः परः कर्माण्युपहन्तुम्, नाहं तस्य कर्मोपघाती वा, व्यसनमस्य, श्ववराहयोरिव कलहे वा स्वकर्मानुष्ठानपरो वा वर्धिष्ये' इत्यासनेन वृद्धिमातिष्ठेत् ॥**

आसनेन वृद्धिमाह– यदि वा मन्येतेत्यादि । 'शत्रुर्मम कर्माण्युपहन्तुं न शक्तः, तस्य चाहं कर्माण्युपहन्तुं न शक्तः, व्यसनं चास्य वर्तते, श्ववराहयोरिव समयोरावयोर्विग्रहे वा सति स्वकर्मानुष्ठानपरो वृद्धिं प्राप्स्यामि' इति चेन्मन्येत, तादृशे निमित्ते आसनेन वृद्धिमन्विच्छेत् । श्रीमूला.

**यदि वा मन्येत– 'यानसाध्यः कर्मोपघातः शत्रोः, प्रतिविहितस्वकर्मारक्षश्चास्मि' इति यानेन वृद्धिमातिष्ठेत् ॥**

यानेन वृद्धिमाह– यदि वा मन्येत यानसाध्य इत्यादि । 'परस्य कर्मोपघातो यानेनैव साध्यः, स्वकर्मरक्षा च मया सुसंविहिता' इति चेत् पश्येत्, तदा यानेन वृद्धिमन्विच्छेत् । श्रीमूला.

**यदि वा मन्येत– 'नास्मि शक्तः परकर्माण्युपहन्तुम्, स्वकर्मोपघातं वा त्रातुम्' इति बलवन्तमाश्रितः स्वकर्मानुष्ठानेन क्षयात् स्थानं स्थानाद् वृद्धिं चाऽऽकाङ्क्षेत ॥**

संश्रयेण वृद्धिमाह– यदि वा मन्येत नास्मि शक्त इत्यादि । 'परकर्माण्युपहन्तुं स्वकर्मोपघातं प्रतिविधातुं चाहं न शक्तः' इति चेन्मन्येत, बलवन्तं समाश्रयेत् । ततः स्वकर्मानुष्ठानेन क्षयं परिहृत्य स्थानावस्थां चाऽऽसाद्य ततो वृद्धिं लिप्सेत । श्रीमूला.

**यदि वा मन्येत– 'संधिनैकतः स्वकर्माणि प्रवर्तयिष्यामि विग्रहेणैकतः परकर्माण्युपहनिष्यामि' इति द्वैधीभावेन वृद्धिमातिष्ठेत् ॥**

द्वैधीभावेन वृद्धिमाह– यदि वा मन्येत संधिनेत्यादि । 'शत्रुणैकेन संधिं कृत्वा स्वकर्माणि प्रवर्तयितुमन्येन विगृह्य तत्कर्माण्युपहन्तुं च शक्ष्यामि' इति चेन्मन्येत, तदा द्वैधीभावेन वृद्धिं प्राप्नुयात् । श्रीमूला.

**एवं षड्भिर्गुणैरेतैः स्थितः प्रकृतिमण्डले ।**
**पर्येषेत क्षयात् स्थानं स्थानाद् वृद्धिं च कर्मसु ॥**

प्रान्ते श्लोकमाह– एवमित्यादि । प्रकृतिमण्डलस्थो राजा अनेन प्रकारेण संध्यादिषड्गुणप्रयोगैः कर्मसु क्षयावस्थामुत्तीर्याधिगतस्थानावस्थो वृद्धिमन्विच्छेदिति । श्रीमूला.

द्वयोर्गुणयोस्तुल्यत्वे कतर एकोऽनुष्ठेय इति निर्णयः

**'संधिविग्रहयोस्तुल्यायां वृद्धौ संधिमुपेयात् । विग्रहे हि क्षयव्ययप्रवासप्रत्यवाया भवन्ति ॥**

(१) कौ. ७।२.

अथ द्वितीयोऽध्याय आरभ्यते । तत्राऽऽदौ क्षयस्थानवृद्धिनिश्चयप्रकरणशेषं वक्ष्यमाणस्य संश्रयवृत्तिप्रकरणस्य प्रसङ्गकमुच्यते । तत्र पूर्वमेकेन गुणेन वृद्ध्यन्विच्छाप्रकार उक्तः । इदानीं द्वयोर्गुणयोर्वृद्धिसाम्ये कतरोऽनुष्ठेय इत्येतदभिधीयते ।

संधिविग्रहयोरित्यादि । तयोर्वृद्धिलाभे समाने संधिमनुतिष्ठेत् । कुतः ? विग्रहे हि क्षयव्ययप्रवासप्रत्यवाया भवन्तीति । विग्रहोपादाने हि प्राणिक्षयः धनधान्यादिव्ययः विदेशगमनं परपुरुषकृतविषाम्बुदूषणादिनिमित्तः प्रत्यवायश्च इत्येतेऽनर्था जायन्ते । संध्युपादाने तु नायं दोष इति । श्रीमूला.

**तेनाऽऽसनयानयोरासनं व्याख्यातम् ॥**

अनेन न्यायेन यानासनयोस्तुल्यायां वृद्धौ आसनमनुष्ठेयमित्येतदुक्तप्रायमित्याह— तेनाऽऽसनेत्यादि ।

श्रीमूला.

**द्वैधीभावसंश्रययोर्द्वैधीभावं गच्छेत् । द्वैधीभूतो हि स्वकर्मप्रधान आत्मन एवोपकरोति । संश्रितस्तु परस्योपकरोति, नाऽऽत्मनः ॥**

द्वैधीभावसंश्रययोरिति । तयोः समवृद्धिकयोः सतोः द्वैधीभावं गच्छेत् उपाददीत । तत्र हेतुमाह— द्वैधीभूतो हि स्वकर्मप्रधानः प्राधान्येन स्वकर्मैवानुतिष्ठन् आत्मन एव उपकरोति । संश्रितस्तु परस्योपकरोति, तद्विधेयत्वात् , आत्मनः नोपकरोति । इत्येतावता क्षयस्थानवृद्धिनिश्चयः परिसमापितः । श्रीमूला.

शक्तितारतम्यानुसारेण षण्णां गुणानामन्यतमस्य तत्र तत्र अवस्थापनम् , निमित्तविशेषेण त्रिविधहीनसंध्यवस्थापनम्

**[1]विजिगीषुः शक्त्यपेक्षः षाड्गुण्यमुपयुञ्जीत । समज्यायोभ्यां संधीयेत । हीनेन विगृह्णीयात् । विगृहीतो हि ज्यायसा हस्तिना पादयुद्धमिवाभ्युपैति । समेन चाऽऽमं पात्रमामेनाऽऽहतमिवोभयतः क्षयं करोति । कुम्भेनेवाश्मा हीनेनैकान्तसिद्धिमवाप्नोति ॥**

'समहीनज्यायसां गुणाभिनिवेशः' इति सूत्रम् । समः शत्रुणा तुल्यशक्तिसिद्धिः । हीनः शत्रुतो न्यूनशक्तिसिद्धिः । ज्यायान् ततोऽधिकशक्तिसिद्धिः । आसु समाद्यवस्थासु गुणस्थापनोच्यते इति सूत्रार्थः । पूर्वं निमित्तापेक्षः षाड्गुण्यप्रयोग उक्तः , शक्त्यपेक्ष इदानीमभिधीयते ।

विजिगीषुरिति । सः शक्त्यपेक्षः स्वशक्तिमपेक्ष्य षाड्गुण्यम् उपयुञ्जीत प्रयुञ्जीत । समज्यायोभ्यां संधीयेत समेन ज्यायसा च सह संदधीत । हीनेन विगृह्णीयात् । ज्यायसा सह हीनस्य विग्रहः पदातेरिव हस्तिना युद्धं नाशहेतुः , समेन समस्य विग्रहः आमपात्रस्येवाऽऽमपात्रेणाऽऽहननमुभयनाशहेतुः , हीनेन ज्यायसो विग्रहः कुम्भेनेव शिलायाः संघट्ट एकान्तसिद्धिहेतुर्भवतीत्याह— विगृहीतो हि ज्यायसेत्यादि । श्रीमूला.

**ज्यायांश्चेन्न संधिमिच्छेत् , दण्डोपनतवृत्तमाबलीयसं वा योगमातिष्ठेत् ॥**

ज्यायांश्चेदिति । स चेत् संधिं नेच्छेत् , दण्डोपनतवृत्तं तत्प्रकरणोक्तम् ( कौ. ७।१५ ), आबलीयसं योगं वा आबलीयसाधिकरणीययोगातिसंधानप्रकरणोक्तम् ( कौ. १२।५ ) आतिष्ठेत् अनुतिष्ठेत् । श्रीमूला.

**समश्चेन्न संधिमिच्छेत् , यावन्मात्रमपकुर्यात् तावन्मात्रमस्य प्रत्यपकुर्यात् । तेजो हि संधानकारणम् , नातप्तं लोहं लोहेन संधत्त इति ॥**

यावन्मात्रमपकुर्यात् यत्परिमाणमपकारं कुर्यात् संधिमिच्छुः समः तावन्मात्रमस्य प्रत्यपकुर्यात् प्रत्यपकारं कुर्यादितरः । तथाकरणं संधित्सोत्पादनेन संधिकारणं भवतीति तप्तलोहदृष्टान्तपूर्वमाह— तेजो हीत्यादि ।

श्रीमूला.

**हीनश्चेत् सर्वत्रानुप्रणतस्तिष्ठेत् , संधिमुपेयात् । आरण्योऽग्निरिव हि दुःखामर्षजं तेजो विक्रमयति । मण्डलस्य चानुग्राह्यो भवति ॥**

---

( १ ) कौ. ७।३.

हीनेन असंधिः पूर्वं प्रतिपादितः । विषयविशेषे तेनापि संधिं कुर्यादित्याह— हीन इति । स चेत् सर्वत्र अनुप्रणतः तिष्ठेत् तर्हि संधिमुपेयात्, अर्थात् तेन सह । प्रणतेन संध्यकरणे दोषमाह—आरण्योऽग्निरिव हीति । वन्यो वह्निरिव दुर्विषह्यं दुःखामर्षजं दुःखप्रभवममर्षप्रभवं च तेजः विक्रमयति विजिगीषौ विक्रान्तं करोति, अर्थात् तं हीनम् । मण्डलस्य च अनुग्राह्यः अनुकम्पाविषयो भवति । श्रीमूला.

**संहितश्चेत् 'परप्रकृतयो लुब्धक्षीणापचकिताः प्रत्यादानभयाद् वा नोपगच्छन्ति' इति पश्येद्धीनोऽपि विगृह्णीयात् ॥**

विजिगीषोर्हीनावस्थायां संधिसंश्रययोरनुष्ठानप्रकार उक्तः । तत्रापवादमाह— संहितश्चेदित्यादि । अयमर्थः— हीनो विजिगीषुः परेण सह कृतसंधिर्यदि मन्येत 'परप्रकृतयो लुब्धाश्च क्षीणाश्चातृप्ताश्च नोपगच्छन्ति उच्छेदशङ्कया वा मां नोपगच्छन्ति' इति, तर्हि हीनोऽपि ज्यायसाऽपि परेण सह विगृह्णीयात् । अपचकितशब्दः अपतृप्तार्थकः 'चक तृप्तौ' इति धातोरपपूर्वात् क्तप्रत्ययेन निष्पन्नः । अपचरितपाठे दानमानाद्यकरणेन अनादृता इत्यर्थः । श्रीमूला.

**विगृहीतश्चेत् 'प्रकृतयो लुब्धक्षीणापचरिता विग्रहोद्विग्ना वा मां नोपगच्छन्ति' इति पश्येत्, ज्यायानपि संधीयेत, विग्रहोद्वेगं वा शमयेत् । व्यसनयौगपद्ये 'गुरुव्यसनोऽस्मि, लघुव्यसनः परः सुखेन प्रतिकृत्य व्यसनमात्मनोऽभियुञ्ज्यात्' इति पश्येत्, ज्यायानपि संधीयेत ॥**

ज्यायसो हीनेन सह यत् विग्रहणं तस्यापवादमाह— विगृहीतश्चेदित्यादि । अयमर्थः— ज्यायान् विजिगीषुः परेण विगृह्णन् यदि मन्येत 'प्रकृतयो लुब्धक्षीणापचरिताः विग्रहभीता वा मां नोपगच्छन्ति' इति, तर्हि ज्यायानपि परेण हीनेनापि संधिं कुर्यात्, विग्रहनिमित्तमुद्वेगं वा प्रकृतीनां शमयेदिति । ज्यायसो हीनेन सह संधिकर्तव्यतायामन्यन्निमित्तमाह— व्यसनयौगपद्य इत्यादि । द्वयोर्व्यसनस्य युगपद्भावे 'मम व्यसनं गुरु परस्य व्यसनं लघु, तत् आत्मव्यसनस्य प्रतीकारं परः सुखेन कृत्वा मामभियुञ्जीत' इति चेत् विजिगीषुर्मन्येत, तदा ज्यायानपि सन् परेण संधिं कुर्यात् । श्रीमूला.

**संधिविग्रहयोश्चेत् परकर्शनमात्मोपचयं वा नाभिपश्येत्, ज्यायानप्यासीत ॥**

संधौ विग्रहे वा क्रियमाणे परापचयमात्मोपचयं वा यदि न संभावयेत् तदा ज्यायानप्यासनमेवानुतिष्ठेदित्याह— संधिविग्रहयोश्चेदित्यादि । श्रीमूला.

**परव्यसनमप्रतिकार्यं चेत् पश्येत्, हीनोऽप्यभियायात् ॥**

परव्यसनस्यान्तःकोपादिलक्षणस्याप्रतिविधेयत्वसंभावनायां हीनोऽपि यानमनुतिष्ठेदित्याह— परव्यसनमित्यादि । श्रीमूला.

**अप्रतिकार्यासन्नव्यसनो वा ज्यायानपि संश्रयेत ॥**

आत्मनो व्यसनमप्रतिविधेयमासन्नं यदि पश्येत् स ज्यायानपि सन् हीनं संश्रयेतेत्याह— अप्रतिकार्यासन्नव्यसन इत्यादि । श्रीमूला.

**संधिनैकतो विग्रहेणैकतश्चेत् कार्यसिद्धिं पश्येत्, ज्यायानपि द्वैधीभूतस्तिष्ठेदिति ॥**

एकेन संधिकरणे कार्यसिद्धिः, अन्येन विग्रहकरणे कार्यसिद्धिरिति चेत् पश्येत्, तादृशे निमित्ते ज्यायानपि द्वैधीभावमनुतिष्ठेदित्याह— संधिनैकत इत्यादि । इतिशब्दः प्रक्रान्तप्रकरणसमाप्त्यर्थः । श्रीमूला.

**एवं समस्य षाड्गुण्योपयोगः ॥**

'हीनसंधयः' इति सूत्रम् । हीनः शक्तिसिद्धिभ्यां शत्रोरपकृष्टः, तेन कर्तव्याः संधय इति सूत्रार्थः । पूर्वस्मिन् प्रकरणे समहीनज्यायसां षाड्गुण्यप्रयोग उक्तः, अत्र तु हीनं प्रति विशेष उच्यते ।

एवमिति । पूर्वोक्तेन प्रकारेण समस्य सर्वस्य समहीनज्यायसां सर्वेषामित्यर्थः, षाड्गुण्योपयोगः दर्शित इति शेषः । श्रीमूला.

**अपकुर्यात् समर्थं वा नोपकुर्याद्यदापदि ।**
**उच्छिन्द्यादेव तन्मित्रं विश्वस्याङ्कमुपस्थितम् ॥**

यत् मित्रं विजिगीषोरपकारं कुर्यात्, समर्थं वा सत् उपकारमापदि न कुर्यात्, तत् मित्रम् उपायैरात्मनि विश्वासयुक्तं कृत्वा स्वोत्सङ्गगतं विजिगीषुरुच्छिन्द्यात्, न तूपेक्षेतेत्याह— अपकुर्यादित्यादि । श्रीमूला.

**मित्रव्यसनतो वाऽरिरुत्तिष्ठेद्योऽनवग्रहः ।**
**मित्रेणैव भवेत्साध्यश्छादितव्यसनेन सः ॥**

योऽरिर्विजिगीषोर्मित्रव्यसनवशात् प्रतिबन्धं विनैव वृद्धिं प्राप्नुयात् सः मित्रेणैव स्वप्रयत्नप्रशमितव्यसनेन स्वप्रयत्नाप्रकाशितव्यसनेन वा साधनीय इत्याह— मित्रव्यसनतो वाऽरिरित्यादि । श्रीमूला.

**अमित्रव्यसनान्मित्रमुत्थितं यद्विरज्यति ।**
**अरिव्यसनसिद्ध्या तच्छत्रुणैव प्रसिध्यति ॥**

यत् मित्रं अमित्रस्य बलादिव्यसनात् वृद्धिं प्राप्तं सत् विजिगीषुविरक्तं भवति तत् मित्रं विजिगीषुररिव्यसननिवर्तनपूर्वमरिणैवोद्योजितेन साधयेदित्याह— अमित्रव्यसनान्मित्रमित्यादि । अरिव्यसनसिद्ध्या अरिव्यसनस्यापोहेनेत्यर्थः । श्रीमूला.

**वृद्धिं क्षयं च स्थानं च कर्शनोच्छेदनं तथा ।**
**सर्वोपायान्समादध्यादेतान्यश्चार्थशास्त्रवित् ॥**

योऽर्थशास्त्रवित् स तु वृद्धिं क्षयं स्थानं च तथा कर्शनोच्छेदनं कर्शनमुच्छेदनं च एतान् सर्वोपायान् सर्वांश्च सामदानादीनुपायान् समादध्यात् सम्यक् तत्तद्विषयसंप्रधारणपूर्वं प्रयुञ्जीत । श्रीमूला.

**एवमन्योन्यसंचारं षाड्गुण्यं योऽनुपश्यति ।**
**स बुद्धिनिगलैर्बद्धैरिष्टं क्रीडति पार्थिवैः ॥**

यथाप्रपञ्चितार्थसम्यक्प्रयोगप्रयोजनाख्यानेनाधिकरणमुपसंहरति— एवमिति । प्रपञ्चितः प्रकारैः यः अन्योन्यसंचारं परस्परोपश्लिष्टं षाड्गुण्यम् अनुपश्यति अनुसंधत्ते सः बुद्धिनिगलैः बुद्धिभिरेव बन्धनशृङ्खलाभिः बद्धैः स्वायत्ततां नीतैः पार्थिवैः क्रीडासाधनैः इष्टं यथाकामं क्रीडति । श्रीमूला.

षाड्गुण्यस्य कारणं कार्यं च

**[1]शमव्यायामौ योगक्षेमयोर्योनिः ॥**

'शमव्यायामिकम्' इति सूत्रम् । कर्मफलोपभोगानां क्षेमसाधनं शमः । व्यायामस्तु कर्मारम्भोपकरणानां कर्मयोगघटकः । तदुभयमस्मिन् प्रकरणे प्रतिपाद्यते इत्यर्थः । शक्तिसिद्धियुक्तेन संपन्नप्रकृतिना विजिगीषुणा मण्डलेषु षाड्गुण्यं प्रयोक्ष्यमाणेन योगः क्षेम इति द्वयमवश्यं विज्ञातव्यम् । योगक्षेमयोश्च कारणं शमव्यायामाविति तयोरिहाभिधानसंगतिः ।

शमव्यायामौ योगक्षेमयोर्योनिरिति । अपूर्वलाभो योगः । तस्य व्यायामः कारणम् । आर्जितानां निर्विघ्नोपभोगः क्षेमः । तस्य शमः कारणम् । यथासंख्यमिह न विवक्षितम् । श्रीमूला.

**कर्मारम्भाणां योगाराधनो व्यायामः । कर्मफलोपभोगानां क्षेमाराधनः शमः ॥**

आरभ्यमाणानां कर्मणां स्वविषये दुर्गादीनां परविषये संध्यादीनां च योगाराधनः— योगः कर्मकरपुरुषसंबन्धस्तदपेक्षितोपकरणसंबन्धश्च, तत्साधकः व्यायामः व्यायामपदार्थः । कर्मफलोपभोगानाम्— कर्मणां पूर्वोक्तानां फलं स्वविषये रत्नसारफल्गुकुप्यधान्यहिरण्यादि, परविषये मित्रभूमिहिरण्यादि, तस्य उपभोगाः दृष्टादृष्टार्था विनियोगाः, तेषां क्षेमाराधनः— क्षेमः सर्वविघ्नविघातः, तत्साधकः शमः शमपदार्थः । श्रीमूला.

**शमव्यायामयोर्योनिः षाड्गुण्यम् ॥**

षाड्गुण्यं षड् गुणाः संधिविग्रहादयः शमव्यायामयोः योनिः कारणम् । श्रीमूला.

**क्षयः स्थानं वृद्धिरित्युदयास्तस्य ॥**

क्षयः अपचयः, स्थानं तादवस्थ्यम्, वृद्धिः उपचयः, इत्येते तस्य षाड्गुण्यस्य उदयाः फलानि । श्रीमूला.

**मानुषं नयापनयौ । दैवमयानयौ ॥**

उदयानां प्रापकं च द्विरूपं कर्म प्रतीतम्— मानुषं दैवमिति । तत् विभजते— मानुषमिति । मानुषं

(१) कौ. ६।२.

कर्म नयापनयौ नयश्चापनयश्चेति द्विप्रकारम् । दैवम् अयानयौ अयश्च अनयश्चेति द्विप्रकारम् । श्रीमूला.

**दैवमानुषं हि कर्म लोकं यापयति । अदृष्टकारितं दैवम् । तस्मिन्निष्टेन फलेन योगोऽयः । अनिष्टेनानयः ॥**

दैवमानुषात्मकं हि कर्म लोकं यापयति लोकयात्रां वर्तयति । अदृष्टकारितं दैवमिति । अदृष्टेन धर्मात्मकेन वा अधर्मात्मकेन वा कारितं दैवं भवति । तस्मिन् अर्थात् धर्मादृष्टकारिते दैवे सति इष्टेन फलेन अर्थलाभप्रियसंगमादिलक्षणेन योगः अयः इत्युच्यते । अनिष्टेन फलेन अर्थहानिप्रियविरहादिलक्षणेन योगः अनयशब्दवाच्यः, अर्थादधर्मादृष्टकारिते दैवे सति । श्रीमूला.

**दृष्टकारितं मानुषम् । तस्मिन् योगक्षेमनिष्पत्तिर्नयः । विपत्तिरपनयः । तच्चिन्त्यम् । अचिन्त्यं दैवमिति ॥**

प्रभुमन्त्रोत्साहशक्तिहेतुकषाड्गुण्यप्रयोगप्रभवं मानुषं कर्म । तस्मिन् सति योगक्षेमनिष्पत्तिः अपूर्वलाभकर्मफलोपभोगयोः सिद्धिः नयः नयपदार्थः, अर्थात् संध्यादिसम्यक्प्रयोगः । विपत्तिः अपनयः योगक्षेमानिष्पत्तिः अपनयपदार्थः, अर्थात् संध्याद्यसम्यक्प्रयोगः । तच्चिन्त्यमिति । मानुषं कर्म प्रत्यक्षत्वात् विमृश्यानुष्ठेयं योगक्षेमनिष्पत्तये विपत्तिपरिहाराय च । दैवम् अचिन्त्यं विमृष्टुमशक्यमप्रत्यक्षत्वात् । इतिशब्दः शमव्यायामकथनपरिसमाप्त्यर्थः । श्रीमूला.

## वृद्धचाणक्यः

संधेयत्वं विग्राह्यत्वं च कालप्रयुक्तम्

**[१]कालेन रिपुणा संधिः काले मित्रेण विग्रहः ।
कार्यकारणमाश्रित्य कालं क्षिपति पण्डितः ॥**

(१) वृचा. ८।२; चासा. ३।१ पूर्वार्धे (काले च रिपुणा संधिः काले च मित्रविग्रहः ।); लचा. Group 2 E चासावत्; चाशा. १।१० कार्यका (कालं का).

## चाणक्यराजनीतिशास्त्रम्

संधिविग्रहविवेकः

**[१]षण्मासमथवा वर्षं संधिं कुर्यान्नराधिपः ।
आत्मनो बलमालोक्य पश्चाच्छत्रून्निपातयेत् ॥**

**[२]स्कन्धेनापि वहेच्छत्रुर्यावत् कालविपर्ययः ।
तमेव काले संप्राप्ते भिन्द्याद् घटमिवाश्मनि ॥**

## मनुः

कार्यानुसारेण द्विविधं षाड्गुण्यं चिन्तनीयम्

**[३]संधिं च विग्रहं चैव यानमासनमेव च ।
द्वैधीभावं संश्रयं च षड्गुणांश्चिन्तयेत्सदा ॥**

(१) तत्र हिरण्यादिदानोभयानुग्रहार्थः संधिः । तद्विपरीतो विग्रहः । एकान्ततागमनं यानम् । उपेक्षायां (? उपेक्षणम्) आसनम् । संधिविग्रहोपादानं द्वैधीभावः । परस्याऽऽत्मार्पणं संश्रयः । एते षट् गुणाः । एतेषां यस्मिन् गुणेऽवस्थितो मन्येत 'अहं शक्ष्यामि दुर्गं कारयितुम्, हस्तिनीर्बन्धयितुम्, खनीः खनयितुम्, वणिक्पथं प्रयोजयितुम्, जतुवनं छेदयितुम्, अदेवमातृकदेशे क्षेत्राणि बन्धयितुम्, इत्येवमादीनि परस्य वित्तानि हर्तुम्', बुद्धिविघातार्थं गुणमुपेयात् । मेधा.

(२) तत्र उभयानुग्रहकृत् पणबन्धः संधिः । अपकारः विग्रहः । अभ्युदये सति अरिं प्रति गमनं यानम् । उपेक्षणम् आसनम् । एकेन सह संधिः अन्येन सह विग्रहः द्वैधीभावः । परस्य आत्मार्पणं संश्रयः । इत्येतान् षट् गुणान् उपकारकान् सर्वदा चिन्तयेत् ।

(१) चाशा. ५।२६.

(२) चाशा. ५।२८; चासा. २।१० (वहेदमित्रं स्कन्धेन यावत् कालं विवर्जयेत् । तथैवमागते काले भिन्द्याद् घटमिवाश्मनि ॥).

(३) मस्मृ. ७।१६०; गोरा. षड्गुणांश्च (षाड्गुण्यं चि); राक. १११; रार. ५६ गुणांश्च (गुणं चि); प्रभा. ४११; राप्र. ३२४; नीम. ४४ गोरावत्.

यद्गुणाश्रयणेन आत्मनोऽभ्युदयः, परस्यापचयः भवति तमेव गुणमधितिष्ठेत् । * गोरा.

(३) संधिः दानसामादिना आत्मीयताकरणम् । विग्रहः वैरोपदर्शनम् । यानम् उद्यम्य गमनम् । आसनम् अकिंचिदुक्त्वाऽवधारणम् । द्वैधीभावः अल्पस्य सैन्यस्य विभज्य योधनम् । संश्रयः स्वस्याबलत्वे बलवत्पराश्रयणम् । मवि.

(४) परस्याऽऽत्मसात्करणे षडुपायानाह— संधिमिति । तत्र संधिः उभाभ्यां हस्त्याद्यर्थे नापकर्तव्यमिति नियमबन्धः, द्वयोर्धारणपोषणयोर्हेतुत्वात् । स्वार्थसिद्धये स्वस्य हस्त्यादिबलस्य च द्विधाकरणं द्वैधीभावः । $ मच.

**[1]आसनं चैव यानं च संधिं विग्रहमेव च ।**
**कार्यं वीक्ष्य प्रयुञ्जीत द्वैधं संश्रयमेव च ॥**

(१) एवं च सति एकेन संधाय अपरस्मिन् याने शक्तः मृषा विगृह्णीयात् । एवमासनमपि संधाय विगृह्य च । सर्वमेतत्कार्यं वीक्ष्य प्रयुञ्जीत । नात्र नियतः कालः । यदैव यद्युक्तं मन्येत तदैव तदाचरेत् । यदि कालनियमो लक्षयितुं न शक्यते, उपदेशः किमर्थम् ? एवमाह न शक्यते । विशेषो दुर्लक्षः, सामान्यं तु सुलक्षणम् । एतदप्यबुधानामुपयुज्यते । मेधा.

(२) आत्माभ्युदयपरहान्यादिकं कार्यं वीक्ष्य संधायाऽऽसनं विगृह्य वाऽऽसनं संधाय यानं विगृह्य वा यानं द्वैधं वा संश्रयं वा अनुतिष्ठेत् । तत्र तदात्वायतिकालयोः परेण सह साम्याशङ्कायां संधिं कृत्वा आसीत । यदा तु तदात्वसाम्येऽप्यात्मप्रकृतीनां न विचलित्वं परप्रकृतीनां चोपजापसहत्वं मन्येत तदा विग्रहमाश्रित्याऽऽसीत । यदा पुनः परस्मादभ्युत्थितो भवति तदा कृतात्मराष्ट्रसंधानो विगृह्य यायात् । विगृह्ययानहेत्वभावे पार्ष्णिग्राहेण सह संधाय यायात् । तथा कार्यापेक्षया एकेन सह संधिमपरेण सह विग्रहमित्येवं द्वैधं कुर्यात् । यदा तु दुर्बलः सन् बलवता आक्षिप्तस्तदा तद्विशिष्टबलमन्यमाश्रयेत । * गोरा.

(३) कार्यं वीक्ष्य यत्र स्वप्रयोजनदर्शनं तदेव, न तु सर्वसंभवे यत्किंचित्प्रयोज्यम् । 'संधाय च विगृह्य च' इति पाठे संधाय यानं तथा आसनं वा विगृह्यापि तथेत्यर्थः । मवि.

(४) संध्यादिगुणानां नैरपेक्ष्येणानुष्ठानमनन्तरमुक्तम् । तदुचितानुष्ठानार्थोऽयमारम्भः । आत्मसमृद्धिपरहान्यादिकं कार्यं वीक्ष्य संधायाऽऽसनं विगृह्य वा यानं द्वैधीभावसंश्रये च केनचित् संधिं केनचिद्विग्रहमित्यादिकमनुतिष्ठेत् । ममु.

**†[1]संधिं तु द्विविधं विद्याद्राजा विग्रहमेव च ।**
**उभे यानासने चैव द्विविधः संश्रयः स्मृतः ॥**

संधिविग्रहादीन् गुणान् सर्वानेव द्विप्रकारान् राजा जानीयादित्युत्तरविवक्षार्थम् । ¶ गोरा.

## याज्ञवल्क्यः

षण्णां गुणानां यथायोगं प्रयोगः

**[2]संधिं च विग्रहं यानमासनं संश्रयं तथा ।**
**द्वैधीभावं गुणानेतान् यथावत्परिकल्पयेत् ॥**

---

* ममु., रार., राप्र., भाच. गोरागतम् ।

$ शेषं गोरागतम् ।

(१) भस्मृ. ७।१६१ ; मेधा. 'संधिं विग्रहमेव च' इत्यत्र 'संधाय च विगृह्य च' इति व्याख्यानानुसारी पाठः ; गोरा. संधिं विग्रहमेव (संधाय च विगृह्य) ; राक. १११ गोरावत् ; मवि. गोरावदपि पाठः ; पमा. ४११ ; राप्र. ३२४.

* मच. भाच., गोरागतम् ।

† संध्यादीनां प्रकारौ संध्यादिविशेषप्रकरणेषु द्रष्टव्यौ ।

¶ मवि., मच., भाच. गोरागतम् । ममु. गोरावत् ।

(१) भस्मृ. ७।१६२ ; राक. १११ द्राजा वि (द्राजवि) चतुर्थचरणे (द्वैधं संश्रयमेव च) ; राप्र. ३२५ तु (च) चतुर्थचरणे (द्वैधं संश्रयमेव च).

(२) यास्मृ. १।३४७ ; विश्व. १।३४३ च विग्र (सविग्र) ; मिता. ; अप. १।३४५ ; रार. ५७ कल्प (पाल) ; वीमि. ; राप्र. ३२४.

( १ ) याश्चैता राज्यप्रकृतयः स्वाम्याद्याः, तासु यथार्हमालोच्य सुरक्षितमन्त्रो विजिगीषुः— संधिमिति । हिरण्यादिपणनिबन्धेन उभयानुग्रहार्थः संधिः । स कदाचित् द्वयोरपि तादात्विकफलः । कदाचिदेकस्य तदात्वे अन्यस्य आयत्याम् । तथा च मनुः— 'समानयानकर्मा वा विपरीतस्तथैव च । तदात्वायतिसंयुक्तः संधिर्ज्ञेयो द्विलक्षणः ॥' (मस्मृ. ७।१६३) इति । एवं विग्रहादिद्वैविध्यमप्युदाहार्यम् । संधिविपरीतो विग्रहः । अभ्युचयातिरेके रिपून् प्रति गमनं यानम् । अनारम्भकत्वम् आसनम् । संधिविग्रहद्वयबीजोपादानं द्वैधीभावः । क्षीणस्य अन्याश्रयणं संश्रयः । तदात्वे परिक्षीणस्य भाविन्यभ्युचये संधिकरणम्, विपर्यये विग्रहः । मित्रोपरोधाचोभयम् । मित्रानुरोधात् भाविबलापेक्षया च प्रक्षीणः शनकैः परान् सान्त्वयन् आसनेन वृद्धिमातिष्ठेत् । प्रक्षीण एव चावष्टब्धो द्विधा बलं व्युह्य द्वयबीजमुपादद्यात् । सर्वपरिक्षये तु स्वबलव्यसनेन वा कुलीनं बलवन्तमलुब्धं धार्मिकं पूर्वपुरुषाश्रितं मित्रवर्गभूयिष्ठं राजानं क्षिप्रमाश्रयेत् । सर्वथा च सामोपप्रदानाभ्यां तमेवाऽऽराधयेत् । तथा चाऽऽह— 'निग्रहं प्रकृतीनां च कुर्याद्योऽरिबलस्य च । उपसेवेत तं नित्यं सर्वयत्नैर्गुरुं यथा ॥' ( मस्मृ. ७।१७५ ) इति । यदा तु मन्त्रोत्साहप्रभुशक्तियुक्तः तदा यातव्यं प्रतिविधाय अमित्रं प्रति गच्छेत् । तथा च आहुः— 'सामन्तयोर्व्यसनसाम्ये न यातव्यम्, तम( ? त्रा )मित्रमेव यायात्' इति ।

विश्व.

( २ ) संधिः व्यवस्थाकरणम् । विग्रहः अपकारः । यानं परं प्रति यात्रा । आसनम् उपेक्षा । संश्रयः बलवदाश्रयणम् । द्वैधीभावः स्वबलस्य द्विधाकरणम् । एतान् संधिप्रभृतीन् गुणान् यथावत् देशकालशक्तिमित्रादिवशेन कल्पयेत् । * मिता.

( ३ ) संधिः 'न आवाभ्यामन्योन्यमपकर्तव्यम्' इति व्यवस्थापरिग्रहः । ‡ अप.

---

* दीक. मितागतं अपगतं च ।

‡ शेषं मितागतम् ।

( ४ ) द्वैधीभावः बलवतोर्विरुद्धयोर्द्वयोर्वचनादिना पृथक् पृथगात्मनाऽनुसरणम् । यदाहुः बलिनोर्द्विषतोर्मध्ये वाचाऽऽत्मानं समर्पयन् । द्वैधीभावेन वर्तेत काकाक्षिवदलक्षितः ॥' ( कानी. ११।२३ ) इति । 'तथा' इत्यनेन पूर्वश्लोकोक्तस्य सम्यक्त्वस्य अभिधानम् । चकारेण गुणानामुपायासाचिव्यं दर्शितम् । * वीमि.

## बृहत्पराशरः

गुणानां सम्यक् विचार्य प्रयोगः

**[१]राज्यस्य षड्गुणान् मत्वा संधिविग्रहयानकान् । आसनं संश्रयं द्वैधं सम्यग् ज्ञात्वा समाचरेत् ॥**

## बुधः

षाड्गुण्यं राजसामर्थ्यसाधनम्

**[२]संधिविग्रहासनयानसंश्रयद्वैधीभावात् सामर्थ्यं कारयेत् ॥**

## आश्वलायनः

षाड्गुण्यप्रयोगः कार्यानुसारेण स्वपरबलाबलपरिज्ञानेन कार्यः

**[३]देशकालानुरूपेण षाड्गुण्यं संप्रयोजयेत् ॥**
**परात्मनोबलं चापि ज्ञात्वा कार्यविचक्षणः ।**
**यानमासनसंधी च द्वैधीभावश्च संश्रयः ॥**
**विग्रहश्चेति विख्याता गुणाः षट् क्षत्रसंभवाः ।**
**षाड्गुण्यविन्नृपः सम्यक् साम्राज्यमधितिष्ठति ॥**
**नाषाड्गुण्यविदत्यन्तं श्रियमृद्धिं च विन्दति ॥**

## हरिवंशपुराणम्

षण्णां गुणानां प्रयोगे विवेकः

**[४]नयेन व्यवहर्तव्यं पार्थिवेन यथाक्रमम् ॥**

---

* शेषं मितागतम् ।

( १ ) बृपसं. १२।२९.

( २ ) बुस्मृ. ४९.

( ३ ) आश्वस्मृ. ८।४७–५०.

( ४ ) हरि. २।३९।६–८.

संधिं च विग्रहं चैव यानमासनमेव च ।
द्वैधीभावं संश्रयं च षाड्गुण्यं चिन्तयेत् सदा ॥

बलिनः संनिकृष्टे तु न स्थेयं पण्डितेन वै ।
अपक्रमेद्धि कालज्ञः समर्थो युद्धमुद्वहेत् ॥

## विष्णुधर्मोत्तरपुराणम्

द्वैगुण्यं षाड्गुण्यं वा, कालबलविवेकः षाड्गुण्यनिश्चये

[१]संधिश्च विग्रहश्चैव द्वैगुण्यं कथितं बुधैः ।
यदाश्रित्य तथैवान्यैः षाड्गुण्यं परिकीर्तितम् ॥

[२]संधिश्च विग्रहश्चैव यानमासनमेव च ।
द्वैधीभावं संश्रयं च षाड्गुण्यं परिकीर्तितम् ॥

[३]संधिविग्रहयानानामासनस्य तथैव च ।
द्वैधीभावस्य चाप्युक्ता सेवा वै संश्रयस्य च ॥

ज्ञात्वा कालं बलं राजा षाड्गुण्यस्य हि निश्चये ॥

## गरुडपुराणम्

संधिविग्रहविवेकः

[४]कालेन रिपुणा संधिः काले मित्रेण विग्रहः ।
कार्यकारणमाश्रित्य कालं क्षिपति पण्डितः ॥

[५]सकृद्दुष्टं च यो मित्रं पुनः संधातुमिच्छति ।
स मृत्युमेव गृह्णीयाद्गर्भमश्वतरी यथा ॥

शत्रोरपत्यानि प्रियंवदानि
नोपेक्षितव्यानि बुधैर्मनुष्यैः ।
तान्येव कालेषु विपत्कराणि
विषस्य पात्राण्यतिदारुणानि ॥

उपकारगृहीतेन शत्रुणा शत्रुमुद्धरेत् ।
पादलग्नं करस्थेन कण्टकेनैव कण्टकम् ॥

[१]सुसंधानानि चास्त्राणि शस्त्राणि विविधानि च ।
दुर्गे प्रवेशितव्यानि ततः शत्रुं निपातयेत् ॥

षण्मासमथ वर्षं वा संधिं कुर्यान्नराधिपः ।
पश्यन् संचितमात्मानं पुनः शत्रुं निपातयेत् ॥

सूत उवाच—

[२]न कश्चित् कस्यचिन्मित्रं न कश्चित् कस्यचिद्रिपुः ।
कारणादेव जायन्ते मित्राणि रिपवस्तथा ॥

[३]न विश्वसेदविश्वस्ते मित्रस्यापि न विश्वसेत् ।
कदाचित्कुपितं मित्रं सर्वं गुह्यं प्रकाशयेत् ॥

## अग्निपुराणम्

गुणगणना, संधिविग्रहौ वरौ

[४]षाड्गुण्यं संप्रवक्ष्यामि तद्वरौ संधिविग्रहौ ॥
संधिश्च विग्रहश्चैव यानमासनमेव च ।
द्वैधीभावः संश्रयश्च षड्गुणाः परिकीर्तिताः ॥

## कालिकापुराणम्

षण्णां गुणानां प्रयोगे विवेकः

[५]यानासनाश्रयद्वैधसंधयो विग्रहस्तथा ।
अभ्यसेत् षड्गुणानेतांस्तेषां स्थानं च शाश्वतम् ॥

यः प्रमाणं न जानाति स्थाने वृद्धौ तथा क्षये ।
कोषे जनपदे दण्डे न स राज्येऽवतिष्ठते ॥

कोषे जनपदे दण्डे चैकैकत्र त्रयं त्रयम् ।
प्रस्तावाद्विनियुञ्जीत रक्षेत्रैकांस्ततस्त्विमान् ॥

मित्रे शत्रावुदासीने प्रभावं त्रिष्वपीरयेत् ।
उत्साहो विजिगीषायां धर्मकृत्येऽष्टवर्गके ॥

---

(१) विध. २।१५०।१.
(२) विध. २।१५०।२ ; राकौ. २४४ भावं संश्रयं च (भावः संश्रयश्च).
(३) विध. ३।३२३।६–७.
(४) गरुड. १।१०८।६.
(५) गरुड. १।११०।१९–२१.

(१) गरुड. १।११२।२१–२२.
(२) गरुड. १।११४।१.
(३) गरुड. १।११४।२२.
(४) अग्नि. २३४।१६–१७.
(५) कालिका. ८७।५०–५५.

**शरीरयात्रानिर्वाहे क्रियेत सततं नृपैः ।**
**मन्त्रनिश्चयसंभूतां बुद्धिं सर्वत्र योजयेत् ॥**
**अमात्ये शात्रवे राज्ये पुत्रेष्वन्तःपुरेषु च ॥**

## कामन्दकीयनीतिसारः

षाड्गुण्यं द्वैगुण्यं त्रैगुण्यमिति पक्षत्रयम्

**[1]इति षाड्गुण्यमन्ये तु द्वैगुण्यमभिचक्षते ।**
**यानासने विग्रहस्य रूपं सद्भिः प्रकीर्तितम् ।**
**संधेस्तु संधिमार्गज्ञैर्द्वैधीभावसमाश्रयौ ॥**

( १ ) इदानीं श्लोकसप्तकेन षाड्गुण्योपसंहारपूर्वं मतभेदं दर्शयति— षाड्गुण्यमित्यादि । प्रतिपादितमिति शेषः । द्वैगुण्यमिति संधिविग्रहश्च द्वावेव गुणौ, शेषाणामत्रैवान्तर्भावात् कारणात् । तदेव दर्शयति— यानासने इत्यादिना । संधेः परं रूपं द्वैधीभावसंश्रयौ । जम.

( २ ) उपसंहरन्नाह— इतीति । इति षाड्गुण्यम् इति सिद्धान्तः । यानम् आसनं च पञ्चविधं विग्रहस्य रूपम् । परम् अवशिष्टं द्वैधीभावादिकमित्यर्थः । सन्धेः रूपं स्मृतमित्यर्थः । अन्ये तु द्वैगुण्यमिति चक्षते कथयन्ति । यानमासनं चाशेषं विग्रहस्य रूपम् , द्वैधीभावादिकं संधेरूपमपरमिति द्वैविध्यम् । उनिसा.

**[2]सोऽभिगच्छंश्च तिष्ठंश्च विग्रहं कुरुते यतः ।**
**ततो यानासने प्राज्ञैर्विग्रहः परिकीर्त्यते ॥**

( १ ) स इति विजिगीषुः । अभिगच्छंश्चेति । अपरभूमौ गच्छन् देशविलोपादिनाऽपकारलक्षणं विग्रहं च कुरुते, तिष्ठन् स्वभूमौ परमभिहन्तुमशक्तोऽप्यतिसंधातुकामः स्वदण्डैर्वा कर्शयन् विगृह्णाति । जम.

( २ ) एतदेव व्याख्यातुमाह— स हीति । स हि अभियोक्ता गच्छन् अभियानगुणमातिष्ठन् तिष्ठन् आसनगुणमातिष्ठन् यतः यस्मात् विग्रहं कुरुते, अतः यानासने प्राज्ञैः विग्रहः परिकीर्तितः इति स्पष्टम् । उनिसा.

**[1]असंधाय यतो नास्ति द्वैधीभावः समाश्रयः ।**
**ततो द्वावपि तौ प्राज्ञैः रूपं संधेरुदाहृतौ ॥**

( १ ) असंधायेति । संधिमकृत्वा कथं द्विधा वर्तेत संश्रयेद्वा ? तस्मादुभावपि संधे रूपम् । यानासनभेदा अपि यथास्वमत्रान्तर्भूतत्वादव्यतिभिन्ना एव । संभूयप्रसङ्गोपेक्षा अपि यथासंभवं योज्याः । जम.

( २ ) यानमासनं च विग्रहस्य रूपमित्युक्तम् , अधुना द्वैधीभावसंश्रययोः कथं संधे रूपता इत्याह— असंधायेति । यतः असंधाय संधिमकृत्वा संश्रयसहितो द्वैधीभावो नास्ति ततो द्वावपि तौ द्वैधीभावः संश्रयश्च प्राज्ञैः संधेः रूपम् उदाहृतं कथितमित्यन्वयः । उनिसा.

***[2]संधायेति हि यत्प्रोक्तं तत्संधे रूपमुच्यते ।**
**विगृह्येति च यत्प्रोक्तं विग्रहस्य तदुच्यते ।**
**संधिश्च विग्रहश्चेति द्वैगुण्यमिति चक्षते ॥**

संधाय शत्रुणा सह मिलित्वा यत् कार्यं प्रोक्तं करणीयमिति कथितं तत् संधेः रूपम् इष्यते । विगृह्य यत् कार्यं कर्तव्यमिति प्रोक्तं तत् विग्रहस्य रूपमुच्यते इत्यर्थः । तदेवाऽऽह— संधिश्चेति । उनिसा.

**[3]एतौ च संश्रयश्चैव त्रैगुण्यमिति चापरे ॥**

( १ ) एताविति संधिविग्रहौ, संश्रयश्च तृतीयः । जम.

( २ ) द्वैगुण्यवादिनः संश्रयं संधेरेव रूपं कथयन्ति, त्रैगुण्यवादिनस्तु संश्रयं संधेः पृथक् कुर्वन्तीति मतद्वैविध्यम् । उनिसा.

---

( १ ) कानी. ११।३५ ; जम. 'संधेस्तु' इति विशेषार्थकतुशब्दस्य परमित्यन्वयेन व्याख्यानसंभवात् जमपाठो न निर्णीयते ; उनिसा. मभि ( मिति ) सद्भिः प्रकीर्तितम् ( संधेः परं स्मृतम् ) तृतीयार्धं नास्ति.

( २ ) कानी. ११।३६ ; उनिसा. सोऽभि ( स हि ) ततो यानासने ( अतो यानासनं ) कीर्त्यते ( कीर्तितः ).

* सार्धः श्लोकोऽयं प्रकृते न संगच्छते, व्याख्यानं तु नतराम् ।

( १ ) कानी. ११।३७ ; उनिसा. समा ( ससं ) हृतौ ( हृतम् ).

( २ ) कानी. ११।३७ इति श्लोकादूर्ध्वं प्रक्षिप्तः ; उनिसा. हि ( च ) मुच्यते ( मिष्यते ).

( ३ ) कानी. ११।३८.

[1]तस्मादन्यं संश्रयेत बाध्यमानो बलीयसा ।
तत्संधेः संश्रयो ह्यन्य इत्युवाच बृहस्पतिः ॥

(१) तस्मादन्यमिति । अभियोक्तुरन्यं बलोत्कटं संश्रयेत, संधिः पुनः अभियोक्त्रैव बलीयसा सह क्रियते । जम.

(२) संश्रयस्य संधिरूपत्वे बृहस्पतिमतमाह— यस्मादिति । बलीयसा बलवता भूपालेन बाध्यमानः पीड्यमानः सन् यस्मात् अन्यं बलवत्तरं संश्रयते तत् तस्मात् संश्रयः अन्यः संधिः बृहस्पतिः इति उवाचेत्यन्वयः । उनिसा.

[2]न्याय्यो गुणो विग्रह एक एव
संध्यादयोऽन्ये तु गुणास्तदुत्थाः ।
अवस्थया भेदमुपागतः सन्
षाड्गुण्यमित्येव गुरोर्मतं नः ॥

(१) एक एवेति । कौटिल्यदर्शनमेवैतत् । एवं मन्यते— यदि प्राधान्यचिन्तया गुणोपदेशः तदा विग्रह एवैको गुणः, यस्मादभियोक्ता अभियोज्यश्च द्वे प्रकृती इति । तत्र प्राधान्येन प्रथमं विग्रह एव व्याप्रियते, शेषास्तु तदङ्गभूतास्तद्भाविनो गुणीभूता एव । अथ स्वकार्यावस्थापेक्षया गुणाख्यानं तदा षडेव गुणा इत्याह— अवस्थया भेदमुपागतः षाड्गुण्यमिति । तथा चोक्तम्— 'षाड्गुण्यमेवैतदवस्थाभेदादिति कौटिल्यः । तत्र हीयमानः संधीयेत । अभ्युच्चीयमानो विगृह्णीयात् । न मां परो नाहं परमुपहन्तुं शक्त इत्यासीत । गुणातिशययुक्तो यायात् । शक्तिहीनः संश्रयेत । साहाय्यसाध्ये कार्ये द्वैधीभावं गच्छेत् ।' (कौ. ७।१) इति । जम.

(२) गुरुमतप्रदर्शनपूर्वकमुपसंहरन् आह— न्याय्य इति । न्याय्यः न्यायेन विचार्यमाणः एको विग्रह एव गुणः । संध्यादयः अन्ये गुणाः तदुत्थाः तत्प्रभवाः । विग्रहानन्तरं व्यपदिश्यन्ते इत्यर्थः । ततः कारणात् प्रभवाः । कथ्यन्ते इति शेषः । * अवस्थया विगृह्ययानं विगृह्यासनम्, संधाययानं संधायासनम्, संभूययानं संभूयासनम्, प्रसङ्गयानं प्रसङ्गासनम्, उपेक्षायानं उपेक्षासनम्, इति यानासनं पञ्चविधम्, द्वैधीभावादिकं संधे रूपमेकम् इति षड्भिरवस्थाभिर्विग्रहस्य रूपं भेदम् उपागतं सत् षाड्गुण्यम् । उच्यते इति शेषः । इत्येव नः अस्माकं गुरोः विष्णुगुप्तस्य मतमित्यर्थः । उनिसा.

## शुक्रनीतिः

### गुणानां गणना विषयाश्च

[1]संधिं च विग्रहं यानमासनं च समाश्रयम् ।
द्वैधीभावं च संविद्यान्मन्त्रस्यैतांस्तु षड्गुणान् ॥

संधिं परस्परसाहाय्यार्थं हस्त्यश्वादिदानेन आवाभ्यामन्योन्यस्य उपकर्तव्यमित्येवं नियमबन्धम् । विग्रहं विरुद्धाचरणाधिक्येन वैरभावम् । यानं शत्रुं प्रतिगमनम् । आसनम् उपेक्षणम् । समाश्रयम् एकेन पीडितस्य अपरप्रबलतराश्रयणम् । द्वैधीभावं स्वार्थसिद्धये स्वबलस्य द्वैधीकरणम् । एतान् मन्त्रस्य षड्गुणान् संविद्यात् सम्यक् जानीयात् । शुनीटी.

संधिश्चातिबले युद्धं साम्ये यानं तु दुर्बले ।
सुहृद्भिराश्रयः स्थानं दुर्गादिभजनं द्विधा ॥

अतिबले अतिप्रबले शत्रौ संधिः । साम्ये तुल्यकक्षतायां युद्धम् । दुर्बले शत्रौ यानं युद्धार्थमाक्रमणम् । सुहृद्भिः आश्रयः । स्थानम् आसनम् । तथा दुर्गाभिभजनं दुर्गं विभज्य द्विधा सैन्यस्थापनम् । कर्तव्यमिति शेषः । शुनीटी.

---

(१) कानी. ११।३९ ; उनिसा. तस्मा (यस्मा) येत (यते) त्संधेः (त्संधिः).

(२) कानी. ११।४० ; उनिसा. गतः सन् (गतं सत्).

* हास्यास्पदमिदं व्याख्यानं व्याख्यातुरसामर्थ्यद्योतनायालम् ।

(१) शुनी. ४।७।२३४, २४५.

## योगयात्रा

षट् गुणाः तेषां स्वरूपं च

[1]षाड्गुण्ये संधिरादौ
परिपणरचितो विग्रहोऽस्यापकारी
नैतौ चेदासनं तत्
परपुरगमनं सर्वसैन्येन यानम् ।
सैन्यार्धेनाभियुङ्क्ते
परपुरमपि चेत्तद्द्विधा यानमुक्तं
संश्लेषोऽन्यत्र यः स्यात्
स खलु निगदितः संश्रयोऽन्यो
गुणानाम् ॥

## नीतिवाक्यामृतम्

योगक्षेमकारणम्

[2]**शमव्यायामौ योगक्षेमयोर्योनिः ॥**

अथ षाड्गुण्यं व्याख्यायते । तत्राऽऽदावेव योगक्षेमस्वरूपमाह– शमव्यायामाविति । योगः कर्मलाभः, क्षेमं कुशलम्, तयोर्द्वयोः शमव्यायामौ योनिः उत्पत्तिस्थानम् । तत्र लाभात् ( ? शमात् ) क्षेमम्, व्यायामात् योगः । शमव्यायामलक्षणमागामिसूत्रे वदिष्यतीति ।
नीवाटी.

**कर्मफलोपभोगानां क्षेमसाधनः शमः, कर्मणां योगाराधनो व्यायामः ॥**

शमव्यायामयोर्लक्षणमाह– कर्मफलोपभोगानामिति । कर्मणि कृते यत्फलं भवति तस्य ये योगाः ( ? उपभोगाः ) विलासाः तेषु यत्क्षेमं कुशलं तद्यः साधयति करोति स शमः । यः पुनः कर्मारम्भः क्रियते तत्र योऽसौ योगः उद्यमः स व्यायामः । तथा च शुक्रः– ' ........... ॥ ' ।
नीवाटी.

शक्तित्रयम्

**बुद्धिशक्तिरात्मशक्तेरपि गरीयसी ॥**

अथ शक्तेर्बुद्धिशक्तेश्च विशेषमाह– बुद्धिशक्तिरिति । गरीयसी । काऽसौ ? बुद्धिशक्तिः । कस्याः सकाशात् ? आत्मनः शक्तेः । यस्य विजिगीषोरात्मशक्तिर्भवति स बलवानपि बुद्धिमता दुर्बलेनापि हन्यते ।
नीवाटी.

**शशकेनेव सिंहव्यापादनमत्र दृष्टान्तः ॥**

यथा सिंहः शशकेन हतः एष सिंहशशकदृष्टान्तः पञ्चतन्त्रके । तथा च– ' यस्य बुद्धिर्बलं तस्य निर्बुद्धेश्च कुतो बलम् । वने सिंहो मदोन्मत्तः शशकेन निपातितः ॥ ' ।
नीवाटी.

**कोशदण्डबलं प्रभुशक्तिः ॥**

अथ प्रभुशक्तेः स्वरूपमाह– कोशदण्डबलमिति । यस्य विजिगीषोः कोशः भाण्डागारं भवति सः, दण्डः हस्त्यश्वपदातिलक्षणो भवति, सा तस्य प्रभुशक्तिः कथ्यते ।
नीवाटी.

**शूद्रशक्तिकुमारौ दृष्टान्तौ ॥**

तस्याः– शूद्रशक्तिकुमारौ दृष्टान्तौ । एतौ उभयवाचनके ज्ञेयौ ।
नीवाटी.

**विक्रमो बलं* चोत्साहशक्तिः । तत्र रामो दृष्टान्तः ॥**

अथोत्साहशक्तिलक्षणमाह– विक्रम इति । यस्य विजिगीषोः विक्रमः पराक्रमः भवति, तथा बलं सैन्यं भवति, उत्साहशक्तिः सोच्यते । अत्र रामो दृष्टान्तः ।

---

(१) योया. १।१४.

(२) नीवा. २९।१–२, ३६–४२, ६०–६१, ६३, ७५–१०२.

* इदमत्र विचार्यम्– विक्रमरूपं बलमित्यर्थकः ' विक्रमबलम् ' इति सामासिकः पाठो वा स्यात्, ' विक्रमनिदानभूतरजोगुणोत्कर्षरूपं मानसं बलम् ' इति वा व्याख्यायेतेति युक्तमुत्पश्यामः । पूर्वसूत्रे प्रभुशक्तिरूपदण्डस्य हस्त्यश्व-( रथ )पदातिलक्षणसैन्यरूपत्वेन व्याख्यानादत्रोत्साहशक्तिरूपबलस्यापि तद्रूपत्वेन व्याख्यानं न संगच्छते । यत्तु गर्गवचनमुद्धृतं तत्र विक्रमोत्साहयोर्भेदोक्त्या मूलविरोधात्तस्य प्रमाणत्वे नाऽऽश्वास इति ।

रामेण विक्रमवता वानरबलयुक्तेन रावणो निपातितः। तथा च गर्गः—'सहजो विक्रमो यस्य सैन्यं बहुतरं भवेत्। तस्योत्साहस्तु तद्युद्धे यथा दाशरथेः पुरा॥'। नीवाटी.

**शक्तित्रयोपचितो ज्यायान्। शक्तित्रयापचितो हीनः। समानशक्तित्रयः समः॥**

अथ विजिगीषोः शक्तित्रययुक्तहीनस्य शत्रुतुल्यशक्तेः यद्भवति तदाह— शक्तित्रयोपचित इति। यो विजिगीषुः शत्रोः सकाशात् शक्तित्रयोपचितो भवति शक्तित्रयाभ्यधिको भवति स ज्यायान् श्रेष्ठतमः परं जयति युद्धे। यः पुनः शक्तित्रयपतितो(?यापचितो) भवति स हीनः परेण जीयते। यः शक्तित्रयेण तुल्यो भवति स समः प्रोच्यते। यद्यपि समस्तथाऽपि युद्धं न कर्तव्यम्। तथा च गुरुः— *'समेनापि न योद्धव्यं यद्युपायत्रयं भवेत्। अन्योन्याहति यो सङ्गो द्वाभ्यां संजायते यतः॥'। नीवाटी.

गुणगणना

**संधिविग्रहयानासनसंश्रयद्वैधीभावाः षाड्गुण्यम्॥**

अथ षाड्गुण्यं व्याख्यायते। तस्य संज्ञाकरणमाह— संधीति। नीवाटी.

राजकार्यस्वरूपम्

**निधानादिव न राजकार्येषु कालनियमोऽस्ति॥**

अथ राज्ञः कृत्येषु कालातिक्रमस्य स्वरूपमाह— निधानादिवेति। यथा निधाने लब्धे न कालनियमः कालातिक्रमो न क्रियते, तत्क्षणादेव गृह्यते, तथा राजकार्येषु कालातिक्रमो न शुभावहः, तत्क्षणादेव राजकार्याणि क्रियन्ते। तथा च गौतमः— 'निधानदर्शने यद्वत्कालक्षेपो न कार्यते। राजकृत्येषु सर्वेषु तथाऽकार्यैः सुसेवकैः॥'। नीवाटी.

**मेघवदुत्थानं राजकार्याणामन्यत्र च शत्रोः संधिविग्रहाभ्याम्॥**

अथ राजकार्याणां स्वरूपमाह— मेघवदुत्थानमिति। राजकार्याणां राजकृत्यानां यदुत्थानं संभूतिः तत्किंविशिष्टम्? मेघवदुत्थानम्। यथा मेघस्योत्थानमचिन्तितमपि संजायते तथा राजकृत्यानामपि। तस्माद्विलम्बो न कार्यः। अन्यत्र शत्रोः संधिविग्रहाभ्याम्। शत्रुविषये यत्कृत्यं तत्र यः समादेशः संधिविग्रहविषये स तत्क्षणादेव न कार्यः, चिन्तनीय इति। तथा च गुरुः— 'राजकृत्यमचिन्त्यं यदकस्मादेव जायते। मेघवत् तत्क्षणात्कार्यं मुक्त्वैकं संधिविग्रहम्॥'। नीवाटी.

शत्रुपुरुषपरीक्षा

**शत्रोरागतं साधु परीक्ष्य कल्याणबुद्धिमनुगृह्णीयात्॥**

अथ शत्रोः सकाशात्समागतस्य पुरुषस्य विजिगीषुणा यत्कर्तव्यं तदाह— शत्रोरागतमिति। शत्रोः सकाशात् साधु राष्ट्रं(?) स्वागतं सुष्ठु आगतं कल्याणबुद्ध्या सूक्ष्मबुद्ध्या परीक्ष्य बुद्धिपरीक्षणं कृत्वा तस्य ततः अनुगृह्णीयात् तस्यानुग्रहणं कुर्यात् प्रसादं विदधीत, नापरीक्षितस्य। तथा च भागुरिः— 'शत्रोः सकाशतः प्राप्तं सेवार्थं शिष्टसंमतम्। परीक्षा तस्य कृत्वाऽथ प्रसादः क्रियते ततः॥'। नीवाटी.

**किमरण्यजमौषधं न भवति क्षेमाय॥**

अथ बाह्यसेवकागतकार्यद्वारेणाऽऽरण्यौषधमाहात्म्यमाह— किमरण्यजमौषधमिति। आरण्यं यद्भैषजं भवति औषधं तत्किं न भवति क्षेमाय आरोग्याय? एवं परेषां सकाशादागतोऽपि क्षेमाय भवति। तथा च शुक्रः— 'परोऽपि हितवान् बन्धुर्बन्धुरप्यहितः परः। अहितो देहजो व्याधिर्हितमारण्यमौषधम्॥'। नीवाटी.

* एतत्समानार्थकं नीवाटीकायां ३०।६८ इत्यत्र समुद्धृतं 'समेनापि न योद्धव्यमित्युवाच बृहस्पतिः। अन्योन्याहतिना भङ्गो घटाभ्यां जायते यतः॥' इति भागुरिवचनमनुसृत्यात्र शुद्धिः कल्प्या।

**गृहप्रविष्टकपोत इव स्वल्पोऽपि शत्रुसंबन्धी लोकस्तन्त्रो ( ? न्त्रमु )द्वासयति ॥**

अथ शत्रुसंबन्धिना लोकेन गृहप्रविष्टेन यद्भवति तदाह— गृहप्रविष्टेति । उद्वासयति स्फेटयति । किं तत् ? गृहसंपत् । कोऽसौ ? लोकः । किंविशिष्टः ? शत्रुसंबन्धी शत्रुपक्षस्थः । किंविशिष्टः ? स्वल्पोऽपि लघुरपि । क इव ? कपोत इव । यथा कपोतो लघुरपि गृहे प्रविष्टो गृहं नाशयति तथा शत्रुपक्षज इति । तथा च बादरायणः— ' शत्रुपक्षभवो लोकः स्तोकोऽपि गृहमाविशेत् । यदा तदा समाधत्ते तद्गृहं च कपोतवत् ॥ ' ।

नीवाटी.

लाभतारतम्यविवेकः

**मित्रहिरण्यभूमिलाभानामुत्तरोत्तरलाभः श्रेयान् ॥**

अथोत्तमलाभस्य स्वरूपमाह— मित्रहिरण्येति । श्रेयान् कल्याणप्रदो भवति । कोऽसौ ? लाभः प्राप्तिः । किंविशिष्टः ? उत्तरोत्तरः उत्कृष्टादुत्कृष्टतरः । केषाम् ? मित्रहिरण्यभूमिलाभानाम् । मित्रलाभस्तावत्कल्याणप्रदो भवति । तस्य सकाशात् हिरण्यलाभः उत्कृष्टः । तस्मादपि भूमिलाभः उत्कृष्टतरः । तस्माद्विजिगीषुणा भूमिलाभः ( कार्यः ) । तथा च गर्गः— ' उत्तमो मित्रलाभस्तु हेमलाभस्ततो वरः । तस्माच्छ्रेष्ठतरं चैव भूमिलाभं समाश्रयेत् ॥ ' ।

नीवाटी.

**हिरण्यं भूमिलाभाद्भवति मित्रं च हिरण्यलाभादिति ॥**

अथ यस्माद्भूलाभस्त्रयाणामेतेषां श्रेष्ठतरस्तदाह— हिरण्यमिति । ' न तदस्ति धरापृष्ठे यद्भूलाभान्न लभ्यते । अन्यलाभान् परित्यज्य तस्माद्भूलाभमाश्रयेत् ॥ ' । * भूमिर्वा मित्रं वा हिरण्यनाढ्ये न भवतो द्वे अपि । तस्माद्भूभुजा हिरण्यसंग्रहः कार्यः । तथा च शुक्रः— ' न भूमिर्न च मित्राणि कोशनष्टस्य भूपतेः । द्वितयं तद्भवेत्तस्यो यदि कोशो भवेद्गृहे ॥ ' ।

नीवाटी.

शत्रोर्मित्रत्वकरणे युक्तिः

**शत्रोर्मित्रत्वकारणं विमृश्य तथाऽऽचरेद्यथा न वञ्च्यते ॥**

अथ शत्रोर्मित्रत्वे वर्तमानस्य विजिगीषुणा यत्कर्तव्यं तदाह— शत्रोर्मित्रत्वकारणमिति । विग्रहस्य पर्यालोच्य किं तत्कारणं किं वा शत्रोः ततो विमृश्य तथा आचरेत् व्यवहरेत् यथा न वञ्च्यते वञ्चनां न प्राप्नोति । सहसा शत्रुणा सह मैत्र्यं न कुर्यात् । तथा च शुक्रः— ' पर्यालोचं विना कुर्याद्यो मैत्रीं रिपुणा सह । स वञ्चनामवाप्नोति तस्य पार्श्वादसंशयः ॥ ' ।

नीवाटी.

**गूढोपायेन सिद्धि( ? द्ध )कार्यस्यासंविक्तिकरणं सर्वां शङ्कां दुरपवादं च करोति ॥**

अथ यथा दुरपवादो भवति तदाह— गूढोपायेनेति । गूढोपायेन प्रच्छन्नोपायेन सिद्धि( ? द्ध )कार्यस्य विजिगीषोः पुष्टिप्राप्तस्य असंवित्तिकरणम् उपचारवर्जनं शत्रोस्तच्छङ्कां जनयति ' कस्मादेवं मनः कृत्वा सांप्रतं मया सहान्यथा वर्तते ? नूनं मम शत्रुणा सहास्य मित्रत्वमस्ति ' । तथा नैकान्तं संभावयति तस्य दुरपवादः जननिन्दा भवति । यतः अनेन भूभुजा एष वृद्धिं नीतः तदस्य भक्तिं न करोति कृतघ्नः । तथा च गुरुः— ' वृद्धिं गच्छेद्यतः पार्श्वात्तं प्रयत्नेन तोषयेत् । अन्यथा जायते शङ्का रणगोपाद्धि गर्हणा ॥ ' ।

नीवाटी.

**गृहीतपुत्रदारानुभयवेतनान् कुर्यात् ॥**

अथ उभयवेतनानां यत्कार्यं तदाह— गृहीतपुत्रेति । यान् राजा उभयवेतनान् करोति शत्रोः पार्श्वे प्रेषयति तेषां पुत्रदारसंग्रहं कुर्यात् । ततस्ते प्रहेतव्याः येन शत्रुचेष्टितं निवेदयन्ति । तथा च जैमिनिः— ' गृहीतपुत्रदारांश्च कृत्वा चोभयवेतनान् । प्रेषयेद्वैरिणः स्थाने येन तच्चेष्टितं लभेत् ॥ ' ।

नीवाटी.

शत्रुपराजये कर्तव्यता

**शत्रुमपकृत्य भूदानेन तद्दायादानात्मनः सफलयेत् क्लेशयेद्वा ॥**

अथ शत्रुविनाशं कृत्वा भूभुजा यत्कर्तव्यं तदाह— शत्रुमपकृत्येति । शत्रुं परम् अपकृत्य साधयित्वा पश्चा-

---

* अयं ग्रन्थो मूलविरुद्धश्चिन्तनीयः ।

द्विजिगीषुणा किं कार्यम् ? तद्दायादं गोत्रिणं तद्भूदानेन सफलयेत् युक्तान् कुर्यात् । कथम् ? आत्मनः यथा स्वकीयो भवति । तथा च नारदः— ' साधयित्वा परं युद्धे तद्भूमिस्तस्य गोत्रिणः । दातव्याऽऽत्मवशो यः स्यान्नान्यस्य तु कथंचन ॥ ' । नीवाटी.

शत्रुविश्वासजननोपायाः

**परविश्वासजनने सत्यं शपथः प्रतिभूः प्रधानपुरुषप्रतिग्रहो वा हेतुः ॥**

अथ . . . परविश्वासेति । परस्य शत्रोः विश्वासजनने को हेतुः किं कारणम् ? येन स न चलति । सत्यम् , शपथस्तावत् , तथा प्रतिभुवः , प्रधानपुरुषप्रतिग्रहो वा । प्रतिग्रहशब्देन तस्याभीष्टजनग्रहणमुच्यते । तथा च गौतमः— 'शपथैः कोशपानेन महापुरुषवायतः (?) । प्रतिभूरिष्टसंग्रहाद्रिपोर्विश्वास्यतां व्रजेत् ॥ ' ।

नीवाटी.

विजिगीषुवृत्तम्

**सहस्रैकीयः पुरस्ताल्लाभः शतैकीयः पश्चात्कोप इति न यायात् ॥**

अथ भूभुजा यथा न यात्रा कर्तव्या तदाह— सहस्रैकीय इति । राज्ञो यदि सहस्रैकीयः सहस्रप्रमाणः पुरस्तात् आयः लाभः भवति, शतैकीयः शतप्रमाणः पश्चात्कोपो भवति, तत्र न यायात् न यात्रां कुर्यात् । तथा च भृगुः— ' पुरस्ताद्भूरि लाभेऽपि पश्चात्कोपोऽल्पको यदि । तद्यात्रा नैव कर्तव्यास्तत्स्वल्पोऽप्यधिको भवेत् ॥ ' । नीवाटी.

**सूचीमुखा ह्यनर्था भवन्त्यल्पेनापि सूचीमुखेन महान् दवरकः ( ? दोरकः ) प्रविशति ॥**

अथ स्वल्पेनापि पश्चात्कोपेन यथा न गम्यते तदाह— सूचीमुखेति । सूचीमुखशब्देन स्वल्पः पश्चात्कोपोऽभिधीयते । तस्मिन् स्थिते भवन्ति जायन्ते । के ते ? अनर्थाः आपदः प्रभूततराः । केन दृष्टान्तेन ? सूचीमुखदृष्टान्तेन । सूचीशब्देन सीवनशस्त्रमुच्यते वस्त्राणाम् । तथा यदा वस्त्रे मुखं कृतं भवति तदा तन्मार्गेण महानपि दवरकः ( ? दोरकः ) सूत्रमयः प्रविशति । एवं स्वल्पोऽपि पश्चात्कोपः । सः पश्चाद्गतस्य परदेशं गतस्य लघुरपि गुरुतां याति । तस्मात् स्वल्पेनापि पश्चात्कोपेन न गन्तव्यमिति । तथा च बादरायणः— ' स्वल्पेनापि न गन्तव्यं पश्चात्कोपेन भूभुजा । यतः स्वल्पोऽपि तद्बाह्यः स वृद्धिं परमां व्रजेत् ॥ ' । नीवाटी.

**न पुण्यपुरुषापचयः क्षयो हिरण्यस्य धान्यापचयो व्ययः शरीरस्याऽऽत्मनो लाभमिच्छेद्येन सामिषक्रव्याद इव न परैरवरुध्यते ॥**

अथ यथा विजिगीषुणा आत्मलाभश्चिन्तनीयस्तथाऽऽह— नेति । तं लाभमिच्छेत् तस्य लाभस्य वाञ्छा कार्या, येन लाभेन न स्यात् न भवेत् । कोऽसौ ? पुण्यपुरुषापचयः । पुण्यपुरुषाः प्रधानपुरुषाः, तेषाम् अपचयः विनाशः येन लाभेन न भवति । तथा क्षयो हिरण्यस्य । हिरण्यं कोशः , तस्य क्षयो न भवति । तथा धान्यापचयः अन्नक्षयः । तथा व्ययः नाशः । कस्य ? आत्मनः शरीरस्य । तथा सामिषक्रव्याद इव समांसविहंगम इव यथा परैः पक्षिभिर्मांसार्थिभिः तथा अन्यैः क्षितिपालैर्येन लाभेन गृहीतेन न रुध्यते तं लाभमिच्छेत् । तथा च शुक्रः— ' स्वतन्त्रस्य क्षयो न स्यात्तथा चैवाऽऽत्मनोऽपरः । येन लाभेन नान्यैश्च रुध्यते तं विचिन्तयेत् ॥ ' । नीवाटी.

**शक्तस्यापराधिषु या क्षमा सा तस्याऽऽत्मनस्तिरस्कारः ॥**

शक्तोऽपि यः परापराधान् क्षमते तस्य यद्भवति तदाह— शक्तस्यापराधिष्विति । यस्य राज्ञः शक्तस्य कृतापराधेषु क्षमा भवति स तस्य तिरस्कारः परिभवं जनयति । तस्माद्राज्ञा कृतापराधेषु क्षमा न कार्या । तथा च बादरायणः— ' शक्तिमानपि यः कुर्यादपराधिषु च क्षमाम् । स पराभवमाप्नोति सर्वेषामपि वैरिणाम् ॥ ' ।

नीवाटी.

**अतिक्रम्यवर्तिषु निग्रहं कर्तुः सर्पादिव दृष्टप्रत्यवायः सर्वोऽपि बिभेति जनः ॥**

अथ यो राजा अपराधिषु निग्रहं करोति तस्य यद्भवति तदाह— अतिक्रम्यवर्तिष्विति । यो राजा अति-

क्रम्यवर्तिषु अन्यायकारिषु निग्रहं करोति तस्माद्राज्ञः सर्पादिव दृष्टप्रत्यवायः दृष्टः प्रत्यवायो येन स तथा सर्वोऽपि जनो बिभेति । न कश्चिदपराधं करोतीत्यर्थः । तथा च भागुरिः— 'अपराधिषु यः कुर्यान्निग्रहं दारुणं नृपः । तस्माद्बिभेति सर्वोऽपि सर्पसंस्पर्शनादिव ॥' । नीवाटी.

राज्ञा परिहार्या सभा

**अनायकां बहुनायकां वा सभां न प्रविशेत् ॥**

अथ नीतिमता यत्कर्तव्यं तदाह— अनायकामिति । गतार्थमेतत् । नीवाटी.

**गणपुरश्चारिणः सिद्धे कार्ये स्वस्य न किंचिद्भवत्यसिद्धे पुनर्ध्रुवमपवादः ॥**

अथ गणपुरश्चारिणः पुरुषस्य यद्भवति तदाह— गणपुरश्चारिण इति । गणः जनसमूहः, तस्य पुरश्चारी भवति अग्रेसरो भवति । राजकुलं सभां वा गच्छन् अहंकारं कृत्वा 'अहमेव सर्वां कार्यसिद्धिं करिष्यामि' इति, पश्चाद्गच्छति, ब्रूते तदर्थम्, तस्य यदि तावत्सिद्धिर्भवति तदा आत्मनः किंचित्फलं न भवति, असिद्धौ पुनर्महानपवादो भवति 'अनेन मूर्खेण विरूपं जल्पतैतत् सर्वं प्रयोजनं नाशं नीतम्' इति । तथा च नारदः— 'बहूनामग्रगो भूत्वा यो ब्रूते न नतं परः । तस्य सिद्धौ नो लाभः स्यादसिद्धौ जनवाच्यता ॥' । नीवाटी.

**सा गोष्ठी न प्रस्तोतव्या यत्र परेषामपायः ॥**

अथ राजसभाया दूषणमाह— सा गोष्ठीति । सा गोष्ठी सभा न प्रस्तोतव्या न श्लाघनीया, यत्र यस्यां परेषाम् आगतानां कार्यार्थिनां पक्षपातेन अपायः विनाशः भवति । तथा च जैमिनिः— 'सभायां पक्षपातेन कार्यार्थी यत्र हन्यते । न सा सभा भवेच्छस्या शिष्टैस्त्याज्या सुदूरतः ॥' । नीवाटी.

अर्थोपार्जनरीतिः

**गृहागतमर्थं केनापि कारणेन नावधीरयेद्यदैवार्थागमस्तदैव सर्वतिथिनक्षत्रग्रहबलम् ॥**

अथाऽऽगतस्यार्थस्य यत्कर्तव्यं तदाह— गृहागतमर्थमिति । अर्थे समागते तिथिनक्षत्रग्रहबलं न चिन्तनीयम् 'अद्य सामान्या तिथिः, नक्षत्रं न शोभनम्, ग्रहबलं मम नास्ति' एतन्न चिन्तनीयम् । तत्क्षणादेव ग्राह्यम् । कस्मात् ? यदैवार्थागमो भवति तदैव सा तिथिः शोभना, तदैव शोभनं नक्षत्रम्, तथा सर्वेषां ग्रहाणां बलं भवतीति । तथा च गर्गः— 'गृहागतस्य वित्तस्य दिनशुद्धिं न चिन्तयेत् । आगच्छति यदा वित्तं तदैव सुशुभं दिनम् ॥' । नीवाटी.

**गजेन गजबन्धनमिवार्थेनार्थोपार्जनम् ॥**

अथार्थोपार्जनं यथा भवति तथाऽऽह— गजेनेति । यथा गजेन गजबन्धः क्रियते, नान्यथा, तथाऽर्थविनियोगेनार्थप्राप्तिर्भवति । तथा च जैमिनिः— 'अर्था अर्थेषु बध्यन्ते गजैरिव महागजाः । गजा गजैर्विना न स्युरर्था अर्थैर्विना तथा ॥' । नीवाटी.

योग्यं दण्डप्रणयनम्

**न केवलाभ्यां बुद्धिपौरुषाभ्यां महतो जनस्य संभूयोत्थाने संघातविघातेन दण्डं प्रणयेच्छतमवध्यं सहस्रमदण्डयं न प्रणयेत् ॥**

अथ दण्डपातस्य निर्णयमाह— नेति । न प्रणयेत् न दद्यात् । कम् ? दण्डम् । कस्य ? महतो जनस्य उत्तमपुरुषसंघस्य । केन कृत्वा ? संघातविघातेन मेलापकदूषणेन । कस्मिन् महतो जनस्य दण्डं न प्रणयेत् ? संभूयोत्थाने एकचित्तमते । परस्य नान्यजल्पाकम् ( ? ) । तर्हि किं कार्यं भूभुजा ? शतमवध्यं यदि शतं पुरुषाणामेकवाक्येन जल्पति तदवध्यम्, अथ सहस्रं जल्पति तस्य दण्डो नास्तीति । तथा च शुक्रः— 'बुद्धिपौरुषगर्वेण दण्डयेन्न महाजनम् । एकानुगामिकं राजा यदा तु शत्रुपूर्वकम् ॥' । नीवाटी.

असुरवृत्ती राजा

**सा राजन्वती भूमिर्यस्यां नासुरवृत्ती राजा ॥**

अथ भूमिलक्षणमाह— सा राजन्वतीति । यस्यां भूमौ देशे न स्यात् न भवेत् असुरवृत्तिः राक्षसवृत्तिः राजा सा भूमिः राजन्वतीत्यभिधीयते । तथा च गुरुः— 'यस्यां राजा सुवृत्तः स्यात्सौम्यवृत्तः सदैव हि । सा भूमिः शोभते नित्यं सदा वृद्धिं च गच्छति ॥' । नीवाटी.

**परप्रणेयो राजाऽपरीक्षितार्थमानप्राणहरोऽसुरवृत्तिः ॥**

अथासुरवृत्तेः राज्ञः स्वरूपमाह— परप्रणेय इति। यो राजा परप्रणेयो भवति अन्यमतेन वर्तते, स्वयं न पर्यालोच्यं कृत्वा कृत्यानि करोति, स परप्रणेयः। तथा अपरीक्षितार्थमानप्राणहरः दण्ड्यलोकानाम् अपरीक्षितार्थमानेन प्राणान् हरति। एतदुक्तं भवति— दण्डस्यार्थमानं प्राणमानं न जानाति, शतवित्तस्य परवचनैः सहस्रं याचते। ततो यं गच्छमानस्य प्राणान् हरति सोऽसुरवृत्तिः कथ्यते। तथा च भागुरिः— 'परवाक्यैर्नृपो यत्र सद्वृत्तां (? त्तं) सुप्रपीडयेत्। प्रभूतेन तु दण्डेन सोऽसुरवृत्तिरुच्यते ॥'। नीवाटी.

**परकोपप्रसादानुवृत्तिः परप्रणेयः ॥**

अथ परप्रणेयस्य राज्ञो लक्षणमाह— परकोपेति। यो राजा परवचनेन कोपं करोति, प्रसादं करोति, स परप्रणेयः। तस्माद्भूभुजा परप्रणेयेन न भवितव्यम्। तथा च राजगुरुः— 'परप्रणेयो भूपालो न राज्यं कुरुते चिरम्। पितृपैतामहं चेत्स्यात्किं पुनः परभूपजम् ॥'। नीवाटी.

**तत्स्वामिच्छन्दोनुवर्तनं श्रेयो यन्न भवत्यायत्यामहिताय ॥**

छन्दोनुवर्तनस्य स्वरूपमाह— तत्स्वामीति। भृत्येन स्वामिनस्तथा छन्दोनुवर्तनं कार्यं तथा प्रियं वाच्यं यथा तच्छ्रेयस्करं भवति। कस्याम्? आयत्यां परिणामे। अहिताय भवति तन्न वाच्यमिति। तथा च गर्गः— 'मन्त्रिभिस्तत्प्रियं वाच्यं प्रभोः श्रेयस्करं च यत्। आयत्यां कष्टदं यच्च कार्यं तन्न कदाचन ॥'। नीवाटी.

**निरनुबन्धमर्थानुबन्धं चार्थमनुगृह्णीयात् ॥**

अथ भूभुजा यथा अर्थो ग्राह्यः प्रजानां तत्स्वरूपमाह— निरनुबन्धमिति। ग्रहीतव्यम्। कम्? अर्थम्। केन? राज्ञा। काभ्यः? प्रजाभ्यः सकाशात्। कथम्? निरनुबन्धं यथा भवति यथा जनस्य अनुबन्धः पीडा न भवति, तथा अर्थानुबन्धः अर्थक्षतिः यथा न स्यात् तथा ग्राह्यं नृपैर्धनम्। नीवाटी.

**नासावर्थो धनाय यत्राऽऽयत्यां महानर्थानुबन्धः ॥**

अथार्थागमस्य दूषणमाह— नासावर्थ इति। सः अर्थः धनाय धननिमित्तं स्थिरो न भवति, तस्या- (? यस्या)र्थस्य गृहागतस्य आयत्यां परिणामे महत्तरः अर्थानुबन्धो भवति गृहस्थितमपि नाशं याति चौर्यादिभिः। कुत्सितकर्मप्रभृतिभिः योऽर्थो गृहमानीयते तदर्थं राज्ञा गृहस्थितमपरमपि वित्तं गृह्यते। तथा चात्रिः— 'अन्यायोपार्जितं वित्तं यो गृहं समुपानयेत्। गृह्यते भूभुजा तस्य गृहगेन समन्वितम् ॥'। नीवाटी.

त्रिविधः अर्थलाभः

**लाभस्त्रिविधो नवो भूतपूर्वः पैत्र्यश्च ॥**

अथार्थलाभस्य स्वरूपमाह— लाभस्त्रिविध इति। एकस्तावदर्थलाभः पुरुषाणां नवः प्रत्यग्रः उत्पद्यते, अन्यो भूतपूर्वः सदैव लभ्यते, तृतीयः पैत्र्यः पैतामहिकः। त्रयोऽप्येते प्रशस्ता लाभा ग्राह्याः। येऽन्ये ते न ग्राह्याः नीतिज्ञैः। तथा च शुक्रः— 'उपार्जितो नवोऽर्थः स्याद्भूतपूर्वस्तथाऽपरः। पितृपैतामहोऽन्यस्तु त्रयो लाभाः शुभावहाः ॥'। नीवाटी.

## मानसोल्लासः

षाड्गुण्यप्रयोगज्ञानफलम्

**[1]संधिं च विग्रहं चैव यानमासनमाश्रयम्।**
**द्वैधीभावं च यो वेत्ति प्रयोक्तुं शत्रुमण्डले ॥**
**बलवान् कोशसंपन्नो गुणषट्कक्रियाबुधः।**
**स कृत्स्नां पृथिवीं भुङ्क्ते देशकालसहायवित् ॥**

(१) मासो. २।९७०–९७१.

# संधिः

***

## महाभारतम्

सद्भिः संधिः महार्थंकरः

[1]सख्यं भवतु ते वृत्र शक्रेण सह नित्यदा ।
अवाप्स्यसि सुखं त्वं च शक्रलोकांश्च
शाश्वतान् ॥

[2]ऋषिवाक्यं निशम्याथ स वृत्रः सुमहाबलः ।
उवाच तांस्तदा सर्वान् प्रणम्य शिरसाऽसुरः ॥

[3]सर्वे यूयं महाभागा गन्धर्वाश्चैव सर्वशः ।
यद् ब्रूत तच्छ्रुतं सर्वं ममापि श्रृणुतानघाः ॥

[4]संधिः कथं वै भविता मम शक्रस्य चोभयोः ।
तेजसोर्हि द्वयोर्देवाः सख्यं वै भविता कथम् ॥

ऋषय ऊचुः—

[5]सकृत्सतां संगतं लिप्सितव्यं
ततः परं भविता भव्यमेव ।
नातिक्रमेत् सत्पुरुषेण संगतं
तस्मात्सतां संगतं लिप्सितव्यम् ॥

[6]दृढं सतां संगतं चापि नित्यं
ब्रूयाच्चार्थं ह्यर्थकृच्छ्रेषु धीरः ।
महार्थवत्सत्पुरुषेण संगतं
तस्मात्सन्तं न जिघांसेत धीरः ॥

(१) भा. ५।१०।१९ ; भामु. ५।१०।१९–२०.

(२) भा. ५।१०।२० ; भामु. ५।१०।२०–२१ स वृत्रः सु ( वृत्रः स तु ) तांस्तदा ( तानृषीन् ).

(३) भा. ५।१०।२१ ; भामु. ५।१०।२१–२२ ब्रूत ( ब्रूथ ).

(४) भा. ५।१०।२२ ; भामु. ५।१०।२२.

(५) भा. ५।१०।२३ ; भामु. ५।१०।२३ क्रमेत् ( क्रामेत् ).

(६) भा. ५।१०।२४ ; भामु. ५।१०।२४.

[1]इन्द्रः सतां संमतश्च निवासश्च महात्मनाम् ।
सत्यवादी ह्यदीनश्च धर्मवित्सुविनिश्चितः ॥

[2]तेन ते सह शक्रेण संधिर्भवतु शाश्वतः ।
एवं विश्वासमागच्छ मा ते भूद्बुद्धिरन्यथा ॥

पापसत्त्वेन संधिः परमदुष्करः, त्रिविधः संधिः

भीमसेन उवाच—

[3]यथा यथैव शान्तिः स्यात् कुरूणां मधुसूदन ।
तथा तथैव भाषेथा मा स्म युद्धेन भीषयेः ॥

शान्तिबाधकं भयं तेषां मा कुरु इत्याह— तथेति ।
नीटी.

[4]अमर्षी नित्यसंरब्धः श्रेयोद्वेषी महामनाः ।
नोग्रं दुर्योधनो वाच्यः साम्नैवैनं समाचरेः ॥

महामनाः स्तब्धः । समाचरेः प्रागपि समाहितवानसि ।
नीटी.

[5]प्रकृत्या पापसत्त्वश्च तुल्यचेताश्च दस्युभिः ।
ऐश्वर्यमदमत्तश्च कृतवैरश्च पाण्डवैः ॥

[6]अदीर्घदर्शी निष्ठूरी क्षेप्ता क्रूरपराक्रमः ।
दीर्घमन्युरनेयश्च पापात्मा निकृतिप्रियः ॥

निष्ठूरी निष्ठुरवाक् । क्षेप्ता निन्दकः । अनेयः शिक्षयितुमयोग्यः ।
नीटी.

(१) भा. ५।१०।२५ ; भामु. ५।१०।२५ दीन ( निन्द्य ) सुविनिश्चितः ( सूक्ष्मनिश्चयः ).

(२) भा. ५।१०।२६ ; भामु. ५।१०।२६ शाश्वतः ( नित्यदा ).

(३) भा. ५।७२।१ ; भामु. ५।७४।१.

(४) भा. ५।७२।२ ; भामु. ५।७४।२ नित्यसंरब्धः ( जातसंरम्भः ).

(५) भा. ५।७२।३ ; भामु. ५।७४।३ ताश्च ( तास्तु ).

(६) भा. ५।७२।४ ; भामु. ५।७४।४.

[1]म्रियेतापि न भज्येत नैव जह्यात् स्वकं मतम् ।
तादृशेन शमं कृष्ण मन्ये परमदुष्करम् ॥

[2]हीयमानेन वै संधिः पर्येष्टव्यः समेन च ।
विग्रहो वर्धमानेन नीतिरेषा बृहस्पतेः ॥

[3]ते वयं पाण्डुपुत्रेभ्यो हीनाः स्वबलशक्तितः ।
अत्र ते पाण्डवैः सार्धं संधिं मन्ये क्षमं प्रभो ॥

[4]पापैः सह न संदध्याद्राष्ट्रं पण्यं न कारयेत् ॥

[5]संधिश्च विविधाभिख्यो हीनो मध्यस्तथोत्तमः ।
भयसत्कारवित्ताख्यः कार्त्स्न्येन परिवर्णितः ॥

भयेन संधिः हीनः । सत्कारेण मध्यमः । वित्तग्रहणेन उत्तमः । तत् त्रयं संधिकारणं वर्णितम् ।
नीटी.

[6]यदा तु हीनं नृपतिर्विद्यादात्मानमात्मना ।
अमात्यैः सह संमन्त्र्य कुर्यात् संधिं बलीयसा ॥

[7]अज्ञायमानो हीनत्वे कुर्यात् संधिं परेण वै ।
लिप्सुर्वा कंचिदेवार्थं त्वरमाणो विचक्षणः ॥

[8]गुणवन्तो महोत्साहा धर्मज्ञाः साधवश्च ये ।
संदधीत नृपस्तैश्च राष्ट्रं धर्मेण पालयन् ॥

तैः द्वारभूतैः तान् द्वारीकृत्य संदध्यात् बलवद्भिर्नृपैः सह संधिं कुर्यात् ।
नीटी.

अनसंधेयः संधेयश्च

भीष्म उवाच—

*[1]संधेयान् पुरुषान् राजन्नसंधेयांश्च तत्त्वतः ।
वदतो मे निबोध त्वं निखिलेन युधिष्ठिर ॥

लुब्धः क्रूरस्त्यक्तधर्मा निकृतः शठ एव च ।
क्षुद्रः पापसमाचारः सर्वशङ्की तथाऽलसः ॥

दीर्घसूत्रोऽनृजुः कष्टो गुरुदारप्रधर्षकः ।
व्यसने यः परित्यागी दुरात्मा निरपत्रपः ॥

सर्वतः पापदर्शी च नास्तिको वेदनिन्दकः ।
संप्रकीर्णेन्द्रियो लोके यः कामनिरतश्चरेत् ॥

असत्यो लोकविद्विष्टः समये चानवस्थितः ।
पिशुनोऽथाकृतप्रज्ञो मत्सरी पापनिश्चयः ॥

दुःशीलोऽथाकृतात्मा च नृशंसः कितवस्तथा ।
मित्रैरर्थकृती नित्यमिच्छत्यर्थपरश्च यः ॥

वहतश्च यथाशक्ति यो न तुष्यति मन्दधीः ।
अमित्रमिव यो भुङ्क्ते सदा मित्रं नरर्षभ ॥

अस्थानक्रोधनो यश्च अकस्माच्च विरज्यते ।
सुहृदश्चैव कल्याणानाशु त्यजति किल्बिषी ॥

अल्पेऽप्यपकृते मूढस्तथाऽज्ञानात्कृतेऽपि च ।
कार्योपसेवी मित्रेषु मित्रद्वेषी नराधिप ॥

शत्रुर्मित्रमुखो यश्च जिह्मप्रेक्षी विलोभनः ।
न रज्यति च कल्याणे यस्त्यजेत्तादृशं नरम् ॥

पानपो द्वेषणः क्रूरो निर्घृणः पुरुषस्तथा ।
परोपतापी मित्रध्रुक् तथा प्राणिवधे रतः ॥

कृतघ्नश्चाधमो लोके न संधेयः कथंचन ।
छिद्रान्वेषी न संधेयः संधेयानपि मे शृणु ॥

---

(१) भा. ५।७२।५ ; भामु. ५।७४।५ शमं (शमः) ष्करम् (ष्करः).

(२) भा. ९।३।४२; भामु. ९।४।४३ च (वा) नीति (मति).

(३) भा. ९।३।४३ ; भामु. ९।४।४४ स्वबल (सबल) अत्र ते (तदत्र).

(४) भा. १२।२५।१५ ; भामु. १२।२४।१६ द्राष्ट्रं पण्यं न (द्राज्यं पुण्यं च).

(५) भा. १२।५९।३७ ; भामु. १२।५९।३७ विवि (त्रिवि) त्ताख्यः (त्ताख्यं) वर्णितः (वर्णितम्).

(६) भा. १२।६९।१४ ; भामु. १२।६९।१४.

(७) भा. १२।६९।१५ ; भामु. १२।६९।१५ मानो (माने) कुर्यात् संधिं (संधिं कुर्यात्).

(८) भा. १२।६९।१६; भामु. १२।६९।१६.

* एतेषां द्वाविंशतेः श्लोकानां व्याख्यानसंग्रहः शेषः स्थलादिनिर्देशश्च 'प्रकृतयः— मित्रम्' इत्यस्मिन् प्रकरणे (पृ. १२९०-१२९२) द्रष्टव्यः ।

(१) भा. १२।१६२।५-२६.

कुलीना वाक्यसंपन्ना ज्ञानविज्ञानकोविदाः ।
मित्रज्ञाश्च कृतज्ञाश्च सर्वज्ञाः शोकवर्जिताः ॥

माधुर्यगुणसंपन्नाः सत्यसंधा जितेन्द्रियाः ।
व्यायामशीलाः सततं भृतपुत्राः कुलोद्गताः ॥

रूपवन्तो गुणोपेतास्तथाऽलुब्धा जितश्रमाः ।
दोषैर्वियुक्ताः प्रथितैस्ते ग्राह्याः पार्थिवेन ह ॥

यथाशक्तिसमाचाराः सन्तस्तुष्यन्ति हि प्रभो ।
नास्थाने क्रोधवन्तश्च न चाकस्माद्विरागिणः ॥

विरक्ताश्च न रुष्यन्ति मनसाऽप्यर्थकोविदाः ।
आत्मानं पीडयित्वाऽपि सुहृत्कार्यपरायणाः ।
न विरज्यन्ति मित्रेभ्यो वासो रक्तमिवा-
ऽऽविकम् ॥

दोषांश्च लोभमोहादीनर्थेषु युवतिष्वथ ।
न दर्शयन्ति सुहृदां विश्वस्ता बन्धुवत्सलाः ॥

लोष्टकाञ्चनतुल्यार्थाः सुहृत्स्वशठबुद्धयः ।
ये चरन्त्यनभीमाना निसृष्टार्थविभूषणाः ।
संगृह्णन्तः परिजनं स्वाम्यर्थपरमाः सदा ॥
ईदृशैः पुरुषश्रेष्ठैः संधिं यः कुरुते नृपः ।
तस्य विस्तीर्यते राष्ट्रं ज्योत्स्ना ग्रहपतेरिव ॥

शास्त्रनित्या जितक्रोधा बलवन्तो रणप्रियाः ।
क्षान्ताः शीलगुणोपेताः संधेयाः पुरुषोत्तमाः ॥

ये च दोषसमायुक्ता नराः प्रोक्ता मयाऽनघ ।
तेषामप्यधमो राजन् कृतघ्नो मित्रघातकः ।
त्यक्तव्यः स दुराचारः सर्वेषामिति निश्चयः ॥

## कौटिलीयमर्थशास्त्रम्

संधिलक्षणम् , संधिकालः

*[1]तत्र पणबन्धः संधिः ॥
परस्माद्धीयमानः संदधीत ॥

* वचनद्वयस्य व्याख्यानं सामान्यविचारप्रकरणे (पृ. २०५५) द्रष्टव्यम् ।

(१) कौ. ७।१.

दण्डोपनतसंधयः कोशोपनतसंधयः देशोपनतसंधय-
श्चेति त्रिविधा हीनसंधयः

*[1]प्रवृत्तचक्रेणाऽऽक्रान्तो राज्ञा बलवताऽबलः ।
संधिनोपनमेत् तूर्णं कोशदण्डात्मभूमिभिः ॥
स्वयं संख्यातदण्डेन दण्डस्य विभवेन वा ।
उपस्थातव्यमित्येष संधिरात्मामिषो मतः ॥
सेनापतिकुमाराभ्यामुपस्थातव्यमित्ययम् ।
पुरुषान्तरसंधिः स्यान्नाऽऽत्मनेत्यात्मरक्षणः ॥
एकेनान्यत्र यातव्यं स्वयं दण्डेन वेत्ययम् ।
अदृष्टपुरुषः संधिर्दण्डमुख्यात्मरक्षणः ॥
मुख्यस्त्रीबन्धनं कुर्यात् पूर्वयोः पश्चिमे त्वरिम् ।
साधयेद् गूढमित्येते दण्डोपनतसंधयः ॥
कोशदानेन शेषाणां प्रकृतीनां विमोक्षणम् ।
परिक्रयो भवेत्संधिः स एव च यथासुखम् ॥
स्कन्धोपनेयो बहुधा ज्ञेयः संधिरुपग्रहः ।
निरुद्धो देशकालाभ्यामत्ययः स्यादुपग्रहः ॥
विषह्य दानादायत्यां क्षमः स्त्रीबन्धनादपि ।
सुवर्णसंधिर्विश्वासादेकीभावगतो भवेत् ॥
विपरीतः कपालः स्यादत्यादानादभाषितः ।
पूर्वयोः प्रणयेत् कुप्यं हस्त्यश्वं वा गरान्वितम् ॥
तृतीये प्रणयेदर्थं कथयन् कर्मणां क्षयम् ।
तिष्ठेच्चतुर्थ इत्येते कोशोपनतसंधयः ॥
भूम्येकदेशत्यागेन देशप्रकृतिरक्षणम् ।
आदिष्टसंधिस्तत्रेष्टो गूढस्तेनोपघातिनः ॥
भूमीनामात्तसाराणां मूलवर्जं प्रणामनम् ।
उच्छिन्नसंधिस्तत्रैष परव्यसनकाङ्क्षिणः ॥
फलदानेन भूमीनां मोक्षणं स्यादवक्रयः ।
फलातिभुक्तो भूमिभ्यः संधिः स परदूषणः ॥
कुर्यादवेक्षणं पूर्वौ पश्चिमौ त्वाबलीयसम् ।
आदाय फलमित्येते देशोपनतसंधयः ॥
स्वकार्याणां वशेनैते देशे काले च भाषिताः ।
आबलीयसिकाः कार्यास्त्रिविधा हीनसंधयः ॥

* एतेषां पञ्चदशानां श्लोकानां व्याख्यानं सामान्यविचारप्रकरणे (पृ. २०६१–२०६२) द्रष्टव्यम् ।

(१) कौ. ७।३.

संधिप्रकाराः तेषां निमित्तानि च

**'संधिः परिपणितश्चापरिपणितश्च ॥**

' परिपणितापरिपणितापसृताश्च संधयः ' इति सूत्रम् । परिपणितसंधिः अपरिपणितसंधिः अपसृतसंधिश्चाभिधीयते इति सूत्रार्थः । परिपणितसंधिर्नाम देशं कालं कार्यं चानुरुध्य क्रियमाणः । तद्विपरीतः अपरिपणितसंधिः । आत्मानं कुतश्चिन्निमित्तात् विहायापगतैर्मित्रैर्भृत्यैर्वा सह संधिः अपसृतसंधिः । तृतीयाध्याये ' त्रिविधा हीनसंधयः ' इति हीनसंधय उक्ताः । किमेतावन्त एव संधयः ? इति संदेहे परिपणितादयोऽन्येऽपि संधयः सन्तीति निरूपयितुमिदं प्रकरणमारभ्यते ।

संधिः परिपणितश्चापरिपणितश्चेति । निरूप्यते इति शेषः । श्रीमूला.

**' त्वमेतं देशं याह्यहमिमं देशं यास्यामि ' इति परिपणितदेशः ॥**

तत्र परिपणितसंधिं सप्तविधं क्रमेणाऽऽह— त्वमेतमित्यादि । ' त्वमेतं देशं याहि, अहमिमं देशं यास्यामि' इत्येवं देशं परिपण्य कृतः संधिः परिपणितदेशो नाम प्रथमः परिपणितसंधिः । श्रीमूला.

**' त्वमेतावन्तं कालं चेष्टस्व, अहमेतावन्तं कालं चेष्टिष्ये ' इति परिपणितकालः ॥**

' त्वमियन्तं कालं यथेष्टं चेष्टस्व, अहमियन्तं कालं यथेष्टं चेष्टिष्ये ' इति कालं परिपण्य कृतः परिपणितकाल इति द्वितीयः । श्रीमूला.

**' त्वमेतावत्कार्यं साधय, अहमेतावत्कार्यं साधयिष्यामि ' इति परिपणितार्थः ॥**

' त्वं दुर्गादिष्वेतावत् कार्यं निर्वर्तय, अहमेतावन्निर्वर्तयिष्यामि ' इति कार्यं परिपण्य कृतः संधिः परिपणितार्थ इति तृतीयः । श्रीमूला.

**यदि वा मन्येत— ' शैलवननदीदुर्गमटवीव्यवहितं छिन्नधान्यपुरुषवीवधासारमयवसेन्धनोदकमविज्ञातं प्रकृष्टमन्यभावदेशीयं वा सैन्यव्यायामानामलब्धभौमं वा देशं परो यास्यति, विपरीतमहम् ' इति, एतस्मिन् विशेषे परिपणितदेशं संधिमुपेयात् ॥**

त्र्याणामेषां क्रमेण प्रयोगनिमित्तान्याह— यदि वा मन्येत शैलवनेत्यादि । ' गिरिदुर्गयुक्तं वनदुर्गयुक्तं नदीदुर्गयुक्तं कान्तारव्यवहितं देशान्तरादनानेतव्यधान्यम् अनानेतव्यपुरुषम् अनानेतव्यतैलघृतादिभारम् अनानेतव्यसुहृद्बलं तृणकाष्ठजलरहितम् अपरिचितं विप्रकृष्टम् अन्यभावदेशीयम् अस्वामिभक्तदेशीयजनं वा सैन्यपरिस्पन्दयोग्यभूमिरहितं वा अत एव दुःसाधं देशं परो यास्यति, विपरीतं सुसाधं देशमहं यास्यामि ' इति यदि मन्येत विजिगीषुः एतस्मिन् कारणविशेषे परिपणितदेशं संधिं कुर्यात् । श्रीमूला.

**यदि वा मन्येत— ' प्रवर्षोष्णशीतमतिव्याधिप्रायमुपक्षीणाहारोपभोगं सैन्यव्यायामानां चौपरोधिकं कार्यसाधनानामूनमतिरिक्तं वा कालं परश्चेष्टिष्यते, विपरीतमहम् ' इति, तस्मिन् विशेषे परिपणितकालं संधिमुपेयात् ॥**

प्रकृष्टवर्षं प्रकृष्टोष्णं प्रकृष्टशीतम् अत्यन्तव्याधिबहुलम् आहारोपभोगार्थद्रव्योपक्षययुक्तं सैन्यव्यायामोपरोधहेतुं कार्यसाधनानामपर्याप्तम् अधिकं वा कालं परो व्यापरिष्यते, अहं तु यथोक्तप्रत्यनीकं कालं चेष्टिष्ये' इति चेद्विजिगीषुर्मन्येत एतस्मिन् कालविशेषे निमित्ते परिपणितकालं संधिं कुर्यात् । श्रीमूला.

**यदि वा मन्येत— ' प्रत्यादेयं प्रकृतिकोपकं दीर्घकालं महाक्षयव्ययमल्पमनर्थानुबन्धमकल्यमधर्म्यं मध्यमोदासीनविरुद्धं मित्रोपघातकं वा कार्यं परः साधयिष्यति, विपरीतमहम् ' इति, तस्मिन् विशेषे परिपणितार्थं संधिमुपेयात् ॥**

' रक्षणासुकरत्वात् परप्रत्याच्छेद्यं प्रकृतिकोपजनकं दीर्घकालनिर्वर्त्यं प्रभूतपुरुषनाशं प्रभूतधनव्ययम् अल्पम् अनर्थोत्तरम् अनुष्ठानकालेऽपि दुःखकरं धर्मापेतं मध्यमोदासीनयोर्विरुद्धं मित्रस्यापि पीडावहं कार्यं परः साधयिष्यति, अहं तु यथोक्तविपरीतं कार्यं साधयिष्यामि '

(१) कौ. ७।६.

इति चेन्मन्येत विजिगीषुः एवंविधे विशेषे परिपणितार्थे संधिं कुर्यात् । श्रीमूला.

**एवं देशकालयोः कालकार्ययोर्देशकार्ययोर्देशकालकार्याणां चावस्थापनात् सप्तविधः परिपणितः । तस्मिन् प्रागेवाऽऽरभ्य प्रतिष्ठाप्य च स्वकर्माणि परकर्मसु विक्रमेत ॥**

इत्थं त्रयः प्रकाराः परिपणितसंधेरुक्ताः । एष्वेव देशकालयोः कालकार्ययोः देशकार्ययोः देशकालकार्याणां चेत्येवमन्योन्यमिश्रणे चत्वारोऽन्ये प्रकारा भवन्तीति सप्तविधः परिपणितसंधिरित्याह— एवं देशकालयोरित्यादि । तस्मिन्निति । यथोक्ते परिपणितसंधावुपेते प्रागेव पूर्वमेव स्वकर्माणि आरभ्य प्रतिष्ठाप्य च फलपर्यन्तानुष्ठानेन परिसमाप्य च परकर्मसु विक्रमेत उपघाताय यतेत । श्रीमूला.

**व्यसनत्वरावमानालस्ययुक्तमज्ञं वा शत्रुमतिसंधातुकामो देशकालकार्याणामनवस्थापनात् ‘ संहितौ स्वः ’ इति संधिविश्वासेन परच्छिद्रमासाद्य प्रहरेत् । इत्यपरिपणितः ॥**

अपरिपणितसंधिमाह— व्यसनत्वरावमानालस्ययुक्तमज्ञं वेत्यादि । पानद्यूताद्यासक्त्या त्वरया अवज्ञया आलस्येन च युक्तम् अविद्वांसं शत्रुम् अतिसंधित्सुर्विजिगीषुर्देशकालकार्याणां व्यवस्थापनमकृत्वैव ‘ संहितावावां भवावः ’ इति वाङ्मात्रकृतेन संधिना विश्वासमुत्पाद्य परस्य छिद्रमुपलभ्य प्रहरेत् । इत्यपरिपणितसंधिर्व्याख्यातः । श्रीमूला.

**तत्रैतद्भवति—**

**सामन्तेनैव सामन्तं विद्वानायोज्य विग्रहे ।**
**ततोऽन्यस्य हरेद्भूमिं छित्वा पक्षं समन्ततः ॥**

उक्ते संधौ कृते तदुत्तरकरणीयमिदं भवति । तच्छ्लोकेनाऽऽह— सामन्तेनैवेति । विद्वान् विजिगीषुः सामन्तेनैव पार्ष्णिग्राहेणैव सह सामन्तं पार्ष्णिग्राहानन्तरं राजानम् अर्थादात्मनः आक्रन्दं विग्रहे आयोज्य ततः अन्यस्य यातव्यस्य भूमिं हरेत् । किं कृत्वा ? समन्ततः पक्षं यातव्यमित्रं छित्वा उच्छिद्य । श्रीमूला.

**संधेरकृतचिकीर्षा कृतश्लेषणं कृतविदूषणमवशीर्णक्रिया च । विक्रमस्य प्रकाशयुद्धं कूटयुद्धं तूष्णींयुद्धम् । इति संधिविक्रमौ ॥**

अकृतचिकीर्षादयश्चत्वारः संधेर्धर्माः , प्रकाशयुद्धादयस्त्रयो विग्रहस्य धर्मा इत्याह— संधेरकृतचिकीर्षेत्यादि । इति संधिविक्रमाविति । विभक्ताविति शेषः । श्रीमूला.

**अपूर्वस्य संधेः सानुबन्धैः सामादिभिः पर्येषणं समहीनज्यायसां च यथाबलमवस्थापनमकृतचिकीर्षा ॥**

संधिधर्मेष्वकृतचिकीर्षां निरूपयति— अपूर्वस्य संधेरिति । केनचिद्राज्ञा सह पूर्वमकृतस्य संधेः सानुबन्धैः सामादिभिः पर्येषणं दानानुबन्धयुक्तैः सामभिः सामानुबन्धयुक्तैर्दानैश्चानुष्ठानाध्यवसायः, समहीनज्यायसां यथाबलमवस्थापनं च— समशक्तिकेन कोशदण्डादिदानोपादानादिव्यवहाराकरणं हीनात् कोशदण्डादिग्रहणं ज्यायसे कोशदण्डादिदानमित्येवंरूपं समादीनां स्वबलानतिक्रमेणावस्थानाकलनं च अकृतचिकीर्षा नाम । श्रीमूला.

**कृतस्य प्रियहिताभ्यामुभयतः परिपालनं यथासंभाषितस्य च निबन्धनस्यानुवर्तनं रक्षणं च ‘ कथं परस्मान्न भिद्येत ’ इति कृतश्लेषणम् ॥**

कृतश्लेषणमाह— कृतस्य प्रियहिताभ्यामुभयतः परिपालनमित्यादि । कृतस्य संधेः प्रियाचरणेन हिताचरणेन च उभाभ्यां पक्षाभ्यां रक्षणम् , यथासंभाषितस्य च समयबन्धस्यानुवर्तनम्, शत्रूपजापात् स यथा न विहतो भवेत् तथा रक्षणं च कृतश्लेषणं नाम । श्रीमूला.

**परस्य अपसंधेयतां दूष्यातिसंधानेन स्थापयित्वा व्यतिक्रमः कृतविदूषणम् ॥**

कृतविदूषणमाह— परस्यापसंधेयतामित्यादि । दूष्यद्वारकेणातिसंधानेन निमित्तेन परस्य संधानानर्हत्वं स्थापयित्वा व्यतिक्रमः विजिगीषोः पूर्वकृतसंधिलङ्घनं कृतविदूषणमुच्यते । श्रीमूला.

**भृत्येन मित्रेण वा दोषापसृतेन प्रतिसंधानमवशीर्णक्रिया ॥**

अवशीर्णक्रियामाह— भृत्येनेत्यादि । तेन वा मित्रेण वा दोषापसृतेन कुतश्चिद्दोषात् विजिगीषुं परित्यज्य गतेन

प्रतिसंधानं पुनःसंधिकरणम् अवशीर्णक्रिया नाम । इयमपसृतसंधावन्तर्भवति । श्रीमूला.

**तस्यां गतागतश्चतुर्विधः— कारणाद्गतागतः, विपरीतः, कारणाद्गतोऽकारणादागतः, विपरीतश्चेति ॥**

अवशीर्णक्रियायां गतागतः गत्वा प्रत्यागतः चतुर्विधः चतुष्प्रकारः । प्रकारानाह— कारणाद्गतागत इत्यादि । कारणादेव गतः कारणादेव च प्रत्यागत इत्येकः । अकारणाद्गतः अकारणादेव चाऽऽगतः इति पूर्वविपरीतो द्वितीयः । कारणाद्गतोऽकारणात्प्रत्यागत इति तृतीयः । अकारणाद्गतः कारणात् प्रत्यागत इति तृतीयविपरीतश्चतुर्थः । श्रीमूला.

**स्वामिनो दोषेण गतो गुणेनाऽऽगतः परस्य गुणेन गतो दोषेणाऽऽगत इति कारणाद्गतागतः संधेयः ॥**

तत्र कारणाद्गतागतं प्रत्याह— स्वामिन इति । तस्य दोषेण अप्रसादलक्षणेन गतः गुणेन स्वामिप्रसादलक्षणेन आगतः, परस्य गुणेन गतः गत्वा परमुपाश्रितः दोषेण परस्मिन् दोषदर्शनेन निमित्तेन आगतः परं विहाय स्वामिनं प्रत्यागतः इति सनिमित्तगमनागमनकारित्वाद्धेतोः कारणाद्गतागतः संधेयः संधातुं योग्यः ।

श्रीमूला.

**स्वदोषेण गतागतो गुणमुभयोः परित्यज्याकारणाद्गतागतश्चलबुद्धिरसंधेयः ॥**

विनैव स्वामिदोषं स्वदोषेण स्वामिनं विहाय परमुपाश्रितः तेनैव हेतुना परमपि विहाय स्वामिनं प्रत्यागतः स्वामिपरयोरुभयोर्गुणप्रत्याकलनविकलश्चञ्चलबुद्धिश्चेति अकारणाद्गतागतो न संधानयोग्य इत्याह— स्वदोषेणेत्यादि । श्रीमूला.

**स्वामिनो दोषेण गतः परस्मात् स्वदोषेणाऽऽगत इति कारणाद्गतोऽकारणादागतस्तर्कयितव्यः— 'परप्रयुक्तः स्वेन वा दोषेणापकर्तुकामः, परस्योच्छेत्तारममित्रं मे ज्ञात्वा प्रतिघातभयादागतः, परं वा मामुच्छेत्तुकामं परित्यज्याऽऽनृशंस्यादागत इति । ज्ञात्वा कल्याणबुद्धिं पूजयेदन्यथाबुद्धिमपकृष्टं वासयेत् ॥**

स्वामिनो दोषेण तं विहाय शत्रुमाश्रितः शत्रोः सकाशात् स्वदोषेण प्रत्यागतः इति हेतोः कारणाद्गतोऽकारणादागतस्तर्कयितव्य इत्याह— स्वामिनो दोषेण गत इत्यादि । तर्कणप्रकारमाह— परप्रयुक्त इत्यादि । 'किमयं परचोदनया मामपकर्तुकाम आगतः, अथवा मया पूर्वकृतमपकारं स्मरन् स्वेनैव बुद्धिदोषेण मामपकर्तुकाम आगतः, उत ममामित्रं शत्रुसकाशागतपुरुषवधप्रवृत्तं दृष्ट्वा स्वात्मनोऽपि शत्रुसकाशागतत्वात् वधमाशङ्कमान आगतः, उताहो मदुच्छेदकृतसमीहं मे शत्रुं परित्यज्य मयि पूर्वपरिचयस्नेहादागतः इत्येवं तर्कयितव्यः । ज्ञात्वेत्यादि । पुनरागमनकारणेषु चतुर्षु अन्यतमं निर्धार्य तं चेत् कल्याणबुद्धिमवगच्छेत् तमासन्ने कृत्वा सत्कुर्यात् । अन्यथाबुद्धिं दूरे वासयेत् । श्रीमूला.

**स्वदोषेण गतः परदोषेणाऽऽगत इत्यकारणाद्गतः कारणादागतस्तर्कयितव्यः— 'छिद्रं मे पूरयिष्यति, उचितोऽयमस्य वासः, परत्रास्य जनो न रमते, मित्रैर्मे संहितः, शत्रुभिर्विगृहीतः, लुब्धक्रूरादाविग्नः, शत्रुसंहिताद्वा परस्मात्' इति । ज्ञात्वा यथाबुद्ध्यवस्थापयितव्यः ॥**

अकारणाद्गतः कारणादागतो यः सोऽपि स्वामिदोषमन्तरेण स्वेनैव दोषेण गतः परदोषेण प्रत्यागत इत्यतस्तर्कयितव्य इत्याह— स्वदोषेण गत इत्यादि । तर्कणप्रकारमाह— छिद्रमित्यादि । किमयं मम छिद्रं परस्य सुखप्रवेश्यं यथा स्यात्तथा विस्तारयिष्यति, अथवा अस्यैतज्जनपदवास उपशयोचितः, यद्वाऽस्य कलत्रादिः परिजनः परदेशवासं न रोचयते, आहो अयं मम मित्रैः कृतसंधानः, उत शत्रुभिर्विप्रकृतः, उताहो परस्माल्लुब्धक्रूरात् भीतः, शत्रुणा कृतसंधेर्वा परस्मात् इत्येवं तर्कयितव्यः । ज्ञात्वेत्यादि । तर्कणेनाऽऽगमनहेतुं निर्धार्य तदीयबुद्धिकल्याणत्वाकल्याणत्वानुरोधेन स वर्तयितव्यः ।

श्रीमूला.

**कृतप्रणाशः शक्तिहानिर्विद्यापण्यत्वमाशानिर्वेदो देशलौल्यमविश्वासो बलवद्विग्रहो वा परित्यागस्थानमित्याचार्याः । भयमवृत्तिरमर्ष इति कौटल्यः ॥**

अथ स्वामिनः परित्याज्यत्वे हेतुभूतान् दोषानाह— कृतप्रणाश इत्यादि । कृतप्रणाशः कृतोपकारास्वीकरणम्, शक्तिहानिः शक्तीनां क्षयः, विद्यापण्यत्वं— विद्या पण्यमिव पण्यं विक्रेयवस्तुतुल्या मूल्यप्रतिग्राह्यप्राकृतपण्यवस्तुसाधारणप्रतिपत्तिविषय इति यावत्, यस्य स विद्यापण्यः विद्यावहेली, तस्य भावस्तत्त्वम्, आशानिर्वेदः ददामीति वचनेनाऽऽशामुत्पाद्य अदानेन ततो निर्वेदजननम्, देशलौल्यं देशे दंशमशकव्याध्युपद्रवः, अविश्वासः भृत्येष्वविश्वस्तत्वम्, बलवद्विग्रहो वा बलवता शत्रुणा विगृह्यासनं वा परित्यागस्थानं स्वामिपरित्यागहेतुः इत्याचार्याः । भयम् अनारम्भः क्रोध इति त्रयमेव परित्यागस्थानमिति स्वमतमित्याह— भयमित्यादि । श्रीमूला.

**इहापकारी त्याज्यः । परापकारी संधेयः । उभयापकारी तर्कयितव्य इति समानम् ॥**

गतागतं प्रति भूयो विशेषमाह— इहापकारी त्याज्य इति । आत्मनोऽपकृत्य गतः परस्यापकारमकृत्वा प्रत्यागतः त्यक्तव्यः, न तु संधेयः । परापकारी संधेयः इहापकारमकृत्वैव गतः परस्यापकारं कृत्वा प्रत्यागतः संधातुं योग्यः । उभयापकारी तर्कयितव्य इत्यादि । इह परस्मिंश्च कृतापकारः परीक्षणीयः केन निमित्तेनाऽऽगत इति । यथाबुद्धि चावस्थापनीय इति प्राग्वत् । श्रीमूला.

**असंधेयेन त्ववश्यं संधातव्ये यतः प्रभावः ततः प्रतिविदध्यात् ॥**

संधानायोग्येन सह संधाने अवश्यकरणीयत्वेनाऽऽपतिते यतः प्रभावस्ततः प्रतिविदध्यात् यत् परस्य प्रभावे निमित्तं तत् वारयेत् । श्रीमूला.

**सोपकारं व्यवहितं गुप्तमायुःक्षयादिति । वासयेदरिपक्षीयमवशीर्णक्रियाविधौ ॥**

अथ परपक्षीय आत्माश्रितः केनचिद्दोषेण परं गत्वा पुनरायातः, तथाविधेन गतागतेनावशीर्णविशेषभूतेन कथं संधातव्यमित्यपेक्षायामाह— सोपकारमिति । अवशीर्णक्रियाविधौ अरिपक्षीयं गतागतं जनं सोपकारं स्वाम्युपकारावहं व्यवहितं भृत्यान्तराधश्चरं स्वाम्यनासन्नम् आ आयुःक्षयात् गुप्तं यावज्जीवं भृत्यैरन्याविज्ञातरक्षितम्, कृत्वेति शेषः, इति अनेन प्रकारेण वासयेत् । श्रीमूला.

**विक्रामयेद्भर्तरि वा सिद्धं वा दण्डचारिणम् । कुर्यादमित्राटवीषु प्रत्यन्ते वाऽन्यतः क्षिपेत् ॥**

भर्तुरन्तिके वा तं परिचारयेत्, अर्थाः व्यवधानवृत्तौ शुचित्वेन ज्ञातम् । सिद्धं वा दण्डचारिणं कुर्याः तत्र दृष्टकौशलं सैन्यकर्मणि व्यापारयेत् । अमित्राटवीषु अमित्रेषु अटवीषु च क्षिपेत् व्यापारयेत् । अन्यतः प्रत्यन्ते वा अन्यत्र दूरदेशे वा क्षिपेत् । श्रीमूला.

**पण्यं कुर्यादसिद्धं वा सिद्धं वा तेन संवृतम् । तस्यैव दोषेणाऽऽदूष्य परसंधेयकारणात् ॥**

असिद्धं वा पण्यं कुर्यात् यत्र क्षिप्तस्तत्रासमर्थं पण्यवन्तं कुर्यात् । 'एतावतः पण्यस्यैतावद्धनम्' इति परिभाषया शत्रुविषये पण्यविक्रयाय प्रेषयेदित्यर्थः । तेन संवृतम् अनाम्ना शत्रुणा सह गूढकृतसंकेतं 'शत्रुर्मया साधितः' इत्यादिमिथ्यावादव्यक्तीकृतवाम्यं परसंधेयकारणात् आदूष्य संधेयशत्रुप्रतिबोधनाय आ समन्तादवघोषणया उपालभ्य तस्यैव दोषेण मिथ्यावादलक्षणेन सिद्धं वा कुर्यात् मारयेत् । श्रीमूला.

**अथवा शमयेदेनमायत्यर्थमुपांशुना । आयत्यां च वधप्रेप्सुं दृष्ट्वा हन्याद्गतागतम् ॥**

आदूष्यमारणपक्षाभावे एनम् आयत्यर्थम् उत्तरकालयोगक्षेमार्थम् उपांशुना शमयेत् उपांशुदण्डेन हन्यात् । गतागतसामान्यविषयमाह— गतागतम् आयत्यां वधप्रेप्सुम् उत्तरकालवधेच्छुं दृष्ट्वा ज्ञात्वा हन्यात् । श्रीमूला.

**अरितोऽभ्यागतो दोषः शत्रुसंवासकारितः । सर्पसंवासधर्मित्वान्नित्योद्वेगेन दूषितः ॥**

शत्रोः सकाशात् अभ्यागतः पुरुषः शत्रुसंवासकारितो दोषः शत्रुसहवासशिक्षितत्वादेकान्तदोषहेतुः । सर्पसंवास-

धर्मित्वात् सर्पसहवासतुल्यत्वात् नित्योद्वेगेन नित्यभय-हेतुतया निन्दितः । श्रीमूला.

**जायते प्लक्षबीजाशात् कपोतादिव शाल्मलेः ।**
**उद्वेगजननो नित्यं पश्चादपि भयावहः ॥**

स गतागतः प्लक्षबीजाशात् प्लक्षफलभोजिनः कपोतात् शाल्मलेरिव तूलैकसारफलत्वेनानुपजीव्यस्य शाल्मलितरोरिव अर्थात् तस्य कपोत इव नित्यम् उद्वेगजननः स्वस्मान्निर्वेदजनकः अर्थादनभिलष्यमाणफलस्य विजिगीषोः पश्चादपि भयावहः जायते । ईदृशश्चार्थः 'प्लक्षबीजाशः कपोत इव' इति पाठे सति सुबोधो भवति । श्रीमूला.

मित्रलाभार्थः हिरण्यलाभार्थश्च संधिः

**[1]संहितप्रयाणे मित्रहिरण्यभूमिलाभानामुत्तरोत्तरो लाभः श्रेयान् । मित्रहिरण्ये हि भूमिलाभाद्भवतः, मित्रं हिरण्यलाभात् । यो वा लाभः सिद्धः शेषयोरन्यतरं साधयति ॥**

'मित्रहिरण्यभूमिकर्मसंधयः' इति सूत्रम् । मित्रं नित्यवश्यादिषट्प्रकारम्, हिरण्यं स्वर्णरजतादि, भूमिः नित्यामित्रादिः भूमिसंध्यध्याये (कौ. ७।१०) वक्ष्यमाणा, कर्म दुर्गादि, एषां लाभैः क्रियमाणाः संधयः कथ्यन्ते इति सूत्रार्थः । श्रेष्ठाश्रेष्ठलाभैः पणनमुक्तम् । श्रैष्ठ्याश्रैष्ठ्ये तु अनिरूपिते इह निरूप्येते । इदं च प्रकरणं नवमादिभिश्चतुर्भिरध्यायैर्वितन्यते । तत्र नवमेऽस्मिन्नध्याये मित्रसंधिर्हिरण्यसंधिश्च निरूप्यते ।

संहितप्रयाण इति । तस्मिन् विषये मित्रहिरण्यभूमिलाभानामुत्तरोत्तरो लाभः श्रेयान् । मित्रलाभापेक्षया हिरण्यलाभः प्रशस्ततरः, हिरण्यलाभापेक्षया भूमिलाभः प्रशस्ततरः । कुत इत्याह— मित्रहिरण्ये हीत्यादि । भूमिलाभे हि सिद्धे तदुत्पन्नकृष्यादिफलसंपदा साधनेन मित्रं हिरण्यं च साधयितुं शक्यते, हिरण्यलाभेन च मित्रलाभः साधयितुं शक्यते, इति भूमिलाभो हिरण्यलाभश्च स्वेतरसाधको यस्मात् तस्मादित्यर्थः । लाभश्रेष्ठत्वं च शेषान्यतरसाधकत्वरूपमित्याह— यो वेत्यादि । स श्रेष्ठ इति वाक्यशेषः । श्रीमूला.

(१) कौ. ७।९.

**'त्वं चाहं च मित्रं लभावहे' इत्येवमादिः समसंधिः । 'त्वं मित्रम्' इत्येवमादिर्विषमसंधिः । तयोर्विशेषलाभादतिसंधिः ॥**

मित्रादिलाभनिबन्धनान् समविषमान् संधीनाह— त्वं चाहं चेत्यादि । 'त्वं चाहं च मित्रं लभावहे', 'त्वं चाहं च हिरण्यं लभावहे', 'त्वं चाहं च भूमिं लभावहे' इत्येवं पणनेन क्रियमाणः संधिः समसंधिः । त्वं मित्रमित्येवमादिरिति । 'त्वं मित्रं लभसे, अहं भूमिम्', 'त्वं हिरण्यम्, अहं भूमिम्', 'त्वं हिरण्यम्, अहं मित्रम्' इत्येवंप्रकारो विषमसंधिः । तयोरिति । समसंधिविषमसंध्योः विशेषलाभात् अतिसंधिः भवति । श्रीमूला.

**समसंधौ तु यः संपन्नं मित्रं मित्रकृच्छ्रे वा मित्रमवाप्नोति सोऽतिसंधत्ते । आपद्धि सौहृदस्थैर्यमुत्पादयति ॥**

समसंधौ विशेषलाभमाह— समसंधौ त्विति । तस्मिन् यः संपन्नं वक्ष्यमाणनित्यत्ववश्यत्वादिगुणयुक्तं मित्रमवाप्नोति, अथवा मित्रकृच्छ्रे मित्रस्य मित्रसंपद्युक्तस्य कृच्छ्रे आपद्दशायां मित्रं तदेव अवाप्नोति सः अतिसंधत्ते अतिसंधिनिमित्तं विशेषलाभं भजते । आपदपेक्षणस्य प्रयोजनमाह— आपद्धीत्यादि । सौहृदस्थैर्यं मैत्रीदार्ढ्यम् । श्रीमूला.

**मित्रकृच्छ्रेऽपि नित्यमवश्यमनित्यं वश्यं वेति । 'नित्यमवश्यं श्रेयः, तद्ध्यनुपकुर्वदपि नापकरोति' इत्याचार्याः ॥**

मित्रकृच्छ्रेऽपि विशेषनिर्धारणार्थं विप्रतिपत्तिमुपक्षिपति— मित्रकृच्छ्रेऽपि नित्यमवश्यमित्यादि । वक्ष्यमाणलक्षणावश्यत्वयुक्तं नित्यं मित्रं वा श्रेयः, आहोस्वित् अनित्यं वश्यं वा श्रेय इति विचार्यत इत्यर्थः । तत्राऽऽचार्याणां निर्धारणमाह— नित्यमवश्यं श्रेय इत्यादि । श्रीमूला.

**नेति कौटल्यः । वश्यमनित्यं श्रेयः । यावदुपकरोति तावन्मित्रं भवति । उपकारलक्षणं मित्रमिति ॥**

आचार्यमतं प्रतिषेधन् स्वमतमाह— नेति कौटल्य इत्यादि । वश्यमनित्यं मित्रं श्रेयः । तत्र हेतुमाह— यावदुपकरोति तावन्मित्रमित्यादि । मित्रस्योपकारलक्षणत्वादुपकुर्वद्दशायामेव मित्रव्यपदेशो भवति, नानुपकुर्वद्दशायाम् । वश्यं च सर्वचित्रमहाभोगत्वलक्षणत्वादुपकुर्वदेव भवतीत्यर्थः । तथा च नित्यवश्ययोर्मध्ये महाभोगत्वलक्षणं वश्यमनित्यं श्रेय इति कौटल्यमतमुक्तं भवति ।

श्रीमूला.

**वश्ययोरपि महाभोगमनित्यमल्पभोगं वा नित्यमिति । 'महाभोगमनित्यं श्रेयः, महाभोगमनित्यमल्पकालेन महदुपकुर्वन्महान्ति व्ययस्थानानि प्रतिकरोति' इत्याचार्याः ॥**

वश्ययोरेव नित्यत्वानित्यत्वयोगे श्रेयस्त्वं विचारयति— वश्ययोरपीत्यादि । महाभोगवश्याल्पभोगवश्ययोर्मध्ये किं महाभोगवश्यमनित्यं श्रेयः, उताल्पभोगवश्यं नित्यं श्रेयः ? इति चिन्तायामाचार्या वदन्ति— महाभोगवश्यमनित्यं श्रेयः । कुतः ? तद्धि अल्पेन कालेन महान्तमुपकारं करोति, तेन च व्ययहेतवः प्रभूताः प्रतिकृता भवन्तीत्येतस्मात् कारणात् ।

श्रीमूला.

**नेति कौटल्यः । नित्यमल्पभोगं श्रेयः, महाभोगमनित्यमुपकारभयादपक्रामति, उपकृत्य वा प्रत्यादातुमीहते । नित्यमल्पभोगं सातत्यादल्पमुपकुर्वन्महता कालेन महदुपकरोति ॥**

आचार्यमतं निराकुर्वन् स्वमतमाह— नेति कौटल्य इत्यादि । अयमर्थः— अल्पभोगवश्यं नित्यं श्रेयः । कुतः ? अनित्यमहाभोगसकाशसंभावितदोषानास्पदत्वात् तत्सकाशसंभावितगुणास्पदत्वाच्च । अनित्यं हि महाभोगवश्यमुपकारभीत्या हार्दाभावनिमित्तया मित्रत्वात् प्रच्यवेत, उपकारं कृत्वा वाऽपहर्तुं पश्चाद्यतेत । नित्यं त्वल्पभोगमव्यभिचारित्वेन मित्रभावान्न जातु प्रच्यवेत, अविच्छेदेन चाल्पः उपकारस्तेन क्रियमाणो महता कालेन महान् भविष्यतीति ।

श्रीमूला.

**गुरुसमुत्थं महन्मित्रं लघुसमुत्थमल्पं वेति । 'गुरुसमुत्थं महन्मित्रं प्रतापकरं भवति, यदा चोत्तिष्ठते तदा कार्यं साधयति' इत्याचार्याः ॥**

गुरुसमुत्थमहामित्र—लघुसमुत्थाल्पमित्रयोः किं श्रेय इति विचारयति— गुर्वित्यादि । गुरुसमुत्थं देशविप्रकर्षादिना प्रयत्नोत्थाप्यसैन्यं महत् प्रबलं मित्रं वा । श्रेय इति वर्तते । लघुसमुत्थम् अयत्नोत्थाप्यसैन्यम् अल्पं दुर्बलं मित्रं वा । श्रेय इति विचार्यते इति शेषः । तत्राऽऽचार्याणां मतमाह— गुर्वित्यादि । गुरुसमुत्थं महत् मित्रं श्रेयः । कुतः ? तद्धि शत्रावतिशयेन पराक्रमते, चिरयत्नेनापि यदोत्थितं भवति तदा कार्यमव्यभिचारेण साधयति चेत्यर्थः ।

श्रीमूला.

**नेति कौटल्यः । लघुसमुत्थमल्पं श्रेयः । लघुसमुत्थमल्पं मित्रं कार्यकालं नातिपातयति दौर्बल्याच्च यथेष्टभोग्यं भवति, नेतरत् प्रकृष्टभौमम् ॥**

स्वमतमाह— नेति कौटल्य इत्यादि । कार्यकालं नातिपातयति कार्यानुष्ठानार्हमवसरं नातिक्रामयति । इतरत् गुरुसमुत्थम् । प्रकृष्टभौमं विप्रकृष्टभूमिस्थितम् ।

श्रीमूला.

**विक्षिप्तसैन्यमवश्यसैन्यं वेति । 'विक्षिप्तं सैन्यं शक्यं प्रतिसंहर्तुं वश्यत्वात्' इत्याचार्याः ॥**

विक्षिप्तसैन्यं कार्यान्तरसाधनायानेकत्र प्रेषितं सैन्यं येन तत् तथाभूतं मित्रं वा श्रेयः, अवश्यसैन्यं वा । श्रेय इति विचार्यत इति शेषः । आचार्यमतमाह— विक्षिप्तं सैन्यमित्यादि । प्रतिसंहर्तुं समूहयितुम् ।

श्रीमूला.

**नेति कौटल्यः । अवश्यसैन्यं श्रेयः । अवश्यं हि शक्यं सामादिभिर्वश्यं कर्तुम्, नेतरत् कार्यव्यासक्तं प्रतिसंहर्तुम् ॥**

स्वमतमाह— नेति कौटल्य इत्यादि । सामादिभिः सामदानभेदैः । इतरत् विक्षिप्तम् ।

श्रीमूला.

**पुरुषभोगं हिरण्यभोगं वा मित्रमिति । 'पुरुषभोगं मित्रं श्रेयः । पुरुषभोगं मित्रं प्रतापकरं भवति, यदा चोत्तिष्ठते तदा कार्यं साधयति ' इत्याचार्याः ॥**

पुरुषैरुपकारकमेकं मित्रं हिरण्येनोपकारकमन्यदित्यनयोर्मध्ये किं श्रेय इति चिन्तयति— पुरुषभोगमित्यादि । तत्र पुरुषभोगमित्रं प्रशस्ततरम्, यस्मात् शत्रुषु तत् स्वयं पराक्रमितुमर्हम्, उत्थितं च कार्यं साधयतीत्याचार्या मन्यन्त इत्याह— पुरुषभोगं मित्रं श्रेय इत्यादि । श्रीमूला.

**नेति कौटल्यः । हिरण्यभोगं मित्रं श्रेयः । नित्यो हिरण्येन योगः, कदाचित् दण्डेन, दण्डश्च हिरण्येनान्ये च कामाः प्राप्यन्त इति ॥**

स्वमतमाह— नेति कौटल्यो हिरण्यभोगमित्यादि । अयमर्थः— हिरण्यभोगं मित्रं प्रशस्ततरम् । कुतः ? यस्मात् हिरण्यं सर्वत्र नयनानयनयोग्यं हस्ते नित्यं संनिहितं सर्वदोपयोगक्षमम्, दण्डस्तु कादाचित्कोत्थानत्वात् कदाचिदेवोपयोगक्षमो भवति । किंच हिरण्येन दण्डश्च अन्ये चेप्सितार्थाः सुसाधा भवन्ति, न पुनर्दण्डेन हिरण्यमन्ये वा कामा इति । श्रीमूला.

**हिरण्यभोगं भूमिभोगं वा मित्रमिति । 'हिरण्यभोगं गतिमत्त्वात् सर्वव्ययप्रतीकारकरम् ' इत्याचार्याः ॥**

हिरण्योपकारकभूम्युपकारकमित्रयोर्मध्ये कतरत् प्रशस्ततरमिति विचारयति— हिरण्यभोगमित्यादि । हिरण्यभोगं हिरण्योपकारकं गतिमत्त्वात् नयनानयनयोग्यत्वात् सर्वव्ययप्रतीकारकरं सर्वविधव्ययोपयोगक्षमम्, अर्थात् भूमिभोगम् अगतिमत्त्वादताद्दशम् । ततश्च तदेव श्रेय इत्यर्थः । इत्याचार्या आहुः । श्रीमूला.

**नेति कौटल्यः । 'मित्रहिरण्ये हि भूमिलाभाद्भवतः ' इत्युक्तं पुरस्तात् । तस्मात् भूमिभोगं मित्रं श्रेय इति ॥**

मित्रहिरण्योभयसाधकत्वलक्षणं गुणातिशयं पूर्वोक्तं स्मारयन् तेन हेतुना भूम्युपकारकं मित्रमेव प्रशस्ततरमित्येवं स्वमतमाह— नेति कौटल्यो मित्रहिरण्ये हीत्यादि । तदेवं पुरुषभोगहिरण्यभोगभूमिभोगानां गुरुलघुभावो विचारितः । श्रीमूला.

**तुल्ये पुरुषभोगे विक्रमः क्लेशसहत्वमनुरागः सर्वबललाभो वा मित्रकुलाद्विशेषः ॥**

अथ पुरुषभोगेष्वेव कश्चित् भेदः पुरुषभोगभेदान्तरापेक्षया विशिष्ट इत्याह— तुल्ये पुरुषभोग इत्यादि । शौर्यम् आयासक्षमत्वं स्नेहो मौलभृतादिसर्वविधबलदायकत्वमित्येभिर्गुणैर्युक्तं पुरुषभोगमित्रमताद्दशात् पुरुषभोगमित्रवर्गात् प्रशस्ततरमित्यर्थः । श्रीमूला.

**तुल्ये हिरण्यभोगे प्रार्थितार्थता प्राभूत्यमल्पप्रयासता सातत्यं च विशेषः ॥**

हिरण्यभोगभेदस्य कस्यचित् तद्भोगभेदान्तरापेक्षया वैशिष्ट्यमाह— तुल्ये हिरण्यभोग इत्यादि । प्रार्थितार्थता— प्रार्थितः अर्थः यस्माल्लभ्यते स प्रार्थितार्थः, तत्त्वम्, प्राभूत्यं समृद्धधनत्वम्, अल्पप्रयासता अल्पेन प्रयासेन कार्यसाधकता, सातत्यं च नित्योपकारिता च विशेषः वैशिष्ट्यनिमित्तम् । एतैर्गुणैर्युक्तं हिरण्यभोगमित्रमतद्विधाद्धिरण्यभोगमित्रवर्गात्प्रशस्ततरमित्यर्थः । एवं पुरुषभोगहिरण्यभोगयोरवान्तरविशेषोऽभिहितः । भूमिभोगस्य तूपरिष्टादभिधास्यते । श्रीमूला.

मित्रप्रकाराः

***तत्रैतद्भवति—**

**नित्यं वश्यं लघूत्थानं पितृपैतामहं महत् ।**
**अद्वैध्यं चेति संपन्नं मित्रं षड्गुणमुच्यते ॥**
**ऋते यदर्थं प्रणयाद् रक्ष्यते यच्च रक्षति ।**
**पूर्वोपचितसंबन्धं तन्मित्रं नित्यमुच्यते ॥**
**सर्वचित्रमहाभोगं त्रिविधं वश्यमुच्यते ।**
**एकतोभोग्युभयतः सर्वतोभोगि चापरम् ॥**
**आदातृ वा दातृ अपि वा जीवत्यरिषु हिंसया ।**
**मित्रं नित्यमवश्यं तद् दुर्गाटव्यपसारि च ॥**

---

* एतेषां द्वादशानां श्लोकानां व्याख्यानं 'प्रकृतयः— मित्रम्' इत्यस्मिन् प्रकरणे (पृ. १२९४–१२९५) द्रष्टव्यम् ।

**अन्यतो विगृहीतं यल्लघुव्यसनमेव वा ।**
**संधत्ते चोपकाराय तन्मित्रं वश्यमध्रुवम् ॥**
**एकार्थानर्थसंबन्धमुपकार्यविकारि च ।**
**मित्रभावि भवत्येतन्मित्रमद्वैध्यमापदि ॥**
**मित्रभावाद् ध्रुवं मित्रं शत्रुसाधारणाच्चलम् ।**
**न कस्यचिदुदासीनं द्वयोरुभयभावि तत् ॥**
**विजिगीषोरमित्रं यन्मित्रमन्तर्धितां गतम् ।**
**उपकारे निविष्टं वाऽशक्तं वाऽनुपकारि तत् ॥**
**प्रियं परस्य वा रक्ष्यं पूज्यसंबन्धमेव वा ।**
**अनुगृह्णाति यन्मित्रं शत्रुसाधारणं हि तत् ॥**
**प्रकृष्टभौमं संतुष्टं बलवच्चालसं च यत् ।**
**उदासीनं भवत्येतद् व्यसनादवमानितम् ॥**
**अरेर्नेतुश्च यद् वृद्धिं दौर्बल्यादनुवर्तते ।**
**उभयस्याप्यविद्विष्टं विद्यादुभयभावि तत् ॥**
**कारणाकरणध्वस्तं कारणाकरणागतम् ।**
**यो मित्रं समपेक्षेत स मृत्युमुपगूहति ॥**

**क्षिप्रमल्पो लाभश्चिरान्महानिति वा । 'क्षिप्रमल्पो लाभः कार्यदेशकालसंवादकः श्रेयान्' इत्याचार्याः ॥**

अथ मित्रलाभप्रसङ्गागतमित्रविशेषकथनानन्तरं लाभसामान्यगतं कालस्वरूपप्रयुक्तं विशेषं चिन्तयति— क्षिप्रमल्पो लाभ इत्यादि । सद्योभावी स्वल्पो लाभो वा श्रेयान्, चिरभावी प्रभूतो लाभो वा श्रेयानिति संशय इत्यर्थः । आचार्यमतमाह— क्षिप्रमल्पो लाभः श्रेयान् । कथंभूतः ? कार्यदेशकालसंवादकः अनेन कार्येण अस्मिन् देशे अस्मिन् काले अयं लाभो भविष्यतीति समीक्षासंवादी । इत्याचार्याः । श्रीमूला.

**नेति कौटल्यः । चिरादविनिपाती बीजसधर्मा महान् लाभः श्रेयान् । विपर्यये पूर्वः ॥**

स्वमतमाह— नेति कौटल्य इत्यादि । चिरादपि भवन् निष्प्रतिबन्धभाविसिद्धितयाऽवधारितो धान्यबीजसमानधर्मा महान् लाभः श्रेयान् । विपर्यये महतो लाभस्य विनिपातित्वसंभावनायां पूर्वः आचार्योक्तः कल्पः इत्यर्थः । श्रीमूला.

**एवं दृष्ट्वा ध्रुवे लाभे लाभांशे च गुणोदयम् ।**
**स्वार्थसिद्धिपरो यायात् संहितः सामवायिकैः ॥**

प्रान्ते श्लोकमाह— एवमित्यादि । लाभे मित्रहिरण्यभूमिरूपे । गुणोदयं गुणविशेषोत्पत्तिम् । शेषं सुबोधम् । श्रीमूला.

भूमिलाभार्थः संधिः

**"त्वं चाहं च भूमिं लभावहे' इति भूमिसंधिः ॥**(१)

गताध्याये मित्रहिरण्यसंध्योर्निरूपितयोः क्रमप्राप्तः भूमिसंधिरिह निरूप्यते— त्वं चाहं चेत्यादि । भूमिसंधिरिति । स च समसंधिः, भूमेरेव द्वाभ्यां लाभात् । श्रीमूला.

**तयोर्यः प्रत्युपस्थितार्थः संपन्नां भूमिमवाप्नोति सोऽतिसंधत्ते ॥**

अतिसंधिमाह— तयोरिति । शत्रुविजिगीष्वोर्मध्ये यः प्रत्युपस्थितार्थः प्रत्युपस्थितः अचिरकरणीयतया संनिहितः अर्थः सेतुबन्धादिकर्मव्ययरूपो गुणवद्भृत्यपूजादिरूपो वा यस्य स तथाभूतः संपन्नां वक्ष्यमाणानित्यामित्रत्वादिभूमिसंपद्युक्तां भूमिम् अवाप्नोति सः अतिसंधत्ते विशेषलाभं भजते । श्रीमूला.

**तुल्ये संपन्नालाभे यो बलवन्तमाक्रम्य भूमिमवाप्नोति सोऽतिसंधत्ते । भूमिलाभं शत्रुकर्शनं प्रतापं च हि प्राप्नोति । दुर्बलात् भूमिलाभे सत्यं सौकर्यं भवति । दुर्बल एव च भूमिलाभः, तत्सामन्तश्च मित्रममित्रभावं गच्छति ॥**

संपन्नभूमिलाभेऽपि विशेषमाह— तुल्ये संपन्नालाभ इति । संपन्नाया भूमेर्लाभे द्वयोः समाने यः बलवन्तम् आक्रम्य परिभूय भूमिमवाप्नोति सः अतिसंधत्ते । अतिसंधानस्वरूपमाह— भूमीत्यादि । बलवत्सकाशाद्धि भूमिं गृह्णन् न केवलभूमिभाग्भवति, किंतु शत्रुकर्शनप्रतापलाभावपि नान्तरीयकतया प्राप्नोतीत्यर्थः । दुर्बलात् भूमिलाभे यथोक्तव्यतिरेकमाह— दुर्बलादित्यादि । अयमर्थः— दुर्बलात् भूमिलाभः सत्यं सुखेन साध्यः, किंतु

(१) कौ. ७।१०.

असौ दुर्बल एव निकृष्ट एव, दुर्बलहिंसाधिगतत्वात् । किंचास्य दुर्बलस्य सामन्तः शत्रुः स्वस्य भूम्येकान्तरमित्रभूतः स्वस्मिन् दुर्बलसाधुहिंसिन्यविश्वस्तो दुर्बलोच्छेदद्वारेणाऽऽत्मोच्छेदं शङ्कमानः शत्रूभूय दुर्बलस्य साहाय्यं दद्यादित्येवमनर्थानुबन्धश्च दुर्बलाद्भूमिलाभ इति ।

श्रीमूला.

**तुल्ये बलीयस्त्वे यः स्थिरं शत्रुमुत्पाट्य भूमिमवाप्नोति सोऽतिसंधत्ते । दुर्गावाप्तिर्हि स्वभूमिरक्षणममित्राटवीप्रतिषेधं च करोति ॥**

बलवत्सकाशाद्भूमिलाभे विशेषमाह— तुल्ये बलीयस्त्व इति । द्वयोः शत्र्वोर्बलवत्तायां समानायां यः स्थिरं दुर्गादिमत्त्वेन सुप्रतिष्ठितम् । ' स्थितम् ' इति पाठेऽप्ययमेवार्थः । शत्रुम् उत्पाट्य उच्छिद्य भूमिमवाप्नोति सः अतिसंधत्ते । तत्र हेतुमाह— दुर्गावाप्तिर्हीत्यादि । अयमर्थः— शत्रुसंबन्धि दुर्गं तावदवाप्यते, तेन स्वभूमिरक्षणं शत्रुप्रतिघात आटविकप्रतिघातश्च निर्वर्तते इति ।

श्रीमूला.

**चलामित्रात् भूमिलाभे शक्यसामन्ततो विशेषः । दुर्बलसामन्ता हि क्षिप्राप्यायनयोगक्षेमा भवति । विपरीता बलवत्सामन्ता कोशदण्डावच्छेदनी च भूमिर्भवति ॥**

चलामित्राद्भूमिलाभे विशेषमाह— चलामित्रादिति । अस्थिरात् दुर्गादिरहितादमित्रात् भूमिलाभे । तुल्ये इत्यनुवर्तते । शक्यसामन्ततो विशेषः दुर्बलसामन्तत्वतो विशेषः भूमेर्दुर्बलसामन्तत्वकृतो विशेषलाभः । प्रबलसामन्ताया भूमेर्ग्राहकमपेक्ष्य दुर्बलसामन्ताया भूमेर्ग्राहको विशिष्यते इत्यर्थः । कुत इत्याह— दुर्बलसामन्ता हीति । तथाभूता हि भूमिः क्षिप्राप्यायनयोगक्षेमा— अलब्धलाभो योगः, लब्धपालनं क्षेमः, तौ क्षिप्राप्यायनौ शीघ्रवर्धनौ यस्याः सा तथाभूता भवति । बलवत्सामन्ता प्रबलशत्रुका भूमिः विपरीता चिराप्यायनयोगक्षेमा कोशदण्डावच्छेदनी च कोशं दण्डं च अवच्छिनत्ति सामन्तबाधपरिहारार्थविनियोगवशात् क्षपयतीति तथाभूता च भवति । श्रीमूला.

**संपन्ना नित्यामित्रा मन्दगुणा वा भूमिरनित्यामित्रेति । ' संपन्ना नित्यामित्रा श्रेयसी भूमिः । संपन्ना हि कोशदण्डौ संपादयति । तौ चामित्रप्रतिघातकौ ' इत्याचार्याः ॥**

संपन्नभूम्यरियुक्तभूम्योः कतरस्याः श्रेष्ठत्वमिति विचारयति— संपन्नेत्यादि । भूमिसंपद्युक्ता यद्यपि तथाऽपि नित्यामित्रा काचिद्भूमिः । सा वा श्रेयसी, अल्पगुणयुक्ता कादाचित्कामित्रा भूमिर्वा श्रेयसीति विचारे आचार्यमतमाह— संपन्ना नित्यामित्रा श्रेयसीत्यादि । तौ संपन्नभूमिसंपादितौ कोशदण्डौ । नित्यामित्रत्वमनुपदं वक्ष्यते ।

श्रीमूला.

**नेति कौटल्यः । नित्यामित्रालाभे भूयाञ्छत्रुलाभो भवति । नित्यश्च शत्रुरुपकृते चापकृते च शत्रुरेव भवति । अनित्यस्तु शत्रुरुपकारादनपकाराद्वा शाम्यति । यस्या हि भूमेर्बहुदुर्गाश्चोरगणैर्म्लेच्छाटवीभिर्वा नित्याविरहिताः प्रत्यन्ताः सा नित्यामित्रा । विपर्यये त्वनित्यामित्रेति ॥**

स्वमतमाह— नेति कौटल्य इति । नित्यामित्रालाभ इति । नित्यामित्राया लाभे भूयान् बहुतरः शत्रुलाभो भवति । नित्यश्च शत्रुः उपकृते चापकृते च उपकारे अपकारे च कृते शत्रुरेव भवति, न तु शत्रुत्वं सहजं जातुचित् जहाति । अतश्चामित्रवती भूमिर्नोपादेयेत्यर्थः । अनित्यशत्रुकाया भूमेरुपादेयत्वे कारणमाह— अनित्यस्त्वित्यादि । शाम्यति शान्तो भवति, न त्वपकरोतीत्यर्थः । नित्यामित्रानित्यामित्रत्वे लक्षयति— यस्या हीत्यादि । यस्याः भूमेः प्रत्यन्ताः विषयान्ताः बहुदुर्गाः वध्यापसरणस्थानबहुलाः, चोरगणैः म्लेच्छाटवीभिर्वा नित्याविरहिताः नित्यसंयुक्ताः, सा भूमिः नित्यामित्रा । विपर्यये तु अनित्यामित्रा । श्रीमूला.

**अल्पा प्रत्यासन्ना महती व्यवहिता वा भूमिरिति । अल्पा प्रत्यासन्ना श्रेयसी । सुखा हि प्राप्तुं पालयितुमभिसारयितुं च भवति । विपरीता व्यवहिता ॥**

लभ्यभूमेः स्वभूम्यासन्नत्वमहत्त्वयोः किं श्रेय इति विचारयति— अल्पेत्यादि । अल्पा प्रत्यासन्ना श्रेयसीत्यत्र

हेतुमाह— सुखा हीत्यादि। गन्तुं रक्षितुं विपदवसरेऽपसरणस्थानीकर्तुं चानायासशक्येत्यर्थः। व्यवहिता विप्रकृष्टा विपरीता प्राप्त्यादौ न सुखा। श्रीमूला.

**व्यवहिताव्यवहितयोरपि दण्डधारणाऽऽत्मधारणा वा भूमिरिति। आत्मधारणा श्रेयसी। सा हि स्वसमुत्थाभ्यां कोशदण्डाभ्यां धार्यते। विपरीता दण्डधारणा दण्डस्थानमिति॥**

विप्रकृष्टप्रत्यासन्नयोरपि विषये दण्डधारणा वा भूमिः श्रेयसी, आत्मधारणा वेति विचारो भवतीत्याह— व्यवहिताव्यवहितयोरपीत्यादि। निर्णयमाह— आत्मधारणा श्रेयसीति। कुत इत्याह— सा हीत्यादि। आत्मोत्थिताभ्यां कोशदण्डाभ्यामात्मनो धारणं भरणं यस्याः सा आत्मधारणा इत्यन्वितार्था सेत्यर्थः। विपरीतेत्यादि। दण्डधारणा विपरीता स्वसमुत्थाभ्यां कोशदण्डाभ्यां न धार्यते, किं तु परसमुत्थाभ्यामेव कोशदण्डाभ्यां धार्यते। अत एव दण्डस्य परसमुत्थस्य स्वरक्षणार्थं वसतः केवलस्थानभूतेत्येतावता दण्डधारणेत्युच्यते इत्यर्थः। श्रीमूला.

**बालिशात्प्राज्ञाद्वा भूमिलाभ इति। बालिशाद् भूमिलाभः श्रेयान्। सुप्राप्यानुपाल्या हि भवत्यप्रत्यादेया च। विपरीता प्राज्ञादनुरक्तेति॥**

अरेर्मूर्खाद्वा भवन् भूमिलाभः श्रेयान्, पण्डिताद्वा भवन् इति विमर्शे स मूर्खादेव भवन् श्रेयान्। यतो भूमिर्मूर्खात् सुखेन प्राप्तुं चानुपालयितुं च शक्या अनाशङ्कनीयप्रत्यादाना च। पण्डितात् तु भूमिरनुरक्तप्रकृतितया न सुखप्राप्या, प्राप्ताऽपि न सुखरक्ष्या, रक्ष्यमाणाऽपि नित्यशङ्क्यमानप्रत्यादानेति विपरीतेत्याह— बालिशात् प्राज्ञाद्वेत्यादि। श्रीमूला.

**पीडनीयोच्छेदनीययोरुच्छेदनीयाद् भूमिलाभः श्रेयान्। उच्छेदनीयो ह्यनपाश्रयो दुर्बलापाश्रयो वाऽभियुक्तः कोशदण्डावादायापसर्तुकामः प्रकृतिभिस्त्यज्यते। न पीडनीयो दुर्गमित्रप्रतिस्तब्ध इति॥**

अरिर्हि कश्चित् शस्त्रादिद्वारेण पीडनीयः कश्चिच स्थानीयादुच्छेत्तव्यः। तयोर्मध्ये कतरस्मात् भूमिलाभः श्रेयानिति विचारे उच्छेत्तव्यात् भूमिलाभः श्रेयान्। कुतः? यस्मात् स दुर्गमित्रापाश्रयरहितः दुर्बलदुर्गमित्राश्रयो वा सन् कोशदण्डावादाय स्थानीयादपसर्तुमेव यतते इति तं प्रकृतयः परित्यजन्ति। पीडनीयस्तु अपसर्तुमिच्छन्नपि दुर्गमित्राभ्यां वारयित्वा स्थापितो भवतीत्यतस्तं प्रकृतयो न परित्यजन्तीत्याह— पीडनीयोच्छेदनीययोरित्यादि। श्रीमूला.

**दुर्गप्रतिस्तब्धयोरपि स्थलनदीदुर्गीयाभ्यां स्थलदुर्गीयाद् भूमिलाभः श्रेयान्। स्थलीयं हि सुरोधावमर्दावस्कन्दमनिःस्राविशत्रु च। नदीदुर्गं तु द्विगुणक्लेशकरमुदकं च पातव्यं वृत्तिकरं चामित्रस्य॥**

दुर्गकृतरक्षयोर्द्वयोर्मध्ये स्थलदुर्गीयः एकः, नदीदुर्गीयोऽपरः। तयोः सकाशात् भूमिलाभश्रेयस्त्वविचारे स्थलदुर्गीयात् भूमिलाभः श्रेयान्। कस्मात्? स्थलभवं हि दुर्गं सुखेन रोद्धुम् अवमर्दयितुम् अवस्कन्दितुं च शक्यं शत्रुनिःसरणसौकर्यप्रदायकं च सुखोच्छेद्यमिति ततो भूमिः सुखलभ्या। नदीदुर्गं तु द्विगुणक्लेशसाधनीयं पानार्हजलवत्तया जलाधीनधान्यफलवृक्षलतादिसंपद्योगेन च शत्रोः सुखोपजीव्यं च दुरुच्छेदमिति ततो भूमिर्न सुखलभ्येत्याह— दुर्गप्रतिस्तब्धयोरपीत्यादि। श्रीमूला.

**नदीपर्वतदुर्गीयाभ्यां नदीदुर्गीयाद् भूमिलाभः श्रेयान्। नदीदुर्गं हि हस्तिस्तम्भसंक्रमसेतुबन्धनौभिः साध्यमनित्यगाम्भीर्यमवस्राव्युदकं च, पार्वतं तु स्वारक्षं दुरुपरोधि कृच्छ्रारोहणं भग्ने चैकस्मिन् न सर्ववधः, शिलावृक्षप्रमोक्षश्च महापकारिणाम्॥**

नदीदुर्गीयपर्वतदुर्गीयाभ्यां शत्रुभ्यां भूमिलाभश्रेयस्त्वविचारणायां नदीदुर्गीयात् भूमिलाभः श्रेयान्। कुतः? नदीदुर्गं हि गजैर्दारुस्तम्भारब्धैः संक्रमैः सेतुबन्धैर्नौभिश्च तार्यम्, अस्थिरगाम्भीर्यं तटभेदापसृतजलं च सुखसाध्यं भवति, पार्वतं तु दुर्गं सुष्ठुशिलाबन्धादिकृतपरिरक्षं दुष्करोपरोधम् अशक्यारोहणं भवति, किंचास्मिन्नेकेनास्त्रेण एक एव हन्तुं शक्यः, न बहवः, महापकारिणामुपरि

च शिलावृक्षादेरधित्यकातः पातनेन प्रतीकारः सुकरः इति तत् कृच्छ्रसाधनीयं भवतीत्याह— नदीपर्वतदुर्गीयाभ्यामित्यादि । श्रीमूला.

**निम्नस्थलयोधिभ्यो निम्नयोधिभ्यो भूलाभः श्रेयान् । निम्नयोधिनो ह्युपरुद्धदेशकालाः, स्थलयोधिनस्तु सर्वदेशकालयोधिनः ॥**

निम्ने स्थित्वा नावाद्यारूढयोद्धारः केचित्, स्थलयोधिनः केचित् । तेभ्य उभयेभ्यो भूमिलाभश्रेयस्त्वचिन्तायां निम्नयोधिभ्यो भूमिलाभ एव श्रेयान् । कुतः ? यस्मात् निम्नयोधिनो हि अवच्छिन्नदेशकालयोधित्वात् सुसाधाः, इतरे तु अनवच्छिन्नदेशकालयोधित्वात् दुःसाधा इत्याह— निम्नस्थलयोधिभ्य इत्यादि ।

श्रीमूला.

**खनकाकाशयोधिभ्यः खनकेभ्यो भूमिलाभः श्रेयान् । खनका हि खातेन शस्त्रेण चोभयथा युध्यन्ते, शस्त्रेणैवाऽऽकाशयोधिनः ॥**

भूमिं खात्वा तत्र स्थिता ये युध्यन्ते ते खनकयोधिनः । अनावृते अवकाशे स्थित्वा युध्यमानाः आकाशयोधिनः । तेभ्य उभयेभ्यो भूमिलाभश्रेयस्त्वसंप्रधारणायां खनकयोधिभ्यो भूलाभः श्रेयान्, कस्मात् ? ते हि खातशस्त्रोभयसापेक्षतया उपरुद्धदेशकालयोधिनः खातालाभावसरे सुखेन साध्या भवन्ति, आकाशयोधिनस्तु देशकालोपरोधाभावात् सदा सर्वत्र युध्यन्ते इति दुःसाधा इत्याह— खनकाकाशयोधिभ्य इत्यादि ।

श्रीमूला.

**एवंविधेभ्यः पृथिवीं लभमानोऽर्थशास्त्रवित् । संहितेभ्यः परेभ्यश्च विशेषमधिगच्छति ॥**

अध्यायं श्लोकेनोपसंहरति— एवंविधेभ्य इति । 'यो बलवन्तमाक्रम्य भूमिमवाप्नोति सोऽतिसंधत्ते' इत्यादिनोक्तप्रकारेभ्यो बलवदादिभ्यः खनकान्तेभ्यः पृथिवीं लभमानः अर्थशास्त्रवित् संहितेभ्यः पणितेभ्यः सामवायिकेभ्यः परेभ्यश्च शत्रुभ्यश्च विशेषम् उत्कर्षम् अधिगच्छति, अर्थात् विजिगीषुः । श्रीमूला.

जनपदनिवेशरहितभूमिसंबद्धः संधिः

**"त्वं चाहं च शून्यं निवेशयावहे' इत्यनवसितसंधिः ॥**

भूमेः पणितव्याया विशेषानभिधाय शून्यनिवेशनरूपे तदीयकर्मणि अनवसितसंधयः इह निरूप्यन्ते । शून्यनिवेशनं जनपदखनिद्रव्यवनहस्तिवनादिनिवेशनविशेषरूपतया वस्तुतः पर्यवस्यदपि सामान्यरूपेणैवेहोल्लिख्यमानमनध्यवसितविशेषरूपत्वादनवसितं कर्मेति तद्विषयाः संधयोऽनवसितसंधय उच्यन्ते । अत एवास्मात् अवसितविषयस्य कर्मसंधेर्वक्ष्यमाणस्य भेदो द्रष्टव्यः ।

त्वं चाहं चेत्यादि । शून्यं निवेशयावहे जनपदादिनिवेशनेनाशून्यं कुर्वहे । अनवसितसंधिरिति । समसंधिश्चायम्, उभयोः समानत्वात् । श्रीमूला.

**तयोर्यः प्रत्युपस्थितार्थो यथोक्तगुणां भूमिं निवेशयति सोऽतिसंधत्ते ॥**

तत्रातिसंधिमाह— तयोरित्यादि । संहितयोर्मध्ये यः संनिहितसामग्रीको जनपदनिवेशोक्तगुणसंपन्नां भूमिं निवेशयति सः अतिसंधत्ते विशेषलाभं भजते । अतथाविधभूमिनिवेशकापेक्षयेत्यर्थः । श्रीमूला.

**तत्रापि स्थलमौदकं वेति । महतः स्थलादल्पमौदकं श्रेयः, सातत्यादवस्थितत्वाच्च फलानाम् ॥**

यथोक्तगुणायामपि विशेषं चिन्तयति— तत्रापि स्थलमौदकं वेति । स्थलं वृष्टिमात्रलभ्यजलम्, औदकं सदाजलसरोयुतं नदीयुक्तं च । विपुलात् स्थलात् अल्पमौदकं प्रशस्ततरम् । कस्मात् ? सर्वकालोत्पाद्यफलोदयत्वात् सुनिश्चितफलोत्पत्तिकत्वाच्चेत्याह— महतः स्थलादित्यादि ।

श्रीमूला.

**स्थलयोरपि प्रभूतपूर्वापरसस्यमल्पवर्षपाकमसक्तारम्भं श्रेयः ॥**

स्थलयोरपि मध्ये प्राज्यशारदिकग्रैष्मिकलक्षणपूर्वापरसस्यप्रसवम् अल्पवृष्टिनिष्पाद्यफलं दन्तुरत्वशर्करिलत्वादिरहिततया निरुपरोधकर्षणारम्भं स्थलं श्रेय इत्याह— स्थलयोरपीत्यादि । श्रीमूला.

---

(१) कौ. ७।११.

**औदकयोरपि धान्यवापमधान्यवापाच्छ्रेयः । तयोरल्पबहुत्वे धान्यकान्तादल्पान्महदधान्यकान्तं श्रेयः । महत्यवकाशे हि स्थाल्याश्चानूप्याश्चौषधयो भवन्ति । दुर्गादीनि च कर्माणि प्राभूत्येन क्रियन्ते । कृत्रिमा हि भूमिगुणाः ॥**

औदकत्वेऽपि विशेषमवधारयति– औदकयोरपीति । तयोरपि मध्ये धान्यवापं धान्यानि व्रीहिशाल्यादीनि उप्यन्ते अत्रेति तथाभूतम् अधान्यवापात् श्रेयः । तयोरिति । धान्यवापाधान्यवापयोरौदकयोः अल्पबहुत्वे अल्पत्वे बहुत्वे च, विमृश्यमाने इति शेषः, धान्यकान्तात् धान्येन कमनीयात् धान्यवापादित्यर्थः, अल्पात् महत् अधान्यकान्तं श्रेयः । कस्मात् ? हि यतः महति अवकाशे स्थाल्याः स्थलजाः आनूप्याः जलप्रायदेशजाः षष्टिकादयश्च ओषधयो भवन्ति । महत्त्वे गुणान्तरमप्याह– दुर्गादीनि चेत्यादि । प्राभूत्येन प्राचुर्येण । धान्यकान्तत्वमपि तत्र संपादयितुं शक्यम्, भूमिगुणानां क्रियासाध्यत्वादित्यभिप्रायेणाऽऽह– कृत्रिमा हि भूमिगुणा इति । श्रीमूला.

**खनिधान्यभोगयोः खनिभोगः कोशकरः, धान्यभोगः कोशकोष्ठागारकरः । धान्यमूला हि दुर्गादीनां कर्मणामारम्भाः । महाविषयविक्रयो वा खनिभोगः श्रेयान् ॥**

खनिधान्यभोगयोरिति । विशेषो विमृश्यते इति शेषः । खनिभोगः कोशकरः कोशमात्रहेतुः, धान्यभोगः कोशकोष्ठागारकरः कोशस्य कोष्ठागारस्य च धान्यनिधानस्थानभूतस्य कारकः । अतश्च धान्यभोगः श्रेयानित्यर्थः । दुर्गसेतुवणिक्पथादिकर्मान्तरोपयोगी च धान्यभोग इत्यभिप्रायेणाऽऽह– धान्यमूला हीत्यादि । धान्यभोगं खनिभोगविशेषेण विकल्पयति– महाविषयविक्रय इति । महान्तः क्रेतृबहुत्वेन बहवः विषयविक्रयाः खन्युत्पन्नानां भोगविषयभूतानां लवणजातीयानां विक्रयाः यस्मिन् स तथाभूतः खनिभोगो वा श्रेयान् । श्रीमूला.

**'द्रव्यहस्तिवनभोगयोर्द्रव्यवनभोगः सर्वकर्मणां योनिः प्रभूतनिधानक्षमश्च । विपरीतो हस्तिवनभोगः' इत्याचार्याः ॥**

द्रव्यहस्तिवनभोगयोरिति । तयोर्विशेषचिन्तायां द्रव्यवनभोगः सर्वकर्मणां योनिः साधकः प्रभूतनिधानक्षमः प्रचुरसंचयार्हश्च । हस्तिवनभोगः विपरीतः अतथाभूतः । ततश्च स एव हस्तिवनभोगात् श्रेयानित्यर्थः । इत्याचार्याः । श्रीमूला.

**नेति कौटल्यः । शक्यं द्रव्यवनमनेकमनेकस्यां भूमौ वापयितुं न हस्तिवनम्, हस्तिप्रधानो हि परानीकवध इति ॥**

स्वमतमाह– नेति कौटल्य इत्यादि । द्रव्यवनमनेकासु भूमिष्वनेकप्रकारमुत्पादयितुं शक्यम्, न तु हस्तिवनम्, हस्तिनां क्वचित् क्वचिदेवोत्पत्तेः । मुख्ये च शत्रुसैन्यवधलक्षणे उपकारे हस्ती प्रधानं साधनमित्यतो हस्तिवनभोग एव श्रेयान् द्रव्यवनभोगादित्यर्थः । श्रीमूला.

**वारिस्थलपथभोगयोरनित्यो वारिपथभोगः, नित्यः स्थलपथभोग इति ॥**

वारिपथभोगस्थलपथभोगयोः, अनित्ययोरित्यार्थम् । अनित्यः कादाचित्कः वारिपथभोगः, श्रेयानिति शेषः । तयोरेव नित्ययोर्मध्ये श्रेयांसमाह– नित्यः स्थलपथभोग इति । श्रीमूला.

**भिन्नमनुष्या श्रेणीमनुष्या वा भूमिरिति । भिन्नमनुष्या श्रेयसी । भिन्नमनुष्या भोग्या भवत्यनुपजाप्या चान्येषाम् । अनापत्सहा तु । विपरीता श्रेणीमनुष्या कोपे महादोषा ॥**

असंहतमनुष्यायाः संहतमनुष्यायाश्चेत्यनयोर्भूम्योर्मध्ये का श्रेयसीति विचारे पूर्वा श्रेयसीत्याह– भिन्नमनुष्या श्रेणीमनुष्या वेत्यादि । श्रेयस्त्वे कारणमाह– भिन्नमनुष्येति । सा भोग्या स्वविधेया अन्येषाम् अनुपजाप्या च अभेद्या च भवति । सर्वेष्वसंहतेषु कः कमुपजपिष्यतीति भावः । अनापत्सहा तु किंतु सा आपदं न सहते । आपत्समये पर्यवस्थापकाभावेन क्लिश्यते इत्यर्थः ।

श्रेणीमनुष्या श्रेणी संहतत्वं प्राप्ताः मनुष्याः यस्यां सा तथाभूता भूमिः विपरीता अविधेया अन्योपजाप्या आपत्सहा च । कोपे महादोषेति । सा चेत् कुपिता राजानमप्युच्छिन्द्यादित्यर्थः । श्रीमूला.

**तस्यां चातुर्वर्ण्याभिनिवेशे सर्वभोगसहत्वादवरवर्णप्राया श्रेयसी । बाहुल्यात् ध्रुवत्वाच्च कृष्याः कर्षणवती । कृष्याश्चान्येषां चाऽऽरम्भाणां प्रयोजकत्वात् गोरक्षकवती । पण्यनिचयर्णानुग्रहादाढ्यवणिग्वती ॥**

भूमौ चातुर्वर्ण्याभिनिवेशे तद्विषयश्रेयस्त्वविचारे सर्वभोगसहत्वात् कर्षणभारवहनादिसर्वकर्मविनियोगक्षमत्वात् अवरवर्णप्राया अवरवर्णग्रहणस्योपलक्षणत्वात् शूद्रगोपालकादिबहुला भूमिः श्रेयसी । तस्याश्च कर्षणवत्त्वे गोरक्षकवत्त्वे वणिग्वत्त्वे च प्राशस्त्यं सहेतुकं क्रमेणाऽऽह— बाहुल्यादिति । कृष्याः बाहुल्यात् सार्वत्रिकत्वेन प्रचुरत्वात् ध्रुवत्वाच्च निश्चितफलोदयत्वाच्च कर्षणवती भूमिः श्रेयसी । कृष्याः कृषिव्यापारस्य अन्येषां भारवहनादिकर्मणां च गावो गोपालाश्च प्रयोजका इत्यतो गोरक्षकवती भूमिः श्रेयसीत्याह— कृष्या इत्यादि । पण्यनिचयर्णानुग्रहादिति । पण्यनिचयेन पणनीयधान्यादिसंचयेन ऋणेन वृद्ध्यर्थद्रव्यदानेन च अनुग्रहात् वणिग्भ्यो धनिकेभ्यश्चोपकारलाभात् आढ्यवणिग्वती धनिकवाणिजवती भूमिः श्रेयसी । श्रीमूला.

**भूमिगुणानामपाश्रयः श्रेयान् ॥**

अनित्यामित्रत्वसंपन्नत्वादिषु भूमेर्गुणेषु मध्ये कः श्रेयानित्याह— भूमिगुणानामिति । तेषां मध्ये अपाश्रयः श्रेयान् रक्षा श्रेयसी । श्रीमूला.

**दुर्गापाश्रया पुरुषापाश्रया वा भूमिरिति । पुरुषापाश्रया श्रेयसी । पुरुषवद्धि राज्यम् । अपुरुषा गौर्वन्ध्येव किं दुहीत ॥**

अपाश्रयेषु विशेषं चिन्तयति— दुर्गापाश्रयेत्यादि । पुरुषारक्षायाः श्रेयस्त्वे कारणमाह— पुरुषवद्धीत्यादि । पुरुषवत् बहुलपुरुषयोगि । किं दुहीत ? आरम्भकपुरुषाभावान्न किमपि फलं प्रसुवीत । श्रीमूला.

**महाक्षयव्ययनिवेशां तु भूमिमवाप्तुकामः पूर्वमेव क्रेतारं पणेत । दुर्बलमराजबीजिनं निरुत्साहमपक्षमन्यायवृत्तिं व्यसनिनं दैवप्रमाणं यत्किंचनकारिणं वा ॥**

भूमेर्निवेशने शत्रुविजिगीष्वोरतिसंधिभेदमाह— महाक्षयव्ययनिवेशां त्विति । महता युग्यपुरुषाद्यपचयेन धनव्ययेन च साधनीयजनपदादिनिवेशनां भूमिम् अवाप्तुकामः पूर्वमेव अवाप्तेः प्रागेव क्रेतारं पणेत । कथंभूतम् ? दुर्बलादीनामष्टानामन्यतमम् । ते हि महता यत्नेन क्षयव्ययादिना भूमिं निवेश्य पश्चादात्महस्तमेवातिक्षयव्ययावसन्नाः प्रापयेयुरिति तत्पणनोपदेशः । स चायं विजिगीषोर्दुर्बलादिप्रयत्नसंपादितनिवेशाया भूमेर्भोगो महाक्षयव्ययस्वप्रयत्ननिवेशितभूमेः शत्रोर्भूमिभोगात् विशेषलाभो भवतीत्यतिसंधिर्वेदितव्यः । श्रीमूला.

**महाक्षयव्ययनिवेशायां हि भूमौ दुर्बलो राजबीजी निविष्टः सगन्धाभिः प्रकृतिभिः सह क्षयव्ययेनावसीदति ॥**

दुर्बलादयः पणिताः कथमवसीदन्ति ? तत्राऽऽह— महाक्षयव्ययनिवेशायां हीत्यादि । राजबीजी राजवंश्यः । निविष्टः कृतनिवेशनः । सगन्धाभिः समानजातीयाभिः साह्यदायिनीभिः । श्रीमूला.

**बलवानराजबीजी क्षयव्ययभयादसगन्धाभिः प्रकृतिभिस्त्यज्यते ॥**

बलवन्तमप्यराजबीजिनं सगन्धत्वाभावात् प्रकृतयः साहाय्यदानेन नानुगृह्णन्ति, किंतु क्षयव्ययभयात् परित्यजन्तीत्याह— बलवानित्यादि । श्रीमूला.

**निरुत्साहस्तु दण्डवानपि दण्डस्याप्रणेता सदण्डः क्षयव्ययेनावभज्यते ॥**

निरुत्साहं प्रत्याह— निरुत्साहस्त्विति । सः दण्डवानपि बलवानपि दण्डस्याप्रणेता दण्डं यथास्थानमविनियोक्ता सदण्डः दण्डेन सहेत्यर्थः, क्षयव्ययेन अवभज्यते भग्नकार्यो भवति । श्रीमूला.

**कोशवानप्यपक्षः क्षयव्ययानुग्रहहीनत्वान्न कुतश्चित् प्राप्नोति ॥**

मित्ररहितः कोशवानपि क्षयव्ययोपकारालाभान्न कुतोऽपि सिद्धिमेतीत्याह— कोशवानपीत्यादि । श्रीमूला.

**अन्यायवृत्तिर्निविष्टमप्युत्थापयेत्, स कथमनिविष्टं निवेशयेत् ॥**

अन्यायवृत्तिः प्राक्कृतनिवेशमप्युद्वासयेत् अन्यायशीलत्वेनैव हेतुना । कथं तस्मादनिविष्टनवनिवेशप्रत्याशेत्याह— अन्यायवृत्तिरित्यादि । श्रीमूला.

**तेन व्यसनी व्याख्यातः ॥**

व्यसनिनि व्यसनित्वादेवानिविष्टनिवेशनमसंभावनीयमित्यर्थः । श्रीमूला.

**दैवप्रमाणो मानुषहीनो निरारम्भो विपन्नकर्मारम्भो वाऽवसीदति ॥**

दैवप्रमाणः यद्भविष्यः । मानुषहीनः पुरुषकाररहितः । श्रीमूला.

**यत्किंचनकारी न किंचिदासादयति । स चैषां पापिष्ठतमो भवति ॥**

'इदमेवं कर्तव्यम्, एवं कृते इदं सेत्स्यति' इत्यादिविमर्शविकलं यत्किंचित् कुर्वाणो यत्किंचनकारी । एषां दुर्बलादीनां मध्ये । श्रीमूला.

**'यत्किंचिदारभमाणो हि विजिगीषोः कदाचिच्छिद्रमासादयेत्' इत्याचार्याः ॥**

यत्किंचनकारिण्यपि कमपि गुणमाचार्यमतेनाऽऽह— यत्किंचिदित्यादि । अयमभिप्रायः— यत्किंचिदारभमाणो हि शत्रुर्विजिगीषुणा 'मूर्खोऽयम्' इत्यवज्ञायमानस्तस्याऽऽत्मानं प्रत्यप्रतिजागरचेष्टितस्य कदाचित् प्रहारस्थानमुपलभेतेति । श्रीमूला.

**'यथा छिद्रं तथा विनाशमप्यासादयेत्' इति कौटल्यः ॥**

स्वमतमाह— यथा छिद्रमिति । विनाशमप्यासादयेदिति । आत्मच्छिद्रस्य विजिगीषुणा बहुशो लाभादिति भावः । श्रीमूला.

**तेषामलाभे यथा पार्ष्णिग्राहोपग्रहे वक्ष्यामस्तथा भूमिमवस्थापयेत् । इत्यभिहितसंधिः ॥**

उक्तदुर्बलाद्यलाभे पार्ष्णिग्राहचिन्तावक्ष्यमाणरीत्यातिसंधिरेषितव्य इत्याह— तेषामलाभ इत्यादि । पार्ष्णिग्राहयोर्हि मिथोऽतिसंधिः शङ्कितानर्थपरिहारादिलक्षणस्तत्रोक्तः । तथाविधं यं कमपि परापेक्षया विशेषलाभं पुरस्कृत्य भूमिं निवेशयेदित्यर्थः । इत्यभिहितसंधिरिति । अभिहितः बद्धः भूमिदानादाननिर्वृत्तत्वादविचाल्यः संधिरित्यर्थः । श्रीमूला.

**गुणवतीमादेयां वा भूमिं बलवता क्रयेण याचितः संधिमवस्थाप्य दद्यात् । इत्यनिभृतसंधिः ॥**

अतथाभूतं संधिमाह— गुणवतीमिति । संपन्नत्वानित्यामित्रत्वादिगुणयुक्ताम् । अन्याशक्यभोगतायामाह— आदेयां वा । क्रेतुरुपेक्षया कालान्तरे पुनः प्रत्यादानयोग्यां वा भूमिं बलवता प्रबलेन सामन्तेन क्रयेण याचितः 'मह्यं विक्रीणीष्व' इति प्रार्थितः संधिम् अवस्थाप्य 'समयेषु मामनुगृहाण' इत्येवं सामान्यतः संधिं स्थापयित्वा दद्यात् विक्रीणीत । इत्यनिभृतसंधिरिति । इत्ययम् अविश्वस्तसंधिः, दुर्बलं प्रति प्रबलस्य समयलङ्घनसंभवादिति भावः । श्रीमूला.

**समेन वा याचितः कारणमवेक्ष्य दद्यात्— 'प्रत्यादेया मे भूमिर्वश्या वा, अनया प्रतिबद्धः परो मे वश्यो भविष्यति, भूमिविक्रयाद्वा मित्रहिरण्यलाभः कार्यसामर्थ्यकरो मे भविष्यति' इति ॥**

समेन यथोक्तभूमिप्रार्थने विधिमाह— समेन वा याचित इत्यादि । यथोक्तां भूमिं समेन प्रार्थितः तस्याः शक्यप्रत्यादानतां वा आत्मोपभोग्यतां वा तत्संबन्धात् परस्याऽऽत्मवशे वर्तिष्यमाणतां वा तद्विक्रयवशान्मित्रलाभहिरण्यलाभयोः कार्यसाधनक्षमयोर्भविष्यत्तां वा कारणं विमृश्य तदवधारणे विक्रीणीयादित्यर्थः । श्रीमूला.

**तेन हीनः क्रेता व्याख्यातः ॥**

समविधिं हीनेऽप्यतिदिशति— तेनेत्यादि । श्रीमूला.

**एवं मित्रं हिरण्यं च सजनामजनां च गाम् ।**
**लभमानोऽतिसंधत्ते शास्त्रवित्सामवायिकान् ॥**

उक्तेन प्रकारेण मित्रं नित्यत्ववश्यत्वादिविशेषयुक्तं हिरण्यं च प्रार्थितार्थत्वादिभेदभिन्नं सजनाम् अजनाम् । एतच्च संपन्नत्वादेरुपलक्षणम् । गां च भूमिं च लभमानः शास्त्रवित् अर्थशास्त्रज्ञः सामवायिकान् अतिसंधत्ते सामवायिकान्तरापेक्षया विशेषलाभं प्राप्नोति ।

श्रीमूला.

दुर्गसेतुबन्धवनखनिविविधपथकर्मसु संधिविवेकः

**"त्वं चाहं च दुर्गं कारयावहे' इति कर्मसंधिः ॥**

अथ कर्मसंधिं निरूपयिष्यंस्तल्लक्षणमाह— त्वं चाहं चेत्यादि । दुर्गग्रहणं सेतुबन्धादेरप्युपलक्षणम् । 'दुर्गाद्यन्यतममावां कारयावहे' इति संविदा क्रियमाणः संधिः कर्मसंधिः ।

श्रीमूला.

**तयोर्यो दैवकृतमविषह्यमल्पव्ययारम्भं दुर्गं कारयति सोऽतिसंधत्ते ॥**

तत्र दुर्गसंधावतिसंधिमाह— तयोर्य इत्यादि । सहितयोर्मध्ये यः दैवकृतं स्वभावविषमस्थलम् अत एव अविषह्यं शत्रुदुर्विषहम् अल्पव्ययारम्भम् अल्पव्ययसाध्यनिष्पादं दुर्गं कारयति सः अतिसंधत्ते अर्थादुक्तविपरीतदुर्गकारकमन्यं लाभतोऽतिशेते ।

श्रीमूला.

**तत्रापि स्थलनदीपर्वतदुर्गाणामुत्तरोत्तरं श्रेयः ॥**

दैवकृतदुर्गभेदेष्वपि श्रेयस्त्वमवधारयति— तत्रापीत्यादि ।

श्रीमूला.

**सेतुबन्धयोरप्याहार्योदकात् सहोदकः श्रेयान् । सहोदकयोरपि प्रभूतवापस्थानः श्रेयान् ॥**

सेतुबन्धतारतम्ये श्रेयस्त्वमाह— सेतुबन्धयोरपीत्यादि । तयोरपि आहार्योदकात् वर्षासु प्रयत्नविधारणीयजलात् सहोदकः सहजतोयः श्रेयान् । सहोदकयोरपि मध्ये प्रभूतवापस्थानः प्रचुरसस्यवापयोग्यप्रदेशोपेतः सहोदकः श्रेयान् ।

श्रीमूला.

**द्रव्यवनयोरपि यो महत् सारवद्द्रव्याटवीक विषयान्ते नदीमातृकं द्रव्यवनं छेदयति सोऽतिसंधत्ते । नदीमातृकं हि स्वाजीवमपाश्रयश्चाऽऽपदि भवति ॥**

द्रव्यवनविषयमतिसंधिमाह— द्रव्यवनयोरपीति । तयोर्मध्ये यः महत् विस्तीर्णम्, सारवद्द्रव्याटवीकम्— प्रभूतफलप्रसवयोग्यता सारः, सारवती द्रव्याटवी द्रव्योत्पत्तिभूमिः यस्मिंस्तत् तथाभूतम्, विषयान्ते स्वीयजनपदप्रत्यन्ते नदीमातृकं नदीपायनीयजलं द्रव्यवनं छेदयति अद्रव्यच्छेदनेन संपादयति सः अतिसंधत्ते अनदीमातृकद्रव्यवनच्छेदकापेक्षया विशेषलाभं प्राप्नोति । कुतः ? हि यतः नदीमातृकं स्वाजीवं सुखोपजीव्यम् आपदि दुर्भिक्षे अपाश्रयश्च रक्षास्थानं च भवति ।

श्रीमूला.

**हस्तिवनयोरपि यो बहुशूरमृगं दुर्बलप्रतिवेशमनन्तावक्लेशि विषयान्ते हस्तिवनं बध्नाति सोऽतिसंधत्ते ॥**

हस्तिवनविषयमतिसंधिमाह— हस्तिवनयोरपीति । तयोरपि मध्ये यः बहुशूरमृगम्, दुर्बलप्रतिवेशं दुर्बलाः नियतनिवासस्थानापेक्षया निहीनवाससौकर्याः प्रतिवेशाः वनैकदेशाः यस्मिंस्तत् तथाभूतम्, अनन्तावक्लेशि अनन्तैः अवक्लेशैः प्रवेशनिर्गमादिविषयैरुपेतं हस्तिवनं विषयान्ते प्रत्यन्ते बध्नाति निवेशयति सः अतिसंधत्ते अर्थादुक्तविपरीतहस्तिवननिवेशिनम् ।

श्रीमूला.

**तत्रापि 'बहुकुण्ठाल्पशूरयोरल्पशूरं श्रेयः । शूरेषु हि युद्धम् । अल्पाः शूरा बहूनशूरान् भञ्जन्ति । ते भग्नाः स्वसैन्यावघातिनो भवन्ति' इत्याचार्याः ॥**

यथोक्तगुणेऽपि हस्तिवने विशेषावधारणमाचार्यमतेनाऽऽह— तत्रापीति । बहुकुण्ठाल्पशूरयोः बहुशूराल्पशूरयोः हस्तिवनयोर्मध्ये अल्पशूरं श्रेयः । कुतः ? हि यतः शूरेषु युद्धं शूरेष्वेव हस्तिषु आयत्तं युद्धम् । कुण्ठास्तु युद्धानुपयोगिन इत्यर्थः । शूराशूरैरुपकारापकारौ दर्शयति— अल्पाः शूरा इत्यादि । ते अशूराः । स्वसैन्यावघातिनः अकुतोमुखपलायनावसरे स्वीयमपि सैन्यमवमृद्नन्तीति भावः ।

श्रीमूला.

---

(१) कौ. ७।१२.

**नेति कौटल्यः । कुण्ठा बहवः श्रेयांसः, स्कन्धविनियोगादनेकं कर्म कुर्वाणाः स्वेषामपाश्रया युद्धे, परेषां दुर्धर्षा विभीषणाश्च । बहुषु हि कुण्ठेषु विनयकर्मणा शक्यं शौर्यमाधातुम्, न त्वेवाल्पेषु शूरेषु बहुत्वमिति ॥**

स्वमतमाह— नेति कौटल्य इत्यादि । स्कन्धविनियोगात् सैन्यसमुदाये विनियोगात् । कर्म उपकरणनयनानयनादिकम् । स्वेषामपाश्रयाः स्वीयानामुपकारकाः । परेषां दुर्धर्षा विभीषणाश्च स्वबहुत्वमात्रेण दृष्टेन शत्रूणां भीतिजनकाः अत एव धर्षयितुमशक्याश्च । यश्च शौर्यगुणोऽल्पेषु श्रेष्ठ्यहेतुरुक्तः स कुण्ठेष्वपि बहुषु हस्तिशिक्षाकर्मणोत्पादयितुं शक्यः, न तु स्वभावशूरेष्वल्पेषु बहुत्वमापादयितुं शक्यमित्याह— बहुषु हीत्यादि । इतिशब्दः बहुकुण्ठश्रेयस्त्वं प्रति 'स्कन्धविनियोगात्' इत्यादिनोक्तस्यार्थस्य हेतुतां द्योतयति । श्रीमूला.

**खन्योरपि यः प्रभूतसारामदुर्गमार्गामल्पव्ययारम्भां खनिं खानयति सोऽतिसंधत्ते ॥**

खन्योरपि मध्ये प्रचुरसारवस्तुत्वाकृच्छ्रगम्यमार्गत्वाल्पव्ययसाध्यत्वैर्युक्तां खनिं खानयन् अतथाभूतखनिखानकापेक्षया विशेषलाभं भजते इत्याह— खन्योरपीत्यादि । श्रीमूला.

**तत्रापि 'महासारमल्पसारं वा प्रभूतमिति । महासारमल्पं श्रेयः । वज्रमणिमुक्ताप्रवालहेमरूप्यधातुर्हि प्रभूतमल्पसारमत्यर्घेण ग्रसते' इत्याचार्याः ॥**

खनावपि महार्घं वज्रमण्यादिकं सारवस्तु परिमितं लभ्यमानं वा श्रेयः, अल्पार्घमसारवस्तु वा प्रचुरं लभ्यमानं श्रेयः इति विमर्शे, वज्रमण्यादेर्महासारस्याल्पस्यापि मूल्यतः प्रभूताल्पसारातिशायित्वादाद्यमेव श्रेय इत्याचार्याणां मतमाह— तत्रापि महासारमित्यादि । श्रीमूला.

**नेति कौटल्यः । चिरादल्पो महासारस्य क्रेता विद्यते । प्रभूतः सातत्यादल्पसारस्य ॥**

आचार्यमतं न युक्तम्, यतो महासारस्य वज्रमण्यादेः क्रेता बहोरपि कालादल्प एव लभ्यते, अल्पसारस्य तु लवणादेर्नित्यावर्जनीयोपकारत्वात् क्रेतारो बहवश्च नित्यं च लभ्यन्त इत्याह— नेति कौटल्यश्चिरादित्यादि । एवं च प्रभूतमल्पसारं श्रेय इति स्वमतमुक्तं भवति । श्रीमूला.

**एतेन वणिक्पथो व्याख्यातः ॥**

उक्तेन प्रकारेण वणिक्पथोऽपि विशेषलाभमवेक्ष्य निवेशनीय इत्याह— एतेनेत्यादि । श्रीमूला.

**तत्रापि 'वारिस्थलपथयोर्वारिपथः श्रेयानल्पव्ययव्यायामः प्रभूतपण्योदयश्च' इत्याचार्याः ॥**

वणिक्पथोऽपि तावत् द्विविधः— वारिपथः स्थलपथ इति । तत्र वारिपथः श्रेयान् । कुतः ? अल्पेन धनव्ययेन पुरुषपरिश्रमेण च साध्यत्वात्, स्थलपथापेक्षया पण्यनयनानयनसौकर्यातिशयेन बहुतरलाभहेतुत्वाच्चेत्याचार्यमतमाह— तत्रापि वारिस्थलपथयोरित्यादि । श्रीमूला.

**नेति कौटल्यः । संरुद्धगतिरसार्वकालिकः प्रकृष्टभययोनिर्निष्प्रतिकारश्च वारिपथः । विपरीतः स्थलपथः ॥**

स्वमतमाह— नेति कौटल्यः, संरुद्धगतिरित्यादि । विपदि सर्वतोनिरुद्धगमनः वृष्ट्यादिबाधकालेष्वगम्यः स्थलपथाभ्यधिकव्यपायहेतुः अशक्यप्रतिक्रियश्च जलपथ इति स न श्रेयान् । उक्तविपरीतगुणत्वात् तु स्थलपथः श्रेयानित्यर्थः । श्रीमूला.

**वारिपथे तु कूलसंयानपथयोः कूलपथः पण्यपट्टणबाहुल्याच्छ्रेयान् । नदीपथो वा सातत्यात् विषह्याबाधत्वाच्च ॥**

वारिपथोऽपि द्विप्रकारः— अनुतीरगमनमार्गः जलगमनमार्ग इति । तत्राऽऽद्यः श्रेयान्, पण्यपुटभेदनबहुत्वादित्याह— वारिपथे त्वित्यादि । तत्र विकल्पेनापवादमाह— नदीपथो वेति । नदीवारिपथो वा श्रेयान् । कुतः ? सातत्यात् संततगतित्वात् विषह्याबाधत्वाच्च अनुत्कटाबाधत्वाच्च । श्रीमूला.

**स्थलपथेऽपि 'हैमवतो दक्षिणापथाच्छ्रेयान्, हस्त्यश्वगन्धदन्ताजिनरूप्यसुवर्णपण्याः सारवत्तराः' इत्याचार्याः ॥**

स्थलपथेऽपि विशेषमाचार्यमतेनाऽऽह— स्थलपथेऽपीति । तत्रापि हैमवतः उत्तरापथः दक्षिणापथात् श्रेयान् । कुत इत्याह— हस्त्यश्वेत्यादि । हस्त्यादिषु गन्धः कस्तूरी । हस्त्यादयः सप्त पण्यपदार्थाः सारवत्तराः अतिशयेनार्घवन्तः । तत्र प्रचुराः इति वाक्यशेषः । श्रीमूला.

**नेति कौटल्यः । कम्बलाजिनाश्वपण्यवर्जाः शङ्खवज्रमणिमुक्तासुवर्णपण्याश्च प्रभूततरा दक्षिणापथे ॥**

तत् खण्डयति— नेति कौटल्य इत्यादि । कम्बलाजिनाश्ववर्जमन्ये हस्त्यादयः शङ्खवज्रमणिमुक्तास्वर्णरूपाः पण्यपदार्थाश्च उत्तरापथापेक्षया दक्षिणापथे प्रचुतराः । ततश्च पण्यभेदेनान्योन्यापेक्षं श्रेयस्त्वमुभयोरविशिष्टमित्यभिप्रायः । श्रीमूला.

**दक्षिणापथेऽपि बहुखनिः सारपण्यः प्रसिद्धगतिरल्पव्यायामो वा वणिक्पथः श्रेयान् । प्रभूतविषयो वा फल्गुपण्यः ॥**

दक्षिणापथेऽपि विशेषमाह— दक्षिणापथेऽपीति । तत्रापि बहुखनिः, प्रसिद्धगतिः निरपायसिद्धगतागतः, अल्पव्यायामः अल्पपरिश्रमः, एवंभूतः सारपण्यो वणिक्पथो वा श्रेयान्, प्रभूतविषयो वा फल्गुपण्यः असारपण्यत्वेऽपि प्रचुरक्रेतृको वणिक्पथो वा श्रेयान् । श्रीमूला.

**तेन पूर्वः पश्चिमश्च वणिक्पथो व्याख्यातः ॥**

पूर्वपश्चिमवणिक्पथयोरपि विषये श्रेयस्त्वमित्थं द्रष्टव्यमित्याह— तेनेत्यादि । श्रीमूला.

**तत्रापि चक्रपादपथयोश्चक्रपथो विपुलारम्भत्वाच्छ्रेयान् । देशकालसंभावनो वा खरोष्ट्रपथः ॥**

वणिक्पथे विशेषान्तरमाह— तत्रापीति । वणिक्पथेऽपि चक्रपादपथयोः— चक्रपथः चक्रयुक्तमनुष्यवाह्यक्षुद्रशकटगम्यो मार्गः, पादपथः मनुष्यपादचारप्राप्यो मार्गः, तयोर्मध्ये चक्रपथः विपुलारम्भत्वात् पादपथापेक्षया प्रचुरपण्यव्यवहारत्वाद्धेतोः श्रेयान् । विकल्पमाह— देशकालसंभावनो वा खरोष्ट्रपथ इति । विप्रकृष्टदेशं भूरिपण्यापेक्षं च पण्यप्रियकालमनुसृत्य खरपथ उष्ट्रपथश्च वा श्रेयस्त्वेन ग्राह्य इत्यर्थः । श्रीमूला.

**आभ्यामंसपथो व्याख्यातः ॥**

इममेव विधिमंसपथेऽतिदिशति— आभ्यामित्यादि । अंसपथः युग्यबलीवर्दादिनीयमानपण्यो मार्गः । श्रीमूला.

**परकर्मोदयो नेतुः क्षयो वृद्धिर्विपर्यये ।**
**तुल्ये कर्मपथे स्थानं ज्ञेयं स्वं विजिगीषुणा ॥**

कर्मफलभूतानां क्षयवृद्धिस्थानानां लक्षणमाह— परकर्मोदय इति । परस्य शत्रोः कर्मोदयः कर्मजो लाभः, नेतुः विजिगीषोः क्षयः । ज्ञेय इत्यपकृष्य संबध्यते । विपर्यये स्वकर्मोदये वृद्धिः ज्ञेया । कर्मपथे तुल्ये शत्रुसमफले सति स्वं स्थानं क्षयवृद्धिव्यतिरेकेण स्वभावावस्थानं ज्ञेयं विजिगीषुणा । श्रीमूला.

**अल्पागमातिव्ययता क्षयो वृद्धिर्विपर्यये ।**
**समायव्ययता स्थानं कर्मसु ज्ञेयमात्मनः ॥**

लक्षणान्तरमाह— अल्पागमातिव्ययतेति । आत्मनः कर्मसु आयाधिकव्यययोगित्वं क्षयः क्षयपदार्थः । विपर्यये बह्वायाल्पव्ययत्वे वृद्धिः । समायव्ययता स्थानं ज्ञेयम् । श्रीमूला.

**तस्मादल्पव्ययारम्भं दुर्गादिषु महोदयम् ।**
**कर्म लब्ध्वा विशिष्टः स्यादित्युक्ताः कर्मसंधयः ॥**

इत्थं क्षयवृद्धिस्थानज्ञानात् दुर्गादिषु दुर्गसेत्वादिषु अल्पव्ययारम्भं महोदयं महाफलं कर्म लब्ध्वा आसाद्य विशिष्टः परस्मादभ्यधिकः स्यात् विजिगीषुः । इति एवं कर्मसंधय उक्ताः । श्रीमूला.

दण्डितेन संधात्रा राज्ञा दण्डकस्य संधेयस्य
राज्ञोऽनुनयः कर्तव्यः

**[1]संधेयस्य वा दूतं प्रेषयेत् । तेन वा प्रेषितमर्थमानाभ्यां सत्कृत्य ब्रूयात्— 'इदं राज्ञः**

(१) कौ. ७।१५.

**पण्यागारम्, इदं देवीकुमाराणां देवीकुमारवचनात्, इदं राज्यमहं च त्वदर्पणः ' इति ॥**

अथ दण्डोपनतवृत्तमुच्यते । ' दण्डोपनतवृत्तम् ' इति सूत्रम् । दण्डोपनतस्य दण्डेनाधःकृतस्य वृत्तम् अनुष्ठानम् अभिधीयते इति सूत्रार्थः । ' संधेयताम् ' इत्यादिना संधिः कर्तव्यत्वेनोक्तः । तस्य प्रकारान्तराणां ज्यायसा सह कथमप्यसंभवे अन्ततस्तस्मिन्नात्मार्पणेन वा संधिः कर्तव्य इत्येतदधुनाऽभिधीयते ।

संधेयस्य वेति । वाशब्दः संध्यन्तरासंभवरूपे पक्षान्तरे । संधेयस्य, ज्यायसो धर्मविजयिन इति शेषः, दूतं प्रेषयेत् । अथवा तेन वा संधेयेन वा प्रेषितं दूतम् अर्थमानाभ्यां धनदानपूजनाभ्यां सत्कृत्य उपचर्य ब्रूयात् । किमिति ? इदं राज्ञः पण्यागारं संधेयाय राज्ञे अर्पणीयं प्राभृतम् । इदं देवीकुमाराणां देवीकुमारवचनात् इदं प्राभृतं संधेयस्य देव्यै कुमारेभ्यश्च अस्मद्देवीवचनात् अस्मत्कुमारवचनाच्चार्पणीयम् । इदं राज्यम् अहं च त्वदर्पणः त्वयि अर्पणं यस्य सः । ' त्वदर्पणः ' इत्येतत् पदं राज्येऽपि संबन्धनीयम् । मयेदं राज्यं तुभ्यमर्पितम् आत्मा च तुभ्यमर्पित इत्यर्थः । इति एवम् । ब्रूयादित्यनेन संबन्धः । श्रीमूला.

**लब्धसंश्रयः समयाचारिकवद् भर्तरि वर्तेत । दुर्गादीनि च कर्माण्यावाहविवाहपुत्राभिषेकाश्वपण्यहस्तिग्रहणसत्रयात्राविहारगमनानि चानुज्ञातः कुर्वीत । स्वभूम्यवस्थितप्रकृतिसंधिमुपघातमपसृतेषु वा सर्वमनुज्ञातः कुर्वीत । दुष्टपौरजानपदो वा न्यायवृत्तिरन्यां भूमिं याचेत । दूष्यवदुपांशुदण्डेन वा प्रतिकुर्वीत । उचितां वा मित्राद्भूमिं दीयमानां न प्रतिगृह्णीयात् । मन्त्रिपुरोहितसेनापतियुवराजानामन्यतममदृश्यमाने भर्तरि पश्येत् । यथाशक्ति चोपकुर्यात् । दैवतस्वस्तिवाचनेषु तत्परा आशिषो वाचयेत् । सर्वत्राऽऽत्मनिसर्गं गुणं ब्रूयात् ॥**

दूतप्रेषणादिना अवाप्ताश्रयः समयाचारिकवत्— समयः सेवकधर्मनियमः, तस्य आचारः समयाचारः, तद्युक्तः समयाचारिकः सेवकः, तद्वत् भर्तरि ज्यायसि संहिते वर्तेत । वर्तनप्रकारमेवाऽऽह— दुर्गादीनि च कर्माणीति । तानि आवाहविवाहपुत्राभिषेकादीनि च— आवाहः कन्यास्वीकरणम्, विवाहः कन्यादानम्, पुत्राभिषेकः यौवराज्याभिषेचनम्, अश्वपण्यम् अश्वक्रयः, हस्तिग्रहणं गजबन्धनम्, सत्रं यागः, यात्रा पराभियानम्, विहारगमनम् उद्यानादिक्रीडागमनम्, इत्येतान्यष्टौ च अनुज्ञातः स्वाम्यनुमतः कुर्वीत । स्वभूम्यवस्थितप्रकृतिसंधिमिति । स्वभूमौ अवस्थिताभिः प्रकृतिभिः स्वामात्यादिभिः संधिम् अपसृतेषु स्वस्मादपसृत्य परस्मात् प्रत्यागतेषु उपघातं वा सर्वम् अनुज्ञातः कुर्वीत । दुष्टपौरजानपदो वेति । दुष्टाः अन्याय्यवृत्तयः पौराः जानपदाश्च यस्य स तथाभूतो वा न्यायवृत्तिः न्याय्याचारः । 'न्यायवृत्तिम्' इति पाठे भूमेस्तत् विशेषणम् । अन्यां भूमिं याचेत, अर्थात् स्वभूमिं वंशपरंपरागतामपि परित्यज्य । दूष्यैस्तुल्यम् अयाचमान एव वा अन्यां भूमिं दूष्यार्हेणोपांशुदण्डेन स्वभूमिगतान् दुष्टान् प्रवासयेदित्याह— दूष्यवदित्यादि । अदुष्टजानपदामपि भूमिं स्वमित्रादाच्छिद्य स्वामिना दीयमानां न गृह्णीयादित्याह— उचितां वेत्यादि । आत्मनो मन्त्रिणं पुरोहितं सेनापतिं युवराजं वा भर्तुः संनिधौ न पश्येदित्याह— मन्त्रिपुरोहितेत्यादि । एतच्च स्वामिसंनिधावात्मनाऽनुष्ठीयमानं भृत्यसमुदाचारमात्मभृत्या मा प्राक्षुरित्येतदर्थमुक्तम् । यथाशक्ति चोपकुर्यादिति । स्वशक्त्यनुसारेण यत्किंचित् स्वामिने प्राभृतमुपहरेत् दर्शनावसरेषु । दैवतस्वस्तिवाचनेष्विति । देवताराधनेषु मङ्गलाह्निकेषु च तत्पराः भर्तृगोचराः आशिषः वाचयेत् । सर्वत्रेति । सर्वेषु जनेषु आत्मनिसर्गं भर्तर्यात्मार्पणं ब्रूयात्, गुणं ब्रूयात् स्वामिगुणांश्च कीर्तयेत् । श्रीमूला.

**संयुक्तबलवत्सेवी विरुद्धः शङ्कितादिभिः ।**
**वर्तेत दण्डोपनतो भर्तर्येवमवस्थितः ॥**

एवम् उक्तरीत्या भर्तरि अवस्थितः दण्डोपनतः संयुक्तबलवत्सेवी संयुक्ताः स्वामिसंबद्धा ये बलवन्तोऽमात्यादयस्तत्सेवी तदनुकूलवृत्तिः, शङ्कितादिभिर्विरुद्धः स्वाम्यसंयुक्तत्वेन ये शङ्किताः आदिग्रहणात् स्वामिद्विष्टाश्च ये तैर्विरुद्धश्च वर्तेत । श्रीमूला.

दण्डोपनते दण्डोपनमयितुः राज्ञः वर्तनम्

'*अनुज्ञातस्तद्धिरण्योद्वेगकरं बलवान्विजिगीषमाणो यतः स्वभूमिः स्वर्तुवृत्तिश्च स्वसैन्यानामदुर्गापसारः शत्रुरपार्ष्णिरनासारश्च ततो यायात् । विपर्यये कृतप्रतीकारो यायात् ॥

'दण्डोपनायिवृत्तम्' इति सूत्रम् । दण्डेन बलेन शत्रुम् आत्मनः समीपं नयति उपनमयतीति दण्डोपनायी अर्थात् दण्डोपनामी, तदवस्थापन्नस्य विजिगीषोर्वृत्तमुच्यते इति सूत्रार्थः । उपनतवृत्ते निरूपिते उपनमयितृवृत्तस्य निरूपणं प्राप्तावसरमिति संगतिः ।

प्रथममुपनमनस्य हेतुभूतमभियानमाह— अनुज्ञात इति । अनुज्ञा अभ्युपगमः । ततः पञ्चम्यर्थे तसिः । ल्यब्लोपे च पञ्चमी । अभ्युपगमं 'संधौ त्वया पणितं हिरण्यं ददामि' इत्येवमात्मकं विधायेत्यर्थः । प्रथमान्तं वा अनुज्ञात इति बलवतो विशेषणम् । 'संधौ त्वया पणितं हिरण्यं ददामि' इत्यभ्युपगमेन संभावित इति तदाऽर्थः । तद्धिरण्योद्वेगकरं तेन हिरण्येन संधिपणितेनादत्तेन हेतुना उद्वेगोत्पादकं यातव्यं विजिगीषमाणः विजेतुमिच्छन् बलवान् ततो यायात् तत्र देशेऽभिगच्छेत् । कुत्र ? यतः यत्र गन्तव्ये स्वसैन्यानां स्वभूमिः स्वकीया भूमिः गमनमार्गतया लभ्यते, सा स्वर्तुवृत्तिश्च स्वानुकूलकालयुक्ता स्वयोग्यभक्तोपकरणसंपन्ना च, शत्रुः अदुर्गापसारः— दुर्गं पार्वतादि, अपसारः अपसरणमार्गः, तदुभयरहितः भवति । अपार्ष्णिरनासारश्च । आद्यं विजिगीषोर्विशेषणम्, द्वितीयं शत्रोर्विशेषणम् । स्वयं पार्ष्णिग्राहरहितः, शत्रुस्तु सुहृद्बलरहित इत्यर्थः । यद्वा अपार्ष्णिरित्यपि शत्रोरेव विशेषणम् । पार्ष्णिशब्देन पार्ष्णिग्राहणरूपप्रतीकारलक्षणात् तद्रहित इत्यर्थः । विपर्यये कृतप्रतीकारो यायादिति । उक्तस्वभूम्याद्यभावे शत्रोः सदुर्गापसारत्वादौ च सति तत्तत् प्रतिविधाय गच्छेत् ।

श्रीमूला.

सामदानाभ्यां दुर्बलानुपनमयेत्, भेददण्डाभ्यां बलवतः ॥

यातव्योपनमनोपायानां विषयानियममाह— सामदानाभ्यामित्यादि । एवं च दण्डोपनायिवृत्तमिति संज्ञापदे दण्डग्रहणमुपायमात्रोपलक्षणं दण्डस्य प्रायिकत्वज्ञापनार्थं कृतमिति द्रष्टव्यम् ।

श्रीमूला.

नियोगविकल्पसमुच्चयैश्चोपायानामनन्तरैकान्तराः प्रकृतीः साधयेत् ॥

उपायानुष्ठाननियममाह— नियोगविकल्पसमुच्चयैश्चेति । 'अयमेवोपायोऽस्मिन् पुरुषविशेषेऽनुष्ठेयो नान्यः' इत्यवधारणं नियोगः । 'अयं वाऽसौ वा' इति विकल्पः । 'अयं चासौ च' इति समुच्चयः । एवमुपायानां नियोगाद्यनुष्ठानैः अनन्तरैकान्तराः प्रकृतीः अमित्रप्रकृतीः मित्रप्रकृतीश्च साधयेत् उपनमयेत् ।

श्रीमूला.

ग्रामारण्योपजीविव्रजवणिक्पथानुपालनमुज्झितापसृतापकारिणां चार्पणमिति सान्त्वमाचरेत् । भूमिद्रव्यकन्यादानमभयस्य चेति दानमाचरेत् ॥

दुर्बले सामदानाचरणमाह— ग्रामारण्येत्यादि । ग्रामारण्योपजीविनो व्रजस्य गोमहिषादेः वणिक्पथस्य च वारिपथस्थलपथरूपस्य यातव्यसंबन्धिनः अनुपालनं प्रतिरोधकादितो रक्षणम्, उज्झितापसृतापकारिणामर्पणं च उज्झितानां परचक्रादिभयत्यक्तानाम् अपसृतानां स्वयं प्रनष्टानां दासादीनाम् अपकारिणाम् अपकृत्य गतानां दूष्यादीनां च दुर्बलसंबन्धिनाम् अन्विष्य उपलभ्य प्रदानम्, इति एवंरूपं सान्त्वं साम आचरेत् दुर्बलेषु प्रयुञ्जीत । भूमिद्रव्यकन्यादानमिति । भूमिदानं द्रव्यदानं कन्यादानं च अभयस्य च अर्थात् दानं शत्रुभ्यो भयप्रसङ्गे, इति एवंरूपं दानम् आचरेत् दानोपायमनुतिष्ठेत् ।

श्रीमूला.

---

* दण्डोपनतवृत्तप्रसङ्गेन दण्डोपनायिवृत्तमत्र संगृहीतम् ।

(१) कौ. ७।१६.

**सामन्ताटविकतत्कुलीनावरुद्धानामन्यतमोपग्रहेण कोशदण्डभूमिदाययाचनमिति भेदमाचरेत् । प्रकाशकूटतूष्णींयुद्धदुर्गलम्भोपायैरमित्रप्रग्रहणमिति दण्डमाचरेत् ॥**

बलवद्विषये भेददण्डयोराचरणमाह— सामन्तेत्यादि । सामन्ताटविकौ प्रसिद्धौ, तत्कुलीनः यातव्यज्ञातिः, अवरुद्धः यातव्यपुत्रादिर्नियन्त्रितः, इत्येषाम् अन्यतमोपग्रहेण एकतमस्य स्वायत्तीकरणेन कोशादियाचनं हिरण्यस्य सैन्यस्य भूमेः दायस्य च याचनम् इति एवंप्रकारं भेदम् आचरेत् । प्रकाशेत्यादि । प्रकाशयुद्धं निर्दिष्टदेशकालं युद्धम्, अनिर्दिष्टदेशकालं कूटयुद्धम्, योगगूढोपजापैर्घातनं तूष्णींयुद्धमिति त्रिकं परिपणितापरिपणितापसृतसंधिप्रकरणलक्षितम्, दुर्गलम्भोपायः रसदानादिकं वक्ष्यमाणम्, इत्येतैः अमित्रप्रग्रहणं शत्रुनियन्त्रणम् इति एवंरूपं दण्डमाचरेत् । श्रीमूला.

**एवमुत्साहवतो दण्डोपकारिणः स्थापयेत्, स्वप्रभाववतः कोशोपकारिणः, प्रज्ञावतो भूम्युपकारिणः ॥**

सामादिभिरुपनमितानां विनियोगमाह— एवमुत्साहवत इत्यादि । एभिः प्रकारैर्नमितेषु मध्ये उत्साहशक्तियुक्तान् दण्डोपकारिणः निजसैन्योपकारकान् स्थापयेत् नियोजयेत् । स्वप्रभाववतः कोशसंपन्नान् कोशोपकारिणः कोशदानेनोपकर्तॄन् स्थापयेत् । प्रज्ञावतः मन्त्रशक्तियुक्तान् भूम्युपकारिणः भूमिविषये कार्ये तत्सारासारत्वावधारणादौ उपकर्तॄन् स्थापयेत् । श्रीमूला.

**तेषां पण्यपत्तनग्रामखनिसंजातेन रत्नसारफल्गुकुप्येन द्रव्यहस्तिवनव्रजसमुत्थेन यानवाहनेन वा यद् बहुश उपकरोति तच्चित्रभोगम्, यद् दण्डेन कोशेन वा महदुपकरोति तन्महाभोगम्, यद् दण्डकोशभूमीरुपकरोति तत् सर्वभोगम् ॥**

एवं सामाद्युपायैरुपनमय्य मित्रीकृतानामुपयोगविशेषं तन्निमित्तं संज्ञाभेदं चाऽऽह— तेषामिति । दण्डोपनमितानां मध्ये पण्यपत्तनग्रामखनिसंजातेन पणनीयद्रव्यक्रयविक्रयस्थानात् ग्रामात् सुवर्णाद्युत्पत्तिस्थानाच्च संजातेन, रत्नसारफल्गुकुप्येन रत्नेन मणिमुक्तादिना सारेण चन्दनादिना फल्गुना शङ्खादिना कुप्येन वस्त्रादिना च, द्रव्यहस्तिवनव्रजसमुत्थेन द्रव्यवनात् हस्तिवनात् व्रजाच्च संजातेन, यानवाहनेन वा रथादियानैर्गजादिवाहनैश्च वा यत् मित्रं बहुशः बाहुल्येन उपकरोति, तत् मित्रं चित्रभोगं चित्राः नानाप्रकाराः भोगाः उपयोगाः येनेति व्युत्पत्त्या तदाख्यं भवति । यत् दण्डेन कोशेन वा प्रभूतमुपकारं विधत्ते तत् महाभोगाख्यमिति, यत् दण्डकोशभूमीर्दत्त्वोपकरोति तत् सर्वभोगमिति च वाक्यद्वयेनाऽऽह— यद् दण्डेनेत्यादिना, यद् दण्डकोशेत्यादिना च । श्रीमूला.

**यदमित्रमेकतः प्रतिकरोति तदेकतोभोगि । यदमित्रमासारं चापकरोति तदुभयतोभोगि । यदमित्रासारप्रतिवेशाटविकान् सर्वतः प्रतिकरोति तत् सर्वतोभोगि ॥**

अर्थप्राप्त्युपकारिणो मित्रभेदानभिधाय अनर्थनिवारणोपकारिण आह— यदिति । यत् मित्रम् अमित्रम् एकतः एकमेव शत्रुमित्यर्थः, प्रतिकरोति तत् एकतोभोगि तत्संज्ञम् । यत् अमित्रम् आसारं च अमित्रस्य मित्रं च अपकरोति वारयति तत् मित्रम् उभयतोभोगि । यत् अमित्रासारप्रतिवेशाटविकान्— अमित्रं शत्रुम्, आसारं शत्रुमित्रम्, प्रतिवेशं पार्श्वस्थं शत्रुम्, आटविकम् अटवीपतिं चेत्येतान् सर्वतः प्रतिकरोति तत् मित्रं सर्वतोभोगि तत्संज्ञम् । श्रीमूला.

**पार्ष्णिग्राहश्चाऽऽटविकः शत्रुमुख्यः शत्रुर्वा भूमिदानसाध्यः कश्चिदासाद्येत निर्गुणया भूम्यैनमुपग्राहयेत्, अप्रतिसंबद्धया दुर्गस्थम्, निरुपजीव्ययाऽऽटविकम्, प्रत्यादेयया तत्कुलीनम्, शत्रोरुपच्छिन्नया शत्रोरुपरुद्धम्, नित्यामित्रया श्रेणीबलम्, बलवत्सामन्तया संहतबलम्, उभाभ्यां युद्धे प्रतिलोमम्, अलब्धव्यायामयोत्साहिनम्, शून्ययाऽरिपक्षीयम्, कर्शितयाऽपवाहितम्, महाक्षयव्ययनिवेशया गतप्रत्या-

**गतम्, अनुपाश्रयया प्रत्यपसृतम्, परेणानधिवास्यया स्वयमेव भर्तारमुपग्राहयेत् ॥**

अथ दानोपायप्रयोगे कीदृशी भूमिः कस्मै दातव्येत्याह— पार्ष्णिग्राहश्चेति । सः आटविकः अटवीपतिः शत्रुमुख्यः शत्रोरमात्यप्रभृतिः शत्रुर्वा भूमिदानसाध्यः कश्चित् आसाद्येत, चेदिति शेषः, निर्गुणया भूम्या एनम् उपग्राहयेत् स्वायत्तीकुर्यात् । कथंभूतं कथंभूतया ? दुर्गस्थम् अप्रतिसंबद्धया दुर्गसंबन्धरहितया दुर्गात् बहिर्देशान्तरव्यवहितया भूम्या उपग्राहयेत् । निरुपजीव्यया उपजीवनयोग्यधान्यवापादिरहितया भूम्या आटविकम् उपग्राहयेत् । प्रत्यादेयया कार्यान्तेऽपहर्तुमर्हया तत्कुलीनम् उपग्राहयेत् । शत्रोरुपच्छिन्नया शत्रुसकाशप्रसभाहृतया शत्रोरुपरुद्धं शत्रुणा नियन्त्रितं तत्पुत्रादिम् उपग्राहयेत् । नित्यामित्रया चोराटविकादिनित्योपद्रवयुक्तया श्रेणीबलं जनगणात्मकं नायकरहितं सैन्यविशेषम् उपग्राहयेत् । बलवत्सामन्तया प्रबलप्रत्यमित्रया संहतबलं जनसंघात्मकं सनायकं सैन्यविशेषम् उपग्राहयेत् । उभाभ्यां नित्यामित्रया बलवत्सामन्तया चेति द्वाभ्यां भूमिभ्यां युद्धे प्रतिलोमं कूटकारिणम् उपग्राहयेत् । अलब्धव्यायामया व्यायामायोग्यया भूम्या उत्साहिनम् उत्साहशीलम् उपग्राहयेत् । शून्यया अलभ्यफलया अरिपक्षीयम् उपग्राहयेत् । कर्शितया परचक्राटविकाद्युपद्रुतया अपवाहितं युद्धोपतप्तम्, कृतसंधिभ्रंशितमिति माधवयज्वा, उपग्राहयेत् । महाक्षयव्ययनिवेशया महता पुरुषापचयेन धनव्ययेन च साध्यो निवेशो यस्यां तया गतप्रत्यागतम् उपग्राहयेत् । अनुपाश्रयया दुर्गहीनया प्रत्यपसृतं शत्रुभीत्या स्वदेशादपसृतम् उपग्राहयेत् । परेणानधिवास्यया स्वभर्तृव्यतिरिक्तेनाधिष्ठातुमशक्यया भूम्या स्वयमेव भर्तारं यस्तस्या भूतपूर्वो भर्ता तमेवेत्यर्थः, उपग्राहयेत् । श्रीमूला.

**तेषां महोपकारं निर्विकारं चानुवर्तयेत् । प्रतिलोममुपांशुना साधयेत् । उपकारिणमुपकारशक्त्या तोषयेत् । प्रयासतश्चार्थमानौ कुर्यात् । व्यसनेषु चानुग्रहम् । स्वयमागतानां यथेष्टदर्शनं प्रतिविधानं च कुर्यात् । परिभवोपघातकुत्सातिवादांश्चैषु न प्रयुञ्जीत । दत्त्वा चाभयं पितेवानुगृह्णीयात् । यश्चास्यापकुर्यात् तद्दोषमभिविख्याप्य प्रकाशमेनं घातयेत् । परोद्वेगकारणाद्वा दाण्डकर्मिकवच्चेष्टेत । न च हतस्य भूमिद्रव्यपुत्रदारानभिमन्येत । कुल्यानप्यस्य स्वेषु पात्रेषु स्थापयेत् । कर्मणि मृतस्य पुत्रं राज्ये स्थापयेत् ॥**

अथ दण्डोपनतेषु तद्वृत्तिभेदेन दण्डोपनायिनः समाचरणभेदानाह— तेषामिति । दण्डोपनतानां मध्ये महोपकारं निर्विकारं च अनुवर्तयेत् उपकारवृत्तेर्निर्विकारवृत्तेश्च विच्छेदो यथा न भवेत् तथा तं नयेत् । प्रतिलोमं प्रतिकूलाचारम् उपांशुना उपांशुदण्डेन साधयेत् प्रकाशवधेऽन्ये दण्डोपनता उद्विग्नाः स्युरिति । उपकारिणमुपकारशक्त्या स्वशक्त्यानुगुण्येनोपकर्तारं तोषयेत् प्रीणयेत् । प्रयासतश्च प्रयासानुगुण्येन च अर्थमानौ धनदानं सत्कारं च तेषां कुर्यात् । ‘ अर्थमाने ’ इत्यपपाठः । व्यसनेषु च बन्धुविपत्त्यादिशोकेषु च अनुग्रहं परिसान्त्वनादिरूपं कुर्यात् । स्वयमागतानाम् अनाहूतगतानां यथेष्टदर्शनं यथेच्छं दर्शनं कुर्यात् अनुरागार्थम् । प्रतिविधानं च कुर्यात् तेभ्यः शङ्क्यमानादपायादात्मनो रक्षार्थं संविधानं च कुर्यात् । परिभवेत्यादि । परिभवः अनादरः, उपघातः दोषवचनम्, कुत्सा निन्दा, अतिवादः अतिस्तुतिः, इत्येतांश्च एषु दण्डोपनतेषु विषये न प्रयुञ्जीत । दत्त्वा चाभयं भयस्थानप्राप्तौ पितेव अनुगृह्णीयात् । यश्च दण्डोपनतः अस्य विजिगीषोः अपकुर्यात् तद्दोषं तदपराधम् अभिविख्याप्य एनम् अपराधिनं प्रकाशं घातयेत् । परोद्वेगकारणाद्वा तत्प्रकाशवधेनान्येषां दण्डोपनतानामुद्वेगः स्यादिति शङ्कारूपकारणसत्त्वे वा दाण्डकर्मिकवत् दाण्डकर्मिकप्रकरणोक्तविधानतुल्यं चेष्टेत । उपांशुदण्डं प्रयुञ्जीतेत्यर्थः । न चेति । हतस्य भूमिद्रव्यपुत्रदारान् न च अभिमन्येत स्वत्वाभिमानविषयान् न कुर्यात् स्वयं नापहरेदित्यर्थः । किं तर्हि कुर्यात् ? अस्य हतस्य कुल्यानपि, अपिशब्दात् पुत्रादीनपि, स्वेषु पात्रेषु स्वस्वोचितेषु राजादिस्थानेषु स्थापयेत् । कर्मणि उपनाय्यर्थे युद्धे मृतस्य पुत्रं राज्ये पितृसंबन्धिनि स्थापयेत् । श्रीमूला.

**एवमस्य दण्डोपनताः पुत्रपौत्राननुवर्तन्ते ॥**

उपदिष्टवर्त्मनाऽनुष्ठाने दण्डोपनताः विजिगीषुं न केवलम्, तत्पुत्रपौत्रानप्यनुसरन्तीत्याह— एवमस्येत्यादि । श्रीमूला.

**यस्तूपनतान् हत्वा बद्ध्वा वा भूमिद्रव्यपुत्रदारानभिमन्येत तस्योद्विग्नं मण्डलमभावायोत्तिष्ठते । ये चास्यामात्याः स्वभूमिष्वायत्तास्ते चास्योद्विग्ना मण्डलमाश्रयन्ते । स्वयं वा राज्यं प्राणान् वाऽस्याभिमन्यन्ते ॥**

उपदिष्टविपरीतानुष्ठायिनो दण्डोपनायिनो दोषमाह— यस्त्वित्यादि । यस्तु विजिगीषुः उपनतान् दण्डप्रणतान् हत्वा बद्ध्वा वा बन्धनागारं नीत्वा वा भूमिद्रव्यपुत्रदारान् उपनतसंबन्धिनः अभिमन्येत आत्मसात्कुर्यात्, तस्य उद्विग्नं तं प्रति कुपितं सत् मण्डलं द्वादशराजकम् अभावाय तस्य नाशाय उत्तिष्ठते उद्युङ्क्ते । ये च अस्य विजिगीषोः अमात्याः स्वभूमिषु आयत्ताः व्यापृताः ते च अस्योद्विग्नाः मण्डलम् उत्तिष्ठमानं राजमण्डलम् आश्रयन्ते विजिगीषोरपकारार्थम् । स्वयं अस्य राज्यम् अभिमन्यन्ते ममकारविषयं कुर्वन्ति । एनं बद्ध्वेत्यार्थम् । अस्य प्राणान् वा अभिमन्यन्ते आत्मसात्कुर्वन्ति, हरन्तीत्यर्थः । श्रीमूला.

**स्वभूमिषु च राजानस्तस्मात् साम्नाऽनुपालिताः ।**
**भवन्त्यनुगुणा राज्ञः पुत्रपौत्रानुवर्तिनः ॥**

अध्यायप्रान्ते श्लोकमाह— स्वभूमिषु चेति । तस्मात् पूर्वोक्तात् कारणात् स्वभूमिषु च राजानः स्वीयासु अनन्यदत्तासु भूमिषु राज्यं भुञ्जन्तः, चकारात् विजिगीषुदत्तराज्यभुजश्च राजानः साम्ना अनुपालिताः विजिगीषुणा रक्षिताः राज्ञः विजिगीषोः अनुगुणाः, पुत्रपौत्रानुवर्तिनः पुत्रान् पौत्रांश्च सानुरागमनुसरन्तीत्यर्थः । श्रीमूला.

**[1]शमः संधिः समाधिरित्येकोऽर्थः । राज्ञां विश्वासोपगमः शमः संधिः समाधिरिति ॥**

[1] ( १ ) कौ. ७।१७.

'संधिकर्म' इति सूत्रम् । संधेः कर्म विश्वासार्थं सत्यशपथादिना दृढीकरणं संधिकर्म, तदुच्यते इत्यर्थः । पणबन्धः संधिः पूर्वमुक्तः । स कृतोऽपि अदृढीकृतः अकृत एवेति तस्य दृढीकरणमधुनोच्यते ।

शम इत्यादि । शमः संधिः समाधिरित्येतैः शब्दैरेक एवार्थोऽभिधीयते इत्यर्थः । कोऽसावर्थ इत्याह— राज्ञां विश्वासोपगम इत्यादि । संधिकारिणां विश्वासोपगमः विश्वासः पणबन्धविषयो निश्चयः उपगम्यतेऽनेनेति विश्वासोपगमः सत्यशपथप्रतिभूप्रतिग्रहान्यतमरूपोऽर्थः शमः संधिः समाधिरित्युच्यते । श्रीमूला.

**सत्यं शपथो वा चलः संधिः, प्रतिभूः प्रतिग्रहो वा स्थावर इत्याचार्याः ॥**

सत्यादिचतुष्टये चलस्थावरविभागमाचार्यमतेनाऽऽह— सत्यमिति । सत्यम् 'इदमेवमेव, नान्यथा भविष्यति' इति वचनमात्रं कार्तयुगैर्जनैर्बहुलमादृतम्, शपथो वा पितृपादसुवर्णादिस्पर्शपूर्वमर्थवचनं च चलः अस्थायी अनतिविश्वास्य इत्यर्थः, संधिः । संधिशब्दः संश्लेषे तद्धेतौ च वर्तते । प्रतिभूः अव्यतिक्रमप्रातिभाव्यवाही प्रतिग्रहो वा वचनविश्वासार्थमर्पितः पुत्रादिश्च । प्रतिभूकृतः प्रतिग्रहकृतश्च संधिरित्यर्थः । स्थावरः स्थायी अत्यन्तविश्वसनीय इत्यर्थः । इत्याचार्याः, मन्यन्ते इति शेषः । श्रीमूला.

**नेति कौटल्यः । सत्यं शपथो वा परत्रेह च स्थावरः संधिः, इहार्थ एव प्रतिभूः प्रतिग्रहो वा बलापेक्षः ॥**

आचार्यमतप्रतिलोमं स्वमतमाह— नेति कौटल्य इत्यादि । ययोश्चलत्वमुक्तं तौ सत्यशपथौ प्रत्युत स्थावरौ । यतः व्यतिक्रान्तौ परलोके नरकपातमिह लोके शिष्टासंव्यवहार्यतां च प्रयोजयत इत्यभिप्रायः । इहार्थ एवेत्यादि । इहार्थ एव इहलोकप्रयोजनक एव । अयं भावः— ययोः स्थावरत्वमुक्तं तौ प्रतिभूप्रतिग्रहौ प्रत्युत चलौ । यतः व्यतिक्रान्तौ इहलोके केवलमसंव्यवहार्यत्वलक्षणमनर्थं जनयतः, न तु परलोके कंचित् । किंच तौ बलापेक्षौ ।

प्रतिभूर्हि यदि बलवांस्तदा विश्वसनीयो भवति, प्रतिग्रहश्च तदाधातृप्रेमपात्रं चेद्विश्वसनीयो नान्यथेति । श्रीमूला.

**'संहिताः स्मः' इति सत्यसंधाः पूर्वे राजानः सत्येन संदधिरे ॥**

सत्यादिषु पूर्वपूर्वातिलङ्घनाद्गुणदोषकृतादुत्तरोत्तरस्यापेक्षणीयत्वप्राप्तिं कथयंस्तेषां लक्षणमाह— संहिताः स्म इतीत्यादि । सत्यसंधाः पूर्वे अवितथप्रतिज्ञा नलादयः । श्रीमूला.

**तस्यातिक्रमे शपथेनाग्न्युदकसीताप्राकारलोष्टहस्तिस्कन्धाश्वपृष्ठरथोपस्थशस्त्ररत्नबीजगन्धरससुवर्णहिरण्यान्यालेभिरे हन्युरेतानि त्यजेयुश्चैनं यः शपथमतिक्रामेदिति ॥**

सत्यस्य अवितथार्थवचनलक्षणस्य अतिलङ्घने अग्न्यादीनि आलेभिरे अग्न्यादीनि चतुर्दश पस्पृशुः । तानि च अग्निः, उदकम्, सीता लाङ्गलपद्धतिः तया भूमिर्लक्ष्यते, प्राकारलोष्टः, हस्तिस्कन्धः, अश्वपृष्ठम्, रथोपस्थम्, शस्त्रम्, रत्नम्, बीजं शाल्यादिधान्यबीजम्, गन्धः चन्दनादिः, रसः, सुवर्णं हेम, हिरण्यं नाणकः, इत्येवं चतुर्दश । हन्युरेतानीत्यादि । अग्न्याद्यालम्भनपूर्वशपथकर्तारं शपथातिक्रमे अग्न्यादीनि नानुगृह्णीयुरिति विश्वासादित्यर्थः । श्रीमूला.

**शपथातिक्रमे महतां तपस्विनां मुख्यानां वा प्रातिभाव्यबन्धः प्रतिभूः । तस्मिन् यः परावग्रहसमर्थान् प्रतिभुवो गृह्णाति सोऽतिसंधत्ते । विपरीतोऽतिसंधीयते ॥**

शपथस्य अग्न्याद्यालम्भनपूर्वार्थवचनलक्षणस्य कालदोषात् पुरुषदोषाच्च अतिक्रमे जायमाने महतां तपस्विनां मुख्यानां वा ग्रामादिप्रधानानां वा प्रातिभाव्यबन्धः प्रतिभूत्वेन नियमनं प्रतिभूः प्रतिभूसंज्ञं विश्वासस्थानम् । तस्मिन्निति । प्रातिभाव्यबन्धे यः परावग्रहसमर्थान् परेषां प्रतिज्ञातार्थत्यागिनां निग्रहणे शक्तान् प्रतिभुवः गृह्णाति सः अतिसंधत्ते वञ्चयति परम् । विपरीतः परावग्रहासमर्थप्रतिभूग्राही अतिसंधीयते वञ्च्यते परेण । श्रीमूला.

**बन्धुमुख्यप्रग्रहः प्रतिग्रहः । तस्मिन् यो दूष्यामात्यं दूष्यापत्यं वा ददाति सोऽतिसंधत्ते । विपरीतोऽतिसंधीयते । प्रतिग्रहग्रहणविश्वस्तस्य हि परश्छिद्रेषु निरपेक्षः प्रहरति ॥**

बन्धुमुख्यानां परकीयानां प्रग्रहः परवचनविश्वासार्थमाधित्वेन ग्रहणं प्रतिग्रहः । तस्मिन्निति । प्रतिग्रहे यः दूष्यामात्यं दूष्यममात्यं दूष्यापत्यं वा दूष्यमपत्यं वा ददाति आधीकरोति सः अतिसंधत्ते अर्थादाधिग्राहिणम् । विपरीतः दीयमानतथाविधाधिग्राही अतिसंधीयते । अतिसंधानप्रकारमाह— प्रतिग्रहग्रहणविश्वस्तस्य हीति । 'परस्मात् प्रतिग्रहो मया गृहीतः' इति विस्रम्भेण स्थितस्य हि विजिगीषोः छिद्रेषु परः शत्रुः निरपेक्षः स्वदत्तप्रतिग्रहनिरादरः प्रहरति । श्रीमूला.

**अपत्यसमाधौ तु । कन्यापुत्रदाने ददत् तु कन्यामतिसंधत्ते । कन्या ह्यदायादा परेषामेवार्थाय क्लेशाय च । विपरीतः पुत्रः ॥**

अपत्यसमाधौ त्विति । अपत्यप्रतिग्रहविषये विशेष उच्यते इति शेषः । कन्यापुत्रदान इति । कन्यायाः पुत्रस्य च दानप्रसङ्गे कन्यां ददत् अतिसंधत्ते । कुत इत्याह— कन्या हीति । सा हि अदायादा अदायहरा परेषामेव अर्थाय प्रयोजनाय, परोपभोग्यत्वात्, क्लेशाय च धनव्ययादिद्वारेण पितुर्दुःखाय च भवति । पुत्रः विपरीतः दायादः पितुः स्वार्थाय क्लेशशान्तये च कल्पते इत्यर्थः । श्रीमूला.

**पुत्रयोरपि जात्यं प्राज्ञं शूरं कृतास्त्रमेकपुत्रं वा ददाति सोऽतिसंधीयते । विपरीतोऽतिसंधत्ते । जात्यादजात्यो हि लुप्तदायादसंतानत्वादाधातुं श्रेयान् । प्राज्ञादप्राज्ञो मन्त्रशक्तिलोपात् । शूरादशूर उत्साहशक्तिलोपात् । कृतास्त्रादकृतास्त्रः प्रहर्तव्यसंपल्लोपात् । एकपुत्रादनेकपुत्रो निरपेक्षत्वात् ॥**

संध्यर्थं परस्परपुत्राधाने विशेषमाह— पुत्रयोरपीति । पुत्रद्वयमध्ये जात्यं समानजातीयं प्राज्ञं शूरं कृतास्त्रम् अस्त्रविद्याशिक्षितम् एकपुत्रं वा ददाति यः सः अति-

संधीयते। विपरीतः अजात्याप्राज्ञादिपुत्रदायी अतिसंधत्ते। अजात्याद्याधानस्य श्रेयस्त्वं समर्थयते— जात्यादिति। समानजातीयात् अजात्यो हि लुप्तदायादसंतानत्वान् राज्यहरसंतानरहितत्वाद्धेतोः आधातुं श्रेयान् आधीयमान आधातुः श्रेयस्कर इत्यर्थः। प्राज्ञादप्राज्ञ इत्यादि। वाक्यत्रयं स्पष्टार्थम्। तत्र प्रहर्तव्यसंपल्लोपादित्यस्य प्रहरणसाधनगुणसमृद्धिविरहादित्यर्थः। एकपुत्रादिति। एकेन पुत्रेण युक्तो यः पुत्रमाधत्ते तदपेक्षया अनेकपुत्रः अनेकैः पुत्रैर्युक्तो यस्तदन्यतमं पुत्रमाधत्ते स श्रेयान् अतिसंधाता भवतीत्यर्थः। कुतः? निरपेक्षत्वात् पुत्रान्तरसत्त्वेनाऽऽधीयमानपुत्रनिरादरत्वादित्यर्थः। अथवा एकपुत्रादित्यादेरयमर्थः— एकपुत्रादिति। एक एव पुत्रः एकपुत्रः, तस्मात् तदपेक्षया अनेकपुत्रः एकपुत्रभिन्नः अर्थाद्बहुपुत्रान्यतमः आधातुं श्रेयान् अधीयमान आधातुः श्रेयस्करः। कुतः? निरपेक्षत्वात् स्वपित्रा पुत्रान्तरयुक्तेनोपेक्ष्यमाणत्वादिति। श्रीमूला.

**जात्यप्राज्ञयोर्जात्यमप्राज्ञमैश्वर्यप्रकृतिरनुवर्तते। प्राज्ञमजात्यं मन्त्राधिकारः। मन्त्राधिकारेऽपि वृद्धसंयोगाज्जात्यकः प्राज्ञमतिसंधत्ते॥**

अथ जात्यादिषूत्तरोत्तरापेक्षया पूर्वपूर्वस्यातिशयं समर्थयते— जात्यप्राज्ञयोरिति। तयोर्मध्ये जात्यम् अप्राज्ञम् ऐश्वर्यप्रकृतिः राज्यस्वामित्वम् अनुवर्तते। अतश्च राज्यदायहरत्वं तस्य गुणः। प्राज्ञम् अजात्यं मन्त्राधिकारः मन्त्रशक्तिः अनुवर्तते। अतश्च मन्त्रशक्तियुक्तत्वं तस्य गुणः। एवमुभयोः पृथग्गुणसत्त्वे विशेषमाह— मन्त्राधिकारेऽपीति। प्राज्ञस्य मन्त्रशक्तियोगे सत्यपि जात्यकः जन्मसिद्धराज्यस्वामिभावः वृद्धसंयोगात् विद्यावृद्धसंयोगं प्राप्य प्राज्ञम् अतिसंधत्ते अतिशेते। जात्यो वृद्धोपासनया प्राज्ञगुणं मन्त्राधिकाररूपमर्जयितुं शक्नोति, प्राज्ञस्तु जात्यगुणं राज्यार्हत्वलक्षणं नार्जयितुं शक्नोतीत्यभिप्रायः। श्रीमूला.

**प्राज्ञशूरयोः प्राज्ञमशूरं मतिकर्मणां योगोऽनुवर्तते। शूरमप्राज्ञं विक्रमाधिकारः। विक्रमाधिकारेऽपि हस्तिनमिव लुब्धकः प्राज्ञः शूरमतिसंधत्ते॥**

प्राज्ञशूरयोर्गुणकथनपूर्वं विशेषमाह— प्राज्ञशूरयोरित्यादि। मतिकर्मणां योगः बुद्धिमत्कर्मसंबन्धः। विक्रमाधिकारः पराक्रमोद्योगः। हस्तिनमिव लुब्धक इति बुद्धियोगमाहात्म्यस्य दृष्टान्तप्रदर्शनम्। श्रीमूला.

**शूरकृतास्त्रयोः शूरमकृतास्त्रं विक्रमव्यवसायोऽनुवर्तते। कृतास्त्रमशूरं लक्षलम्भाधिकारः। लक्षलम्भाधिकारेऽपि स्थैर्यप्रतिपत्त्यसंमोषैः शूरः कृतास्त्रमतिसंधत्ते॥**

शूरकृतास्त्रयोर्गुणमाह— शूरकृतास्त्रयोरिति। तयोर्मध्ये शूरम् अकृतास्त्रम् अशिक्षितास्त्रं विक्रमव्यवसायः पराक्रमोद्योगः अनुवर्तते। कृतास्त्रम् अशूरं लक्षलम्भाधिकारः अस्त्रस्य यथालक्ष्यप्रापणशक्तिः अनुवर्तते। विशेषमाह— लक्षलम्भाधिकारेऽपीति। तत्सत्त्वेऽपि स्थैर्यप्रतिपत्त्यसंमोषैः— स्थैर्यं निष्कम्पत्वम्, प्रतिपत्तिः सङ्कटे सद्यःक्रियानुष्ठानम्, असंमोषः असंमोहः आत्मरक्षणावधानम्, इत्येतैर्गुणैः शूरः कृतास्त्रम् अतिसंधत्ते अतिशेते। श्रीमूला.

**बह्वेकपुत्रयोर्बहुपुत्र एकं दत्त्वा शेषवृत्तिस्तब्धः संधिमतिक्रामति नेतरः॥**

बहुपुत्रैकपुत्रयोर्मध्ये बहुपुत्रः एकम् अन्यतमं पुत्रं दत्त्वा संध्यर्थमाधाय शेषवृत्तिस्तब्धः अवशिष्टपुत्रसद्भावदृप्तः सन्। शेषप्रतिस्तब्ध इत्यपि पाठः। संधिम् अतिक्रामति लङ्घयति। इतरः एकपुत्रः नातिक्रामति। अतो बहुपुत्रः एकपुत्रमतिशेते इत्यभिप्रायः। पूर्वम् 'एकपुत्रादनेकपुत्रो निरपेक्षत्वात्' इत्याधेयस्याऽऽधेयान्तरापेक्षया विशेष उक्तः, इह तु आधेयगतविशेषद्वारक एव आधातुराधात्रन्तरापेक्षया विशेष उच्यते मन्दबुद्धिप्रबोधनार्थम्। श्रीमूला.

**पुत्रसर्वस्वदाने संधिश्चेत् पुत्रफलतो विशेषः। समफलयोः शक्तप्रजननतो विशेषः। शक्तप्रजननयोरप्युपस्थितप्रजननतो विशेषः॥**

उभयोरेकपुत्रत्वे विशेषमाह— पुत्रसर्वस्वदान इति। पुत्रसर्वस्वम् एकः पुत्रः, तस्य दाने संधिश्चेत् पुत्रफलतो विशेषः— पुत्रस्य फलं पुत्रवत्ता, तत्कृतो विशेषः। अयमाशयः— स चेदेकः पुत्रः पुत्रवान् भवेत् तं

दद्यात् कदाचित् संध्यतिक्रमेण तदपायेऽपि तत्पुत्रस्य राज्यैश्वर्यभोगयोग्यस्य स्थितत्वेन दातुरत्यन्तहान्यभावात् । अपुत्रैकपुत्रदातुस्तु हानिरेवेति । सपुत्रैकपुत्रत्वे द्वयोः समाने गर्भोत्पादनशक्तियुक्तस्य पुत्रस्य तच्छक्तिहीनपुत्रापेक्षया गुणातिशय इत्याह— समफलयोरित्यादि । शक्तप्रजननतः— शक्तं स्वशक्तिविषयभूतं प्रजननं गर्भोत्पादनं यस्य स शक्तप्रजननः, ततः तस्येत्यर्थः । शक्तप्रजननयोरिति । उभयोरपि एकपुत्रयोः गर्भोत्पादनशक्तिमतोः सतोः उपस्थितप्रजननतो विशेषः आसन्नगर्भोत्पादनस्य गुणातिशयः । अतश्च स न देय इत्यर्थः । श्रीमूला.

**शक्तिमत्येकपुत्रे तु लुप्तपुत्रोत्पत्तिरात्मानमादध्यात्, न चैकपुत्रमिति ॥**

पुत्रोत्पादनशक्ते राज्यभारवहनशक्ते वा एकस्मिन्नेव पुत्रे विद्यमाने लुप्तपुत्रोत्पत्तिः स्वयं पुत्रोत्पादनशक्तिहीनः आत्मानम् आदध्यात् आधीकुर्यात् । न चैकपुत्रं न त्वेकं पुत्रमादध्यात् । इतिशब्दः संधिकर्मप्रकरणसमाप्तिद्योतकः । श्रीमूला.

**अभ्युच्चीयमानः समाधिमोक्षं कारयेत् ॥**

'संधिमोक्षः' इति सूत्रम् । संध्यर्थमाहितः पुत्रादिरिह संधिरित्युपचर्यते । तस्य मोक्षः मोचनोपायः उच्यते इति सूत्रार्थः । संधेर्दृढीकरणमुक्तम्, मोचनमिदानीमभिधीयते इति संगतिः ।

अभ्युच्चीयमान इति । संधिवशादुपचितशक्तिसिद्धिः समाधिमोक्षं शत्रुविजिगीषुभ्यां संभूयोभयसंवादेन विश्वासार्थमाहितः समाधिः मोक्षं कारयेत् अनुतिष्ठेत् । श्रीमूला.

**कुमारासन्नाः सत्रिणः कारुशिल्पिव्यञ्जनाः कर्माणि कुर्वाणाः सुरुङ्गया रात्रावुपखानयित्वा कुमारमपहरेयुः । नटनर्तकगायनवादकवाग्जीवनकुशीलवप्लवकसौभिका वा पूर्वप्रणिहिताः परमुपतिष्ठेरन् । ते कुमारं परंपरयोपतिष्ठेरन् । तेषामनियतकालप्रवेशस्थाननिर्गमनानि स्थापयेत् । ततस्तद्व्यञ्जनो वा रात्रौ प्रतिष्ठेत ॥**

मोक्षोपायमाह— कुमारेत्यादि । कुमारासन्नाः आहितस्य कुमारस्य आसन्नाः सत्रिणः गूढपुरुषाः कारुशिल्पिव्यञ्जनाः— कारवः तक्षायस्कारादयः, शिल्पिनः स्वर्णकारादयः, तद्वेषाः, भूत्वेति शेषः, कर्माणि शकटभूषणादीनि कुर्वाणाः सुरुङ्गया भूम्यन्तस्तिर्यक्खातवर्त्मना रात्रौ उपखानयित्वा सुरुङ्गाप्रवेशद्वारं कुमारगृहसमीपे कारयित्वा कुमारम् अपहरेयुः । अन्यमपहरणोपायमाह— नटनर्तकेत्यादि । नटादयोऽष्टौ वा । तत्र नटः अभिनयविचक्षणः, नर्तकः गात्रविक्षेपमात्रकर्ता, गायनः गीतज्ञः, वादकः वाद्यनिपुणः, वाग्जीवनः कथोपजीवी, कुशीलवः श्लोकपाठकः, प्लवकः खड्गाग्रनर्तकः, सौभिकः आकाशयानिकः । पूर्वप्रणिहिताः प्रागेव विजिगीषुणा प्रणिहिताः परं शत्रुम् उपतिष्ठेरन् आश्रयेयुः । ते तथा परमाश्रित्य तिष्ठन्तः कुमारम् आधिभूतं परंपरया क्रमेण उपतिष्ठेरन् स्वविद्यया राजामात्यादिप्रीत्युत्पादनद्वारेण उपसमागच्छेयुः । तेषां नटादीनां तथोपतिष्ठमानानाम् अनियतकालप्रवेशस्थाननिर्गमनानि यथेप्सिते काले स्ववासगृहे प्रवेशम् अवस्थानं ततो निष्क्रमणं च स्थापयेत् राजानुज्ञया व्यवस्थापयेत्, अर्थात् कुमारः । ततः तद्व्यञ्जनो वा नटाद्यन्यतमवेषधारी च भूत्वा रात्रौ प्रतिष्ठेत नटादिभिः सह निर्गत्य स्वदेशं प्रयायात् । श्रीमूला.

**तेन रूपाजीवाभार्याव्यञ्जनाश्च व्याख्याताः ॥**

नटाद्यन्यतमव्यञ्जनतया निर्गमकथनेन रूपाजीवाव्यञ्जनतया भार्याव्यञ्जनतया च निर्गमनं व्याख्यातप्रायमित्याह— तेन रूपाजीवेत्यादि । श्रीमूला.

**तेषां वा तूर्यभाण्डफेलां गृहीत्वा निर्गच्छेत् ॥**

उपायान्तरमाह— तेषां वेति । नटनर्तकादीनां वा तूर्यभाण्डफेलां तूर्यफेलां वादित्रपेटीं भाण्डफेलाम् आभरणपेटीं च गृहीत्वा निर्गच्छेत्, अर्थात् तत्कलाप्रदर्शनसमाप्तौ । श्रीमूला.

**सूदारालिकस्नापकसंवाहकास्तरककल्पकप्रसाधकोदकपरिचारकैर्वा द्रव्यवस्त्रभाण्डफेलाशयनासनसंभोगैर्निर्ह्रियेत ॥**

अन्यमुपायमाह— सूदारालिकेत्यादि । सूदादयः अष्टौ । तत्र सूदः सूपकारः, आरालिकः भक्ष्यकारः, स्नापकः मज्जनादिकारयिता, संवाहकः अङ्गमर्दकः, आस्तरकः

शयनचिन्तकः, कल्पकः नापितः, प्रसाधकः अलंकर्ता, उदकपरिचारकः उदकदानाधिकृतः। एतैर्वा कर्तृभिः द्रव्यवस्त्रादिसंभोगैः— द्रव्यं निहतच्छागादि, वस्त्रं प्रसिद्धम्, भाण्डफेला भूषणपेटी, शयनं शयनीयम्, आसनम्, इत्येतेषां संभोगैः संभुक्तैर्द्रव्यादिभिर्बहिर्निर्ह्रियमाणैः सहेत्यर्थः, निर्ह्रियेत बहिर्नीयेत कुमारः।

श्रीमूला.

**परिचारकच्छद्मना वा किंचिदरूपवेलायामादाय निर्गच्छेत्। सुरङ्गामुखेन वा निशोपहारेण। तोयाशये वा वारुणं योगमातिष्ठेत्॥**

उपायान्तरमाह— परिचारकच्छद्मना वेति। परिचारकव्याजेन वा किंचित् द्रव्यं परिचारकग्रहणोचितम् अरूपवेलायाम् अग्राह्यरूपायां सान्धकारायां वेलायाम् आदाय स्वयं गृहीत्वा निर्गच्छेत्। प्रकारान्तरमाह— सुरङ्गामुखेन वा निशोपहारेणेति। रात्रौ भूतबलिदानापदेशेन द्रष्टृजनसांनिध्यं परिहृत्य सुरङ्गाद्वारेण निर्गच्छेत्। प्रकारान्तरमाह— तोयाशये वेत्यादि। नदनदीसरोरूपे महति जलाशये वा वारुणं योगम् आतिष्ठेत् 'उदकवस्तिना जरायुणा वा शिरोवगूढनासः' (कौ. १३।१) इत्यादिना दुर्गलम्भोपाये वक्ष्यमाणम् उदकान्तःसंचरणलक्षणमुपायमाश्रित्य निर्गच्छेदित्यर्थः।

श्रीमूला.

**वैदेहकव्यञ्जना वा पक्वान्नफलव्यवहारेणाऽऽरक्षिषु रसमवचारयेयुः॥**

वणिग्वेषा वा आरक्षिषु पक्वान्नफलव्यवहारेण आरक्षिपुरुषेषु पक्वान्नफलविक्रयवृत्त्या युक्ताः रसं विषं विषयुक्तमन्नादिकम् अवचारयेयुः आरक्षिपुरुषान् खादयेयुः। तेषु मोहमुपगतेषु कुमारो निर्गच्छेदित्यभिप्रायः।

श्रीमूला.

**दैवतोपहारश्राद्धप्रहवणनिमित्तमारक्षिषु मदनयोगयुक्तमन्नपानरसं वा प्रयुज्यापगच्छेत्। आरक्षकप्रोत्साहनेन वा॥**

दैवतोपहारनिमित्तं श्राद्धनिमित्तं प्रहवणनिमित्तम्— प्रहवणं तुष्टिभोजनम्, तन्निमित्तं च अर्थात् दैवतोपहाराद्युपयुक्तशेषम् अन्नपानरसं वा मदनयोगयुक्तम् आरक्षिषु प्रयुज्य मदकरद्रव्ययुक्तं कृत्वा रक्षिपुरुषान् खादयित्वा अपगच्छेत् कुमारः। आरक्षकप्रोत्साहनेन वेति। अथवा रक्षिपुरुषान् धनदानेन प्रभूतधनदानप्रतिज्ञया वा संतोष्य वा अपगच्छेदित्यर्थः।

श्रीमूला.

**नागरककुशीलवचिकित्सकापूपिकव्यञ्जना वा रात्रौ समृद्धगृहाण्यादीपयेयुः। (आरक्षिणां?) वैदेहकव्यञ्जना वा पण्यसंस्थामादीपयेयुः॥**

नगररक्षिप्रभृतयो ये रात्र्यभ्यनुज्ञातपुरसंचाराः तद्वेषा वा रात्रौ धनिकगृहाणि अग्निना आदीपयेयुः। वैदेहकव्यञ्जना वेति। तद्वेषा वा पण्यसंस्थाम् आपणशालाम् आदीपयेयुः। तन्निमित्ते जनव्याकुलीभावे वर्तमाने कुमारो निर्गच्छेदित्यर्थः।

श्रीमूला.

**अन्यद्वा शरीरं निक्षिप्य स्वगृहमादीपयेदनुपातभयात्। ततः संधिच्छेदखातसुरङ्गाभिरपगच्छेत्॥**

उपायान्तरमाह— अन्यद्वेति। अन्यत् शरीरं शवं वा निक्षिप्य स्वगृहे निवेश्य स्वगृहम् आदीपयेत् कुमारः। किमर्थमन्यशवनिक्षेपः? तत्राऽऽह— अनुपातभयात् स्वान्वेषणभयं परिहर्तुम्। दृष्टे हि शवे कुमारो दग्ध इति बुद्ध्या तदन्वेषणाय यत्नं रक्षिणो न कुर्युरिति। एवमादीपितात् स्वगृहात् कथं कुमारो निर्गच्छेत् तत्राऽऽह— तत इति। आदीपनानन्तरं संधिच्छेदखातसुरङ्गाभिः संधिच्छेदेन भित्तिरन्ध्रकरणेन खातसुरङ्गाभिः पुष्करिणीप्रणालीभिश्च अपगच्छेत्।

श्रीमूला.

**काचकुम्भभाण्डभारव्यञ्जनो वा रात्रौ प्रतिष्ठेत। *मुण्डजटिलानां प्रवासनान्यनुप्रविष्टो वा रात्रौ तद्व्यञ्जनः प्रतिष्ठेत। विरूपव्याधिकरणा-**

---

* सर्वेषु पुस्तकेष्वयमेव पाठः। श्रीमूलापुस्तकेऽपि मूले अयमेव पाठो मुद्रितः। श्रीमूलायां तु 'मुण्डजटिलप्रवासान्' इति पाठः प्रतीकत्वेनोपादाय प्रथमतो व्याख्यातः, पश्चात् यथाश्रुतपाठो निर्दिष्टः। श्रीमूलाव्याख्यातः पाठः कुत्रापि पाठान्तरटिप्पणीषु नोपलभ्यते।

**रण्यचरच्छद्मनामन्यतमेन वा। प्रेतव्यञ्जनो वा गूढैर्निर्ह्रियेत। प्रेतं वा स्त्रीवेषेणानुगच्छेत्॥**

काचभारः तृणकाष्ठादिवाही, कुम्भभारः जलवाहकः, भाण्डभारः अश्वाद्युपकरणवाही, तदन्यतमवेषो वा रात्रौ प्रतिष्ठेत। मुण्डजटिलप्रवासानिति। मुण्डजटिलानां विजिगीषुप्रणिहितानां प्रवासान् अर्थात् तान् प्रवसतः। 'मुण्डजटिलानां प्रवासनानि' इत्यपि पाठः। अनुप्रविष्टो वा रात्रौ तद्व्यञ्जनः मुण्डजटिलवेषः प्रतिष्ठेत तैः सह। विरूपव्याधिकरणेत्यादि। विरूपकरणम् औपनिषदिकोक्तयोगेन स्वाभाविकरूपविलक्षणरूपकरणम्, व्याधिकरणं व्याधितव्यञ्जनकरणम्, अरण्यचरच्छद्म पुलिन्दादिवेषः, इत्येतेषाम् अन्यतमेन वा। प्रतिष्ठेतेति वर्तते। प्रेतव्यञ्जनो वेति। तद्वेषो वा गूढैः गूढपुरुषैः निर्ह्रियेत अपनीयेत। प्रेतं वेति। शवं वा कंचिन्नीयमानं स्त्रीवेषेण, युक्त इति शेषः, अनुगच्छेत्। श्रीमूला.

**वनचरव्यञ्जनाश्चैनमन्यतो यान्तमन्यतोऽपदिशेयुः, ततोऽन्यतो गच्छेत्। चक्रचराणां वा शकटवाटैरपगच्छेत्॥**

अन्वेषकानुपातभयपरिहारार्थमाह— वनचरव्यञ्जनाश्चेति। वनचरवेषा गूढपुरुषाः, अन्वेषकैः पृष्टा इति शेषः, एनं कुमारं गतम् अन्यतो यान्तम् अन्यतोऽपदिशेयुः अन्येन वनमार्गेण गतं कथयेयुः। ततोऽन्यतो गच्छेदिति। कुमारस्तु वनचरव्यञ्जनापदिष्टान्मार्गादन्येन मार्गेण गच्छेत्, एवं हि गच्छन्नन्वेष्टृभिरग्राह्यो भवतीति। चक्रचराणां वेति। शकटचारिणां वा शकटवाटैः शकटसंघातैः सह अपगच्छेत्। श्रीमूला.

**आसन्ने चानुपाते सत्त्रं वा गृह्णीयात्। सत्त्राभावे हिरण्यं रसविद्धं वा भक्ष्यजातमुभयतः पन्थानमुत्सृजेत्। ततोऽन्यतोऽपगच्छेत्॥**

स्वान्वेष्टृजने निकटागते तु सत्त्रं वा गृह्णीयात् वनं वा आश्रयेत् वनसंकटदेशे निलीयेत। सत्त्राभावे हिरण्यं रसविद्धं विषयुक्तं भक्ष्यजातं वा उभयतः पन्थानं पथ्युभयपार्श्वयोः उत्सृजेत् विकिरेत्। तदुत्सर्गफलमाह— ततोऽन्यतोऽपगच्छेदिति। यत्रान्वेष्टृजनः उत्सृष्टहिरण्याद्यादानव्यग्रश्चरति ततोऽन्येन पार्श्वेनापसरेदित्यर्थः। श्रीमूला.

**गृहीतो वा सामादिभिरनुपातमतिसंदध्यात्। रसविद्धेन वा पथ्यदानेन॥**

अन्वेष्टृगृहीतस्य प्रतिपत्तिमाह— गृहीतो वेति। ग्रहणं प्राप्तः सामादिभिः सान्त्ववचनदानादिभिरुपायैः अनुपातम् अन्वेष्टृजनम् अतिसंदध्यात् वञ्चयित्वाऽपगच्छेत्। रसविद्धेन वा पथ्यदानेन विषयुक्तेन पाथेयदानेन वा अतिसंदध्यात् मूर्छयित्वा मारयित्वा वाऽपगच्छेत्। 'पथ्यदनेन' इति पाठे पथ्यशनेनेत्यर्थः। 'पाथेयेन' इत्येव माधवपाठः। श्रीमूला.

**वारुणयोगाग्निदाहेषु वा शरीरमन्यदाधाय शत्रुमभियुञ्जीत पुत्रो मे त्वया हत इति॥**

ग्रहणभयनिलीनस्य कुमारस्यापसरणोपायमाह— वारुणयोगाग्निदाहेषु वेति। पूर्वोक्तेषु वारुणयोगेषु अग्निदाहेषु च शरीरमन्यदाधाय, प्रयुक्तेष्विति शेषः, शत्रुम् अभियुञ्जीत विजिगीषुः। अभियोगनिमित्तमाह— पुत्रो मे त्वया हत इतीति। अपदिशन्निति शेषः। अभियोगवशाच्च 'कुमारो मृतः' इति मत्वा तदन्वेषणविमुखतां गते शत्रौ कुमारः सुखमपसरेदित्यभिप्रायः। श्रीमूला.

**उपात्तच्छन्नशस्त्रो वा रात्रौ विक्रम्य रक्षिषु। शीघ्रपातैरपसरेद्गूढप्रणिहितैः सह॥**

पूर्वोक्तसर्वोपायासंभवे कुमारः किं कुर्यात्तत्राऽऽह— उपात्तच्छन्नशस्त्रो वेत्यादि। गूढधृतं शस्त्रं गृहीत्वा रात्रौ रक्षिपुरुषान् हत्वा शीघ्रगामिभिरश्वादियानैः पूर्वसंकेतितगूढपुरुषसहितोऽपगच्छेदित्यर्थः। श्रीमूला.

## चाणक्यसूत्राणि

असामर्थ्ये संधिः

**[1]हीयमानः संधिं कुर्वीत॥**
**तेजो हि संधानहेतुस्तदर्थानाम्॥**
**नातप्तलोहो लोहेन संधीयते॥**

---

(१) चासू. ५२–५४.

## चाणक्यराजनीतिशास्त्रम्

संधिरविश्वास्यः

**'वैरिणा सह संधाय विश्वस्तो यः स्वपेत् सुखम् ।**
**स वृक्षाग्रे कृतस्वप्नः पतितः प्रतिबुध्यते ॥**

## मनुः

संधिः द्विविधः

**'समानयानकर्मा च विपरीतस्तथैव च ।**
**तदात्वायतिसंयुक्तः संधिर्ज्ञेयो द्विलक्षणः ॥**

(१) हिरण्यादिपणनिबन्धेन उभयानुग्रहार्थः संधिः । स कदाचित् द्वयोरपि तादात्विकफलः । कदाचित् एकस्य तदात्वे, अन्यस्य आयत्याम् । तथा च मनुः— समानयानेति । एवं विग्रहादिद्वैविध्यमपि उदाहार्यम् ।
विश्व. १।३४३

(२) समानयानकर्मा 'यानफलं सहितौ तुल्यौ गच्छावः समानफलभागितया, न च त्वयाऽहमुल्लङ्घनीयः । यत्ततो लप्स्यते तत्तव मम च भविष्यति' । अथवा 'त्वमन्यतो याहि, अहमन्यत्र यास्यामि' इत्येवमसमानयानकर्मा विपरीतः । मेधा.

(३) सांप्रतिकफलयोगेन आगामिफलावष्टम्भेन (वा) राजान्तरेण (सह) यत्र अन्यं प्रति यानकर्म क्रियते स समानयानकर्मसंधिः । यः पुनः 'त्वमत्र याहि, अहमत्र यास्यामि' इति सांप्रतिकागामिफलापेक्षयैव क्रियते सः असमानयानकर्मसंधिः । इत्येवं द्विप्रकारः संधिर्विज्ञेयः । * गोरा.

(४) संधिर्द्विधा— समानयानकर्मा किंचित् दूरं यानं कृत्वा यः क्रियते, विपरीतः स्वस्थानस्थेनैव क्रियमाणः । स च द्विविधोऽपि कश्चित् तदात्वसंयुक्तः तदैव देयफलः प्राप्यफलो वा । आयतिसंयुक्तस्तु कालान्तरे सफलोदयः अफलो वा । मवि.

(५) समानयानकर्मा संधिः, समानस्य एकफलस्य यानेन कर्मणा उभयोरनुसंधेयत्वात् । तदात्वं तत्कालः । आयतिः उत्तरकालः । तयोः सम्यक्फलसिद्धये युक्तः साधुः । स च संधेर्विशेषणम् । * मच.

(६) 'लब्धसमानयानयोः समानं भवेत्' इति कृतसंयोगद्वयाद्यानं यानसमर्थफलं कर्म युद्धादिकं च समानं यस्मिन् स समानयानकर्मा । तदात्वायतिसंयुक्तः । तदात्वं वर्तमानः कालः । आयतिः भविष्यत्कालः । क्रियमाणकरिष्यमाणयोः कार्ययोरित्यर्थः । नन्द.

(७) समानं यानकर्म यस्य स समानयानकर्मा शत्रोः समानयानहस्त्यश्वादीनि, च पुनः विपरीतः शत्रुः हस्त्यश्वादिभिर्यदा हीनः तदा तु आयतिसंयुक्तः भाग्ययुक्तः संधिर्द्विलक्षणो ज्ञेयः । भाच.

संधिकालः

**'यदाऽवगच्छेदायत्यामाधिक्यं ध्रुवमात्मनः ।**
**तदात्वे चाल्पिकां पीडां तदा संधिं समाश्रयेत् ॥**

(१) आयतिः आगामी कालः । यद्येवं मन्येत— 'समबलो ममायमपि, एष न्यूनबलो वा, कालात्तु लब्धकृत्योपजापेन मित्रग्रहेण वा शक्नोम्येनमभिभवितुम्', तदा संधिं कुर्यात् । आधिक्यम् अधिकबलता । ध्रुवं निश्चितम् । तदात्वे । वर्तमानकालवचनोऽयम् । मेधा.

(२) यदा आगामिनि काले आत्मनो निश्चितमाधिक्यं मन्येत, सांप्रतिकश्च अल्पः उपक्षयः, तदोपक्षयमङ्गीकृत्यापि संधिमेवाऽऽश्रयेत् । $ गोरा.

---

* ममु. गोरावत् । राप्र. गोरागतम् ।

(१) चाशा. ७।४४.

(२) मस्मृ. ७।१६३ ; विश्व. १।३४३ कर्मा च (कर्मा वा) ; राक. १११ तदात्वा (तदा त्वा) द्विलक्षणः (विचक्षणैः) ; राप्र. ३२५ ; भाच. तदात्वा (तदा त्वा).

* शेषं गोरागतम् ।

$ मवि., रार., भाच. गोरागतम् । ममु. गोरावत् ।

(१) मस्मृ. ७।१६९ ; राक. ११२ चाल्पिकां (वाऽधिकां) ; रार. ५७ ; राप्र. ३२६ ऽव (ऽधि).

(३) संध्यादिषण्णां कदा किं कार्यमित्यपेक्षायामादौ संधेः(?धिः), तदाह– यदेति । आयंत्याम् उदर्के । आधिक्यं बहुलोत्पत्तिम् । तदात्वे तत्काले अल्पधनादिपीडामङ्गीकृत्यापि संधिं समाश्रयेत्, स्वप्रकृत्याद्यवशतया-पराजयस्यैव संभाव्यमानत्वात् । * मच.

## विष्णुधर्मोत्तरपुराणम्

संधिलक्षणम्, संधियोग्यो वैरी

[१]पणबन्धः स्मृतः संधिः ॥

संधिः हस्त्यश्वादिदानादिना परस्परमुपकर्तव्यमित्यादि-व्यवस्था । तदुक्तम्— पणबन्ध इति । राप्र. ३२४

[२]समेन संधिरन्वेष्यो हीनेन च बलीयसा ॥

स च समेन बलीयसा वा कार्यः । तदुक्तम्— समेनेति । स्वयं हीनेन सता समेन सह बलीयसा वा सह संधिरन्वेष्यः । राप्र. ३२६

## अग्निपुराणम्

षोडश संधिप्रकाराः, मुख्याः संधयः

[३]बलवद्विगृहीतेन संधिं कुर्याच्छिवाय च ।
कपाल उपहारश्च संतानः संगतस्तथा ॥
उपन्यासः प्रतीकारः संयोगः पुरुषान्तरः ।
अदृष्टनर आदिष्ट आत्माऽपि स (? आत्मामिष) उपग्रहः ॥
परिक्रमस्तथा(? क्रयस्तथो) च्छिन्नस्तथा च परदूषणम्(? णः)।
स्कन्धोपनेयः संधिश्च संधयः षोडशेरिताः ॥
*परस्परोपकारश्च मैत्रः संबन्धक(? ज)स्तथा ।
उपहारश्च चत्वारस्तेषु मुख्याश्च संधयः ॥

असंधेया विंशतिः पुरुषाः

बालो वृद्धो दीर्घरोगस्तथा बन्धुबहिष्कृतः ।
भीरुको भीरुकजनो लुब्धो लुब्धजनस्तथा ॥
विरक्तप्रकृतिश्चैव विषयेष्वतिशक्तिमान् ।
अनेकचित्तमन्त्रश्च देवब्राह्मणनिन्दकः ॥
दैवोपहतकश्चैव दैवनिन्दक एव च ।
दुर्भिक्षव्यसनोपेतो बलव्यसनसंकुलः ॥
स्वदेशस्थो बहुरिपुर्मुक्तः कालेन यश्च ह ।
सत्यधर्मव्यपेतश्च विंशतिः पुरुषा अमी ॥
एतैः संधिं न कुर्वीत विगृह्णीयात्तु केवलम् ॥

## कामन्दकीयनीतिसारः

संधिकालः, संधिप्रकाराः

[१]बलिना विगृहीतः सन् नृपोऽनन्यप्रतिक्रियः ।
आपन्नः संधिमन्विच्छेत् कुर्वाणः काल-यापनम् ॥

(१) षाड्गुण्यस्य कारणं मण्डलं व्यापाररूपं च तच्चरितमुक्तम् । इदानीं षाड्गुण्यमेव स्वरूपतः सर्गत्रयेणोच्यते । तत्र षडेव गुणाः षाड्गुण्यम्, चातुर्वर्ण्यवत् । ते च संधिविग्रहयानासनद्वैधीभावसमाश्रयाः । तत्र संधिविग्रहयोः प्रधानत्वात् तद्विकल्पः सर्गत्रयेणोच्यते । तत्र संधिमधिकृत्याऽऽह– आपन्न इत्यादि । आपन्नः आपद्गतः, बलीयसाऽभिभूयमानत्वात् । संधिं पणबन्धम् । कुर्वाणः कालयापनं स्वशक्तिपूरणार्थम् । जम.

---

* नन्द. मचगतम् ।

(१) विध. २।१५०।३ ; अग्नि. २३४।१८ ; राप्र. ३२४ (=) ; राकौ. २४४.

(२) विध. २।१५०।५ बलीयसा (बलीयसः) ; अग्नि. २३४।२० हीनेन (ऽहीनेन) ; राप्र. ३२६ (=) ; राकौ. २४४ विधवत्.

(३) अग्नि. २४०।६–१४.

* परस्परोपकार इति पूर्वोक्तप्रकारेषु प्रतीकारस्य निर्देशः । मैत्र इति संगतनिर्देशः । संबन्धज इति संताननिर्देशः । अत्र प्रकारषोडशकविषये मुख्यचतुष्टयविषये च कामन्दकीयनीतिसारोऽनुसंधेयः ।

(१) कानी. ९।१ ; उनिसा. बलिना वि (बलवद्वि) आपन्नः (स्वापन्नः) यापनम् (यापनाम्) ; नीम. ४४ प्रथमचरणे (बलीयसाऽभियुक्तस्तु) यापनम् (यापनाम्).

(२) विशुद्धमण्डले षाड्गुण्यप्रयोगयोग्ये विजिगीषौ पूर्वपठितसंधिप्रयोगं दर्शयन् संधिकार्यस्यावस्थामेव तावदाह– बलवद्विगृहीत इति । बलवद्विगृहीतः शक्तित्रयसंपन्नशत्रवभियुक्तः, अनन्यप्रतिक्रियः दुर्गमित्रादिप्रतिक्रियारहितः, नितरां हीयमान इत्यर्थः, सुतराम् आपन्नः संकटापन्नः, कालयापनां कुर्वाणः अर्थात् वाङ्मात्रेण केवलम्, संधिमन्विच्छेत्, न तु कर्मणा सहसैव । एवं कृते कदाचिदभियोक्तुर्व्यसने समुपस्थिते विग्रहावसरो घटेतेत्यभिप्रायः । उनिसा.

[1]कपाल उपहारश्च संतानः संगतस्तथा ।
उपन्यासः प्रतीकारः संयोगः पुरुषान्तरः ॥
अदृष्टनर आदिष्ट आत्मामिष उपग्रहः ।
परिक्रयस्तथोच्छिन्नस्तथा च परदूषणः ॥
स्कन्धोपनेयः संधिश्च षोडशः परिकीर्तितः ।
इति षोडशकं प्राहुः संधिं संधिविचक्षणाः ॥

(१) संधिविकल्पानाह– कपाल इत्यादिना । अत्र संधेयो द्विविधः– अनभियोक्ता अभियोक्ता च । तत्र उपन्यासप्रतीकारसंयोगास्त्रयः संधयोऽनभियोक्तरि द्रष्टव्याः । शेषास्त्रयोदश अभियोक्तरि द्रष्टव्याः । जम.

(२) षोडशविधसंधिं श्लोकत्रयेणोपदेष्टुमाह– कपाल इति । उनिसा.

* [2]तथाऽन्तर्भेदरूपेण भवेत्येकोऽप्यनेकधा ॥
कपालसंधिर्विज्ञेयः केवलं समसंधिकः ॥

(१) उद्दिष्टानां निर्देशमाह सार्धैश्चतुर्दशभिः श्लोकैः– कपालसंधिर्विज्ञेय इत्यादि । केवलं समसंधिक इति । इदमुक्तं भवति– यथा कपालपुटयोस्तुल्यायामपि प्रत्यासत्तौ नैकीभावो दृष्टः संधेः, एवमनयोरविश्वासान्नैकात्म्यम्, संधानमेव केवलं तुल्यमिति । जम.

(२) कपालोपहारसंधिद्वयलक्षणमभिधातुमाह– कपालेति । समसंधितः– घटकपालयोरिव विशिष्टयोररिविजिगीष्वोः शक्तिसाम्ये कोशदण्डाद्युपनतिं विनैव यः संधिः स समसंधिः, तस्मात् केवलम्, नान्यथा इत्यर्थः, कपालसंधिः । यथा सत्यकपालभङ्गप्रदेशे द्वितीयकपाले श्लेषिते बहिरभिन्न एव घटो दृश्यते, न च निरन्तरसंश्लेषः, तथा सत्यशपथादिसंधिकर्मरहितत्वात् वाङ्मात्रेण यः संधिः क्रियते स कपालसंधिरुच्यते, यथेष्टं व्यभिचारादित्यर्थः । उनिसा.

[1]संप्रदानाद्भवति य उपहारः स उच्यते ।
संतानसंधिर्विज्ञेयो दारिकादानपूर्वकः ॥

(१) संप्रदानादिति । स्वेच्छया द्रव्यस्याऽऽदावेव तावदुपह्रियमाणत्वात् उपहारः । दारिकादानपूर्वक इति । कन्यां दत्त्वा यः क्रियते । संतानहेतुत्वात् संतानसंधिः । जम.

(२) तथा संप्रदानात् कोशदण्डादीनां संप्रदानेन यः संधिः क्रियते स उपहारः तन्नामकः संधिः उच्यते । संतानसंगतनामकसंधिद्वयलक्षणमभिधातुमाह– संतानेति । दारिकादानपूर्वकः कन्यासंप्रदानकृतो यः संधिः स संतानसंधिः विज्ञेयः । उनिसा.

[2]सद्भिः संगतसंधिस्तु मैत्रीपूर्व उदाहृतः ।
यावदायुःप्रमाणं तु समानार्थप्रयोजनः ॥
[3]संगतः संधिरेवेह प्रकृष्टत्वात् सुवर्णवत् ।
अपरैः संधिकुशलैः काञ्चनः स उदाहृतः ॥
[4]संपत्तौ च विपत्तौ च कारणैर्यो न भिद्यते ।
संगतः संधिरेवेह काञ्चनः समुदाहृतः ॥

(१) मैत्रीपूर्वः संप्रदाने सत्यसति वा । यावदायुःप्रमाणं यावज्जीवम् । समानार्थप्रयोजन इति विश्वासादेकीभावगतत्वात् तुल्यरूपं प्रयोजनं यत्र सः । सख्यहेतुत्वात्

---

* 'अर्धमिदं ख-ग-योः परं मूलकोषयोर्दृश्यते, व्याख्यात्रा च न स्पृष्टम्' इति त्रिवेन्द्रम्–पुस्तके संपादकीया टिप्पणी ।

(१) कानी. ९१२–४.

(२) कानी. ९१५ ; उनिसा. संधिकः (संधितः).

(१) कानी. ९१६.

(२) कानी. ९१७; उनिसा. प्रमाणं (प्रमाणः).

(३) कानी. ९१८.

(४) कानी. ९१९ ; उनिसा. उत्तरार्धं नास्ति.

संगतसंधिः । प्रकृष्टत्वात् सख्यस्य । सुवर्णवदिति । एकभूतयोः सुवर्णसंधिः । अथवा संगतसंधिरेव सुवर्णवदिति सर्वलोहेभ्यः सर्वसंधिभ्य उत्कृष्टत्वात् काञ्चनसंधिरिति कैश्चित् व्यवह्रियते । एते चत्वारः संधयोऽभियोक्तरि संधेये द्रष्टव्याः । जम.

(२) मैत्रीपूर्वः मित्रताव्यवस्थापनपूर्वकः संधिः संगतसंधिः । स्पष्टमन्यत् । संगतसंधेः केनापि कारणेन अभेद्यत्वात् काञ्चनसंधित्वमपरसंमतमिति श्लोकद्वयेनाऽऽह— यावदिति । संगत इति । यावदायुःप्रमाणः अरिविजिगीष्वोः आयुषः प्रमाणं यावदस्यावस्थानमित्यर्थः । समानार्थप्रयोजनः । तयोर्द्वयोरपि अर्थः समानः प्रयोजनानि च समानानि भवन्ति । अर्थविषये कोशस्त्वदीयो मदीय एव, मदीयस्त्वदीय एवेति विभक्तिर्नास्ति, प्रयोजनविषये तु धर्मार्थकामविषयाणि प्रयोजनानि उभयोः समानानि, न तत्र विभक्तिः काचिदस्तीत्यर्थः । सुवर्णवत् प्रकृष्टत्वात् । स्पष्टमन्यत् । उनिसा.

**[1]भव्यामेकार्थसिद्धिं तु समुद्दिश्य क्रियेत यः ।**
**स उपन्यासकुशलैरुपन्यास उदाहृतः ॥**

(१) भव्यामिति कल्याणोदयाम् । 'अयं शत्रुरुभयापकारी, मयाऽस्मिन्नुच्छिन्ने भवतोऽप्यर्थसिद्धिः' इत्युपन्यस्य यः संधीयमाने क्रियते स उपन्यासः । जम.

(२) उपन्याससंधिलक्षणमाह— भव्यामिति । भव्यां शुभाम् एकार्थसंसिद्धिम् एकस्य भूम्याद्यर्थस्य या सिद्धिः तां समुद्दिश्य लक्षीकृत्य उपन्यासकुशलैः उपन्यासचातुरीविद्भिः 'त्वं गत्वा तां भूमिं गृहाण, अहमपि गत्वा तामेव भूमिं ग्रहीष्यामि' इति उपन्यासपूर्वकं यः संधिः क्रियते स उपन्याससंधिः उदाहृतः । उनिसा.

**[2]मयाऽस्योपकृतं पूर्वमयं प्रतिकरिष्यति ।**
**इति यः क्रियते संधिः प्रतीकारः स उच्यते ॥**

(१) 'अयं प्रतिकरिष्यति ममाऽऽपन्नस्य' इत्युपकारः । अयं प्रतीकारहेतुत्वात् प्रतीकारसंधिः । जम.

(२) प्रतीकारसंधिलक्षणमाह— मयेति । स्पष्टम् । उनिसा.

**उपकारं करोम्यस्य ममाप्येष करिष्यति ।**
**अयं चापि प्रतीकारो रामसुग्रीवयोरिव ॥**

(१) रामसुग्रीवयोरिवेति । तयोः समानव्यसनयोः रामेण प्रत्युपकारकामेन सुग्रीवस्य वालिवधपूर्वकेण राज्यदानेन प्रथममुपकृतमिति प्रसिद्धमेतत् । जम.

(२) श्लोकान्तरेण तदेवाऽऽह— उपकारमिति । स्पष्टम् । उनिसा.

**[1]एकार्थां सम्यगुद्दिश्य यात्रां यत्र हि गच्छतः ।**
**स संहतप्रयाणस्तु संधिः संयोग उच्यते ॥**

(१) एकार्थामिति एकयातव्यविषयाम् । गच्छतः वैरिविजिगीषू । तयोर्यत्र संहतयोः प्रयाणं स संयोगसंधिः, संभूयैकत्र गमनात् । एते त्रयः संधयोऽनभियोक्तरि द्रष्टव्याः । जम.

(२) संयोगसंधिलक्षणमाह— एकार्थामिति । एकार्थाम् एक एवार्थः प्रयोजनं यत्र ताम्, तुल्यप्रयोजनामित्यर्थः, यात्रां सम्यगुद्दिश्य सुचारुरूपेणाभिलक्ष्य यत्र संधौ अभिगच्छतः उद्यच्छतः, अरिविजिगीषू इत्यर्थः, स तु संधिः संहितप्रयाणः परमविश्वासयुक्तः संयोगः तन्नामा संधिः उच्यते । उनिसा.

**[2]आवयोर्योधमुख्याभ्यां मदर्थः साध्यतामिति ।**
**यस्मिन् पणः प्रक्रियते स संधिः पुरुषान्तरः ॥**

(१) आवयोर्योधमुख्याभ्यामिति त्वदीयेन मदीयेन च सेनापतिना मदर्थः साध्यः अस्मद्भूमौ व्युत्थानादिकं प्रसाधयितव्यम् । अयं विजिगीषोः पुरुषान्तरेण संधानात् पुरुषान्तरसंधिः । जम.

(२) पुरुषान्तरसंधिलक्षणमाह— आवयोरिति । यस्मिन् संधौ दण्डभयोपनतारिसमीपे एवं पणः प्रतिज्ञा

---

(१) कानी. ९।१०; उनिसा. सिद्धिं तु (संसिद्धिं).
(२) कानी. ९।११–१२.

(१) कानी. ९।१३; उनिसा. यत्र हि (यत्राभि) संहृत (संहित).
(२) कानी. ९।१४; जम. 'साध्यतामिति' इत्यत्र 'साध्य इत्यपि' इति भाषापुस्तकवत् पाठो भवेत्; उनिसा. मदर्थः (सदर्थः) शेषो भाषापुस्तकवत् पाठो भवेत्.

प्रक्रियते, विजिगीषुणेत्यर्थः , यत् ' अवयोः योधमुख्याभ्यां प्रधानयोद्धृपुरुषाभ्यां संहिताभ्यां सदर्थः भूमिलाभादिः साध्यः ' इति, स संधिः पुरुषान्तरः तन्नामक उच्यते । उनिसा.

**[1]त्वयैकेन मदीयार्थः संप्रसाध्यस्त्वसाविति ।**
**यत्र शत्रुः पणं कुर्यात्सोऽदृष्टपुरुषः स्मृतः ॥**

( १ ) त्वयैकेनेति न मया दण्डेन वा, त्वयैवैकेन । अयं विजिगीषोरमित्रार्थमन्यत्र साधयतः परेणादृष्टत्वात् अदृष्टपुरुषः संधिः । जम.

( २ ) अदृष्टनरसंधिस्वरूपमभिधातुमाह— त्वयैकेनेति । अदृष्टपुरुषः विजिगीषोः कश्चन पुरुषो न दृश्यते यत्र स इति । अन्यत् सर्वं सुप्रतीतम् । उनिसा.

**यत्र भूम्येकदेशेन पणेन रिपुरूर्जितः ।**
**संधीयते संधिविद्भिरादिष्टः स उदाहृतः ॥**

( १ ) भूम्येकदेशेनेति अर्धेन त्रिभागेन वा पणेन शेषप्रकृतिरक्षार्थं संधीयते । अयं परस्य बलवतोऽभिप्रेतत्वात् आदिष्टसंधिः । जम.

( २ ) आदिष्टसंधिलक्षणमभिधातुमाह— यत्रेति । यत्र संधौ ऊर्जितः प्रबलः रिपुः भूम्येकदेशेन पणेन भूम्येकदेशदानप्रतिज्ञया संधीयते स संधिविद्भिः संधिधर्मविशारदैः आदिष्टः तन्नामकः संधिः उच्यते । उनिसा.

**[2]स्वसैन्येन तु संधानमात्मामिष इति स्मृतः ।**
**क्रियते प्राणरक्षार्थं सर्वदानमुपग्रहः ॥**

( १ ) स्वसैन्येन तु संधानमिति । स्वसैन्येन सह स्वयं शत्रुसमीपमुपगम्य । अयमात्मानमामिषीकृत्य क्रियमाणत्वात् आत्मामिषसंधिः । सर्वदानमिति । आत्मनैव संपादनीयाः पुनरपि विषयाः, न तु प्राणा इति प्राणरक्षणार्थं सर्वराज्यदानं यत्र स उपग्रहः , सर्वथा शत्रूपग्रहहेतुत्वात् । जम.

( २ ) आत्मामिषसंधिस्वरूपमभिधातुमाह— स्वसैन्येन त्विति । स्वसैन्येन स्वहितेन सैन्येन यत् संधानं स आत्मामिषः तदाख्यया प्रसिद्धः संधिः स्मृतः । यतः प्राणरक्षार्थं सर्वदानादुपग्रहः क्रियते । सकलभूमिहिरण्यादिदानेनाप्यात्मरक्षार्थमुचितमुपग्रहीतुमित्यर्थः । उनिसा.

**[1]कोशांशेनाथ कुप्येन सर्वकोशेन वा पुनः ।**
**शेषप्रकृतिरक्षार्थं परिक्रय उदाहृतः ॥**

( १ ) कोशांशेनेति त्रिभागेन चतुर्भागेन वा । कुप्येन वस्त्रकम्बलादिना । अयं शेषप्रकृतीनामच्छिन्नानामिव परिक्रयणात् परिक्रयसंधिः । जम.

( २ ) परिक्रयसंधिलक्षणमभिधातुमाह— कोषांशेनेति । कोषांशेन कोषस्य तृतीयशतुर्थभागेन, कुप्येन सुवर्णरजतभिन्नेन, उक्तलक्षणेन सर्वकोषेण वा अथवा कोषसाकल्येन शेषप्रकृतिरक्षार्थं कोषवर्ज्यावशिष्टप्रकृतिसंरक्षणाय यः क्रियेत स परिक्रयः तन्नामकः संधिः उदाहृतः । उनिसा.

**भुवां सारवतीनां तु दानादुच्छिन्न उच्यते ।**
**सर्वभूम्युत्थितफलदानेन परदूषणः ॥**

( १ ) सारवतीनां कोशदण्डविष्टिजनिकानाम् । अयं सारभूम्युपहारात् उच्छिन्नस्यैव संधिः उच्छिन्नसंधिः । सर्वभूम्युत्थितफलदानेनेति । सर्वग्रहणमाधिक्यार्थम् । भूमिभ्यो यत् फलमुत्पद्यते तदतिरिक्तदानेनेत्यर्थः । अयं परस्य दूषणात् परदूषणः । तद्यथा— ' अपकर्तुकामो ह्यन्यमायादभ्यधिकमिच्छति ' इति । जम.

( २ ) उच्छिन्नपरदूषणाख्यसंधिद्वयलक्षणमाह— भुवामिति । सारभूमिदानमुच्छेदहेतुरित्यर्थः । सर्वभूम्युत्थितफलदानेन परदूषणः । ' तवैतत्सर्वं फलं न भवति, त्वया परोपद्रवः कृतः ' इति परोऽत्र दूष्यते इति तदाख्यः संधिः । उनिसा.

**[2]परिच्छिन्नं फलं यत्र स्कन्धस्कन्धेन नीयते ।**
**स्कन्धोपनेयं तं प्राहुः संधिं संधिविदो जनाः ॥**

---

( १ ) कानी. ९।१५–१६.

( २ ) कानी. ९।१७ ; उनिसा. दानमु ( दानादु ).

( १ ) कानी. ९।१८–१९.

( २ ) कानी. ९–२० ; उनिसा. नीयते ( दीयते ).

(१) परिच्छिन्नं त्वयैतावदुपनेतव्यमिति । स्कन्धस्कन्धेन खण्डखण्डेन । एते नव संधयोऽभियोक्तरि द्रष्टव्याः । जम.

(२) स्कन्धोपनेयसंधिलक्षणमाह— परिच्छिन्नमिति । परिच्छिन्नम् इयत्तया कृतसंख्यं फलं हिरण्यादि यत्र संधौ स्कन्धस्कन्धेन दीयते इयता कालेन एतावत्संख्यकं फलं देयमिति निबन्धेन व्यवस्थीयते तं स्कन्धोपनेयं तदाख्यं संधिं तज्ज्ञा वदन्तीत्यर्थः । उनिसा.

**[1]परस्परोपकारश्च मैत्रः संबन्धजस्तथा ।**
**उपहारश्च विज्ञेयाश्चत्वारोऽन्ये तु संधयः ॥**

(१) श्लोकत्रयेण मतभेदमाह— परस्परेत्यादि । चत्वारः संधय इति केचिदाहुः । तत्र परस्परोपकारः प्रतीकारसंधिः । तत्रोपन्याससंयोगयोरन्तरभावः, तत्र ह्युभयोरपि राज्ञोरेकार्थसिद्धया परस्परोपकारात् । मैत्रः संगतसंधिः । संबन्धजः संतानसंधिः । उपहारः चतुर्थः संधिः । तत्र शेषा अन्तर्भूताः, कोशदण्डभूमीनामुपह्रियमाणत्वादिति । जम.

(२) संभवतः संधिविशेषानभिधाय सुश्लिष्टसंधिलक्षणं येषां तानभिधातुमाह— परस्परोपकारश्चेति । परस्परोपकारः रामसुग्रीवयोरिव यः संधिः । मैत्रः मित्रत्वेनैव निरुपचरितेन यो भवति । संबन्धजः दारिकादानपूर्वकः । उपहारः यत्र कोषाद्याह्रियते । स्पष्टं शिष्टम् । उनिसा.

**[2]एक एवोपहारस्तु संधिरेतन्मतं हि नः ।**
**उपहारस्य भेदास्तु सर्वेऽन्ये मैत्रवर्जिताः ॥**

(१) स्वमतमाह— एक एवेति । मैत्रवर्जिताः संगतसंधौ संप्रदानाभावात् । सोऽन्यकाले दुर्लभ इत्येक एवेत्यवधारयति । जम.

(२) एकस्यैवोपहारस्य प्रकृतसंधित्वमस्मत्संमतमित्याह— एक एवेति । मैत्रवर्जिताः सर्वेऽन्ये त्रयः संधयः उपहारस्य भेदाः उपहारसंध्यन्तर्गता एव । स्पष्टमन्यत् । उनिसा.

(३) तत्र नीतिसारे यद्यप्यनेकविधस्तथाऽप्युपहारसंधिमैत्रीसंध्योरेव प्राधान्यमुक्तम्— 'एक एवोपहारस्तु . . .' । मैत्रीसंधिस्तु समयोरेव । क्वचिदन्यजयार्थं विषमयोरपि भवति । कन्यादानाद्युपकारसंधयस्तु अनयोरेवान्तर्भवन्ति । अतो न ते पृथक् निरूपिताः । नीम. ४४

**[1]अभियोक्ता बली यस्मादलब्ध्वा न निवर्तते ।**
**उपहारादृते तस्मात् संधिरन्यो न विद्यते ॥**

(१) तदेव स्फुटयन्नाह— अभियोक्तेत्यादि । अलब्ध्वा न निवर्तते, बलोद्वृत्तत्वात् । अनभियोक्ताऽप्युपन्यासप्रतीकारसंयोगसंधिष्वलब्धिवान् न घटते । तस्मादुपहारादृते संधिरन्यो नास्ति । जम.

(२) एतदेवोपपादयति— अभियोक्तेति । अभियोक्ता विजिगीषुः बली शक्त्यादिसंपूर्णः यस्मात् अलब्ध्वा न निवर्तते, तेन प्रार्थितमुपहरणीयमेव, तस्मादित्यादि सुगमम् । उनिसा.

असंधेयाः विंशतिः पुरुषाः

**[2]बालो वृद्धो दीर्घरोगी तथा ज्ञातिबहिष्कृतः ।**
**भीरुको भीरुकजनो लुब्धो लुब्धजनस्तथा ॥**
**[3]विरक्तप्रकृतिश्चैव विषयेष्वतिसक्तिमान् ।**
**अनेकचित्तमन्त्रश्च देवब्राह्मणनिन्दकः ॥**
**[4]दैवोपहतकश्चैव दैवचिन्तक एव च ।**
**दुर्भिक्षव्यसनोपेतो बलव्यसनसंकुलः ॥**
**[5]अदेशस्थो बहुरिपुर्युक्तः कालेन यश्च न ।**
**सत्यधर्मव्यपेतश्च विंशतिः पुरुषा अमी ॥**

---

(१) कानी. ९।२१.

(२) कानी. ९।२२ ; नीम. ४४ रेतन्मतं ( रेष मतो ).

(१) कानी. ९।२३ ; नीम. ४४ बली यस्मा ( बलीयस्त्वा ).

(२) कानी. ९।२४ ; नीम. ४४ रोगी ( रोगः ).

(३) कानी. ९।२५ ; नीम. ४४ मान् (भाक्) पू.

(४) कानी. ९।२६ ; नीम. ४४ उत्त.

(५) कानी. ९।२७ ; नीम. ४४ अदेश ( अक्लेश ) पू.

**[1]एतैः संधिं न कुर्वीत विगृह्णीयात्तु केवलम् ।**
**एते विगृह्यमाणा हि ध्रुवं यान्ति रिपोर्वशम् ॥**

(१) इदानीमसंधेयानभियोक्तॄन् निरूपयति त्रिंशता श्लोकैः । तत्रासंधेयानधिकृत्याऽऽह– बाल इत्यादि । जम.

(२) असंधेयमभिधातुं श्लोकपञ्चकेनाऽऽह– बाल इति । श्लोकानामर्थः सुबोधः । उनिसा.

**[2]बालस्यान्यप्रमाणत्वान्न लोको योद्धुमिच्छति ।**
**योद्धुं स्वयमशक्तः सन् परार्थे कोऽभियुज्यते ॥**

(१) कस्मादेवं विगृह्यमाणा वशं यान्तीत्याह– बालस्येत्यादि । बालस्य अप्राप्तव्यवहारस्य अप्रभावत्वात् । अन्यप्रमाणः स्वयं प्रभुशक्त्यभावात् । योद्धुं चासावशक्तः विक्रमस्याभावात् । जम.

(२) अनन्तरोक्तविंशतिसंख्यकानां पुरुषाणामेकैकशोऽसंधेयत्वमभिधातुमादौ बालस्य तावदसंधेयत्वे हेतुमाह– बालस्येति । स्पष्टम् । उनिसा.

**उत्साहशक्तिहीनत्वाद् वृद्धो दीर्घामयस्तथा ।**
**स्वैरेव परिभूयेते द्वावप्येतावसंशयम् ॥**

(१) दीर्घामयः राजयक्ष्मादिपीडितः । जम.

(२) वृद्धचिररोगिणोरसंधेयत्वे कारणमाह– उत्साहेति । उत्साहशक्तिहीनत्वात्– उत्साहोऽत्र उद्योगः, तच्छक्तिहीनत्वात् वृद्धः विग्रहासमर्थ इत्यर्थः । तथा एवं दीर्घामयः दीर्घव्याधिपीडितः । एतौ द्वावपि स्वैः ज्ञातिभिः एव परिभूयेते असंशयम् । उनिसा.

**सुखोच्छेद्यो हि भवति सर्वज्ञातिबहिष्कृतः ।**
**त एवैनं विनिघ्नन्ति ज्ञातयस्त्वात्मसात्कृताः ॥**

(१) सर्वज्ञातिबहिष्कृतः निराश्रयः । आत्मसात्कृताः विजिगीषुणा । स्वयमेवानुगच्छन्ति विजिगीषुमित्यर्थः । जम.

(२) सर्वज्ञातिबहिष्कृतस्यासंधेयत्वमाह– सुखोच्छेद्य इति । स्पष्टम् । उनिसा.

(१) कानी. ९।१२८ ; नीम. ४४ ध्रुवं (क्षिप्रं).
(२) कानी. ९।१२९–३२.

**भीरुर्युद्धपरित्यागात् क्षिप्रमेव विनश्यति ।**
**वीरोऽप्यवीरपुरुषः संग्रामे तैर्विमुच्यते ॥**

(१) भीरुः विभीतः । अवीरपुरुषः भीरुसैन्यः । तैर्विमुच्यते भीरुपुरुषैः । जम.

(२) भीरुभीरुकजनयोरसंधेयत्वे कारणमाह– भीरुरिति । श्लोकार्थः सुगमः । उनिसा.

**[1]लुब्धस्यासंविभागित्वान्न युध्यन्तेऽनुजीविनः ।**
**लुब्धानुजीवी तैरेव दानभिन्नैर्निहन्यते ॥**

(१) असंविभागित्वात् अकल्पितभृत्यजीवितत्वात् । तैरेवेति लुब्धैरनुजीविभिः । विजिगीषुणा दानेन भिन्नैः । जम.

(२) लुब्धलुब्धानुजीविकयोरसंधेयत्वं प्रतिपादयन्नाह– लुब्धस्येति । लुब्धस्य असंविभागित्वात् असम्यग्वृत्तिविधायित्वात् अनुजीविनः योद्धृपुरुषादयः न युध्यन्ते । लुब्धानुजीवितैः दानभिन्नैः दानेनैवानायत्तैः विहन्यते विजिगीषुरित्यर्थः । उनिसा.

**[2]संत्यज्यते प्रकृतिभिर्विरक्तप्रकृतिर्युधि ।**
**सुखाभियोगो भवति विषयेष्वतिसक्तिमान् ॥**

(१) विरक्तप्रकृतिः अदण्ड्यदण्डनाद्याचरणात् । विषयेषु स्त्रीपानादिषु । जम.

(२) विरक्तप्रकृतिकविषयातिसक्तिमतोरसंधेयत्वप्रतिपादनायाऽऽह– संत्यज्यत इति । पूर्वार्धं सुगमम् । विषयेष्वतिसक्तिमान् स्त्रीसंभोगमद्यपानाद्यासक्तचित्तः । प्रतीतमन्यत् । उनिसा.

**अनेकचित्तमन्त्रश्च द्वेष्यो भवति मन्त्रिणाम् ।**
**अनवस्थितचित्तत्वात् कार्ये तैः समुपेक्ष्यते ॥**

(१) द्वेष्यो भवति, यथोक्तश्रवणात् । तैरिति मन्त्रिभिः । जम.

(२) अनेकचित्तमन्त्रस्यानवस्थितचित्तत्वादसंधेयत्वमाह– अनेकेति । स्पष्टम् । उनिसा.

(१) कानी. ९।१३३ ; उनिसा. जीवी तै (जीवितै).
(२) कानी. ९।१३४–३६.

**सदाऽधर्मबलीयस्त्वाद्देवब्राह्मणनिन्दकः ।**
**विशीर्यते स्वयं ह्येव दैवोपहतकस्तथा ॥**

( १ ) दैवोपहतकः स्वयं कल्यमप्यारभमाणो यो न फलभाक् । जम.

( २ ) देवब्राह्मणनिन्दकदैवोपहतकयोरसंधेयत्वमाह— सदाऽधर्मेति । अधर्मबलीयस्त्वात् देवब्राह्मणवृथानिन्दाजनितपापप्रभावात् सदा विशीर्यते विनश्यति स्वयं ह्येव विजिगीषुणाऽभियुक्तः किल । दैवोपहतकस्तथा दैवोपहतकोऽपि जन्मान्तराचरितपापादेव विनष्टो भवति । उनिसा.

[1]**संपत्तौ च विपत्तौ च दैवमेव हि कारणम् ।**
**इति दैवपरो ध्यायन्नात्मना न विचेष्टते ॥**

( १ ) न विचेष्टते न पौरुषमारभते । जम.

( २ ) दैवचिन्तकरूपदैवपरस्यासंधेयत्वमाह— संपत्तेश्चेति । आत्मना न विचेष्टते । यथा उपनतेऽपि भोजने दैवपरो विपद्यते एव, तथेत्यर्थः । उनिसा.

[2]**दुर्भिक्षव्यसनी चैव स्वयमेवावसीदति ।**
**बलव्यसनयुक्तस्य योद्धुं शक्तिर्न विद्यते ॥**

( १ ) बलव्यसनम् ‘ उपरुद्धं परिक्षिप्तम् ’ ( कानी. १४।६७ ) इत्यादि वक्ष्यति । जम.

( २ ) दुर्भिक्षव्यसनिबलव्यसनिनोरसंधेयत्वमभिधातुमाह— दुर्भिक्षेति । दुर्भिक्षव्यसनी अन्नाभावेन भोजनाभाववान् । बलव्यसनसक्तस्य अमानितादिसंकुलस्य । शेषः सुगमः । उनिसा.

[3]**अदेशस्थो हि रिपुणा स्वल्पकेनापि हन्यते ।**
**ग्राहोऽल्पीयानपि जले गजेन्द्रमपि कर्षति ।**
**ग्राहश्चानीरदेशस्थः शुनाऽपि परिभूयते ॥**

( १ ) अदेशस्थः स्वसैन्यव्यायामानामयोग्ये देशे स्थितः । जम.

( २ ) अदेशस्थस्यासंधेयत्वमाह— अदेशस्थ इति । अदेशस्थः स्वयोग्यदेशेतरदेशस्थः स्वल्पकेन क्षुद्रेण रिपुणा अभिजीयते । दृष्टान्तेन समर्थयति— ग्राहेति । स्पष्टम् । उनिसा.

[1]**बहुमित्रस्तु संत्रस्तः श्येनमध्ये कपोतवत् ।**
**येनैव गच्छति पथा तेनैवाऽऽशु विनश्यति ॥**

( १ ) बहुमित्रः प्रकोपितबहुमण्डलतया । जम.

( २ ) बहुरिपोरसंधेयत्वमभिधातुमाह— बहुमित्रस्त्विति । स्पष्टम् । उनिसा.

[2]**अकालयुक्तसैन्यस्तु हन्यते कालयोधिना ।**
**कौशिकेन हतज्योतिर्निशीथ इव वायसः ॥**

( १ ) अकालयुक्तसैन्यः न युद्धयोग्ये काले नियुक्तं सैन्यं यस्येत्यर्थः । कौशिकः उलूकः । जम.

( २ ) अकालयुक्तस्यासंधेयत्वमाह— अकालयुक्तस्त्वचिरादिति । अकालयुक्तः स्वसामर्थ्याननुगुणकालवर्ती । कालयोधिना स्वानुकूलकालयुद्धकारिणा । अचिरात् सत्वरम् । कौशिकेन दिवाभीतेन पेचकेन निशीथे हतज्योतिः राज्यन्धः वायस इव हन्यते । उनिसा.

[3]**सत्यधर्मव्यपेतेन न संदध्यात्कथंचन ।**
**सुसंहितोऽप्यसाधुत्वादचिराद्याति विक्रियाम् ॥**

( १ ) असाधुत्वात् अस्थिरप्रकृतित्वात् । जम.

( २ ) सत्यधर्मव्यपेतस्यासंधेयत्वमाह— सत्यधर्मेति । स्पष्टम् । उनिसा.

संधेयाः सप्त पुरुषाः

[4]**सत्यार्यौ धार्मिकानार्यौ भ्रातृसंघातवान् बली ।**
**अनेकविजयी चेति संधेयाः सप्त कीर्तिताः ॥**

( १ ) अथ संधेयानाह— सत्येत्यादिना । जम.

---

( १ ) कानी. ९।३७; उनिसा. पत्तौ च ( पत्तेश्च ).

( २ ) कानी. ९।३८ ; उनिसा. युक्त ( सक्त ).

( ३ ) कानी. ९।३९–४० ; उनिसा. नापि हन्यते ( नाभिजीयते ).

( १ ) कानी. ९।४०–४१.

( २ ) कानी. ९।४१–४२ ; उनिसा. सैन्यस्तु ( स्त्वचिरात् ).

( ३ ) कानी. ९।४२, उत्तरार्धं त्रिवेन्द्रम्–पुस्तके प्रक्षिप्तम्.

( ४ ) कानी. ९।४३.

(२) सप्तानां संधेयानामुद्देशमभिधातुमाह— सत्येति । सुगमम् । उनिसा.

**[1]सत्योऽनुपालयन् सत्यं संधितो नैति विक्रियाम् ।**
**प्राणबाधेऽष्वपि व्यक्तमार्यो नाऽऽयात्यनार्यताम् ॥**

(१) कस्मादेते संधेया इत्याह— सत्य इत्यादि । सत्ययुक्तः । प्राणबाधेष्वपि म्रियमाणोऽपि । आर्यः युक्तकारी । जम.

(२) सत्यार्ययोः संधेययोः स्वरूपमाह— सत्यं चेति । अनार्यतां न याति त्यक्तमर्यादो न भवतीत्यर्थः । उनिसा.

**[2]धार्मिकस्याभियुक्तस्य सर्व एव हि युध्यते ।**
**प्रजानुरागाद्धर्माच्च दुःखोच्छेद्यो हि धार्मिकः ॥**

(१) धार्मिकस्य न्यायेन पालयतः । सर्व एवेति उदासीनः शत्रुश्च । जम.

(२) धार्मिकस्य संधेयतामभिधातुमाह— धार्मिकस्येति । धार्मिकाभियोगे सर्वाभियोगः संपद्यते, यतः स प्रजानुरागधर्मतो दुरुच्छेद्यो भवतीत्यर्थः । उनिसा.

**[3]संधिः कार्यो ह्यनार्येण स प्राप्योत्सादयन् द्विषः ।**
**रेणुकायाः सुत इव मूलेष्वपि न तिष्ठति ॥**

(१) संधिः कार्यो ह्यनार्येण अयुक्तकारिणा । यद्यसौ न संधीयते तदा शत्रून् प्राप्योत्सादयन् मूलेष्वपि न तिष्ठति निर्मूलं करोतीत्यर्थः । रेणुकायाः सुत इवेति । जमदग्नेर्महर्षेर्भार्या रेणुका नाम । तस्याः पुत्रः परशुरामः । स किलाऽऽश्रमपदादग्निहोत्रधेनुमपहृत्य गच्छता कार्तवीर्येण तन्मोचनार्थं जमदग्निं पितरं *व्यायच्छन्तं व्यापादितं श्रुत्वा जातमन्युः परशुना कार्तवीर्यं बाहुसहस्रेण वियोज्य घातितवान् । ततस्तद्रोषादन्यदपि क्षत्रकुलमनपराद्धमुत्सादयितुं प्रवृत्तत्वादनार्यः । तस्मात् तथाविधेन सह सर्वात्मना संधानमेव युक्तम् । जम.

(२) अनार्येणापि संधिः कर्तव्य इत्याह— संधिरिति । अनार्येणापि दुःशीलेनापि संधिः कार्यः । यतः स द्विषः शत्रून् प्राप्य उत्सादयेत् विनाशयति । रेणुकायाः जमदग्निपत्न्याः सुतः परशुराम इव स मूलेष्वपि न तिष्ठति । पितृवधामर्षजनितकोपपराधीनेन परशुरामेण क्षत्रियागर्भजातेन एकविंशतिवारान् पृथिवी निःक्षत्रिया कृतेति पौराणिकी कथा । उनिसा.

**[1]संघातवान् यथा वेणुर्निबिडः कण्टकैर्वृतः ।**
**न शक्यते समुच्छेत्तुं भ्रातृसंघातवांस्तथा ॥**

(१) निबिडः संहतत्वादेव हि दुःखप्रवेशो भवति । जम.

(२) भ्रातृसंघातवतः संधेयत्वमभिधातुमाह— संघातवानिति । स्पष्टम् । उनिसा.

**[2]समाक्रान्तस्य बलिना सर्वयत्नवतोऽपि हि ।**
**हरिणस्येव सिंहेन शरणं नैव विद्यते ॥**

(१) बलिना शक्तित्रययुक्तेन । जम.

(२) बलिना संधिः कर्तव्य एवेत्याह— समाक्रान्तस्येति । बलवता समाक्रान्तस्य केनाप्युपायेन निस्तारो नास्तीत्यर्थः । स्पष्टः श्लोकार्थः । उनिसा.

**[3]ईषदायच्छमानोऽपि सिंहो मत्तानपि द्विपान् ।**
**निहन्ति बलवांस्तस्मात् संधेयः शिवमिच्छता ॥**

(१) आयमनम् उद्योगः । जम.

(२) किं च— ईषदिति । ईषदायच्छमानः किंचिन्मात्रमादातुमुद्यतः बलवान् मत्तद्विपघाती सिंह इव हिनस्ति निहन्ति । तस्मात् शिवं स्वकुशलम् इच्छता स संधेय एवेति । उनिसा.

---

* व्यायच्छन्तं विशेषेण युध्यमानमित्यर्थः । 'आङो यमहनः' इति पाणिन्यनुशासनात् व्यायच्छमानमिति पठितुं युक्तम् ।

(१) कानी. ९।४४ ; उनिसा. प्रथमचरणे ( सत्यं च पालयन् सत्य ) पुस्तकान्तरीयोऽयं पाठभेद एकदेशानुमत्याऽत्र संगृहीतः , नाऽऽ ( न ).

(२) कानी. ९।४५.

(३) कानी. ९।४६ प्राप्योत्सा ( प्रायः सा) ; उनिसा. ह्यना ( ऽप्यना ) दयम् ( दयेत् ) ; नीम. ४४ पूर्वार्धे ( संधिः कार्योऽप्यनार्येण संप्राप्योत्सादयेद्धि सः । ) पू.

(१) कानी. ९।४७ ; नीम. ४४ निबिडः (निबिडैः).

(२) कानी. ९।४८.

(३) कानी. ९।४९ ; उनिसा. निहन्ति ( हिनस्ति ).

[1]बलिना सह योद्धव्यमिति नास्ति निदर्शनम् ।
प्रतिवातं न हि घनः कदाचिदपि सर्पति ॥

( १ ) निदर्शनम् आगमः । प्रतिवातं वाताभिमुखम् । जम.

( २ ) अपरं च— बलिनेति । स्पष्टम् । उनिसा.

[2]बलीयसि प्रणमतां काले विक्रामतामपि ।
संपदो नापगच्छन्ति प्रतीपमिव निम्नगाः ॥

( १ ) काले विक्रामतामपीति । अभ्युच्चयकाले विक्रममाणा अप्यनभ्युचिताश्चेत् प्रणमन्ति तदैषां संपदो नापगच्छन्ति । बलीयसोऽनेकोदाहरणमावश्यकार्थम् । जम.

( २ ) किंच— बलीयसीति । सुगमम् । उनिसा.

[3]जमदग्नेः सुतस्येव सर्वः सर्वत्र सर्वदा ।
अनेकयुद्धजयिनः प्रतापदेव भज्यते ॥

( १ ) जमदग्नेः सुतस्येति भिन्नाधिकरणा षष्ठी । अनेकयुद्धजयिन इति । स हि पितृवधामर्षितः कार्तवीर्यं निहत्य रोषादेकविंशतिं वारान् निःक्षत्रां पृथिवीं चकार । तस्य चाभियोक्तुः प्रतापादेव सर्वः ज्यायान् समो हीनः, सर्वत्र दुर्गे चादुर्गे च, सर्वदा अभियोक्ताऽभियोक्ष्यमाणश्च भज्यते । जम.

( २ ) अनेकयुद्धजयिनः प्रशंसापूर्वकं संधेयत्वमाह— अनेकेति । अनेकयुद्धजयिनः संधेयत्वं दृष्टान्तेन समर्थयितुमाह— जमदग्नेरिति । सुप्रतीतम् । उनिसा.

[4]अनेकयुद्धविजयी संधानं यस्य गच्छति ।
तत्प्रतापेन तस्याऽऽशु वशं गच्छन्ति विद्विषः ॥

( १ ) संधानं यस्य गच्छतीति । न केवलं तत्संधाने विजिगीषोरात्मत्राणम्, अन्येऽपि शत्रवोऽस्य विधेया भवन्ति । जम.

( २ ) एतदेव समर्थयन्नाह— अनेकेति । स्पष्टम् । उनिसा.

संधिरविश्वास्यः

[1]न जातु गच्छेद्विश्वासं संहितोऽपि हि बुद्धिमान् ।
अद्रोहे समयं कृत्वा वृत्रमिन्द्रः पुराऽवधीत् ॥

( १ ) कृतसंधौ श्लोकद्वयेन विधिमाह— न जात्वित्यादि । संहितोऽपि समयेन कृतसंधिरपि । वृत्रमिन्द्रः पुराऽवधीदिति । त्रिशिरसः पुत्रस्य वधामर्षितेन त्वष्ट्रा शक्रवधाय वृत्रो नाम बलीयानसुरः सृष्टः । तेन च शक्रोऽनेकधा युद्धे निराकृतः । तमेकदा न केनचिद्विरोद्धव्यमिति शपथपूर्वकं संधाय जातविस्रम्भं स्ववज्रावध्यं दधीचास्थिघटितेन वज्रेण हत्वा व्यापादितवान् । जम.

( २ ) संधिरपि सर्वथा न विश्वसनीय इत्याह— न जात्विति । संहितः कृतसंधानः बुद्धिमान् सुचतुरः जातु कदाचित् विश्वासं न गच्छेत् न विश्वसेत् । हि यतः अद्रोहे द्रोहाकरणविषये समयं प्रतिज्ञां कृत्वा इन्द्रः पुरा पूर्वस्मिन् काले वृत्रं तन्नामकमसुरम् अवधीत् । उनिसा.

[2]विकारं याति पुत्रोऽपि राज्यालीढस्तथा पिता ।
तल्लोकवृत्तान्नृपतेरन्यद् वृत्तं प्रचक्षते ॥

( १ ) तथा अद्यत्वेऽप्ययं व्यवहारो दृश्यत इति दर्शयन्नाह— विकारमित्यादि । लोकवृत्तात् लोकव्यवहारात् । जम.

( २ ) राज्यं विकारोत्पादीत्याह— विकारमिति । राज्यालीढः राज्यलक्ष्म्याऽलंकृतः पुत्रोऽपि तथा पिता विकारं विकृतिमद्भावं याति प्राप्नोति । तत् तस्मात् लोक-

---

( १ ) कानी. ९।५० ; नीम. ४४ न हि ( हि न ) दपि स ( दुपस ).

( २ ) कानी. ९।५१ ; नीम. ४४ विक्राम ( विक्रम ) नापगच्छन्ति ( न विसर्पन्ति ).

( ३ ) कानी. ९।५२ भज्यते ( भिद्यते ).

( ४ ) कानी. ९।५३.

( १ ) कानी. ९।५४ ; नीम. ४४ न जातु ( राजा न ) संहितो ( संधितो ) द्रोहे स ( द्रोहस ).

( २ ) कानी. ९।५५–५६.

वृत्तात् लोकचरितात् नृपतेः वृत्तम् अन्यत् विलक्षणं प्रचक्षते स्मृतिकारा इत्यर्थः । उनिसा.

अभियोक्त्रा कथं वर्तितव्यम्

**अभियुक्तो बलवता तिष्ठन् दुर्गे प्रयत्नवान् ।**
**तद्बलीयस्तराह्वानं कुर्वीताऽऽत्मविमुक्तये ॥**

(१) इदानीमभियोक्त्रपेक्षया व्यापारं सप्तभिः श्लोकैराह– अभियुक्त इत्यादि । अभियोक्तारस्त्रयः– ज्यायान् समो हीनश्च । तत्र मन्त्रोत्साहप्रभावशक्तिभिरभ्युचितो ज्यायान्, अपचितो हीनः, तुल्यशक्तिः समः । तत्र ज्यायांश्चेन्न संधिमिच्छेत् दुर्गं समाश्रयेत् । यदाह– तिष्ठन् दुर्गे इति । प्रयत्नवान् दुर्गसंरक्षणपरः । तद्बलीयस्तराह्वानमिति । अभियोक्तुर्विशिष्टबलं सामन्तमाहूय आत्मानमुपरुद्धं मोचयेत् । जम.

(२) यत्र बलवान् संधिं नेच्छेत् तत्र विधेयमाह– अभियुक्त इति । स्पष्टम् । उनिसा.

[1]**स्वशक्त्युत्साहमुद्वीक्ष्य विगृह्णीयान्महत्तरम् ।**
**केसरीव द्विपमिति भरद्वाजः प्रभाषते ॥**

(१) यदि दुर्गे क्षीयमाणनिचयं मन्येत, तत् विशिष्टबलाभावे निचयक्षये च किं कुर्यादित्याह– स्वशक्तीति । आत्मनो विक्रमबलं ज्ञात्वा दुर्गमुन्मुच्य विगृह्णीयात् महत्तरं ज्यायांसम् । विक्रमशक्त्यभावे तु विधानान्तरं वक्ष्यति । नन्वत्र संधिः प्रस्तुतः । सत्यम् । तस्यैवापवादः संध्युपायो वा, यस्मान्नातप्तं लोहं लोहेन संधत्ते इति । जम.

(२) बलीयस्तराभावे विधेयमभिधातुमाह– स्वशक्त्योत्साहमिति । स्वशक्तयः प्रभुमन्त्रोत्साहलक्षणाः इत्युत्साहः शक्तित्वेन पठितोऽपि पुनरुपादीयते शौर्यस्याधिकारप्रदर्शनार्थम् । तम् उत्साहम् उद्वीक्ष्य आत्मनि दृष्ट्वा । महत्तरम् आत्मनो ज्यायांसम् । केसरीव द्विपम् । केसरी द्विपापेक्षया महत्तरो न भवति, किंतु स्वशक्त्या उत्साहयुक्तस्तमेव निहन्तीत्यर्थः । विगृह्णीयादिति भारद्वाजसंमतमित्यर्थः । मतान्तरप्रदर्शनं गत्यन्तराभावे ज्यायसाऽपि विग्रहो भवति, नान्यथेत्येवमर्थम् । उनिसा.

[2]**एकोऽपि सिंहः साहस्रं यूथं मथ्नाति दन्तिनाम् ।**
**तस्मात्सिंहमिवोदारमात्मानं वीक्ष्य संपतेत् ॥**

(१) उक्तमेवार्थं स्पष्टीकुर्वन्निगमयति– एकोऽपीत्यादिना । उदारं विक्रमाधिकम् । जम.

(२) एतदेव दर्शयति– एकोऽपीति । सुगमम् । उनिसा.

[3]**ज्यायांसमल्पसैन्यस्य बलाद्विक्रम्य निघ्नतः ।**
**प्रतापसिद्धाः सर्वत्र भवन्ति रिपवो वशे ॥**

(१) अल्पसैन्यस्य विजिगीषोः । बलात् उत्साहशक्त्या । प्रतापसिद्धा भवन्तीति फलान्तरं दर्शयति । जम.

(२) ज्यायसा सह विग्रहगुणमाह– ज्यायांसमल्पसैन्यस्येति । ज्यायांसं शक्त्यधिकम् अल्पसैन्यस्य उत्साह– शक्त्यैवाधिकस्य बलाद्विक्रम्य निघ्नतः व्यापादयतः प्रतापसिद्धाः विग्रहं विना प्रतापेनैव वशीभूताः अपरे रिपवो भवन्ति स्पष्टम् । उनिसा.

[4]**संधिमिच्छेत्समेनापि संदिग्धो विजयो युधि ।**
**न हि संशयितं कुर्यादित्युवाच बृहस्पतिः ॥**

(१) समसंधिमधिकृत्याऽऽह– संधिमिच्छेदित्यादिना । जम.

(२) विजयसंदेहे समेनापि संधिः बृहस्पतिसंमत इत्याह– संधिमिच्छेदिति । स्पष्टम् । उनिसा.

[5]**आ संप्रवृद्धेरभिवृद्धिकामः**
**समेन संधानमिवोपगच्छेत् ।**
**अपक्वयोर्वा घटयोरवश्य-**
**मन्योन्यभेदी समसंनिपातः ॥**

---

(१) कानी. ९।५७ ; उनिसा. शक्त्यु ( शक्त्यो ) भर ( भार ).

(१) कानी. ९।५८.

(२) कानी. ९।५९ ; उनिसा. वशे ( ऽपरे ).

(३) कानी. ९।६०.

(४) कानी. ९।६१ ; उनिसा. मिवो ( मिद्गो ).

( १ ) समेनेति । अभियोक्त्रेति शेषः । जम.

( २ ) निःसंदेहप्रवृत्तिर्नीतिविदामभिप्रेतेत्याह— आ संप्रवृद्धेरिति । आ संप्रवृद्धेः सम्यक्प्रकृष्टवृद्धिपर्यन्तम् अभिवृद्धिकामः विजिगीषुः इह पृथिव्यां समेन संधानमुपगच्छेत् । व्यतिरेकेणैतत् दृष्टान्तयति— अपक्वयोः आमयोः घटयोः समसंनिपातः तुल्याघातः अन्योन्यभेदी उभयोः परस्परभेदकारी भवति । उनिसा.

**[१]युद्धे विनाशो नियतः कदाचिदुभयोरपि ।**
**सुन्दोपसुन्दावन्योन्यं समवीर्यौ हतौ न किम् ॥**

( १ ) सुन्दोपसुन्दाविति । तौ सोदर्यावसुरौ परस्पराभेद्यौ विन्ध्ये तपसा ब्रह्माणमाराध्य वरप्रदानात् परस्यावध्यतां प्राप्य सर्वं लोकमभिबभूवतुः । ततो देवास्तद्वधार्थं ब्रह्माणमुपगम्य तदनुज्ञातेन प्रजापतिना रूपयौवनवतीं तिलोत्तमामप्सरसमुत्पाद्य तदाश्रमं प्रेषयामासुः । तौ च तां दृष्ट्वा जातरागौ एकद्रव्याभिनिवेशाद्युध्यमानौ तुल्यबलत्वादन्योन्यमेव क्षयं जग्मतुः । जम.

( २ ) एतदेव दर्शयन्नाह— नाश इति । सुन्दोपसुन्दौ तन्नामकदानवौ तिलोत्तमाभिलाषात् समुपजातविरोधौ सोदर्यौ समवीर्यौ तुल्यपराक्रमौ युधि किं हतौ न ? अपि तु हतावेव उभावित्यर्थः । स्पष्टमन्यत् । उनिसा.

असंधेयो हीनो वैरी

**[२]विहीनोऽपि हि संधेयो व्यसने रिपुरागतः ।**
**पतन् दुनोति हिमवत्तोयबिन्दुरिव क्षते ॥**

( १ ) हीनमधिकृत्याऽऽह— विहीनोऽपीति । व्यसने विजिगीषोर्ज्यायसो दैवे मानुषे वा समुत्पन्ने अभियोक्तुमागतः । हिमवत्तोयबिन्दुः अल्पीयान् दुनोति दुःखयति । जम.

( २ ) न केवलं समः, हीनोऽपि संधेय इति दर्शयन्नाह— अतिहीनोऽपीति । अतिहीनोऽपि दुरवस्थोऽपि रिपुः व्यसने सङ्कटे आगते संधेयः । हि यतः तदानीं स पतन् आक्रामन् क्षते तोयबिन्दुरिव मनः दुनोति दुःखितं करोति । उनिसा.

**[१]न संधिमिच्छेद्धीनश्चेत्तत्र हेतुरसंशयः ।**
**तस्य विस्रम्भमालक्ष्य प्रहरेत् तत्र निःस्पृहः ॥**

( १ ) तत्र हेतुरसंशयः । कोऽसावित्याह— तस्य विस्रम्भमिति । अभियोगस्थैर्यमालक्ष्य निःसंशयं प्रहरेत् । कदाचित् स्थिराभियोगी दुःखसाध्योऽपि स्यात् । तत्रेति संधौ निःस्पृहः । जम.

( २ ) संधिमनिच्छतो हीनस्य वधोपायमाह— न संधिमिति । हीनः चेत् यदि संधिं न गच्छेत् तत्र कश्चित् असंशयः हेतुः कारणम्, विद्यते इत्यनुमीयत इति शेषः । तत्र सामादिभिस्तथा विधेयं यथा विश्रम्भो भवति । अनन्तरं तस्य विश्रम्भमालक्ष्य स्थिरीकृत्य प्रहरेदतिनिष्ठुरं यथा स समूलो नश्यतीति भावः । *शेषः सुगमः । उनिसा.

वैरिणा बलीयसा कथं वर्तितव्यम्

**[२]बलीयसाऽभिसंधाय तं प्रविश्य प्रयत्नवान् ।**
**तथाऽसावुपगन्तव्यो यथा विस्रम्भमाप्नुयात् ॥**

( १ ) इदानीं कृतसंधौ ज्यायसि अतिसंधानविधिं श्लोकत्रयेणाऽऽह— बलीयसेत्यादि । प्रविश्य प्रियहितद्वारेण । प्रयत्नवान् यथा हि प्रविष्टो नेता नातिसंधीयते । विस्रम्भमासाद्य प्रहरेदित्येव । जम.

( २ ) संशयवृत्तेर्हीनतरसंधिमभिधातुमाह— बलीयसेति । बलीयसा ज्यायसा सह दण्डादिभिरुपनतः हीनतरः अभिसंधाय संधिं कृत्वा तमनु तमनुप्रविश्य अनु-

---

( १ ) कानी. ९।६२ ; उनिसा. प्रथमचरणे ( नाशो भवति युद्धेन ) इति पुस्तकान्तरीयपाठस्यैकदेशानुमत्या संभवः .

( २ ) कानी. ९।६३ ; उनिसा. विहीनोऽपि हि (अतिहीनोऽपि ) रागतः ( रागते ) ' हिमवत् ' इत्यत्र ' हि मनः ' इति ' हि तदा ' इति वा पाठान्तरं प्रतीयते ।

* कः शेष इति चिन्तनीयम् ।

( १ ) कानी. ९।६४ ; उनिसा. चतुर्थचरणे ( प्रहरेदतिनिष्ठुरम् ) इति पाठसंभवः .

( २ ) कानी. ९।६५ ; उनिसा. तं प्रविश्य प्र ( तमनु प्रति ) वुप ( वनु ).

जीविवृत्त्यादिना, प्रतियत्नवान् अतिसंधेयो भूत्वेत्यर्थः, तथा असौ बलीयान् अनुगन्तव्यः सेवनीयः यथा विश्रम्भं विश्वासम् आप्नुयादिति। उनिसा.

**¹विस्रम्भे नित्यमुद्युक्तो निगूढाकारचेष्टितः।**
**प्रियाण्येवाभिभाषेत यत्कार्यं कार्यमेव तत्॥**

(१) स्वकार्ये निगूढाकारचेष्टितः। कार्यसंवरणार्थं प्रियाण्येवाभिभाषेत। जातविस्रम्भेऽपि यत् कार्यं हृदि स्थितं तत् प्रच्छन्नं कर्तव्यमेव, तदर्थत्वादन्यस्येति। जम.

(२) एतदेव समर्थयति— विश्रम्भीति। विश्रम्भी लब्धविश्वासः नित्यमुद्युक्तः सदा सावधानः निगूढाकारचेष्टितः समाचरिताकारचेष्टाविपर्यासः प्रियाणि जयजीवेत्यादिकानि एव केवलम् अभिभाषेत। किं तु यत् कार्यं विनाशादिकं तत् कार्यं संपादनीयम् एव अवश्यम्। उनिसा.

**²विस्रम्भात् प्रियतामेति विस्रम्भात् कार्यमिच्छति।**
**विस्रम्भेण हि देवेन्द्रो दितेर्गर्भमपातयत्॥**

(१) देवेन्द्रो दितेर्गर्भमपातयत्। देवासुराणां विरोधे व्यापादितानेकपुत्रत्वात् दितिः शोकसंतप्ता भक्त्या भर्तारं काश्यपमाराध्य 'शक्रस्य हन्ता मे पुत्रोऽस्तु' इति वरं वव्रे। सोऽपि यदि वर्षशतमनाशौचा गर्भं धारयसि तदा यथासमीहितस्ते पुत्रो भवेदित्युक्तवान्। तस्यां च तथेत्यङ्गीकृतवचनायां गर्भमादधे। ततस्तां गर्भसंरक्षणाय व्रतचारिणीं बटुव्यञ्जनो भूत्वा शक्रः स्खलितान्वीक्षणपरः परिचरन् एकदा तस्याः पादशौचमकृत्वा शयनमारुह्य सुप्ताया योगबलात् कुक्षिं प्रविश्य वज्रेण गर्भं सप्तधा कृत्वा पुनरेकैकं सप्त खण्डानकरोत्। तेन एकोनपञ्चाशन्मरुतोऽभवन्। जम.

(२) विश्रम्भफलं दर्शयन्नाह— विश्रम्भादिति। दितिगर्भसमुत्पन्नो दैत्यो मत्प्रतिबलो भविष्यतीति शङ्कया देवेन्द्रः देवराजः दितेः दैत्यजनन्याः गर्भमपातयत्। स्पष्टमन्यत्। उनिसा.

(१) कानी. ९।६६ ; उनिसा. विस्रम्भे (विश्रम्भी).
(२) कानी. ९।६७.

**¹युवराजेन संधाय प्रधानपुरुषेण वा।**
**अन्तःप्रकोपं जनयेदभियोक्तुं स्थिरात्मनः॥**

(१) यद्यभियोक्ता न संधिमिच्छेत्, आत्मनश्च न विक्रमशक्तिं पश्येत्, तदा विधानान्तरमेकादशभिः श्लोकैराह— युवराजेनेत्यादि। अन्तःकोपे हि जनितेऽभियोक्ता शिथिलाभियोगः स्यात्। जम.

(२) ज्यायस्यभियोक्तुरभिधेयमाह— युवराजेनेति। प्रधानपुरुषेण मन्त्रिपुरोहितसेनापत्यादिना संधाय दृढतरं संधिं कृत्वा अन्तःप्रकोपं परस्परविरोधं जनयेत् कुर्यात्। अभियोक्तुः स्थिरात्मनः अपि तथा। उनिसा.

**²अर्थोत्सर्गेण महता लेखैश्चाप्यर्थसंहितैः।**
**प्रधानपुरुषस्येह प्रकुर्वीतार्थदूषणम्॥**

(१) स्थिरात्मनो दीर्घाभियोगे अन्तःप्रकोपजननमाह— अर्थोत्सर्गेणेति। यथाऽभियोक्ता जानाति तथाऽर्थमुत्सृजेत् लेखं च प्रेषयेदित्यर्थः। अर्थसंहितैरिति अर्थावगाढैः, ये पठितमात्रा एव शङ्कां जनयन्ति। प्रधानपुरुषस्येत्युपलक्षणार्थं युवराजस्यापि। जम.

(२) प्रधानपुरुषस्यार्थदूषणोपायमाह— अर्थोत्सर्गेणेति। महता प्रचुरेण अर्थोत्सर्गेण हिरण्यादिधनदानेन, अपि च अर्थसंहतैः मुद्राराक्षसोक्तन्यायेन भेदप्रतिपादकार्थसंहतैः लेखैः प्रधानपुरुषस्य अनन्तरोक्तस्य आत्मदूषणम् प्रकुर्वीत। शेषः सुगमः। उनिसा.

**³दूषिते हि महामात्रे रिपुरुग्रोऽपि धीमता।**
**स्वपक्षे यात्यविश्वासमित्थंभूतश्च निष्क्रियः॥**

(१) दूषिते विजिगीषुणा धीमतेति संबन्धः। स्वपक्षे यात्यविश्वासं यथाऽयं महामात्रो विजिगीषुकार्ये स्थितः तथाऽयमपि कथं न भवेदिति। एवंभूतश्चाविश्वासी निष्क्रियः संहृताभियोगः भवति। उग्रोऽपि बलवानपीत्यर्थः। जम.

(१) कानी. ९।६८ ; उनिसा. योक्तुं (योक्तुः).
(२) कानी. ९।६९ ; उनिसा. संहितैः (संहृतैः), तार्थ (ताऽऽत्म) इति मुद्रितपुस्तकवत् पाठभेदे संशयः.
(३) कानी. ९।७०.

( २ ) दूषणफलमभिधातुमाह— दूषित इति । धीमता विजिगीषुणा दूषिते संपादितदोषे महामात्रे प्रधानामात्ये सेनापत्यादिके रिपुः शत्रुः उग्रोऽपि बलवत्तरोऽपि क्रूरोऽपि स्वपक्षे आत्महितपक्षे अविश्वासं याति । इत्थंभूतः एवंप्रकारः अभियोक्ता निष्क्रियः अभियोगक्रियारहितो भवतीत्यर्थः । उनिसा.

**[1]अरेरमात्यान् संधाय तदारम्भं शमं नयेत् ।**
**भिषग्भेदेन वा शत्रुं रसदानेन शातयेत् ॥**

( १ ) अमात्यानिति बुद्धिसचिवान् कर्मसचिवांश्च । तदारम्भम् अभियोक्तुरमात्यानां वा अभियोगव्यापारम् । भिषग्भेदेन वेति । शत्रुवैद्यं वा भेदयित्वा तेनैव रसं दापयित्वा शत्रुं साधयेत् । जम.

( २ ) अरिसाधनस्याऽऽवश्यकत्वं तदुपायं चाभिधातुमाह— अरेरिति । अरेः अभियोक्तुः अमात्यान् संधाय तदारम्भं तत्कृतप्रतिकूलताचरणोद्योगं शमम् उपशमनं नयेत् प्रापयेत् । भिषग्भेदेन उत्कोचादिद्वारा वैद्यभेदं समुत्पाद्य वा अथवा रसदानेन विषप्रयोगेन शत्रुं साधयेत् मारयेत् । उनिसा.

**[2]अरेः सर्वप्रयत्नेन पश्चात् कोपं प्रकल्पयेत् ।**
**पश्चात् कोपमथानिष्टमनुसृत्य प्रधर्षयेत् ॥**

( १ ) पश्चात् कोपं प्रकल्पयेत् मित्रेण । अनुसृत्य प्रधर्षयेत् उभयतः संपीडनेन । जम.

( २ ) किंच— अरेः सर्वेति । सर्वप्रयत्नेन अत्यादरेण अरेः पश्चात् कोपं कोपस्थानीयं विषये वा कोपं कलहं प्रकल्पयेत् निष्पादयेत् । अथ पश्चात्कोपम् आतिष्ठन् विजिगीषुः अनुसृत्य प्रधर्षयेत् हन्यात् । उनिसा.

**[3]तद्देशकृतसंवासैश्चारैर्नैमित्तिकैरपि ।**
**उपोढव्यसनादेशं कारयेत्सिद्धलक्षणैः ॥**

( १ ) चारैर्नैमित्तिकैरपीति । नूतननाक्षत्रिकशाकुनिकव्यञ्जनैश्चारैर्वा तद्देशनिवासिभिः । उपोढव्यसनादेशमिति । अभियास्यतः शत्रोर्महाव्यसनं भवितेत्यादेशयेत् यात्राविघ्नार्थम् । सिद्धलक्षणैः सिद्धादेशैः उल्कारुधिरवृष्ट्यादिभिर्वा कृतकैः । जम.

( २ ) उपायान्तरमाह— तद्देशेति । तद्देशकृतसंवासैः तद्देशवासिभिः । तद्देशवासिनो हि प्रात्ययिका भवन्ति । चारैः गूढपुरुषैः नैमित्तिकैः ज्योतिषिकव्यञ्जनैः अरेः अभियोक्तुः, उपोढव्यसनादेशम् उत्पातसूचितमहाभयंकरापदादेशं सिद्धलक्षणैः करणभूतैः कारयेत् विजिगीषुरित्यर्थः । उनिसा.

**[1]क्षयव्ययायासवधादिदोष-**
**व्यपेक्षयाऽन्वीक्षितसाधुकृत्यः ।**
**कामं तु पीडामपि कांचिदिच्छे-**
**न्न विग्रहं तत्प्रभवा हि दोषाः ॥**

( १ ) कस्मादेवं यथोक्तमाचरेत्— क्षयेत्यादि । क्षयव्ययौ वक्ष्यति ‘ मनुष्ययुग्यापचयः क्षयो हि हिरण्यधान्यापचयो व्ययस्तु । ’ ( कानी. १६।२३ ) इति । आयासः शरीरक्लेशः । आदिशब्दात् मित्रकलत्रादिवियोगः । एते दोषा विग्रहे भवन्ति । तस्मात् तद्व्यपेक्षया न विग्रहमिच्छेत् । अन्वीक्षितसाधुकृत्यः इदमत्र प्राप्तकालमिति । काममित्यभ्युपगमे । कांचित्पीडाम् अभियोगमात्रकृताम् । तत्प्रभवा दोषाः विग्रहप्रभवाः क्षयादयः । जम.

(२) अभियोगत्यजनार्थं भूयोऽपि निषेधं दर्शयन्नाह— क्षयेति । क्षयः प्रधानपुरुषादिवधरूपः, व्ययः धान्यहिरण्यादीनामुपक्षयरूपः, आयासः शीतोष्णवर्षदुःखसहनरूपः, वधः युद्धे शस्त्रादिना मरणरूपः, आदिशब्देनाङ्गवैकल्यादिदोषाः विग्रहे भवन्तीति व्यपेक्षया संभावनया अवेक्षितसाधुकृत्यः स्थिरीकृतभद्राभद्रनिश्चयः विजिगीषुः कामात् कामतः निरुपायपक्षे वरं कांचित्पीडामपि कोशादिप्रकृतेरित्यर्थः, इच्छेत् । हि यतः दोषाः पूर्वोक्ताः तत्प्रभवाः विग्रहोत्पन्नाः भवन्तीत्यर्थः । उनिसा.

---

( १ ) कानी. ९।७१ ; जम. शात (साध) ; उनिसा. जमवत्.

( २ ) कानी. ९।७२ ; उनिसा. थानिष्टमनुसृत्य ( थाऽऽतिष्ठन्ननुस्मृत्य ).

( ३ ) कानी. ९।७३ ; उनिसा. रपि ( ररेः ).

( १ ) कानी. ९।७४ ; उनिसा. ऽन्वी (ऽवे) कामं (कामात्).

अतिविग्रहो वर्ज्यः, संधिः संदेहे कार्यः,
उपायत्रयेण संधौ यतितव्यम्

[1]कलत्रमात्मा सुहृदो धनानि
वृथा भवन्तीह निमेषमात्रात्।
मुहुर्मुहुश्चाऽऽकुलितानि तानि
तस्मान्न विद्वानतिविग्रही स्यात्॥

(१) तदेव स्फुटयति— कलत्रेत्यादि। आकुलितानि दुरवस्थानात्। नातिविग्रही स्यात्, यावता तु परः संदध्यात् तावन्मात्रकं कुर्यादेव, तेजसः संधानकारणत्वात्। जम.

(२) एतदेव स्पष्टयन्नाह— कलत्रमिति। कलत्रं प्रेयसी स्त्री, आत्मा सुसंस्कृतस्वकायः, सुहृदः बान्धवा मित्राणि च, धनानि चतुर्विधानि रत्नानि वृथा भवन्ति निरर्थकानि जायन्ते, शस्त्रप्रहारैः गतजीवितस्य तत्कार्यासंपादनात्, निमेषमात्रात् एव निश्चितम्। मुहुर्मुहुः वारंवारं विग्रहे सति तानि पूर्वोक्तानि कलत्रादीनि आकुलितानि भवन्ति। तस्मात् इत्यादि स्पष्टम्। उनिसा.

[2]सुहृद्धनं तथा राज्यमात्मानं कीर्तिमेव च।
इति संदेहदोलास्थं को हि कुर्यादबालिशः॥

(१) संदेहदोलास्थं 'स्यान्न वा' इति। जम.

(२) अन्याये असंग्रामे स एव दोष इति दर्शयन्नाह— सुहृदिति। प्रतीतम्। उनिसा.

[3]साम्ना प्रदानेन विभेदनेन
संधापयेत् साध्वभियुज्यमानः।
संधित्सुराराात् समसैन्यचक्रं
सामन्तमायान्तमपेतसंधिम्॥

(१) तस्मादुपायत्रयं प्रयुञ्जीत। यदाह— साम्नेत्यादि। आयान्तं दूरादेव संधापयेत् साधु शोभनम्, येन स्वयमेव संधिं याचेत। समसैन्यचक्रं समबलन्यायात् संधानार्थं प्राप्तम्। सामन्तत्वाच्छत्रुम्। यद्येवमपि न संधिमिच्छेत् तदा तमपेतसंधिं साधयेत् (? संतापयेत्) इति वक्ष्यमाणश्लोकेनानुबन्धः। जम.

(२) विजिगीषोरभियुज्यमानस्य सामाद्युपायत्रयेण संधौ अभियोक्तृस्थापनमभिधातुमाह— साम्नेति। साम्ना गुणसंबन्धोपाख्यानपरस्परोपकारदर्शनायतिप्रदर्शनात्मोपनिधानरूपेण पञ्चविधेन कौटल्योक्तेन उपायविशेषेण, प्रदानेन अपूर्वदानगृहीतप्रतिदानगृहीतानुवर्तनग्राहमोक्षरूपेण तदुक्तेन चतुर्विधेनोपायविशेषेण, विभेदनेन शङ्काजननाशाजननरूपेण द्विविधेनोपायविशेषेण च अभियुज्यमानः विजिगीषुः संधित्सुः यदि भवति, अपेतसंधिम् अकृतसंधिम् अस्य अभियोक्तुः सैन्यचक्रं सैन्यसमूहं सीमान्तं सामन्तभूम्यनन्तरम् आयान्तम् आगच्छन्तं साधु यथा भवति तथा संस्थापयेत् संधौ योजयेत्। उनिसा.

[1]स्वगुप्तिमाधाय सुसंहतेन
बलेन धीरो विचरन्नरातिम्।
संतापयेद्येन सुसंप्रतप्त-
स्तप्तेन संधानमुपैति तप्तः॥

(१) स्वगुप्तिं स्वरक्षां कृत्वा सुसंहतेन परस्याभेद्येन। संतापयेत्, येन शत्रुः संप्रतप्तः स्यात्। ततश्चोभयसंतापात् संधानम्। यदाह— तप्तेन संधानमुपैति तप्त इति। जम.

(२) अभियोक्तरि विधेयमाह— सुगुप्तिमिति। सुगुप्तिम् आत्मनः समपरिच्छदस्य रक्षाम् आधाय कृत्वा सुसंहतेन अभेदेनैव सान्द्रीभूतेन बलेन चतुरङ्गेन सारतरेण धीरः धैर्यवान् विचरन् विविधं पुरतः पश्चात् सर्वतः चरन् विविधाचारप्रचारं कुर्वन् अरातिं संधिमनिच्छन्तं संतापयेत् उद्वेजयेत्, येन सुसंप्रतप्तः, भवतीति शेषः। यथा तप्तेन तप्तलोहेन तप्तः संतप्तलोहपिण्डः संधानं संमेलनम् उपैति प्राप्नोति, 'नातप्तं लोहं तप्तेन संधत्ते' (कौ. ७।३) इति कौटल्योक्तेः। उनिसा.

---

(१) कानी. ९।७५; उनिसा. न्तीह (न्त्येव).
(२) कानी. ९।७६.
(३) कानी. ९।७७; उनिसा. संधा (संस्था) राराम्स (रेवास्य च) सामन्त (सीमान्त).

(१) कानी. ९।७८; उनिसा. स्वगुप्ति (सुगुप्ति).

¹इति स्म संधिं खलु संधिवित्तमा
बभाषिरे पूर्वतना महर्षयः।
तदेतदेवं विनयेन्नरेश्वरः
संवीक्ष्य कार्यं गुरु चेतरद्द्विधा ॥

( १ ) प्रकरणार्थमुपसंहरन्नाह— इतीत्यादि । तदेतदेवमिति । तस्मादेतत् यथोक्तम् एवं विनयेत् उक्तेन विधिना प्रयुञ्जीत । गुरु चेतरदिति । परात्मनोर्बलाबलं बुद्ध्वा चेत्यर्थः । जम.

( २ ) उपसंहरन्नाह— इतीति । इति एवमुक्तप्रकारेण संधिवित्तमाः अतिशयेन संधिविदः संधिम् अनन्तरोक्तं बभाषिरे प्रोक्तवन्तः पूर्वतमाः शुक्रबृहस्पतिप्रभृतयः महर्षयः । बलात् बलादाक्रम्य तत् तस्मात्कारणात् एनं संधिमनिच्छन्तम् अरिं विनयेत् विशेषेण प्रापयेत्, अविकारयेदित्यर्थः । समीक्ष्य प्रज्ञया दृष्ट्वा कार्यं गुरु गौरवशालि च एवम् इतरत् लघु द्विधा द्विप्रकारमिति । उनिसा.

## शुक्रनीतिः

मित्रताकरणं मुख्यं संधिलक्षणम्, आपत्तौ
संधिः कार्यः, संधिसाधनमुपहारः

²याभिः क्रियाभिर्बलवान् मित्रतां याति वै रिपुः ।
सा क्रिया संधिरित्युक्ता विमृशेत् तां तु
यत्नतः ॥

बलवान् रिपुः याभिः क्रियाभिः अनुष्ठानैः वै निश्चितं मित्रतां याति प्राप्नोति सा संधिः इति उक्ता । तां क्रियां यत्नतः विमृशेत् विवेचयेत् । शुनीटी.

बलीयसाऽभियुक्तस्तु नृपोऽनन्यप्रतिक्रियः ।
आपन्नः संधिमन्विच्छेत् कुर्वाणः कालयापनम् ॥

बलीयसा अतिबलवता अभियुक्तः आक्रान्तः अनन्यप्रतिक्रियः अन्यप्रतिकाररहितः अत एव आपन्नः आपद्गतः नृपः कालयापनं कुर्वाणः कालं प्रतीक्षमाणः सन् संधिम् अन्विच्छेत् कुर्यादित्यर्थः । शुनीटी.

एक एवोपहारस्तु संधिरेष मतो हितः ।
उपहारस्य भेदास्तु सर्वेऽन्ये मैत्रवर्जिताः ॥

एकः केवलः हितः हितकरः उपहारः उपदा एव एष संधिः मतः । मैत्रवर्जिताः मैत्रं विना इत्यर्थः, सर्वे अन्ये संमेलनप्रकारा इत्यर्थः, उपहारस्य भेदास्तु विशेषा एव । शुनीटी.

अभियोक्ता बलीयस्त्वादलब्ध्वा न निवर्तते ।
उपहाराद्दते यस्मात्संधिरन्यो न विद्यते ॥

अभियोक्ता आक्रमणकारी प्रबलः राजा बलीयस्त्वात् प्रबलत्वात् अलब्ध्वा, उपहारमिति शेषः, न निवर्तते, यस्मात् उपहारात् ऋते विना अन्यः संधिः न विद्यते । शुनीटी.

शत्रोर्बलानुसारेण उपहारं प्रकल्पयेत् ।
सेवां वाऽपि च स्वीकुर्याद्दद्यात् कन्यां भुवं
धनम् ॥

शत्रोः बलानुसारेण यथाबलमित्यर्थः, उपहारं प्रकल्पयेत् । तथाहि— कुत्रचित् सेवां दासभावं वा स्वीकुर्यात्, अथवा कन्यां भुवं भूमिं वा धनं दद्यात् । शुनीटी.

संधियोग्या राजानः

स्वसामन्तांश्च संधीयान्मन्त्रेणान्यजयाय वै ।
संधिः कार्योऽप्यनार्येण संप्राप्योत्सादयेद्धि सः ॥

नृपः अन्यजयाय अपरशत्रुजयार्थं मन्त्रेण मन्त्रकौशलेन स्वस्य सामन्तान् अधीनस्थनृपान् संधीयात् । किंच अनार्येण दुर्जनेनापि संधिः कार्यः । हि यतः सः अनार्यः संप्राप्य, सुयोगमिति भावः, उत्सादयेत् उत्सन्नं कुर्यादित्यर्थः । शुनीटी.

संघातवान् यथा वेणुर्निबिडैः कण्टकैर्वृतः ।
न शक्यते समुच्छेत्तुं नृपः संघातवांस्तथा ॥

यथा निबिडैः घनैः कण्टकैः वृतः संघातवान् समूहात्मकः वेणुः वंशः समुच्छेत्तुं नैव शक्यते, तथा संघातवान् नृपश्च समुच्छेत्तुं न शक्यते । अतो नृपेण स्वबलविरोधो न कर्तव्य इति भावः । शुनीटी.

---

( १ ) कानी. ९।७९ ; उनिसा. तना ( तमा ) तदेतदेवं ( बलात्तदेनं ) संवीक्ष्य ( समीक्ष्य ).

( २ ) शुनी. ४।७।२३५, २३९–२४४, २४६–२४९.

**बलिना सह संधाय भये साधारणे यदि ।**
**आत्मानं गोपयेत् काले बह्वमित्रेषु बुद्धिमान् ॥**

यदि बहुषु अमित्रेषु शत्रुषु सत्सु तथा साधारणे भये सति यः बलिना प्रबलेन सह संधाय मिलित्वा काले समये आत्मानं गोपयेत् रक्षेत् स बुद्धिमान् । शुनीटी.

**बलिना सह योद्धव्यमिति नास्ति निदर्शनम् ।**
**प्रतिवातं हि न घनः कदाचिदपि सर्पति ॥**

बलिना प्रबलेन सह न योद्धव्यम् इति अत्र निदर्शनं दृष्टान्तः अस्ति । हि तथाहि घनः मेघः कदाचिदपि प्रतिवातं प्रतिकूलं वायुम् अथवा वातं प्रति न सर्पति न गच्छति । शुनीटी.

**बलीयसि प्रणमतां काले विक्रमतामपि ।**
**संपदो न विसर्पन्ति प्रतीपमिव निम्नगाः ॥**

बलीयसि बलवत्तरे प्रणमतां तथा काले समये विक्रमतां जनानां संपदः निम्नगाः नद्यः इव प्रतीपं प्रतिकूलं न विसर्पन्ति न गच्छन्तीत्यर्थः । शुनीटी.

संधिरविश्वास्यः

**राजा न गच्छेद्विश्वासं संधितोऽपि हि बुद्धिमान् ।**
**अद्रोहसमयं कृत्वा वृत्रमिन्द्रः पुराऽवधीत् ॥**

बुद्धिमान् राजा संधितोऽपि कृतसंधिरपि विश्वासं न गच्छेत् । हिशब्दः अवधारणार्थः । पुरा पूर्वस्मिन् काले इन्द्रः अद्रोहसमयम् 'परस्परं द्रोहम् अनिष्टमित्यर्थः, न करोमि' इत्येवंरूपं समयं नियमबन्धं कृत्वा वृत्रमवधीत् । शुनीटी.

## नीतिवाक्यामृतम्

संधिलक्षणम्, संधिसाधनम्

**[1]पणबन्धः संधिः ॥**

यत्र शत्रुणा सह पणबन्धः क्रियते— केनचित्पदार्थेन गृहीतेन वा शत्रोस्तेन विहितेन यो भवति स पण उच्यते, तेन संधिर्भवति । तथा च शुक्रः— 'दुर्बलो बलिनं यत्र पणदानेन तोषयेत् । तावत्संधिर्भवेत्तस्य यावन्मात्रः प्रजल्पितः ॥' । नीवाटी.

**हीयमानः पणबन्धेन संधिमुपेयात् यदि नास्ति परेषां विपणितेऽर्थे मर्यादोल्लङ्घनम् ॥**

हीयमानेन विजिगीषुणा शत्रोर्यथा संधिः कार्यः तदाह— हीयमान इति । हीयमानो विजिगीषुः परेषां सकाशात् पणबन्धेन दण्डव्यवस्थया संधिमुपेयात् संधानं कुर्यात् । यदि नास्ति तेषां विपणितेऽर्थे व्यवस्थायां कृतायां मर्यादोल्लङ्घनं यदि तेषां मर्यादातिक्रमणं न भवति । तत्र विषये शपथः कोशपानादिभिर्निवृत्तिः कार्येति । तथा च शुक्रः— 'हीयमानेन दातव्यो दण्डः शत्रोर्जिगीषुणा । बलयुक्तेन यत्कार्यं तैः समं निधिनिश्चियो( ? ) ॥' । नीवाटी.

**भूम्यर्थिनं भूफलप्रदानेन संदध्यात् ॥**

अथ भूम्यर्थिनः सीमाधिपस्य यदेव भवति ( तदाह )— भूम्यर्थिनमिति । यदा भूम्यर्थी बलवान् सीमाधिपो भवति तदाऽऽह— तस्मै भूमिफलं यद्भवति यदुत्पद्यते तद्वित्तं देयम्, न भूमिर्देयेति नीतिः । तथा च गुरुः— 'सीमाधिपो बलोपेतो यदा भूमिं प्रयाचते । तदा तस्मै फलं देयं भूमेर्नैव धरां निजाम् ॥' । नीवाटी.

**भूफलदानमनित्यम्, परेषु भूमिर्गता गतैव ॥**

अथ भूमिफलेन दत्तेन यद्भवति तदाह— भूफलदानमिति । यद्भूफलदानं तत्किंविशिष्टम् ? अनित्यं विनश्वरम्, पुत्रपौत्रकं परस्य न भवति । यत्पुनर्भूमिदानं तद्गतमेव, भूयो न लभ्यते । तस्मात्पितृपैतामहिका भूमिः परस्मै न दीयत इति । तथा च गुरुः— 'भूमिपस्य न दातव्या निजा भूमिर्बलीयसः । स्तोकाऽपि वा भयं चेत्स्यात्तस्माद्देयं च तत्फलम् ॥' । नीवाटी.

**अवज्ञयाऽपि भूमावारोपितस्तरुर्भवति बद्धतलः ॥**

अथ येन कारणेन परस्य न दीयते तदाह— अवज्ञयाऽपीति । आरोपितः स्थापितः तरुः वृक्षः बद्धमूलो

---

(१) नीवा. २९।४३, ५०, ६४–६६.

भवति जडाभिः प्रसरति । किं पुनर्न महीपतिः पुत्रपौत्रैः प्रसरतीति । तथा च रैभ्यः— ' लीलयाऽपि क्षितौ वृक्षः स्थापितो वृद्धिमाप्नुयात् । तस्या गुणेन नो भूपः कस्मादिह न वर्धते ॥ ' । नीवाटी.

**'यावत्परेणापकृतं तावतोऽधिकमपकृत्य संधिं कुर्यात् ॥**

अथात्यन्तापराधे कृते यत्कर्तव्यं तदाह— यावदिति । यावन्मात्रं परेण शत्रुणा अपराद्धं तावन्मात्रं तस्याधिकमपकृत्य विरुद्धं कृत्वा ततः स्नेहेन संधानं कुर्यात् । तथा च गौतमः— ' यावन्मात्रोऽपराधश्च शत्रुणा हि कृतो भवेत् । तावत्तस्याधिकं कृत्वा संधिः कार्यो बलान्वितैः ॥ ' । नीवाटी.

संधिकालः, संधियोग्या वैरिणः

**नातप्तं लोहं लोहेन संधत्ते ॥**

अथ द्वाभ्यामपि यथा भवति तदाह— नातप्तमिति । तप्तलोहं यद्भवति तत्तप्तेन लोहेन सह संधिं गच्छति । तथा द्वाभ्यामपि भूपाभ्यां कुपिताभ्यां संधानं भवति । तथा च शुक्रः— ' द्वाभ्यामपि हि तप्ताभ्यां लोहाभ्यां च यथा भवेत् । भूमिपानां च विज्ञेयस्तथा संधिः परस्परम् ॥ ' । नीवाटी.

**तेजो हि संधाकारणम्, नापराधस्य क्षान्तिरुपेक्षा वा ॥**

अथापराद्धस्य शत्रोर्यत्कर्तव्यं तदाह— तेजो हीति । सापराधस्य शत्रोरुपरि क्षान्तिर्न कर्तव्या उपेक्षा वा न कर्तव्या । गतार्थमेतत् । नीवाटी.

**पराक्रमकर्कशः प्रवीरानीकश्चेद्धीनः संधाय साधूपचरितव्यः ॥**

अथ येन सह संन्धिः कार्यस्तमाह— पराक्रमकर्कश इति । यदा पराक्रमकर्कशः शौर्यनिष्ठुरः शत्रुर्भवति, तथा प्रवीरानीकश्च यदा भवति, एवमुपचरितव्यः उपचारेण संयुक्तः कार्यः । तथा च शुक्रः— ' यदा स्याद्वीर्यवान् शत्रुः श्रेष्ठसैन्यसमन्वितः । आत्मानं बलहीनं च तदा तस्योपचर्यते ॥ ' । नीवाटी.

(१) नीवा. ३०।५७–५९, ६२.

## युक्तिकल्पतरुः

संधिलक्षणम्, संधिकालः, संधिप्रतिपालनं कर्तव्यम्, असंधेया वैरिणः

**'पणबद्धो भवेत् संधिः स्वयं हीनस्तमाचरेत् ।
मर्यादोल्लङ्घनं नास्ति यदि शत्रोरिति स्थितिः ॥**

**मर्यादोल्लङ्घनं यत्र शत्रौ संशयितं भवेत् ।
न तं संशायितं कुर्यादित्युवाच बृहस्पतिः ॥**

**बलवद्भिर्गृहीतः सन् नृपोऽनन्यप्रतिश्रयः ।
आपन्नसंधिभावेन विदध्यात् कालयापनम् ॥**

**ये च दैवेनोपहता राष्ट्रं येषां च दुर्गतम् ।
बहवो रिपवो येषां तेषां संधिर्विधीयते ॥**

**दुर्मन्त्रो भिन्नमन्त्रश्च नीतिधर्मरतश्च यः ।
एतैः संधिं न कुर्वीत विशेषात् पूर्वपीडितैः ॥
संधिं हि तादृशैः कुर्वन् प्राणैरपि हि हीयते ॥**

## मानसोल्लासः

संधेया असंधेयाश्च राजानः, चतुर्विधः संधिः

**'नाऽऽक्रान्तिसाध्यो यः कश्चित् देशकालाद्यपेक्षया ।
तेन सार्धं प्रकुर्वीत संधिं नीतिविचक्षणः ॥**

**जेता शत्रुं बलिष्ठं यस्तस्मादभ्यधिकेन वा ।
तत्रापि संधिं कुर्वीत नयशास्त्रविशारदः ॥**

**बलीयसा पीड्यमानो योद्धुं तेन च न क्षमः ।
तत्रापि संधिं कुर्वीत मत्वा नीतिमनुत्तमाम् ॥
संधिश्चतुर्विधः प्रोक्तो मैत्रः संबन्धजस्तथा ।
परस्परोपकाराख्य उपहारस्तथैव च ॥**

(१) युक. ११–१२।७९–८५.
(२) मासो. २।७२५–७३२.

सुजनोऽयमिति ज्ञात्वा स्वयं सद्गुणबान्धवः ।
करोत्यलोभतः संधिं मित्रसंधिः स उच्यते ॥

कन्यादानेन यः कुर्यात् संधिं कार्यवशान्नृपः ।
संबन्धजः स विज्ञेयः संधिः संधिविचारकैः ॥

अन्योन्यस्योपकारार्थं यत्र संधीयते नृपः ।
परस्परोपकाराख्यः स संधिः प्रोच्यते बुधैः ॥

गजानश्वांस्तथा रत्नं सुवर्णं भूमिमेव च ।
दत्त्वा यः क्रियते संधिरुपहारः स उच्यते ॥

# विग्रहः

—o—

## महाभारतम्

भेदमूलो विग्रहः

*[1]एवं मे वर्तमानस्य स्वसुतेष्वितरेषु च ।
भेदो न भविता लोके भेदमूलो हि विग्रहः ॥

बलिभिर्विग्रहो न कार्यः

†[2]सर्वथा पुत्र बलिभिर्विग्रहं ते न रोचये ।
वैरं विकारं सृजति तद्वै शस्त्रमनायसम् ॥

विकारं पूर्वावस्थाच्युतिम् । अनायसम् अलोहजम् ।
नीटी.

विदुरस्य धृतराष्ट्रं प्रति उपदेशः— स्वज्ञातिभिर्विग्रहो न कार्यः

[3]यो ज्ञातिमनुगृह्णाति दरिद्रं दीनमातुरम् ।
स पुत्रपशुभिर्वृद्धिं यशश्चाव्ययमश्नुते ॥

[4]ज्ञातयो वर्धनीयास्तैर्य इच्छन्त्यात्मनः शुभम् ।
कुलवृद्धिं च राजेन्द्र तस्मात्साधु समाचर ॥

[5]श्रेयसा योक्ष्यसे राजन् कुर्वाणो ज्ञातिसत्क्रियाम् ।
विगुणा ह्यपि संरक्ष्या ज्ञातयो भरतर्षभ ॥

[1]किं पुनर्गुणवन्तस्ते त्वत्प्रसादाभिकाङ्क्षिणः ।
प्रसादं कुरु दीनानां पाण्डवानां विशां पते ॥

[2]दीयन्तां ग्रामकाः केचित्तेषां वृत्त्यर्थमीश्वर ।
एवं लोके यशःप्राप्तो भविष्यसि नराधिप ॥

[3]वृद्धेन हि त्वया कार्यं पुत्राणां तात रक्षणम् ।
मया चापि हितं वाच्यं विद्धि मां त्वद्धितैषिणम् ॥

[4]ज्ञातिभिर्विग्रहस्तात न कर्तव्यो भवार्थिना ।
सुखानि सह भोज्यानि ज्ञातिभिर्भरतर्षभ ॥

शुभार्थिना ऐश्वर्यलिप्सुना । नीटी.

[5]संभोजनं संकथनं संप्रीतिश्च परस्परम् ।
ज्ञातिभिः सह कार्याणि न विरोधः कथंचन ॥

[6]ज्ञातयस्तारयन्तीह ज्ञातयो मज्जयन्ति च ।
सुवृत्तास्तारयन्तीह दुर्वृत्ता मज्जयन्ति च ॥

सुवृत्तो भव राजेन्द्र पाण्डवान् प्रति मानद ।
अधर्षणीयः शत्रूणां तैर्वृतस्त्वं भविष्यसि ॥

श्रीमन्तं ज्ञातिमासाद्य यो ज्ञातिरवसीदति ।
दिग्धहस्तं मृग इव स एनस्तस्य विन्दति ॥

दिग्धहस्तं विषाक्तबाणहस्तम् । सः श्रीमान् एनः तस्य ज्ञातेरवसादजं पापं विन्दति मृगवधजं पापं व्याध इवेत्यर्थः । नीटी.

---

* युधिष्ठिरोक्तिर्भ्रातॄन् प्रति ।

† धृतराष्ट्रोक्तिर्दुर्योधनं प्रति ।

(१) भामु. २।४६।२८.

(२) भा. २।५१।१० ; भामु. २।५६।११ ग्रहं ते (ग्रहो मे) चये (चते).

(३) भा. ५।३९।१५; भामु. ५।३९।१७–१८ यशश्चाव्यय (श्रेयश्चानन्त्य) ; नीम. ३७ उत्तरार्धे (सपुत्रभृत्यवृद्धिं च श्रेयश्चानन्त्यमश्नुते ॥).

(४) भा. ५।३९।१६; भामु. ५।३९।१८–१९; नीम. ३७ पू.

(५) भा. ५।३९।१७; भामु. ५।३९।१९–२० योक्ष्यसे (योक्ष्यते) ; नीम. ३७ ह्यपि (ह्यापि) उत्त.

(१) भा. ५।३९।१८; भामु. ५।३९।२०–२१ दीनानां (वीराणां) ; नीम. ३७ पू.

(२) भा. ५।३९।१९ ; भामु. ५।३९।२१–२२ यशःप्राप्तो भविष्यसि (यशः प्राप्तं भविष्यति).

(३) भा. ५।३९।२०; भामु. ५।३९।२२–२३ रक्षणम् (शासनम्).

(४) भा. ५।३९।२१; भामु. ५।३९।२३ भवा (शुभा) ; नीम. ३७ पू.

(५) भा. ५।३९।२२; भामु. ५।३९।२४ कथं (कदा).

(६) भा. ५।३९।२३–३० ; भामु. ५।३९।२५–३२.

**पश्चादपि नरश्रेष्ठ तव तापो भविष्यति ।**
**तान्वा हतान् सुतान् वाऽपि श्रुत्वा तदनुचिन्तय ॥**

**येन खट्वां समारूढः परितप्येत कर्मणा ।**
**आदावेव न तत्कुर्यादध्रुवे जीविते सति ॥**

खट्वां समारूढः चिन्तागारं प्रविष्टः । लोके आगन्तुं लज्जमान इत्यर्थः । नीटी.

**न कश्चिन्नापनयते पुमानन्यत्र भार्गवात् ।**
**शेषसंप्रतिपत्तिस्तु बुद्धिमत्स्वेव तिष्ठति ॥**

भार्गवात् शुक्रात् अन्यत्र नीतिशास्त्रकर्तारं शुक्रं विहाय अन्यः कश्चिदपि न अपनयते इति न, अपि तु सर्वोऽप्यपनयते अनीतिं करोति । अतः यत् अतीतं तत् अतीतमेव । शेषस्य तत्कालोचितस्य अर्थस्य प्रतिपत्तिः विचारः कर्तव्य इत्यर्थः । नीटी.

**दुर्योधनेन यद्येतत्पापं तेषु पुरा कृतम् ।**
**त्वया तत्कुलवृद्धेन प्रत्यानेयं नरेश्वर ॥**

तदेवाऽऽह— दुर्योधनेनेति । प्रत्यानेयं प्रतिकर्तव्यम् । नीटी.

**तांस्त्वं पदे प्रतिष्ठाप्य लोके विगतकल्मषः ।**
**भविष्यसि नरश्रेष्ठ पूजनीयो मनीषिणाम् ॥**

प्रतीकारमेवाऽऽह— तानिति । प्रतिष्ठाप्य राज्यांशदानेन स्थिरीकृत्य । नीटी.

**[1]सुव्याहृतानि धीराणां फलतः प्रविचिन्त्य यः ।**
**अध्यवस्यति कार्येषु चिरं यशसि तिष्ठति ॥**

धीराणाम् उपदेष्टॄणां सुव्याहृतानि वचनानि । अध्यवस्यति निश्चयं करोति । उत्तमफलं कर्म आरभते इत्यर्थः । नीटी.

**विदुर उवाच—**

**[2]शकुनीनामिहार्थाय पाशं भूमावयोजयत् ।**
**कश्चिच्छाकुनिकस्तात पूर्वेषामिति शुश्रुम ॥**

(१) भा. ५।३९।३१; भामु. ५।३९।३३ प्रवि (परि).

(२) भा. ५।६२।६ ; भामु. ५।६४।१.

दमस्य श्रैष्ठ्यं प्रतिपाद्यादान्तयोः कलहं कुर्वतोर्द्वयोरपि नाश इति प्रतिपादयन्नाख्यायिकामुखेनाऽऽह— शकुनीनामिति । पूर्वेषां मुखात् । नीटी.

**[1]तस्मिन् द्वौ शकुनौ बद्धौ युगपत् समपौरुषौ ।**
**तावुपादाय तं पाशं जग्मतुः खचरावुभौ ॥**

**[2]तौ विहायसमाक्रान्तौ दृष्ट्वा शाकुनिकस्तदा ।**
**अन्वधावदनिर्विण्णो येन येन स्म गच्छतः ॥**

विहायसं व्योम । नीटी.

**तथा तमनुधावन्तं मृगयुं शकुनार्थिनम् ।**
**आश्रमस्थो मुनिः कश्चिद्ददर्शाथ कृताह्निकः ॥**
**तावन्तरिक्षगौ शीघ्रमनुयान्तं महीचरम् ।**
**श्लोकेनानेन कौरव्य पप्रच्छ स मुनिस्तदा ॥**
**विचित्रमिदमाश्चर्यं मृगहन् प्रतिभाति मे ।**
**प्लवमानौ हि खचरौ पदातिरनुधावसि ॥**

**शाकुनिक उवाच—**

**पाशमेकमुभावेतौ सहितौ हरतो मम ।**
**यत्र वै विवदिष्येते तत्र मे वशमेष्यतः ॥**

**विदुर उवाच—**

**तौ विवादमनुप्राप्तौ शकुनौ मृत्युसंधितौ ।**
**विगृह्य च सुदुर्बुद्धी पृथिव्यां संनिपेततुः ॥**
**[3]तौ युध्यमानौ संरब्धौ मृत्युपाशवशानुगौ ।**
**उपसृत्यापरिज्ञातो जग्राह मृगयुस्तदा ॥**
**[4]एवं ये ज्ञातयोऽर्थेषु मिथो गच्छन्ति विग्रहम् ।**
**तेऽमित्रवशमायान्ति शकुनाविव विग्रहात् ॥**

अमित्रेति छेदः । नीटी.

**संभोजनं संकथनं संप्रश्नोऽथ समागमः ।**
**एतानि ज्ञातिकार्याणि न विरोधः कदाचन ॥**

(१) भा. ५।६२।७ ; भामु. ५।६४।२ द्वौ (तौ) समपौरुषौ (सहचारिणौ).

(२) भा. ५।६२।८–१३; भामु. ५।६४।३–८.

(३) भा. ५।६२।१४; भामु. ५।६४।९ युस्तदा (हा तदा).

(४) भा. ५।६२।१५–१६; भामु. ५।६४।१०–११.

[1]यस्मिन् काले सुमनसः सर्वे वृद्धानुपासते ।
सिंहगुप्तमिवारण्यमप्रधृष्या भवन्ति ते ॥
[2]येऽर्थं संततमासाद्य दीना इव समासते ।
श्रियं ते संप्रयच्छन्ति द्विषद्भ्यो भरतर्षभ ॥
धूमायन्ते व्यपेतानि ज्वलन्ति सहितानि च ।
धृतराष्ट्रोल्मुकानीव ज्ञातयो भरतर्षभ ॥
अङ्के कुरुष्व राजानं धृतराष्ट्र युधिष्ठिरम् ।
युध्यतोर्हि द्वयोर्युद्धे नैकान्तेन भवेज्जयः ॥

युध्यतोरन्यतरस्य नाशोऽपि त्वन्नाश एवेति भावः । नीटी.

## वाल्मीकिरामायणम्

मित्रेण विग्रहः विनाशकः, विग्रहकारणानि

[3]मित्राद्वैरं हि रक्षेत दुःखं मित्रं हि रक्षितुम् ।
मित्रादुत्पतितं वैरं मूलमेव निकृन्तति ॥
[4]भूमिर्हिरण्यं कुप्यं च पशवो विग्रहास्पदम् ॥

## कौटिलीयमर्थशास्त्रम्

विग्रहलक्षणम् , विग्रहहेतुः

[5]अपकारो विग्रहः ॥

शत्रुं प्रति द्रोहाचरणं विग्रहपदार्थः । श्रीमूला.

अभ्युच्चीयमानो विगृह्णीयात् ॥

अभ्युच्चीयमानः उपचीयमानः विगृह्णीयात् शत्रुविषये द्रोहमाचरेत् । श्रीमूला.

सलक्षणा विग्रहप्रकाराः

[6]विक्रमस्य प्रकाशयुद्धं कूटयुद्धं तूष्णींयुद्धम् ॥

प्रकाशयुद्धादयस्त्रयो विग्रहस्य धर्माः । श्रीमूला.

प्रकाशयुद्धं निर्दिष्टो देशे काले च विक्रमः ।
विभीषणमवस्कन्दः प्रमादव्यसनार्दनम् ॥
एकत्र त्यागघातौ च कूटयुद्धस्य मातृका ।
योगगूढोपजापार्थं तूष्णींयुद्धस्य लक्षणम् ॥

अथ युद्धधर्मगतं द्वाभ्यां श्लोकाभ्यामाह— प्रकाशयुद्धमित्यादि । 'अमुकदेशे अमुककाले युद्धमावयोर्वर्तिष्यते' इति संभाष्य विक्रमणं प्रकाशयुद्धं नाम । अल्पस्यापि सैन्यस्य बहुत्वभ्रान्त्युत्पादनेन भयजननम्, दुर्गादिदाहपरिलुण्टनादिकरणम्, प्रमादव्यसनावसरेषु पीडनम्, एकत्र युद्धे वर्तमाने तत्परित्यागः अन्यघातारम्भश्च इत्येषा कूटयुद्धस्य मातृका लक्षणम् । योगगूढोपजापार्थे— योगेन गूढभित्तिशिलापातनादिना योगातिसंधानोक्तेनोपायेन गूढोपजापेन गूढपुरुषद्वारकोपजापप्रयोगेण च अर्थः शत्रुद्रोहरूपं प्रयोजनं यस्मिंस्तत् तथाभूतं चेष्टितं तूष्णींयुद्धस्य लक्षणम् । श्रीमूला.

## चाणक्यसूत्राणि

विग्राह्या अविग्राह्याश्च

[1]बलवान् हीनेन विगृह्णीयात् ॥
न ज्यायसा समेन वा ॥
गजपादयुद्धमिव बलवद्विग्रहः ॥
आमपात्रमामेन सह विनश्यति ॥
यावच्छत्रोश्छिद्रं पश्यति तावद्धस्तेन वा स्कन्धेन वा वाह्यः ॥
शत्रुं छिद्रे परि(?प्र)हरेत् ॥
आत्मच्छिद्रं न प्रकाशयेत् ॥
छिद्रप्रहारिणः शत्रवः ॥
हस्तगतमपि शत्रुं न विश्वसेत् ॥

---

(१) भा. ५।६२।१७ ; भासु. ५।६४।१२ यस्मिन् (ये स).
(२) भा. ५।६२।१८–१९,३१; भासु. ५।६४। १३–१४,२७.
(३) वारा. ४।१६।४२.
(४) वारा. ४।१६।६२ ; वाराकु. ४।१७।३१ ( भूमिर्हिरण्यं रूप्यं च विग्रहे कारणानि च ॥ ).
(५) कौ. ७।१.
(६) कौ. ७।६.

(१) चासू. ५५–५८, १९३–१९७.

## चाणक्यनीतिदर्पणः

विग्रहकालः

'तावद् भयेषु भेतव्यं यावद् भयमनागतम् ।
आगतं तु भयं दृष्ट्वा प्रहर्तव्यमशङ्कया ॥

## चाणक्यनीतिशास्त्रम्

कण्टकेन कण्टकोद्धरणम्

'उपकारगृहीतेन शत्रुणा शत्रुमुद्धरेत् ।
पादलग्नं करस्थेन कण्टकेनेव कण्टकम् ॥

## मनुः

द्विविधो विग्रहः, विग्रहकालः

'स्वयंकृतश्च कार्यार्थमकाले काल एव वा ।
मित्रस्य चैवापकृते द्विविधो विग्रहः स्मृतः ॥

( १ ) स्वयं विग्रहस्य कालः यदाऽवश्यं स्वबलेनोत्सहते परं कर्षयितुम्, उत्साहयुक्तः( ?क्ताः ) प्रकृतयः संहता विवृद्धाश्च स्वकर्मकृष्यादिफलसंपन्नाः, परस्यैतान्यपहरिष्यन्ति कर्माणि, क्षीणलुब्धप्रकृतिः परः, शक्यास्तत्प्रकृतयः उपजापेनाऽऽत्मीयाः कर्तुम्, स स्वयं विग्रहस्य कालः। अकालः एतद्विपरीतः। तत्रापि विग्रहो मित्रस्यापकृते। यदि शत्रुणा तदीयं मित्रमपकृतं तदा तद्विचिन्त्य अकालेऽपि विग्रहः कर्तव्यः। यद्यपि स्वयमपि शत्रोरनन्तरं मित्रं भवति, तथापि तेन मित्रेण सहायेन शक्यः शत्रुरपबाधितुम् । शत्रोरनन्तरं मित्रं भवति शत्रोस्तु शत्रुर्विषयानन्तरम्। पाठान्तरं 'मित्रेण चैवापकृते'। तेन यद्यसौ बाधितो भवति तदाऽकालेऽपि विग्रहः कार्यः । एतद्विग्रहस्य द्वैविध्यं स्वकार्यार्थे मित्रकार्यार्थे च। अथवा आत्मनोऽभ्युच्छ्रयादेकः प्रकारः, मित्रेणापकृते व्यसनिनि तत्रैव द्वितीयः। मेधा.

( २ ) वक्ष्यमाणमार्गशीर्षादिकालादन्यत्र तस्मिन्नेव वा काले कार्यापेक्षया स्वयंकृतः इत्येको विग्रहः। यश्च परस्य शत्रुः तद्विजिगीषोर्मित्रम्, तेनापकारे क्रियमाणे व्यसनिनि शत्रौ द्वितीयः। इत्येवं द्विविधो विग्रहः स्मृतः। गोरा.

( ३ ) स्वार्थे कृतो मित्रार्थे चेति द्विधा। स च सर्वो विग्रहयोग्यकाले हेमन्तादावपि क्रियते अयोग्यकाले वर्षास्वपि। अपकृते अपकारे अन्येन कृते तदपकारार्थम्। मवि.

( ४ ) शत्रुजयरूपप्रयोजनार्थे शत्रोः व्यसनादिकमाकलय्य वक्ष्यमाणमार्गशीर्षादिकालात् अन्यदा यथोक्तकाले एव वा स्वयंकृतः इत्येको विग्रहः । अपकृतम् अपकारः। मित्रस्यापकारे राजान्तरेण कृते मित्ररक्षणार्थमपरो विग्रहः। इत्येवं द्विविधो विग्रहः। * ममु.

( ५ ) स्वयं विजिगीषुणा मित्रे कृतः मित्रेण विजिगीषौ कृतश्चेति द्विविधो विग्रहः। नन्द.

'यदा प्रहृष्टा मन्येत सर्वास्तु प्रकृतीर्भृशम् ।
अत्युच्छ्रितं तथाऽऽत्मानं तदा कुर्वीत विग्रहम् ॥

( १ ) प्रहृष्टाः उत्साहानुरागयुक्ताः दानमानाभ्यामुपसंगृहीताः, आत्मीयाः प्रकृतीः अमात्यादिकाः मन्येत, अत्युच्छ्रितमात्मानं कोशहस्त्यश्वादिसंपदा, तदा केनचिदपदेशेन संधिदूषणं कृत्वा विग्रहमाश्रयेत्। † मेधा.

( २ ) आत्मानं च प्रभूतमन्त्रोत्साहशक्त्यादिना उच्छ्रितम्। § गोरा.

---

( १ ) चाद. ५।३; चाशा. ८।४२ भयेषु ( भयाद्धि ) मशङ्कया ( मभीतवत् ).

( २ ) चानी. २०; चासा. २।९; चाशा. ३।१६.

( ३ ) मस्मृ. ७।१६४; मेधा. मित्रस्य ( मित्रेण ) इत्यपि पाठः; गोरा. मित्रस्य ( मित्रेण ); राक. १११-११२ स्वयंकृतश्च ( स्वयं कृतं च ) वा ( च ) मित्रस्य ( मित्रं ) पकृते ( प्यप्रकृते ); राप्र. ३२५ वा ( च ); नन्द. गोरावत्.

* शेषं गोरानुवादः। मच., राप्र., भाच. ममुगतम्।

† मवि., नन्द., भाच. मेधागतम्।

§ शेषं मेधागतम्। ममु., मच. मेधागतं गोरागतं च।

( १ ) मस्मृ. ७।१७०; राक. ११२ हृष्टा ( कृष्टा ) कुर्वीत ( मन्येत ); रार. ५७ हृष्टा ( कृष्टा ); राप्र. ३२७ कुर्वीत ( मन्येत ); भाच. राप्रवत्.

## विष्णुधर्मोत्तरपुराणम्

विग्रहलक्षणम्, विग्राह्यः अविग्राह्यश्च

[1]अपकारस्तु विग्रहः ॥

विग्रहः विरोधः । राप्र. ३२४

[2]हीनेन विग्रहः कार्यः स्वयं राज्ञा बलीयसा ।
तत्रापि तस्य पार्ष्णिस्तु बलीयान्न समाश्रयेत् ॥

(१) राज्ञा स्वयं बलीयसा सता हीनेन शत्रुणा सह विग्रहः कार्यः । राप्र. ३२७

(२) पार्ष्णिः सेनापतिः । न समाश्रयेत् विग्रहं कुर्यादित्यर्थः । राकौ. २४४

## अग्निपुराणम्

विग्रहकालः, विग्रहकारणानि

[3]परस्परापकारेण पुंसां भवति विग्रहः ॥
आत्मनोऽभ्युदयाकाङ्क्षी पीड्यमानः परेण वा ।
देशकालबलोपेतः प्रारभेतेह विग्रहम् ॥
राज्यस्त्रीस्थानदेशानां ज्ञानस्य च बलस्य च ।
अपहारो मदो मानः पीडा वैषयिकी तथा ॥
ज्ञानात्मशक्तिधर्माणां विघातो दैवमेव च ।
मित्रार्थं चापमानश्च तथा बन्धुविनाशनम् ॥
भूतानुग्रहविच्छेदस्तथा मण्डलदूषणम् ।
एकार्थाभिनिवेशित्वमिति विग्रहयोनयः ॥

प्रशमनीया विग्रहाः पञ्च, षोडश अकार्या विग्रहाः, विग्रहकालः

सापत्न्यं वास्तुजं स्त्रीजं वाग्जातमपराधजम् ।
वैरं पञ्चविधं प्रोक्तं साधनैः प्रशमं नयेत् ॥
किंचित्फलं निष्फलं वा संदिग्धफलमेव च ।
तदात्वे दोषजननमायत्यां चैव निष्फलम् ॥
आयत्यां च तदात्वे च दोषसंजननं तथा ।
अपरिज्ञातवीर्येण परेण स्तोभितोऽपि वा ॥
परार्थं स्त्रीनिमित्तं च दीर्घकालं द्विजैः सह ।
अकालदैवयुक्तेन बलोद्धतसखेन च ॥
तदात्वे फलसंयुक्तमायत्यां फलवर्जितम् ।
आयत्यां फलसंयुक्तं तदात्वे निष्फलं तथा ॥
इतीमं षोडशविधं न कुर्यादेव विग्रहम् ।
तदात्वायतिसंशुद्धं कर्म राजा सदाऽऽचरेत् ॥
हृष्टं पुष्टं बलं मत्वा गृह्णीयाद् विपरीतकम् ।
मित्रमाक्रन्द आसारो यदा स्युर्दृढभक्तयः ॥
परस्य विपरीतं च तदा विग्रहमाचरेत् ॥

(१) विध. २।१५०।३; अग्नि. २३४।१८; राप्र. ३२४ (=); राकौ. २४४ अपकार (असत्कार).
(२) विध. २।१५०।६; अग्नि. २३४।२१ तस्य (शुद्ध) यान्न (यांसं); राप्र. ३२७ पू.; राकौ. २४४.
(३) अग्नि. २४०।१४–२६.

## कालिकापुराणम्

विग्रहार्हकारणानि

[1]विग्रहे(?हं) सततं राजा परैर्न सम्यगाचरेत् ।
भूवित्तमित्रलाभेषु निश्चितेष्वेव विग्रहाः ॥

## कामन्दकीयनीतिसारः

विग्रहकारणानि, विग्रहार्हकारणानि

[2]अमर्षोपगृहीतानां मन्युसंतप्तचेतसाम् ।
परस्परापकारेण पुंसां भवति विग्रहः ॥

(१) संध्युपायत्वात् विग्रहस्य तदनन्तरं विग्रहविकल्पा उच्यन्ते । तत्र लोकप्रतीत्या विग्रहोत्पत्तिं दर्शयन्नाह– अमर्षेत्यादि । अमर्षः परिभवासहिष्णुता । मन्युशब्दोऽत्र दुःखे वर्तते । परस्परापकारेणेति विग्रहस्य स्वरूपमाह । इदमुक्तं भवति– अमर्षात् शारीरद्रव्यपीडनादिदुःखाच्च लोके परस्परापकारलक्षणो विग्रहो भवतीति । तथा चोक्तम्– 'आरण्योऽग्निरिव हि दुःखामर्षजं तेजो विक्रमयति' (कौ. ७।३) इति । जम.

(२) संधिविकल्पानन्तरं विग्रहविकल्पमभिधातुं विग्रहार्हकारणान्येव तावदाह– अमर्षोपगृहीतानामिति । परस्परापकारनिबन्धनः अमर्षः मन्युश्च विग्रहकारणमिति भावः । श्लोकार्थः सुप्रतीतः । उनिसा.

(१) कालिका. ८७।१००. (२) कानी. १०।१.

[1]आत्मनोऽभ्युदयाकाङ्क्षी पीड्यमानः परेण वा।
देशकालबलोपेतः प्रारभेतैव विग्रहम् ॥

(१) वैशेषिकं विधिमाह— आत्मन इत्यादि। अजातदुःखामर्षोऽप्यात्मवृद्धिं वाञ्छन् परेण वा राज्यापहारादिना पीड्यमानो जातदुःखामर्षो विगृह्णीयात्। देशकालबलोपेत इत्युभयत्रापि द्रष्टव्यम्। बलं शक्तिः। देशकालाद्यभ्युचित इत्यर्थः। प्रारभेतैवेत्यवधारणादयमेव पक्षो ज्यायानिति दर्शयति। जम.

(२) न केवलममर्षादिकं विग्रहकारणम्, आत्मनोऽभ्युदयाकाङ्क्षाद्यपीत्याह— आत्मन इति। आत्मनः स्वस्य अभ्युदयाकाङ्क्षी समुन्नयेच्छुः, पीड्यमानः परेण वा शत्रुणा कृतापकारः, देशकालबलोपेतः— देशः विपक्षवशीकृतात् पर्वतादेर्वा युद्धप्रतिबन्धकाद्भिन्नो देशः, कालः युद्धोपयोगिशरदादिरूपः, बलं सैन्यम्, तैरुपेतः, यद्वा देशकालयोर्बलेन उपेतः प्रारभेत इह विग्रहम्, नान्यथेत्यर्थः। ततश्च स्वस्य उन्नतीच्छा परकृतापकारश्च एतद्द्वयमपि युद्धकारणमिति। उनिसा.

[2]राज्यस्त्रीस्थानदेशानां ज्ञानस्य च बलस्य च।
अपहारो मदो मानः पीडा वैषयिकी तथा ॥
[3]ज्ञानार्थशक्तिधर्माणां विघातो दैवमेव च।
मित्रार्थं चावमानश्च तथा बन्धुविनाशनम् ॥
[4]भूतानुग्रहविच्छेदस्तथा मण्डलदूषणम्।
एकार्थाभिनिवेशित्वमिति विग्रहयोनयः ॥

(१) यैः परेण पीड्यमानो विगृह्णीयात्, तान् विग्रहहेतूनाह— राज्येत्यादिश्लोकत्रयेण। अत्र ज्ञानग्रहणमेकमपहारशब्देन संबध्यते, द्वितीयं विघातशब्देन संबन्धनीयम्। एते विंशतिः विग्रहहेतवः। जम.

(२) विग्रहोत्पत्तिकारणान्यभिधातुमाह— राज्येति। राज्यस्त्रीस्थानदेशानाम्— राज्यं प्रसिद्धम्, स्त्री सीतादिकल्पा, स्थानं जनपदादि, देशः राष्ट्रैकदेशः, तेषाम्। यानं हस्त्यश्वादि वाहनम्। धनस्य रत्नादेः। एतेषां प्रत्येकमपहारः। तथा मदः शौर्यादिजनितो दर्पः। मानः अहंकारः 'अहमपि रावणो भयात् सीतां प्रत्यर्पयामि ?' इत्येवंरूपः। तथा वैषयिकी जनपदरूपविषयसंबन्धिनी पीडा च। विग्रहयोनिरिति संबन्धः। अपराण्यपि विग्रहयोनित्वेन प्रसिद्धानीत्याह— ज्ञानार्थेति द्वाभ्याम्। ज्ञानविघातः ज्ञानस्य ज्ञानकारणीभूतोपाध्यायादेः विघातः। अर्थस्य भूमिहिरण्यमित्ररूपस्य विघातः। धर्मविघातः धर्मस्य सामाजिकनियमस्य विघातः। शक्तिविघातः प्रभुमन्त्रोत्साहशक्तीनां विघातः। विघातशब्देनात्र सामान्यतोऽसद्भाव एव ग्राह्यः। दैवं जन्मान्तरकृतं शुभाशुभलिङ्गम्। मित्रार्थं मित्रसहायतारूपप्रयोजनम्। अपमानं मान्यानामवमानना। तथा बन्धुविनाशनम्। भूतानुग्रहविच्छेदः भूतेषु प्राणिषु योऽनुग्रहस्तस्य विच्छेदः स्वेन दत्ताभयं प्राणिनं प्रत्यपरस्याऽऽक्रमणम्। तथा मण्डलदूषणम्— मण्डलस्य राज्यस्य प्रकृतीनामिति यावत्, दूषणं विरागः विद्रोहप्रवृत्तिः। एकार्थाभिनिवेशित्वम् एकस्मिन् विषये उभयोराग्रहः। इति एवंप्रकाराणि अन्यान्यपि परीवादस्तेयादीनि। विग्रहयोनयः विग्रहस्य हेतवः, भवन्तीति शेषः।
* उनिसा.

विग्रहप्रशमनोपायाः

[1]राज्यस्त्रीस्थानदेशानां दानेन च दमेन च।
विग्रहस्य तु युक्तज्ञैरिति प्रशमनं स्मृतम् ॥

(१) तत्र देशकालबलोपेतश्चेत् विगृह्णीयात्, नो चेदभ्युपायैः शमयेदित्युपायानाह दशभिः श्लोकैः—

(१) कानी. १०१२ ; उनिसा. मेतैव (मेतेह) ; नीम. ४४ उनिसावत्.

(२) कानी. १०१३; उनिसा. ज्ञान (यान) बल (धन); नीम. ४४ ज्ञान (पान) बल (धन).

(३) कानी. १०१४; उनिसा. शक्तिधर्माणां (धर्मशक्तीनां) चावमानश्च (चापमानं च); नीम. ४४ चाव (चाप) उक्त.

(४) कानी. १०१५ ; नीम. ४४.

* नीम. उनिसागतम्।

(१) कानी. १०१६ ; उनिसा. युक्त (युक्ति).

राज्येत्यादि । सप्तोपायान् वक्ष्यति 'साम दानं च भेदश्च दण्डश्चेति चतुष्टयम् । मायोपेक्षेन्द्रजालं च सप्तोपायाः प्रकीर्तिताः ॥' (कानी. १८।३) इति । तत्र राज्यं प्रकृतयः, स्त्री अवरोधसंबद्धा, स्थानं दुर्गम्, देशः राष्ट्रम्, एषामन्यतमापहारजस्य विग्रहस्य प्रशमनमिति संबन्धः । दानेन दमेन चेति । कोशदण्डभूमीनामन्यतमप्रदानेन राज्यप्रत्यानयनहेतुना, दमेन चेत्यप्रकाशेन दण्डेन । इदमुक्तं भवति— राज्यादिकमपहरन्तं शत्रुं तूष्णींयुद्धेनोपताप्य प्रकाशयुद्धान्निवर्तयेदिति । जम.

(२) कारणाभावात् कार्याभावं मन्यमानो विग्रहकारणानामुत्पन्नानामप्युपशमार्थमाह— राज्यस्त्रीति । राज्यादीनाम् उक्तप्रकाराणां प्राधान्यादपहृतानामपि दानेन प्रत्यर्पणेन दमेन उपशमेन च विग्रहस्य सम्यक्प्रशमनं युक्तिज्ञैः युक्तिविशारदैः स्मृतम् । उनिसा.

**[१]एतदेव तु विज्ञेयं स्वार्थधर्मविघातजे ।**
**विषयध्वंसजे शत्रोर्विषयप्रतिपीडनम् ॥**

(१) स्वार्थधर्मविघातजे विग्रह इति विपरिणतमनुषज्यते । 'ज्ञानार्थशक्तिधर्माणां विघातः' इत्यत्रार्थधर्मौ निर्दिशति । ज्ञानशक्ती तु निर्देक्ष्यति । स्वार्थः दुर्गादिकर्म, स्वधर्मश्च अश्वमेधादिप्रवर्तनम् । विषयध्वंसज इति पीडां वैषयिकीं निर्दिशति । शत्रोर्विषयप्रतिपीडनं यावन्मात्रं शत्रुर्दाहविलोपादिना अपकुर्यात् तावन्मात्रमस्य प्रत्यपकुर्यात्, तेजसः संधानकारणत्वात् । जम.

(२) विषयभेदेन विग्रहस्य व्यवस्थापनमाह— एतदेवेति । स्वार्थधर्मविघातजे स्वार्थविघातधर्मविघाताभ्यां जाते विग्रहे एतदेव पूर्वोक्तं प्रशमनमेव । विषयध्वंसजे शत्रुकृतविषयविनाशजनिते पुनर्विग्रहे शत्रोः विषयप्रतिपीडनं प्रशमनमित्यर्थः । उनिसा.

**[२]ज्ञानापहारसंभूते ज्ञानशक्तिविघातजे ॥**
**शमस्तदर्थत्यागेन क्षान्त्या वोपेक्षणेन वा ॥**

(१) ज्ञानापहारसंभूते ज्ञानशक्तिविघातज इति । 'अशास्त्रचक्षुर्बालिशतरः' इति परेण सद्भूतज्ञानविलोपात् तेजस्विनो विग्रहः संभवति । तथा शास्त्रादिपरिज्ञानं मा भूदस्येतीर्ष्यया आचार्यनिवारणादिव्यापारेण ज्ञानविघातादपि संभवति, यथा दुर्योधनेनार्जुनस्य । विजिगीषोः परेण पार्ष्णिग्राहादिना शक्तिविघातात् विग्रहो भवति । एषु त्रिषु यथासंभवं शमोपायत्रयम् । तत्र शक्तिविघातजे तदर्थत्यागेन शमोऽभियुञ्जानस्य । यदर्थमयं शक्तिं विहन्यात् तमर्थं त्यजेत् । अथवा पराभियोगादभियोगसाध्यार्थसंप्रदानेन शमः । क्षान्त्या च ज्ञानापहारसंभूते शमः । तत्र शुष्कविग्रहे बलवतोऽपि क्षान्तिरेव श्रेयसी । सा च क्रोधोपशमस्वभावत्वात् सामरूपैव । उपेक्षणेन च ज्ञानविघातजे शमः । 'कियन्तं कालं ज्ञानविघातं मे करिष्यति?' इति बलवानप्युपेक्षेत, न साहसात् विगृह्णीयात् । जम.

(२) भिन्नविषयकस्य विग्रहस्य प्रशमनोपायमाह— धनापहार इति । धनापहारसंभूते भूहिरण्याद्यर्थविघातजे, ज्ञानशक्तिविघातजे उपाध्यायप्रभुशक्त्यादिविघातजनिते च विग्रहे शमः प्रशमनं तदर्थत्यागेन, क्षान्त्या क्षमया, उपेक्षणेन अन्यदीयादनुज्ञानात् समुद्भवेन अस्वाभाविकेनेत्यर्थः । उनिसा.

**[३]अधर्मद्रोहसंयुक्ते मित्रजातेऽप्युपेक्षणम् ।**
**आत्मवन्मित्रजाते तु प्राणानपि परित्यजेत् ॥**

(१) मित्रजात इति मित्रार्थं निर्दिशति । तत्र अधार्मिकस्य कृतद्रोहस्य च मित्रस्य अर्थादन्येन सहोत्पन्नं विग्रहं बलवानप्युपेक्षेत । आत्मवन्मित्रजाते त्विति । धार्मिकस्य मित्रभाविनश्च मित्रस्य अर्थादन्येनोत्पन्ने विग्रहे दुर्बलोऽपि प्राणानपि परित्यजेत् । तथाहि 'मित्रगोब्राह्मणार्थेषु सद्यः प्राणान् परित्यजेत्' इति निदर्शनम् । जम.

(२) मित्रनिमित्तविग्रहे प्रशमोपायमाह— अधर्म इति । मित्रजाते मित्रवृन्दे अधर्मद्रोहसंयुक्ते सति

---

[१] (१) कानी. १०१७.

[२] (२) कानी. १०१८ ; उनिसा. ज्ञाना (धना).

[३] (१) कानी. १०१९ ; उनिसा. जाते तु (वर्गार्थे).

मित्रार्थे समुत्पन्ने विग्रहे उपेक्षणं प्रशमनं भवति । आत्मवन्मित्रवर्गार्थे कौटिल्योक्तमित्रगुणरूपात्मविशिष्ट-मित्रवृन्दे सति तु प्राणानपि परित्यजेत्, का कथा उपेक्षणादिष्वित्यर्थः । उनिसा.

**[1]अपमानात्तु संभूतं मानेन प्रशमं नयेत् ।
सामपूर्व उपायो वा प्रणामो वाऽभिमानजे ॥**

(१) अपमानात्त्विति । विजिगीषुणा परस्य वाक्पारुष्याद्यपमानात् । मानेन सान्त्वपूर्वेण सत्कारेण । अभिमानजे इति मानं निर्दिशति । असाध्येऽभ्युन्नतमनस्कतां दर्शयतो रावणस्येव विग्रह उत्पद्यते । तत्र सामपूर्व उपायः दानभेदात्मकः प्रणामो वा शमहेतुः । ननु च 'तवाहम्' इत्यात्मोपनिधानं प्रणामः सामैव । सत्यम् । अभिमानजे प्रधानमात्मोपनिधानमिति दर्शनार्थं पृथङ्निर्देशः । जम.

(२) अवमाननाजनिते अभिमानसंभूते च विग्रहे प्रशमनोपायमाह— अपमानादिति । सुगमम् । उनिसा.

**रहस्येन प्रयोगेण रहस्यकरणेन वा ।
विग्रहं शमयेद्धीरो बन्धुनाशसमुद्भवम् ॥**

(१) बन्धुनाशसमुद्भवमिति । विजिगीषुणा परस्य बन्धुविनाशात् विग्रह उत्पद्यते । तत्र दुर्बलश्चेत् रहस्येन प्रयोगेण सामादीनां चतुर्णामुपांशुप्रयोगेण रहस्यकरणेन वा मायेन्द्रजालसंपादनेन शमयेत्, अन्यथा 'अनेन मे बन्धुर्हतः' इति परः परशुराम इव कार्तवीर्यं नियतमेनं विगृह्णीयात् । जम.

(२) बन्धुनाशसमुद्भवे विग्रहे प्रशमोपायं तावदाह— रहस्येन प्रयोगेण रहस्यकरणेन वा । विग्रहमिति । रहस्येन गोपनेन प्रयोगेण, सामादीनामिति शेषः, रहस्यकरणेन— रहस्यानि क्रोधोपशमनमोहनमारणादीनि आभिचारिकाणि, तेषां करणेन वा बन्धुनाशसमुद्भवं विग्रहं शमयेदित्यन्वयः । स्पष्टमन्यत् । उनिसा.

(१) कानी. १०।१०–११.

**[1]येन पीडा न जायेत तादृशं तु विचक्षणः ।
कुर्यादर्थपरित्यागमेकार्थाभिनिवेशजे ॥**

(१) यस्तु परित्यज्यमानः पीडामावहति तं न परित्यजेत्, तदर्थमेव तस्याभिनिवेशात् । जम.

(२) एकविषयाभिनिवेशजनिते विग्रहे प्रशमनोपायमाह— येनेति । येन अर्थत्यागेन पीडा प्रभुशक्तीनां क्षीणत्वं न जायेत, विचक्षणः एकार्थाभिनिवेशजे तुल्यविषयवासनामूलके विग्रहे तादृशम् अर्थपरित्यागं कुर्यात् । न सर्वमिति तात्पर्यार्थः । उनिसा.

(३) विग्रहशमनं चावश्यं कुर्यादित्याह स एव— कुर्यादिति । नीम. ४५.

**[2]धनापहारजे जातु विरोधं न समाचरेत् ।
कदाचिद्विग्रहे पुंसां सर्वनाशोऽपि जायते ॥**

(१) परेण कोशस्यैकदेशापहारात् विग्रह उत्पद्यते । तत्र विरोधं न समाचरेत्, क्षान्तिमेव कुर्यात्, मा भूत् सर्वनाश इति । जम.

(२) कोशापहारजनिते विग्रहे तदपहारसहनमेव शमनोपाय इत्याह— धनापहारजाते तु विरोधमिति । धनापहारजाते कोशापहरणजनिते विग्रहे सति तु पुनः विरोधं द्वन्द्वं न समाचरेत् । कस्मादित्याह— कदाचिदित्यादि । स्पष्टम् । तस्मात् धनांशापहारः सोढव्य इति । उनिसा.

**[3]सर्वोपायैरतो राजा विग्रहं न समाचरेत् ।
उपायान्तरनाशे तु स्वन्तं विग्रहमाचरेत् ॥
[4]दृष्टोपन्यासयुक्तेन संप्रदानादिकेन च ।
महाजनसमुत्पन्नं भेदेन प्रशमं नयेत् ॥**

(१) कानी. १०।१२ ; नीम. ४५ वेशजे (वेशने) उत्त.

(२) कानी. १०।१३ ; उनिसा. जे जातु (जाते तु) ; नीम. ४५ जे जातु (जाते नु) नाशोऽपि (नाशस्तु).

(३) नीम. ४५.

(४) कानी. १०।१४ ; उनिसा. दृष्टो (तृष्णो) संप्र (साम) श्लोकार्धौ व्यत्यासपठितौ.

(१) महाजनसमुत्पन्नमिति मदं निर्दिशति। शौर्याद्यवलेपाल्लोकमभिभवतो महाजनविरोधो भवति। तं भेदेन शमयेत्, बहूनां संहतानां भेदसाध्यत्वात्। जम.

(२) एभिरेव कारणैः बहुभिः सह समुत्पन्ने विग्रहे प्रशममाह— महाजन इति। महाजनसमुत्पन्नं बहुजनैः सह समुत्पन्नं विग्रहं तृष्णोपन्यासयुक्तेन प्रलोभनसहकृतेन भेदेन सामदानादिकेन च उपायविशेषेण प्रशमं शान्तिं नयेत् प्रापयेत्। उनिसा.

**[1]भूतानुग्रहविच्छेदजातस्यान्तं व्रजेद्वशी।**
**दैवमेव तु दैवोत्थे शमनं साधुसंमतम्॥**

(१) भूतरक्षणं राज्ञो धर्मः। तस्मिन् परेण विच्छिद्यमाने अवश्यंभावी विग्रहः। तस्यान्तं व्रजेत् दुर्बलोऽपि लोकानुग्रहमेव साधयेत् स्वयमेव वा न भवेदित्यर्थः। दैवोत्थ इति। दैवहेतुके ग्रहोपसृष्टप्रभवे इति यावत्, दैवमेव शमनम् अथर्वविहितं कर्म शान्तिकपौष्टिकं साधुसंमतं पुरोहिताभिप्रेतम्। जम.

(२) भूतानुग्रहविच्छेदजे दैवजे च विग्रहे प्रशमनमाह— भूतेति। भूतानुग्रहविच्छेदः अनन्तरोक्तः, तज्जातस्य विग्रहस्य अन्तं शेषं वशी विजितेन्द्रियः व्रजेत्, नान्य इत्यर्थः। शिष्टं प्रतीतम्। उनिसा.

**[2]मण्डलक्षोभसंभूतमुपायैः प्रशमं नयेत्॥**

(१) मण्डलं हि प्रकोपयतस्तत्संक्षोभात् विरोध उत्पद्यते। उपायैः सामदानादिभिः। जम.

(२) मण्डलदूषणजे विग्रहे प्रशमनमाह— मण्डलक्षोभेति। मण्डलक्षोभः प्रकृतीनां विरागः। विद्रोह इति यावत्। उपायैः सामादीनां येन केनचिदपि उपायेनेत्यर्थः। उनिसा.

विग्रहप्रकाराः

**[3]सापत्नं वास्तुजं स्त्रीजं वाग्जातमपराधजम्॥**

(१) कानी. १०।१५. (२) कानी. १०।१६.

(३) कानी. १०।१६; उनिसा. वाग्जात (चारज) उत्तरश्लोकव्याख्याने आदर्शवदपि पाठः सूचितः.

**[1]वैरप्रभेदनिपुणैर्वैरं पञ्चविधं स्मृतम्।**
**जातं भूम्युपरोधेन तथा शक्तिविघातजम्॥**
**[2]भूम्यनन्तरजातं च मण्डलक्षोभजं तथा।**
**चतुर्विधं वैरजातं बाहुदन्तिसुतोऽब्रवीत्॥**

(१) मतान्तरमाह श्लोकत्रयेण— सापत्नमित्यादि। दैवस्याचिन्त्यत्वान्मानुषोत्थं पञ्चविधं विरोधकारणम्, शेषाणामत्रैवान्तर्भावादिति केचित्। तत्र सपत्नीभवं (? सपत्नभवं) सापत्नं विभीषणरावणयोरिव। अत्रैकार्थाभिनिवेशजः अन्तर्गतः। स्त्रीजवास्तुजयोः स्त्रीस्थानापहारजौ। वाग्जाते ज्ञानापहारजावमानसंभूतौ। अपराधजे च परिशिष्टाश्चतुर्दशान्तर्भूताः।

अपराधस्यानेकप्रकारत्वाच्चतुर्विधमित्यपरः। तत्र भूम्युपरोधजाते स्थानदेशापहारजौ अन्तर्भूतौ। शक्तिविघातजं मण्डलक्षोभजं ज स्वरूपत एवोक्ते। भूम्यनन्तरजाते च परिशिष्टाः पञ्चदशान्तर्भूताः, भूम्यनन्तरस्य शत्रोरनेकधापराध्यमानत्वात्। वैरमेव वैरजातं द्रव्यजातवत्। जम.

(२) इदानीं वैरस्य प्रभेदमाह— सापत्नमिति। सपत्नः शत्रुः, तज्जं सापत्नम्। वास्तुजं भूम्यादिहरणविषयकविरोधजनितम्। स्त्रीजं स्त्रियां स्वेतरप्रणयघटितम्। चारजं चारैरुत्पादितम्। अपराधजं स्वापराधजनितम्। एतत् पञ्चविधं वैरं वैरप्रभेदनिपुणैः वैरापनोदनकुशलैः स्मृतम्।

प्रकारान्तरेण वैरं चतुर्विधमित्याह सार्धश्लोकेन— जातमिति। द्विविधवास्तुजयोर्वैरयोर्मध्ये भूम्युपरोधेन जातं भूमेराक्रमणेन उद्भूतं प्रथमम्। अनुपरोधेऽपि भूम्यनन्तरजातम्— भूमेरनन्तरम् अव्यवधानम्, तेन जातं सीमाविवादजमिति यावत्। तत् द्वितीयम्। तथा शक्तिविघातजं प्रभुमन्त्रोत्साहादिविघातजनितम्। तथा मण्डलक्षोभजं द्वादशराजकरूपमण्डलक्षोभेण जनितम्। एवं चतुर्विधं वैरजातं वल्गुदन्तीसुतः इन्द्रः मन्यते।

(१) कानी. १०।१७.

(२) कानी. १०।१८; उनिसा. बाहुदन्ति (वल्गुदन्ती).

दुष्प्रतिविधेयमिति शेषः । वाग्जातापराधजस्तु सुप्रतिविधेय एव । उनिसा.

'कुलापराधजे प्राहुर्वैरे द्वे एव मानवाः ॥

( १ ) अन्ये सहजकृत्रिमभेदात् द्विविधमाहुः । तत्र कुलक्रोधजे सहजविरोधे एकार्थाभिनिवेशजस्यान्तर्भावः । अपराधजे च कृत्रिमे च परिशिष्टानामिति । जम.

( २ ) सामान्यतो वैरं पुनर्द्विविधमित्याह— कुलापराधजे इति । कुलापराधजं कुलजम् अपराधजं च । तत्र कुलजं पैतृकवैरानुबन्धेन जातं चिरसपत्नजमित्यर्थः । तत्तु निष्कारणकम् । अपराधजं तु सकारणकम् । मानवाः मन्यन्ते । उनिसा.

षोडश विग्रहा वर्ज्याः

'किंचित्फलं निष्फलं च संदिग्धफलमेव च ॥

( १ ) देशकालबलोपेतोऽपि विग्रहं कुर्वन् षोडशविधं त्यजेदित्यपवादमाह श्लोकाष्टकेन— किंचित्फलमित्यादि । तदात्वे चाऽऽयत्यां च स्वल्पफलं निष्फलं संदिग्धफलं च । 'न कुर्यादेव विग्रहम्' इति वक्ष्यमाणेन प्रतिपदं योज्यम् । जम.

( २ ) इदानीं षोडशविधविग्रहान् न कुर्यादिति वक्तुं तानेव षोडशविधान् विग्रहानाह— किंचित्फलमिति । किंचित्फलं स्वल्पफलकम् । निष्फलं फलरहितम् । संदिग्धफलं संशयितफलम् एव वा । उनिसा.

'तदात्वे दोषजननमायत्यां चापि निष्फलम् ।
आयत्यां च तदात्वे च दोषस्य जननं तथा ॥

( १ ) तदात्वे दोषजननमिति आयत्यां सफलम् । तदात्वे प्रतिकार्ये पश्चात्कोपादिदोषकरम् आयत्यां चापि निष्फलम् । तदात्वे दोषस्य जननमिति । आयत्यां मण्डलकोपादिदोषस्य तदात्वे च पार्ष्णिग्राहादिदोषस्य जननम् । जम.

( २ ) तदात्वे विग्रहसमकाल एव दोषजननं मित्रविरोधमण्डलक्षोभादिकरम् । आयत्यां परिणामे निष्फलं फलरहितम् । स्पष्टमन्यत् । उनिसा.

'अपरिज्ञातवीर्येण परेण स्तोभितोऽपि वा ।
परार्थं स्त्रीनिमित्तं च दीर्घकालं द्विजोत्तमैः ॥

( १ ) अपरिज्ञातवीर्येण अन्तस्तत्त्वतोऽपरिच्छिन्नबलेन हि परेण सह विग्रहस्य क्षयादिदोषकरत्वात् । स्तोभितोऽपि वा 'हन्यतां कलिना कलिः' इति मन्यमानेनापरेणालीकदोषप्रख्यापनात् संदीपितोऽपि वा । परार्थं अनुपकारिणः परस्यार्थेनेत्यर्थः । स्त्रीनिमित्तं सामान्ययोषिदर्थम् । दीर्घकालम्, दीर्घविग्रहस्य क्षयादिदोषफलत्वात् । द्विजोत्तमैः प्रकृष्टक्रियादियुक्तैः सह विग्रहो विनाशायैव । जम.

( २ ) अपरिज्ञातवीर्येण अनधिगतसामर्थ्येन सह, वा अथवा दुष्टेन अपरेण कपटिना स्तोभितः विग्रहे ग्राहितविग्रहप्रवृत्तिः सन्, विग्रहं न कुर्यादिति संबन्धः । परार्थं परस्यार्थसंपत्तये । स्त्रीनिमित्तं एकार्थाभिनिवेशित्वेन स्त्रीलाभाय च । दीर्घकालं बहुकालव्यापिनम् । द्विजोत्तमैः ब्राह्मणैः, महापातकसंबन्धात् । विग्रहं न कुर्यादिति संबन्धः । उनिसा.

'अकालदैवयुक्तेन बलोद्वृत्तसखेन च ।
तदात्वे फलसंयुक्तमायत्यां फलवर्जितम् ॥

( १ ) अकालदैवयुक्तेन अकस्मात् दैवसंपन्ने लब्धवरत्वात् । बलोद्वृत्तसखेन च शक्त्यभ्यधिकमित्रयुक्तेन । तदात्वे फलसंयुक्तम्, परदेशविलोपादिलाभात् । आयत्यां फलवर्जितम्, शत्रोः सापाश्रयस्यानुच्छेदात् । जम.

( २ ) किंच— अकाल इति । अकाले विग्रहायोग्यकाले वर्षादौ । दैवयुक्तेन दैवशक्तिसंपन्नेन सह । बलोद्धतसखेन बलगर्वितमित्रादिसहितेन वैरिणा च सह । तदात्वे तत्काले फलजनकमपि उत्तरकाले फलविवर्जितम् । उनिसा.

---

( १ ) कानी. १०।१९.
( २ ) कानी. १०।१९ ; उनिसा. मेव च ( मेव वा ).
( ३ ) कानी. १०।२०.

( १ ) कानी. १०।२१ ; उनिसा. परेण ( दुष्टेन ).
( २ ) कानी. १०।२२ ; उनिसा. अकाल ( अकाले ) द्वृत्त ( द्धत ) ; नीम. ४४ उत्त.

( ३ ) कर्तव्याकर्तव्यविग्रहावाह स एव— तदात्व इति । नीम. ४४

**[1]आयत्यां फलसंयुक्तं तदात्वे निष्फलं तथा ।
इतीमं षोडशविधं न कुर्यादेव विग्रहम् ॥**

( १ ) आयत्यां फलसंयुक्तम् , मण्डलस्य शत्रोरुच्छेदे विजिगीषोर्मण्डलानुग्राह्यतालाभात् । तदात्वे निष्फलम् , देशविलोपादिफलाभावात् । जम.

( २ ) उत्तरकाले फलजनकमपि आपाततो विफलं विग्रहं न कुर्यादिति संबन्धः । पूर्वोक्तं षोडशविधं वैरं नानुष्ठेयमित्याह— इतीममिति । किंचित्फलम् , निष्फलम् , संदिग्धफलमिति त्रयम् । संग्रामसमसमयमेव अनिष्टकरं चतुर्थम् । आयत्यां निष्फलं पञ्चमम् । अवरोधकेनापि अपरिज्ञातवीर्येण सह षष्ठम् । दुष्टेन सह विग्रहं सप्तमम् । परार्थम् अष्टमम् । स्त्रीनिमित्तं नवमम् । दीर्घकालव्यापिनं च दशमम् । ब्राह्मणेन सह एकादशम् । असमये द्वादशम् । दैवबलसंपन्नेन भूपतिना सह त्रयोदशम् । बलगर्वितबन्धुसहायेन च सह चतुर्दशम् । तत्कालं फलदायकमपि आयत्यां फलविवर्जितं पञ्चदशम् । उत्तरकाले फलजनकमपि तत्कालं फलहीनं षोडशं विग्रहम् । इतीमं षोडशविधमेव विग्रहं न कुर्यात् । उनिसा.

( ३ ) उभयोः फलवान् उत्तमः । *एव त्रैविध्यम् । उभयमपि मध्यमम् । यस्तु तदात्वायत्योः अफलः सोऽधमः । नीम. ४५

* ग्रन्थोऽयमशुद्धः । ‘ एकत्रवन्ध्यम् ’ इति शुद्धिः संभवति । एकत्र तदात्वे आयत्यां वा वन्ध्यं निष्फलमिति तदर्थः । उभयविशेषणं चैतत् । एतदर्थपरा अन्या वा काचिच्छुद्धिः कल्पनीया । ‘ एवं त्रैविध्यम् ’ इति काचित्कं पाठमादायैतद्वाक्यस्यान्ते निवेशनमित्येवंरूपा शुद्धिकल्पना तु न श्लिष्यते, सामान्यतो विग्रहविधानामत्रानाकाङ्क्षितत्वात् उभयमित्यादिवाक्यस्य साकाङ्क्षत्वापाताच्च ।

( १ ) कानी. १०।२३ ; नीम. ४४ निष्फलं तथा ( विफलं स्मृतम् ) पू.

विग्रहानुकूलप्रतिकूलकालविवेकः

**[1]तदात्वायतिसंशुद्धमारभेत विचक्षणः ।
तदात्वायतिशुद्धानि सर्वकर्माणि चिन्तयेत् ॥**

( १ ) ननु चास्मिन् विग्रहद्वये तावत् दोषरहितेन फलेन योगोऽस्ति । तदात्वे आयत्यां चेति विशेषः । अतः कथमिदं न कुर्यादित्याह— तदात्वेत्यादि । संशुद्धमिति । विग्रहो हि क्षयव्ययप्रवासप्रत्यवायहेतुत्वादगत्या क्रियते । स चेत् कालद्वयेऽपि न फलवान् , किं तेनाऽऽरब्धेन ? तथा अन्यदपि कर्म कालद्वयसंशुद्धमारभेतेत्यनुषङ्गादाह— सर्वकर्माणीति । जम.

( २ ) विग्रहकरणकालमाह— तदात्वायतीति । तदात्वायतिसंशुद्धं वर्तमानोत्तरोभयकाले श्रेयस्करं विचक्षणः आरभेत । विग्रहमिति शेषः । येन कर्मणा तस्मिन् काले उत्तरकाले च श्रेयो भवेत् तदालम्बने न दोष इत्याह— तदात्वायतिशुद्धानीति । उनिसा.

**[2]तदात्वायतिसंशुद्धमातिष्ठन्नैति वाच्यताम् ।
साधु लोकद्वयग्राहि विद्वान् कर्म समाचरेत् ॥**

( १ ) नैति वाच्यतां विचक्षण इति । वर्तमानदेहापेक्षया कालद्वयपरिशुद्धिं निरूप्य भविष्यद्वर्तमानदेहापेक्षया निरूपयन्नाह— साध्वित्यादि । लोकद्वयग्राहीति । उभयलोकाविरुद्धमित्यर्थः । जम.

( २ ) तदात्वे तत्काले कार्यानुष्ठानसमये इत्यर्थः, आयत्याम् उत्तरकाले च फलजनकं कर्म आतिष्ठन् अनुतिष्ठन् नैव वाच्यतां निन्दनीयताम् । यातीति वाक्यशेषः । उभयलोकाविरुद्धं कर्म कुर्वन् सर्वेषामेवानुरागभाजनं भवतीत्याह— साध्विति । साधु शोभनम् । लोकद्वयग्राहि इहलोकपरलोकसंपादकं कर्म । उनिसा.

**[3]परित्यजेदिमं लोकं नार्थलेशोपलोभितः ।
परलोकविरुद्धानि कुर्वाणं दूरतस्त्यजेत् ।
इत्यागमप्रमाणत्वात् साधु कल्याणमाचरेत् ॥**

( १ ) कानी. १०।२४.

( २ ) कानी. १०।२५ ; उनिसा. नैति ( नैव ).

( ३ ) कानी. १०।२६.

(१) तत्र वर्तमानकालपरिशुद्धमधिकृत्याऽऽह— परित्यजेदिमं लोकमिति । अर्थलवतृष्णयाऽपि सहसा विगृह्णता विनाशसंभवादयं लोकस्त्यक्तो भवति । भविष्यत्कालमधिकृत्याऽऽह— परलोकविरुद्धानीति । अदृष्टविरुद्धानि कर्माणि कुर्वाणं पुत्रमपि परित्यजेत् । स्वयं च न कुर्यादिति सामर्थ्यलब्धम् । आगमप्रमाणत्वादिति । अस्मिन् विषये आगमः प्रमाणम्, प्रत्यक्षादिप्रमाणानामतीन्द्रियार्थाविषयत्वात् । जम.

(२) अर्थलोभेन परलोको नोपेक्षणीय इत्याह— परित्यजेदिति । अर्थलेशोपलोभितः यत्किंचिदर्थलाभोपहतः । परलोकविरुद्धं कर्म कुर्वन् सर्वेषामेवाविश्वासभूमिरित्याह— परलोकविरुद्धानीति । आगमः शास्त्रं प्रमाणं यस्य तत्, तस्य भावस्तस्मात् । अन्यत् स्पष्टम् । उनिसा.

**[१]यदा मन्येत मतिमान् हृष्टं पुष्टं स्वकं बलम् ।**
**परस्य विपरीतं च तदा विग्रहमाचरेत् ॥**

(१) कदा तर्हि विगृह्णीयात्? यदा परस्मादधिकमात्मानं पश्येत् । तदेव षड्भिः श्लोकैर्निर्दिशति— यदेत्यादि । हृष्टं पुष्टमिति उत्साहयुक्तम् उपचितं चतुरङ्गबलम् । परस्य विपरीतम् अहृष्टमपुष्टं च । जम.

(२) विग्रहस्य कालमाह— यदेति । मतिमान् हिताहितविवेकशक्तिमान् राजा यदा स्वकं बलं हृष्टपुष्टं परस्य च विपरीतम् अहृष्टपुष्टं मन्येत अवगच्छेत् तदा विग्रहम् आचरेत् अनुतिष्ठेत् । उनिसा.

**[२]स्फीतं यदाऽनुरक्तं च भवेत् प्रकृतिमण्डलम् ।**
**परस्य विपरीतं च तदा विग्रहमाचरेत् ॥**

(१) स्फीतम् उपचितम् । अनुरक्तं विजिगीषौ । प्रकृतिमण्डलम् अमात्यादिकम् । जम.

(२) अपरं विग्रहकालमाह— स्फीतमिति । प्रकृतिमण्डलं प्रजावर्गः । उनिसा.

(१) कानी. १०।२७ ; उनिसा. हृष्टं पुष्टं (हृष्टपुष्टं).
(२) कानी. १०।२८.

**[१]उपनामि यदा दैवं सुव्यक्तमुपलक्षितम् ।**
**परस्य विपरीतं तु तदा विग्रहमाचरेत् ॥**

उपनामि उपनमनशीलं दैवं सुव्यक्तमुपलक्षितम्, स्वल्पेनापि पौरुषेण बहुशोऽप्रतिहतार्थसिद्धिदर्शनात् । विपरीतम् अनुपनामि । जम.

**मित्रमाक्रन्द आसारो यदा स्युर्दृढभक्तयः ।**
**परस्य विपरीताश्च तदा विग्रहमाचरेत् ॥**

दृढभक्तय इति । तत्र स्थिरस्नेहत्वात् मित्रं शत्रोः पार्ष्णिं गृह्णातीति, आक्रन्दः (* विजिगीषुः पार्ष्णिग्राहमरिमित्रेणाऽऽक्रन्दितः?) तस्य पार्ष्णिं गृह्णाति, आसारश्च विजिगीषुमित्रमरिमित्रमित्रस्येति । परस्य विपरीता अदृढभक्तित्वात् । शत्रुमित्रं विजिगीषोः पार्ष्णिं न गृह्णाति, ¶तदासारश्चारिमित्रं विजिगीषुमित्रमित्रस्येति । जम.

प्रशमनीया विग्रहाः कर्तव्या विग्रहाश्च

**[२]भूमिर्मित्रं हिरण्यं च विग्रहस्य फलं त्रयम् ।**
**यदैतन्नियतं भावि तदा विग्रहमाचरेत् ॥**

(१) नियतं भावीति । समस्तं व्यस्तं चावश्यं भावि । जम.

(२) अपरमपि विग्रहकालमाह— भूमिरिति । भूमिः मित्रं हिरण्यं च एतत्त्रयं विग्रहस्य फलम् । यदा एतत् त्रयं भूमिहिरण्यादि नियतम् असंशयमेव भावि लभ्यं तदा विग्रहमाचरेत् । उनिसा.

**गुरु वित्तं ततो मित्रं तस्माद्भूमिर्गरीयसी ।**
**भूमेर्विभूतयः सर्वास्ताभ्यो बन्धुसुहृद्गणाः ॥**

* 'विजिगीषोः पार्ष्णिग्राहमरिमित्रमाक्रन्दन्' इति शुद्धिरत्र संभवति । तस्येति । विजिगीषुपार्ष्णिग्राहस्येत्यर्थः । अरिमित्रमित्रस्येति । पार्ष्णिं गृह्णातीति शेषः ।

¶ 'शत्रोराक्रन्दो विजिगीषुमित्रस्य पार्ष्णिं न गृह्णाति' इत्यर्थको ग्रन्थोऽत्र उच्छिन्न इति कल्प्यते । विजिगीषुमित्रमित्रस्येति । पार्ष्णिं न गृह्णातीति शेषः ।

(१) कानी. १०।२९–३० ; उनिसापुस्तके श्लोकद्वयं नास्ति. (२) कानी. १०।३१–३२.

(१) एषां च त्रयाणामन्यतमलाभे *पूर्वं पूर्वं लिप्सेतेति दर्शयितुमाह— गुरु वित्तमित्यादि। ततो मित्रं गुरु। सर्वतोभोगं हि मित्रं लब्धं हिरण्ये(नतु ?)ऽप्युपयुज्यते। ननु 'मित्रहिरण्यभूमिलाभानामुत्तरोत्तरलाभः श्रेयान्, मित्रहिरण्ये हि भूमिलाभात् भवतो मित्रं हिरण्यलाभात्' (कौ. ७।९) इत्युक्तं कौटिलीये। सत्यम्। इदमप्युक्तम् 'यो वा लाभः सिद्धः शेषयोरन्यतरं साधयति स श्रेयान्' (कौ. ७।९) इति। तस्मात् द्वितीयपक्षसंदर्शनार्थं मित्रं वित्तात् गुर्वित्यत्रोक्तम्। जम.

(२) विग्रहनिदानभूतानां भूहिरण्यादीनां हेयोपादेयतापरिज्ञानाय तारतम्यमाह— गुरु वित्तमिति। विभूतयः राज्यसंपदः। बन्धुसुहृद्गणाः पुत्रपौत्रादिरूपसंबन्धादिमन्तः सुहृदः। अन्यत् सुगमम्। उनिसा.

**[१]सर्वसंपत्समे शत्रावुपायान् निक्षिपेद्बुधः।**
**उपायैरप्रतिव्यूढे समे दण्डः प्रशस्यते॥**

(१) हीनेन विग्रहमुक्त्वा समेनापि श्लोकद्वयेन वृत्तिमाह— सर्वसंपदित्यादि। विग्रहस्य प्रस्तुतत्वात् सर्वा संपत् विग्रहस्येति सत्यां विग्रहसंपदि। सोऽपि तावत् सामादीन् प्रयुञ्जीत, समेन हि विग्रहस्य सुन्दोपसुन्दयोरिवोभयतः क्षयकारित्वात्। अप्रतिव्यूढे अप्रतिविहिते। दण्डः विग्रहः। जम.

(२) तुल्यबलं प्रतिपक्षं कौशलेनैव जयेदित्याह— सर्वसंपत्सम इति। बुधः पण्डितः सर्वसंपत्समे सर्वसंपदा समकक्षे शत्रौ उपायान्निक्षिपेत्। तं कौशलेन जेतुं यतेत इति भावः। समे तुल्यबले शत्रौ अतिव्यूढैः अतिदृढैः अव्यर्थैरिति यावत्, उपायैः कौशलैः दण्डोऽपि शस्यते प्रशस्यते। उनिसा.

**[२]आगतं विग्रहं विद्वानुपायैः प्रशमं नयेत्।**
**विजयस्य ह्यनित्यत्वाद्रभसेन न संपतेत्॥**

(१) अस्यैव पूर्वार्धं स्फुटीकुर्वन्नाह— आगतमित्यादि। जम.

(२) अनियतौ हि जयपराजयौ, अतः सत्युपाये न विग्रहं कुर्यादित्याह— आगतमिति। विद्वान् राजनीतिविशारदः आगतम् उपस्थितं विग्रहं उपायैः सामदानादिभिः प्रशमं शान्तिं नयेत् प्रापयेत्। उपस्थितं संग्रामानलं सामाद्युपायरूपसलिलसेचनेन निर्वापयेदिति भावः। विजयस्य हि अनित्यत्वात् अनियततया रभसेन हठात् न संपतेत् नाऽऽक्रामेत्। उनिसा.

विग्रहार्हानर्हकालविवेकः

**[१]समाक्रान्तो बलवता काङ्क्षन्नभ्रंशिनीं श्रियम्।**
**श्रयेत वैतसीं वृत्तिं न भौजङ्गीं कदाचन॥**

(१) अभ्रंशिनीम् अविनाशिनीम्। वैतसीम्, भौजङ्गीमिति। वेतसो बलीयसा नदीजवेनाऽऽक्रम्यमाणो नमति, भुजङ्गश्च तृणाग्रस्पृष्टोऽपि स्फटाटोपैरुद्धावति। जम.

(२) बलवता समाक्रान्तो नरपतिर्वैतसीं वृत्तिमेव समाश्रयेदित्याह— समाक्रान्त इति। श्रियं राजलक्ष्मीम् अभ्रंशिनीं प्रच्युतिरहितां स्थिरां काङ्क्षन् अभिलषन् राजा बलवता प्रबलेन शत्रुणा समाक्रान्तः सन् वैतसीं वेत्रलतासंबन्धिनीं वृत्तिं व्यवहारम् अवनतिमित्यर्थः, आश्रयेत्, न तु भौजङ्गीं भुजङ्गसंबन्धिनीं वृत्तिं औद्धत्यं कथंचन आश्रयेत्। 'रक्षोवधान्तो न च मे प्रयासो व्यर्थः स वैरप्रतियातनाय। अमर्षणः शोणितकाङ्क्षया किं पदा स्पृशन्तं दशति द्विजिह्वः॥' (रघु. १४।४१) इत्यत्र भुजङ्गस्वभावः प्रकटितः। उनिसा.

**[२]क्रमाद्वेतसवृत्तिः सन् प्राप्नोति महतीं श्रियम्।**
**भुजङ्गवृत्तिराप्नोति वधमेव तु केवलम्॥**

(१) प्रवृत्तिद्वयस्य फलमाह— क्रमादित्यादि। क्रमात् प्राप्नोति कालेनेत्यर्थः। वधमेव केवलं तदात्वे। तस्मात् वैतसीं वृत्तिमाश्रित्य विगृह्णीयात्। जम.

---

* पूर्वं पूर्वमिति पूर्वश्लोकोक्तक्रममनुसृत्योक्तमिति नानुपपत्तिः।

(१) कानी. १०।३३; उनिसा. प्रतिव्यूढे (व्यतिव्यूढैः) दण्डः प्र (दण्डोऽपि). (२) कानी. १०।३४.

(१) कानी. १०।३५; उनिसा. श्रयेत (आश्रयेत्) कदा (कथं). (२) कानी. १०।३६.

(२) वेतसभुजङ्गवृत्त्योः क्रमेण फलमाह— क्रमादिति । स्पष्टमेतत् । उनिसा.

**[1]मत्तप्रमत्तवत् स्थित्वा ग्रसेतोत्प्लुत्य पण्डितः ।**
**अपरिभ्रश्यमानं हि क्रमप्राप्तं मृगेन्द्रवत् ॥**

(१) कथमिवेत्याह— मत्तप्रमत्तवत्स्थित्वेत्यादि । वेतसवृत्त्यसंश्रितोऽप्यात्मनः कृतकं व्यसनं प्रकाश्य जातविस्रम्भं क्रमप्राप्तत्वादपरिभ्रश्यमानं हन्यात् । जम.

(२) अनवधान इव कालं प्रतीक्षमाणोऽवश्यंभावि फलमवेक्ष्य प्रहरेदित्याह— मत्तप्रमत्तवदिति । पण्डितः मत्तप्रमत्तवत् मत्तः मद्योपयोगनिमित्तभ्रष्टबुद्धिः प्रमत्तः उन्मादरोगग्रस्तः अनवधानः इव स्थित्वा । छिद्रमन्विष्यन् कंचित्कालं गमयित्वा इति तात्पर्यम् । क्रमप्राप्ते क्रमेण उपयुक्तकाललाभे मृगेन्द्रवत् सिंह इव उत्प्लुत्य सहसा आक्रम्य अपरिभ्रश्यमानम् अस्खलितसामर्थ्यमपि ग्रसेत् स्वायत्तं कुर्यात् । उनिसा.

**[2]कौर्मं संकोचमास्थाय प्रहारमपि मर्षयेत् ॥**

(१) कूर्मवदङ्गानि गूहयित्वा काले परपीडामपि सहेत । जम.

(२) यदा आत्मानं हीनबलं पश्येत् तदा बलवतः शत्रोः सकाशात् आत्मरक्षामेव कुर्यात्, न त्वभिषेणयेत् । प्राप्ते तु काले छिद्रमासाद्य प्रहरेदित्याह— कौर्मसंकोचमिति । कूर्मा हि प्रहारकाले पृष्ठास्थिरूपदुर्गान्तर्गता भवन्ति, अन्यदा निःसरन्ति, तद्वत् । अन्यत् सुगमम् । उनिसा.

**[3]काले प्राप्ते तु मतिमानुत्तिष्ठेत् क्रूरसर्पवत् ।**
**काले सहिष्णुर्गिरिवदसहिष्णुश्च वह्निवत् ॥**

(१) काले च क्रूरसर्पवत् दशेत् । सहिष्णुर्गिरिवत्, अप्रकाशितविकारत्वात् । असहिष्णुश्च वह्निवत्, प्रदर्शिततेजस्त्वात् । जम.

(२) प्राप्तकालस्तु प्रहरेत् इत्याह— काल इति । काले यथासमयं कदाचित् गिरिवत् सहिष्णुः कदाचित् वह्निवत् असहिष्णुश्च भवेत् । स्पष्टमन्यत् । उनिसा.

**[1]स्कन्धेनापि वहेत् काले प्रियाणि समुदाहरन् ।**
**संप्राप्ते चैव काले तु भिन्द्याद्घटमिवाश्मनि ॥**

**नित्यं स्वार्थपरो लोकः स्वार्थसिद्धिर्यथा भवेत् ।**
**तथा तस्य प्रतीकारं यथोक्तं समुपाचरेत् ॥**

**[2]प्रसादवृत्त्याहितलोकवृत्तया**
**प्रविश्य शत्रोर्हृदयं निरन्तरम् ।**
**नयाग्रहस्तेन हि कालमास्थितः**
**प्रसह्य कुर्वीत कचग्रहं श्रियः ॥**

(१) प्रसादवृत्त्येति प्रसन्नया वृत्त्या । आहितलोकवृत्तया प्रदर्शितलोकव्यवहारया । नयः विग्रहाख्यो गुणः । प्रसह्येति प्रकाशयुद्धं दर्शयति । अयं च बलीयसि कोऽपि विधिः आपातविग्रहेण दुष्प्रसाधे शत्रौ वेदितव्यः । जम.

(२) प्रीतिप्रदर्शनपूर्वकं कियत्कालं स्थित्वा शत्रोरभ्यन्तरं प्रविश्य प्राप्तकालस्तावदुत्पतेदित्याह— प्रसादवृत्त्येति । हितस्य प्रियकारिणो लोकस्य वृत्तमिव वृत्तं चरित्रं यस्यां तया प्रसादवृत्त्या कृत्रिमप्रीत्या निरन्तरं निरवकाशं दुष्प्रवेशमिति यावत्, शत्रोर्हृदयं प्रविश्य प्रभावोत्साहशक्त्यादिकं ज्ञात्वेत्यर्थः, काले यदा फलमवश्यंभावि तत्समये उच्छ्रितः उत्पतितः सन् नयाग्रहस्तेन नीतिरूपेण दक्षिणकराग्रेण वा प्रसह्य सहसा श्रियः कचग्रहं कुर्वीत राजलक्ष्मीं स्वायत्तां कुर्यादिति भावः । उनिसा.

---

(१) कानी. १०।३७ ; उनिसा. सेतो (सेद्रु) प्राप्तं (प्राप्ते).

(२) कानी. १०।३८ ; उनिसा. कौर्म (कौर्मं).

(३) कानी. १०।३९.

(१) कानी. १०।३९ श्लोकादूर्ध्वमधिकमिदं श्लोकद्वयं 'त्रिवेन्द्रम्' पुस्तके । टीकाकृद्भ्यां न व्याख्यातम्.

(२) कानी. १०।४० ; उनिसा. स्याहित (स्या हित) कालमास्थितः (काल उच्छ्रितः).

विग्रहार्हानर्हवैरिविवेकः

[1]कुलोद्गतं सत्यमुदारविक्रमं
स्थिरं कृतज्ञं मतिमन्तमूर्जितम् ।
अतीव दातारमुपेतवत्सलं
सुदुष्प्रसाधं प्रवदन्ति विद्विषम् ॥

(१) कोऽसावित्याह— कुलोद्गतमित्यादि । जम.

(२) कीदृशः शत्रुर्दुर्जय इत्याह— कुलोद्गतमिति । कुलोद्गतं कुलेन उन्नतम् । सत्यं सत्यनिष्ठम् । स्थिरम् अचञ्चलम् । ऊर्जितं तेजस्विनम् । अन्यत् सुगमम् । उनिसा.

[2]असत्यता निष्ठुरताऽकृतज्ञता
भयं प्रमादोऽलसता विषादिता ।
वृथाऽभिमानोऽपि च दीर्घसूत्रता
तथाऽङ्गनाक्षादि विनाशनं श्रियः ॥

(१) आपातविग्रहसाध्यतां शत्रोर्दर्शयितुमाह— असत्यतेत्यादि । अङ्गनाक्षादीति । आदिशब्दात् मृगयापानादिव्यसनसंग्रहः । जम.

(२) कीदृशं शत्रुं सुखेनोन्मूलयितुं शक्यत इत्याह— असत्यतेति । अकृतज्ञता कृतस्य उपकारस्य अस्वीकारः प्रत्युपकाराकरणं च । अतिदीर्घसूत्रता अवश्यकर्तव्यकर्मकरणे कालक्षेपः । अक्षः द्यूतक्रीडा । अन्यत् सुगमम् । उनिसा.

[3]इति स्म दोषान्वितमाशु विद्विषं
त्रिशक्तियुक्तो विजिगीषया व्रजेत् ।
अतोऽन्यथाऽसाधुजनस्य संमतः
करोत्यविद्वानुपघातमात्मनः ॥

(१) इतिशब्दः प्रकारे । एवंप्रकारैर्दोषैरन्वितमिति । त्रिशक्तियुक्तः मन्त्रप्रभावोत्साहशक्तियुक्तः । विजिगीषया आपातविग्रहेण जेतुमिच्छया । अतोऽन्यथेति । दुष्प्रसाधं शक्तिहीनो विजिगीषया व्रजन्नित्यर्थः । असाधुजनस्य संमतः । वृद्धजनाभिसंमतस्तु वृद्धबुद्धित्वात् । अतश्चाविद्वानिति विशेषणमर्थवत् । जम.

(२) यानकालमाह— इति स्मेति । विद्वान् नीतिशास्त्रज्ञः इति स्म पूर्वोक्तप्रकारेण दोषान्वितम् असत्यतादिदोषयुक्तं विद्विषं शत्रुं त्रिशक्तियुक्तः स्वयं प्रभावोत्साहमन्त्ररूपशक्तित्रययुक्तः सन् आशु विजिगीषया जेतुमिच्छया व्रजेत् अभिगच्छेत् । अतोऽन्यथा, कुर्वन् इति शेषः, आत्मनः उपघातं करोतीति साधुजनस्य संमतं अभिमतम् । उनिसा.

[4]समन्वितो राज्यपदोन्निनीषया
मनीषयाऽन्वीक्षितमण्डलक्रियः ।
इमं नृपो विग्रहमार्गमास्थितः
स्थिरोद्यमः संप्रयतेत सिद्धये ॥

(१) इदानीं प्रकरणार्थमुपसंहरति— समन्वित इत्यादिना । राज्यपदोन्निनीषया समन्वित इति संबन्धः । मनीषया प्रज्ञया अन्वीक्षितमण्डलक्रियः समहीनज्यायस्त्वापेक्षया विभावितमण्डलव्यापारः । इममिति यथोक्तं विग्रहमार्गम् । स्थिरोद्यमः असमाप्यानुपरतः । अन्यथा हि अनन्तरं (? अन्तरा) दृष्टो( ? नष्टो )त्साहस्य परस्मादेव प्रत्यवायः स्यात् । जम.

(२) उपसंहरति— समन्वित इति । राज्यपदोन्निनीषया— राज्यं च पदं च तयोरुन्निनीषा समुन्नतिकरणेच्छा, तया समन्वितः युक्तः, चरेक्षणैः चारचक्षुषा वीक्षितमण्डलक्रियः वीक्षिता पर्यवेक्षिता मण्डलानां क्रिया चर्या येन सः, स्थिरोद्यमः दृढोद्योगः नृपः इमं विग्रहमार्गं संग्रामपद्धतिम् आस्थितः आश्रितः सन् सिद्धये स्वाभीष्टसाधनाय संप्रयतेत । उनिसा.

## शुक्रनीतिः

विग्रहप्रयोजनम्, विग्रहकालः, विनिग्राह्यवैरिलक्षणानि

[5]विकर्षितः सन् वाऽधीनो भवेच्छत्रुस्तु येन वै ।
कर्मणा विग्रहस्तं तु चिन्तयेन्मन्त्रिभिर्नृपः ॥

(१) कानी. १०।४१ ; उनिसा. सम्यगु ( सत्यमु ).

(२) कानी. १०।४२ ; उनिसा. ऽपि च ( ह्यति ).

(३) कानी. १०।४३ ; उनिसा. थाऽसाधु ( थासाधु ) मतः ( मतं ) करोत्य ( करोति ).

(४) कानी. १०।४४ ; उनिसा. मनीषयाऽन्वी (चरेक्षणैर्वी ).

(५) शुनी. ४।७।२३६.

येन कर्मणा व्यापारेण शत्रुः विकर्षितः पीडितः अधीनो वा अधीन एव । वाशब्दः अवधारणार्थः । भवेत्, तं विग्रहं नृपः मन्त्रिभिः सह चिन्तयेत् । शुनीटी.

**[1]आपन्नोऽभ्युदयाकाङ्क्षी पीड्यमानः परेण वा।**
**देशकालबलोपेतः प्रारभेत च विग्रहम् ॥**

परेण पीड्यमानः अत एव आपन्नः आपद्ग्रस्तः नृपः देशकालबलोपेतः समयस्थानबलपरिपुष्टः सन् अभ्युदयाकाङ्क्षी अभ्युदयार्थमित्यर्थः, विग्रहं युद्धं प्रारभेत च । शुनीटी.

**प्रहीनबलमित्रं तु दुर्गस्थं शत्रुमागतम्।**
**अत्यन्तविषयासक्तं प्रजाद्रव्यापहारकम्।**
**भिन्नमन्त्रिबलं राजा पीडयेत्परिवेष्टयन् ॥**

राजा प्रहीनबलमित्रं दुर्गस्थं दुर्गतम् अत्यन्तविषयासक्तम् अतिव्यसनिनं प्रजानां धनापहारकं भिन्नमन्त्रिबलं भिन्नं भेदं गतं मन्त्रिबलं यस्य तादृशम् आगतम् उपस्थितं शत्रुं परिवेष्टयन् पीडयेत् । हन्यादित्यर्थः । शुनीटी.

**विग्रहः स च विज्ञेयो ह्यन्यश्च कलहः स्मृतः ॥**

स च विग्रहः विज्ञेयः । अन्यस्तु तद्व्यतिरिक्तस्तु कलहः स्मृतः । शुनीटी.

**बलीयसाऽत्यल्पबलः शूरेण न च विग्रहम्।**
**कुर्याद्धि विग्रहे पुंसां सर्वनाशः प्रजायते ॥**

अत्यल्पबलः राजा बलीयसा शूरेण शत्रुणा सह विग्रहं न च कुर्यात् । हि यस्मात् तथा सति विग्रहे पुंसां सर्वनाशः प्रजायते । शुनीटी.

**एकार्थाभिनिवेशित्वं कारणं कलहस्य वा।**
**उपायान्तरनाशे तु ततो विग्रहमाचरेत् ॥**

एकार्थाभिनिवेशित्वम् एकद्रव्याभिलाषित्वं कलहस्य कारणं वा हेतुरेव । वाशब्दश्चावधारणार्थः । तस्मात् उपायान्तरनाशे गत्यन्तराभावे सति विग्रहमाचरेत् । शुनीटी.

(१) शुनी. ४।७।२५०-२५४.

रिपोः रिपुराष्ट्रस्य च अवेक्षणे रीतिः रिपुविनाशरीतिश्च

**[1]नीतिशेषं खिले वक्ष्ये ह्यखिलं शास्त्रसंमतम्।**
**सताङ्गानां तु राज्यस्य हितं सर्वजनेषु वै ॥**

खिले परिशिष्टे अंशे राज्यस्य सताङ्गानाम् अङ्गानां सर्वजनेषु च विषयेषु हितं हितकरं शास्त्रसंमतम् अखिलं समस्तं संक्षिप्तमित्यर्थः, नीतिशेषम् अवशिष्टां नीतिं वक्ष्ये कथयिष्यामि । शुनीटी.

**शतसंवत्सरान्तेऽपि करिष्याम्यात्मसाद्रिपुम्।**
**इति संचिन्त्य मनसा रिपोश्छिद्राणि लक्षयेत् ॥**

शतसंवत्सराणामन्तेऽपि कदाचिदपीत्यर्थः, रिपुं शत्रुं आत्मसात् करिष्यामि इति मनसा संचिन्त्य रिपोः शत्रोः छिद्राणि लक्षयेत् । शुनीटी.

**राष्ट्रभृत्यविशङ्की स्याद्धीनमन्त्रबलो रिपुः।**
**युक्त्या तथा प्रकुर्वीत सुमन्त्रबलयुक् स्वयम् ॥**

स्वयं सुमन्त्रबलयुक् नृपः यथा रिपुः राष्ट्रेषु भृत्येषु च विशङ्की संदेहवान् तथा हीनं मन्त्रः बलं च यस्य तादृशः स्यात्, युक्त्या कौशलेन तथा प्रकुर्वीत । शुनीटी.

**सेवया वा वणिग्वृत्त्या रिपुराष्ट्रं विमृश्य च।**
**दत्ताभयं सावधानो व्यसनासक्तचेतसम् ॥**
**मार्जारलुब्धबकवत् संतिष्ठन्नाशयेदरिम् ॥**

सावधानः नृपः सेवया आनुगत्येन वा वणिग्वृत्त्या वाणिज्यव्याजेन रिपोः शत्रोः राष्ट्रं विमृश्य समीक्ष्य मार्जारः बिडालः तद्वत् लुब्धबकवच्च संतिष्ठन् दत्ताभयं दत्तम् अभयं यस्मै तादृशम्, पूर्वम् अभयं दत्त्वा इत्यर्थः, व्यसनेषु कामादिषु आसक्तचेतसम् आक्रान्तचित्तं निर्भयत्वात् राज्यरक्षणे अव्यग्रतया भोगरतमिति भावः, अरिं शत्रुं नाशयेत् । शुनीटी.

**दर्शयन् मार्दवं नित्यं महावीर्यबलोऽपि च।**
**रिपुराष्ट्रे प्रविश्याऽऽदौ तत्कार्ये साधको भवेत् ॥**

(१) शुनी. ५।१-५, ९-१५.

महावीर्यबलः अपि नित्यं सततं मार्दवं मृदुतां दर्शयन् रिपुराष्ट्रे शत्रुराज्ये प्रविश्य आदौ प्रथमं तस्य रिपोः कार्यसाधकः कार्यनिर्वाहकः भवेत् । शुनीटी.

**संजातबद्धमूलस्तु तद्राज्यमखिलं हरेत् ।**
**अथ तद्द्विष्टदायादान् सेनपानंशदानतः ।**
**तद्राज्यस्य वशीकुर्यान्मूलमुन्मूलयन् बलात् ॥**

अथ संजातम् उत्पन्नं बद्धं दृढं मूलं यस्य तादृशः । तत्र विशेषेण प्रतिपन्नः सन्नित्यर्थः । बलात् मूलम् उन्मूलयन् निरस्यन् अखिलं समस्तं तस्य राज्यं हरेत् । तथा तस्य रिपोः द्विष्टान् विद्वेषिणः दायादान् ज्ञातीन् सेनपान् सेनापतींश्च तद्राज्यस्य अंशदानतः अंशप्रदानेन वशीकुर्यात् । शुनीटी.

**तरोः संक्षीणमूलस्य शाखाः शुष्यन्ति वै यथा ।**
**सद्यः केचिच्च कालेन सेनपाद्याः पतिं विना ॥**

यथा संक्षीणमूलस्य शुष्कमूलस्य तरोः शाखाः शुष्यन्ति वै शोषं प्राप्नुवन्त्येव, तथा सेनपाद्याः सेनापतिप्रभृतयः पतिं स्वामिनं विना सद्यः तत्क्षणात् केचिच्च कालेन शुष्यन्तीत्यर्थः । शुनीटी.

**राज्यवृक्षस्य नृपतिर्मूलं स्कन्धाश्च मन्त्रिणः ।**
**शाखाः सेनाधिपाः सेनाः पल्लवाः कुसुमानि च ।**
**प्रजाः फलानि भूभागा बीजं भूमिः प्रकल्पिता ॥**

नृपतिः राज्यवृक्षस्य मूलम्, मन्त्रिणः स्कन्धाः, सेनाधिपाः शाखाः, सेनाः पल्लवाः, प्रजाः कुसुमानि, भूभागाः फलानि, भूमिः बीजं प्रकल्पिता कथिता । शुनीटी.

**विश्वस्तान्यनृपस्यापि न विश्वासं समाप्नुयात् ।**
**नैकान्ते न गृहे तस्य गच्छेदल्पसहायवान् ॥**

विश्वस्तस्यापि अन्यनृपस्य प्रतिकूलनृपतेः विश्वासं न समाप्नुयात् । शत्रौ नृपे नैव विश्वसेदित्यर्थः । तस्य प्रतिनृपस्य गृहे वा एकान्ते निर्जने देशे अल्पसहायवान् न गच्छेत् । शुनीटी.

**स्ववेशरूपसदृशान् निकटे रक्षयेत् सदा ।**
**विशिष्टचिह्नगुप्तः स्यात् समयेऽन्यादृशो भवेत् ॥**

सदा निकटे स्वस्य आत्मनः वेशेन परिच्छदेन रूपेण च सदृशान् जनान् रक्षेत् । तथात्वे व्यक्तिग्रहो न स्यादिति भावः । स्वयं विशिष्टम् अन्यविलक्षणं चिह्नं राजचिह्नमित्यर्थः, गुप्तं यस्य तथाभूतः स्यात् । तथा समये समयविशेषे इत्यर्थः, अन्यादृशः सामान्यजनसदृशः भवेत् । शुनीटी.

**वेश्याभिश्च नटैर्मद्यैर्गायकैर्मोहयेदरिम् ॥**

वेश्याभिः नटैः नर्तकैः मद्यैः सुराभिः गायकैश्च अरिं शत्रुं मोहयेत् मुग्धं कुर्यात् । शुनीटी.

## नीतिवाक्यामृतम्

विग्रहार्हानर्हकालविवेकः विग्रहार्हानर्हवैरिविवेकश्च

**[1]अपराधो विग्रहः ॥**

अथ विग्रहस्य स्वरूपमाह— अपराध इति । यदा यस्य विजिगीषोः कोऽप्यपराधं करोति तदा विग्रहः स्यात् । नीवाटी.

**[2]अभ्युच्चीयमानः परं विगृह्णीयाद्यदि नास्त्यात्मबलेषु क्षोभः ॥**

अथ विजिगीषुणा बलयुक्तेन यत्कार्यं तदाह— अभ्युच्चीयमान इति । शत्रोः सकाशाद्विजिगीषुर्यद्यभ्यधिको भवति तत्तं विगृह्णीयात् तस्योपरि विग्रहं कुर्यात् । यदि आत्मबलेषु निजसैन्येषु क्षोभः भयं न स्यात् । तथा च गुरुः— 'यदि स्यादधिकः शत्रोर्विजिगीषुर्निजैर्बलैः । क्षोभेन रहितैः कार्यः शत्रुणा सह विग्रहः ॥' । नीवाटी.

**[3]उपचीयमानो घटेनेवाश्मा हीनेन विग्रहं कुर्यात् ॥**

अथ यादृशो राजा यादृशेन विग्रहं करोति तमाह— उपचीयमान इति । विग्रहं कुर्यात् । कोऽसौ ? विजिगीषुः । किंविशिष्टः ? उपचीयमानः शक्तियुक्तः । *तेनापि सह युद्धं कुर्यात् घटेनापि कुम्भेनापि, कोऽसौ ?

* टीकेयमशुद्धा मूलविसंगता च ।

(१) नीवा. २९।४४. (२) नीवा. २९।५१. (३) नीवा. ३०।६०.

अश्मा। पाषाणः लघुरपि किल गुरुर्भवति। अश्मना पाषाणेन लघुनाऽपि शक्तेः सकाशाद्भिद्यते, तथा राजाऽप्युपचीयमानः सन् गुरुमपि शत्रुं व्यापादनसमर्थः। तथा च जैमिनिः— 'यदि स्याच्छक्तिसंयुक्तो लघुः शत्रोश्च भूपतिः। तदा हन्ति परं शत्रुं यदि स्यादतिपुष्कलम्॥'। नीवाटी.

**[1]समस्य समेन सह विग्रहे निश्चितं मरणं जये च संदेहः, आमं हि पात्रमामेनाभिहतमुभयतः क्षयं करोति॥**

आत्मसमेन सह युद्धे यद्भवति तदाह— समस्येति। समस्य तुल्यबलस्य समेन तुल्यबलेन विग्रहे मरणं तावन्निश्चितं विजये च संशयः। हि यतः कारणात् आमम् अपक्वं पात्रं तु आमेन हन्यमानम् उभयतः पक्षद्वयेऽपि क्षयं करोति। तथा च भागुरिः— 'समेनापि न योद्धव्यमित्युवाच बृहस्पतिः। अन्योन्याहतिना भङ्गो घटाभ्यां जायते यतः॥'। नीवाटी.

**ज्यायसा सह विग्रहो हस्तिना पदातियुद्धमिव॥**

अथ हीनबलस्य बलवता सह युद्धेन यद्भवति तदाह— ज्यायसेति। ज्यायसा महाबलेन सह यो विग्रहः स किंविशिष्टः? पदातियुद्धमिव। केन? हस्तिना सह। नाशाय भवति। तथा बलवता सह दुर्बलस्य। तथा च भारद्वाजः— 'हस्तिना सह संग्रामः पदातीनां क्षयावहः। तथा बलवता नूनं दुर्बलस्य क्षयावहः॥'। नीवाटी.

**[2]आत्मशक्तिमजानतो विग्रहः क्षयकाले कीटिकानां पक्षोत्थानमिव॥**

आत्मशक्तिम् अजानन् यो विग्रहं करोति स आत्मक्षयं करोति। किमिव? कीटिकानां पक्षोत्थानमिव। कस्मिन्? क्षयकाले विनाशकाले। यदा कीटिकानां *क्षयो भवति तदा पक्षोत्थानं संभवति। पार्थिवस्यापि क्षयकालो यदा भवति तदा बलवता सह विग्रहं करोति। तथा च गुरुः— 'अचलं प्रोन्नतं योऽत्र रिपुं याति यथाचलम्। शीर्णदन्तो निवर्तेत स यथा मत्तवारणः॥'। नीवाटी.

**कालमलभमानोऽपकर्तरि साधु वर्तेत॥**

अथाऽपद्ग्रस्तेन भूभुजा यत्कर्तव्यं तदाह— कालमिति। कालं राज्यसमयलक्षणं कर्तुम् अलभमानः अपकर्तरि शत्रौ साधु वर्तेत छन्दोनुवृत्तिः कर्तव्येति। यदा शत्रुरात्मनः सकाशात् बलवान् भवति तदा तस्योपचारः कार्यः। तथा च भागुरिः— 'बलवन्तं रिपुं दृष्ट्वा तस्य च्छन्दोऽनुवर्तयेत्। बलाप्त्या स पुनस्तं च भिन्द्यात् कुम्भमिवाश्मना॥'। नीवाटी.

**किं नु खलु लोको न वहति मूर्ध्ना दग्धुमिन्धनम्॥**

अथ शत्रोरुपचारविषये दृष्टान्तमाह— किं नु खल्विति। एतत् किल (अ?)युक्तं यदुपचारं कृत्वा तस्यापि वधः क्रियते। एतच्च दृष्टान्तेन दृढयति— किं नु अहो जनाः! खलु निश्चयेन न वहति? कोऽसौ? जनः। किं तत्? इन्धनं काष्ठसमूहम्। केन? मूर्ध्ना मस्तकेन। किं कर्तुम्? दग्धुं दहनार्थम्। अपि तु खलु निश्चयेन दहनार्थं वहति। तथा च शुक्रः— 'दग्धुं वहति काष्ठानि तथापि शिरसा नरः। एवं मान्योऽपि वैरी यः पश्चाद्वध्यः स्वशक्तितः॥'। नीवाटी.

**नदीरयस्तरूणामंह्रीन् क्षालयन्नप्युन्मूलयति॥**

अथ भूयोऽपि शत्रोरुपचारविषये दृष्टान्तमाह— नदीरय इति। नदीरयः सरिद्वेगः उन्मूलयति नाशं नयति। कान्? अंह्रीन् पादान् जटालक्षणान्। किं कुर्वन्? क्षालयन्। केषाम्? तरूणां वृक्षाणां तटाश्रितानाम्। किल यस्यांह्रिप्रक्षालनं क्रियते (तदेन?) तस्यैव नाशः क्रियते इति। वृक्षाणां याः जटास्ताः पादाः उच्यन्ते वचनच्छलात्। तथा च शुक्रः— 'क्षालयन्नपि वृक्षांह्रीन्नदीवेगः प्रणाशयेत्। पूजयित्वाऽपि यद्वच्च (? तद्वच्च) शत्रुर्वध्यो विचक्षणैः॥'। नीवाटी.

---

* क्षयकाल आसन्नो भवतीत्यर्थः।

(१) नीवा. ३०।६८–६९.

(२) नीवा. १०।१४७–१५३.

**उत्सेको हस्तगतमपि कार्यं विनाशयति ॥**

अथोत्सेकयुक्तस्य यद्भवति तदाह— उत्सेक इति। उत्सेकशब्देन गर्व उच्यते। तं यः करोति शत्रुविषये नदीपूरवत् मृदुत्वेन (न) वर्तते स हस्तगतमपि कार्यं शत्रुनाशविषये नाशयति। गर्वाल्पपरुषेण प्रजल्पति स सावधानो हस्तप्राप्तोऽपि गच्छति। तस्माद्यस्य वधाय वाञ्छा क्रियते तस्य प्रियं वक्तव्यमिति। तथा च शुक्रः— 'वचनं कृपणं ब्रूयात् कुर्यान्मार्जारचेष्टितम्। विश्वस्तमाखुवच्छत्रुं ततस्तं तु निपातयेत् ॥'।

नीवाटी.

**नाल्पं महद्वाऽपक्षेपोपायज्ञस्य ॥**

अथापक्षेपोपायज्ञस्य भूपतेर्यद्भवति तदाह— नाल्पमिति। अपक्षेपशब्देन विनाशः कथ्यते। यो राजा शत्रुविनाशोपायान् अवस्कंदद्यानविषये पूर्वकान् (?) जानाति तस्य शत्रुविनाशं कुर्वतो नाल्पं न स्तोकं न महद्वा प्रभूतं वा। सर्वमप्युपायैर्व्यापादयति। तथा च गुरुः— 'वधोपायान् विजानाति शत्रूणां पृथिवीपतिः। तस्याग्रे च महान् शत्रुस्तिष्ठते न कुतो लघुः ॥'।

नीवाटी.

**नदीपूरः सममेवोन्मूलयति तीरजतृणांह्रिमान् (? पान्) ॥**

अथ वधोपायज्ञस्य नृपतेर्दृष्टान्तमाह— नदीपूर इति। नदीवेगः समासयतः (?) समं एककालम् उन्मूलयति नाशयति। कान् ? तीरजतृणांह्रिमान् (? पान्) एवं राजाऽपि बहूपायेन शत्रून् लघून् गुरूनपि नाशयति। तथा च गुरुः— 'पार्थिवो मृदुवाक्यैर्यः शत्रूनालपयेत्सुधीः। नाशं नयेच्छनैस्तांश्च तीरजान् सिन्धुपूरवत् ॥'।

नीवाटी.

**[1]अप्लवस्य समुद्रावगाहनमिवाऽबलस्य बलवता सह विग्रहाय टिरिटिल्लितम् ॥**

अथ दुर्बलस्य बलवता सह विग्रहे यद्भवति तदाह— अप्लवस्येति। अतश्च क्षणमात्रं युद्धं कृत्वा पश्चान्नाशमुपयाति। एतदुक्तं भवति— यः समुद्रं बाहुभ्यां तरति सह क्षणमेकं टिरिटिल्लितं करोति। कोऽर्थः ? क्षणेन जलादंधं (?) निःसारयति, ततश्च क्षणेन म्रियते। तथा च गुरुः— 'बलिना सह युद्धं यः प्रकरोति सुदुर्बलः। क्षणं कृत्वाऽऽत्मनः शक्त्या युद्धं तस्य विनाशनात् ॥'।

नीवाटी.

## मानसोल्लासः

विग्रहार्हवैरिलक्षणम्, अष्टविधो विग्रहः

**[1]सुयत्नेन सहायेन सामर्थ्येन बलेन च।**
**मन्त्रैर्हीनेन भूपालः सार्धं कुर्वीत विग्रहम् ॥**
**कामजो लोभजश्चैव भूभवो मानसंभवः।**
**अभयाख्यः समाख्यात इष्टजोऽथ मदोत्थितः ॥**
**अर्थशास्त्रे परः ख्यात एकद्रव्याभिलाषुकः।**
**इत्यष्टौ विग्रहाः प्रोक्ता नवमो नोपलभ्यते ॥**
**स्त्रीनिमित्तो हि यो जातो विग्रहः कामजः स्मृतः।**
**द्रव्यापहारजनितो विग्रहो लोभजस्तथा ॥**
**भूम्यर्थमुत्थितो यस्तु विग्रहो भूभवो महान्।**
**विरुद्धार्थं कृतो यस्तु विग्रहो मानसंभवः ॥**
**शरणागतरक्षार्थं यो भवेद् विग्रहो महान्।**
**अभयाख्यः स कथितो विग्रहो नीतिवेदिभिः ॥**
**मित्रार्थे बन्धुभृत्यार्थे विग्रहो यः समाचरेत्।**
**इष्टजः स तु निर्दिष्टो नीतिस्पष्टार्थदृष्टिभिः ॥**
**मदिरामदजातेन विद्याधनमदेन च।**
**यौवनेन मदेनाथ विग्रहो यो भवेन्नृणाम् ॥**
**एतैर्मदैः समुत्पन्नो मतिभ्रंशकरो महान्।**
**अविवेकाद् य उत्पन्नः स भवेच्च मदोत्थितः ॥**
**एकमर्थं समुद्दिश्य यो भवेद् विग्रहो मिथः।**
**स प्रोक्तः शास्त्रतत्त्वज्ञैरेकद्रव्याभिलाषुकः ॥**

---

(१) नीवा. २७।६३.

(१) मासो. २।७३३–७४२.

## हारीतः

अनुकूलकाले यानम्

[1]प्राप्तकालस्तु नीतिज्ञ उत्तिष्ठेत्कालसर्पवत् ।
महत्यल्पोऽप्युपायज्ञः समये भवति क्षमः ॥

## महाभारतम्

युद्धं पापिष्ठम्, अनुकूलदेशकालानुसारेण युद्धस्य कर्तव्यता

[2]नया हि बहवः सन्ति शास्त्राण्याश्रित्य चिन्तिताः ।
तेषां युद्धं तु पापिष्ठं वेदयन्ति पुराविदः ॥

येषां शकुन्यादीनां मायाः कपटानि बहवः बह्व्यः सन्ति तेषां दृष्ट्या युद्धं पापिष्ठम्, नाशकरत्वात् । न हीदानीमर्जुनो द्यूतेनेव मायामात्रेण जेतुं शक्य इति भावः । पाठान्तरे नयाः नीतयः सामाद्याः, तेषां मध्ये युद्धं पापिष्ठम् । नीटी.

[3]देशकालेन संयुक्तं युद्धं विजयदं भवेत् ।
हीनकालं तदेवेह फलवन्न भवत्युत ।
देशे काले च विक्रान्तं कल्याणाय विधीयते ॥

इदानीं ग्रीष्मो न युद्धकालः, श्रान्त्या जलाभावेन च सद्यो वाहनानां नाशापत्तेः । नापि देशो गिरिदुर्गाद्याश्रितोऽस्तीति भावः । इदं युद्धं फलं न लभते फलं न लम्भयेत् । परस्य तु देशकालावनुकूलावेव वर्तेते इति भावः । विक्रान्तं पराक्रमः । नीटी.

[4]आनुकूल्येन कार्याणामन्तरं संविधीयताम् ।
भारं हि रथकारस्य न व्यवस्यन्ति पण्डिताः ॥

देशादेरानुकूल्येन हेतुना कार्याणां युद्धादीनाम् अन्तरं तादर्थ्यं फलवत्त्वमिति यावत्, संविधीयते सम्यक् क्रियते । 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये' इति मेदिनी । 'मन्त्राणाम्' इति पाठे देशाद्यानुकूल्येन कार्यं विचार्यमित्यर्थः । तत्राऽऽभाणकमाह– भारमिति । यथा रथकारेण 'दिव्योऽयं मया निर्मितो रथः सुदृढाङ्गः, अनेन त्वं देवानपि सर्वथा जेष्यसि' इत्युक्ते तद्वचसि भारं दत्त्वा देशकालानुकूल्यमनपेक्ष्यैव पण्डिता न व्यवस्यन्ति । योद्धुमिति शेषः । एवं त्वद्वचसि भारं दत्त्वा देशाद्यानुकूल्यमनवेक्ष्य कथमस्माभिर्योद्धव्यम् ? तव तु वचनं रथकारवचनवत् अर्थशून्यमिति भावः । 'सर्वानायुष्मतो भीतान् संत्रस्तानिव लक्षये' (भामु. ४।४८। १) इति यत् कर्णेनोक्तं तस्यैतदुत्तरम् । नीटी.

युद्धे जयपराजयौ अनिश्चितौ

[1]न हि पश्यामि संग्रामे कदाचिदपि कौरव ।
एकान्तसिद्धिं राजेन्द्र संप्राप्तश्च धनंजयः ॥

संप्रवृत्ते तु संग्रामे भावाभावौ जयाजयौ ।
अवश्यमेकं स्पृशतो दृष्टमेतदसंशयम् ॥

प्रमाददौर्बल्यानवधानदोषवता वैरिणा योद्धव्यम्

*[2]यात्रां यायादविज्ञातमनाक्रन्दमनन्तरम् ।
व्यासक्तं च प्रमत्तं च दुर्बलं च विचक्षणः ॥
यात्रामाज्ञापयेद्वीरः कल्यपुष्टबलः सुखी ॥

---

(१) हार. ९.

(२) भा. ४।४४।२ ; भामु. ४।४९।२ नया (माया) शास्त्राण्या (शास्त्रमा).

(३) भा. ४।४४।३ ; भामु. ४।४९।३ चतुर्थचरणे (फलं न लभते पुनः).

(४) भा. ४।४४।४ ; भामु. ४।४९।४ धीयताम् (धीयते).

* सार्धश्लोकस्य व्याख्यानं 'षाड्गुण्यम्– सामान्यविचारः' इत्यस्मिन् प्रकरणे (पृ. २००५) द्रष्टव्यम् ।

(१) भा. ४।४७।१२–१३ ; भामु. ४।५२।१२–१३.

(२) भा. १२।६९।१९–२० ; भामु. १२।६९। १९–२० यात्रां यायादवि (यात्रायां यदि वि) कल्य (कल्यः).

युद्धविजयो जघन्यः, जनपदस्य योधानां च युद्धानुकूलगुणाः, युद्धेन ईप्सितम्, युद्धानुकूलः विविधो विवेकः

**वामदेव उवाच–**

**[1]अयुद्धेनैव विजयं वर्धयेद्वसुधाधिपः ।**
**जघन्यमाहुर्विजयं यो युद्धेन नराधिप ॥**

**[2]न चाप्यलब्धं लिप्सेत मूले नातिदृढे सति ।**
**न हि दुर्बलमूलस्य राज्ञो लाभो विधीयते ॥**

नातिदृढे अनतिदृढे । नीटी.

**[3]यस्य स्फीतो जनपदः संपन्नः प्रियराजकः ।**
**संतुष्टपुष्टसचिवो दृढमूलः स पार्थिवः ॥**

दृढमूलत्वस्य लक्षणमाह– यस्येति । नीटी.

**[4]यस्य योधाः सुसंतुष्टाः सान्त्विताः सूपधास्थिताः ।**
**अल्पेनापि स दण्डेन महीं जयति भूमिपः ॥**

सूपधाः परवञ्चनाः, तत्र स्थिताः निष्ठावन्तः । दण्डेन सैन्येन । नीटी.

**[5]पौरजानपदा यस्य स्वनुरक्ताः सुपूजिताः ।**
**सधना धान्यवन्तश्च दृढमूलः स पार्थिवः ॥**

**[6]प्रभावकालावधिकौ यदा मन्येत चाऽऽत्मनः ।**
**तदा लिप्सेत मेधावी परभूमिं धनान्युत ॥**

लिप्सेत विजिगीषेत । नीटी.

**[1]प्रयास्यमानो नृपतिस्त्रिविधं परिचिन्तयेत् ।**
**आत्मनश्चैव शत्रोश्च शक्तिं शास्त्रविशारदः ॥**

त्रिविधां शक्तिम् । नीटी.

**[2]उत्साहप्रभुशक्तिभ्यां मन्त्रशक्त्या च भारत ।**
**उपपन्नो नरो यायाद् विपरीतमतोऽन्यथा ॥**

तामेवाऽऽह– उत्साहेति । नीटी.

## कौटिलीयमर्थशास्त्रम्

यानलक्षणम्, यानहेतुः

**[3]अभ्युच्चयो यानम् ॥**

शक्तिदेशकालाद्यतिशययोगः अभ्युच्चयः । स यानहेतुत्वात् यानमित्युच्यते कारणे कार्योपचारात् । श्रीमूला.

**गुणातिशययुक्तो यायात् ॥**

अभियास्यत्कर्माधिकरणोक्तः शक्तिदेशकालादिः गुणातिशयः, तद्युक्तः अभिषेणनं कुर्यात् । श्रीमूला.

संधिविग्रहपूर्वकाणि यानानि, संभूययानम्

**[4]विगृह्यासनहेतुभिरभ्युच्चितः सर्वसंदोहवर्जं विगृह्य यायात् ॥**

'विगृह्ययानम्' इति सूत्रमुत्तानार्थम् । विगृह्यासनहेतुभिरिति । तैः अभ्युच्चितः शक्त्युपचयं प्राप्तः विगृह्य यायात् शत्रुं सर्वसंदोहवर्जं सर्वसंदोहसहितो यो यातव्यं प्रति अभिप्रयातस्तथाविधं शत्रुं वर्जयित्वा । तं प्रत्याचरितव्यं तु विगृह्यासनमुक्तमेव । श्रीमूला.

**यदा वा पश्येत्– 'व्यसनी परः, प्रकृतिव्यसनं वाऽस्य शेषप्रकृतिभिरप्रतिकार्यम्, स्वचक्रपीडिता विरक्ता वाऽस्य प्रकृतयः कर्शिता**

---

(१) भा. १२।९५।१ ; भामु. १२।९४।१ यो युद्धेन (युद्धेन च).

(२) भा. १२।९५।२ ; भामु. १२।९४।२.

(३) भा. १२।९५।३ ; भामु. १२।९४।३ न्नः प्रिय (न्नप्रिय).

(४) भा. १२।९५।४ ; भामु. १२।९४।४ भूमिपः (पार्थिवः).

(५) भा. १२।९५।५ ; भामु. १२।९४।५ द्वितीयचरणे (भूतेषु च दयालवः).

(६) भा. १२।९५।६ ; भामु. १२।९४।६ प्रथमचरणे (प्रतापकालमधिकं) मिं ध (मिध).

(१) भा. १५।१२।५ ; भामु. १५।७।५ विधं (विधां) ; रार. ३४.

(२) भा. १५।१२।६ ; भामु. १५।७।६ नरो (नृपो) तमतोऽन्यथा (तं च वर्जयेत्) ; रार. ३४ नरो (नृपो). (३) कौ. ७।१. (४) कौ. ७।४.

**निरुत्साहाः परस्पराद्भिन्नाः शक्या लोभयितुम्, अग्न्युदकव्याधिमरकदुर्भिक्षनिमित्तक्षीणयुग्यपुरुषनिचयरक्षाविधानः परः' इति, तदा विगृह्य यायात् ॥**

'शत्रुर्व्यसनवान्' इति चेत् पश्येत्, 'अस्य प्रकृतीनां वाऽमात्यादीनां व्यसनं शेषप्रकृतिभिः प्रतिकर्तुमशक्यमुत्पन्नम्' इति यदि पश्येत्, 'अस्य प्रकृतयः स्वसैन्यपीडिता राज्ञि निरनुरागाः कर्शिताः अत एव निरुत्साहाः परस्परभिन्नाः लोभयितुं शक्याः' इति चेत् पश्येत्, 'परोऽग्न्युदकव्याधिमरकदुर्भिक्षैर्निमित्तैर्युग्यकर्मकरकोशानां रक्षाविधानस्य च क्षयं प्राप्तः' इति च यदि पश्येत्, एषु चतुर्षु निमित्तेषु विगृह्य यायात्।

श्रीमूला.

**यदा वा पश्येत्– 'मित्रमाक्रन्दश्च मे शूरवृद्धानुरक्तप्रकृतिर्विपरीतप्रकृतिः परः पार्ष्णिग्राहश्चाऽऽसारश्च, शक्ष्यामि मित्रेणाऽऽसारमाक्रन्देन पार्ष्णिग्राहं वा विगृह्य यातुम्' इति, तदा विगृह्य यायात् ॥**

'मम पुरस्तान्मित्रभूतो राजा पृष्ठतो मित्रभूतो राजा वा शूरैर्वृद्धैरनुरागिभिश्चामात्यादिभिः प्रकृतिभिरुपेतो भवति, परो विपरीतप्रकृतिस्तथैव पार्ष्णिग्राहश्च आसारश्च, मित्रेण पार्ष्णिग्राहासारम् आक्रन्देन पार्ष्णिग्राहं च विग्राह्य यातव्यं प्रति प्रयातुं शक्ष्यामि' इति चेन्मन्येत तदा विगृह्य यायात्।

श्रीमूला.

**यदा वा फलमेकहार्यमल्पकालं पश्येत्, तदा पार्ष्णिग्राहासाराभ्यां विगृह्य यायात् ॥**

यदा वा किमपि फलम् आत्मना एकेनैवाल्पेन कालेन साध्यं पश्येत् तदा पार्ष्णिग्राहेण तदासारेण च सह विगृह्य यातव्यमभियायात्। फलस्य त्वन्यहार्यत्वे चिरसाध्यत्वे च ताभ्यां संधायैव यातव्यं यायात्। एतच्च पार्ष्णिग्राहासाराभ्यां विग्रहणं पृष्ठकोपारम्भात् प्रागेव फलस्य सुसाधत्वात् यातव्यसाधनानन्तरमपि तौ साधयितुं शक्याविति कृत्वोपदिष्टं द्रष्टव्यम्। इति विगृह्ययानं व्याख्यातम्।

श्रीमूला.

**विपर्यये संधाय यायात् ॥**

'संधाययानम्' इति सूत्रम्। संधानपुरःसरं यानमुच्यते इति सूत्रार्थः। विपर्यये संधाय यायादिति। यथोक्तानि विगृह्ययाननिमित्तानि आत्मनो यदा न पश्यति शत्रोस्तु पश्यति, तदा विजिगीषुः संधाययानमनुतिष्ठेत्। इति संधाययानं व्याख्यातम्।

श्रीमूला.

**यदा वा पश्येत्– 'न शक्यमेकेन यातुमवश्यं च यातव्यम्' इति, तदा समहीनज्यायोभिः सामवायिकैः संभूय यायात्। एकत्र निर्दिष्टेनांशेनानेकत्रानिर्दिष्टेनांशेन। तेषामसमवाये दण्डमन्यतमस्मिन् निविष्टांशेन याचेत। संभूयाभिगमनेन वा निर्विश्येत। ध्रुवे लाभे निर्दिष्टेनांशेनाध्रुवे लाभांशेन ॥**

'संभूयप्रयाणम्' इति सूत्रम्। समहीनज्यायसां शत्रुं प्रति समुदेत्यप्रयाणमुच्यते इति सूत्रार्थः।

यदा वा पश्येन्न शक्यमित्यादि। 'असहायेन मया यातुं न शक्यते, यातव्यं चावश्यम्' इति यदा मन्येत तदा समहीनज्यायोभिः समवेतैः संभूय यायात् यातव्यम्। एकत्रेत्यादि। एकस्मिन् देशे 'अंशः इयान्' इति भाषित्वा यायात्, अनेकत्र अभाषित्वा यायात् तत्तद्देशानुरोधेन। तेषामसमवाय इति। समादीनां मध्ये अन्यतमस्मिन् अन्यतमे राज्ञि असमवाये असमवेते सति दण्डं निविष्टांशेन याचेत तद्देयत्वेन व्यवस्थितो यः अंशः परिमाणम्, तद्युक्तं सैन्यं देहीति याचेत। इह 'अन्यतमस्मिन्' इति सर्वनामकार्यकरणमार्षम्। 'अन्यतरस्मिन्' इति पाठे तु बहुविषयनिर्धारणाप्रतीतिः। संभूयाभिगमनेन वा निर्विश्येतेति। संभूयाभिगमनं वा सहायकर्मणो निर्वेशः कल्पेत। 'यदि मम कार्ये संभूयाभिगमनेन त्वमिदानीं साहाय्यं कुर्याः, अहमपि तव कार्ये तथा साहाय्यं दास्यामि' इति वा साहाय्यदानप्रयोजनं निर्दिशेदित्यर्थः। ध्रुवे लाभ इति। लाभश्चेत् ध्रुवो भूम्यादिः तर्हि निर्दिष्टेनांशेन निर्विश्येत सहायकर्मनिर्वेशतया ध्रुवस्य कश्चिदंशो निर्देष्टव्यः पूर्वमेव। अध्रुवे लाभे लाभांशेन

निर्विश्येत । अध्रुवस्य लब्धपदार्थस्य कश्चिदंशो निर्वेशतया निर्देष्टव्यः । श्रीमूला.

**अंशो दण्डसमः पूर्वः प्रयाससम उत्तमः ।**
**विलोपो वा यथालाभं प्रक्षेपसम एव वा ॥**

यातव्यं संभूययानेन जितवद्भिर्लब्धस्य धनस्य कथं विभागः ? तत्राऽऽह— अंशो दण्डसम इति । दत्तसैन्यबहुत्वाल्पत्वानुरूपो दातॄणामंशः कल्प्यः इति प्रथमः पक्षः । प्रयाससम उत्तम इति । परिस्पन्दाधिक्याल्पत्वानुरूपोंऽशः इत्युत्तमः पक्षः । विलोपो वा यथालाभमिति । यथालाभं तेन तेन परिलुण्टितोऽर्थस्तस्य तस्य परिलुण्टितुरंशः इत्यपरः पक्षः । प्रक्षेपसम एव वेति । अथवा धनसाध्ये कार्ये संभूययातृभिः साधिते व्ययार्थधनप्रक्षेपबहुत्वाल्पत्वानुरूपो धनप्रक्षेप्तॄणामंशः । श्रीमूला.

यातव्यभेदाः, यातव्यनिश्चयाय प्रकृतिविवेकः क्षयलोभविरागहेतूनां परामर्शेन, संभूययाननिश्चयाय सामवायिकानां गुरुलघुभावचिन्तनम्

**[1]तुल्यसामन्तव्यसने यातव्यममित्रं वेत्यमित्रमभियायात्, तत्सिद्धौ यातव्यम् । अमित्रसिद्धौ हि यातव्यः साहाय्यं दद्यान्नामित्रो यातव्यसिद्धौ ॥**

'यातव्यामित्रयोरभिग्रहचिन्ता' इति सूत्रम् । अरिसंपद्युक्तो व्यसनी यातव्यः । अमित्रः नित्यापकारी सामन्तः । अभिग्रहः पीडनकर्शनादिः, तद्धेतुत्वात् यानमिहोच्यते । चिन्ता संप्रधारणम् । यातव्यामित्रयोर्मध्ये कतरं प्रति यानमनुष्ठेयमिति संप्रधारणमभिधीयते इति सूत्रार्थः । यानभेदाः कथिताः, यातव्यभेदास्तु कथ्यन्ते ।

तुल्यसामन्तव्यसने यातव्यममित्रं वेतीत्यादि । तुल्ये सामन्तयोर्यातव्यामित्रयोर्व्यसने यातव्यं वा पूर्वमभियायादमित्रं वेति चिन्तायाम् अमित्रमेव पूर्वमभियायात्, तत्साधनानन्तरं तु यातव्यमभियायात् । कुतः ? हि यस्मात्कारणात् अमित्रसाधने विषये यातव्यो हेतुं ग्राहितो भृत्यभावी मित्रभावी वा सन् साहाय्यं विजिगीषवे दद्यात्, अमित्रस्तु यातव्यसाधने पूर्वमारभ्यमाणे साहाय्यं न दद्यात्, अरिभावित्वेन विजिगीषुं प्रति नित्यापकारशीलत्वात् । श्रीमूला.

**गुरुव्यसनं यातव्यं लघुव्यसनममित्रं वेति गुरुव्यसनं सौकर्यतो यायादित्याचार्याः । नेति कौटल्यः । लघुव्यसनममित्रं यायात् । लघ्वपि हि व्यसनमभियुक्तस्य कृच्छ्रं भवति । सत्यं गुर्वपि गुरुतरं भवति । अनभियुक्तस्तु लघुव्यसनः सुखेन व्यसनं प्रतिकृत्यामित्रो यातव्यमभिसरेत् । पार्ष्णिं गृह्णीयात् ॥**

इत्थं व्यसनसाम्ये यानप्रकारमुक्त्वा व्यसनवैषम्ये आह— गुरुव्यसनमित्यादि । गुरुव्यसनं यातव्यं वा यायालघुव्यसनममित्रं वेति चिन्तायां गुरुव्यसनमेव पूर्वं यायात्, सुखसाध्यत्वात् इत्याचार्या वदन्ति । तत् प्रतिषेधति— नेति कौटल्य इत्यादि । गुरुव्यसनलघुव्यसनसंनिपाते लघुव्यसनममित्रमेव यायात् । कुतः ? लघ्वपि स्वव्यसनमभियोगेन युक्तं शत्रुणा कृच्छ्रप्रतिकार्यं भवतीति सुखजय्यः शत्रुः । यद्यपि यातव्यस्य गुरु व्यसनमभियोगेन युक्तं गुरुतरं भवतीति शत्रुरभियुक्तः सुजय्यतरो भवति, तथापि लघुव्यसनोऽमित्र एवाभियोक्तव्यः । अन्यथा सोऽभियोगपीडाविरहादात्मनो व्यसनस्य लघुनः सुखेन प्रतीकारं कृत्वा यातव्याय साहाय्यं दद्यात्, तस्य पार्ष्णिं वा गृह्णीयात् । श्रीमूला.

**यातव्ययौगपद्ये गुरुव्यसनं न्यायवृत्तिं लघुव्यसनमन्यायवृत्तिं विरक्तप्रकृतिं वेति विरक्तप्रकृतिं यायात् । गुरुव्यसनं न्यायवृत्तिमभियुक्तं प्रकृतयोऽनुगृह्णन्ति । लघुव्यसनमन्यायवृत्तिमुपेक्षन्ते । विरक्ता बलवन्तमप्युच्छिन्दन्ति । तस्मात् विरक्तप्रकृतिमेव यायात् ॥**

इत्थं द्विविषयं यानानुष्ठानमुक्त्वा त्रिविषयमाह— यातव्ययौगपद्य इत्यादि । न्याय्यवृत्तिर्गुरुव्यसन एकः, अन्याय्यवृत्तिर्लघुव्यसनोऽपरः, विरक्तप्रकृतिरन्य इति त्रिषु यातव्येषु कतमं यायादिति विचारणायां विरक्त-

(१) कौ. ७।५.

प्रकृतिं यायात् । कुतः ? न्याय्यवृत्तिर्गुरुव्यसनो हि प्रकृतिभिरनुगृह्येतेत्यसाध्यः , अन्याय्यवृत्तिर्लघुव्यसनः प्रकृतिभिरुपेक्ष्येत न पुनर्द्विष्येतेति केवलस्वबलसाध्यः , विरक्तप्रकृतिस्तु बलवानपि विरक्ताभिः स्वप्रकृतिभिरुच्छिद्येतेति विजिगीषोः सुखतरोच्छेद्य इत्येतस्मात् कारणात् । श्रीमूला.

**क्षीणलुब्धप्रकृतिमपचरितप्रकृतिं वेति क्षीणलुब्धप्रकृतिं यायात् । क्षीणलुब्धा हि प्रकृतयः सुखेनोपजापं पीडां वोपगच्छन्ति, नापचरिताः प्रधानावग्रहसाध्या इत्याचार्याः । नेति कौटल्यः । क्षीणलुब्धा हि प्रकृतयो भर्तरि स्निग्धा भर्तृहिते तिष्ठन्ति । उपजापं वा विसंवादयन्ति, अनुरागे सार्वगुण्यमिति । तस्मादपचरितप्रकृतिमेव यायात् ॥**

क्षीणाः दुर्भिक्षव्यसनादिपीडिताः लुब्धाश्च यस्य प्रकृतयस्तथाभूतस्य अनादृतप्रकृतेश्चेत्युभयोर्यातव्ययोः प्रसङ्गे क्षीणलुब्धप्रकृतिं यायात् । कस्मात् ? क्षीणलुब्धा हि प्रकृतयोऽनायासेन भेदयितुं पीडयितुं च शक्याः , न त्वपचरिताः प्रकृतयः । ता हि प्रधानपुरुषस्वीकारैकसाध्या इत्याचार्याणां मतम् । तत् प्रत्याचष्टे– नेति कौटल्य इत्यादि । कुतः ? क्षीणलुब्धा हि प्रकृतयः भर्तरि स्नेहवत्यश्चेत् तस्य हितमेव कुर्युः , भेद्यमाना वा भेदं नाङ्गीकुर्युः स्वाम्यनुरागे सर्वगुणयोग इति मन्यमानाः । तस्मादनादृतप्रकृतिमेव यातव्यं यायात् । श्रीमूला.

**बलवन्तमन्यायवृत्तिं दुर्बलं वा न्यायवृत्तिमिति बलवन्तमन्यायवृत्तिं यायात् । बलवन्तमन्यायवृत्तिमभियुक्तं प्रकृतयो नानुगृह्णन्ति निष्पातयन्त्यमित्रं वाऽस्य भजन्ते । दुर्बलं तु न्यायवृत्तिमभियुक्तं प्रकृतयः परिगृह्णन्ति, अनुनिष्पतन्ति वा ॥**

अन्याय्यचरितो बलवानेकः न्याय्यचरितो दुर्बल एक इत्यनयोः कतरमभियायादिति विमर्शे बलवन्तमन्याय्यवृत्तिमेव यायात् । कुतः ? तं हि शत्रुणाऽभियुक्तं प्रकृतयो नानुगृह्णन्ति, प्रत्युत दुर्गादिस्थानेभ्यो निष्कासयन्ति, अस्य शत्रुं वाऽऽश्रयन्ते । दुर्बलं तु न्याय्यचरितं परेणाभियुक्तं प्रकृतयोऽनुगृह्णन्ति दुर्गादितो निष्क्रामन्तमनुनिष्क्रामन्ति च । इति यातव्यामित्रयोरभिग्रहचिन्ता व्याख्याता । श्रीमूला.

**अवक्षेपेण हि सतामसतां प्रग्रहेण च ।**
**अभूतानां च हिंसानामधर्म्याणां प्रवर्तनैः ॥**
**उचितानां चरित्राणां धर्मिष्ठानां निवर्तनैः ।**
**अधर्मस्य प्रसङ्गेन धर्मस्यावग्रहेण च ॥**
**अकार्याणां च करणैः कार्याणां च प्रणाशनैः ।**
**अप्रदानैश्च देयानामदेयानां च साधनैः ॥**
**अदण्डनैश्च दण्ड्यानां दण्ड्यानां चण्डदण्डनैः ।**
**अग्राह्याणामुपग्राहैर्ग्राह्याणां चानभिग्रहैः ॥**
**अनर्थ्यानां च करणैरर्थ्यानां च विघातनैः ।**
**अरक्षणैश्च चोरेभ्यः स्वयं च परिमोषणैः ॥**
**पातैः पुरुषकाराणां कर्मणां गुणदूषणैः ।**
**उपघातैः प्रधानानां मान्यानां चावमाननैः ॥**
**विरोधनैश्च वृद्धानां वैषम्येणानृतेन च ।**
**कृतस्याप्रतिकारेण स्थितस्याकरणेन च ॥**
**राज्ञः प्रमादालस्याभ्यां योगक्षेमवधेन च ।**
**प्रकृतीनां क्षयो लोभो वैराग्यं चोपजायते ॥**

'क्षयलोभविरागहेतवः प्रकृतीनाम्' इति सूत्रम् । क्षयः गजतुरगमुख्यपुरुषाल्पीभावो धनाल्पीभावश्च । लोभः अतितृष्णा । विरागः प्रद्वेषः । ते एते प्रकृतीनां कैर्हेतुभिरुत्पद्यन्ते इत्येतदिहोच्यते इति सूत्रार्थः । प्रकृतिक्षयलोभविरागा नाम विजिगीषोर्यातव्यत्वप्रयोजकाः । अतस्तेद्धतवो विजिगीषुणा हानार्थं विज्ञातव्या इति कृत्वा इहोपदिश्यन्ते ।

तानेकान्वयेन श्लोकाष्टकेनाऽऽह– अवक्षेपेण हीत्यादि । सताम् अवक्षेपेण विद्यावृत्ताभिजनशौर्यादिसंपन्नानामवज्ञानेन, असतां प्रग्रहेण नटनर्तकादीनामर्चनेन, अभूतानाम् अनुचितानां धर्मापेतानां च हिंसानां प्रवर्तनैः , उचितानां धर्मानपेतानां समुदाचाराणां निवर्तनैः , परस्त्रीग्रहणस्तेयाद्यधर्मासक्त्या, कूपतटाकनिर्माणादिधर्मप्रत्याख्यानेन , अनर्थफलकार्यानुष्ठानैः , दुर्गसेतु-

कर्मादिकार्योपघातैः, भृत्यवेतनादीनां देयानामप्रदानैः, अपूर्वक्लृप्तानामुपदानां प्रजाभ्यः प्रसभहरणैः, दण्डार्हादण्डनैः, दण्ड्यानामत्युग्रदण्डनैः, अग्राह्याणां स्तेनादीनां स्वीकरणैः, जानपदत्वादिगुणोपेतानां पितृपितामहक्रमागतानां ग्राह्याणामसंग्रहणैः, अनर्थावहानां संध्यादीनां करणैः, अर्थावहानां तेषां विघातनैः, चोरेभ्यः प्रजानामरक्षणैः, स्वयं चौर्यकरणैः, पुरुषकाराणां त्यागैः, कर्मणां सम्यगनुष्ठितत्वगुणस्य निन्दनैः, प्रधानानां सेतुदुर्गादिकर्माध्यक्षाणां दोषारोपेण निकृष्टकर्मनियोजनैः, मान्यानाम् ऋत्विगाचार्यपुरोहितादीनामवमाननैः, विद्यादिवृद्धानां विरोधाचरणैः। 'विरोधनैश्च भृत्यानाम्' इति पाठे भृत्यानामन्योन्यवैरोत्पादनैः। भृत्येषु समानसामर्थ्येषु विषमवृत्त्या, असत्यवचनेन, उपकारानिष्क्रयेण, स्थितस्य नित्यस्य शक्रोत्सवादेरकरणेन, राज्ञो द्यूतमृगयाद्यासक्तिलक्षणेन प्रमादेन, अलसतया, योगक्षेमवधेन इत्येतैर्हेतुभिः प्रकृतीनां क्षयो लोभो राज्ञि अपरागश्च जायते। श्रीमूला.

**क्षीणाः प्रकृतयो लोभं लुब्धा यान्ति विरागताम्।**
**विरक्ता यान्त्यमित्रं वा भर्तारं घ्नन्ति वा स्वयम्॥**

प्रकृतयः क्षये जाते तत एव हेतोर्लोभं प्राप्नुवन्ति। लोभाच्च राज्ञि अपरागमलब्धकामाः प्राप्नुवन्ति। अपरक्ताश्च स्वामिनं परित्यज्य तच्छत्रुं भजन्ते, अथवा स्वयमेव स्वामिनं मारयन्ति। श्रीमूला.

**तस्मात्प्रकृतीनां क्षयलोभविरागकारणानि नोत्पादयेत्। उत्पन्नानि वा सद्यः प्रतिकुर्वीत॥**

तस्मात् प्रकृतीनां क्षयलोभविरागहेतवो यथा नोत्पद्येरन् तथा प्रयतेत राजा, उत्पन्नांश्च सद्यः प्रतिक्रियया शमयेदित्याह— तस्मादित्यादि। श्रीमूला.

**क्षीणा लुब्धा विरक्ता वा प्रकृतय इति। क्षीणाः पीडनोच्छेदनभयात् सद्यः संधिं युद्धं निष्पतनं वा रोचयन्ते। लुब्धा लोभेनासंतुष्टाः परोपजापं लिप्सन्ते। विरक्ताः पराभियोगमभ्युत्तिष्ठन्ते॥**

क्षीणासु लुब्धासु विरक्तासु चेति त्रिविधासु प्रकृतिषु यथोत्तरं गौरवमित्याह— क्षीणा लुब्धा इत्यादि। इतिशब्दानन्तरं गौरवक्रम इति शेषः। गौरवतारतम्यनिमित्तभूतांस्ताभ्यः संभावितानर्थानाह— क्षीणाः पीडनोच्छेदनभयादित्यादि। क्षीणा हि प्रकृतयः पीडनमुच्छेदनं वा शङ्कमानाः शत्रुणा सह संधिं सद्यः कुर्युरनिच्छत्यपि विजिगीषौ शत्रोः प्रतिहतोत्साहतामापाद्य पश्चात् तं कर्तव्यं मन्यमाने। युद्धं वा ताः सद्य आरभेरन् विजिगीषौ परस्य छिद्रमुपलभ्य पश्चात् तत् आरम्भणीयं मन्यमानेऽपि। निष्क्रमणं वा दुर्गात् ताः सद्यः कुर्युर्विजिगीषौ 'सर्वोपायप्रयोगनैष्फल्यदर्शने पश्चाद्दुर्गमादीप्य निष्पतिष्यामि' इति मन्यमानेऽपि। अथ लुब्धाः प्रकृतयो लोभेनातृप्ताः परेण क्रियमाणं भेदमुपगच्छन्ति। विरक्तास्तु विजिगीषुं प्रति परेणाऽऽरब्धस्याभियोगस्याऽऽभिमुख्येन चेष्टन्ते। शत्रुपक्षमनुप्रविश्य विजिगीषुमभियुञ्जते इत्यर्थः। श्रीमूला.

**तासां हिरण्यधान्यक्षयः सर्वोपघाती कृच्छ्रप्रतीकारश्च। युग्यपुरुषक्षयो हिरण्यधान्यसाध्यः॥**

प्रकृतीनां हिरण्यधान्यक्षयः सर्वोपघाती गजतुरगपदात्यादीनां सर्वेषामुपघातकः, अत एव कृच्छ्रप्रतीकारः अशक्यप्रतिविधानः। अश्वपुरुषक्षयस्तु हिरण्यधान्यसाध्यः सुकरप्रतिविधानः। श्रीमूला.

**लोभ ऐकदेशिको मुख्यायत्तः परार्थेषु शक्यः प्रतिहन्तुमादातुं वा॥**

लोभ इति। सः ऐकदेशिकः प्रकृत्येकदेशाश्रितः, मुख्यायत्तः प्रवर्तननिवर्तनयोर्मुख्याधीनः, परार्थेषु शक्यः प्रतिहन्तुमादातुं वा परेषां यातव्यारिप्रभृतीनामर्थैरेव विषयभूतैः शमयितुं शक्यः मुख्यपुरुषैः स्वयं ग्रहीतुं च शक्यः। श्रीमूला.

**विरागः प्रधानावग्रहसाध्यः। निष्प्रधाना हि प्रकृतयो भोग्या भवन्त्यनुपजाप्याश्चान्येषा-**

**मनापत्सहास्तु । प्रकृतिमुख्यप्रग्रहैस्तु बहुधा भिन्ना गुप्ता भवन्त्यापत्सहाश्च ॥**

विरागस्तु प्रधानपुरुषनिग्रहसाध्यः । निष्प्रधाना हीति । मुख्यरहिताः प्रकृतयः भोग्याः विजिगीषोर्वश्याः भवन्ति, अन्येषाम् अनुपजाप्याश्च परामेद्याश्च भवन्ति । यद्यपीदृशो गुणो निष्प्रधानत्वे, तथापि कश्चिद्दोषो गणनीयोऽस्तीत्याह— अनापत्सहास्तु आपत्सहास्तु न भवन्ति । आपद्युपस्थितायां विजिगीषुं परित्यज्य गच्छन्तीत्यर्थः । सप्रधानत्वे तु बहुविधैः प्रकृतिमुख्यकृतैरुपलालनैः परामेद्या रक्षिताश्च सत्यः पराभियोगविपत्सहाश्च भवन्तीत्याह— प्रकृतिमुख्यप्रग्रहैस्त्वित्यादि । इत्थं 'क्षयलोभ विरागहेतवः प्रकृतीनाम्' इत्येतत् व्याख्यातम् ।

श्रीमूला.

**सामवायिकानामपि संधिविग्रहकारणान्यवेक्ष्य शक्तिशौचयुक्तेन संभूय यायात् । शक्तिमान् हि पार्ष्णिग्रहणे यात्रासाहाय्यदाने वा शक्तः, शुचिः सिद्धौ चासिद्धौ च यथास्थितकारीति ॥**

'सामवायिकविपरिमर्शः' इति सूत्रम् । समवायेन चरन्तीति सामवायिकाः विजिगीष्वनुयायिनः । तेषां विपरिमर्शः गुरुलघुभावचिन्तनम् अभिधीयते इति सूत्रार्थः । संभूयप्रयाणे सामवायिकानामंशकल्पनमुक्तम्, गुरुलघुभावस्तु नोक्तः, स इह निरूप्यते ।

सामवायिकानामपीति । तेषां च मध्ये संधिविग्रहकारणानि अवेक्ष्य गुरुलघुभावतः पर्यालोच्य शक्तिशौचयुक्तेन संभूय यायात् । 'शक्तिशौचयुक्तौ' इति पाठे शक्तिशौचयोगे सतीत्यर्थः । शक्तिशौचयोगस्य फलमाह— शक्तिमान् हीत्यादि । उत्साहादिशक्तित्रययुक्तो हि पार्ष्णिग्राहवारणे युद्धयात्रासहायसेनादाने वा समर्थो भवति । शुचिश्च ईप्सितस्यार्थस्य सिद्धावसिद्धौ वा स्थाय्यमनुतिष्ठति ।

श्रीमूला.

**तेषां ज्यायसैकेन द्वाभ्यां समाभ्यां वा संभूय यातव्यमिति । द्वाभ्यां समाभ्यां श्रेयः, ज्यायसा ह्यवगृहीतश्चरति समाभ्यामतिसंधानाधिक्ये वा तौ हि सुखौ भेदयितुम् । दुष्टश्चैको द्वाभ्यां नियन्तुं भेदोपग्रहं चोपगन्तुमिति ॥**

सामवायिकापेक्षायामेको ज्यायान् लभ्यते समौ च द्वौ, तत्र का प्रतिपत्तिरिति चिन्तायां द्वाभ्यां समाभ्यां संभूययानं प्रशस्तम् । कस्मात्? यस्मात् ज्यायसा सह याने विजिगीषुणा तदधश्चरितव्यम्, समाभ्यां सह याने न तथा चरितव्यमित्येको गुणः । पक्षे चातिसंधानवशादाधिक्ये लब्धे तौ परस्परस्मात् भेदयितुमनायासशक्यौ । यदि च तयोरन्यतरो दुष्टो भवेत् स विजिगीषुणा तदन्यसहायेन दमयितुं शक्यः, दूष्यादिद्वारकेण भेदप्रयोगेण निग्रहं च गमयितुं शक्य इत्याह— तेषां ज्यायसैकेनेत्यादि ।

श्रीमूला.

**समेनैकेन द्वाभ्यां हीनाभ्यां वेति । द्वाभ्यां हीनाभ्यां श्रेयः । तौ हि द्विकार्यसाधकौ वश्यौ च भवतः ॥**

समेनैकेन वा संभूययानमनुष्ठेयं द्वाभ्यां हीनाभ्यां वेति चिन्तायां द्वितीयः पक्ष एव श्रेयान् । कस्मात्? यस्मात् हीनौ पुरः पश्चाच्च रक्षकौ भूत्वा कार्यद्वयं साधयन्तौ विजिगीषोर्वशवर्तिनौ च भवत इत्याह— समेनैकेन द्वाभ्यां हीनाभ्यां वेत्यादि ।

श्रीमूला.

**कार्यसिद्धौ तु –**

**कृतार्थाज्ज्यायसो गूढः सापदेशमपस्रवेत् ।**
**अशुचेः शुचिवृत्तात्तु प्रतीक्षेताविसर्जनात् ॥**

एवं राजान्तरेषु संभूययानाय विजिगीषुणा मुख्येन सताऽपेक्ष्यमाणेषु विधिरुक्तः, विजिगीषौ तु राजान्तरैरपेक्ष्यमाणे विधिमाह— कार्यसिद्धौ तु— कृतार्थादित्यादि । साह्यार्थमात्मनेतरि ज्यायसि कार्यसिद्ध्यनन्तरमशुचौ दृष्टे अन्याविदितः किमपि निमित्तमपदिशन् तत्सकाशात् विजिगीषुः अपस्रवेत् अपेयात् । तं शुचिवृत्तमवगत्य तु आ विसर्जनात् विसर्जनं प्रतीक्षमाणः तदन्तिके एव तिष्ठेत् ।

श्रीमूला.

**सत्रादपसरेद्यत्तः कलत्रमपनीय वा ।**
**समादपि हि लब्धार्थाद्विश्वस्तस्य भयं भवेत् ॥**

अपसरणस्य कर्तव्यतायामाह— सत्रादिति । दुर्गादिः संकटप्रदेशः सत्रम् । तस्मात् अपसरेत् यत्तः यत्नवान् । किं कृत्वा ? कलत्रमपनीय वा । कलत्रमित्यन्तरङ्गपरिग्रहाणामुपलक्षणम् । तान् अन्यत्र नीत्वा । समादपसरणे कारणमाह— समादपि हीति । समानादपि लब्धार्थात् विश्वस्तस्य भयं भवेत् अनर्थो जायेत , तस्याशुचित्वात् ।

श्रीमूला.

**ज्यायस्त्वे चापि लब्धार्थः समो विपरिकल्पते ।**
**अभ्युच्चितश्चाविश्वास्यो वृद्धिश्चित्तविकारिणी ॥**

ज्यायान् वा भवतु समो वा, लब्धार्थः सर्वो विपरीतवृत्तिर्भवति, अभ्युच्चितः वृद्धिप्राप्तः न विश्वसनीयः, वृद्धिर्हि नाम चित्तं विकारयतीत्याह— जायस्त्वे चापीत्यादि ।

श्रीमूला.

**विशिष्टादल्पमप्यंशं लब्ध्वा तुष्टमुखो व्रजेत् ।**
**अनंशो वा ततोऽस्याङ्के प्रहृत्य द्विगुणं हरेत् ॥**

ज्यायसः सकाशात् अल्पमप्यंशं लब्ध्वा तुष्टमुखः प्रसन्नवदनः गच्छेत् । अनंशो वा अलब्धांशो वा तुष्टमुखो गच्छेत् । ततः पश्चात् अस्याङ्के प्रहृत्य विशिष्टस्य रन्ध्रे प्रहरणं दत्त्वा । 'प्रकृत्य' इति पाठे प्रयत्नं कृत्वा इत्यर्थः । द्विगुणम् आदेयांशाद्विगुणम् हरेत् ।

श्रीमूला.

**कृतार्थस्तु स्वयं नेता विसृजेत् सामवायिकान् ।**
**अपि जीयेत न जयेन्मण्डलेष्टस्तथा भवेत् ॥**

विजिगीषोः परतन्त्रयाने अनुष्ठानमभिधाय स्वतन्त्रयाने अनुष्ठानमाह— कृतार्थस्त्विति । स्वयं नेता तु स्वतन्त्रयानकर्ता तु विजिगीषुः कृतार्थः सिद्धसमीहितः सामवायिकान् विसृजेत् सत्कृत्य प्रेषयेत् । जीयेतापि स्वयं न्यूनांशत्वं प्राप्येतापि, न तु जयेत् न पुनः सामवायिकान् न्यूनांशत्वं प्रापयेत् । तथा तेन प्रकारेणानुष्ठाने मण्डलेष्टः राजमण्डलस्य प्रियः भवेत् ।

श्रीमूला.

कर्तव्ये संहितप्रयाणे पूर्वं सहकारिणा
कर्तव्यः संधिविशेषः

**[1]विजिगीषुर्द्वितीयां प्रकृतिमेवमतिसंदध्यात् । सामन्तं संहितप्रयाणे योजयेत्— 'त्वमितो याहि, अहमितो यास्यामि, समानो लाभः' इति ॥**

'संहितप्रयाणिकम्' इति सूत्रम् । संहितयोः अन्योन्यकृतसंधिकयोर्विजिगीष्वोः स्वं स्वं यातव्यं प्रति यत् भिन्नदिक्कं प्रयाणं तदुच्यते इति सूत्रार्थः । यानं हि प्रकृतं द्विविधम्— शुद्धं गुणान्तरमिश्रमिति । तत्र शुद्धं 'यानेन वृद्धिमातिष्ठेत्' इति प्रथमाध्यायेऽभिहितम् । गुणान्तरमिश्रमपि चतुर्विधम्— विगृह्ययानं संधाययानं संभूयप्रयाणं संहितप्रयाणं चेति । तत्रापि विगृह्ययानादित्रिकं निरूपितम् । संहितप्रयाणं त्वधुना निरूप्यते ।

विजिगीषुरिति । सः द्वितीयां प्रकृतिम् अरिप्रकृतिम् एवमतिसंदध्यात् वक्ष्यमाणप्रकारेण वञ्चयेत् । तं प्रकारमाह— सामन्तं संहितप्रयाणे योजयेत् प्रवर्तयेत् । किमित्युक्त्वा ? 'त्वम् इतो याहि— यत्र ते यातव्यस्तत्रदेशे याहि, अहमितो यास्यामि— यत्र मे यातव्यस्तत्राहं यास्यामि । समानो लाभः उभयत्रोत्पत्स्यमानो लाभ उभयोरावयोः समानः' इत्युक्त्वा ।

श्रीमूला.

**लाभसाम्ये संधिः । वैषम्ये विक्रमः ॥**

उभयोर्लाभे समाने संधिः समशक्तित्वात् करणीयः । वैषम्ये विक्रमः विजिगीषोर्लाभाधिक्ये स ज्यायस्त्वात् विक्रमेत । इति संहितप्रयाणिकं व्याख्यातम् ।

श्रीमूला.

राज्ञः यातव्यस्य प्रत्यभियातुर्विजिगीषोः कर्तव्यानि

**[2]यातव्योऽभियास्यमानः संधिकारणमादातुकामो विहन्तुकामो वा सामवायिकानामन्यतमं लाभद्वैगुण्येन पणेत । प्रपणिता क्षयव्ययप्रवासप्रत्यवायपरोपकारशरीराबाधांश्चास्य वर्णयेत् । प्रतिपन्नमर्थेन योजयेत् । वैरं वाऽपरैर्ग्राहयित्वा विसंवादयेत् ॥**

(१) कौ. ७१६.

(२) कौ. ७१८.

'यातव्यवृत्तिः' इति सूत्रम्। यातव्यो नाम कंचित् विजिगीषुं यातारमपेक्ष्य यातव्यावस्थापन्नस्तस्यैव प्रत्यभियाता विजिगीषुविशेषः। तस्य सामवायिकेषु वृत्तिः तस्मिंश्च सामवायिकानां वृत्तिरुच्यते इति सूत्रार्थः। यातव्याभियानसमवायिनामन्योन्यसंधिविक्रमादिकमुक्तम्। यातव्यस्य तेषु तेषां वा यातव्ये वृत्तिस्तु नोक्ता। सेदानीमभिधीयते।

यातव्य इति। यातव्यावस्थापन्नो विजिगीषुः अभियास्यमानः यातारं विजिगीषुं प्रति अभियानात् प्राक् संधिकारणम् आदातुकामः संधिनिमित्तं ग्रहीतुकामः स्वयं संधित्सुरित्यर्थः, संधिकारणं विहन्तुकामो वा परचिकीर्षितसंधिप्रतिजिघांसुर्वेत्यर्थः, सामवायिकानाम् अन्यतमं लाभद्वैगुण्येन पणेत व्यवस्थिततल्लाभांशाद्द्विगुणेन लाभेन संभाषेत, अर्थात् परसामवायिकीभावानभ्युपगमार्थम्। तदभ्युपगमे च दोषान् प्रद्वेषाय पणमानो वर्णयेदित्याह— प्रपणितेति। पणमानः। नयचन्द्रिकायां 'पणमानः' इत्येव पाठः। 'प्रपणितः' इति पाठस्तु चिन्त्यः। क्षयव्ययप्रवासप्रत्यवायपरोपकारशरीराबाधांश्च— युग्यपुरुषापचयं धनव्ययं दीर्घाध्वगतागतं संभूयप्रवृत्तिसंभावितं संविद्व्यतिक्रमदोषं परस्य शत्रोः पक्षं प्रविश्योपकारकरणं शरीरपीडां चेत्येतान् सामवायिकभावसंभाव्यान् षट् दोषान् अस्य पण्यमानस्य वर्णयेत् बोधयेत्। प्रतिपन्नम् अभ्युपगतपणनम् अर्थेन योजयेत् पणितमर्थं दत्वा स्वसामवायिकं कुर्यादित्यर्थः। विहन्तुकामत्वे आह— वैरं वाऽपरैर्ग्राहयित्वा विसंवादयेदिति। अन्यैः सामवायिकैः सह विरोधमुत्पाद्य संधिं विघटयेत्। एवं तावद्यातव्यस्य सामवायिकान्यतमपणनमुक्तम्। श्रीमूला.

**दुरारब्धकर्माणं भूयः क्षयव्ययाभ्यां योक्तुकामः स्वारब्धायां वा यात्रायां सिद्धिं विघातयितुकामो मूले यात्रायां वा प्रतिहर्तुकामो यातव्यसंहितः पुनर्याचितुकामः प्रत्युत्पन्नार्थकृच्छ्रस्तस्मिन्नविश्वस्तो वा तदात्वे लाभमल्पमिच्छेत्, आयत्यां प्रभूतम्॥**

अथ सामवायिकानामन्येन पणनं प्रस्तूयते। तत्र यातव्यं प्रति संधिच्छलेन अपकारं चिकीर्षोः प्रभूतार्थग्रहणे तत्करणायुक्तत्वं मन्यमानस्याऽऽयत्यां प्रभूतलाभैषिण एव सतः तदात्वे अल्पलाभाभ्युपगमपक्षमाह— दुरारब्धकर्माणं भूयः क्षयव्ययाभ्यां योक्तुकाम इति। अनुचितदेशकालद्युपक्रान्तयुद्धयात्रम् अत एव युग्यपुरुषापचयेन सहायाराधनार्थधनव्ययेन च स्वत एव युक्तं दुरारब्धानुवृत्त्या बहुतराभ्यां ताभ्यां योजयितुकामः, स्वारब्धायां वा यात्रायां सिद्धिं विघातयितुकामः समुचितदेशकालाद्यारब्धत्वात् यात्रायाः फलसिद्धिं संभाव्यां विघटयितुमिच्छुर्वा, मूले यात्रायां वा प्रतिहर्तुकामः स्थानीये अभियाने प्रहर्तुमिच्छुर्वा, यातव्यसंहितः पुनर्याचितुकामः 'संप्रत्यल्पेन लाभेन संधिं कृत्वा भूयः प्रभूतं याचिष्ये' इति मन्यमानो वा, प्रत्युत्पन्नार्थकृच्छ्र इति अतर्कितोपनतधनव्ययो वा, तस्मिन् अविश्वस्तो वा 'पणमाने विक्रये प्रभूतं प्रतिश्रुत्याप्यसौ पश्चान्न दास्यति' इत्युपजातशङ्को वा तदात्वे तत्काले लाभम् अल्पम् इच्छेत्। आयत्यां प्रभूतं प्रचुरम् इच्छेत्। एवं पञ्चसु निमित्तेषु तदात्वाल्पलाभपणनमित्येकः पक्ष उक्तः। श्रीमूला.

**मित्रोपकारममित्रोपघातमर्थानुबन्धमवेक्षमाणः पूर्वोपकारकं कारयितुकामो भूयस्तदात्वे महान्तं लाभमुत्सृज्याऽऽयत्यामल्पमिच्छेत्॥**

आयत्यामल्पलाभपणनरूपमन्यं पक्षमाह— मित्रोपकारममित्रोपघातमित्यादि। स्वमित्रस्योपकारं स्वामित्रस्यापकारं च फलान्तरानुबद्धं पश्यन् तदात्वोपस्थितं महान्तमपि लाभं परित्यज्य आयत्याम् अल्पं लाभम् इच्छेत्। तथा पूर्वोपकारकं भूयः कारयितुकामो वा अर्थात् पणमानेन पूर्वं कृतमुपकारं तेनैव भूयः कारयितुमिच्छुर्वा तदात्वोपस्थितं महान्तं लाभं परित्यज्य आयत्यामल्पमिच्छेत्। श्रीमूला.

**दूष्यामित्राभ्यां मूलहरेण वा ज्यायसा विगृहीतं त्रातुकामस्तथाविधमुपकारं कारयितुकामः**

**संबन्धापेक्षी वा तदात्वे चाऽऽयत्यां च लाभं न प्रतिगृह्णीयात् ॥**

आयत्यां तदात्वे वा लाभः सामवायिकेन न प्रतिगृह्यते इत्यपरः पक्षः । तमाह— दूष्यामित्राभ्यामिति । दूष्यः राजार्थाविग्रहचारी पुरमुख्यादिः, अमित्रः शत्रुः, ताभ्यां मूलहरेण उच्छेदकारिणा ज्यायसा वा विगृहीतम् अर्थात् बन्ध्वादिं त्रातुकामः स्वयं रक्षितुमिच्छन्, तथाविधमुपकारं कारयितुकामः अन्येन वा स्वीयेन रक्षयितुकामः, संबन्धापेक्षी वा यातव्येन सह विवाहसंबन्धमपेक्षमाणो वा तदात्वे चाऽऽयत्यां च लाभं न प्रतिगृह्णीयात् स्वल्पमपि । श्रीमूला.

**कृतसंधिरतिक्रमितुकामः परस्य प्रकृतिकर्शनं मित्रामित्रसंधिविश्लेषणं वा कर्तुकामः पराभियोगाच्छङ्कमानो लाभमप्राप्तमधिकं वा याचेत । तमितरस्तदात्वे चाऽऽयत्यां च क्रममवेक्षेत । तेन पूर्वे व्याख्याताः ॥**

अथ अप्राप्तस्यार्थस्य वाऽधिकस्यार्थस्य वा सद्योदानप्रार्थनमित्येवमात्मकं चतुर्थं पक्षमाह— कृतसंधिरतिक्रमितुकाम इति । पूर्वकृतमेव संधिं पश्चाल्लङ्घयितुकामः अप्राप्तं लाभं पणितमप्रविष्टं लाभम् अधिकं लाभं वा पणितादधिकं लाभं वा याचेत 'तदात्वे देहि' इति प्रार्थयेत 'तथा याचितस्य हि पणमानस्य दानासामर्थ्यात् संधिः शैथिल्यं प्राप्स्यति' इति । परस्य पणमानस्य प्रकृतिकर्शनं प्रकृतीनां वृत्तिकृच्छ्रं कर्तुकामो वा तथा याचेत । मित्रामित्रसंधिविश्लेषणं कर्तुकामो वा मित्रामित्रयोरल्पलाभपणनेन पूर्वं कृतात् संधेः विश्लेषणम् अपसरणम् उत्पादयितुमिच्छुर्वा तथा याचेत 'मयेव हि ताभ्यामपि याचितस्य दानासामर्थ्यात् संधिः शिथिलो भविष्यति' इति । पराभियोगात् शङ्कमानो लाभमप्राप्तमधिकं वा याचेत 'पर आत्मानमभियुञ्जीत' इति शङ्कया वा तथा याचेत 'याचिते हि परेण दत्ते स आत्मानं नाभियोक्तुं शक्नुयात्' इति । याचितस्य कर्तव्यमाह— तमितर इति । इतरः याचितः तदात्वे च आयत्यां च तं क्रमं याचमानोक्तं प्रकारम् अवेक्षेत अनुष्ठेयो न वेति पर्यालोच्य निर्णयेत् । तेन पूर्वे व्याख्याता इति । एतत्पक्षे क्रमावेक्षणकथनेन पूर्वोक्तेष्वपि त्रिषु पक्षेषु क्रमावेक्षणमुक्तप्रायमित्यर्थः । इत्थं यातव्यवृत्तिर्निरूपिता । श्रीमूला.

पार्ष्णिग्राहस्य न्यूनाधिकलाभयोर्विवेकः

**'संहत्यारिविजिगीष्वोरमित्रयोः पराभियोगिनोः पार्ष्णिं गृह्णतोर्यः शक्तिसंपन्नस्य पार्ष्णिं गृह्णाति, सोऽतिसंधत्ते । शक्तिसंपन्नो ह्यमित्रमुच्छिद्य पार्ष्णिग्राहमुच्छिन्द्यात्, न हीनशक्तिरलब्धलाभ इति ॥**

'पार्ष्णिग्राहचिन्ता' इति सूत्रम् । पार्ष्णिग्राहः पृष्ठस्थः शत्रुः, तदवस्थापन्नस्य राज्ञः चिन्ता अनुष्ठानविचारः क्रियते इति सूत्रार्थः । सामवायिकादीनामतिसंधिरुक्तः । पार्ष्णिग्राहस्येदानीमभिधीयते ।

संहत्येति । अमित्रयोः स्वशत्रुभूतयोः पराभियोगिनोः पराभियोगव्यापृतयोः अरिविजिगीष्वोः पार्ष्णिं यथोक्तारिसंबन्धिनं यथोक्तविजिगीषुसंबन्धिनं च पार्ष्णिं संहत्य गृह्णतोः । यौ द्वौ संभूय गृह्णीतस्तयोर्मध्ये इत्यर्थः । यः शक्तिसंपन्नस्य पार्ष्णिं गृह्णाति सः अतिसंधत्ते हीनशक्तिपार्ष्णिग्राह्यपेक्षया लाभविशेषं प्राप्नोति । तत्र हेतुमाह— शक्तिसंपन्नो हीत्यादि । अयमर्थः— शक्तिमान् हि स्वामित्रोच्छेदे सिद्धे प्राप्तोपचयो भूत्वा पार्ष्णिग्राहस्याप्युच्छेदं कुर्यादिति तदमित्रोच्छेदप्रतिबन्धाचरणं पार्ष्णिग्राहस्य स्वात्मत्राणाय कल्पेत । हीनशक्तिस्तु स्वामित्रोच्छेदासमर्थत्वादप्राप्तलाभोऽशङ्कनीय इति तत्पार्ष्णिग्राहिणो न कश्चित् विशेषलाभ इति । श्रीमूला.

**शक्तिसाम्ये यो विपुलारम्भस्य पार्ष्णिं गृह्णाति, सोऽतिसंधत्ते । विपुलारम्भो ह्यमित्रमुच्छिद्य पार्ष्णिग्राहमुच्छिन्द्यात्, नाल्पारम्भः सक्तचक्र इति ॥**

समशक्तिकयोरपि ग्राह्यपार्ष्ण्योर्मध्ये यः विपुलाम्भस्य भक्तोपकरणादिसर्वविधयात्रासाधनसंपन्नस्य पार्ष्णिं गृह्णाति

(१) कौ. ७।१३.

सः अतिसंधत्ते अल्पारम्भपार्ष्णिग्राह्यपेक्षया लाभविशेषं स्वात्मत्राणलक्षणं प्राप्नोति । तत्र कारणमाह— विपुलारम्भो हीति । हि यतः विपुलारम्भः अमित्रमुच्छिद्य शत्रूच्छेदेन प्राप्तवृद्धिर्भूत्वा पार्ष्णिग्राहमुच्छिन्द्यात् । नाल्पारम्भः परिमितसैन्योद्योगस्तु पार्ष्णिग्राहं नोच्छिन्द्यात् । कुतः ? सक्तचक्र इति । विक्षिप्तसैन्य इति कृत्वा । सज्जनीयसैन्यत्वाद्धेतोरित्यर्थः । श्रीमूला.

**आरम्भसाम्ये यः सर्वसंदोहेन प्रयातस्य पार्ष्णिं गृह्णाति, सोऽतिसंधत्ते । शून्यमूलो ह्यस्य सुकरो भवति, नैकदेशबलप्रयातः कृतपार्ष्णिप्रतिविधान इति ॥**

तुल्यारम्भविषयं विशेषमाह— आरम्भसाम्य इति । समानारम्भयोर्मध्ये इत्यर्थः । यः सर्वसंदोहेन प्रयातस्य सर्वसैन्यसमूहनेन स्वं मूलबलमप्युपादाय यातव्यमभिगतस्य पार्ष्णिं गृह्णाति सः अतिसंधत्ते एकदेशबलप्रयातपार्ष्णिग्राह्यपेक्षया लाभविशेषं प्राप्नोति । हेतुमाह— हि यतः शून्यमूलः अकृतरक्षमूलस्थानः ग्राह्यपार्ष्णिः अस्य पार्ष्णिग्राहस्य सुकरः सुखसाध्यः भवति । नैकदेशबलप्रयातः । स तु सुकरो न भवति । कुतः ? कृत— पार्ष्णिप्रतिविधान इति । सः बलैकदेशस्थापनेन संपादितपार्ष्णिग्राहप्रतिविधिरिति कृत्वा । श्रीमूला.

**बलोपादानसाम्ये यश्चलामित्रं प्रयातस्य पार्ष्णिं गृह्णाति, सोऽतिसंधत्ते । चलामित्रं प्रयातो हि सुखेनावाप्तसिद्धिः पार्ष्णिग्राहमुच्छिन्द्यात्, न स्थितामित्रं प्रयातः । असौ हि दुर्गप्रतिहतः । पार्ष्णिग्राहे च प्रतिनिवृत्तस्थितेनामित्रेणावगृह्यते ॥**

समानं बलमुपात्तवतोर्ग्राह्यपार्ष्ण्योः पार्ष्णिग्रहणेऽतिसंधिमाह— बलोपादानसाम्य इति । तत्र यः चलामित्रम् अकृतदुर्गं शत्रुं प्रयातस्य पार्ष्णिं गृह्णाति सः अतिसंधत्ते । कुतः ? हि यतः चलामित्रं प्रयातः सुखेन अक्लेशेन अवाप्तसिद्धिः लब्धशत्रुजयः, भूत्वेति शेषः, पार्ष्णिग्राहम् उच्छिन्द्यात् । अतश्च तत्पार्ष्णिग्रहणे सति आत्मपरित्राणं भवतीत्येष विशेषलाभ इति भावः । दुर्गादिसुप्रतिष्ठितं स्थितामित्रं प्रयातस्तु सुखेन सिद्धिं नावाप्नुयात् न च पार्ष्णिग्राहमुच्छिन्द्यादिति न तत्पार्ष्णिग्राहिणो विशेषलाभः कश्चिदित्यभिप्रायेणाऽऽह— न स्थितामित्रं प्रयात इति । स्थितामित्रं प्रयातः केन कारणेनावाप्तसिद्धिर्न भवतीत्यत्राऽऽह— असाविति । हि यतः असौ दुर्गप्रतिहतः परदुर्गेण कुण्ठितवीर्यो भवति । न केवलं विशेषलाभाभावः, प्रत्युतानर्थोऽपि स्थितामित्राभियायिपार्ष्णिग्राहिणः संभाव्यते इत्याह— पार्ष्णिग्राहे चेति । स्थितामित्राभियायिपार्ष्णेर्ग्रहणे च, क्रियमाणे इति शेषः, प्रतिनिवृत्तस्थितेन स्थितामित्रात् दुर्गप्रतिहतिवशात् प्रतिनिवृत्य स्थितेन अमित्रेण अवगृह्यते अर्थात् तत्पार्ष्णिग्राही । श्रीमूला.

**तेन पूर्वे व्याख्याताः ॥**

तेन स्थितामित्राभियायिपार्ष्णिग्राहिणः उक्तेन विधिना पूर्वे हीनशक्तिपार्ष्णिग्राही अल्पारम्भपार्ष्णिग्राही एकदेशबलप्रयातपार्ष्णिग्राही चेत्येते व्याख्याताः उक्तविधानाः । तेऽपि हीनशक्त्यादिभिः शत्रोः प्रतिनिवृत्तस्थितैरवगृह्यन्ते इत्यर्थः । श्रीमूला.

**शत्रुसाम्ये यो धार्मिकाभियोगिनः पार्ष्णिं गृह्णाति, सोऽतिसंधत्ते । धार्मिकाभियोगी हि स्वेषां च द्वेष्यो भवति । अधार्मिकाभियोगी संप्रियः ॥**

समानयोः शत्र्वोर्मध्ये यः धार्मिकाभियोगिनः धार्मिकं शत्रुमभियुञ्जानस्य पार्ष्णिं गृह्णाति सः अतिसंधत्ते विशेषलाभं भजते । कुतः ? हि यतः धार्मिकाभियोगी स्वेषां चकारात् परेषां च द्वेष्यो भवति । अतश्च सर्वद्वेष्यत्वात् दुर्लभसिद्धिः पार्ष्णिग्राहेण सुसाधो भवतीत्येष एव तस्य विशेषलाभ इति भावः । अधार्मिकाभियोगी संप्रियः स्वेषां परेषां च सम्यक् प्रेमविषयः । ततश्च स निश्चितजयः पार्ष्णिग्राहस्यासाध्यो भवतीति भावः । श्रीमूला.

**तेन मूलहरतादात्विककदर्याभियोगिनां पार्ष्णिग्रहणं व्याख्यातम् ॥**

उक्तेन विधिना मूलहरतादात्विककदर्याभियोगिनाम्— मूलहरः पितृपैतामहार्थान्यायभक्षकः, तादात्विकः तदा-

तदोत्पद्यमानार्थभक्षकः, कदर्यः भृत्यात्मपीडयाऽर्थोपचायकः, मूलहराद्यभियोगिनां त्रयाणां पार्ष्णिग्रहणं व्याख्यातं व्याख्यातप्रायलाभविशेषम् । द्रष्टव्यमिति शेषः । तद्यथा— मूलहरतादात्विकाभियोगिनोर्मध्ये मूलहराभियोगिनो यः पार्ष्णिं गृह्णाति सोऽतिसंधत्ते । मूलहराभियोगी हि सुखेन मूलहरमर्थकृच्छ्रणमुच्छिद्य पार्ष्णिग्राहमुच्छिन्द्यात् । तादात्विककदर्याभियोगिनोश्च मध्ये कदर्याभियोगिनो यः पार्ष्णिं गृह्णाति सोऽतिसंधत्ते । कदर्याभियोगी हि कदर्यमभृत्योपकारकं सुखेनोच्छिद्य पार्ष्णिग्राहमुच्छिन्द्यादिति । श्रीमूला.

**मित्राभियोगिनोः पार्ष्णिग्रहणे त एव हेतवः ॥**

ये एते अतिसंधिहेतव उक्ताः ते एव मित्राभियोगिनोः पार्ष्णिग्रहणेऽपि योज्या इत्याह— मित्राभियोगिनोरित्यादि । श्रीमूला.

**मित्रममित्रं चाभियुञ्जानयोर्यो मित्राभियोगिनः पार्ष्णिं गृह्णाति, सोऽतिसंधत्ते । मित्राभियोगी हि सुखेनावाप्तसिद्धिः पार्ष्णिग्राहमुच्छिन्द्यात् । सुकरो हि मित्रेण संधिर्नामित्रेणेति ॥**

अयमर्थः— मित्रामित्राभियोगिनोर्द्वयोर्मध्ये मित्राभियोगिनः पार्ष्णिं गृह्णन् विशेषलाभं मित्राभियोगप्रतिबन्धाचरणद्वारकात्मपरित्राणलक्षणं प्राप्नोति । कुतः ? यतो मित्राभियोगी पार्ष्णिग्राहेणोपेक्षितश्चेत् स सुखात् मित्रेण सह संधिक्रियया प्राप्तवृद्धिर्भूत्वा पार्ष्णिग्राहस्योच्छेदं कुर्यात् । अमित्राभियोगी तूपेक्षितोऽपि अमित्रेण सह संधेरसुकरतयाऽनवाप्तसिद्धिर्भवन् न पार्ष्णिग्राहमुच्छेत्तुं प्रभवेदिति । श्रीमूला.

**मित्रममित्रं चोद्धरतोर्योऽमित्रोद्धारिणः पार्ष्णिं गृह्णाति, सोऽतिसंधत्ते । वृद्धमित्रो ह्यमित्रोद्धारी पार्ष्णिग्राहमुच्छिन्द्यात्, नेतरः स्वपक्षोपघाती ॥**

मित्रामित्रोद्धारिणोः पार्ष्णिग्रहणे विशेषमाह— मित्रममित्रं चोद्धरतोरिति । तयोर्मध्ये यः अमित्रोद्धारिणः पार्ष्णिं गृह्णाति सः अतिसंधत्ते । कुतः ? हि यतः वृद्धमित्रः अनुपहतस्वपक्षः अमित्रोद्धारी पार्ष्णिग्राहम् उच्छिन्द्यात् । इतरः मित्रोद्धारी स्वपक्षोपघाती स्वमित्रोपघातप्राप्तपरिक्षयतयेत्यर्थः, पार्ष्णिग्राहं नोच्छिन्द्यात् नोच्छेत्तुं शक्नुयात् । श्रीमूला.

**तयोरलब्धलाभापगमने यस्यामित्रो महतो लाभाद्वियुक्तः क्षयव्ययाधिको वा, स पार्ष्णिग्राहोऽतिसंधत्ते । लब्धलाभापगमने यस्यामित्रो लाभेन शक्त्या हीनः स पार्ष्णिग्राहोऽतिसंधत्ते । यस्य वा यातव्यः शत्रोर्विग्रहापकारसमर्थः स्यात् ॥**

विशेषान्तरमाह— तयोरिति । मित्रामित्रोद्धारिणोः अलब्धलाभापगमने कमपि लाभमनवाप्य प्रत्यागमने सति यस्य पार्ष्णिग्राहस्य अमित्रः महतो लाभात् वियुक्तः अपेतः क्षयव्ययाधिको वा युग्यपुरुषापचयेन धनव्ययेन च परस्मादभ्यधिको वा भवति सः पार्ष्णिग्राहः अतिसंधत्ते । लब्धलाभापगमने लाभमवाप्य प्रत्यागमने सति यस्य अमित्रः लाभेन शक्त्या हीनः परापेक्षया हीनलाभो हीनशक्तिश्च भवति स पार्ष्णिग्राहः अतिसंधत्ते । प्रकारान्तरमाह— यस्य वेत्यादि । यातव्यः अरिः यस्य पार्ष्णिग्राहस्य शत्रोः अर्थात् विजिगीषोः विग्रहापकारसमर्थो भवति स वा पार्ष्णिग्राहोऽतिसंधत्त इति संबन्धः ।

श्रीमूला.

**पार्ष्णिग्राहयोरपि यः शक्यारम्भबलोपादानाधिकः स्थितशत्रुः पार्श्वस्थायी वा सोऽतिसंधत्ते । पार्श्वस्थायी हि यातव्याभिसारो मूलबाधकश्च भवति । मूलाबाधक एव पश्चात्स्थायी ॥**

अतिसंध्यन्तरमाह— पार्ष्णिग्राहयोरपीति । तयोरपि गुणान्तरसमानयोर्मध्ये यः शक्यारम्भबलोपादानाधिकः साध्यकार्यारम्भस्य सैन्यस्योपादाने अधिकः परस्मादुत्कृष्टः परसैन्याभ्यधिकप्रमाणतथाविधसैन्ययुक्तो भवति सः पार्ष्णिग्राहः अतिसंधत्ते । यः स्थितशत्रुः गृहीतपार्ष्णौ चलशत्रौ सति स्वयं दुर्गादिप्रतिष्ठितः शत्रुर्भवति सः पार्ष्णिग्राहः अतिसंधत्ते । यो वा पार्श्वस्थायी यातव्यपार्श्वे स्थितिशीलः सः पार्ष्णिग्राहः अतिसंधत्ते । तत्राऽऽद्ययोः परप्रधर्षकत्वं विशेषलाभः प्रतीत एव । अन्त्यस्य तु विशेषलाभं विश-

दयितुमाह— पार्श्वस्थायी हीति । स हि यातव्याभिसारः यातव्यसंगतः मूलबाधकश्च— मूलं विजिगीषोः स्थानीयम्, तद्बाधकश्च भवति । एवं च यातव्यसख्यबन्धपूर्वकविजिगीषुमूलबाधनसौकर्यमेव पार्श्वस्थायिनो विशेषलाभ इत्युक्तं भवति । पश्चात्स्थायी तु न तथेत्याह— मूलाबाधक एवेत्यादि । श्रीमूला.

**पार्ष्णिग्राहास्त्रयो ज्ञेयाः शत्रोश्चेष्टानिरोधकाः । सामन्ताः पृष्ठतोवर्गः प्रतिवेशौ च पार्श्वयोः ॥**

ते एते शत्रोर्व्यापारप्रतिबन्धकाः पार्ष्णिग्राहाः अभियोक्तुर्विषयानन्तराः पश्चाद्भागभवाः पार्श्वप्रतिनिविष्टा इति त्रिरूपा इत्याह— पार्ष्णिग्राहास्त्रयो ज्ञेया इत्यादि । श्रीमूला.

**अरेर्नेतुश्च मध्यस्थो दुर्बलोऽन्तर्धिरुच्यते । प्रतिघाते बलवतो दुर्गाटव्यपसारवान् ॥**

अन्तर्धिर्नाम कश्चित् मध्यमविशेषोऽस्ति । स तु अकिंचित्करत्वात् पार्ष्णिग्राहावस्थां नार्हतीत्यभिप्रायं तल्लक्षणकथनभङ्ग्याऽऽविष्करोति— अरेर्नेतुश्च मध्यस्थ इति । शत्रुविजिगीष्वोर्मध्यगतः दुर्बलः तदुपकारापकाराशक्तः अन्तर्धिरुच्यते अन्तर्धिरिति संज्ञायते । स कथंस्वभावः ? बलवतः प्रतिघाते, प्रसक्ते इति शेषः, दुर्गाटव्यपसारवान् दुर्गाटवीरूपबहुनिलयनस्थानयुक्तः । एवं च तिरोधानयोगात् संज्ञान्वर्थत्वं बोद्धव्यम् । श्रीमूला.

**मध्यमं त्वरिविजिगीष्वोर्लिप्समानयोर्मध्यमस्य पार्ष्णिं गृह्णतो लब्धलाभापगमने यो मध्यमं मित्राद्वियोजयति, अमित्रं च मित्रमाप्नोति, सोऽतिसंधत्ते । संधेयश्च शत्रुरुपकुर्वाणः, न मित्रं मित्रभावादुत्क्रान्तम् ॥**

मध्यमपार्ष्णिं गृह्णतोऽतिसंधिमाह— मध्यमं त्विति । तं पूर्वोक्तलक्षणम् अरिविजिगीष्वोर्लिप्समानयोः सतोः मध्यमस्य पार्ष्णिम् अर्थात् स्वलिप्सुसाह्यव्यापृतस्य मध्यमस्य संबन्धिनं पार्ष्णिं गृह्णतः लब्धलाभापगमने लाभं प्राप्य प्रत्यागमने यः मध्यमं मित्रात् वियोजयति वियुक्तं करोति, अमित्रं च मित्रम् आप्नोति शत्रुं च संधाय मित्रीकरोति, सः अतिसंधत्ते । शत्रुर्नाम कथं संधातुं योग्य इत्याशङ्कां परिहर्तुमाह— संधेयश्चेत्यादि । शत्रुरप्युपकुर्वाणः संधातुं योग्यो भवति, न तु मित्रमपि मित्रभावादपेतमनुपकुर्वाणमपकुर्वाणं वेत्यर्थः । श्रीमूला.

**तेनोदासीनलिप्सा व्याख्याता ॥**

मध्यमलिप्सोक्तं न्यायमुदासीनलिप्सायामतिदिशति— तेनोदासीनेत्यादि । श्रीमूला.

**'पार्ष्णिग्रहणाभियानयोस्तु मन्त्रयुद्धादभ्युच्चयः । व्यायामयुद्धे हि क्षयव्ययाभ्यामुभयोरवृद्धिः । जित्वाऽपि हि क्षीणदण्डकोशः पराजितो भवति' इत्याचार्याः ॥**

अथ पार्ष्णिग्रहेणाभियात्रा चानुष्ठातव्ये युद्धे विशेषमाचार्यमतेनाऽऽह— पार्ष्णिग्रहणाभियानयोस्त्विति । पार्ष्णिग्रहणे अभियाने च अध्यवसितयोः मन्त्रयुद्धादभ्युच्चयः । युद्धं हि सामान्यतो द्विविधम्— युद्धरङ्गं प्रविश्य शस्त्रादिप्रयोगेण शत्रुहिंसनमित्येकं व्यायामयुद्धाख्यम्, युद्धरङ्गमप्रविश्यैव सत्रिरसदतीक्ष्णादिगूढपुरुषप्रयोगेण शत्रुहिंसनमिति द्वितीयं मन्त्रयुद्धाख्यम् । तत्र मन्त्रयुद्धानुष्ठानात् वृद्धिर्भवतीत्यर्थः । व्यायामयुद्धानुष्ठाने योद्धभियोद्धव्ययोर्द्वयोरपि युग्यपुरुषापचयधनव्ययाभ्यामवृद्धिः जयप्राप्तस्यापि क्षीणदण्डकोशतया पराजितप्रायत्वं च भवतीत्याह— व्यायामयुद्धे हीत्यादि । श्रीमूला.

**नेति कौटल्यः । सुमहताऽपि क्षयव्ययेन शत्रुविनाशोऽभ्युपगन्तव्यः ॥**

स्वमतमाह— नेति कौटल्य इत्यादि । एवं च शत्रुविनाशरूपमहाफलसिद्धिहेतुत्वात् व्यायामयुद्धस्याप्युपादेयत्वमविशिष्टमित्यभिप्रायः । श्रीमूला.

**तुल्ये क्षयव्यये यः पुरस्ताद्दूष्यबलं घातयित्वा निःशल्यः पश्चाद्वश्यबलो युध्येत, सोऽतिसंधत्ते ॥**

व्यायामयुद्धेऽपि विशेषमाह— तुल्ये क्षयव्यय इति । योद्धृप्रतियोद्ध्रोः क्षयव्यये समानेऽपि यः पुरस्तात् दूष्यबलं राज्योपघातकबलं घातयित्वा राज्योपघातकबलं

स्वव्यूहाग्रनिवेशनेन प्रतिबलकर्तृकवधगोचरतां पूर्वं नीत्वे-त्यर्थः, अत एव निःशल्यः पश्चात् वश्यबलः त्रिविध-वश्यसैन्ययुक्तः युध्येत सः अतिसंधत्ते विशेषलाभं भजते। अपरिहार्ये स्वबलक्षये दूष्यबलक्षयाधिक्यघटनपूर्वं वश्य-बलक्षयाल्पत्वापादनमिह विशेषलाभः। श्रीमूला.

**द्वयोरपि पुरस्ताद्दूष्यबलघातिनोर्यो बहुल-तरं शक्तिमत्तरमत्यन्तदूष्यं च घातयेत्, सोऽति-संधत्ते ॥**

पुरस्ताद्दूष्यबलघातयितृत्वे द्वयोः समाने यः परकी-यात् दूष्यबलात् संख्यातिशयेन शक्त्यतिशयेन दूष्यताति-शयेन च युक्तं दूष्यबलं घातयेत् सोऽतिसंधत्ते इत्याह— द्वयोरपीत्यादि। श्रीमूला.

**तेनामित्राटवीबलघातो व्याख्यातः ॥**

दूष्यबलघातनवत् अमित्रबलघातनमाटविकबलघातनं च पूर्वं कृत्वा पश्चात् वश्यबलो यो युध्येत सोऽप्यति-संधत्ते इतीममर्थमतिदेशभङ्ग्याऽऽह— तेनेत्यादि। श्रीमूला.

**पार्ष्णिग्राहोऽभियोक्ता वा यातव्यो वा यदा भवेत्।**
**विजिगीषुस्तदा तत्र नेत्रमेतत् समाचरेत् ॥**

विधिशेषं श्लोकैराह— पार्ष्णिग्राह इत्यादि। विजिगीषुः पार्ष्णिग्राहाभियोक्तृयातव्यावस्थासु नेतृकर्म वक्ष्यमाण-मनुतिष्ठेदिति प्रथमश्लोकार्थः। श्रीमूला.

**पार्ष्णिग्राहो भवेन्नेता शत्रोर्मित्राभियोगिनः।**
**विग्राह्य पूर्वमाक्रन्दं पार्ष्णिग्राहाभिसारिणा ॥**

तत्र पार्ष्णिग्राहावस्थायां नैत्रमाह— पार्ष्णिग्राहो भवे-दिति। नेता पार्ष्णिग्राहावस्थापन्नो विजिगीषुः मित्राभि-योगिनः शत्रोः स्वमित्रमभियुञ्जानस्य स्वामित्रस्य पार्ष्णि-ग्राहो भवेत् पार्ष्णिग्रहणमनुतिष्ठेत्। किं कृत्वा? आक्रन्दं शत्रोः पश्चान्मित्रं पार्ष्णिग्राहाभिसारिणा पार्ष्णिग्राहासारेण अर्थात् स्वमित्रेण सह पूर्वं विग्राह्य विग्रहार्थं योजयित्वा। श्रीमूला.

**आक्रन्देनाभियुञ्जानः पार्ष्णिग्राहं निवारयेत्।**
**तथाऽऽक्रन्दाभिसारेण पार्ष्णिग्राहाभिसारि-णम् ॥**

अभियोक्त्रवस्थायां नैत्रमाह— आक्रन्देनेति। अभि-युञ्जानः अभियोक्त्रवस्थापन्नः पार्ष्णिग्राहं स्वपृष्ठशत्रुम् आक्रन्देन स्वपृष्ठमित्रेण निवारयेत्। तथा पार्ष्णिग्राहाभि-सारिणं पार्ष्णिग्राहासारम् आक्रन्दाभिसारेण आक्रन्दा-सारेण निवारयेत्। श्रीमूला.

**अरिमित्रेण मित्रं च पुरस्तादवघट्टयेत्।**
**मित्रमित्रमरेश्चापि मित्रमित्रेण वारयेत् ॥**

एवं पृष्ठतोऽनुष्ठानमुक्त्वा पुरस्तादनुष्ठानमाह— अरि-मित्रेणेति। अभियुञ्जान इति वर्तते। सः पुरस्तात् मित्रं स्वीयम् अरिमित्रेण प्रत्यवस्थितेन अवघट्टयेच्च प्रतिघात-येच्च। अरेः मित्रमित्रं चापि मित्रमित्रेण स्वकीयेन वार-येत्। श्रीमूला.

**मित्रेण ग्राहयेत् पार्ष्णिमभियुक्तोऽभियोगिनः।**
**मित्रमित्रेण चाऽऽक्रन्दं पार्ष्णिग्राहान्निवारयेत् ॥**

अभियुक्तावस्थायामनुष्ठानमाह— मित्रेणेति। अभि-युक्तः अभियोगिनः अभियुञ्जानस्य पार्ष्णिं मित्रेण स्वस्य मित्रेण प्रयोज्यकर्त्रा ग्राहयेत्। आक्रन्दम् अभियोगिनः पृष्ठमित्रं पार्ष्णिग्राहबाधनप्रवृत्तमित्यर्थः, मित्रमित्रेण अर्थात् पार्ष्णिग्राहासारेण प्रयोज्यकर्त्रा पार्ष्णिग्राहात् निवारयेत्। श्रीमूला.

**एवं मण्डलमात्मार्थं विजिगीषुर्निवेशयेत्।**
**पृष्ठतश्च पुरस्ताच्च मित्रप्रकृतिसंपदा ॥**

अनेन प्रकारेण विजिगीषुः मित्रप्रकृतिसंपदा मित्र-प्रकृतेर्या गुणसमृद्धिः पूर्वोक्ता तया, युक्तमिति शेषः, मण्डलं राजपरंपराम् आत्मार्थम् आत्मसाह्यार्थं पृष्ठतश्च पुरस्ताच्च निवेशयेत् स्थापयेत्। श्रीमूला.

**कृत्स्ने च मण्डले नित्यं दूतान् गूढांश्च वास-येत्।**
**मित्रभूतः सपत्नानां हत्वा हत्वा च संवृतः ॥**

सर्वस्मिन् आत्मार्थनिवेशिते मण्डले दूतान् गूढान् वासयेच्च। मण्डलप्रवृत्तिच्छलविज्ञानार्थं विजिगीषुरित्या-

र्थम् । किंच, सपत्नानां शत्रूणां मित्रभूतः मित्रतुल्यः मित्रभावं बहिरभिनयन् हत्वा हत्वा अर्थात् सपत्नान्, संवृतः गूढाकारेङ्गितः भवेत् । श्रीमूला.

**असंवृतस्य कार्याणि प्राप्तान्यपि विशेषतः ।**
**निःसंशयं विपद्यन्ते भिन्नप्लव इवोदधौ ॥**

असंवृतवृत्तेर्दोषमाह— असंवृतस्येति । संवरणरहितस्य कार्याणि क्रियाफलानि विशेषतः प्राप्तान्यपि अतिशयेनोपस्थितान्यपि निःसंशयं विपद्यन्ते नश्यन्ति । भिन्नप्लव इवोदधाविति । समुद्रे भिन्नतरणसाधनः पुरुष इव च असंवृतो विजिगीषुर्भवतीत्यर्थः । श्रीमूला.

यातव्यस्य अपचितशक्तीनां प्रपूरणविचारः

**'सामवायिकैरेवमभियुक्तो विजिगीषुर्यस्तेषां प्रधानस्तं ब्रूयात्— 'त्वया मे संधिः, इदं हिरण्यमहं च मित्रम्, द्विगुणा ते वृद्धिः, नार्हस्यात्मक्षयेण मित्रमुखानमित्रान् वर्धयितुम्, एते हि वृद्धास्त्वामेव परिभविष्यन्ति' ॥**

'हीनशक्तिपूरणम्' इति सूत्रम् । अपचितानां शक्तीनां वर्धनमभिधीयते इति सूत्रार्थः । यातव्यावस्थापन्नस्य एकेनाभियुज्यमानतायामनुष्ठानप्रकारः 'मित्रेण ग्राहयेत् पार्ष्णिम्' इत्यादिना पूर्वमुक्तः । तस्य बहुभिरभियुज्यमानतायामनुष्ठानप्रकारः संप्रत्यभिधीयते ।

सामवायिकैरित्यादि । अयमर्थः— यथैकेन तथा संभूयाभियोगिभिर्बहुभिः अभियुक्तो विजिगीषुरभियोगं प्रतिविधातुमशक्तः स्वशक्तिं वर्धयितुकामः सामवायिकानां प्रधानं ब्रूयात्— 'त्वया मे संधिः' इति । एतच्च प्रधानस्य धर्मविक्षित्वे । तस्य लुब्धत्वे तु 'इदं ते हिरण्यं ददामि अहं च ते मित्रविशेषो भवामि विपत्समये त्वया रक्ष्यमाणः । सैषा तेऽभियोक्तृदीयमानहिरण्यापेक्षया हिरण्यद्वैगुण्यात् आपद्गतमित्रलाभाच्च गुणद्वयवती वृद्धिः' इति ब्रूयात् । इदं वचनमनभ्युपगच्छन्तं पुनर्ब्रूयात्— 'आत्मनो योग्यपुरुषापचयधनव्ययाभ्युपगमेन शत्रून् वाङ्मात्रमित्रताभिनयवतो वृद्ध्या योजयितुं नार्हसि । एते हि सामवायिकास्त्वत्साह्येन मामुच्छिद्य प्राप्तवृद्धयो भूत्वा त्वामेवावशास्यन्ति' इति । श्रीमूला.

**भेदं वा ब्रूयात्— 'अनपकारो यथाऽहमेतैः संभूयाभियुक्तस्तथा त्वामप्येते संहितबलाः स्वस्था व्यसने वाऽभियोक्ष्यन्ते । बलं हि चित्तं विकरोति । तदेषां विघातय' इति ॥**

सान्त्वप्रयोगमीदृशमनङ्गीकुर्वाणे तस्मिन् भेदं प्रयुञ्जीतेत्याह— भेदं वा ब्रूयादिति । किमिति ब्रूयात् ? 'अनपकारः अपराधरहितः यथा अहम् एतैः संभूय अभियुक्तः तथा त्वामपि एते स्वस्थाः संहितबलाः मदभियोगसंरम्भोत्तरणानन्तरं सज्जितबलाः, भूत्वेति शेषः, व्यसने वा त्वद्व्यसनावसरं प्रतीक्ष्य वा अभियोक्ष्यन्ते । कुतः ? हि यतः बलम्, उपचितमिति शेषः, चित्तं विकरोति दर्पयति । तत् बलम् एषां विघातय विघटय' इति । श्रीमूला.

**भिन्नेषु प्रधानमुपगृह्य हीनेषु विक्रमयेत् । हीनाननुग्राह्य वा प्रधाने । यथा वा श्रेयोऽभिमन्येत तथा । वैरं वा परैर्ग्राहयित्वा विसंवादयेत् ॥**

उक्तभेदवचनप्राप्तप्रधानविघटनेषु हीनेषु प्रधानम् उपगृह्य स्वीकृत्य विक्रमयेत् विक्रमं प्रयुञ्जीत । हीनान् अनुग्राह्य वा प्रधान इति । उक्तसामादिप्रयोगेण सामवायिकान् हीनान् स्ववशं नीत्वा वा प्रधाने विक्रमयेत् । हीनप्रधानविक्रमणयोश्चायं विकल्पोऽन्यतरश्रेयस्त्वनिर्धारणपूर्वमनुष्ठेय इत्याह— यथा वा श्रेयोऽभिमन्येत तथेति । विक्रमणस्यायुक्तत्वानुसंधाने त्वाह— वैरं वेत्यादि । एकैकस्यान्यैर्विरोधमुत्पाद्य वा सामवायिकान् विघटयेत् । श्रीमूला.

**फलभूयस्त्वेन वा प्रधानमुपजाप्य संधिं कारयेत् । अथोभयवेतनाः फलभूयस्त्वं दर्शयन्तः सामवायिकान् 'अतिसंहिताः स्थ' इत्युद्दूषयेयुः । दुष्टेषु संधिं दूषयेत् । अथोभयवेतना भूयो भेदमेषां कुर्युः— 'एवं तद् यदस्माभिर्दर्शितम्' इति । भिन्नेष्वन्यतमोपग्रहेण वा चेष्टेत ॥**

(१) कौ. ७।१४.

बहुतरधनदानप्रतिश्रवेण वा प्रधानम् उपजाप्य भेदयित्वा संधिं कारयेत् । अर्थात् प्रधानमुखेनान्यैः सह । अथेति । संधिकरणानन्तरम् उभयवेतनाः विजिगीषुपक्ष्याः सामवायिकास्तभावाभिनयिनः फलभूयस्त्वं दर्शयन्तः प्रधानस्यान्यापेक्षया बहुतरधनलाभपणनमुपपादयन्तः सामवायिकान् 'अतिसंहिताः स्थ— प्रधानेन यूयं वञ्चिता भवथ' इति, उक्त्वेति शेषः, उद्दूषयेयुः प्रधानकारितात् संधेर्विश्लेषयेयुः । दुष्टेषु एवं संधिविश्लिष्टेषु समवायिषु संधिं दूषयेत् 'समवायिविसंवाददुष्टः' इत्युक्त्वा व्यभिचरेत् विजिगीषुः । प्रधानाय न किमपि धनं दद्यादित्यर्थः । अथ संधिदूषणानन्तरम् उभयवेतनाः एषां भेदं समवायिनां प्रधानात् भेदनं भूयः कुर्युः पूर्वकृतभेददार्ढ्यार्थम् । कथमित्याह— एवं तदिति । यदस्माभिर्दर्शितं प्रधानस्य फलभूयस्त्वं यत् पूर्वमवदाम तत् एवम् अनेन प्रकारेण कृतसंधिदूषणलक्षणेन, व्यक्तमिति शेषः । अयं भावः— स्वाभीप्सितभूयःफलालाभात् प्रधानेन पुनरपि युष्मत्समवायमासाद्य चेष्टितुकामेनेदं संधिदूषणमुत्पादितमिति । भिन्नेष्विति । उक्तोपायवशात् भेदं प्राप्तेषु सामवायिकेषु मध्ये अन्यतमोपग्रहेण वा चेष्टेत अन्यतमं पक्षं स्वानुकूलीकृत्य तत्सहायो वा तदन्यं पक्षमभियुञ्जीत । श्रीमूला.

**प्रधानाभावे सामवायिकानामुत्साहयितारं स्थिरकर्माणमनुरक्तप्रकृतिं लोभाद्भयाद्वा संघातमुपगतं विजिगीषोर्भीतं राज्यप्रतिसंबन्धं मित्रं चलामित्रं वा पूर्वानुत्तराभावे साधयेत् ॥**

सोऽयं सामवायिकेषु प्रधानसत्त्वेऽनुष्ठानक्रमः । प्रधानाभावे तमाह— प्रधानाभाव इति । प्रधानस्य कस्यचिदभावे सति सामवायिकानां मध्ये उत्साहयितारम्, स्थिरकर्माणं शत्रूच्छेदपर्यन्तानुवर्तिसमुद्यमम्, अनुरक्तप्रकृतिम्, लोभात् संघातं समवायम् उपगतम्, भयाद्वा समवायप्रकोपभयाद्वा संघातमुपगतम्, विजिगीषोः भीत्वा वा सङ्घातमुपगतम्, राज्यप्रतिसंबन्धं राज्यसंबन्धिनं मित्रम् आत्ममित्रमेव सामवायिकसङ्गतं चलामित्रं वा साधयेत् स्ववशं नयेत् । तत्र क्रममाह— पूर्वानुत्तराभाव इति । एषु नवसु मध्ये उत्तरोत्तराभावे पूर्वपूर्वान् साधयेत् । यथा— उत्साहयितृस्थिरकर्मणोः स्थिरकर्माभावे उत्साहयितारं साधयेत्, स्थिरकर्मसत्त्वे तमेव साधयेत् । स्थिरकर्मा ह्यनुच्छेद्य यातव्यं न विरमति । उत्साहयिता तु यातव्यसाधनमात्रेण विरमतीत्युत्साहयितृसाधनात् अधिकप्रयोजनं स्थिरकर्मसाधनं भवतीति । एवमन्यदप्यूहनीयम् । 'पूर्वान्यतराभावे' इति तु अपपाठो द्रष्टव्यः । श्रीमूला.

**उत्साहयितारमात्मनिसर्गेण, स्थिरकर्माणं सान्त्वप्रणिपातेन, अनुरक्तप्रकृतिं कन्यादानयापनाभ्याम्, लुब्धमंशद्वैगुण्येन, भीतमेभ्यः कोशदण्डानुग्रहेण, स्वतो भीतं विश्वासयेत् प्रतिभूप्रदानेन, राज्यप्रतिसंबन्धमेकीभावोपगमनेन, मित्रमुभयतः प्रियहिताभ्यामुपकारत्यागेन वा, चलामित्रमवधृतमनपकारोपकाराभ्याम् ॥**

तेषां साधनप्रकारमाह— उत्साहयितारमिति । तम् आत्मनिसर्गेण 'अयमहं सामात्यः सपुत्रः सधनस्त्वय्यायत्तः, यथेच्छसि तथा मां करणीये नियोजय, मा मामुच्छेत्सीः' इत्युक्त्वा आत्मसमर्पणेन । साधयेदिति वर्तते । उत्साहयिता हि शौर्यप्रधानत्वादित्थमभिधीयमानः सुसाधो भवतीति । स्थिरकर्माणं सान्त्वप्रणिपातेन 'जितोऽस्मि भवता सर्वगुणोत्कृष्टेन रक्षणीयः' इत्यनुनयपुरःसरेण प्रणामेन साधयेत् । स ह्येवमुच्यमानो मानोन्नतत्वात् साध्यो भवतीति । अनुरक्तप्रकृतिं कन्यादानयापनाभ्यां कन्याया आदानयापनाभ्याम्— आदानं स्वीकरणम्, यापनं प्रस्थापनम् अर्थात् दानम्, ताभ्यामित्यर्थः, साधयेत् । स हि 'त्वत्संबन्धाभिलाषिणं त्वदनुरक्तं मां माऽभियुङ्क्ष्व' इत्येवं न्याय्यमभिधीयमानः प्रकृतिविरागशङ्की साध्यो भवतीति । लुब्धं धनगृध्नुम् अंशद्वैगुण्येन परपरिपणितार्थद्विगुणार्थदानेन साधयेत् । एभ्यो भीतं सामवायिकेभ्यो भीत्वा तत्संगतं कोशदण्डानुग्रहेण धनसैन्यदानेन साधयेत् । स हि 'मा परेभ्यो भैषीः, अहं ते कोशदण्डाभ्यां साहाय्यं करोमि' इत्युक्त्वा साध्यो भवतीति । स्वतो भीतम् आत्मनः

सकाशात् भीतं प्रतिभूप्रदानेन विश्वासयेत् 'अहं न ते किंचिदपकुर्याम्, अस्मिन्नर्थेऽयं चासौ च प्रतिभूः' इत्युक्त्वा साधयेत् । राज्यप्रतिसंबन्धम् एकीभावोपगमनेन 'त्वं चाहं चैकीभावमुपगतौ, मम परिभवस्तवापि खलु परिभवः, न युक्तं ते परेष्वनुप्रविश्य मामभियोक्तुम्' इति कथनेन साधयेत् । मित्रम् उभयतः प्रियहिताभ्यां 'समानसुखदुःखौ खल्वावाम्' इत्याद्युभयप्रियहितवचनेन, उपकारत्यागेन वा 'यस्त्वया मह्यं देयः करो ऽवस्थितः तमद्यप्रभृति न मे दातुमर्हसि' इत्युक्त्वा कॢप्तकरमोक्षणेन वा साधयेत् । चलामित्रम् अनपकारोपकाराभ्याम् अवधृतम् 'अपकारं ते न करिष्यामि, उपकारं च करिष्यामि' इत्यनपकारोपकारप्रतिश्रवाभ्याम् अवधृतिमन्तं विश्वासितम्, कृत्वेति शेषः, साधयेत् ।

श्रीमूला.

**यो वा यथायोगं भजेत तं तथा साधयेत् । सामदानभेददण्डैर्वा यथाऽऽपत्सु व्याख्यास्यामः ॥**

यः सामवायिकः यथा येन प्रकारेण अयोगं समवायिभ्यो विश्लेषं भजेत तं तथा तेन प्रकारेण साधयेत् । सामेत्यादि । सामदानभेददण्डैर्वा उपायैः साधयेत् परं स्वायत्तीकुर्यात् । कथम्? यथा आपत्सु व्याख्यास्यामः अभियास्यत्कर्माधिकरणे आपत्प्रकरणे ( कौ. ९।५–७ ) वक्ष्यामस्तथा ।

श्रीमूला.

**व्यसनोपघातत्वरितो वा कोशदण्डाभ्यां देशे काले कार्ये वाऽवधृतं संधिमुपेयात् । कृतसंधिर्हीनमात्मानं प्रतिकुर्वीत ॥**

अथवा आत्मनो व्यसनमुपहन्तुं कालविलम्बमक्षममाणः 'अमुष्मिन् देशे काले कार्ये वा कोशदण्डाभ्यां साहाय्यमनुष्ठेयम्' इत्येवं शपथादिना निश्चितं संधिं सामवायिकैः सह विदध्यात् । कृतसंधिश्चैवमात्मानं हीनशक्तिं शक्त्या आप्याययेत् ।

श्रीमूला.

**पक्षे हीनो बन्धुमित्रपक्षं कुर्वीत, दुर्गमविषह्यं वा । दुर्गमित्रप्रतिस्तब्धो हि स्वेषां परेषां च पूज्यो भवति ॥**

शक्त्युपचयस्य पक्षमूलत्वात् पक्षमाह– पक्ष इति । पक्षः सहायः, तद्विषये हीनः बन्धुमित्रपक्षं बन्धुमित्रलक्षणं पक्षं कुर्वीत । अविषह्यं परैरलङ्घ्यं दुर्गं वा कुर्वीत । तत्र हेतुमाह– हि यतः दुर्गमित्रप्रतिस्तब्धः दुर्गमित्राभ्यां प्रतिबद्धः स्वेषां स्वपक्ष्याणां परेषां परपक्ष्याणां च पूज्यो भवति ।

श्रीमूला.

**मन्त्रशक्तिहीनः प्राज्ञपुरुषोपचयं विद्यावृद्धसंयोगं वा कुर्वीत । तथाहि सद्यः श्रेयः प्राप्नोति ॥**

मन्त्रप्रभूत्साहशक्तिषु मध्ये मन्त्रशक्तिपूरणप्रकारमाह– मन्त्रशक्तिहीन इति । मन्त्रशक्तिः प्रज्ञाबलम्, तद्धीनः प्राज्ञपुरुषोपचयं कुर्वीत प्राज्ञान् पुरुषान् तत्तदधिकारस्थानेषु बाहुल्येन नियुञ्जीत । विद्यावृद्धसंयोगं वा कुर्वीत राज्यतन्त्रनिष्णातेभ्यो वा नीतिं शृणुयादित्यर्थः । तथाहि तेन प्रकारेण करणे हि सद्यः श्रेयः प्राप्नोति ।

श्रीमूला.

**प्रभावहीनः प्रकृतियोगक्षेमसिद्धौ यतेत । जनपदः सर्वकर्मणां योनिः, ततः प्रभावः ॥**

प्रभुशक्तिपूरणमाह– प्रभावहीन इति । प्रभावः कोशदण्डोत्पत्तिः, तद्धीनः प्रकृतियोगक्षेमसिद्धौ यतेत । प्रकृतिषु मध्ये जनपदः प्राधान्येन चिन्तनीययोगक्षेम इत्यभिप्रायेणाऽऽह– जनपद इति । सः सर्वकर्मणां दुर्गादीनां सर्वेषां कर्मणां योनिः कारणम् । अतश्च स प्रधान इत्यर्थः । ततः प्रभावः सर्वकर्मभ्यः कोशदण्डोत्पत्तिः । तथा च प्रभावकामो दुर्गादिकर्मणां योगक्षेमसिद्धौ यतेतेति भावः ।

श्रीमूला.

**तस्य स्थानमात्मनश्चाऽऽपदि दुर्गम् ॥**

तेषु दुर्गस्य प्रयोजनमाह– तस्येति । दुर्गं तस्य प्रभावस्य स्थानं निवासः, आत्मनश्च आपदि स्थानं रक्षादेशः भवति ।

श्रीमूला.

**सेतुबन्धः सस्यानां योनिः। नित्यानुषक्तो हि वर्षगुणलाभः सेतुवापेषु ॥**

सेतुबन्धस्य प्रयोजनमाह— सेतुबन्ध इति । सः सस्यानां योनिः । कुतः ? हि यतः सेतुवापेषु सेतुबन्धावरुद्धजलपायनपोष्येषु त्रैहेयशालेयादिक्षेत्रेषु वर्षगुणलाभः वृष्टिसाध्यसस्यफलाधिगमः नित्यानुषक्तः नित्यानुवृत्तः भवति । श्रीमूला.

**वणिक्पथः परातिसंधानस्य योनिः । वणिक्पथेन हि दण्डगूढपुरुषातिनयनं शस्त्रावरणयानवाहनक्रयश्च क्रियते । प्रवेशो निर्नयनं च ॥**

वणिक्पथस्याऽऽह— वणिक्पथ इति । सः परातिसंधानस्य शत्रुवञ्चनस्य योनिः । तदुपपादयति— वणिक्पथेन हीति । तेन दण्डगूढपुरुषातिनयनं सैन्यानां गूढपुरुषाणां च सत्रितीक्ष्णादीनां शत्रुविषयप्रापणं शस्त्रावरणयानवाहनक्रयश्च शस्त्रादिविषयः क्रयविक्रयव्यवहारश्च क्रियते । प्रवेशो निर्नयनं च परदेशपण्यस्य स्वदेशे प्रवेशनं स्वदेशपण्यस्य परदेशनयनं च क्रियते । श्रीमूला.

**खनिः संग्रामोपकरणानां योनिः ॥**

खनेराह— खनिरिति । सा संग्रामोपकरणानां खड्गादीनां योनिः तन्निर्माणापेक्षितलोहाद्युत्पादनद्वारेण कारणम् । श्रीमूला.

**द्रव्यवनं दुर्गकर्मणां यानरथयोश्च ॥**

द्रव्यवनस्याऽऽह— द्रव्यवनमिति । सारदार्वादिवनं दुर्गकर्मणां गोपुराट्टालकादीनां यानरथयोश्च । योनिरिति वर्तते । श्रीमूला.

**हस्तिवनं हस्तिनाम् ॥**

योनिरित्यनुवर्तते । श्रीमूला.

**गवाश्वखरोष्ट्राणां च व्रजः ॥**

गवाश्वखरोष्ट्राणां चेति । तेषां व्रजः गोष्ठः । योनिरित्येव । श्रीमूला.

**तेषामलाभे बन्धुमित्रकुलेभ्यः समार्जनम् ॥**

उक्तानाम् अलाभे स्वीयत्वेनाप्राप्तौ बन्धुमित्रकुलेभ्यः समार्जनं संग्रहणम् । कर्तव्यमिति शेषः । श्रीमूला.

**उत्साहहीनः श्रेणीप्रवीरपुरुषाणां चोरगणाटविकम्लेच्छजातीनां परापकारिणां गूढपुरुषाणां च यथालाभमुपचयं कुर्वीत ॥**

उत्साहशक्तिपूरणमाह— उत्साहहीन इति । सः श्रेणीप्रवीरपुरुषाणां श्रेण्यन्तर्गतपुरुषाणां शूरपुरुषाणां च, चोरगणाटविकम्लेच्छजातीनां चोरगणानाम् अटवीभवानां म्लेच्छजातीनां च, परापकारिणां शत्र्वपकरणशीलानाम्, गूढपुरुषाणां च सत्रिप्रभृतीनां च यथालाभं लाभानुसारेण उपचयम् उत्साहशक्तिपूरणं कुर्वीत । श्रीमूला.

**परमिश्रः प्रतीकारमाबलीयसं वा परेषु प्रयुञ्जीत ॥**

शक्तेरुपचेतुमशक्यतायामाह— परमिश्र इति । परेण शत्रुणा संधिकरणेन संगतः सन् । 'परमित्रः' इति पाठे संधिना मित्रीकृतशत्रुः सन्नित्यर्थः । प्रतीकारमाबलीयसं वा आबलीयसाधिकरणे ( कौ. १२ ) वक्ष्यमाणं प्रतिविधिं वा परेषु प्रयुञ्जीत । श्रीमूला.

**एवं पक्षेण मन्त्रेण द्रव्येण च बलेन च ।**
**संपन्नः प्रतिनिर्गच्छेत् परावग्रहमात्मनः ॥**

उक्तेन प्रकारेण पक्षेण बन्धुमित्रलक्षणेन, मन्त्रेण विद्यावृद्धसंयोगादिना, द्रव्येण च दुर्गसेतुबन्धवणिक्पथाद्युत्पन्नेन, बलेन च श्रेणीप्रवीरपुरुषचोरगणादिरूपेण संपन्नः पूरितशक्तिः विजिगीषुः आत्मनः परावग्रहं प्रतिनिर्गच्छेत् शत्र्वभियोगं प्रतिकुर्यात् । श्रीमूला.

## मनुः

### यानद्वैविध्यम्

**(१)एकाकिनश्चाऽऽत्ययिके कार्ये प्राप्ते यदृच्छया ।**
**संहतस्य च मित्रेण द्विविधं यानमुच्यते ॥**

एकाकिनः मित्रेण वा संहतस्य यानम् इति द्वैविध्यं यानस्य । सत्यां शक्तौ एकाकिनः, अन्यथा संहतस्य । आत्ययिकं कार्यं परस्य व्यसनोत्पत्तिः । तदा

(१) मस्मृ. ७।१६५ ; राक. ११२ कार्ये (काले) यदृच्छया (यथेच्छया) ; राप्र. ३२६.

ह्यभिगमनीयतमो भवति । परतः कदाचिल्लब्धोच्छ्रयो दुरुच्छेद्यः । * मेधा.

(२) एकाकिनः इत्येकयात्रा, मित्रसंहतस्येत्यपरा । सा द्विविधाऽपि स्वस्य आत्ययिके तत्कालप्रतीकारे अनर्थहेतुं कार्यमाकलय्य भवति । यद्वा आत्मनो बलवत्तामात्रमवेक्ष्य यदृच्छयेति । † मवि.

(३) आत्ययिकं कार्यं शत्रोर्व्यसनादिकम्, तस्मिन्नकस्माज्जाते शक्तस्यैकाकिनो यानम् अशक्तस्य मित्रसहितस्येत्येवं यानं द्विविधमभिधीयते । § ममु.

युद्धानुकूला बलगुणाः

[१]यदा मन्येत भावेन हृष्टं पुष्टं बलं स्वकम् ।
परस्य विपरीतं च तदा यायाद्रिपुं प्रति ॥

(१) भावः हर्षपोषकारणम् । बहुना धनेन संविभक्तता कृष्यादिकर्माणि फलितान्येषामित्यादि हर्षपोषयोः कारणम् । बलं हस्त्यश्वरथपादातम् । परस्य यदा विपरीतं तदा शत्रुं प्रति यायात् अभिषेणयेच्छत्रुमित्यर्थः । न विग्रहकारणान्येव यानकारणानि, किं तर्हि ? तान्यपि अपचयश्च हर्षपोषयोः परस्य प्रकृतीनाम् । ‡ मेधा.

(२) यदा स्वकम् अमात्यादिसैन्यं परितुष्टं धनादिना च पुष्टं परमार्थेन जानीयात्, शत्रोश्च विपरीतम्, तदा तस्योपरि यायात् । ¶ गोरा.

(३) भावेन मनसा । हृष्टं पुष्टं यात्रोचितसहायादिपुष्टियुक्तम् । मवि.

(४) यानस्य कालमाह– यदा मन्येतेति । भावेन हर्षपोषादिहेतुना धनेन हृष्टं हर्षितम् अत्युत्साहयुक्तम्, मांसौदनादिना पुष्टम् । स्वकमिति विशेषणात् परस्य शत्रोः विपरीतम्, पश्येदिति शेषः । यायात् यानं कुर्यात् । मच.

संधिपूर्वकं यानम्

[१]सह वाऽपि व्रजेद्युक्तः संधिं कृत्वा प्रयत्नतः ।
मित्रं हिरण्यं भूमिं वा संपश्यंस्त्रिविधं फलम् ॥

(१) एवं यातव्येन सह युद्धं कार्यम् । यदि वा स एव मित्रं हिरण्यं वा तेन दत्तं भूम्येकदेशो वा त्यक्तः इत्येवं यात्राफलं मत्वा तेन सह संधिं कृत्वा यत्नवान् व्रजेत् । * गोरा.

(२) यदि युद्धं विनाऽपि हिरण्यादि लभ्येत तदा युक्तः उद्युक्तोऽपि सह शत्रुणा संधिं कृत्वा स्वदेशं व्रजेत् । ‡ मवि.

(३) प्रसिद्धोपक्रमे यदि प्रमत्तोऽरिस्तदा संधिरेव श्रेयानित्याह– सहेति । संधिं कृत्वा, मित्रतामुत्पादयेदिति शेषः । भूमिं भूम्येकदेशम् । फलम्, यात्राया इति शेषः । मच.

(४) यातव्यः शत्रुः यदि युद्धं करोति तदा तं हत्वा जित्वा वा तत्पदे तद्वंश्यमभिषिञ्चेत् इत्युक्तम् । यदि च स विजिगीषुं प्रबलं निर्णीय युद्धोपस्थितावपि संधिं करोति तदा 'पुष्पैरपि न योद्धव्यं किं पुनर्निशितैः शरैः ।' इति महाभारतोक्तेः अवश्यं संधिरेव कार्यः, न पुनर्विग्रहः । तदुक्तं मनुना– सह वाऽपीति । वा शब्दः पूर्वोक्तयुद्धविकल्पार्थः । प्रयत्नतो युक्तः यातव्येन प्रयत्नेन दूतप्रेषणादिना युक्तः योगं प्राप्तः सन् सह तेन शत्रुणा सह मित्रं हिरण्यं भूमिं वा त्रिविधं यत्फलं तत् संपश्यन् समीचीनमिति जानानः तदन्यतरलाभे संधिं कृत्वा व्रजेत् स्वपुरं यायात् । राप्र. ४१२

(५) मित्रहिरण्यभूमिलाभे संधिः कर्तव्यः, न शत्रुवधे निर्बन्ध इत्याह– सह वाऽपि व्रजेदिति । संधौ

* गोरा. मेधागतम् ।
† भाच. मविगतं ममुगतं च ।
§ राप्र., मच., नन्द. ममुगतम् ।
‡ भाच. मेधागतम् ।
¶ ममु. गोरावत् ।

(१) मस्मृ. ७।१७१ ; राक. ११२ ; रार. ५७ ; राप्र. ३२७ बलं स्वकम् ( स्वकं बलम् ) द्रिपुं ( दरीन् ).

* ममु. गोरागतम् ।
‡ भाच. गोरागतं मविगतं च ।

(१) मस्मृ. ७।२०६ ; गोरा. युक्तः ( यस्तु ) ; राक. १४२ ; राप्र. ४१२.

कृते ममायं शत्रुरन्यो वा मित्रं भवेत् हिरण्यं भूमिं वा अस्मात् सोऽत्र( ? लभेय ) इति त्रिविधं फलं संपश्यन् निश्चिन्वानस्तदात्वानुगुण्येन युक्तः प्रयत्नतः शत्रुणा संधिं कृत्वा व्रजेत् स्वराष्ट्रं प्रत्याव्रजेत् । नन्द.

**'पार्ष्णिग्राहं च संप्रेक्ष्य तथाऽऽक्रन्दं च मण्डले ।**
**मित्रादथाप्यमित्राद्वा यात्राफलमवाप्नुयात् ॥**

( १ ) विजिगीषोररिं प्रति निर्यातस्य यो देशाक्रमणाद्याचरति स पार्ष्णिग्राहः । तथा कुर्वतः पार्ष्णिग्राहस्य योऽङ्कुशस्थानीयः स आक्रन्दः । तावपेक्ष्य यातव्यात् मैत्रीभूतादमित्राद्वा फलं गृह्णीयात् । तावनपेक्ष्य गृह्णन् कदाचित् तद्रतेन दोषेण युज्यते । * गोरा.

( २ ) यदि पार्ष्णिं गृह्णीयात् पृष्ठगः तदा अन्येनापि निवर्तितव्यम् । तदाऽपि यदि स्वस्याऽऽक्रन्दस्तस्यापि पार्ष्णिं गृह्णीयात् तदा पूर्वमरेः पश्चान्मित्रतामापन्नाद्धनं प्राप्य, यद्वा अमित्राच्च स्वास्थितादेव प्राप्य निवर्तेतेत्यर्थः । मवि.

( ३ ) अयमर्थः– पार्ष्णिग्राहः अरिरेव, तत्पृष्ठगयोस्तु मित्रोदासीनत्वेन ग्रहणात् । यदि स च अरिश्च आक्रन्देन मित्रेण तत्पृष्ठगामिना अभिभूतः तदाऽरिं जित्वैवाऽऽगन्तव्यम् । अनभिभूतश्चेत् स तु अस्य विजिगीषो राज्यं नाशयतीति कृत्वा यातव्यारिमपि मित्रात् मित्रत्वेन संभाव्यमानादुपगम्य । पार्ष्णिग्राहासाराक्रन्दासारौ तु पार्श्वदेशवर्तिनौ राजानाविति । † मच.

( ४ ) मण्डले द्वादशारिमण्डले । पार्ष्णिग्राहम् । विजिगीषोः पुरतः स्थितो यातव्यः । पश्चात् स्थितः स्वशत्रुः स्वभूम्यनन्तरः पार्ष्णिग्राह इत्युच्यते, तम्, तथा तत्पश्चादवस्थितं तद्भूम्यनन्तरं स्वभिन्न( ? मित्र )माक्रन्दसंज्ञकं च संप्रेक्ष्य तद्बलाबलं ज्ञात्वेत्यर्थः, मित्रात् मित्रत्वं प्राप्तात् यातव्यात् अथवा अमित्रात् मैत्रीमकुर्वतो यातव्यात् अर्थाद्विजिगीषुः यात्रायाः फलं शत्रुजयं संधौ वा मित्रादित्रितयलाभान्यतरत् अवाप्नुयात् प्राप्नुयात् । * राप्र. ४१२

( ५ ) मित्रादिफलं प्राप्तव्यं तदाह– पार्ष्णिग्राहश्चेति । मण्डले द्वादशराजात्मके पार्ष्णिग्राहम् आक्रन्दं मित्राणि अमित्रांश्च संप्रेक्ष्य मण्डलस्थानां शत्रूणां क्षयं मित्राणां च वृद्धिं समीक्ष्येत्यर्थः, यात्राफलं मित्रभूमिहिरण्यम् अवाप्नुयात् । नन्द.

मित्रलाभः श्रेयान्

**'हिरण्यभूमिसंप्राप्त्या पार्थिवो न तथैधते ।**
**यथा मित्रं ध्रुवं लब्ध्वा कृशमप्यायतिक्षमम् ॥**

( १ ) हिरण्यभूमिलाभेन राजा तथा न वर्धते यथा संप्रति कृशमप्यागामिकाललब्धवृद्ध्याद्युपेतं स्थिरं मित्रं प्राप्य वर्धते । † गोरा.

( २ ) तत्र तु मित्रलाभे संभवति नात्यन्तं धने यतितव्यमित्याह– हिरण्येति । आयतिक्षमं भविष्यच्छक्ति । मवि.

( ३ ) अरेरेव मित्रत्वेन लाभे महान् गुण इति स्तौति– हिरण्येति द्वाभ्याम् । नैधते न हर्षमाप्नुयात् । कृशं तात्कालिकोपकारासमर्थम् । आयतिक्षमम् उदर्कोपकारकम् । तदुक्तम्– ' अधनं स्वर्णादिधनं धनमधनं च वाणिज्यम् । अतिधनमेतत्त्रितयं विद्या भूमिः सुमित्रमिति ॥ ' । मच.

**§'धर्मज्ञं च कृतज्ञं च तुष्टप्रकृति चैव यत् ।**
**अनुरक्तं स्थिरारम्भं लघु मित्रं प्रशस्यते ॥**

---

* ममु. गोरावत् ।

† शेषं गोरागतम् ।

( १ ) मस्मृ. ७।२०७ ; राक. १४२ ; राप्र. ४१२ ; नन्द. तृतीयचरणे ( मित्राण्यथाप्यमित्रांश्च ) इत्येवं पाठभेदः प्रतीयते.

* भाच. राप्रगतम् ।

† ममु. गोरावत् । नन्द., भाच. गोरागतम् ।

§ व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च ' प्रकृतयः– मित्रम् ' इति प्रकरणे ( पृ. १२९६ ) द्रष्टव्यः ।

( १ ) मस्मृ. ७।२०८ ; राक. ९६ ; रार. ४३ ; राप्र. २७७. ( २ ) मस्मृ. ७।२०९.

दुरुच्छेदस्य अरेः लक्षणानि

**¹प्राज्ञं कुलीनं शूरं च दक्षं दातारमेव च ।**
**कृतज्ञं धृतिमन्तं च कष्टमाहुररिं बुधाः ॥**

( १ ) प्राज्ञं महाकुलं विक्रान्तम् उत्साहयुक्तम् उदारम् उपकारस्य रक्षितारम् अर्थानर्थयोरेकरूपं शत्रुं दुरुच्छेदं विद्वांसः आहुः । अतस्तथाविधं यत्नतः संदध्यात् । * गोरा.

( २ ) तत्प्रतियोगितया अरेर्लक्षणमाह— प्राज्ञमिति । अत्र प्राज्ञं कृतमुपकारं स्मर्तृशीलम् । कुलीनं दुरभिमानिनम् । दक्षं सततोद्यमम् । दातारमित्यनेन दृष्टादृष्टजयहेतुता सूचिता । धृतिमन्तं सिद्ध्यसिध्द्योरेकरूपम् । कष्टं कष्टदम् । तेन तादृशारिणा संधिरेव कार्यः , दुरुच्छेद्यत्वादेवंविधस्येति भावः । † मच.

( ३ ) असाध्यमरिमाह— प्राज्ञमिति । राप्र. ३२३

( ४ ) शत्रोर्गुणान् मित्रीकरणाय मित्रप्रसङ्गादाह— प्राज्ञं कुलीनमिति । एवंविधं गुणवन्तमरिं कष्टमाहुः । दुर्जयमाहुरिति यावत् । तस्मात्तादृशमरिमपि मित्रं कुर्यादित्यभिप्रायः । नन्द.

इष्टस्य उदासीनस्य लक्षणानि

**²आर्यता पुरुषज्ञानं शौर्यं करुणवेदिता ।**
**स्थौललक्ष्यं च सततमुदासीनगुणोदयः ॥**

( १ ) पुरुषज्ञानं लोकज्ञानम् । पुरुषविशेषज्ञः अनुरूपम् उपकारी भवति । अनुवर्तते शूरः कार्यक्षमो भवति । कारुण्यगुणस्मयेन करुणावेदी दयालुमना लोभेन परिरक्षति । स्थूललक्षः प्रभूतस्याप्यर्थमेषां सर्वकालं क्षमते । मेधा.

( २ ) साधुत्वं पुरुषविशेषज्ञता शौर्यं दयालुत्वं सर्वदा च स्थूललक्षम् अर्थेषु सूक्ष्मदर्शित्वम् इष्यते । स्थूललक्षं सततमुदासीनगुणसामग्र्यम् । अत एवंविधमुदासीनमाश्रित्य उक्तलक्षणेनाप्यरिणा सह योद्धव्यम् । गोरा.

( ३ ) आर्यता अशठता । पुरुषज्ञानम् 'अयं योग्यः , अयं न' इति ज्ञानम् । करुणवेदिता करुणास्थानज्ञानम् । स्थौललक्ष्यं दातृत्वम् । एतेषु सत्स्वेवोदासीनता संभवति, अन्यथा कस्याप्यरिः कस्यापि मित्रमवश्यं स्यादित्यर्थः । * मवि.

( ४ ) स्थौललक्ष्यं बहुप्रदत्वम् । अत एव 'स्थु- र्वेदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे' इत्याभिधानिकाः । स्थौललक्ष्यम् अर्थेऽसूक्ष्मदर्शित्वमिति तु मेधातिथिगोविन्दराजयोः पदार्थकथनमनागमम् । † ममु.

( ५ ) उदासीनलक्षणमाह— आर्यतेति । मेधातिथिगोविन्दराजयोः सूक्ष्मदर्शित्वात् व्याख्या स्थूलवत् सूक्ष्मं लक्षयतीति । एतान्येव उदासीनगुणस्य उदयः प्रकटता तद्धेतवः । § मच.

( ६ ) उदासीनस्य च गुणान् मित्रीकरणार्थं मित्रप्रसङ्गादाह— आर्यता पुरुषज्ञानमिति । गुणोदयः गुणोत्कर्षः । गुणवन्तमुदासीनमपि मित्रीकुर्यादित्यभिप्रायः । नन्द.

## याज्ञवल्क्यः

युद्धानुकूला परराष्ट्रस्थितिः आत्मस्थितिश्च

**¹यदा सस्यगुणोपेतं परराष्ट्रं तदा व्रजेत् ।**
**परश्च हीन आत्मा च हृष्टवाहनपूरुषः ॥**

( १ ) मित्रानुरोधेन स्वेच्छया वा गच्छन् सांपरायिकेन विधिना— यदेति । गतार्थः श्लोकः । विश्व.

---

* मवि. गोरागतम् । ममु. गोरावत् ।

† भाच. मचगतम् ।

(१) मस्मृ. ७।२१० ; राक. १०७ पूर्वार्धे (प्राज्ञं कुलीनं दातारं शूरं दक्षं तथैव च ।) धृति (शक्ति) ; राप्र. ३२३ राकवत्.

(२) मस्मृ. ७।२११ ; गोरा. स्थौललक्ष्यं (स्थूललक्षं) ; राक. १०८ स्थौललक्ष्यं (स्थूललक्षः) ; राप्र. ३२३.

* भाच. मविवत् ।

† शेषं गोरागतम् ।

§ शेषं गोरागतं ममुगतं च ।

(१) यास्मृ. १।३४८ ; विश्व. १।३४४ ; मिता. ; अप. १।३४६–३४७ ; राक. ११५ तदा (परं) ; रार. ३५ सस्य (सम्यग्) पू. ; वीमि. ; भाच. ७।१७१.

(२) यानकालनाह— यदेति । यदा परराष्ट्रं सस्यैः व्रीह्यादिभिः गुणैश्च समजलेन्धनतृणादिभिः उपेतं संपन्नम्, शत्रुश्च हीनः बलादिभिः, आत्मा च हृष्टवाहनपूरुषः— वाहनानि हस्त्यश्वादीनि, तानि च पूरुषाश्च वाहनपूरुषाः, हृष्टा वाहनपूरुषाः यस्य स तथोक्तः, तदा परराष्ट्रमात्मसात्कर्तुं व्रजेत् । * मिता.

(३) संध्यादिकालान् स्फुटत्वादुपेक्ष्य यानकालमाह — यदेति । प्रथमचकारेण परमित्रस्य, द्वितीयचकारेण आत्ममित्रस्य समुच्चयः । † वीमि.

## बार्हस्पत्यसूत्रम्

समे शत्रौ यानम्

[१]बलादिषु च समं शत्रुं युद्धेन हन्यात् ॥

## बृहत्पराशरः

यानानुकूलपरराष्ट्रस्थितिः

[२]धान्येक्षुतृणतोयैश्च संपन्नं परमण्डलम् ।
हीनवाहनपुंस्त्वं तु मत्वैतत् प्रविशेन्नृपः ॥

## विष्णुधर्मोत्तरपुराणम्

यानलक्षणम्, हितकरं यानम्

[३]जिगीषोः शत्रुविषये यानं यात्रा विधीयते ॥

यानं स्वबलेन शत्रुं प्रति गमनम् । तदुक्तम्— जिगीषोरिति । राप्र. ३२४

[४]बहुक्षयव्ययायासं ‡तेषां यानं प्रकीर्तितम् ।
बहुलाभकरं यत्स्यात् तदा राम समाश्रयेत् ॥

‘बहुव्ययक्षयायासम्’ इत्यत्र समाहारद्वन्द्वेन नपुंसकतैकवद्भावौ । राप्र. ३२७

## अग्निपुराणम्

पञ्चविधं यानम्

[१]विगृह्य संधाय तथा संभूयाथ प्रसङ्गतः ।
उपेक्षया च निपुणैर्यानं पञ्चविधं स्मृतम् ॥

## कामन्दकीयनीतिसारः

युक्तयानलक्षणम्, पञ्चविधं यानम्

[२]उत्कृष्टबलवीर्यस्य विजिगीषोर्जयैषिणः ।
गुणानुरक्तप्रकृतेर्यात्रा यानमिति स्मृतम् ॥

(१) संधिविग्रहौ प्रधानगुणौ सर्गद्वयेनोपदिश्य इदानीमस्मिन् सर्गे यानासनद्वैधीभावसंश्रयविकल्पानाह । तत्र यानमधिकृत्याऽऽह— उत्कृष्टेत्यादि । बलं शक्तिदेशकालानाम्, वीर्यम् उत्साहः, तदुभयं परापेक्षया उत्कृष्टं यस्य तस्य । जयैषिणः, अन्यथा न यातव्यम्, जेतुमनिच्छतो यानासंभवात् । गुणानुरक्तप्रकृतेरिति । स्वामिगुणैः प्रकृतैः अनुरक्तामात्यादिप्रकृतेरित्यर्थः । यथा ह्युक्तम्— ‘गुणातिशययुक्तो यायात्’ (कौ. ७।१) इति । जम.

(२) सप्रपञ्चं विग्रहकल्पमभिधाय तदुपयोगितया मन्त्रविकल्पनामैकादशं सर्गमभिधित्सुः प्रथमं तावत् सप्रभेदं यानमाह— उत्कृष्टबलवीर्यस्येति । विजिगीषोः यथोक्तलक्षणस्य । जयैषिणः इत्यस्य विजिगीषोरित्यनेनैव प्राप्तेः पुनरुपादानं यानस्य जयैकोद्देश्यताप्रतिपादनार्थमिति । गुणानुरक्तप्रकृतेः राजनीतिवशीकृतमन्त्रिवर्गप्रजस्य । यात्रा गमनविशेषः । उनिसा.

[३]विगृह्य संधाय तथा संभूयाथ प्रसङ्गतः ।
उपेक्षा चेति निपुणैर्यानं पञ्चविधं स्मृतम् ॥

---

* अप. दीक. मितागतम् ।

† शेषं मितावत् ।

‡ तेषां षण्णां गुणानां मध्ये इत्यर्थः ।

(१) बासू. १।३०. (२) बृपसं. १२।२५.

(३) विध. २।१५०।३ ; अग्नि. २३४।१८ विधी (ऽभिधी) ; राप्र. ३२४ (=) अग्निवत् ; राकौ. २४४ अग्निवत्.

(४) विध. २।१५०।९ ; अग्नि. २३४।२४–२५ राम (राजा) यत्स्यात् (पश्चात्) ; राप्र. ३२७ क्षयव्यया (व्ययक्षया) यानं (राम) राम (यानं) व्यत्यासपठितौ श्लोकार्धौ ; राकौ. २४५ यत्स्यात् (च स्यात्).

(१) अग्नि. २४०।२६–२७.

(२) कानी. ११।१ ; नीम. ४५ रक्त (राग) उत्त.

(३) कानी. ११।२ ; नीम. ४५ क्षा चेति (क्षया च).

(१) तद्यानं पञ्चविधमाह— विगृह्येत्यादि । जम.

(२) यानभेदानाह— विगृह्य संधायेति । विगृह्ययानं संधाययानं संभूययानं प्रसङ्गयानम् उपेक्षायानं चेति यानं पञ्चविधम् । उनिसा.

**[१]विगृह्य याति हि यदा सर्वाञ्छत्रुगुणान् बली ।**
**विगृह्ययानं यानज्ञास्तदाचार्याः प्रचक्षते ॥**

(१) तानि यथाक्रमं श्लोकाष्टकेनाऽऽह— विगृह्य यातीति । गुणशब्देनात्र द्रव्यप्रकृतयो द्रष्टव्याः, तासामप्रधानत्वात् । स्वामिप्रकृतिरेव प्रधानम् । यदा पश्चात्स्थायिनः शत्रोः सर्वा द्रव्यप्रकृतीर्दाहविलोपादिना बलात् विगृह्य पुरस्ताच्छत्रुं याति तदा विगृह्ययानमित्येकः प्रकारः । जम.

(२) तानि क्रमेण विशिनष्टि— विगृह्य यातीति । युयुत्सूनाम् आभिगमिकादीनां शत्रूणामभिभवार्थं यानं प्रथमं विगृह्ययानमिति फलितार्थः । उनिसा.

**[२]अरिमित्राणि सर्वाणि स्वमित्रैः सर्वतो बलात् ।**
**विगृह्य वाऽरिगमनं विगृह्यगमनं स्मृतम् ॥**

(१) द्वितीयमाह— अरिमित्राणीति । अरेः यातव्यस्य मित्राणि । सर्वाणीति पुरस्तात् पश्चाच्च यानि स्थितानि । स्वमित्रैः पुरः पृष्ठतश्च स्थितैः करणभूतैः बलात् विगृह्य वेति संबन्धः । सर्वतः उभयसंपीडनेनेत्यर्थः । जम.

(२) द्वितीयमाह— अरेर्मित्राणीति । क्वचित् 'अतिमित्राणि सर्वाणि सुमित्रैः सर्वतो बलात्' इति पाठः । शत्रुमित्राणामभिभवार्थं यानं द्वितीयं विगृह्ययानमिति पर्यवसितोऽर्थः । उनिसा.

(१) कानी. ११।३ ; नीम. ४५ त्रुगुणान् बली (त्रोर्गणान् बलात्).

(२) कानी. ११।४ ; उनिसा. अरिमि (अरेर्मि) ; नीम. ४५ वाऽरिगमनं (चारिभिर्गन्तुं).

**[१]संधाय सार्धमरिभिश्चेष्टासंरोधकारिभिः ।**
**यदन्यत्र रिपौ यानं संधायगमनं हि तत् ॥**

**[२]संधायान्यत्र या यात्रा पार्ष्णिग्राहेण शत्रुणा ।**
**संधायगमनं प्रोक्तं तज्जिगीषोः फलार्थिनः ॥**

(१) संधाय पार्ष्णिग्राहेण शत्रुणेति संबन्धः । अन्यत्र या यात्रा पार्ष्णिग्राहमित्रे यत् गमनम् । फलार्थिन इति । 'मा मे दीर्घयात्रां गतस्य पार्ष्णिं ग्रहीष्यति' इत्येवं फलार्थिनः । जम.

(२) संधाययानमाह— संधायान्यत्रेति । अन्यत्र शत्र्वन्तरपराभवार्थायां यात्रायां पार्ष्णिग्राहेण पृष्ठवर्तिना शत्रुणा सह संधाय । यत् यानमिति शेषः । क्वचित्तु 'संधायान्यत्र यद्यानम्' इत्येव पाठः । एष एव पाठः सुसंगतः । संधायगमनं संधाययानम् । फलार्थिनः प्रस्तुतशत्र्वन्तरपराभवरूपफलमपेक्षमाणस्य । प्रबलशत्रुपराभवार्थं पृष्ठशत्रुणा सह संधाय यत् यानं तत् संधाययानमिति फलितोऽर्थः । उनिसा.

**[३]एकीभूय यदेकत्र सामन्तैः सामवायिकैः ।**
**शक्तिशौचयुतैर्यानं संभूयगमनं हि तत् ॥**

(१) यदा न शक्यमेकेन यातुम्, अवश्यं च यातव्यम्, तदा सामन्तैरेकीभूय यत् गमनं तत् संभूययानम् । एकत्रेति एकस्मिन् यातव्ये । सामवायिकैः समवायप्रयोजनैरेकमतिभिः । शक्तिशौचयुतैरिति । शक्तिमान् हि पार्ष्णिग्रहणे साहाय्या(?य्य)दाने च शक्तः, शुद्धश्च सिद्धौ च यथास्थितकारी भवति । इत्येकः प्रकारः । जम.

(२) संभूययानमाह— एकीभूयेति । एकीभूय ऐकमत्येन एकत्र एकस्मिन् यातव्ये सामन्तैः प्रान्तवर्ति-

(१) कानी. ११।४ इति श्लोकादूर्ध्वं त्रिवेन्द्रम्-पुस्तके प्रक्षिप्तः.

(२) कानी. ११।५ ; उनिसा. या यात्रा (यात्रायां) ; नीम. ४५.

(३) कानी. ११।६ ; नीम. ४५ यदे (यदै) सामवा (सांपरा) शौच (शौर्य).

भूपैः सामवायिकैः समवायेन प्रत्यंशग्रहेण वयन्ति ये तैः । 'शक्तिशौचहितैः' इति क्वचित्पाठः । उनिसा.

**[1]उभयारौ तु वा यानं द्वयोः प्रकृतिनाशने ।**
**संभूयगमनं प्रोक्तं हनूमत्सूर्ययोरिव ॥**

( १ ) द्वितीयमाह— उभयारौ तु वेति । अरेर्विजिगीषोश्च उभयोर्यः शत्रुस्तस्मिन् द्वयोरपि संभूय यानम् । प्रकृतिनाशन इति उभयारिप्रकृतिविलोपादिनिमित्तम् । हनूमत्सूर्ययोरिवेति । हनूमान् किल बालावस्थायामालोहितं भानुमन्तं दृष्ट्वा किमिदमिति चापलादुत्प्लुत्य हस्ताभ्यां गृहीतवान् । तत्काले एव च राहुः सूर्यं ग्रसितुमाजगाम । तद्ग्रसनार्थं च तं मोचयितुं प्रयतमानं दृष्ट्वा हनूमान् किमिदमपरमिति भानुं मुक्त्वा तमेव अभ्यधावत् । आदित्येनापि ज्ञातम्— 'ममाप्ययं राहुः शत्रुः । अतोऽस्य हनूमतः साहायकं प्रतिपद्येऽहम्' इति । सोऽपि तमभिजगामेत्येतावदत्रौपम्यकम् । जम.

( २ ) द्वितीयं संभूययानमाह— उभयोरपीति । उभयोः, अरिविजिगीष्वोरिति शेषः । अरिरिह उपारिः । प्रकृतिः हनूमतो मुखमण्डलं सूर्यस्य च आदित्यमण्डलम्, तन्नाशने उपस्थिते सूर्यो हनूमता संधाय राहुं जेतुं गत इति पौराणिकी वार्ता । उनिसा.

**[2]उभयत्र तु या यात्रा द्वयोः प्रकृतिनाशने ।**
**संभूययानं तत्प्रोक्तं रामसुग्रीवयोरिव ॥**
**[3]अल्पसारानुपादाय प्रतिज्ञाय फलोदयम् ।**
**गम्यते यत् परान् जेतुं संभूयगमनं हि तत् ॥**

तृतीयं संभूययानमाह— अल्पसारानुपादायेति । अल्पसारान् अल्पः सारः शक्तीनां वीर्यं बिभ्रतः सामन्तान् । प्रतिज्ञाय फलोदये 'जाते फले तव इदं भविष्यति' इत्युक्त्वा । परं यातव्यम् । प्रथमे सर्वेषां जिते राष्ट्रे तुल्यं स्वाम्यम्, अत्र तु यत्किंचिदेकस्येति विशेषः । उनिसा.

**[1]अन्यत्र प्रस्थितः सङ्गादन्यत्रैव हि गच्छति ।**
**प्रसङ्गयानं तत्प्रोक्तमत्र शल्यो निदर्शनम् ॥**

( १ ) द्वयोर्यातव्ययोरेकमभीष्टमभियोक्तुं प्रस्थितो यदा पथि कुतश्चित् प्रसङ्गादितरं प्रति याति तदाऽस्य प्रासङ्गिकं गमनम् । यथा कुरुपाण्डवानामुद्योगे मद्रराजस्य पाण्डवमातुलस्य शल्यस्य तदनुबलाधानार्थमेकयाऽक्षौहिण्या सह पाण्डवार्थे प्रस्थितस्य तस्य पथि दुर्योधनेनाऽऽत्मनिवेदनात् पूर्वकेणोपकारेण हृतचेतसस्तत्प्रसङ्गात् कुरुषु लब्धशरव्यस्य(?सख्यस्य) पाण्डवान् प्रति गमनं दर्शयति— अत्र शल्यो निदर्शनमिति । जम.

( २ ) प्रसङ्गयानमाह— अन्यत्र प्रस्थित इति । अन्यत्र अन्यं यातव्यमुद्दिश्य । सङ्गात् प्रसङ्गात् । अन्यत्र पूर्वमनुद्दिष्टमपरं प्रति । निदर्शनं दृष्टान्तः । दुर्योधनं यातव्यमुद्दिश्य प्रस्थितस्य दुर्योधनेनोपकारैरात्मसात्कृतस्य शल्यस्य युधिष्ठिरो यातव्यः संवृत्त इत्याहुः पौराणिकाः । उनिसा.

**[2]रिपुं यातस्य बलिनः संप्राप्यारिकृतं फलम् ।**
**उपेक्ष्य तन्मित्रयानमुपेक्षायानमुच्यते ॥**

( १ ) रिपुं यातस्येति रिपुं प्रति यातस्य । विजिगीषोरिति शेषः । बलिन इति द्वितीयाबहुवचनम् । इदमुक्तं भवति— यं रिपुमभियोक्तुं प्रयातो विजिगीषुस्तदनुबलाधानार्थं तत्सुहृदोऽपि येऽन्ये बलिनः समायातास्तान् संप्राप्य यदरिणा कृतं फलं प्रत्यभियोगलक्षणं तदुपेक्ष्य तन्मित्रेषु च बलिषु संप्राप्तेषु यत् यानं तदुपेक्षायानम् । जम.

---

( १ ) कानी. ११।७ ; उनिसा. उभयारौ तु वा ( उभयोरपि यद् ).

( २ ) कानी. ११।७ इति श्लोकादूर्ध्वं त्रिवेन्द्रम्-पुस्तके प्रक्षिप्तः.

( ३ ) कानी. ११।७ इति श्लोकादूर्ध्वं त्रिवेन्द्रम्-पुस्तके प्रक्षिप्तो द्वितीयः ; उनिसा. दयम् ( दये ) परान् ( परं ).

( १ ) कानी. ११।८ ; नीम. ४५ हि ( च ).

( २ ) कानी. ११।९ ; उनिसा. रिकृतं ( विष्कृतं ) ; नीम. ४५ रिकृतं ( विकृतं ) तन्मित्रयान ( तस्मिन्यद्यान ).

(२) उपेक्षायानमाह— रिपुं यातस्येति । बलिनः बलवतः विजिगीषोरित्यर्थः, आविष्कृतं प्रकटितं फलं विजयरूपं संप्राप्य प्रतिलभ्य, उपेक्ष्य विजितं पलायमानम् आसन्नमपि शत्रुं हित्वा इत्यर्थः । उनिसा.

**[1]निवातकवचान् हित्वा हिरण्यपुरवासिनः ।**
**उपेक्षायानमास्थाय निजघान धनंजयः ॥**

(१) तदेव दृष्टान्तेन स्फुटयन्नाह— निवातकवचानिति । शक्रः स्वर्गतमर्जुनं दिव्यास्त्राण्यधिगमय्य गुरुदक्षिणापदेशेन निवातकवचनाम्नोऽसुरान् जहीत्यभिहितवान् । सोऽपि तथेति प्रतिज्ञाय मातलिसनाथं रथमारुह्य तानभियोक्तुं प्रयातः । अभियुक्तेषु तेषु तदनुबलाधानाय हिरण्यपुरवासिनः कालकञ्जनामानोऽसुरा बलीयांसः समायाताः । तान् संप्राप्य निवातकवचाः प्रत्यभियुयुजुः । ततस्तानुपेक्ष्य तत्सुहृद एव कालकञ्जानभियोक्तुं प्रयातस्तानभियुज्य निजघान, पश्चात्तानपीति । जम.

(२) उपेक्षायानस्य दृष्टान्तमाह— निवातकवचानिति । निवातकवचान् तन्नामकप्रचण्डदानवान् धनंजयेनाऽऽक्रम्य पराभूतान् पातालतलं प्रति पलायमानान् आसन्नानपि निवातकवचान् उपेक्ष्य तन्मित्राणि हिरण्यपुरवासिनो दानवा निपातिता इति पौराणिकी वार्ता । उनिसा.

**[2]स्त्रियोऽथ पानं मृगया तथाऽक्षा**
**दैवोपघातश्च बहुप्रकारः ।**
**इति प्रदिष्टं व्यसनं ह्यनेन**
**समन्वितो यो व्यसनी स गम्यः ॥**

(१) कः पुनर्यातव्य इत्याह— स्त्रिय इत्यादि । व्यसनी यातव्यः । व्यसनं च दैवमानुषभेदेन द्विविधम् । तत्र मानुषं द्विविधम्— कामजं कोपजं च । तत्र स्त्रियः पानं मृगया द्यूतमिति कामजम् । वाक्पारुष्यं दण्डपारुष्यम् अर्थदूषणमिति कोपजमिति । तदिह 'कामात् क्रोधो हि जायते' (भगी. २।६२) इति दर्शनार्थं साक्षात् कोपजं नोक्तम् । दैवोपघातश्चेति । स चाग्न्युदकदुर्भिक्षमरकादिभेदेन बहुप्रकारः । इति प्रदिष्टमिति । इतिशब्दः आद्यर्थे । अनेन कोपजमप्युक्तं वेदितव्यम् । जम.

(२) यानभेदानभिधाय यातव्यलक्षणमभिधातुं व्यसनिन एव यातव्यतया व्यसनमाह— स्त्रियोऽथ पानं मृगया तथाऽक्षा इति । अक्षाः द्यूतानि । दैवोपघातः दैवी आपत् । बहुप्रकारः दुर्भिक्षमारकादिः । स्त्रीव्यसनं पानव्यसनम् अक्षव्यसनं दैवोपघातव्यसनं चेति चतुर्विधं व्यसनमत्रोक्तम् । एवमन्यदपि व्यसनमूहनीयम् । अनेन व्यसनेन समन्वितः सम्यगाक्रान्तः सुगम्यः यानेन सुसाध्यः । 'स गम्यः' इति मुद्रितपाठः । उनिसा.

(१) कानी. ११।१० ; नीम. ४५.
(२) कानी. ११।११ ; उनिसा. स गम्यः (सुगम्यः).

## शुक्रनीतिः

पञ्चविधं यानम्

**[1]शत्रुनाशार्थगमनं यानं स्वाभीष्टसिद्धये ॥**

स्वस्य अभीष्टसिद्धये स्वमनोरथसाधनाय शत्रुनाशार्थंगमनं यानम् । शुनीटी.

**विगृह्य संधाय तथा संभूयाथ प्रसङ्गतः ।**
**उपेक्षया च निपुणैर्यानं पञ्चविधं स्मृतम् ॥**

निपुणैः विज्ञैः जनैः यानं शत्रुं प्रति गमनं पञ्चविधं स्मृतम् । यथा— विगृह्य यानम्, संधाय यानम्, संभूय यानम्, अथवा प्रसङ्गतः छलतः यानम्, किंवा उपेक्षया यानम् । शुनीटी.

**विगृह्य याति हि यदा सर्वाञ्छत्रुगणान् बलात् ।**
**विगृह्ययानं यानज्ञैस्तदाचार्यैः प्रचक्ष्यते ॥**

यदा बलात् बलमाश्रित्य सर्वान् शत्रुगणान् विगृह्य विग्रहेण पराजित्य याति तत् यानं यानज्ञैः आचार्यैः गुरुभिः विगृह्ययानं प्रचक्ष्यते । शुनीटी.

**अरिमित्राणि सर्वाणि स्वमित्रैः सर्वतो बलात् ।**
**विगृह्य चारिभिर्गन्तुं विगृह्यगमनं तु वा ॥**

सर्वाणि अरिमित्राणि शत्रोः मित्राणि सर्वतः सर्वैः स्वमित्रैः आत्मबन्धुभिः करणभूतैः बलात् विगृह्य अरिभिः

(१) शुनी. ४।७।२३७, २५५–२६१.

सह गन्तुं विग्रहीतुमित्यर्थः, यत् गमनं तत् विगृह्यगमनं वा। शुनीटी.

**संधायान्यत्र यात्रायां पार्ष्णिग्राहेण शत्रुणा।**
**संधायगमनं प्रोक्तं तज्जिगीषोः फलार्थिनः॥**

अन्यत्र अन्यस्मिन् शत्रौ यात्रायां युद्धयात्रायां पार्ष्णिग्राहेण पृष्ठानुधाविना शत्रुणा सह संधाय मिलित्वा फलार्थिनः जिगीषोः यत् यानं तत् संधायगमनं प्रोक्तम्। शुनीटी.

**एको भूपो यदैकत्र सामन्तैः सांपरायिकैः।**
**शक्तिशौर्ययुतैर्यानं संभूयगमनं हि तत्॥**

एकः भूपः शक्तिशौर्ययुतैः सांपरायिकैः संग्रामनिपुणैः सामन्तैः अधीनस्थराजवर्गैः सह एकत्र एकस्मिन् शत्रौ यत् यानं (करोति) तत् संभूययानं हि। शुनीटी.

**अन्यत्र प्रस्थितः सङ्गादन्यत्रैव च गच्छति।**
**प्रसङ्गयानं तत् प्रोक्तं यानविद्भिश्च मन्त्रिभिः॥**

अन्यत्र प्रस्थितः नृपः सङ्गात् प्रसङ्गात्, छलादित्यर्थः, यत् अन्यत्र गच्छति तत् यानविद्भिः मन्त्रिभिः प्रसङ्गयानं प्रोक्तम्। शुनीटी.

***रिपुं यातस्य बलिनः संप्राप्य विकृतं फलम्।**
**उपेक्ष्य तस्मिन् तद्यानमुपेक्षायानमुच्यते॥**

रिपुं शत्रुं प्रति यातस्य गतस्य आक्रमतः बलिनः बलवतः नृपस्य विकृतं विपरीतं फलं पराजयरूपमित्यर्थः, संप्राप्य तस्मिन्, उपेक्ष्य यत् यानं गमनम्, स्वनगर्यामिति शेषः। निवर्तनमिति भावः। तत् उपेक्षायानमुच्यते। शुनीटी.

## योगयात्रा

यानलक्षणम्, यानोद्देशाः, यानानुकूलगुणः
अभियोक्ता

**[1]परपुरगमनं सर्वसैन्येन यानम्॥**

* एतच्छ्लोकसमानाकारः कानी. ११।९ इत्ययं श्लोकः तत्रत्यं जमव्याख्यानं चात्रानुसंधेयम्। अत्रत्यं व्याख्यानं तु अतीव तुच्छम्।

(१) योया. १।१४.

**[1]अभिहितगुणसंयुतेन राज्ञा**
**कथितगुणात्ययसंस्थितोऽभियोज्यः।**
**उपहतमुपलभ्य वा स्वदेशं**
**बलमथवा निरुपद्रुतोऽभियुञ्ज्यात्॥**

## नीतिवाक्यामृतम्

**[2]अभ्युदयो यानम्॥**

अथ यानस्वरूपमाह— अभ्युदय इति। यदा शत्रोरुपरि गम्यते अभ्युदयः क्रियते। अथवा बलवन्तं रिपुं ज्ञात्वा अन्यत्र गम्यते। नीवाटी.

**गुणातिशययुक्तो यायाद्यदि न सन्ति राष्ट्रकण्टका मध्ये, न भवति पश्चात्क्रोधः॥**

अथ भूयोऽपि यत्कर्तव्यं तदाह— गुणातिशययुक्त इति। तद्देशोपरि यदि न कोपः यदि राष्ट्रकण्टका मध्ये न भवन्ति, तत् गुणातिशययुक्तः बहुगुणः विजिगीषुः यायात् गच्छेत् परोपरि। तथा च भागुरिः— 'गुणयुक्तोऽपि भूपालोऽभियायाद्विद्विषोपरि। विद्यन्ते न हि राष्ट्रस्य बहवः शत्रवोऽपरे॥'। नीवाटी.

**स्वमण्डलमपरिपालयतः परदेशाभियोगो निवसनेन शिरोवेष्टनमिव॥**

अथ विजिगीषोः स्वमण्डलमपालयतः (परं?) परदेशं गच्छतो यद्भवति तदाह— स्वमण्डलमिति। उष्णीषकरणमिव। केन? निवसनेन परिधानवस्त्रेण। कस्येव? अन्धस्येव, हास्याय। यथा अन्धः परिधानवस्त्रेण शिरोवेष्टने कृते हास्यतां याति तथा विजिगीषुरपि पश्चात्कोपे स्थिते राष्ट्रविध्वंसे स्थिते हास्यतां याति। तस्मात् स्वदेशं रक्षितं कृत्वा परदेशं यायात्। तथा च विदुरः— 'य एव यत्नः कर्तव्यः परराष्ट्रविमर्दने। स एव यत्नः कर्तव्यः स्वराष्ट्रपरिपालने॥'। नीवाटी.

(१) योया. ३।१.

(२) नीवा. २९।४५, ५३–५४.

## युक्तिकल्पतरुः

यानानुकूलप्रतिकूलदेशकालविवेकः

[१]गुणातिशयसंपन्नः शत्रुं यायाज्जिगीषया ।
यदि पश्चात् प्रकोपो न यदि राष्ट्रे न कण्टकाः ।
संधायान्यत्र यायाद्वा पार्ष्णिग्राहेण शत्रुणा ॥
रात्रावुलूको विनिहन्ति काकान्
काकोऽप्युलूकं रजनीव्यपाये ।
इति स्वकालं समुदीक्ष्य यायात्
काले फलन्तीह समीहितानि ॥
*प्रबलव्यसनोपेतं दुर्भिक्षादिप्रपीडितम् ।
संभूतान्तरकोपेतं न यायात् पृथिवीपतिः ॥
निजदैवानुकूल्ये हि प्रातिकूल्ये परस्य च ।
यायाद् भूपो यतो दैवं बलमेतत् परं मतम् ॥
†निरातङ्के निरुत्पाते निरुद्विग्ने निरामये ।
विपक्षे जयमिच्छन्ति राजानो विजिगीषवः ॥
यत्रायुद्धे ध्रुवं नाशो युद्धे जीवितसंशयः ।
तं कालमेकं युद्धस्य प्रवदन्ति मनीषिणः ॥
आत्मोदये विगृह्णीयात्क्षोभो नाऽऽत्मबले यदि ।
व्यसने च प्रहर्तव्यं शत्रौ न तु विपर्यये ॥

## मानसोल्लासः

अभियोगयोग्या वैरिदोषाः, यानानुकूलः कालः

[२]दैवोपहतकोशश्च व्याधिना बाधितोऽपि वा ।
व्यसनासक्तचित्तो वा शत्रुणा पीडितोऽपि वा ॥
बलकोशविहीनो वा यो वा मित्रैर्वियोजितः ।
तस्योपरि नृपो यायाज्जिगीषुर्जयसिद्धये ॥
शरत्काले वसन्ते वा रिपोर्नाशमु( ? श उ )पस्थिते ।
निमित्तं शकुनं लब्ध्वा यात्रां कुर्वीत भूपतिः ॥

सप्त यानप्रकाराः

संधानजा पार्ष्णिरोधा मित्रविग्रहणी तथा ।
द्वन्द्वनिर्व्याजजा कुल्या सप्तमी चापि शीघ्रगा ॥
पार्ष्णिग्राहेण संधाय पश्चात्कुर्वीत भूपतिः ।
संधानयात्रा सा ज्ञेया नृपाणां क्षेमकारिणी ॥
पार्ष्णिग्राहस्य रोधार्थं नियोज्याऽऽत्मबलं महत् ।
गच्छतां सा भवेद्यात्रा पार्ष्णिरोधा शुभावहा ॥
शत्रोः सार्धं स्वमित्रेण कारयित्वा सुविग्रहम् ।
गच्छतां सा भवेद्यात्रा मित्रविग्रहणी परा ॥
यस्योपरि स्वयं यायादानयेत् तदरिं नयात् ।
सा यात्रा द्वन्द्वजा प्रोक्ता रिपुसंहारकारिणी ॥
सर्वतः स्वस्थचित्तस्य बलिष्ठस्यारिघातिनः ।
भवेद्या नृपतेर्यात्रा निर्व्याजा सा प्रकीर्तिता ॥
रिपुवंश्येन सार्धं यो गच्छत्यरिविनाशने ।
सा तु यात्रा भवेत्कुल्या द्विषतां भयकारिणी ॥
रिपोर्विनाशमुद्दिश्य त्यक्त्वा चान्यप्रमादकम् ।
सहसा क्रियते यात्रा सा भवेच्छीघ्रगा भृशम् ॥

## अनिर्दिष्टकर्तृकवचनानि

यानप्रतिकूलः कालः

[१]सामन्तयोर्व्यसनसाम्ये न यातव्यम्, तममित्रमेव यायात् ॥ *

---

* 'प्रबलव्यसनोपेतो दुर्भिक्षादिप्रपीडितः । संभूतान्तरकोपस्तु न यायात् पृथिवीपतिः ॥' इत्येवमत्र अशुद्धिसंशोधनं कल्प्यते ।

† पूर्वार्धे आत्मनीति विशेष्यपदमध्याहार्यं आत्मनि निरातङ्के सतीत्यादि योज्यम् । अथवा 'निरातङ्का निरुत्पाता निरुद्विग्ना निरामयाः' इति शुद्धिः कल्प्या ।

(१) युक. ७–९।५१–५७.

(२) मासो. २।७४३–७५३.

* यातव्यावस्थापन्नं न यायात्, किंतु नित्यापकारेणममित्रमेव यायादित्यर्थः ।

(१) विश्व. १।३४३.

## वाल्मीकिरामायणम्

आत्मदौर्बल्ये आसनम्

**[1]विगृह्यासनमप्याहुर्दुर्बलेन बलीयसः।**
**आत्मरक्षाकरस्तस्मान्न विगृह्णीत दुर्बलः॥**

## कौटिलीयमर्थशास्त्रम्

आसनलक्षणम्, आसनकालः

**[2]उपेक्षणमासनम्॥**

संध्याद्यप्रयोग आसनम्। श्रीमूला.

**न मां परो नाहं परमुपहन्तुं शक्त इत्यासीत॥**

'शत्रुः मामुपहन्तुं न शक्तः, अहं परमुपहन्तुं न शक्तः' इति, मन्यमान इति शेषः, आसीत परमुपेक्षेत। श्रीमूला.

संधिविग्रहपूर्वकाणि आसनानि अवस्थापनीयानि

**[3]संधिविग्रहयोरासनं यानं च व्याख्यातम्। स्थानमासनमुपेक्षणं चेत्यासनपर्यायाः॥**

'विगृह्यासनम्' इति सूत्रम्। शत्रुणा सह धान्यप्राप्त्यादिप्रतिघातलक्षणं विग्रहं कृत्वा यदासनं तदुच्यत इति सूत्रार्थः। केवलमासनं यानं च पूर्वमुक्तम्, गुणान्तरविशिष्टं त्वधुनाऽभिधीयते।

संधिविग्रहयोरित्यादि। संधौ विग्रहे चाऽऽसनं यानं च व्याख्यातं पूर्वाचार्यैः। स्थानम् आसनम् उपेक्षणम् इत्येते शब्दाः आसनस्य पर्यायवाचिनः। श्रीमूला.

**विशेषस्तु गुणैकदेशे स्थानम्। स्ववृद्धिप्राप्त्यर्थमासनम्। उपायानामप्रयोग उपेक्षणमिति॥**

तत्र विशेषस्तूच्यते। गुणैकदेशे स्थानमित्यादि। गुणः इह आसनम्। तच्च शक्तिसाम्यलक्षणम्। तस्य एकदेशः अवयवः। स च शक्तेरल्पोंऽशः। शत्रुकृतापकारप्रत्यपकारकरणासामर्थ्यरूपा शक्त्यल्पतेति यावत्। तस्यामासनलक्षणादपकृष्टायां स्थानशब्दः प्रयुज्यते। तच्च स्थानं विजिगीषोः संधायासनस्य कारणं द्रष्टव्यम्। स्ववृद्धिप्राप्त्यर्थमासनमिति। आत्मनो वृद्धिप्राप्तिनिमित्ते आसने आसनशब्दः प्रयुज्यते। इयं परकृतापकारं केवलं प्रतिकुर्वतः स्वयमनपकुर्वतश्चावस्था स्थानविपरीता। वृद्ध्यर्थं चेदमासनं शक्तिसाम्यलक्षणासनापेक्षया शक्त्याधिक्ययोगात् विगृह्यासनस्य कारणम्। उपायानामप्रयोग उपेक्षणमिति। उपायानां प्रयोगाभावे ईषत्प्रयोगे वा उपेक्षणशब्दः प्रयुज्यते। एवं पर्यायवचनानामपि स्थानासनोपेक्षणानां कमपि कमपि विशेषमाश्रित्य संज्ञाभेदा उक्ताः। केचित्तु स्थानादीनां स्वरूपमन्यथा वर्णयन्ति— कपालसंध्यादिषु प्रदेयद्रव्याप्रदानं स्थानम्, कृतोच्छिन्नसंधेः परव्यसनप्रतीक्षणावस्थानम् आसनम्, सामाद्युपायाप्रयोगः उपेक्षणमिति। श्रीमूला.

**संधानकामयोररिविजिगीष्वोरुपहन्तुमशक्तयोर्विगृह्याऽऽसनं संधाय वा॥**

प्रसङ्गागतमासनभेदमभिधाय प्रस्तुतमनुसंधत्ते— संधानकामयोरित्यादि। संधिमिच्छतोः शत्रुविजिगीष्वोः परस्परापकारकरणाशक्तत्वे विगृह्यासनं संधायासनं वा कर्तव्यम्। तत्र च शक्त्याधिक्ये आद्यम्, शक्त्यल्पत्वे द्वितीयम्। फलं चाऽऽद्यस्य परकर्मोपघातः स्वकर्मानुष्ठानं च, द्वितीयस्य स्वकर्मरक्षणमात्रमिति विवेक्तव्यम्।

श्रीमूला.

**यदा वा पश्येत्— 'स्वदण्डैर्मित्राटवीदण्डैर्वा समं ज्यायांसं वा कर्शयितुमुत्सहे' इति, तदा कृतबाह्याभ्यन्तरकृत्यो विगृह्याऽऽसीत॥**

अथ विगृह्यासने निमित्तविशेषानाह— यदा वा पश्येत् स्वदण्डैरित्यादि। 'स्वसैन्यैर्मित्रसैन्यैराटविकसैन्यैर्वाऽह-

---

(१) वारा. ४।४६।१३ (न विग्रहं समं प्राहुर्दुर्बलस्य बलीयसा। आत्मरक्षाकरीं तस्माद्बुद्धिं गृह्णाति दुर्बलः॥); वाराकु. ४।५४।१२.

(२) कौ. ७।१.

(३) कौ. ७।४.

मात्मनः समशक्तिमधिकशक्तिं वा शत्रुं कर्शयितुं शक्नोमि' इति चेन्मन्येत तदा कृतबाह्याभ्यन्तरकृत्यः सन् जनपदगता दुर्गादिगताश्च कृत्याः क्रुद्धलुब्धभीतादयः कृताः परविषये वर्धिताः स्वविषये शमिताश्च येन तथाभूतः सन् विगृह्यासनमनुतिष्ठेत्। श्रीमूला.

**यदा वा पश्येत्— 'उत्साहयुक्ता मे प्रकृतयः संहता विवृद्धाः स्वकर्माण्यव्याहताश्चरिष्यन्ति, परस्य वा कर्माण्युपहनिष्यन्ति' इति, तदा विगृह्याऽऽसीत ॥**

'मम प्रकृतयः उत्साहवत्यः एकमनस्काः वृद्धिमत्यः स्वकर्माण्यप्रतिहता अनुष्ठास्यन्ति परकर्माणि चोपहनिष्यन्ति' इति चेन्मन्येत तदा विगृह्यासनमनुतिष्ठेत्। श्रीमूला.

**यदा वा पश्येत्— 'परस्यापचरिताः क्षीणा लुब्धाः स्वचक्रस्तेनाटवीव्यथिता वा प्रकृतयः स्वयमुपजापेन वा मामेष्यन्तीति, संपन्ना मे वार्ता विपन्ना परस्य, तस्य प्रकृतयो दुर्भिक्षोपहता मामेष्यन्ति, विपन्ना मे वार्ता संपन्ना परस्य, तं मे प्रकृतयो न गमिष्यन्ति, विगृह्य चास्य धान्यपशुहिरण्यान्याहरिष्यामि, स्वपण्योपघातीति वा परपण्यानि निवर्तयिष्यामि, परवणिक्पथाद्वा सारवन्ति मामेष्यन्ति विगृहीते नेतरम्, दूष्यामित्राटवीनिग्रहं वा विगृहीतो न करिष्यति, तैरेव वा विग्रहं प्राप्स्यति, मित्रं मे मित्रभाव्यभिप्रयातो बह्वल्पकालं तनुक्षयव्ययमर्थं प्राप्स्यति, गुणवतीमादेयां वा भूमिं सर्वसंदोहेन वा मामनादृत्य प्रयातुकामः कथं न यायात्' इति परवृद्धिप्रतिघातार्थं प्रतापार्थं च विगृह्याऽऽसीत ॥**

'परस्य प्रकृतयः परेणानादृताः दुर्भिक्षोपहताः लुब्धाः स्वसैन्यचोराटविकपीडिताः स्वयं मदीयभेदोपायानुष्ठानेन वा मामुपगमिष्यन्ति' इति चेन्मन्येत तदा विगृह्याऽऽसीत। 'कृषिपाशुपाल्यवणिज्या मे संपन्नाः, परस्य तु विपन्नाः, तस्य प्रकृतयो दुर्भिक्षपरिक्षीणा मामाश्रयिष्यन्ति' इति चेन्मन्येत, विगृह्याऽऽसीत। 'मम कृषिपाशुपाल्यवणिज्या विपन्नाः, परस्य संपन्नाः, प्रकृतयश्च मेऽनुरक्ताः परं न गमिष्यन्ति, अतः परस्य धान्यपशुहिरण्यानि विगृह्यापहरिष्यामि' इति चेन्मन्येत तदा विगृह्याऽऽसीत। 'विक्रयाहीणां मम पण्यानां विक्रयं परदेशागतानि पण्यान्युपघ्नन्ति, तदेतानि स्वदेशान्निवर्तयिष्यामि' इति चेन्मन्येत तदा विगृह्याऽऽसीत। 'विगृहीते सति शत्रौ तदीयवणिक्पथात् सारवन्ति हस्त्यश्वगजदन्तादीनि मामागमिष्यन्ति, न तु शत्रुम्' इति चेन्मन्येत तदा विगृह्याऽऽसीत। अथवा 'मया विग्रहे क्रियमाणे परो दूष्यामित्राटविकानां निग्रहं स्वमण्डलशुद्धयर्थं न करिष्यति' इति चेन्मन्येत, विगृह्याऽऽसीत। 'तैरेव वा दूष्यामित्राटविकैः सह विग्रहं प्राप्स्यति' इति चेन्मन्येत, विगृह्याऽऽसीत। इत्थं समस्य विगृह्यासनमुक्त्वा ज्यायस आह— मित्रं मे मित्रभावीत्यादि। "मम मित्रं मित्रभावि 'एकार्थानर्थसंबद्धमुपकार्यविकारि च। मित्रभावि भवत्येतन्मित्रमद्वैध्यमापदि ॥' (कौ. ७।९). इति मित्रसंधिवक्ष्यमाणलक्षणम् अभिप्रयातः परोऽल्पकालेनाल्पसैन्यधनव्ययेन महान्तमर्थं प्राप्स्यति, तदहमस्याभिप्रयाणं विहनिष्यामि" इति चेन्मन्येत तदा विगृह्याऽऽसीत। अथवा 'गुणवतीं परसुखसाध्यां भूमिमपहर्तुं सर्वसैन्यसमुदयेन मामवज्ञाय प्रयातुकामोऽयं परो यथा न यायात् तथा करिष्यामि' इति चेन्मन्येत तर्हि विगृह्याऽऽसीत। किमर्थम्? परवृद्धिविघातार्थं स्वप्रतापाविष्करणार्थं च। श्रीमूला.

**तमेव हि प्रत्यावृत्तो ग्रसत इत्याचार्याः ॥**

योऽयं विजिगीषुः सर्वसंदोहेन यातव्याभिप्रयाणोद्यतं परं प्रति तद्वृद्धिप्रतिषेधार्थं विगृह्यासनमनुतिष्ठति, तमेव स्वप्रयाणविघातकुपितः परो यातव्यात् प्रत्यावृत्त्योच्छिनत्ति इत्येवमनर्थप्रसङ्गात् तं प्रति विगृह्यासनं नानुष्ठेयमित्याचार्या मन्यन्ते। श्रीमूला.

**नेति कौटल्यः। कर्शनमात्रमस्य कुर्याद्व्यसनिनः। परवृद्ध्या तु वृद्धः समुच्छेदनम् ॥**

आचार्यमतं दूषयति— नेति कौटल्य इति। तत्र हेतुमाह— कर्शनमात्रमस्य कुर्याद्व्यसनिन इति। अस्य

विगृह्यासीनस्य अव्यसनिनः व्यसनहीनस्य सतः विजिगीषोः कर्शनमात्रं कुर्यात् कर्शनमेव केवलं कुर्यात् प्रत्यावृत्तः, न तूच्छेदनमित्यर्थः । प्रत्युत विगृह्यासनस्यानुष्ठाने एव स निष्प्रतिबन्धविजितयातव्यसकाशाधिगतैश्वर्याप्यायितनिजशक्तिर्भवन् विजिगीषोरुच्छेदनमेव कुर्यादित्याह— परवृद्ध्या तु वृद्धः समुच्छेदनमिति ।

श्रीमूला.

**एवं परस्य यातव्योऽस्मै साहाय्यमविनष्टः प्रयच्छेत् । तस्मात् सर्वसंदोहप्रकृतं विगृह्याऽऽसीत ॥**

विगृह्यासनस्यानुष्ठाने अनुपेक्षणीयं प्रयोजनान्तरमाह— एवं परस्येत्यादि । एवं विगृह्यासनस्यानुष्ठानेन अविनष्टः अप्राप्तनाशः प्राप्तपरिरक्षः परस्य यातव्यः अस्मै आत्मोपकारिणे विजिगीषवे साहाय्यं प्रयच्छेत् । तस्मादिति । यथोक्ताद्धेतोः सर्वसंदोहप्रकृतं विगृह्याऽऽसीत सर्वसैन्यसमुदयेनाऽऽरब्धयानं प्रति विगृह्यासनमनुतिष्ठेत् । इति विगृह्यासनं व्याख्यातम् ।

श्रीमूला.

**विगृह्यासनहेतुप्रातिलोम्ये संधायाऽऽसीत ॥**

अथ संधायासनम् । 'संधायासनम्' इति सूत्रम् । शत्रुणा सह संधिं कृत्वा आसनं संधायासनम् । तदभिधीयते इति सूत्रार्थः ।

विगृह्यासनहेतुप्रातिलोम्य इत्यादि । य एते विगृह्यासनहेतवः उक्ताः तेषामात्मनि वैपरीत्यदर्शने अर्थात् तेषां शत्रावुत्पत्तिदर्शने संधायासनमनुतिष्ठेत् । इति संधायासनं व्याख्यातम् ।

श्रीमूला.

## मनुः

द्विविधम् आसनम्

**[1]क्षीणस्य चैव क्रमशो दैवात् पूर्वकृतेन वा । मित्रस्य चानुरोधेन द्विविधं स्मृतमासनम् ॥**

(१) आत्मसंवरणम् आसनम् । तदपि द्विविधम् । क्षीणस्य बलकोशोपनयेन, वृद्धस्यापि शत्रुं प्रत्युपेक्षा आसनं च मित्रानुरोधेन । यदि मित्रस्य क्षीणस्य शत्रुणा सह संबन्धो नेदृशो भवति, तदीयेन मित्रेण नायमुत्तम्भनीयः इत्यतस्तदनुवृत्त्या आसीत । स च क्षयो दैवात् पूर्वकृतेन वेत्यनुवादः । वृद्धिक्षयौ सर्वस्यैतेन कारणेन भवतः । तत्र दैवं स्वकृतप्रमादः, अतिव्ययशीलता, अप्रतिजागरणं स्वे बले । पूर्वकृतम् अशुभं कर्मापि । विपर्ययेण वैतत् व्याख्येयम् । मोहादिति पाठान्तरम् । अर्थस्तु दैवशब्देन व्याख्यातः ।

मेधा.

(२) प्राग्जन्मार्जितकर्मवशेन ऐहिकेन पूर्वप्रमादेन शनैः शनैः क्षीणभूम्यादिकस्य, सर्वसमृद्धस्यापि वा मित्रानुरोधेन तत्कार्यरक्षार्थम्, इत्येवं द्विविधमासनं स्मृतम् ।

* गोरा.

(३) क्षयो द्विधा— दैवात् मारकादिना, अरिणि पूर्वकृतेन दण्डेन च, इत्येकमेव क्षीणासनं द्विविधम् । तथा मित्रस्यानुरोधेन स्वस्य तं प्रति सामर्थ्येऽपि तेन स्वमित्रस्य प्रति बन्दिभावेन पीडाकरणशङ्कया परम् ।

¶ मवि.

(४) आसीतेत्यासनम् । न चलेत्, तदा स्वदेशत्यागे पराजयस्यैव संभाव्यमानत्वादिति भावः ।

§ मच.

(५) अस्मिन् जन्मनि साधुकारिणोऽपि दैवात् क्षीणस्य, पूर्वकृतेन अस्मिन् जन्मनि पूर्वसंवत्सरादिषु कृतेन कर्मणा वा क्षीणस्य आपन्नस्य यदासनं तत् प्रथमम्, दैवपूर्वकृताभ्यां क्षीणस्य मित्रस्यानुरोधेन यदासनं तत् द्वितीयमिति द्वितीय(? द्विविध)मासनम् ।

नन्द.

**[1]यदा तु स्यात्परिक्षीणो वाहनेन बलेन च । तदाऽऽसीत प्रयत्नेन शनकैः सान्त्वयन्नरीन् ॥**

---

* ममु. गोरावत् । राप्र. गोरागतम् ।

¶ भाच. मविगतम् ।

§ शेषं मेधागतं मविगतं च ।

(१) मस्मृ. ७।१६६ ; मेधा. दैवात् (मोहात्) इत्यपि पाठः ; राक. ११२ ; राप्र. ३२६.

(१) मस्मृ. ७।१७२ ; राक. ११२ ; रार. ५७ ; राप्र. ३२७ त्वरीन् (त्रिपून्).

(१) वाहनं हस्त्यश्वरथम् । बलं पादातम् । गोबलीवर्दवद्भेदः । परिक्षीणे बले सति सान्त्वयन्नरिमासीत । सामोपप्रदानाभ्यामनुकूलनं सान्त्वनम् । मेधा.

(२) यदा पुनर्हस्त्यादिना भृत्यैश्च परिक्षीणः स्यात्तदा शनैः सामोपप्रदानादिना शत्रून् सान्त्वयन् यत्नेन अत्युच्छ्रयात् आसनमाश्रयेत् । * गोरा.

(३) सान्त्वयन् भाविफलप्रत्याशया । मवि.

(४) आसनस्यापि तमाह— यदा त्विति । परिक्षीणं (? णो) वाहनेन हस्त्यश्वादिचतुरङ्गेण, बलेन कोशाद्येन शारीरेण वा । स्वयं शनैरभिमतग्रामादिदानेन । असान्त्वनेऽरीणामावश्यकमागमनम्, तदा महाननयः स्यादिति भावः । मच.

## विष्णुधर्मोत्तरपुराणम्

आसनलक्षणम्, आसनकालः

**[1]विग्रहेऽपि स्वके देशे स्थितिरासनमुच्यते ॥**

आसनं विग्रहमुपेक्ष्य स्वदेशे अवस्थितिः । तदुक्तम्— विग्रहेऽपीति । राप्र. ३२५

**[2]आसीत कर्मविच्छेदं शक्तः कर्तुं रिपुर्यदा ॥**

यदा रिपुः शक्तः स्वापेक्षया सामर्थ्यवान् तदा कर्मणः विग्रहस्य विच्छेदं कर्तुमासीतेत्यर्थः । राप्र. ३२७

## अग्निपुराणम्

आसनकालः, पञ्चविधमासनम्

**[3]परस्परस्य सामर्थ्यविघातादासनं स्मृतम् ।**
**अरेश्च विजिगीषोश्च यानवत् पञ्चधा स्मृतम् ॥**

* ममु., भाच. गोरागतम् ।

(१) विध. २।१५०।४; अग्नि. २३४।१९ विग्रहेऽपि (विग्रहेण); राप्र. ३२५ (=); राकौ. २४४.

(२) विध. २।१५०।७ आसीत (आसीनः); अग्नि. २३४।२२ आसीत (आसीनः) रिपु (रिपो) श्लोकार्धानन्तरम् + (अशुद्धपार्ष्णिश्चाऽऽसीत विगृह्य वसुधाधिपः ।); राप्र. ३२७; राकौ. २४५ आसीत (आसीनः) च्छेदं (च्छेदो).

(३) अग्नि. २४०।२७-२८.

## कामन्दकीयनीतिसारः

पञ्चविधम् आसनम्

**[1]परस्परस्य सामर्थ्याविघातादासनं स्मृतम् ।**
**अरेश्च विजिगीषोश्च तत्पञ्चविधमुच्यते ॥**

(१) आसनमधिकृत्याऽऽह— परस्परस्येत्यादि । अरेश्च विजिगीषोश्च परस्परस्येति संबन्धः । सामर्थ्याविघातादिति । यदा शत्रुर्विजिगीषोर्विजिगीषुश्च शत्रोर्विग्रहे सामर्थ्यमुपसोढुं समर्थः तदा यदुपेक्षणं तदासनम् । तथा ह्युक्तम्— 'न मां परो नाहं परमुपहन्तुं शक्त इत्यासीत' (कौ. ७।१) इति । तत् पञ्चविधं यानवत् । जम.

(२) एवं यानमुक्त्वा आसनमाह— परस्परस्येति । सामर्थ्यविघातात् बलशक्तिह्रासात् । समारब्धविजिगीषस्य परस्य च सामर्थ्यविघातात् इतरेतरस्य या अवस्थितिः तत् आसनं इति फलितार्थः । 'सामर्थ्याविघातात्' इति मुद्रितपाठे तु उभयोरपि सामर्थ्यस्य अविघातात् ह्रासाभावादित्यर्थः । तत् पञ्चविधम् । यथा— विगृह्यासनन्, संधायासनम्, संभूयासनम्, प्रसङ्गासनम्, उपेक्षासनमिति । उनिसा.

**[2]अन्योन्याक्रान्तिकरणं विगृह्यासनमुच्यते ।**
**अरिं विगृह्य वा स्थानं विगृह्यासनमुच्यते ॥**

(१) तदेव श्लोकदशकेन दर्शयति— अन्योन्याक्रान्तिकरणमित्यादि । आक्रान्तिः अतिसंधानम् । इदमुक्तं भवति— अरिविजिगीष्वोः परस्परमतिसंधानपूर्वकं यदासनकरणं तत् विगृह्यासनमित्येकः प्रकारः । द्वितीयमाह— अरिं विगृह्य वेति । देशविलोपादिना शत्रोरपकृत्येत्यर्थः । पूर्वत्रोभयोर्व्यापारः, इह तु विजिगीषोरेवेति विशेषः । जम.

(२) पञ्चविधेषु आसनेषु प्रथमं तावत् विगृह्यासनमाह— अन्योन्याक्रान्तिकरणमिति । अरिविजिगीष्वोः

(१) कानी. ११।१२; उनिसा. मर्थ्या (मर्थ्य); नीम. ४५ र्थ्यावि (र्थ्याद्वि) पू.

(२) कानी. ११।१३; उनिसा. ह्य वा स्थानं (ह्यावस्थानं).

अन्योन्याक्रान्तिकरणं यत् परस्परं चेष्टाविघातविधानं तत् विगृह्यासनम् । विग्रहान्तस्थयोरेव सामर्थ्यविघाते सति यदासनं तत् विगृह्यासनम् । एवमेकम् । शत्रुं विगृह्यापि कारणान्तरापेक्षया यदवस्थानं तदपि विगृह्यासनमित्यर्थः ।

उनिसा.

**[1]यदा दुर्गस्थितः शत्रुर्ग्रहीतुं न च शक्यते ।**
**विगृह्यैनं तदाऽऽसीत हत्वाऽस्याऽऽसार-वीवधौ ॥**

(१) कदा विगृह्यासनमित्याह— यदेत्यादि । ग्रहीतुं नैव शक्यते शुद्धेन विग्रहेण, तदाऽऽसीत । आसारवीवधाविति । 'धान्यादेर्वीवधः प्रासिरासारस्तु सुहृद्बलम्' (कानी. १४।८७) इति वक्ष्यति । *उपलक्षणार्थं चैतत् । तेन यवसेन्धनादि च वीवध इति बोध्यम् ।

जम.

(२) विगृह्यासनस्य कालमाह— यदा दुर्गस्थित इति । आसारवीवधौ— आसारः मित्रबलम्, वीवधः साहाय्यदानार्थं जनपदेभ्यः समागच्छतां बलानां पन्थाः, तौ छित्वा । आसारपक्षे छेदः विनाशः, वीवधपक्षे छेदः अवरोधः । 'यदा दुर्गस्थितः' इत्यत्र 'यथा दुर्गगतः' इति क्वचित्पाठः । 'आसारवीवधौ' इत्यत्र 'आसार-वीवधान्' इति मुद्रितपाठः ।

उनिसा.

**[2]विच्छिन्नवीवधासारं प्रक्षीणयवसेन्धनम् ।**
**विरज्यमानप्रकृतिं कालेनैव वशं नयेत् ॥**

(१) एवं च विगृह्यासने सति क्रमेण शत्रुर्विरज्य-मानप्रकृतिर्वध्यो भवति । यदाह— विच्छिन्नेत्यादि ।

जम.

(२) एवं कृते किं भवति ? इत्यत आह— विच्छिन्नवीवधासारमिति । प्रक्षीणयव( ? जव )सैन्धवं हीनवेगाश्वम् । अत्र सैन्धवपदं बलसामान्यस्य उपलक्ष-णम् । विभज्यमानप्रकृतिं पृथग्भूतराज्यसाधनम् । 'विभज्यमानप्रकृतिम्' इत्यत्र 'विगृह्यमानः प्रकृतिम्' इति मुद्रितपाठो न संगच्छते ।

उनिसा.

**[1]अरेश्च विजिगीषोश्च विग्रहे हीयमानयोः ।**
**संधाय समवस्थानं संधायासनमुच्यते ॥**

(१) हीयमानयोरिति तुल्यबलत्वात् क्षीयमाणयोः ।

जम.

(२) संधायासनमाह— अरेश्चेति । स्पष्टम् । 'संधाय यदवस्थानम्' इत्यत्र 'संधाय समवस्थानम्' इति केचित् पठन्ति ।

उनिसा.

**[2]निवातकवचैः सार्धं रावणः शत्रुरावणः ।**
**ब्रह्माणमन्तरे कृत्वा संधायासनमास्थितः ॥**

(१) रावणो हि ब्रह्मवरप्रदानाल्लब्धत्रिलोकविजयो लोकत्रयं जित्वा लब्धोत्साहः पातालं जेतुं प्रविष्टः । तत्र भोगवती नाम पुरी । तत्रस्थान् निवातकवचान् दीर्घकालं योधितवान् । तयोश्चोभयोर्विग्रहे क्षीयमाणयोर्ब्रह्मा शिरो-वेदनया समुपलब्धवृत्तान्तो विफलत्वमस्मद्वरप्रदानस्य मा भूदिति विचिन्त्य आगत्य दैत्यान् विग्रहात् न्यवर्तयत् । रावणश्च संधित्सुस्तमेव ब्रह्माणं प्रातिभाव्ये स्थापयित्वा तैः संधायाऽऽसितवान् ।

जम.

(२) अत्र दृष्टान्तमाह— निवातकवचैरिति । निवात-कवचैः सह रावणस्य विग्रहे सति रावणस्तैराक्रान्तो ब्रह्माणं गोत्रगुरुम् अन्तरे प्रतिभुवं कृत्वा शत्रुरावणोऽपि रावणः संधायासनमास्थितः यथा न निवातकवचैर्विनाश्यते इति पौराणिकी वार्ता । 'सार्धम्' इत्यत्र 'साकम्' इति केचित् पठन्ति ।

उनिसा.

---

* वस्तुतः आदिपदादेव यवसेन्धनादिसंग्रहः, अलमुप-लक्षणकल्पनया ।

(१) **कानी.** ११।१४; **उनिसा.** हत्वा (छित्वा); **नीम.** ४५ न च (नैव) हत्वा (छित्वा) वीवधौ (वीवधान्).

(२) **कानी.** ११।१५; **उनिसा.** यवसेन्धनम् (यव( ? जव )सैन्धवम्) विरज्य (विभज्य); **नीम.** ४५ विरज्यमान (विगृह्यमाण) वशं (शर्म).

(१) **कानी.** ११।१६; **उनिसा.** समव (यदव); **नीम.** ४५ उनिसावत्.

(२) **कानी.** ११।१७–१८.

**उदासीने मध्यमे च समानप्रतिशङ्कया ।**
**एकीभूय व्यवस्थानं संभूयासनमुच्यते ॥**

(१) उदासीने मध्यमे चेति विषयसप्तमी । समानप्रतिशङ्कयेति अरिविजिगीष्वोस्तुल्यया मध्यमोदासीनविषयप्रतिशङ्कयेत्यर्थः । एकीभूयेति शत्रुणा । जम.

(२) संभूयासनमाह– उदासीन इति । उदासीनमध्यमौ पूर्वं (कानी. ८।१८–१९) कृतलक्षणौ । उदासीने मध्यमे इति विषये सप्तमी । तैः सहेति फलितोऽर्थः । समानप्रतिशङ्कया 'अयं मम तुल्यबलः कदाचिदभियुञ्ज्यात्' इति शङ्कया व्यवस्थानम् अवस्थितिः संभूयासनमुच्यते । 'एकीभूय व्यवस्थानम्' इत्यत्र 'एकीभूय समुत्थानम्' इति मुद्रितपुस्तकपाठो न साधुः । उनिसा.

**[1]उभयारिं हि वाञ्छन्तं विनाशमुभयोरपि ।**
**संभूयैनं प्रतिव्यूहेदधिकं सर्वसंपदा ॥**

(१) तदेव स्फुटयन्नाह– उभयारिमित्यादि । यदा मध्यमोदासीनयोरन्यतरो विजिगीषुं विनाशयितुं वाञ्छति तदा अयमुभयोरप्यनयोररिर्भवति । तदुभयारिमधिकं शत्रुणा संभूय प्रतिव्यूहेत् । जम.

(२) संभूयासनप्रसङ्गेन संभूयारिनिग्रहमाह– उभयारिर्हीति । उभयारिः पूर्वोक्तमध्यमविशेषः । उभयोः विजिगीष्वोः । एनम् उभयारिं प्रतिव्यूहेत् प्रतिबलयेत् अधिकं बलवत्तरं संघधर्मणा संघवृत्तिमवलम्बमानेन । बहुभिर्मिलित्वा एककार्यकरणं संघवृत्तिः । 'संभूयैनम्' इत्यत्र 'संभूयेन' इति, 'संघधर्मणा' इत्यत्र 'तत्त्वधर्मणा' इति च मुद्रितपुस्तकपाठः । उनिसा.

**[2]यियासोरन्यमन्यत्र प्रसङ्गेन हि केनचित् ।**
**आसनं यत्तदर्थज्ञैः प्रसङ्गासनमुच्यते ॥**

(१) कानी. ११।१९ ; उनिसा. उभयारिं (उभयारिः) एतत्पाठबलात् 'वाञ्छन्तं (वाञ्छेत)' इति मुद्रितवत् पाठः कल्प्यते, सर्वसंपदा (संघधर्मणा).

(२) कानी. ११।२० ; उनिसा. न हि (नेह).

(१) यियासोरिति । अन्यं शत्रुं यातुमिच्छोर्विजिगीषोः । अन्यत्र यातव्यात् । प्रसङ्गेन हीति अन्तरा मित्रोत्सवादिप्रसङ्गेन । जम.

(२) प्रसङ्गासनमाह– यियासोरिति । अन्यं प्रति यियासोः अन्यत्र केनचित् प्रसङ्गेन यत् आसनम् अवस्थानं तत् अर्थज्ञैः शास्त्रवेदिभिः इह प्रसङ्गासनमुच्यते इत्यन्वयः । उनिसा.

**[1]अथोपेक्ष्यारिमधिकमुपेक्षासनमुच्यते ।**
**उपेक्षां कृतवानिन्द्रः पारिजातग्रहं प्रति ॥**

(१) स्थानमासनमुपेक्षणं चेत्यासनपर्यायाः । तत्र गुणैकदेशे स्थानम् । स्ववृद्धिप्राप्त्यर्थम् आसनम् । उपायानामप्रयोग उपेक्षणम् । तत्र बलवन्तमरिमुपायानामप्रयोगपूर्वकमुपेक्ष्य यत् स्ववृद्धिप्राप्त्यर्थमासनं तदुपेक्षासनमुच्यते । पारिजातग्रहं प्रतीति । विष्णोः प्रियां सत्यभामां पत्या स्वगृहमागतां शची स्वमुद्यानं दर्शयामास । तत्र पारिजातमञ्जरीं दृष्ट्वा सत्यभामया प्रणयादभ्यर्थिता मानुषीत्यवज्ञया न ददौ । तदीर्ष्यया च जातकोपया तया प्रोत्साहितो विष्णुर्नन्दनं वनं गत्वा तदारक्षकान् निहत्य पारिजातकमेवोत्पाट्य द्वारकायां रोपितवान् । इन्द्रोऽपि देवकार्यमनेनानेकं कर्तव्यम्, बलवांश्चेति विचिन्त्य तमुपेक्ष्य स्थितवान् इत्येकः प्रकारः । जम.

(२) उपेक्षासनमाह– आस्त इति । अरिम् अधिकं अधिकबलं प्रेक्ष्य यत् आस्ते । उपेक्ष्येति शेषः । तत् उपेक्षासनमुच्यते इत्यन्वयः । अत्र दृष्टान्तमाह– उपेक्षामित्यादिना । एकदा रुक्मिणीसत्यभामासंनिधौ वासुदेवाग्रतो नारदः पारिजातमञ्जरीम् अदृश्यमानश्चिक्षेप । अथ वासुदेवकरस्थितायां तस्यां मञ्जर्यां समकालमेव भार्याद्वयेनाभ्यर्थितम् । पारिजातमञ्जरी तु रुक्मिण्यै दत्तेति सत्यभामयाऽभिमानपरीतया तया निगदितो गदाधरो यस्येयं मञ्जरी तेन वृक्षेण विना मदन्तिकं नाऽऽगन्तव्यं भवतेति । अथ सत्यभामाभिमानविनोदनाय पारिजात-

(१) कानी. ११।२१ ; उनिसा. अथोपेक्ष्या (आस्ते प्रेक्ष्या).

हरणार्थे वासुदेवेनाधिकबलेनाभियुक्तो देवराजः पश्यन्नपि भज्यमानं प्रियतमं नन्दनवनम् उपेक्षासनमङ्गीचकारेति पौराणिकी वार्ता । उनिसा.

**[१]उपेक्षितस्य वाऽन्यैस्तु कारणेनैव केनचित् ।**
**आसनं रुक्मिण इव तद्ध्युपेक्षासनं स्मृतम् ॥**

(१) द्वितीयमाह— उपेक्षितस्य वाऽन्यैरिति । यदा द्वयोरमित्रयोः परस्परमभियुक्तिकृतोः कार्यसंभववशात् यथास्वं पक्षमाश्रितेषु शत्रुविजिगीषुसमवायार्थिषु ताभ्याम् 'गौरयुक्तोऽयम्' इत्यनेन प्रकारेणोभाभ्यामप्युपेक्षितो न समवेतः, तदाऽस्योपेक्षितस्य यदासनं तदुपेक्षासनम् । रुक्मिण इवेति । कुरुपाण्डवानामुद्यमे यथाप्रयोजनं द्विधा समाश्रितेषु सामवायिकेषु सर्वक्षत्रियेषु रुक्मी क्रथकैशिके-ष्वेकाक्षौहिणीपरिवारः सन् शत्रुभ्यो भयात् कुरुपाण्डवान् साहाय्यदानेच्छया प्रत्येकमुपगम्योवाच— 'यदि भीताः स्थ साहाय्यं करिष्यामि रणे' इति, तैश्चासौ मन्दप्रयोजनोऽयं युयुत्सुरित्युपेक्षितो निवृत्याऽऽसितवान् । जम.

(२) द्वितीयमुपेक्षासनमाह— उपेक्षितस्येति । अन्येन स्नेहादिरूपेण केनचित् कारणेन उपेक्षितस्य उपेक्षा जाता अस्य, उपेक्षां कुर्वत इत्यर्थः । वासुदेवेन रुक्मिणीहरणे क्रियमाणे परिभवादिकमङ्गीकृत्य स्नेहात् रुक्मिणीभ्रात्रा रुक्मिणा उपेक्षासनं कृतमिति पौराणिक-मितिवृत्तमत्र निदर्शनम् । 'उपेक्षितस्य चान्येन' इत्यत्र 'उपेक्षितस्य चान्यैस्तु' इति मुद्रितपाठस्तु न समीचीनः । उनिसा.

## शुक्रनीतिः

आसनलक्षणम्, आसनकालः, संधायासनम्

**[२]स्वरक्षणं शत्रुनाशो भवेत्स्थानात् तदासनम् ॥**

स्थानात् यस्मात् अवस्थानात्, उपेक्षणादित्यर्थः, स्वरक्षणं शत्रुनाशश्च भवेत् तत् आसनम् । शुनीटी.

**यन्त्रास्त्रैः शत्रुसेनाया भेदो येभ्यः प्रजायते ।**
**स्थलेभ्यस्तेषु संतिष्ठेत् ससैन्यो ह्यासनं हि तत् ॥**

येभ्यः स्थलेभ्यः यन्त्रास्त्रैः नालिकास्त्रैः शत्रुसेनायाः भेदः प्रजायते संभवति, ससैन्यः सन् तेषु स्थलेषु संतिष्ठेत्, तद्धि तदेव आसनम् । शुनीटी.

**तृणान्नजलसंभारा ये चान्ये शत्रुपोषकाः ।**
**सम्यङ्निरुध्य तान् यत्नात् परितश्चिर-मासनात् ॥**
**विच्छिन्नविविधासारं* प्रक्षीणयवसेन्धनम् ।**
**विगृह्यमाणप्रकृतिं कालेनैव वशं नयेत् ॥**

तृणानि, अन्नानि, जलानि, संभाराः प्रयोजनीय-द्रव्याणि च, ये च अन्ये शत्रुपोषकाः शत्रूणां पोषण-कारिणः, चिरं दीर्घकालं व्याप्य आसनात् अवस्थानात् परितः सर्वतः यत्नात् तान् शत्रुपोषकान् सम्यक् निरुध्य विच्छिन्नाः विविधाः आसाराः धारासंपाताः यस्मिन् तम्, जलबिन्दुरहितमित्यर्थः, प्रक्षीणानि यवसानि तृणानि इन्ध-नानि काष्ठानि च यस्मिन् तथोक्तम्, तथा विगृह्य-माणाः संग्रामव्यासक्ताः प्रकृतयो यस्य तादृशं देशं कालेन वशं नयेत् । शुनीटी.

**अरेश्च विजिगीषोश्च विग्रहे हीयमानयोः ।**
**संधाय यदवस्थानं संधायासनमुच्यते ॥**

विग्रहे युद्धे हीयमानयोः अरेः शत्रोः विजिगीषोश्च संधाय परस्परं संधिं कृत्वा यत् अवस्थानं तत् संधाया-सनम् उच्यते । शुनीटी.

## नीतिवाक्यामृतम्

आसनलक्षणम्, आसनकालः

**[१]उपेक्षणमासनम् ॥**

अथाऽऽसनस्वरूपमाह— उपेक्षणमिति । यदा शत्रु-रागन्तुमुद्यतो भवति तदा तस्य उपेक्षणं कर्तव्यम् । सहसा एव स्थानत्यागं (न) कुर्यात् । किं वा तेन सह युद्ध-शक्तिः किं वा नास्ति । नीवाटी.

(१) कानी. ११।२२ ; उनिसा. वान्यैस्तु (चान्येन).
(२) शुनी. ४।७।२३७, २८५–२८८.

* अशुद्धोऽयं पाठः सर्वेषु मुद्रितपुस्तकेषु । वस्तुतः समानाक्षरकामन्दकीयानुरोधेन 'वि(वी)वधासारम्' इत्येव शुद्धः पाठः संभवति ।

(१) नीवा. २९।४६, ५२.

**न मां परो हन्तुं नाहं परं हन्तुं शक्त इत्यासीत यद्यायत्यामस्ति कुशलम् ॥**

अथान्यदपि विजिगीषुणा यत्कर्तव्यं तदाह— नेति । आयत्यां परिणामे यदि शत्रोः कुशलं ज्ञायते तद्विग्रहं न कुर्यात् । यद्येवं मन्यते 'परो मां न हन्ति, नाहं परं हनिष्यामि' इति, संधिद्वारेण वर्तितव्यमिति । तथा च जैमिनिः— 'न विग्रहं स्वयं कुर्यादुदासीने परे स्थिते । बलाढ्येनापि यो न स्यादायत्यां चेष्टितं शुभम् ॥' ।

नीवाटी.

## युक्तिकल्पतरुः

चतुर्विधमासनम्

[1]अन्यद्वारा विपक्षं तु विगृह्याऽऽसनमुच्यते ।
अरिं विगृह्य वा स्थानं विग्रहासनमुच्यते ॥
अन्यैश्च विजिगीषोश्च विग्रहे हीयमानयोः ।
संधाय यदवस्थानं संधायासनमुच्यते ॥
उदासीने मध्यमे वा समाने प्रतिशङ्कया ।
एकीभूय व्यवस्थानं संभूयासनमुच्यते ॥
सर्वेषां प्रीतिजननं निजराष्ट्रस्य रक्षणम् ।
एतत् प्रीत्यासनं नाम सर्वासनमहत्तरम् ॥

## मानसोल्लासः

दश आसनप्रकाराः

[2]अवृष्ट्या तोयरहिते दुर्भिक्षे मरकान्विते ।
परेषां दुःस्थिते देशे नैव यायात् कथंचन ॥
परस्परविरोधेन क्षीयमाणेषु शत्रुषु ।
तद्विनाशो भवेद् यावत् तावत् तिष्ठतु बुद्धिमान् ॥
स्वस्थासनमुपेक्षाख्यं मार्गरोधासनं तथा ।
दुर्गसाध्यासनं चैव राष्ट्रस्वीकरणासनम् ॥
रमणीयासनं चान्यत् तथा च निकटासनम् ।
दूरमार्गासनं चैव प्रलोभाख्यं तथैव च ॥
पराधीनासनं चैतद् दशमं परिकीर्तितम् ।
इतोऽधिकं न दृश्येत नीतिज्ञैरन्यदासनम् ॥
निष्कण्टके तथा राज्ये संहते वैरिमण्डले ।
स्वस्थाने या स्थिती राज्ञां स्वस्थासनमिति स्मृतम् ॥
यदस्माभिरनुष्ठेयं दैवेन क्रियते हि तत् ।
उग्रदण्डप्रयोगाच्च व्यसनाद् वृत्त्यदर्शनात् ॥
दुर्भिक्षान्मरकापाताद् विनाशं यास्यति ध्रुवम् ।
इत्युपेक्ष्य नृपस्थानमुपेक्ष्यासनमुच्यते ॥
नद्याः पूर्णप्रवाहेण गमनं रोधितं यदि ।
तेन दोषेण यत् स्थानं मार्गरोधासनं स्मृतम् ॥
दुर्गं ग्रहीतुमुद्युक्तो वारयन् यवसादिकम् ।
तदुपान्ते वसेद् यस्तु दुर्गसाध्यासनं हि तत् ॥
बलादुपार्जिते राष्ट्रे वशार्थं यत्र तिष्ठति ।
तत् स्थानं कथितं राज्ञां राष्ट्रस्वीकरणासनम् ॥
विजिगीषुर्नृपो गत्वा रिपुं हत्वा रणाङ्गणे ।
रम्यां वसतिमालोक्य यत्र तिष्ठति सानुगः ॥
यवसेन्धनभूयिष्ठे जलधान्यसमन्विते ।
तत् स्थानं नीतितत्त्वज्ञै रमणीयासनं स्मृतम् ॥
दूरस्थस्य रिपो राजा विनाशाय समुद्यतः ।
समीपे यत् स्थितिं कुर्यात् तद् भवेन्निकटासनम् ॥
दूरदेशं नृपो गत्वा कृत्वा कार्यमशेषतः ।
विज्ञाय स्वपुरं दूरं यत्र तिष्ठत्यनाकुलम् ॥
वर्षर्तुव्यत्ययो यावच्छरत्कालस्य संभवः ।
तावद् यदुचितं स्थानं दूरमार्गासनं हि तत् ॥
हस्त्यश्वधनरत्नानि दुर्गं राष्ट्रं तथैव च ।
किंचित्कालं स्थितिः कार्या रिपुं हत्वा ददामि ते ॥
इति प्रलोभितोऽन्येन यत्र तिष्ठति भूमिपः ।
तत् प्रलोभासनं नाम कथितं नीतिवेदिभिः ॥
मासे पक्षे दशाहे वा षडहे पञ्चरात्रके ।
प्राभृतं ते ददामीति प्रलोभ्य स्थापयेन्नृपम् ॥
आशया धार्यमाणस्तु तत्र तिष्ठति यच्चिरम् ।
प्रलोभासनमेवं वा तदाख्यातं मनीषिभिः ॥
स्नेहाद्वा वैरिभावाद्वा गन्तुं देशं स्वकं न यः ।
लभते तस्य तत् स्थानं पराधीनासनं स्मृतम् ॥

---

(१) युक. १२–१३ । ८६–८९.
(२) मासो. २।९२८–९४८.

## कौटिलीयमर्थशास्त्रम्

द्वैधीभावलक्षणम्, द्वैधीभावकाल:

***[1]संधिविग्रहोपादानं द्वैधीभावः ॥**
**सहायसाध्ये कार्ये द्वैधीभावं गच्छेत् ॥**

द्वैधीभावान्तर्गताः संधयः विक्रमाश्च

**[2]विजिगीषुर्द्वितीयां प्रकृतिमेवमुपगृह्णीयात् । सामन्तं सामन्तेन संभूय यायात् । यदि वा मन्येत– 'पार्ष्णिं मे न ग्रहीष्यति, पार्ष्णिग्राहं वारयिष्यति, यातव्यं नाभिसरिष्यति, बलद्वैगुण्यं मे भविष्यति, वीवधासारौ मे प्रवर्तयिष्यति, परस्य वारयिष्यति, बह्वाबाधे मे पथि कण्टकान् मर्दयिष्यति, दुर्गाटव्यपसारेषु दण्डेन चरिष्यति, यातव्यमविषह्ये दोषे संधौ वा स्थापयिष्यति, लब्धलाभांशो वा शत्रूनन्यान् मे विश्वासयिष्यति' इति ॥**

'द्वैधीभाविकाः संधिविक्रमाः' इति सूत्रम् । संधिविग्रहोपादानं द्वैधीभावः । तत्र कर्तव्याः संधयो विक्रमाश्चाभिधीयन्ते इति सूत्रार्थः । परिपणितादिसंधयो ह्युक्ताः पूर्वाध्याये । तेषां द्वैधीभाविकानामनुष्ठानकारणान्यत्र निरूप्यन्ते ।

विजिगीषुरिति । सः द्वितीयां प्रकृतिं स्वविषयानन्तरं शत्रुम् उपगृह्णीयात् साहाय्यार्थं स्वीकुर्यात् । कस्मिन् कार्ये साह्यार्थम् ? तत्राऽऽह– सामन्तं सामन्तेन संभूय यायादिति । यातव्यं भूम्यनन्तरं पृष्ठपार्श्वभूम्यनन्तरेण सहैकार्थ्यमासाद्य यायात् । संभूययानस्य प्रयोजनान्याह– यदि वा मन्येत पार्ष्णिं मे न ग्रहीष्यतीत्यादि । उपगृहीतो हि सामन्तो विजिगीषोः पार्ष्णिग्रहणापकारं न करिष्यतीत्येकं प्रयोजनम् । पार्ष्णिं गृह्णन्तमन्यं शत्रुं वारयिष्यतीति द्वितीयम् । यातव्यस्य शत्रोः पक्षं नानुप्रवेक्ष्यतीति तृतीयम् । उपगृहीतसामन्तबलेन सहितं विजिगीषोर्बलं द्विगुणं भविष्यतीति चतुर्थम् । उपगृहीतो विजिगीषोः स्वदेशधान्याद्यायतिलक्षणं वीवधं सुहृद्बलागमनं च न वारयिष्यतीति पञ्चमम् । परस्य च वारयिष्यतीति षष्ठम् । विजिगीषोः प्रस्थितस्य पथि गतिप्रतिबन्धकान्, प्रतिरोधकान् स मर्दयिष्यतीति सप्तमम् । दुर्गेषु काननेषु च विजिगीषुबलमपसरणप्रसङ्गेषु सामन्तः स्वसैन्यसहितः समन्ताच्चरन् पराबाधाद्रक्षिष्यतीत्यष्टमम् । असहनीयानर्थापाते यातव्येन सह संधिं वा घटयिष्यतीति नवमम् । विजिगीषुसकाशाल्लाभांशं यथासंभाषितं लब्ध्वा सामन्तो विजिगीषावविसंवादित्वख्यापनेन शत्रूनन्यान् विश्वस्तान् करिष्यतीति दशमम् । इत्येवं पार्ष्णिशुद्ध्यादीनि दश प्रयोजनानि संभूययाने भवन्ति ।

श्रीमूला.

**द्वैधीभूतो वा कोशेन दण्डं दण्डेन कोशं सामन्तानामन्यतमाल्लिप्सेत ॥**

संभूतौ चेद्विजिगीषुरविश्वस्तस्तदा किं कुर्यात् ? तत्राऽऽह– द्वैधीभूतो वेत्यादि । द्वैधीभावमास्थितः सामन्तानां पृष्ठपार्श्वगतानां राज्ञाम् अन्यतमात् कोशेन दण्डं लिप्सेत दण्डाल्पत्वे, दण्डेन कोशं लिप्सेत कोशाल्पत्वे । श्रीमूला.

**तेषां ज्यायसोऽधिकेनांशेन समात् समेन हीनाद्धीनेनेति समसंधिः । विपर्यये विषमसंधिः । तयोर्विशेषलाभादतिसंधिः ॥**

संभूययाने तदपेक्षितांशादिलाभे च संधेरपेक्षणात् तद्भेदानाह– तेषामित्यादि । सामन्तानां मध्ये बलाधिकात् दण्डकोशलिप्सायामधिकांशदानसंभाषणेन संधिरेकः, समानबलात् समानांशदानसंभाषणेन संधिरपरः, हीनबलात् हीनांशदानसंभाषणेन संधिरन्य इत्येवं त्रिप्रकारः

* वचनद्वयस्य व्याख्यानम् 'षाड्गुण्यम्– सामान्यविचारः' इत्यस्मिन् प्रकरणे ( पृ. २०५५ ) द्रष्टव्यम् ।

( १ ) कौ. ७।१. ( २ ) कौ. ७।७.

समसंधिः । विपर्यये विषमसंधिरिति । बलाधिकात् समेनांशेन हीनेनांशेन वेति प्रथमप्रकारविपर्यये द्वौ, समात् अधिकेन हीनेन वेति द्वितीयप्रकारविपर्यये द्वौ, हीनात्समेनाधिकेन वेति तृतीयप्रकारविपर्यये द्वौ इति षट्प्रकारो विषमसंधिरित्यर्थः । तयोर्विशेषलाभादतिसंधिरिति । समसंधिभेदानां विषमसंधिभेदानां चेत्याहत्य नवानां प्रत्येकं विशेषलाभात् संभाषिताभ्यधिकलाभादतिसंधिर्नाम नवविधो निर्वर्तते । तदेवमष्टादश संधयो द्वैधीभाविकाः । श्रीमूला.

**व्यसनिनमपायस्थाने सक्तमनर्थिनं वा ज्यायांसं हीनो बलसमेन लाभेन पणेत । पणितस्तस्यापकारसमर्थो विक्रमेत । अन्यथा संदध्यात् ॥**

इह हि लाभास्त्रयः— बलसमः बलसमादधिकः बलसमाद्धीन इति । तन्निमित्तान् हीनस्य ज्यायसा संधौ संभवतो भेदानाह— व्यसनिनमिति । गुणप्रातिलोम्यवन्तम्, अपायस्थाने सक्तं शरीरनाशादिहेतौ रतम्, अनर्थिनं वा एकतोनर्थोभयतोनर्थयुक्तं वा ज्यायांसं हीनः बलसमेन लाभेन दण्डानुरूपेणांशेन पणेत संदध्यात् । ज्यायसोऽधिकांशेन समसंधौ कर्तव्येऽप्ययं विषमसंधिः क्रियते विजिगीषुणा, व्यसनाद्यभिभूते तस्मिन्नवज्ञानादिति बोद्धव्यम् । अवज्ञातस्य कृत्यमाह— पणितस्तस्येत्यादि । तथा पणितो ज्यायान् स्वावज्ञातुर्विजिगीषोरपकारे शक्तश्चेत् स्वव्यसनादिप्रशमनपूर्वं विगृह्णीयात्, अपकाराशक्तौ तु संदध्यात् । स एष बलसमलाभसंधिः । श्रीमूला.

**एवंभूतो हीनशक्तिप्रतापपूरणार्थं संभाव्यार्थाभिसारी मूलपार्ष्णित्राणार्थं वा ज्यायांसं हीनो बलसमाद्विशिष्टेन लाभेन पणेत । पणितः कल्याणबुद्धिमनुगृह्णीयात् । अन्यथा विक्रमेत ॥**

हीनस्य ज्यायसा सह विषमसंधिमुक्त्वा समसंधिमाह— एवंभूत इति । व्यसनाद्यभिभूतो हीनः हीनशक्तिप्रतापपूरणार्थं हीनयोरात्मशक्तिप्रतापयोः पूरणार्थम्, संभाव्यार्थाभिसारी मूलपार्ष्णित्राणार्थं वा— लभ्यत्वेन निश्चितप्रायमर्थं साधयितुमभियातुरात्मनो दुर्गस्य पार्ष्णेश्च रक्षणार्थं वा ज्यायांसं हीनो बलसमात् विशिष्टेन अधिकेन लाभेन पणेत, अर्थात् समसंधिं 'ज्यायसोऽधिकेनांशेन समसंधिः' इत्युक्तपूर्वं कुर्यात् । पणितस्य ज्यायसः कर्तव्यमाह— पणित इत्यादि । पणितो ज्यायान् पणमानं हीनं यद्यपचिकीर्षारहितं पश्येत् तदाऽनुगृह्णीयात्, इतरथा विगृह्णीयात् । स एष बलसमाधिकलाभसंधिः । श्रीमूला.

**जातव्यसनप्रकृतिरन्ध्रमुपस्थितानर्थं वा ज्यायांसं हीनो दुर्गमित्रप्रतिस्तब्धो वा ह्रस्वमध्वानं यातुकामः शत्रुमयुद्धमेकान्तसिद्धिं लाभमादातुकामो बलसमाद्धीनेन लाभेन पणेत । पणितस्तस्यापकारसमर्थो विक्रमेत । अन्यथा संदध्यात् ॥**

ज्यायसा सह हीनस्य बलसमाद्धीनेन लाभेन संधिमाह— जातव्यसनप्रकृतिरन्ध्रमिति । उपजातमृगयादिव्यसनम् उपजातक्रुद्धलुब्धभीतादिप्रकोपं च उपस्थितानर्थं वा एकतोनर्थोभयतोनर्थयुक्तं वा ज्यायांसं दुर्गमित्रप्रतिस्तब्धो वा विशिष्टदुर्गमित्रयोगगर्वितो वा, ह्रस्वम् अध्वानं शत्रुं यातुकामो वा, अयुद्धमेकान्तसिद्धिं लाभमादातुकामः युद्धं विनैव निश्चितसिद्धिं लाभं जिघृक्षुर्वा बलसमाद्धीनेन लाभेन पणेत । पणितो ज्यायान् तस्यापकारसमर्थो विक्रमेत हीनलाभपणनकृतात्मावज्ञानस्य हीनस्यापकारे शक्तश्चेत् विगृह्णीयात्, अन्यथा संदध्यात् अपकारासामर्थ्ये संधिं कुर्यात् । श्रीमूला.

**अरन्ध्रव्यसनो वा ज्यायान् दुरारब्धकर्माणं भूयः क्षयव्ययाभ्यां योक्तुकामो दूष्यदण्डं प्रवासयितुकामो दूष्यदण्डमावाहयितुकामो वा पीडनीयमुच्छेदनीयं वा हीनेन व्यथयितुकामः संधिप्रधानो वा कल्याणबुद्धिर्हीनं लाभं प्रतिगृह्णीयात् । कल्याणबुद्धिना संभूयार्थं लिप्सेत । अन्यथा विक्रमेत ॥**

हीनमपि लाभं हीनात् कार्यविशेषवशेन ज्यायान् पणितः स्वीकुर्यादित्याह— अरन्ध्रव्यसनो वेति । प्रकृतिरन्ध्रमृगयादिव्यसनरहितः ज्यायान् दुरारब्धकर्माणम्

अदेशकालोपक्रान्तकर्माणं शत्रुं भूयः दुरारम्भोपनतक्षयव्ययातिरेकेण क्षयव्ययाभ्यां युग्यपुरुषनाशधनव्ययाभ्यां योक्तुकामो वा, दूष्यदण्डं प्रवासयितुकामो वा स्वदूष्यबलं विध्वंसयितुमिच्छुर्वा, दूष्यदण्डम् आवाहयितुकामो वा परदूष्यबलमानेतुमिच्छुर्वा, पीडनीयमुच्छेदनीयं वा हीनेन व्यथयितुकामो वा उभयतः पीडनयोग्यम् उन्मूलनीयं वा शत्रुं हीनेन सहायभूतेन पीडयितुमुच्छेत्तुं च वाञ्छन् वा संधिप्रधानः बह्वपायात् विग्रहात् संधिरेव श्रेयानिति मन्यमानः कल्याणबुद्धिः हीनं लाभं हीनेन पणमानेन दीयमानं प्रतिगृह्णीयात् । कल्याणबुद्धिना संभूय अदुष्टधिया हीनेन सहैकार्थीभूय अर्थं लिप्सेत साहाय्यमाचरेत् । अन्यथा हीनस्य दुष्टबुद्धित्वे विक्रमेत । स एष बलसमहीनलाभसंधिः । श्रीमूला.

**एवं समः सममतिसंदध्यादनुगृह्णीयाद्वा ॥**

एवं हीनस्य ज्यायसा सह संधावुक्तान् प्रकारान् समस्य समेन सह संधावतिदिशति— एवं समः सममतिसंदध्यादनुगृह्णीयाद्वेति । हीनज्यायसोः संधिषु दुष्टबुद्धित्वकल्याणबुद्धित्वापेक्षौ अतिसंधानानुग्रहौ यथा भवतस्तथा समयोरपि संधौ तौ द्रष्टव्याविव्यर्थः । श्रीमूला.

**परानीकस्य प्रत्यनीकं मित्राटवीनां वा शत्रोर्विभूमीनां देशिकं मूलपार्ष्णित्राणार्थं वा समः समबलेन लाभेन पणेत । पणितः कल्याणबुद्धिमनुगृह्णीयात् । अन्यथा विक्रमेत ॥**

अथ समयोः संधौ बलसमेन लाभेन पणनमाह— परानीकस्येति । शत्रुबलस्य मित्राटवीनां वा शत्रुसंबन्धिनां मित्राटविकानां च प्रत्यनीकं प्रतियोधनशक्तं शत्रोः विभूमीनां शैलगुहादीनां देशिकं प्रचारोपदेष्टारम् अर्थात् समं राजानं मूलपार्ष्णित्राणार्थं वा स्थानीयस्य पृष्ठस्य च रक्षार्थं वा समः समबलेन लाभेन बलसमलाभेन पणेत । पणितस्य कर्तव्यमाह— पणितः कल्याणबुद्धिमित्यादि । श्रीमूला.

**जातव्यसनप्रकृतिरन्ध्रमनेकविरुद्धमन्यतो लभमानो वा समः समबलाद्धीनेन लाभेन पणेत । पणितस्तस्यापकारसमर्थो विक्रमेत । अन्यथा संदध्यात् ॥**

बलसमाद्धीनेन लाभेन पणनमाह— जातव्यसनप्रकृतिरन्ध्रमिति । तथाभूतम् अनेकविरुद्धं बहुविरोधिनम् अर्थात् समं समः समबलाद्धीनेन लाभेन बलसमहीनलाभेन पणेत । अन्यतो लभमानो वा समसाह्येन विनाऽपीप्सितकार्यसिद्धिं प्राप्स्यन् वा समः समबलाद्धीनेन लाभेन पणेत । अपरा व्याख्या— हीनलाभपणनीयसामन्तान्तरसौलभ्ये सति समबलाद्धीनेन लाभेन पणेतेति । पणितस्तस्यापकारसमर्थ इत्यादि गतार्थम् । श्रीमूला.

**एवंभूतो वा समः सामन्तायत्तकार्यः कर्तव्यबलो वा बलसमाद्विशिष्टेन लाभेन पणेत । पणितः कल्याणबुद्धिमनुगृह्णीयात् । अन्यथा विक्रमेत ॥**

बलसमादधिकेन लाभेन पणनमाह— एवंभूतो वेति । जातव्यसनप्रकृतिरन्ध्रत्वानेकविरुद्धत्वयुक्तः समः सामन्तायत्तकार्यः सामन्तसाह्यसाध्यकार्यः कर्तव्यबलो वा उत्पाद्यदण्डो वा सन् बलसमात् विशिष्टेन अधिकेन लाभेन पणेत । पणितः कल्याणेत्यादि प्रतीतार्थम् ।

श्रीमूला.

**जातव्यसनप्रकृतिरन्ध्रमभिहन्तुकामः स्वारब्धमेकान्तसिद्धिं वाऽस्य कर्मोपहन्तुकामो मूले यात्रायां वा प्रहर्तुकामो यातव्याद् भूयो लभमानो वा ज्यायांसं हीनं समं वा भूयो याचेत । भूयो वा याचितः स्वबलरक्षार्थं दुर्धर्षमन्यदुर्गमासारमटवीं वा परदण्डेन मर्दितुकामः प्रकृष्टेऽध्वनि काले वा परदण्डं क्षयव्ययाभ्यां योक्तुकामः परदण्डेन वा विवृद्धस्तमेवोच्छेत्तुकामः परदण्डमादातुकामो वा भूयो दद्यात् ॥**

विजिगीषुणा पण्यमानस्य सामन्तस्य हीनत्वज्यायस्त्वाद्यवधीरणेन बहुतरं लाभं याचमानस्य विशेषलाभे निमित्ते प्रवर्तमानमतिसंधिमाह— जातव्यसनप्रकृतिरन्ध्रमिति । तथाभूतं ज्यायांसं हीनं समं वेत्यग्रिमेण संबन्धः । अभिहन्तुकामः, स्वारब्धं समुचितदेशकालप्रयुक्तम् अत एव एकान्तसिद्धिं निश्चितसिद्धिकम् अस्य विजिगीषोः

कर्म उपहन्तुकामो वा, यात्रायां मूले प्रहर्तुकामो वा विजिगीषोर्याने सति तदीयं दुर्गादिकमवस्कन्दितुमिच्छुर्वा, यातव्यात् भूयो लभमानो वा विजिगीषुदित्सितादभ्यधिकमर्थं तदीययातव्यसकाशाल्लप्स्यमानो वा अर्थाद्धीनो ज्यायान् समो वा क्रमेण ज्यायांसं हीनं समं वा भूयो याचेत हीनत्वाद्यनादरेणाधिकमर्थं यथेष्टं याचेत। एष पणितस्य विधिः। पणितुर्याचितस्य विधिमाह— भूयो वा याचित इति। बहुतरं द्रव्यं याचितः पणमानः स्वबलरक्षणार्थं भूयो दद्यात् याचितमखिलं याचमानाय प्रयच्छेत्। प्रयोजनान्तराण्याह— दुर्धर्षं कृच्छ्रधर्षणीयम् अन्यदुर्गं शत्रोर्दुर्गम् आसारं तदीयं मित्रबलम् अटवीं तदीयमाटविकं परदण्डेन पण्यमानसामन्तबलेन मर्दयितुकामो वा, प्रकृष्टेऽध्वनि दूरविप्रकृष्टे पथि तथाभूते काले परदण्डं पण्यमानस्य बलम्, क्षयव्ययाभ्यां दूराध्वगतागत—चिरकालव्यापारणनिमित्तकाभ्यामित्यार्थम्, योक्तुकामो वा, परदण्डेन वा विवृद्धस्तमेवोच्छेत्तुकामः यातव्यस्य गजतुरगादिबलेन यातव्यजयोत्तरकाललब्धव्येन संवृद्धबलो भूत्वा लाभातिशयमात्मदत्तपूर्वं पण्यमानस्य प्रत्याहरिष्यामीति मन्यमानो वेत्यर्थः, परदण्डमादातुकामो वा यातव्यबलं पण्यमानसाद्व्येन ग्रहीतुकामो वा भूयो दद्यात्। श्रीमूला.

**ज्यायान् वा हीनं यातव्यापदेशेन हस्ते कर्तुकामः परमुच्छिद्य वा तमेवोच्छेत्तुकामस्त्यागं वा कृत्वा प्रत्यादातुकामो बलसमाद्विशिष्टेन लाभेन पणेत। पणितस्तस्यापकारसमर्थो विक्रमेत। अन्यथा संदध्यात्। यातव्यसंहितो वा तिष्ठेत्। दूष्यामित्राटवीदण्डं वाऽस्मै दद्यात्॥**

इत्थं भूयोयाचनतत्प्रदाननिबन्धनमतिसंधिमुक्त्वा ज्यायसो हीनेन सह संधित्रयमाह— ज्यायान् वा हीनमिति। ज्यायान् हीनं बलसमात् विशिष्टेन अधिकेन लाभेन पणेत। कथंभूतः? यातव्यापदेशेन हस्ते कर्तुकामः यातव्योच्छेदार्थसर्वबलसंदोहसंनाहव्याजेन हीनं ग्रहीष्यामीत्यभिसंधियुक्तः, परमुच्छिद्य वा तमेवोच्छेत्तुकामः यातव्योन्मूलनानन्तरं हीनमप्युन्मूलयितुकामो वा, त्यागं वा कृत्वा प्रत्यादातुकामः विशिष्टलाभदानं कृत्वा पश्चात् तदपाजिहीर्षुर्वा। अत्र 'ज्यायान् वा हीनम्' इत्यस्य स्थाने 'ज्यायांसं वा हीनं वा' इत्यपपाठः। पणमानविधिमुक्त्वा पणितविधिमाह— पणितस्तस्येत्यादि। यातव्यसंहितो वा तिष्ठेत् पणितो यातव्येन सह संधिं कृत्वा वा स्थानमनुतिष्ठेत्। दूष्यामित्राटवीदण्डं वाऽस्मै दद्यात् दूष्यामित्राटविकबलं वा स्ववध्यं ज्यायसे पणमानाय दद्यात् संध्यर्थम्। श्रीमूला.

**जातव्यसनप्रकृतिरन्ध्रो वा ज्यायान् हीनं बलसमेन लाभेन पणेत। पणितस्तस्यापकारसमर्थो विक्रमेत। अन्यथा संदध्यात्॥**

बलसमाधिकलाभेन संधिमुक्त्वा बलसमलाभेन संधिमाह— जातव्यसनप्रकृतिरन्ध्रो वा ज्यायानित्यादि। सुबोधम्। श्रीमूला.

**एवंभूतं वा हीनं ज्यायान् बलसमाद्धीनेन लाभेन पणेत। पणितस्तस्यापकारसमर्थो विक्रमेत। अन्यथा संदध्यात्॥**

बलसमाद्धीनेन लाभेन संधिमाह— एवंभूतं वा हीनमित्यादि। एवंभूतं जातव्यसनप्रकृतिरन्ध्रम्। शेषं सुगमम्। श्रीमूला.

**आतो बुध्येत पणितः पणमानश्च कारणम्।**
**ततो वितर्क्योभयतो यतः श्रेयस्ततो व्रजेत्॥**

अध्यायान्ते श्लोकमाह— आत इति। आतः, अव्ययमिदमतःशब्दस्यार्थे। लाभपणनतदङ्गीकरणनिमित्तवैचित्र्याद्धेतोः पणितः पणमानश्च कारणं बुध्येत जानीयात्। ततः कारणबोधानन्तरम् उभयतो वितर्क्य 'संधिर्वा श्रेयान् विग्रहो वा' इति संप्रधार्य यतः श्रेयस्ततो व्रजेत् यस्मिन्नुपादीयमाने श्रेयः पश्यति तमनुतिष्ठेत्। अत्र 'आतः' इत्यस्य स्थाने 'आदौ' इति क्वचित्पाठः। श्रीमूला.

## चाणक्यसूत्राणि

द्वैधीभावकालः

**[1]द्वयोरपीर्ष्यतोर्द्वैधीभावं कुर्वीत॥**

---

(१) चासू. ६८.

## मनुः

द्विविधो द्वैधीभावः

**'बलस्य स्वामिनश्चैव स्थितिः कार्यार्थसिद्धये ।**
**द्विविधं कीर्त्यते द्वैधं षाड्गुण्यगुणवेदिभिः ॥**

( १ ) बलस्य स्थितिः स्वामिनश्च भेदेन । दुर्गस्वामिनः स्वल्पेन बलेन, सेनापतेरन्यत्र महता बलेन युक्तस्य । अथवा बलशपथानुग्रहार्थः कश्चित्कर्तव्यो हिरण्यादिलाभापेक्षया परस्त्वधिकेनाऽऽशु । द्वैधीभावो नामायमुपायः । तस्यैतदेव रूपं यत् द्विधा स्थितिर्बलस्वामिनोः । अत्रैवंरूपस्य तस्यापरं द्वैधं वक्तव्यम् । न च तदनेन किंचिदुच्यते । केवलं बलस्य स्वामिनश्च स्थितिरेतत् द्विविधम् । तत्र वक्तव्यम्— अयं द्वैधीभावः, तस्येदं द्वैविध्यम् । उच्यते— सामर्थ्यलभ्यमेतत् परानुग्रहार्थमेतत्कर्तव्यं स्वकार्यार्थे चैतदिति । एष द्विधाभावस्य द्वैधीभावः । मेधा.

( २ ) कार्यसिद्ध्यर्थं बलस्य हस्त्यादेः सेनापत्याद्यधिष्ठितस्यावस्थानमेकत्र कार्यम्, राज्ञश्च बलैकदेशयुक्तस्य दुर्गावस्थानम्, इत्येवं द्विप्रकारं संध्यादिगुणषट्कोपकारज्ञैः द्वैधं कीर्त्यते एकेन संधिरन्येन सह विग्रहः । प्रत्येकमेवंरूपतयाऽवस्थानमित्येवं द्वैधस्यापि पुनर्द्वैविध्यम् ।

* गोरा.

( ३ ) बलस्य सेनापत्यधिष्ठितस्य पुरोवस्थानम्, स्वामिनस्तु सैन्यैकदेशेन यानम्, इत्येकं द्वैधम् । अपरमेतद्विपर्ययात् तथा । षड्गुणस्य ( ? षाड्गुण्यस्य ) गुणसमुदायस्य गुणः प्रयोजकता । मवि.

( ४ ) बलमत्र षडात्मकम्, स्वामिपदस्वरसात् । रार. ३३

( ५ ) द्विधा भूत्वाऽवस्थितिः द्वैधम् । तत्स्फुटयति— बलस्येति । कार्यार्थसिद्धये शत्रुवारणार्थम् । मित्रस्येत्यनुवर्तते । * मच.

( ६ ) द्वैधं द्विविधम्— दुर्गदेशेऽर्धबलेन राजावस्थानम् अर्धबलेन सेनापतिप्रयाणम्, वैपरीत्येन वाऽवस्थानं गमनं च । तदुक्तम्— बलस्येति । स्थितिः द्विधाभूय स्थितिः, द्विधास्थितेर्द्वैधशरीरान्तर्गतत्वात् । राप्र. ३२६

( ७ ) 'बलिनोर्द्विषतोर्मध्ये वाचाऽऽत्मानं समर्पयन् । द्वैधीभावेन वर्तेत काकाक्षिवदलक्षितः ॥ ' ( कानी. ११।२३ ) इति कामन्दकवचनानुगुण्यादयं श्लोको व्याख्येयः । बलस्य शत्रुभ्यामिति युक्तस्य तदीयया भावनया द्विधाभूयावस्थानं स्वामिनस्तथाऽवस्थानमिति द्विविधं द्वैधीभावः कीर्त्यते ( ? ) । नन्द.

**'मन्येतारिं यदा राजा सर्वथा बलवत्तरम् ।**
**तदा द्विधा बलं कृत्वा साधयेत् कार्यमात्मनः ॥**

( १ ) अशक्यं संधानं बलवता रुद्धस्य, दुर्गसंश्रयणं च हितम् । दुर्गे च बलावस्थापनमेव द्वैधीभावात् । स च प्रागुक्तार्थः । बलीयानेव हि व्यसने बलं द्विधा करोतीति दृश्यते । मेधा.

( २ ) सर्वप्रकारेण यदा अतिशयेन बलिनं अशक्यसाधनं शत्रुं मन्येत तदा बलैकदेशसहितो दुर्गोपाश्रयः अपरेण बलैकदेशेन तदुपघातमाचरेत् । एवं द्विधा बलं कृत्वा मित्रसंग्रहादि आत्मनः कार्यं साधयेत् ।

† गोरा.

( ३ ) सर्वथा बलवत्तरम् उपायत्रयासाध्यं च । मवि.

( ४ ) द्वैधेनावस्थानकालमाह— मन्येतेति । उक्तद्विधास्थितौ हठादरिणा नाऽऽक्रम्यते । अरिः सेनायां पतति चेत् स्वयं तीर्णस्तमाक्रमितुं शक्तः, स्वामि-

---

* ममु. गोरागतम् ।

( १ ) मस्मृ. ७।१६७; राक. ११२ कार्यार्थ (कार्यस्य); रार. ३३ पू. ; राप्र. ३२६ नश्चैव ( नो वाऽपि ) कार्यार्थ ( कार्यस ).

* शेषं गोरागतम् ।

† ममु., भाच. गोरागतम् ।

( १ ) मस्मृ. ७।१७३; राक. ११२–११३; रार. ५७; राप्र. ३२७.

न्यापतति चेत् सेनापतिस्तमाक्रमितुं शक्त इति भावः । मच.

(५) अरिं पुरः स्थितं पार्ष्णिस्थितं च । कुत एतत् ? द्विधा बलं कृत्वेति लिङ्गात् ‘ बलिनोर्द्विषतोर्मध्ये वाचाऽऽत्मानं समर्पयन् । द्वैधीभावेन वर्तेत काकाक्षिवदलक्षितः ॥ ’ इति कामन्दकवचनाच्च । नन्द.

## विष्णुधर्मोत्तरपुराणम्

द्वैधीभावलक्षणम् , द्वैधीभावकालः

**[1]बलार्धेन प्रयाणं तु द्वैधीभावः स उच्यते ॥**

द्वैधीभावः स्वबलस्य द्विधाकरणम् । तदुक्तम्— बलार्धेनेति । राप्र. ३२५

**[2]अरुद्धपार्ष्णिर्बलवान् द्वैधीभावं समाश्रयेत् ॥**

## अग्निपुराणम्

द्वैधीभावकालः

**[3]बलिनोर्द्विषतोर्मध्ये वाचाऽऽत्मानं समर्पयन् ॥**
**द्वैधीभावेन तिष्ठेत काकाक्षिवदलक्षितः ।**
**उभयोरपि संपाते सेवेत बलवत्तरम् ॥**
**यदा द्वावपि नेच्छेतां संश्लेषं जातसंविदौ ।**
**तदोपसर्पेत्तच्छत्रुमधिकं वा स्वयं व्रजेत् ॥**

## कामन्दकीयनीतिसारः

द्वैधीभावकालः , द्विविधो द्वैधीभावः

**[4]बलिनोर्द्विषतोर्मध्ये वाचाऽऽत्मानं समर्पयन् ॥**
**द्वैधीभावेन वर्तेत काकाक्षिवदलक्षितः ॥**

---

(१) विध. २।१५०।४ याणं (माणं) वः स उ (वं तदु) ; अग्नि. २३४।१९ ; राप्र. ३२५ (=) ; राकौ. २४४ प्रथमचरणे (बलार्धैर्मारणं यत्र).

(२) विध. २।१५०।७ ; अग्नि. २३४।२३ ; राप्र. ३२७ ; राकौ. २४५.

(३) अग्नि. २४०।२८–३०.

(४) कानी. ११।२३ ; वीमि. १।३४७ (=) ; नीम. ४५ वर्तेत काकाक्षि (तिष्ठेत काकादि) ; नन्द. ७।१६७, १७३.

(१) द्वैधीभावमधिकृत्य श्लोकचतुष्टयमाह— बलिनोरित्यादि । तत्र कौटिलीये द्विधा द्वैधीभाव उक्तः । तथा षाड्गुण्यसमुद्देशे उक्तः— ‘ संधिविग्रहोपादानं द्वैधीभावः ’ (कौ. ७।१) इति । अवस्था चास्योक्ता— ‘ सहायसाध्ये कार्ये द्वैधीभावं गच्छेत् ’ (कौ. ७।१) इति । तथा संश्रयवृत्तावुक्तम्— ‘ पार्श्वस्थो वा बलस्थयोरासन्नभयात् प्रतिकुर्वीत, दुर्गापाश्रयो वा द्वैधीभूतस्तिष्ठेत् , संधिविग्रहहेतुभिर्वा चेष्टेत ’ (कौ. ७।२) इति । इह तु संधिविग्रहयोरुक्तत्वात् तत्समुदायोऽपि द्वैधीभावोऽर्थादुक्त एवेति नोक्तम् (? क्तः) । इतरं तु द्वैधीभावमभिसंधायाऽऽह— बलिनोर्द्विषतोरिति । वाचाऽऽत्मानं समर्पयन् ‘ इदं राज्यमहं च त्वदर्पणः ’ इति द्वैधीभावेन उभयत्राऽऽत्मार्पणेन दुर्गापाश्रयो वर्तेत । काकाक्षिवदलक्षितः । काकदृष्टिर्ह्येकाऽप्युभयत्र गोलके वर्तमाना नोपलक्ष्यते । द्वैधीभावश्चायमुभयाश्रयः संश्रयश्चैकाश्रय इत्यनयोर्भेदः । जम.

(२) इत्थमासनमभिधाय द्वैधीभावं गुणमभिधातुमाह— बलिनोरिति । बलिनोः शक्तिप्रभृतिगुणसंपन्नयोः । वाचा वाङ्मात्रेणैव, न तु कर्मणा, आत्मानं समर्पयन् ‘ अहं त्वदीयः , यन्मम किंचित् तत् त्वदीयमेव’ इति वाक्येनैव प्रत्येकं बलिनं प्रति आत्मसमर्पणकारीति समुदितार्थः । अत एव सः अलक्षितः ‘ नायं कार्यतो मन्मित्रम् ’ इत्युभाभ्यामपि बलिभ्यामपरिज्ञातः द्वैधीभावेन आत्मरक्षार्थम् उक्तरूपवाङ्मात्रात्मसमर्पणादिरूपभावेन वर्तेत । ईदृशात्मसमर्पणे न मित्रता नापि शत्रुतेति द्वैधीभाव इत्युच्यते । काकाक्षिवदलक्षितः । काकाक्षिगोलकमेकमेव अलक्षिततया उभयोरेव चक्षुषोरधिष्ठाय दर्शनानुकूलं भवतीति कविसमयप्रसिद्धम् । उनिसा.

(३) द्वैधीभावः बलवतोर्विरुद्धयोर्द्वयोर्वचनादिना पृथक्पृथगात्मनाऽनुसरणम् । यदाहुः— बलिनोरिति । वीमि. १।३४७

**[1]थापयेद्यत्नमास्थाय संनिकृष्टतरस्तयोः ।**
**उभयोरपि संपाते सेवेत बलवत्तरम् ॥**

---

(१) कानी. ११।२४ ; उनिसा. तटस्त (तरं त).

(१) यापयेत्, आत्मानमिति शेषः। संनिकृष्टतरस्तयोः, तद्देशाक्रान्त्या द्वाभ्यामुपहितत्वात्। संपात इति। स्वदेशात् संभूय विजिगीषुदेशमभिपततोरित्यर्थः। बलवत्तरं द्वयोरेवान्यतरम्। जम.

(२) द्वैधीभावमङ्गीकुर्वतः कर्तव्यमाह— यापयेदिति। तयोः बलिनोर्मध्ये संनिकृष्टतरं बलिनं यापयेत् 'एष करोमि' इत्याशाप्रदर्शनेन कालमतिवाहयेत्। उभयोरपि विश्वासाभावात् संपाते बलवत्तरं त्राणार्थे सेवेत इति। 'संनिकृष्टतरम्' इत्यत्र 'संनिकृष्टमरिम्' इति केचित्पठन्ति। उनिसा.

**[1]यदा द्वावपि नेच्छेतां संश्लेषं जातसंविदौ।**
**तदोपसर्पेत्तच्छत्रुमधिकं वा समाश्रयेत्॥**

(१) जातसंविदाविति 'उच्छेतव्योऽयमस्माभिः, न संधातव्यः' इति कृतसंवित्कौ। तच्छत्रुमिति तयोः शत्रुम्। अधिकं वा अशत्रुमपि विशिष्टबलम्। जम.

(२) द्वैधीभावपरिज्ञाने इतिकर्तव्यतामाह— यदा द्वावपीति। यदा द्वावपि अरी जातसंविदौ वञ्चकोऽयमिति जाताविश्वासौ संश्लेषं संधिं नेच्छेतां तदा तच्छत्रुं तयोरुभयोरपि शत्रुम् अपरम् उपसर्पेत्। तदभावे आत्मत्राणार्थम् अधिकं बलवत्तरं संश्रयेत्। 'अधिकं वाऽपि संश्रयेत्' इत्यत्र 'संश्रयेद्बलवत्तरम्' इति पाठान्तरम्। उनिसा.

**[2]द्वैधीभावो द्विधा प्रोक्तः स्वतन्त्रपरतन्त्रयोः।**
**स्वतन्त्र उक्तो ह्यन्यस्तु यः स्यादुभयवेतनः॥**

(१) द्विधा प्रोक्तः स्वतन्त्रपरतन्त्रयोश्च भेदात्। तत्र स्वतन्त्र उक्तः अयमेव विजिगीषुः, तस्य स्वकर्मप्रधानत्वात्। अन्यस्तु परतन्त्रः। कोऽसावित्याह— यः स्यादुभयवेतन इति। यो याभ्यां यत्र प्रणिहितः स ताभ्यां वेतनमाददान उभयवेतनः। तयोरुभयोर्वर्तमानः परकर्मप्रधानत्वात् परतन्त्रः। जम.

(१) कानी. ११।२५; उनिसा. सर्पेत्त (सर्पेत) वा समा (वाऽपि सं).

(२) कानी. ११।२६; नीम. ४५.

(२) द्वैधीभावस्य आश्रयभेदात् भेदमाह— द्वैधीभाव इति। द्वैधीभावः गुणः आचार्येण द्विधा प्रोक्तः— एकः स्वतन्त्रः, अपरः परतन्त्रः। तयोः स्वतन्त्रपरतन्त्रयोः स्वाधीनपराधीनयोः मध्ये स्वतन्त्रः उक्तः पूर्वश्लोकैः कथितः। स्वतन्त्रं स्ववशं यथा तथा यत्र रक्षा संपद्यते तत्रैव यातीति स्वतन्त्रो द्वैधीभावः। अन्यस्तु परतन्त्रः, यः स्यात् उभयवेतनः स्वामिद्वयस्य वेतनं गृह्णन् भृत्यादिः। स्वतन्त्रस्य द्वैधीभावः परतन्त्रस्य च द्वैधीभाव इति द्वैविध्यम्। 'यः स्यादुभयवेतनः' इत्यत्र 'यः स्यादुभयचेतनः' इति मुद्रितपुस्तकपाठः। उनिसा.

## शुक्रनीतिः

द्वैधीभावस्वरूपम्, द्वैधीभावकालः

**[1]द्वैधीभावः स्वसैन्यानां स्थापनं गुल्मगुल्मतः॥**

स्वसैन्यानां गुल्मगुल्मतः प्रतिगुल्मं स्थापनं द्वैधीभावः। शुनीटी.

**अनिश्चितोपायकार्यः समयानुचरो नृपः।**
**द्वैधीभावेन वर्तेत काकाक्षिवदलक्षितम्।**
**प्रदर्शयेदन्यकार्यमन्यमालम्बयेच्च वा॥**

अनिश्चितम् उपायस्य कार्यं यस्य सः, अत एव समयानुचरः समयं प्रतीक्षमाणः नृपः काकाक्षिवत् काकस्य नेत्रमिव अलक्षितम् अन्यैरतर्कितं यथा तथा द्वैधीभावेन वर्तेत। काकस्य एकमेव नेत्रम् उभयनेत्रकार्यकारकम्, किंतु केनापि न लक्ष्यते, तद्वदिति भावः। तथा च कदाचित् अन्यकार्यं प्रदर्शयेत् कदाचित् वा अन्यमालम्बयेच्च। शुनीटी.

## योगयात्रा

द्वैधीभावस्वरूपम्

**[2]सैन्यार्धेनाभियुङ्क्ते परपुरमपि चेत्तद्द्विधा यानमुक्तम्॥**

(१) शुनी. ४।७।२३८, २९१.

(२) योया. १।१४.

## नीतिवाक्यामृतम्

द्वैधीभावस्वरूपम्, द्वैधीभावकालः

**'एकेन सह संधायान्येन सह विग्रहकरणमेकेन वा शत्रौ संधानपूर्वं विग्रहो द्वैधीभावः ॥**

अथ द्वैधीभावस्य स्वरूपमाह– एकेनेति । यदा शत्रुद्वयमुपस्थितं भवति तदा एकेन सह विग्रहकरणं युक्तम्, द्वितीयेन सह बलवता संधानपूर्वो विग्रहः प्रथमं संधानं कृत्वा पश्चाद्विग्रहः कार्यः । न द्वाभ्यां हेलया विग्रहः कार्यः । एतद्द्वैधीभावस्य स्वरूपम् । नीवाटी.

**प्रथमपक्षे संधीयमानो विगृह्यमाणं विजिगीषुरिति द्वैधीभावो बुद्ध्याश्रयः ॥**

अथ बुद्ध्याश्रयस्य द्वैधीभावस्य स्वरूपमाह– प्रथमपक्ष इति । नीवाटी.

**द्वैधीभावं गच्छेद् यदन्योऽवश्यमात्मना सहोत्सहते ॥**

अथ भूयोऽपि विजिगीषुणा यत्कर्तव्यं तदाह– द्वैधीभावमिति । तत् द्वैधीभावं गच्छेत् संधिवाक्यैर्विग्रहवाक्यैश्च शत्रुणा सह । यदि किं स्यात् ? यदि अन्यः तस्मात्परो यः शत्रोः शत्रुः उत्सहते उत्साहं करोति युद्धापकत्वं प्रविशति । केन ? आत्मना सह शत्रुणा सह संधिविग्रहवचनैर्वक्तव्यमिति । तथा च गर्गः– 'यद्यसौ संधिमादातुं युद्धाय कुरुते क्षणम् । निश्चयेन तदा तेन सह संधिस्तथा रणम् ॥' । नीवाटी.

**बलद्वयमध्यस्थितः शत्रुरुभयसिंहमध्यस्थितः करीव भवति सुखसाध्यः ॥**

अथ द्वैधीभावं ( गते ) सीमाधिपे तच्छत्रौ युद्धपरे सीमाधिपस्य यद्भवति तदाह– बलद्वयमध्यस्थित इति । यत् द्वाभ्यां विजिगीषुभ्यां मध्यस्थितः शत्रुर्भवति तदा सुखसाध्यः कष्टेन विना सिद्ध्यति । क इव ? करीव गज इव । किंविशिष्टः ? मध्यगतः । काभ्याम् ? सिंहाभ्याम् । तथा च शुक्रः– 'सिंहयोर्मध्यगो हस्ती सुखसाध्यो यथा भवेत् । तथा सीमाधिपोऽन्येन विग्रहीतो वशो भवेत् ॥' । नीवाटी.

(१) नीवा. २९।४८–४९, ६२–६३.

## युक्तिकल्पतरुः

द्वैधीभावस्वरूपम्, उभयसंपाते कर्तव्यम्

**'बलिनोर्द्विषतोर्मध्ये वाचा मौनं समर्पयेत् ।**
**द्वैधीभावेन वर्तेत काकाक्षिवदलक्षितः ॥**
**यापयेद्वक्र(? यत्न)मास्थाय संनिकृष्टतरं तयोः ।**
**उभयोरपि संयापे ( ? संपाते ) सेवेत बलवत्तरम् ॥**

## मानसोल्लासः

द्वैधीभावकालः, पञ्च द्वैधीभावप्रकाराः

**'बलिनोर्द्विषतोर्मध्ये वाचाऽऽत्मानं समर्पयन् ।**
**द्वैधीभावेन वर्तेत काकाक्षिवदलक्षितः ॥**

**लाभाद्वाऽपि भयाद्वाऽपि योगक्षेमार्थमुद्यतः ।**
**द्वयोर्मध्ये चिरं कालं द्वैधीभावेन यापयेत् ॥**

**नीतिशास्त्रार्थसारज्ञैर्नामभेदार्थयत्नतः ।**
**मिथ्याचित्तः समादिष्टो मिथ्यावचन एव च ॥**
**मिथ्याकरण इत्यन्यस्तथा चोभयवेतनः ।**
**युग्मप्राभृतकश्चेति द्वैधीभावोऽत्र पञ्चधा ॥**
**चित्ते विरोधमाधत्ते वचसा प्रियभाषणम् ।**
**द्वैधीभावोऽयमाख्यातो मिथ्याचित्तोऽर्थकोविदैः ॥**

**वचसा प्रियमाख्याति कर्मणा वर्ततेऽन्यथा ।**
**द्वैधीभावोऽपरः प्रोक्तो मिथ्यावचनसंज्ञकः ॥**
**स्तोकं स्तोकं किमप्यादौ कार्यं विश्वासकारणात् ।**
**करोति भावदुष्टोऽसौ महत्कार्यं विनाशयेत् ॥**
**एवं यः कुरुते मिथ्या रिपोर्नाशाय पार्थिवः ।**
**मिथ्याकरणनामाऽसौ द्वैधीभावः प्रकीर्तितः ॥**

(१) युक. १३।९०–९१.

(२) मासो. २।९५६–९६९.

गुप्तं वेतनमेकत्र तथाऽन्यत्र प्रकाशितम् ।
गृहीत्वा यश्चरन् मायी गुप्तं दस्युहितेच्छया ॥

अलक्षितो रिपोर्मन्त्रं भित्त्वा स्वस्वामिनेऽर्पयेत् ।
यत्र तिष्ठति द्वैविध्यात् स स्यादुभयवेतनः ॥

मद्रिपुं साधयस्वेति ढौकितं प्राभृतं महत् ।
अन्येनापि तमुद्दिश्य दत्तं वाजिगजादिकम् ॥

संवाहं प्रेषयिष्यामि साधयिष्यामि ते रिपुम् ।
इति ब्रुवन् विरुद्धाभ्यां द्वाभ्यामर्थं समाहरेत् ॥

तयोरज्ञातरूपः सन् यत्र राजा प्रवर्तते ।
द्वैधीभावं तमप्याहुर्युग्मप्राभृतकं बुधाः ॥

द्वैधीभावं समालम्ब्य य एवं वर्तते नृपः ।
विपक्षलक्ष्मीमादत्ते मन्त्ररक्षाविचक्षणः ॥

## महाभारतम्

संश्रयस्वरूपम्

**[1]उच्छ्रितानाश्रयेत्स्फीतान्नरेन्द्रानचलोपमान् ।
श्रयेच्छायामविज्ञातां गुप्तं शरणमाश्रयेत् ॥**

*छायां परदुर्गाधिपतिना संधिं कृत्वा देवतादर्शनादिव्याजेनाकस्मात् परदुर्गं गत्वा प्रविश्य तन्नाशयेदित्याह— उच्छ्रितानिति । नीटी.

## कौटिलीयमर्थशास्त्रम्

संश्रयलक्षणम्, संश्रयकालः

**[2]परार्पणं संश्रयः ॥**

बलवतेऽन्यस्मै राज्ञे स्वात्मस्वपुत्रस्वद्रव्याणामर्पणं संश्रयपदार्थः । श्रीमूला.

**शक्तिहीनः संश्रयेत ॥**

शक्तिहीन इति । सः संश्रयेत प्रबलमाश्रयेत । श्रीमूला.

संश्रयणीयो राजा, तत्र संश्रयितुर्वर्तनम्, संश्रयणीयानां तुल्यत्वे अन्यतमसंश्रयणीयविवेकः

**[3]यद्बलः सामन्तस्तद्विशिष्टबलमाश्रयेत । तद्विशिष्टबलाभावे तमेवाऽऽश्रितः कोशदण्डभूमीनामन्यतमेनास्योपकर्तुमदृष्टः प्रयतेत । महादोषो हि विशिष्टसमागमो राज्ञामन्यत्रारिविगृहीतात् ॥**

'संश्रयवृत्तिः' इति सूत्रम् । प्रबलाश्रयणेन स्वशक्तिपरिपूरणं संश्रयवृत्तिः । साऽभिधीयते इति सूत्रार्थः ।

यद्बलः सामन्त इत्यादि । यावद्बलयुक्तः सामन्तः अभियोक्ता ततोऽप्युत्कृष्टबलयुक्तं सेवेत । विशिष्टबलस्यालाभे अभियोक्तारमेवाश्रितः कोशदण्डभूमीनामन्यतमदानेन तं प्रसादयितुम् अदृष्टः दूरस्थः असमागत एव सन् यत्नं कुर्यात् । अदृष्टसेवायां कारणमाह— महादोषो हीत्यादि । राज्ञां हि विशिष्टबलेन सह समागमो वधबन्धादिमनर्थमुत्पादयेत् । तत्रापवादः— अन्यत्रारिविगृहीतादिति । शत्रुविगृहीतमपहाय । स विशिष्टबलः शत्रुणा विगृहीतश्चेत् तेन समागमो न दोषावह इत्यर्थः । श्रीमूला.

**अशक्ये दण्डोपनतवद् वर्तेत ॥**

असमागम्य सेवितुमशक्ये विशिष्टबले दण्डोपनतवत् वर्तेत दण्डार्पणकृतसंधिर्यथा वर्तेत तथा तदन्तिके प्रणतस्तिष्ठेत् । श्रीमूला.

**यदा चास्य प्राणहरं व्याधिमन्तःकोपं शत्रुवृद्धिं मित्रव्यसनमुपस्थितं वा तन्निमित्तामात्मनश्च वृद्धिं पश्येत्, तदा संभाव्यव्याधिधर्मकार्यापदेशेनापयायात् । स्वविषयस्थो वा नोपगच्छेत् । आसन्नो वाऽस्य छिद्रेषु प्रहरेत् ॥**

यदा अस्य सेव्यमानस्य प्राणहरं व्याधिम्, अन्तःकोपं मन्त्रिपुरोहितादिकोपम्, शत्रुवृद्धिम्, मित्रव्यसनं वा उपस्थितं पश्येत्, तन्निमित्ताम् आत्मनो वृद्धिं च उपस्थितां पश्येत्, तदा संभाव्यव्याधिधर्मकार्यापदेशेन प्रत्येयं कमपि व्याधिं धर्मकार्यं वा किंचिदपदिश्य अपयायात् ततोऽपसरेत् । स्वविषयस्थो वा नोपगच्छेत् स्वविषये स्थितश्चेत् आहूतोऽपि व्याधिधर्मकार्यशेषापदेशेन तदन्तिकं न गच्छेत् । आसन्नो वा संनिकृष्ट एव वा भूत्वा अस्य छिद्रेषु प्रहारस्थानेषु प्रहरेत् । तदिदं बलवतैकेनाभियुक्तं प्रति अभिहितम् । श्रीमूला.

**बलीयसोर्वा मध्यगतस्त्राणसमर्थमाश्रयेत् । यस्य वाऽन्तर्धिः स्यात् । उभौ वा । कपालसंश्रयस्तिष्ठेत् । मूलहरमितरस्येतरमपदिशन् भेदमुभयोर्वा परस्परापदेशं प्रयुञ्जीत । भिन्नयोरुपांशुदण्डम् ॥**

---

* भामुपाठो न संश्रयपरः । तमनुसृत्येदं व्याख्यानम् ।

(१) भा. १२।१२०।१२; भामु. १२।१२०।१२ नाश्र (न्नाश) शरणमा (रणमुपा).

(२) कौ. ७।१. (३) कौ. ७।२.

द्वाभ्यां बलवद्भ्यामभियुक्तस्य विधिमाह— बलीयसोर्वेति । तयोर्वा मध्यगतः त्राणसमर्थम् अन्यतरम् आश्रयेत् । उभयोः समबलतायामाह— यस्य वाऽनन्तर्धिः स्यादिति । यो वा न व्यवहितः तमाश्रयेदित्यर्थः । उभयोरासन्नतायामाह— उभौ वेति । उभावप्याश्रयेत् । उभयाश्रयणावस्थानप्रकारश्च कपालसंधिकरणेनावस्थानमित्याह— कपालसंश्रयस्तिष्ठेदिति । 'त्वमेव मे रक्षकः, त्वदरक्षितं मां पर उच्छेत्तुमिच्छति' इत्येकैकश उक्त्वा द्वावप्याश्रित्यावस्थानं कपालसंधिः । मूलेत्यादि । इतरस्य इतरं मूलहरं द्रव्यनाशकमपकर्तारम् अपदिशन् वदन् गूढपुरुषद्वारकं स्वगतमेवापकर्तृत्वमितरस्मिन्नारोप्य कीर्तयन्नित्यर्थः, उभयोर्वा भेदं प्रयुञ्जीत । कथंभूतम् ? परस्परादेशं परस्परस्यापकर्तृत्वारोपो निमित्तं यस्मिंस्तम् । भिन्नयोः उक्तरीत्या भेदितयोः उपांशुदण्डं रहोवधं प्रयुञ्जीत । श्रीमूला.

**पार्श्वस्थो वा बलस्थयोरासन्नभयात् प्रतिकुर्वीत । दुर्गापाश्रयो वा द्वैधीभूतस्तिष्ठेत् । संधिविग्रहक्रमहेतुभिर्वा चेष्टेत । दूष्यामित्राटविकानुभयोरुपगृह्णीयात् । एतयोरन्यतरं गच्छंस्तैरेवान्यतरस्य व्यसने प्रहरेत् । द्वाभ्यामुपहितो वा मण्डलापाश्रयस्तिष्ठेत् । मध्यममुदासीनं वा संश्रयेत । तेन सहैकमुपगृह्येतरमुच्छिन्द्यादुभौ वा ॥**

बलिनोरुभयोर्यस्मात् भयमासन्नं पश्यति तस्मादात्मानं प्रतिक्रियया रक्षेत् तत्पार्श्वस्थः । दुर्गापाश्रयो वेति । दुर्गमाश्रितः द्वैधीभूतः प्रच्छन्नसंधिविग्रहोभयाभिमुख्यः तिष्ठेत् । संधिविग्रहक्रमहेतुभिर्वेति । 'महाफलैः स्वकर्मभिः परकर्माण्युपहनिष्यामि' (कौ. ७।१) इत्यादिनोक्तैः संधिनिमित्तैर्विक्रमनिमित्तैश्च 'आयुधीयप्रायः श्रेणीप्रायो वा मे जनपदः' (कौ. ७।१) इत्यादिनोक्तैः चेष्टेत प्रवर्तेत । दूष्यामित्रेत्यादि । उभयोः अभियोक्त्रोः दूष्यान् अमित्रान् आटविकांश्च उपगृह्णीयात् दानमानादिना स्ववशे कुर्यात् । एतयोः अभियोक्त्रोः मध्ये अन्यतरं गच्छन् प्रत्यभियुञ्जानः तैरेव उपगृहीतैर्दूष्यादिभिरेव साधनभूतैः अन्यतरस्य व्यसने रन्ध्रे प्रहरेत् । द्वाभ्यामुपहितो वेति । उभाभ्यां पीडितश्चेत् मण्डलापाश्रयस्तिष्ठेत् उभयोर्मण्डलमपाश्रित्य वर्तेत 'सर्वात्मना प्रणतं मामेतौ पीडयतः' इति वदन् । मध्यममिति । तम् उदासीनं वा पूर्वोक्तलक्षणं संश्रयेत । तेन सह मध्यमेनोदासीनेन वा सहितः, एकमुपगृह्य दानादिना वशयित्वा इतरम् उच्छिन्द्यात्, उभौ वा उच्छिन्द्यात् । इत्येवमुभयभेत्तुर्व्यापार उक्तः । श्रीमूला.

**द्वाभ्यामुच्छिन्नो वा मध्यमोदासीनयोस्तत्पक्षीयाणां वा राज्ञां न्यायवृत्तिमाश्रयेत । तुल्यानां वा यस्य प्रकृतयः सुख्येयुरेनम्, यत्रस्थो वा शक्नुयादात्मानमुद्धर्तुम्, यत्र पूर्वपुरुषोचितागतिरासन्नः संबन्धो वा मित्राणि भूयांसीति शक्तिमन्ति वा भवेयुः ॥**

उभाभ्यामुच्छिन्नस्य व्यापारमाह— द्वाभ्यामुच्छिन्न इति । तथाभूतः मध्यमोदासीनयोः तत्पक्षीयाणां वा मध्यमोदासीनसंबन्धिनां मित्रादीनां वा राज्ञां मध्ये न्यायवृत्तिं राजानम् आश्रयेत । सर्वेषां न्यायवृत्तित्वतुल्यतायामाह— तुल्यानां वा यस्य प्रकृतय इत्यादि । तुल्यशीलानां मध्ये यस्य प्रकृतयः स्वस्मिन् प्रीतिमावहेयुः एनम् आश्रयेत । प्रकृतिप्रीतितुल्यतायां वा यमाश्रित्याऽऽत्मोद्धरणं सुकरं मन्यते एनमाश्रयेत । आत्मोद्धरणसौकर्यतुल्यतायां यस्मिन् पूर्वपुरुषानुवृत्तः प्रवेशः विवाहादिलक्षणो वा अन्तरङ्गः संबन्धोऽस्ति, मित्राणि वा भूयस्त्वात् शक्तिमन्ति भवेयुः, एनमाश्रयेत । श्रीमूला.

**प्रियो यस्य भवेद् यो वाऽप्रियोऽस्य कतरस्तयोः । प्रियो यस्य स तं गच्छेदित्याश्रयगतिः परा ॥**

अथ सर्वोत्कृष्टामाश्रयवृत्तिमाह— प्रियो यस्येति । यस्य यः प्रियः तयोर्मध्ये कतरः अस्य अप्रियः कतरः कतरस्य प्रियो न भवति ? द्वावपि परस्परस्य प्रियावेवेत्यर्थः । ततश्च यो यस्य प्रियः सः तं गच्छेत् आश्रयेत् । इत्याश्रयगतिः परा इत्येषा आश्रयवृत्तिः प्रशस्ता ।

श्रीमूला.

बलवदभियुक्तेन राज्ञा बलवत्तरं राजान्तरं दुर्गं वा आश्रयणीयम्

**[1]दुर्बलो राजा बलवताऽभियुक्तः तद्विशिष्टबलमाश्रयेत, यमितरो मन्त्रशक्त्या नातिसंदध्यात् ॥**

'बलवता विग्रह्योपरोधहेतवः' इति सूत्रम् । प्रबलेन शत्रुणा सह विग्रहं कृत्वा उपरोधस्य दुर्गप्रवेशस्य हेतवः कारणानि अभिधीयन्ते इति सूत्रार्थः । हीनस्य प्रबलेन शत्रुणा सह संधिं कृत्वा शक्तिपूरणं पूर्वमुक्तम् । प्रबलश्चेत् संधिं नोपगच्छेत् तदा हीनस्यानुष्ठानप्रकार इदानीमभिधीयते ।

दुर्बलो राजेति । सः बलवता अभियुक्तः तद्विशिष्टबलम् अभियोक्त्रपेक्षया उत्कृष्टबलं राजानम् आश्रयेत । यम् इतरः अभियोक्ता मन्त्रशक्त्या नातिसंदध्यात् न वञ्चयेत् । तं तद्विशिष्टबलमिति संबन्धः । श्रीमूला.

**तुल्यबलमन्त्रशक्तीनामायत्तसंपदो वृद्धसंयोगाद्वा विशेषः ॥**

तुल्यबलमन्त्रशक्तीनां बहूनां सत्त्वे मन्त्रशक्तियुक्तामात्यादिमन्तमाश्रयेत, मन्त्रशक्तियुक्तामात्यादिमतां बहुत्वे च वृद्धसंयोगवन्तमाश्रयेतेत्यभिप्रायकमाह— तुल्यबलमन्त्रशक्तीनामित्यादि । आयत्तसंपदो विशेषः— आयत्ताः अमात्यादयः, तेषां संपत् मन्त्रशक्तियोगः, तन्निमित्त आश्रयणीयविशेषावसाय इत्यर्थः । श्रीमूला.

**विशिष्टबलाभावे समबलैस्तुल्यबलसंख्यैर्वा बलवतः संभूय तिष्ठेत्, यावन्न मन्त्रप्रभावशक्तिभ्यामतिसंदध्यात् ॥**

अभियोक्त्रपेक्षया विशिष्टबलस्यालाभे बलवतः प्रबलस्याभियोक्तुः समबलैः तुल्यशक्तिभिः तुल्यबलसंख्यैर्वा समपरिमाणसैन्यैर्वा बहुभिः सहायैः संभूय तिष्ठेत् शत्रुं प्रतियुध्येत । कियन्तं कालं तिष्ठेत् ? यावत् मन्त्रप्रभावशक्तिभ्यां नातिसंदध्यात् न भेदयेत् अर्थात् स्वसहायान् शत्रुः । श्रीमूला.

**तुल्यमन्त्रप्रभावशक्तीनां विपुलारम्भतो विशेषः ॥**

तुल्यमन्त्रप्रभावशक्तीनामिति । तेषां बहुत्वे विपुलारम्भतो विशेषः विपुलारम्भत्वलक्षणो व्यतिरेको यस्मिन्नस्ति तमाश्रयेदित्यर्थः । भक्तोपकरणादिसर्वविधयात्रासाधनसंपन्नो विपुलारम्भ इति प्रागवोचाम । श्रीमूला.

**समबलाभावे हीनबलैः शुचिभिरुत्साहिभिः प्रत्यनीकभूतैर्बलवतः संभूय तिष्ठेत्, यावन्न मन्त्रप्रभावोत्साहशक्तिभिरतिसंदध्यात् । तुल्योत्साहशक्तीनां स्वयुद्धभूमिलाभाद्विशेषः । तुल्यभूमीनां स्वयुद्धकाललाभाद्विशेषः तुल्यदेशकालानां युग्यशस्त्रावरणतो विशेषः ॥**

समबलाभावे आह— समबलाभाव इति । समबलानामलाभे बलवतः प्रबलाच्छत्रोः हीनबलैः शुचिभिः उत्साहिभिः प्रत्यनीकभूतैः परशत्रुभूतैः बहुभिः सहायैः संभूय तिष्ठेत् शत्रुं प्रार्थयेत । कियन्तं कालम् ? यावत् मन्त्रप्रभावोत्साहशक्तिभिः नातिसंदध्यात् न भेदयेत् अर्थात् सहायान् । तुल्योत्साहशक्तीनामिति । तेषां बहूनां मध्ये स्वयुद्धभूमिलाभात् विशेषः यस्याश्रयणे स्वस्य युद्धयोग्यदेशलाभो भवति तमाश्रयेदित्यर्थः । तुल्यभूमीनामिति । तुल्यतथाविधदेशानां बहूनां मध्ये स्वयुद्धकाललाभात् विशेषः यस्मिन्नाश्रिते स्वस्य युद्धयोग्यकाललाभो भवति तमाश्रयेदित्यर्थः । तुल्यदेशकालानामिति । तथाभूतानां बहूनां संभवे युग्यशस्त्रावरणतो विशेषः गवाश्वोष्ट्रायुधावरणरूपोपकरणसमृद्धिर्यस्यास्ति तमाश्रयेदित्यर्थः । श्रीमूला.

**सहायाभावे दुर्गमाश्रयेत, यत्रामित्रः प्रभूतसैन्योऽपि भक्तयवसेन्धनोदकोपरोधं न कुर्यात्, स्वयं च क्षयव्ययाभ्यां युज्येत ॥**

आश्रयणीयस्य कस्याप्यलाभे दुर्गम् आश्रयेत । तत् कीदृशम् ? यत्र यस्मिन्, स्थितस्येति शेषः, प्रभूतसैन्योऽपि अमित्रः अभियोक्ता भक्तयवसेन्धनोदकोपरोधं यथापेक्षितभोज्ययवसादिप्रवेशोपघातं न कुर्यात्, स्वयं

---

(१) कौ. ७।१५.

च क्षयव्ययाभ्यां युज्येत युग्यपुरुषापचयधनव्ययौ च स्वयं प्राप्नुयादित्यर्थः । श्रीमूला.

**तुल्यदुर्गाणां निचयापसारतो विशेषः । निचयापसारसंपन्नं हि मनुष्यदुर्गमिच्छेदिति कौटल्यः ॥**

यथोक्तगुणानां दुर्गाणां बहूनां संभवे निचयापसारतो विशेषः— निचयः स्नेहलवणादेर्नित्योपयोज्यस्य संचयः, अपसारः दुर्गनिर्गमनमार्गः, ताभ्यां विशेषः । निचयापसारवन्तं दुर्गमाश्रयेतेत्यर्थः । निचयेत्यादि । मनुष्यदुर्गं मनुष्याश्रयणीयं दुर्गम् । 'इति कौटल्यः' इत्युक्त्या अन्येषामाचार्याणां मतमनीदृशमिति सूचयति । श्रीमूला.

**तदेभिः कारणैराश्रयेत— 'पार्ष्णिग्राहमासारं मध्यममुदासीनं वा प्रतिपादयिष्यामि । सामन्ताटविकतत्कुलीनावरुद्धानामन्यतमेनास्य राज्यं हारयिष्यामि घातयिष्यामि वा । कृत्यपक्षोपग्रहेण वाऽस्य दुर्गे राष्ट्रे स्कन्धावारे वा कोपं समुत्थापयिष्यामि । शस्त्राग्निरसप्रणिधानैरौपनिषदिकैर्वा यथेष्टमासन्नं हनिष्यामि । स्वयमधिष्ठितेन वा योगप्रणिधानेन क्षयव्ययमेनमुपनेष्यामि । क्षयव्ययप्रवासोपतप्ते वाऽस्य मित्रवर्गे सैन्ये वा क्रमेणोपजापं प्राप्स्यामि । वीवधासारप्रसारवधेन वाऽस्य स्कन्धावारावग्रहं करिष्यामि । दण्डोपनयेन वाऽस्य रन्ध्रमुत्थाप्य सर्वसंदोहेन प्रहरिष्यामि । प्रतिहतोत्साहेन वा यथेष्टं संधिमवाप्स्यामि । मयि प्रतिबन्धस्य वा सर्वतः कोपाः समुत्थास्यन्ति । निरासारं वाऽस्य मूलं मित्राटवीदण्डैरुद्घातयिष्यामि । महतो वा देशस्य योगक्षेममिहस्थः पालयिष्यामि । स्वविक्षिप्तं मित्रविक्षिप्तं वा मे सैन्यमिहस्थस्यैकस्थमविषह्यं भविष्यति । निम्नखातरात्रियुद्धविशारदं वा मे सैन्यं पथ्याबाधमुक्तमासन्ने कर्म* करिष्यति । विरुद्धदेशकालमिहागतो वा स्वयमेव क्षयव्ययाभ्यां न भविष्यति । महाक्षयव्ययाभिगम्योऽयं देशो दुर्गाटव्यपसारबाहुल्यात्, परेषां व्याधिप्रायः, सैन्यव्यायामानामलब्धभौमश्च, तमापद्गतः प्रवेक्ष्यति । प्रविष्टो वा न निर्गमिष्यति ' इति ॥**

तच्च दुर्गं वक्ष्यमाणेषु फलेष्वन्यतममभिसंधायाऽऽश्रयणीयमित्याह— तदेभिरित्यादि । तानि कारणानि 'पार्ष्णिग्राहम्' इत्यादिना 'न निर्गमिष्यतीति' इत्यन्तेन महावाक्येन दर्शयति । तदवान्तरवाक्यानि तु षोडश । तेषु च प्रत्येकम् इतिशब्दः संबन्धनीयः । तदयमर्थः— 'पार्ष्णिग्राहं सुहृद्बलं मध्यमम् उदासीनं वा प्रागुक्तलक्षणम् अभियोक्तुः प्रत्यभियोगाय नेष्यामि' इति चेन्मन्येत तदा दुर्गमाश्रित्य तिष्ठेत् । 'सामन्तेन आटविकेन अभियोक्तृकुलीनेन वाऽवरुद्धेन राज्यमभियोक्तुर्हारयिष्यामि, दाहविलोपाद्युपघातयुक्तं वा कारयिष्यामि' इति चेन्मन्येत तदा दुर्गमाश्रयेत । अथवा 'अभियोक्तुः कृत्यपक्षम् उपायैः स्वायत्तीकृत्य तदीये दुर्गे राष्ट्रे सेनानिवेशे वा बाह्याभ्यन्तरं प्रकृतिकोपमुत्पादयिष्यामि' इति चेन्मन्येत तदा दुर्गमाश्रयेत । अथवा 'शस्त्राग्निरसप्रणिधानेनाऽऽबलीयसोक्तेन (कौ. १२) औपनिषदिकोक्तैर्वा (कौ. १४) योगैर्यथेच्छं संनिकृष्टं हनिष्यामि' इति चेन्मन्येत तदा दुर्गमाश्रयेत । अथवा 'विस्रब्धघातिपुरुषप्रयोगेण स्वयं कृतेन युग्यपुरुषापचयं धनव्ययं चाभियोक्तारं नेष्यामि' इति चेन्मन्येत तदा दुर्गमाश्रयेत । अथवा 'क्षयव्ययप्रवासैरुपतापं प्राप्तेऽभियोक्तुर्मित्रवर्गे सैन्ये वा क्रमेण भेदं प्रयोक्तुं लप्स्ये' इति चेन्मन्येत तदा दुर्गमाश्रयेत । अथवा 'अभियोक्तुः स्वदेशागतभक्तोपकरणानां सुहृद्बलस्य यवसेन्धनादेश्च निरोधेन तत्सेनानिवेशपीडामुत्पादयिष्यामि' इति चेन्मन्येत तदा दुर्गमाश्रयेत । अथवा 'स्वसैन्यान् कांश्चित् अभियोक्तुः स्कन्धावारं गूढं नीत्वा तत्र प्रहारस्थानमुत्पाद्य पश्चात् सर्वसैन्यसमुदयेन गत्वा प्रह-

---

* असदुपलब्धेषु चतुर्षु मुद्रितपुस्तकेषु त्रीणि 'कर्म' इत्यत्र 'कर्मणि' इति पठन्ति । तत्रापि श्रीगणपतिशास्त्रिभिर्मूले 'कर्मणि' इति पठित्वा टीकायां 'कर्म' इति पाठो व्याख्यातः । एकस्मिन्पुस्तके मुद्रितः 'कर्म' इति द्वितीयान्तः पाठ एव श्रेयान्, सप्तम्यन्तपाठे कर्मकारकाभावात् वाक्यस्य साकाङ्क्षत्वापत्तेः ।

रिष्यामि' इति चेन्मन्येत तदा दुर्गमाश्रयेत । अथवा 'कथंचिदभियोक्तुरुत्साहं प्रतिहत्य यथेष्टं संधिमवाप्स्यामि' इति चेन्मन्येत तदा दुर्गमाश्रयेत । अथवा 'मद्विषयाभियोगव्यासक्तमभियोक्तारं प्रति सर्वतः सामन्तप्रकोपा उद्भविष्यन्ति' इति चेन्मन्येत तदा दुर्गमाश्रयेत । अथवा 'निरुद्धसुहृद्बलमभियोक्तुः स्थानीयं मित्रसैन्यैराटविकसैन्यैश्चोपहतं करिष्यामि' इति चेन्मन्येत तदा दुर्गमाश्रयेत । अथवा 'महतो देशस्य योगक्षेमम् इहस्थः पालयितुं शक्ष्यामि' इति चेन्मन्येत तदा दुर्गमाश्रयेत । अथवा 'स्वकार्यार्थे मित्रकार्यार्थे चान्यत्र प्रेषितं मम सैन्यमत्रैकीभूय मया संगतं शत्रोरलङ्घनीयं भविष्यति' इति चेन्मन्येत तदा दुर्गमाश्रयेत । अथवा 'निम्नयुद्धे खातयुद्धे रात्रियुद्धे च निपुणं मे सैन्यं पथिगमनश्रममिह दुर्गेऽपनीय कर्म काले प्राप्ते करिष्यति' इति चेन्मन्येत तदा दुर्गमाश्रयेत । अथवा 'अभियोक्ता स्वसैन्याननुकूले देशे काले चेहागतो विनैवास्मद्यत्नं स्वयमेव क्षयव्ययाननुभूय नङ्क्ष्यति' इति चेन्मन्येत तदा दुर्गमाश्रयेत । अथवा 'दुर्गबहुलत्वादटवीप्रायत्वादपसारस्थानबहुलत्वाच्च महान्तं क्षयं व्ययं चानुभवता एवाभिगन्तव्योऽयं देशः परेषां विदेशागतानां व्याधिजनकः सैन्यव्यायामयोग्यभूमिरहितश्च, तं परः प्रविशन्नेव विपदं लप्स्यते, कथंचित् प्रविष्टो वा न ततः स्वस्तिमान् निर्गमिष्यति' इति चेन्मन्येत तदा दुर्गमाश्रित्य तिष्ठेदिति । एवं तावत् षोडश कारणान्युक्तानि । श्रीमूला.

**कारणाभावे बलसमुच्छ्रये वा परस्य दुर्गमुन्मुच्यापगच्छेत् । अग्निपतङ्गवदमित्रे वा प्रविशेत् । अन्यतरसिद्धिर्हि त्यक्तात्मनो भवतीत्याचार्याः ॥**

यथोक्तकारणाभावे यत् कर्तव्यं तदाचार्यमतेनाऽऽह— कारणाभाव इति । यथोक्तकारणविरहे परस्य शत्रोः बलसमुच्छ्रये वा सैन्यप्राबल्ये वा सति दुर्गम् उन्मुच्य त्यक्त्वा अपगच्छेत् अपसरेत् । अग्निपतङ्गवदमित्रे वा प्रविशेदिति । यथा हि शलभोऽग्नौ प्रविशति तथाऽऽत्मजीवितनिराशः शत्रौ प्रविशेत् । शत्रुमध्यं प्रविश्य यावच्छक्ति पराक्रमेतेत्यर्थः । न चायं महाबलशत्रुप्रत्यभियोगः प्रत्यभियोक्तुरेकान्तपराजयफलः, किंतु पाक्षिकं शत्रुजयमप्युपनयति, यथाऽग्निप्रवेशः शलभस्यैकान्ततो न नाशहेतुः, किंतु अग्निमपि पक्षे निर्वाणं करोति तद्वदित्यभिप्रायेणाऽऽह— अन्यतरसिद्धिर्हीत्यादि । अन्यतरस्य शत्रुजयात्मविनाशयोरेकतरस्य सिद्धिः । श्रीमूला.

**नेति कौटल्यः । संधेयतामात्मनः परस्य चोपलभ्य संदधीत । विपर्यये विक्रमेण सिद्धिमपसारं वा लिप्सेत ॥**

आत्मनः परित्राणोपाये सुलभे पाक्षिकमपि नाशमभ्युपगम्य प्रवृत्तेरयुक्तत्वात् तदिदमाचार्यमतं मुख्यतया नोपादेयमित्याह— नेति कौटल्य इति । किं तर्हि कारणाभावादवनुष्ठेयमित्याह— संधेयतामात्मनः परस्य चेति । आत्मनः संधेयतां निरपराधत्वलक्षणां परस्य संधेयतां धर्मविजयित्वलक्षणां च, यद्वा द्वयोरपि तत्तत्स्वरूपां संधानयोग्यतामित्यर्थः, उपलभ्य संदधीत । विपर्यये संधेयत्वाभावे विक्रमेण सिद्धिम् अग्निपतङ्गवत् शत्रौ प्रवेशनेनान्यतरसिद्धिं लिप्सेत । 'संधिम्' इति पाठे तत्तत्स्वरूपा संधानयोग्यता शत्रोर्यथा जायेत तथा विक्रमप्रयोगेण संधिं लिप्सेतेत्यर्थः । अपसारं वा लिप्सेत संधेरशक्यत्वे । इत्थं 'बलवता विगृह्योपरोधहेतवः' इतीदं प्रकरणं व्याख्यातम् । श्रीमूला.

संश्रयस्येष्टता

***'बलीयसाऽभियुक्तो दुर्बलः सर्वत्रानुप्रणतो वेतसधर्मा तिष्ठेत् । इन्द्रस्य हि स प्रणयति यो बलीयसो नमति' इति भारद्वाजः ॥**

**'सर्वसंदोहेन बलानां युध्येत, पराक्रमो हि व्यसनमपहन्ति । स्वधर्मश्चैष क्षत्रियस्य । युद्धे जयः पराजयो वा' इति विशालाक्षः ॥**

**नेति कौटल्यः । सर्वत्रानुप्रणतः कुलैडक इव निराशो जीविते वसति । युध्यमानश्चाल्पसैन्यः**

---

* एतदादिग्रन्थस्य व्याख्यानं 'यात्रा—युद्धसामान्यविचारः' इत्यस्मिन् प्रकरणे द्रष्टव्यम् ।

(१) कौ. १२।१.

समुद्रमिवाप्लवोऽवगाहमानः सीदति । तद्विशिष्टं तु राजानमाश्रितो दुर्गमविषह्यं वा चेष्टेत ॥

## चाणक्यसूत्राणि

संश्रयकालः, संश्रयिनृपवृत्तम्

[1]शक्तिहीनो बलवन्तमाश्रयेत् ॥
दुर्बलाश्रयो दुःखमावहति ॥
अग्निवद्राजानमाश्रयेत् ॥
राज्ञः प्रतिकूलं नाऽऽचरेत् ॥
उद्धतवेषधरो न भवेत् ॥
न देवचरितं चरेत् ॥

## मनुः

द्विविधः संश्रयः

[2]अर्थसंपादनार्थं च पीड्यमानस्य शत्रुभिः ।
साधुषु व्यपदेशार्थं द्विविधः संश्रयः स्मृतः ॥

(१) शत्रुभिः पीड्यमानस्य अर्थसंपादनार्थमन्यत्र संश्रयः । अर्थः पीडानिवृत्तिः । तत्संपादनार्थं शक्तमन्यमाश्रयेत् स्वदेशं हित्वा तत्र गच्छेत् । व्यपदेशश्च अपीडितेऽपि आगामिपीडापरिहाराय व्यपदेशार्थमन्यं संश्रयेत् । 'एषोऽस्य सहायको वर्तते, न शक्योऽयमुपपीडयितुम्' इति व्यपदेशसिद्धिर्न केनचिदुपपीड्यते । व्यपदेशप्रयोजनसंश्रयो व्यपदेशशब्देनोक्तः सामानाधिकरण्येन । पाठान्तरं 'व्यपदेशार्थम्' इति । क्व पुनः संश्रयः कर्तव्यस्तदाह— साधुषु । ये साधवो राजानस्तेषामन्यतममाश्रयेत्, येभ्यः सकाशात् कुसृतिर्नाऽऽशङ्क्यते । साधुशब्देन परिभवत्राणसामर्थ्यादयो गुणाः प्रतिपाद्यन्ते । मेधा.

(२) शत्रुभिरभिभूयमानस्याभिभवनिवृत्त्याख्यप्रयोजनसंपादनार्थम्, असत्यपि वा तदानीमभिभवे आगाम्यभिभवाशङ्कया 'अमुकसंश्रितोऽयम्' इत्येवंव्यपदेशार्थं साधुनृपसंश्रयणमित्येवं द्विविधः संश्रयः स्मृतः । * गोरा.

(३) पीड्यमानस्य सतो योऽर्थस्तस्य सिद्ध्यर्थमेकः, तथा स्वस्याल्पतयाऽवश्यं कस्मिंश्चित्संश्रयणीये संश्रयेण साधुषु कीर्तिर्भवतीत्यपरः संश्रयः । † मवि.

(४) साधुष्वित्यस्यायमभिप्रायः— साधूनामवक्रबुद्धित्वात् यथाश्रुतग्राहित्वाच्च साधुराजसु वा व्यपदेशः व्यपाश्रयणम् । यथा अन्यैराश्रितराजतो भीतैर्नाऽऽक्रम्यते, तदर्थमिति भावः । ‡ मच.

संश्रयकालः, संश्रयणीयनृपगुणाः

[1]यदा परबलानां तु गमनीयतमो भवेत् ।
तदा तु संश्रयेत् क्षिप्रं धार्मिकं बलिनं नृपम् ॥

(१) गमनीयतमः अभिभवनीयतमः दुर्गस्थोऽहमिति मन्यते तदा क्षिप्रं दुर्गमुज्झित्वा अन्यं संश्रयेत् धार्मिकं यतः कुसृतिर्नाऽऽशङ्क्यते । यस्य यशोमयी स्थिरप्रकृतिः । बलिनमित्येतेनैतत्सुदर्शितम् । § मेधा.

(२) यदा शत्रुबलानां प्रकृतिकोपादिना अतिशयेन यातव्यो भवति तदा क्षिप्रमेव धार्मिकं परित्राणसमर्थं नृपमाश्रयेत् । ¶ गोरा.

(३) संश्रयस्यापि $तमाह— यदेति चतुर्भिः । गमनीयतमः अवश्यमरिगमनविषययोग्यः स्वयम् । धार्मिकमित्यनेन उदर्कानर्थशङ्का वारिता । मच.

(१) चासू. ६२–६७.

(२) मस्मृ. ७।१६८ ; मेधा. शार्थं (शश्च) इत्यपि पाठः ; राक. ११२ मानस्य (मानश्च) शार्थं (शश्च) ; राप्र. ३२६.

* ममु. गोरावत् । राप्र., नन्द. गोरागतम् ।

† भाच. मविगतम् ।

‡ शेषं गोरागतम् ।

§ मवि. मेधागतम् ।

¶ ममु., रार., नन्द., भाच. गोरागतम् ।

$ तं कालमित्यर्थः ।

(१) मस्मृ. ७।१७४ ; राक. ११३ नृपम् (रिपुम्) ; रार. ५७; राप्र. ३२८.

**'निग्रहं प्रकृतीनां च कुर्याद्योऽरिबलस्य च।**
**उपसेवेत तं नित्यं सर्वयत्नैर्गुरुं यथा ॥**

(१) बलिनमित्युक्तम् । कियता बलेन बलवान् भवतीत्येतदर्थमिदमुच्यते । याः दुष्टास्तदीयाः प्रकृतयः यश्च शत्रुः, उभयस्यापि निग्रहे समर्थः स आश्रयितव्यः। स गुरुवत्परिसेवितव्यो मानमुज्झित्वा । नैवं मन्तव्यम् 'महाराज एषोऽपि(? ऽस्मि), समत्वेन वर्तावहे' इति । प्रभुवदसौ सेवितव्यः । सर्वयत्नैः उपायैः प्रियवचनैरवसरे समीपे संनिधानेन । * मेधा.

(२) निग्रहणं प्रकृतीनां यदि स्वप्रकृतिभिरेव शत्रुरुत्थापितः । मवि.

(३) कीदृशं तं बलवन्तमित्याह— निग्रहमिति । यासां दोषेण असौ गमनीयतमो जातः तासां प्रकृतीनां यस्माच्च शत्रुबलादस्य भयमुत्पन्नं तयोर्द्वयोरपि यः संश्रितो निग्रहक्षमः तं नृपं सर्वयत्नैर्गुरुमिव नित्यं सेवेत । ममु.

(४) तत्सेवनप्रकारमाह— निग्रहमिति । रार. ५७

(५) बलिनमिति विशेषणस्य कृत्यमाह— निग्रहमिति । गुरुं यथेति वित्तशाठ्यादिदोषं परिहृत्येत्यर्थः । † मच.

(६) संश्रितस्य कृत्यमाह— निग्रहमिति । प्रकृतीनाम् अमात्यादीनामात्मीया( दी ? )नाम् । अनेन सूचितं प्रकृतिक्षोभेऽपि बलीयान् समाश्रयणीय इति । नन्द.

**²यदि तत्रापि संपश्येद्दोषं संश्रयकारितम् ।**
**सुयुद्धमेव तत्रापि निर्विशङ्कः समाचरेत् ॥**

(१) यदि तस्मिन्नपि संश्रये संपश्येत् जानीयात् कथंचिद्दोषं संश्रयकारितम् । दोषदर्शनलिङ्गानि च— 'दत्त्वाऽनुतापः कृतपूर्वहोमं(?हानं ) विमानना दुश्चरितानुकीर्तनम् । दृष्टेरदानं प्रतिकूलभाषणमेताश्च दुष्टस्य भवन्ति वृत्तयः ॥' । ततस्तत्रापि संश्रये दोषकारिणि विज्ञाते । अपिशब्दादाश्रये निर्दोषेऽसति । सुयुद्धमेव तस्मिन्नपि काले निर्विकारः कुर्यात् । न हि संश्रये विनाशः । दृश्यते ह्यल्पबलेनापि महाबलो जीयमानः । अपि च अन्त्यावस्थायामुभयथा गुणः— विजये राज्यम्, पराजये ध्रुवः स्वर्ग इति । युद्धस्य तु शोभनत्वं दर्शयिष्यामः । एकैकगुणाश्रयेण मण्डलविजयाय यायात् शक्तः । मेधा.

(२) अगतिका हि गतिः संश्रयो नाम । तत्रापि च संश्रयकृतं दोषं यदि पश्येत् तदा निर्विकल्पो भूत्वा शोभनं युद्धमेव तस्मिन् काले समाचरेत्, दुर्बलेनापि बलवतः पराजयदर्शनात्, निहतस्य च स्वर्गप्राप्तेः । * गोरा.

(३) संश्रयकारितम् आश्रीयमाणेन कर्तव्यतया संभावितम् । मवि.

(४) संश्रयतो वैगुण्ये— यदीति । यद्येवं केनाप्युपायेन आत्मरक्षा न स्यात्तदा क्षत्रियाणां युद्धमेवाऽऽश्रय इति निर्विशङ्कः । ननु सेवा श्ववृत्तिरयशस्करी, 'धर्माद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते' ( भ. गी. २।३१ ) इत्यादिभगवद्वाक्यात् पश्चात्कर्तव्यमिति च (? व्येति च युद्धं ) प्रथममेव कथं नेति ? सत्यमेतत्, परंतु एषा श्ववृत्तिरपि धर्म्यैव, वचनात् । प्रथमोक्तश्रुतिस्मृतिबलात् स्वरक्षापूर्वकमेव यशः प्रशस्तम्, प्रथमयुद्धे निन्दा चेति । तदाह मनुरेव— 'उपजप्यानुपजपेद्बुध्येतैव च तत्कृतम् । युक्ते च दैवे युध्येत जयप्रेप्सुरपेतभीः ॥ साम्ना दानेन भेदेन समस्तैरथवा पृथक् । विजेतुं प्रयतेतारीन् न युद्धेन कदाचन ॥ अनित्यो विजयो यस्माद्दृश्यते युध्यमानयोः । पराजयश्च संग्रामे

---

* गोरा. मेधागतम् । भाच. मेधागतं मविगतं च ।
† शेषं मेधागतम् ।

(१) मस्मृ. ७।१७५ ; विश्व. १।३४३ ( = ) ; राक. ११३ ऽरिब ( निर्व ) ; रार. ५७ ; राप्र. ३२८.

(२) मस्मृ. ७।१७६ ; गोरा. शङ्कः (कल्पः) ; राक. ११३ कारितम् ( कारिणम् ) ; रार. ५८ मेव ( मपि ) ; मच. शङ्कः ( तर्कः ) ; राप्र. ३२८ शङ्कः ( शङ्कं ) ; नीम. ४६ शङ्कः समाचरेत् ( तर्कः समाश्रयेत् ) ; भाच. शङ्कः ( तर्कः ).

* ममु. गोरावत् । भाच. गोरागतम् ।

तस्माद्युद्धं विवर्जयेत् ॥ ' ( मस्मृ. ७।१९७–१९९ ) इति । रार. ५८

( ५ ) किंचान्यदित्याह– यदीति । दोषं संश्रयकारितम् संश्रये नृपतौ स्वबलवृद्धिधाकरणरूपभाषणपूर्ववैरानुरूपकीर्तनादिलिङ्गैः कारितं प्रकाशितम्, दुष्टप्रकृत्यादिभिरिवानेनापि कार्योऽयमस्मदर्थादिक्षयो भविष्यतीत्येवं कारितम्, संश्रये राजनि समर्पितं दोषजातं यदि वा संपश्येत् । तत्रापि तस्मिन् सतीत्यर्थः । निर्वितर्कः जेष्यामीति कृतनिश्चयः । मच.

( ६ ) धार्मिकबलिसमाश्रयणे दोषान्तरं भविष्यतीति निश्चिन्वानस्य किं कर्तव्यमित्यपेक्षायामाह– यदीति । तत्रापि धार्मिकबलिसमाश्रयणे । दोषः नीचसमाश्रयप्रभवः लोके कोशा( ? कोपा )दिकम् । तत्रापि तेषु परबलेषु आत्मवधोद्योगिष्वपि सुयुद्धमाचरेत् । जये भूमिलाभात्, मरणे स्वर्गलाभादित्यभिप्रायः । नन्द.

मित्रोदासीनशत्रुभ्यः अभयस्य प्राप्त्युपायचिन्तनम्

***'सर्वोपायैस्तथा कुर्यान्नीतिज्ञः पृथिवीपतिः ।**
**यथाऽस्याभ्यधिका न स्युर्मित्रोदासीनशत्रवः ॥**

( १ ) उपायवचनात् सामादिभिर्व्यस्तैः समस्तैर्वा, सर्वग्रहणात्तु येन शक्यन्ते संधा(?संध्या )दिनाऽपि, तथा कुर्यात् तेन प्रकारेण यतेत नीतिज्ञः अर्थशास्त्रज्ञः स्वाभाविकप्रज्ञः नयाद्यभिज्ञो वा राजा, यथाऽस्य शक्तित्रयेणाभ्यधिकाः मित्रादयो न भवेयुः, तथा प्रकृत्यादिसमादिष्टे कर्मप्रवर्तने च तेभ्योऽधिकमात्मानं कुर्यात् । श्लोकानुरोधान्मध्यमग्रहणं न कृतम् । सोऽपि तु द्रष्टव्यः, न मित्रमित्युपेक्ष्यम् । स्वप्रयोजनव्यतिरेकेण ( न ) मित्रं नाम । अव्यवस्थितं हि मित्रम् । आधिक्यमुपगतं स्वार्थगतिवशाच्च मित्रमप्यरिर्भवति । तथा च व्यास आह– ' न कश्चित् कस्यचिन्मित्रं न कश्चित् कस्यचिद्रिपुः । सामर्थ्ययोगाद्विज्ञेया मित्राणि रिपवस्तथा ॥ ' ( भामु. १२।१३८।११०, १३९ ) इति । एतैरुपायैर्मण्डलं विचारयेत् । * मेधा.

( २ ) नीतिकुशलो राजा सर्वैः सामादिभिरुपायैः तथा ( च ? ) यतेत यथाऽस्य मित्रोदासीनशत्रुमध्यमा अधिका न भवन्ति । आधिक्ये हि तेषां सुतरां क्षोभ्यो भवति, धनगर्वेण मित्रस्य शात्रवापत्तेः । † गोरा.

( ३ ) मित्रोदासीनशत्रव इति द्वादशराजमण्डलाभिप्रायेण । रार. ५९

**'आयतिं सर्वकार्याणां तदात्वं च विचारयेत् ।**
**अतीतानां च सर्वेषां गुणदोषौ च तत्त्वतः ॥**

( १ ) कार्याणि कर्माणि प्रयोजनानि । तेषां सर्वेषामारिप्समानानाम् आयतिः परिणाम्यागामिकालः, तदात्वं प्रारम्भावस्थावर्तमानकालः, तं च विचारयेत् । तत्त्वतः तत्त्वेन । अनेकमुखानि हि कार्याणि क्षणाच्चान्यथा भवन्तीति । तत्र येषामुभौ कालौ न शुध्यतस्तानि कार्याणि कथमारभेतेति तद्विचारार्थोपदेशः । अतीतानाम् अतिक्रान्तानां च सर्वेषां गुणदोषौ ततो ( ? तत्त्वतो ) विचारयेत् । अत्राप्यतीतानां गुणदोषौ विचार्य यानि कर्माणि गुणवन्त्यतीतानि तान्येव कथं नाम पुनरारभेतेत्यतीतकार्यगुणदोषतत्त्वविचारणोपदेश एवमर्थः । ‡ मेधा.

( २ ) आयतिः आगामिफलम् । तदात्वं वर्तमानम् । अतीतानां च कार्याणां गुणदोषौ चकारात् स्वरूपं च । तच्चिन्तनेन च तत्साम्यात् आगामिन्यपि प्रवृत्तिर्निवृत्तिर्वा प्रयोजनम् । मवि.

( ३ ) सर्वेषां कार्याणाम् अल्पानां बहूनामपि आयतिम् उत्तरकालं गुणं दोषं विचारयेत् । वर्तमानकालं च शीघ्रसंपादनाद्यर्थं विचारयेत् । अतीतानां च सर्वकार्याणां

* पूर्वश्लोकानुषङ्गेणैते चत्वारः श्लोका अत्र संगृहीताः ।

( १ ) मस्मृ. ७।१७७ ; राक. ११३ ऽस्याभ्य (स्याद) ; रार. ५८; राप्र. ३२८; नीम. ४६ ; नन्द. ऽस्याभ्य ( ऽस्माद ).

* मवि., मच. मेधागतम् ।

† ममु. गोरावत् । भाच. गोरागतम् ।

‡ गोरा. मेधागतम् ।

( १ ) मस्मृ. ७।१७८ ; राक. ११३ ; रार. ५८ ; राप्र. ३२८.

गुणदोषौ 'किमेषां कृतं विघटितम्, किं वाऽवशिष्टम्?' इत्येवं यथावद्विचारयेत्। * ममु.

'आयत्यां गुणदोषज्ञस्तदात्वे क्षिप्रनिश्चयः।
अतीते कार्यशेषज्ञः शत्रुभिर्नाभिभूयते॥

(१) एवं हि यो हि आयत्याम् आगामिनि काले कार्याणां गुणदोषौ विजानाति, नियमेनासौ विमृश्यकारीति स्वयं चाऽऽरभते न सदोषम्। एवमर्थं हि ज्ञानम्। तदात्वे वर्तमाने यः क्षिप्रमवधारयति कार्ये न विलम्बते, तदात्वे क्षिप्रनिश्चयः क्षिप्रकारी भवति, गुणवत् करोति, न दोषवत्। अतीते कृते सति कार्ये शेषतो यः कार्यमेव बुध्यते, न तत्परिसमाप्तिं लभते इति गुणवत्सर्वकार्यफलसंबन्धादभ्यधिकः शत्रुभिर्नाभिभूयते। न हि धर्मशास्त्रे षाड्गुण्योपदेशः शक्यते कर्तुं दृष्टः(?) इति दिङ्मात्रमुक्तम्। मेधा.

(२) यः कार्याणामागामिकालदोषज्ञो गुणवत् कार्यमारभते, दोषवत् परिहरति, यश्च वर्तमानकाले क्षिप्रमेवावधार्य कार्यं करोति, न दीर्घसूत्रः, (अतीते) कार्ये यः कार्यशेषज्ञो भवति, स तत्कार्यसमाप्तौ तत्फलं लभते। अतः एवंविधकालत्रयसावधानत्वान्न कदाचित् शत्रुभिः अभिभूयते। † गोरा.

(३) अतीते दैवाद्विपन्ने कार्ये कार्यशेषस्य तदेकदेशोद्धारोपायस्यापि ज्ञाता। $ मवि.

(४) विचारस्य फलमाह— आयत्यामिति। नन्द.

'यथैनं नाभिसंदध्युर्मित्रोदासीनशत्रवः।
तथा सर्वं संविदध्यादेष सामासिको नयः॥

(१) यथा न तैस्तैः प्रयोगैरभिसंदध्युस्तथा कुर्यात्। अर्जितैरितरैर्वा उपायैरित्येष संक्षेपिको न्याय इत्युपसंहारः षाड्गुण्यस्य। अतिसंधानविरोधश्चैवं (न?) भवति। कृत्यानामुपजापरक्षणात्, व्यसनेषु प्रतीकारात्, स्वमण्डलसंग्रहात्, गुणोपायानां सम्यक् प्रयोगात्, कर्मस्वभ्युत्थानमित्येवं द्रष्टव्यम्। मेधा.

(२) यथा एनं राजानं मित्रादयः उक्ताः न वञ्चयेयुः तथा सर्वं संविधानं कुर्यात्। इत्येवं सांक्षेपिकः नयः नीतिः। * गोरा.

(३) राजा तु सर्वथाऽप्रमत्तः स्यादित्याह— यथेति। एनं राजानं नाभिसंदध्युः नाभिभवेयुः। एषः सामासिकः— समासः संक्षेपः, तत्र भवः। मच.

(४) अत्रायमनुष्ठेयार्थ इत्याह— यथैनमिति। नन्द.

(५) यथा एनं शरणागतं मित्रोदासीनशत्रवः नाभिसंदध्युः न संधेयुः तथा सर्वं संविदध्यात् कुर्यात्। एषः सामासिकः संक्षिप्तः सामादिरूपाणां न्यायः। भाच.

## विष्णुधर्मोत्तरपुराणम्

संश्रयलक्षणम्, संश्रयकालः

'उदासीने मध्यमे वा संश्रयात्संश्रयः स्मृतः॥

संश्रयः परपीडितस्य प्रबलराजान्तराश्रयणम्। तदुक्तम्— उदासीन इति। राप्र. ३२५

'बलिना निगृहीतस्तु योऽसंधेयेन पार्थिवः।
संश्रयस्तेन कर्तव्यो गुणानामधमो गुणः॥

---

* मच., नन्द., भाच. ममुगतम्।

† ममु. गोरावत्। मच. गोरागतम्। भाच. गोरागतं मविगतं च।

$ शेषं गोरागतम्।

(१) मस्मृ. ७।१७९; राक. ११३; रार. ५८; राप्र. ३२८.

(२) मस्मृ. ७।१८०; विश्व. १।३४८ नाभि (नाति) यू.; राक. ११३ संवि (समा); राप्र. ३२८.

* मवि. गोरागतम्। ममु. गोरावत्।

(१) विध. २।१५०।५; अग्नि. २३४।२० उदासीने मध्यमे (उदासीनो मध्यमो); राप्र. ३२५ (=); राकौ. २४४.

(२) विध. २।१५०।८ ऽसंधेयेन (मन्येथेन); अग्नि. २३४।२३–२४ निगृही (विगृही) धेयेन (देहेन) कर्तव्यो (वक्तव्यो); राप्र. ३२८; राकौ. २४५ निगृही (विगृही) ऽसंधेयेन (संधेयेत).

[1]सर्वशक्तिविहीनस्तु तदा कुर्यात्तु संश्रयम् ॥
[2]एवं च बुद्ध्वा नृपतिर्गुणानां
काले च देशे च तथा विभागे ।
समाश्रयेद् भार्गववंशमुख्य
चैतावदुक्तं नृपतेस्तु कार्यम् ॥

## अग्निपुराणम्

संश्रयकालः , संश्रयिवृत्तम्

[3]उच्छिद्यमानो बलिना निरुपायप्रतिक्रियः ।
कुलोद्भवं सत्यमार्यमासेवेत बलोत्कटम् ॥
तद्दर्शनोपास्तिकता नित्यं तद्भावभाविता ।
तत्कारितप्रश्रयिता वृत्तं संश्रयिणः श्रुतम् ॥

## कामन्दकीयनीतिसारः

संश्रयकालः , संश्रयार्हो नृपः , संश्रयिवृत्तम्

[4]उच्छिद्यमानो बलिना निरुपायप्रतिक्रियः ।
कुलोद्भवं सत्यमार्यमाश्रयेत बलोत्कटम् ॥

( १ ) संश्रयमधिकृत्य श्लोकाष्टकमाह— उच्छिद्यमान इति । उच्छिद्यमानः स्वदेशादुत्थाप्यमानः । निरुपायप्रतिक्रिय इति । उपायेन प्रतिक्रिया उपायप्रतिक्रिया, सा शक्तिहीनत्वात् व्यपेता यस्येति विग्रहः । तथा ह्युक्तम्— 'शक्तिहीनः संश्रयेत' ( कौ. ७।१ ) इति । कुलोद्भवं राजबीजकम् । आर्यं सद्वृत्तम् । बलोत्कटं शत्रोर्बलाधिकम् । जम.

( २ ) संश्रयगुणमभिधातुमाह— उच्छिद्यमान इति । बलिना उपचितशक्तिमता उच्छिद्यमानः अभियुक्तः । निरुपायप्रतिक्रियः उपायेन प्रतीकारेण च रहितः । यदा तु उपायप्रतिक्रियाभ्यां विरहितः स्यात् तदैव संश्रयवृत्तिरिष्यते, 'महादोषो हि विशिष्टबलसमागमो राज्ञाम्' ( कौ. ७।२ ) इति वचनात् । उपायान्तरे विद्यमाने संश्रयो नेष्यते बुधैरिति भावः । कुलोद्भवं कुलीनम् । कुलीनस्य हि मतिः कदाऽपि नाकार्ये प्रवर्तते । सत्यम् अमृषावादिनम् , आर्यं सदाशयम् , बलोत्कटम् अभियोक्त्रपेक्षया बलाधिकम् आश्रयेत रक्षार्थं शरणं व्रजेत् । 'कुलोद्भवम्' इत्यत्र 'कुलोद्धृतम्' इति मुद्रितपुस्तकपाठः । उनिसा.

[1]तद्दर्शनोपास्तिकता नित्यं तद्भावभाविता ।
तत्कारिता प्रश्रयिता वृत्तं संश्रयिणां स्मृतम् ॥

( १ ) समाश्रितस्य वृत्तिमाह— तद्दर्शनेत्यादि । तद्दर्शनाय उपास्तिः उपासना यस्येति विग्रहः । पश्चात् कप्रत्ययान्तस्य भावप्रत्ययः । तद्भावभाविता तदभिप्रायानुकूलता । तत्कार्यकारिता तदर्थकारिता । प्रश्रयिता सादरता । जम.

(२) एवमाश्रये जने आश्रितस्य विधेयमाह— तद्दर्शनोपास्तिकतेति । तद्दर्शनोपास्तिकता तद्दर्शने आश्रयभूपस्य दर्शने उपास्तिकता साष्टाङ्गप्रणिपातपूर्विका आराधनशीलता। नित्यं तद्भावभाविता । तथा चोक्तमेतल्लक्षणम्— 'यस्य यस्य हि यो भावस्तेन तेन हि तं नरः । अन्तः प्रविश्य मेधावी क्षिप्रमात्मवशं नयेत् । इति तत्कारिता चैतद्वृत्तं संश्रयिणः स्मृतम् ॥' इति । इत्युक्तरीत्या तदभिप्रायानुसारिकार्यकरणेन आत्मवशकारिता । तत्कारिता तस्य कारिता । एतत् एवं संश्रयिणः वृत्तं विधेयं स्मृतम् इत्यन्वयः । उनिसा.

[2]विनीतवत् तत्र कालं गमयित्वा गुराविव ।
तत्सङ्गात् प्रतिपूर्णः सन् क्रमेण स्ववशो भवेत् ॥

---

( १ ) विध. २।१५०।१० ; अग्नि. २३४।२५ ; राप्र. ३२८ ; राकौ. २४५ हीनस्तु तदा कुर्यात्तु ( हीनं तु यदा कुर्वीत ).

( २ ) विध. २।१५०।११ ; राकौ. २४५ चैताव ( एताव ).

( ३ ) अग्नि. २४०।३१–३२.

( ४ ) कानी. ११।२७ ; नीम. ४५ ; नन्द. ७।५६ यैमा ( यं सं ).

( १ ) कानी. ११।२८ ; उनिसा. श्रयिणां (श्रयिणः ).

( २ ) कानी. ११।२९ ; उनिसा. प्रति ( परि ).

(१) विनीतवत् विनीत इव। तत्सङ्गात् प्रतिपूर्णः तत्संश्रयादभ्युच्चितः। स्ववशो भवेत् स्वकर्मप्रधानः स्यात्। जम.

(२) तत्र आश्रये गुराविव संश्रितः विनीतवत्, न तु परमार्थतो विनीतः, कंचित् कालं गमयित्वा समयमतिवाह्य तत्सङ्गात् आश्रयसहवासात् परिपूर्णः अभ्युच्छ्रितः सन् क्रमेण स्ववशो भवेत्। तच्चित्तमेवाऽऽराध्येत्यर्थः। 'परिपूर्णः' इत्यत्र 'पूर्णशक्तिः' इति पाठान्तरम्। उनिसा.

**[1]दद्द्बलं वा कोशं वा भूमिं वा भूतिसंभवाम्।**
**आश्रयेदभियोक्तारं विसंधिरनपाश्रयः॥**

(१) बलं दण्डः। भूतिसंभवां गुणवतीं भूमिम्। विसंधिरनपाश्रय इति। यदा बलोत्कटो नास्ति तदा निराश्रयः अभियोक्त्रा सह संदध्यात्। तेनापि विसंधिश्चेदतिघोरमेवाऽऽश्रयेत्। जम.

(२) उक्तगुणसंपन्नसंश्रयाभावे विधेयमाह— दददिति। गत्यन्तराभावे तु अनपाश्रयः न आश्रयविहीनस्तिष्ठन् बलं वा कोषं वा भूमिं वा अथवा भूमिसंभवं राजस्वं ददत् समर्पयन् सन् विसंधिं संधिभङ्गकारिणम् अभियोक्तारमेव आश्रयेत इत्यन्वयः। विसंधिरिति क्वचित् पाठः। उनिसा.

**[2]सर्वाणि चैतान्यार्तः सन् दद्यात् त्राणार्थमात्मनः।**
**युधिष्ठिर इवाऽऽप्नोति पुनर्जीवन् वसुंधराम्॥**

(१) कस्मात् बलादीनि दद्यादित्याह— सर्वाणीत्यादि। त्राणार्थमात्मनः, तस्य प्रधानत्वात्, जीवतः पुनरावृत्तिदर्शनात्। यदाह— युधिष्ठिर इवेति। युधिष्ठिरो हि द्यूतेन हृतराज्योऽपि जीवन् पुनरवाप्तवान् राज्यमित्यतिप्रसिद्धम्। जम.

(२) आत्मजीवनरक्षार्थं सर्वस्वमपि दद्यादित्याह— सर्वाणीति। आर्तः प्रपीडितः सन् आत्मनस्त्राणार्थम् आत्मजीवनरक्षार्थं सर्वाणि बलकोषभूम्यादीनि दद्यात्। जीवन् पुनः युधिष्ठिर इव अन्ते वसुंधराम् एति प्राप्नोतीति संभावना, न तु निश्चयः। 'युधिष्ठिरो जिगायाऽऽदौ पुनर्जीवन् वसुंधराम्' इति पाठस्तु संगच्छते। 'युधिष्ठिर इवेत्यादि पुनर्जीवन् वसुंधराम्' इत्येवं पाठः प्राचीनटीकाकारसंमतोऽपि न सहृदयहृदयग्राही। उनिसा.

**[1]कल्याणी बत गाथेयं लौकिकी प्रतिभासते।**
**एति जीवन्तमानन्दो नरं वर्षशतादपि॥**

तदेव प्रकारान्तरेणाऽऽह— कल्याणीति। स्पष्टम्। उनिसा.

**त्यजेत् कुलार्थे पुरुषं ग्रामस्यार्थे कुलं त्यजेत्।**
**ग्रामं जनपदस्यार्थे विचार्य पृथिवीं त्यजेत्॥**

सर्वथा आत्मरक्षा कर्तव्येति प्रकारान्तरेण कथयति— त्यजेदिति। विचार्य आत्मनाशसंभावनायां विविच्य उपायान्तराभावे पृथिवीमपि त्यजेत्। प्रतीतमन्यत्। उनिसा.

**[2]निष्पतेदात्मलाभे वा व्यसने वा रिपोः श्रियः।**
**प्रहरेद्वाऽऽबलीयस्या सैंह्या वा काल उत्थितः॥**

(१) संश्रितः कदा निर्गच्छेदित्याह— निष्पतेदिति। आत्मलाभे स्ववृद्धौ सत्यां व्यसने वा शत्रोरन्तःकोपादौ। प्रहरेद्वा, यदि न निष्पतेत्। आबलीयस्या, वृत्त्येति शेषः। 'मत्तप्रमत्तवत्' (कानी. १०।३६-३७) इत्यादि प्रागुक्तया आबलीयस्या वृत्त्या वा सैंह्या वा सिंहवृत्त्या वा, स्वोत्साहमवेक्ष्येत्यर्थः। जम.

---

(१) **कानी.** ११।३० ; **उनिसा.** भवाम् (भवम्) श्रयेद (श्रयेता) संधिर (संधिम).

(२) **कानी.** ११।३१ ; **उनिसा.** इवाऽऽप्नोति (इवैत्यन्ते).

(१) **कानी.** ११।३१ इति श्लोकादूर्ध्वं उपाध्यायनिरपेक्षानुसारिण्यामिमौ अधिकौ श्लोकौ.

(२) **कानी.** ११।३२ ; **उनिसा.** श्रियः (श्रितः) वाऽऽबली (वा बली) वा काल उत्थितः (वृत्त्या बलं रिपुम्).

(२) धनदानादिना अभियोक्तुः परितोषमुत्पाद्य संश्रितस्याभियुक्तस्यानन्तरकर्तव्यतामाह— निष्पतेदिति । अभियोक्तरि विनीतवत् कंचित्कालं गमयित्वा आत्मलाभे आत्मोत्कर्षे सति निष्पतेत् तमभियोक्तारमाक्रामेत् । वा अथवा रिपोः व्यसने स्त्रीद्यूतादिव्यसने, समुपस्थिते सतीति शेषः, बलीयस्या सैंह्या वृत्त्या बलं श्रितः सन् रिपुं प्रहरेदित्यन्वयः । उनिसा.

**[१]नाकारणात् सङ्गमियाज्ज्यायसा वेतरेण वा ।**
**क्षयव्ययकृताद्दोषाद्विस्रम्भद्रोहजादपि ॥**

(१) यदा परस्यारिविगृहीतत्वं न पश्येत् तदा न संश्लिष्यात्, किंतु अदृष्ट एव कोशादीन् ददत् संश्रयेत् । तथा चोक्तम्— 'कोशदण्डभूमीनामन्यतमेनास्योपकर्तुमदृष्टः प्रयतेत । महादोषो हि निविष्टबलसमागमो राज्ञामन्यत्रारिविगृहीतात्' (कौ. ७।२) इति । इतरेण समहीनाभ्यां वा । दोषादपि न सङ्गमियादिति संबन्धः । विस्रम्भद्रोहजात् विस्रम्भघातसमुत्थात् । जम.

(२) कारणं विना प्रतिद्वन्द्विभूपेन न संगन्तव्यमित्याह— नाकारणादिति । कारणात् विना ज्यायसा विशिष्टबलेन इतरेण हीनबलेन वा सह सङ्गं न एयात् नाऽऽगच्छेत् । कस्मादित्याह— क्षयव्ययकृतात् विश्रम्भद्रोहजादपि दोषात् । क्षयः पुरुषवाहनादिविनाशः । व्ययः धान्यहिरण्यादीनामपचयः । तज्जनिताद्दोषात् । विश्रम्भद्रोहः विश्वासघातकता । तथा चोक्तम्— 'विश्रम्भमागतं साधुं द्रुह्यन्ते वा असाधवः' इति । उनिसा.

**[२]संयोगं हेतुना गत्वा पितर्यपि न विश्वसेत् ।**
**विश्वासमागतं सन्तं प्रायो द्रुह्यन्त्यसाधवः ॥**

(१) हेतुना कारणेन । पितर्यपि न विश्वसेत्, किमुत शत्रुषु ? विश्वासमागतं विश्वस्तम् । जम.

(२) एतदेव समर्थयन्नाह— संयोगहेतुनेति । एतत् सुगमम् । † उनिसा.

## शुक्रनीतिः

संश्रयार्हो नृपः, संश्रयकालः, गुणेषु संश्रयः श्रेष्ठः

**[१]यैर्गुप्तो बलवान् भूयाद्दुर्बलोऽपि स आश्रयः ॥**

दुर्बलोऽपि यैः गुप्तः रक्षितः सन् बलवान् भवेत् तेषामाश्रयणं समाश्रयः । शुनीटी.

**उच्छिद्यमानो बलिना निरुपायप्रतिक्रियः ।**
**कुलोद्भवं सत्यमार्यमाश्रयेत बलोत्कटम् ॥**

बलिना बलवता अरिणा उच्छिद्यमानः अत एव निरुपायप्रतिक्रियः गत्यन्तरहीनः सन् कुलोद्भवं कुलीनम् आर्यं साधुं बलोत्कटम् अतिप्रबलं नृपम् आश्रयेत । शुनीटी.

**विजिगीषोस्तु साह्यार्थाः सुहृत्संबन्धि-बान्धवाः ।**
**प्रदत्तभृतिका ह्यन्ये भूपा अंशप्रकल्पिताः ।**
**सवाऽऽश्रयस्तु कथितो दुर्गाणि च महात्मभिः ॥**

विजिगीषोः नृपस्य साह्यार्थाः सहायाः ये सुहृदः संबन्धिनः बान्धवाश्च प्रदत्तभृतिकाः दत्तवेतनाः, अन्ये भूपाः साहाय्यकारिण इत्यर्थः, अंशप्रकल्पिताः विजयलब्धधनम् अंशेन गृह्णीयुरित्यर्थः, आपत्काले महात्मभिः उन्नताशयैः सः सहायादय एव आश्रयः कथितः । तथा दुर्गाणि च आश्रयस्थानानि आपत्सु इत्यर्थः । शुनीटी.

**उपायेषूत्तमो भेदः षड्गुणेषु समाश्रयः ।**
**कार्यौ द्वौ सर्वथा तौ तु नृपेण विजिगीषुणा ॥**

---

(१) कानी. ११।३३ ; उनिसा. मिया (मेया) वेत (चेत).

(२) कानी. ११।३४ ; उनिसा. पूर्वार्धे (संयोगहेतुना गत्वा विश्वसेन्न पितर्यपि ।) गतं सन्तं (गते साधौ).

† पूर्वश्लोकटीकान्ते अस्यैव श्लोकस्योत्तरार्धं प्रमाणत्वेनोद्धृतमिति प्रत्यासत्तिबलात्कल्पनीयम् । अत्र व्याख्येयत्वेनोद्धृतम् । तथा च आनन्तर्येण द्विरुद्धृते एकस्मिन्नेव वचने कथं पाठभेद इति चिन्तनीयम् ।

(१) शुनी. ४।७।२३८, २८९-२९०, २९६.

उपायेषु सामादिषु मध्ये भेदः, तथा षड्गुणेषु मध्ये समाश्रयः उत्तमः श्रेष्ठः। विजिगीषुणा नृपेण तौ द्वौ भेदसमाश्रयौ तु सर्वदा कार्यौ। शुनीटी.

## योगयात्रा

संश्रयलक्षणम्

**[1]संश्लेषोऽन्यत्र यः स्यात् स खलु निगदितः संश्रयोऽन्यो गुणानाम् ॥**

## नीतिवाक्यामृतम्

संश्रयलक्षणम्, संश्रयिवृत्तम्, संश्रयकालः

**[2]परस्याऽऽत्मार्पणं संश्रयः ॥**

अथ संश्रयस्य स्वरूपमाह— परस्येति। यदा शत्रुर्बलवानागच्छति, स्थातुं स्वस्थाने न शक्यते, तदाऽऽत्मा तस्यार्प्यते। आत्मनो विनिवेदनं कृत्वा शपथाद्यैः स्वराष्ट्रं रक्षेत्। नीवाटी.

**रज्जुवलनमिव शक्तिहीनः संश्रयं कुर्याद्यदि न भवति परेषामामिषम् ॥**

अथ शक्तिहीनेन विजिगीषुणा यत्कर्तव्यं तदाह— रज्जुवलनमिति। यदा हीनबलः शत्रोः सकाशात् भवति तदा संश्रयं कुर्यात् द्वयानां सकाशं (?) बलिनः सकाशं गच्छेत्। यदि तेषामामिषं व्यसनं न भवति। किमिव संश्रयं कुर्यात्? रज्जुवलनमिव। यथा प्रभूततन्तुसंश्रयाद्रज्जुर्दृढो भवति, न त्रुट्यति, तथा विजिगीषुरपि। तथा च गुरुः— 'स्याद्यदा शक्तिहीनस्तु विजिगीषुर्हि वैरिणः। संश्रयीत तदा चान्यं बलाय व्यसनच्युतात् ॥'। नीवाटी.

**बलवद्भयादबलवदाश्रयणं हस्तिभयादेरण्डाश्रयणमिव ॥**

अथ बलानां संप्रदायेन यद्भवति तदाह— बलवदिति। बलवद्रिपोर्भयात् यदबलस्य बलहीनस्य संश्रयः क्रियते स किंविशिष्ट इव? हस्तिभयादेरण्डारोहणमिव। यथा हस्तिभयादेरण्डाश्रयः कृतः एरण्डेनापि सह पुरुषो विनाशं गच्छति। तस्माद्धीनबलो न संश्रयणीयः। तथा च भागुरिः— 'बलाढ्यस्य भयाद्धीनं यो बलेन समाश्रयेत्। स तेन सह नश्येत यथैरण्डाश्रयी गजः(? जनः) ॥'। नीवाटी.

**स्वयमस्थिरेणास्थिराश्रयणं नद्यां वहमानेन वहमानस्याऽऽश्रयणमिव ॥**

अथ अस्थिरस्यास्थिरस्याऽऽश्रयेण यद्भवति तदाह— स्वयमिति। यो विजिगीषुः स्वयमस्थिरो भवति शत्रुपरित्रस्तो भवति, स यदा अन्यं शत्रुपरिभूतं संश्रयते, तदा तेनैव विनाशं याति। कथम्? यथा नद्यां नीयमानोऽन्यं नीयमानं संश्रयते, ततो द्वाभ्यामपि विनाशो भवति। तस्मादस्थिरं न समाश्रयीत। तथा च नारदः— 'बलं बलाश्रितेनैव सह नश्यति निश्चितम्। नीयमानो यथा नद्यां नीयमानं समाश्रितः ॥'। नीवाटी.

**वरं मानिनो मरणं न परेच्छानुवर्तनादात्मविक्रयः ॥**

अथ मानिनां यत्कर्तव्यं तदाह— वरमिति। मानिनः साहंकारस्य राज्ञः वरं श्रेष्ठम्। किं तत्? मरणम्। न परच्छन्दानुवर्तनेन शत्रोराज्ञाकरणेन आत्मविक्रयः कृतः। तस्माच्छत्रोः संश्रयो न कार्यः। तथा च नारदः— 'वरं वनं वरं मृत्युः साहंकारस्य भूपतेः। न शत्रोः संश्रयाद्राज्यं ...... कार्यं कथंचन ॥'। नीवाटी.

**आयतिकल्याणे सति कस्मिंश्चित्संबन्धे परसंश्रयः श्रेयान् ॥**

अथ कार्यापेक्षया विजिगीषुणा यत्कर्तव्यं तदाह— आयतिकल्याण इति। न केवलं शत्रोः संश्रयो न कर्तव्यः, अपि तु क्रियते कस्मिंश्चिद्विषये, आयत्यां परिणामे शत्रुसंश्रयोऽपि श्रेयान् कल्याणप्रदः भवतीति। तथा च हारीतः— 'परिणामं शुभं ज्ञात्वा शत्रुजः संश्रयोऽपि च। कस्मिंश्चिद्विषये कार्यः सततं न कथंचन ॥'। नीवाटी.

---

(१) योया. ११।१४.
(२) नीवा. २९।४७, ५५-५९.

¹बलवन्तमाश्रित्य विकृतिभञ्जनं सद्यो मरणकारणम् ॥

अथ बलवन्तमाश्रित्य यो विकृतिभञ्जनं करोति तस्य यत्सद्यो भवति तदाह— बलवन्तमाश्रित्येति । विशेषाकृतिः विकृतिः भक्तिलक्षणा । तस्या यो भङ्गः अभक्तिलक्षणः स सद्यो मरणं तत्क्षणात् करोति । तथा च जैमिनिः— 'भक्त्या संसेव्यमानस्य बलवन्तस्य (?) कारणम् । अभक्तिः स्तोकमायाति करोति मरणं ध्रुवम् ॥' ।

नीवाटी.

## युक्तिकल्पतरुः

संश्रयकालः, संश्रयिवृत्तम्

²अस्थितौ यदि कल्याणं भवेत् संश्रयणं तथा ।
भवति श्रेयसे राज्ञां विपरीतं न कर्हिचित् ॥
उच्छिद्यमानो बलिना आश्रयेद् बलवत्तरम् ।
विनीतवत्तत्र कालं नयेदिति मतिर्ध्रुवा ॥
ददद्बलं वा कोषं वा भूमिं वा भूमिसंभवाम् ।
आश्रयेदभियोक्तारं समाश्रयगुणान्वितम् ॥

(१) नीवा. २७।६४.

(२) युक. १३–१४।९२–९४.

## मानसोल्लासः

संश्रयकालः, संश्रयप्रकाराः त्रयः

¹स्वयं हीनबलो राजा जयहेतुं न पश्यति ।
बलिना पीड्यमानो यः क्षेमस्थानं समाश्रयेत् ॥
सत्संश्रयोऽन्यसंसर्गो दुर्गसंश्रयणं तथा ।
इति भेदास्त्रयः प्रोक्ताश्चतुर्थो नोपलभ्यते ॥
महता शत्रुणा यस्तु पीडितोऽल्पबलो नृपः ।
सत्यसंधं परिज्ञाय तमेवाऽऽश्रयते बुधः ॥
बहून् वा सद्गुणान् वीक्ष्य शत्रुं यस्तु समाश्रयेत् ।
तं गुणं नीतितत्त्वज्ञाः सत्संश्रयमुशन्ति हि ॥
शत्रुणा बाध्यमानो हि स्वयं वाऽप्यनुपायकः ।
गुणहीनं रिपुं ज्ञात्वा श्रयेदन्यं गुणाधिकम् ॥
बलिनं क्रियया युक्तं धर्मज्ञं सत्यवादिनम् ।
आश्रयेदीदृशं यस्तु सोऽन्यसंश्रय उच्यते ॥
वैरिणा बलयुक्तेन पीडितो ह्यसमो रिपुः ।
यत्तु संश्रयते दुर्गं दुर्गसंश्रय इष्यते ॥

(१) मासो. २।९४९–९५५.

# *कार्याध्यक्षाः

## हारीतः

शासनलेखकलक्षणानि

[1]सकृदुक्तगृहीतार्थो लघुहस्तो जिताक्षरः ।
सर्वशास्त्रसमालोकी एष शासनलेखकः ॥

## वृद्धहारीतः

स्थापनीयाध्यक्षलक्षणानि

[2]तत्र कर्मसु निष्णातान् कुशलान् धर्मनिष्ठितान् ।
सत्यशौचयुताञ्शुद्धानध्यक्षान् स्थापयेन्नृपः ॥

## वसिष्ठः

राजादिष्टः राजशासनलेखकः

[3]संधिविग्रहकारी तु भवेद्यस्तस्य लेखकः ।
स्वयं राज्ञा समादिष्टः स लिखेद्राजशासनम् ॥

## विष्णुः

ग्रामादिदोषपरिहाराय उच्चावचस्थानीयाध्यक्षनियुक्तिः, कार्यभेदेन अध्यक्षाधिकारलक्षणानि

†[4]तत्र स्वस्वग्रामाधिपान् कुर्यात् ॥
दशाध्यक्षान् ॥
शताध्यक्षान् ॥
देशाध्यक्षांश्च ॥

* शासनलेखकादयः क्षुद्रकर्मकरा अप्यत्रैव संगृहीताः ।

† एतदादीनां 'दोषमुच्छिन्द्यात्' इत्यन्तानां सूत्राणां व्याख्यासंग्रहः 'प्रकृतयः– राष्ट्रम्' (पृ. १३८५) इत्यस्मिन् प्रकरणे द्रष्टव्यः ।

(१) रार. १९ क्रमेण हारीतः. (२) वृहास्मृ. ७।२३४.

(३) मिता. १।३२० ( = ); राप्र. १३० स्मृत्यन्तरे; नीम. ३८ ( = ).

(४) विस्मृ. ३।७–१५. शेषः स्थलादिनिर्देशः 'प्रकृतयः– राष्ट्रम्' (पृ. १३८५) इत्यस्मिन् प्रकरणे द्रष्टव्यः.

ग्रामदोषाणां ग्रामाध्यक्षः परीहारं कुर्यात् ॥
अशक्तो दशग्रामाध्यक्षाय निवेदयेत् ॥
सोऽप्यशक्तः शताध्यक्षाय ॥
सोऽप्यशक्तो देशाध्यक्षाय ॥
देशाध्यक्षोऽपि सर्वात्मना दोषमुच्छिन्द्यात् ॥
[1]आकरशुल्कतरनागवनेष्वाप्तान्नियुञ्जीत ॥
[2]धर्मिष्ठान् धर्मकार्येषु ॥
निपुणानर्थकार्येषु ॥
[3]शूरान् संग्रामकर्मसु ॥
[4]उग्रानुग्रेषु ॥
षण्ढान् स्त्रीषु ॥

(१) आकराः सुवर्णरजताद्युत्पत्तिस्थानानि । लवणपदेनापि तदाकरा ग्राह्याः । शुल्कं पण्यविंशतिभागादिस्थलशुल्कम् । तरशब्देन तरशुल्कमुच्यते । तरः नौकादिभिः सरित्तरणम् । नागवरेषु अत्युत्कृष्टगजेषु । 'नागवनेषु' इति पाठे गजबन्धनयोग्येषु वनेषु इति व्याख्येयम् । राप्र. १८७

(२) तरः तीर्यते नद्यादि येनेति तरो नौकादिः, तज्जं शुल्कम्, जलजं शुल्कमिति यावत् । नागाः गजाः । वनानि अरण्यानि । नागवन्ति वनानीति वा । नगः पर्वतः, तत्संबन्धि नागं गिरिदुर्गमिति वा । अर्थकार्येषु

(१) विस्मृ. ३।१६; अप. १।३२० आकर + (लक्षण); राक. ३२ आकर + (लवण); राप्र. १८७ आकर + (लवण) वने (वरे), 'वने' इत्यपि पाठः.

(२) विस्मृ. ३।१७–१८; अप. १।३२०; राक. ३२; राप्र. १८७.

(३) विस्मृ. ३।१९; अप. १।३२०; राक. ३२ कर्मसु (कार्येषु); राप्र. १८७.

(४) विस्मृ. ३।२०–२१; अप. १।३२०; राक. ३२; राप्र. १८७.

सुवर्णादिपरीक्षासु यद्वा ऊहापोहादिनिर्णयवत्सु कार्येषु निपुणान् पण्डितान् नियुञ्जीत । वै.

## शङ्खलिखितौ

कार्यभेदेन अध्यक्षाधिकारलक्षणानि

**[1]वीरा महत्स्वात्मनि च धर्मनित्याः संग्रहेष्वलुब्धाः प्रत्यन्तेषु मौलाः शुचयोऽर्थकृत्येष्वन्येषु यथानुरूपं नियोज्याः ॥**

महत्सु कार्येषु स्वात्मनि च रक्षितव्याः । धर्मनित्याः धार्मिकाः । संग्रहेषु, अर्थस्येति शेषः । प्रत्यन्तेषु स्वमण्डलप्रत्यन्तदेशेषु । मौलाः तद्देशजाताः ।

* राक. ३२

## महाभारतम्

प्रश्नद्वारा सूचितानि राज्ञा नियुक्तानां कर्तव्यानि कार्यानुष्ठानं परस्पररक्षणम् अनुज्ञयैव विषयसेवनं कोशकोष्ठवाहनदारायुधायपालनम् आयव्ययलेखनं च, निरपराधरक्षणम् अधिकारानुरूपनियुक्तिः च राज्ञः कर्तव्यम् , संहत्य कार्यनिर्वृत्तिश्च नियुक्तानां कर्तव्यम्

**†कच्चित् स्वपरराष्ट्रेषु बहवोऽधिकृतास्तव ।**
**अर्थान् समनुतिष्ठन्ति रक्षन्ति च परस्परम् ॥**
**कच्चिदभ्यवहार्याणि गात्रसंस्पर्शकानि च ।**
**घ्रेयाणि च महाराज रक्षन्त्यनुमतास्तव ॥**
**कच्चित् कोशं च कोष्ठं च वाहनं द्वारमायुधम् ।**
**आयश्च कृतकल्याणैस्तव भक्तैरनुष्ठितः ॥**
**कच्चिदायव्यये युक्ताः सर्वे गणकलेखकाः ।**
**अनुतिष्ठन्ति पूर्वाह्णे नित्यमायव्ययं तव ॥**
**कच्चिदर्थेषु संप्रौढान् हितकामाननुप्रियान् ।**
**नापकर्षसि कर्मभ्यः पूर्वमप्राप्य किल्बिषम् ॥**
**कच्चिद् विदित्वा पुरुषानुत्तमाधममध्यमान् ।**
**त्वं कर्मस्वनुरूपेषु नियोजयसि भारत ॥**
**कच्चिन्न लुब्धाश्चौरा वा वैरिणो वा विशां पते ।**
**अप्राप्तव्यवहारा वा तव कर्मस्वनुष्ठिताः ॥**
**कच्चिच्छुचिकृतः प्राज्ञाः पञ्च पञ्च स्वनुष्ठिताः ।**
**क्षेमं कुर्वन्ति संहत्य राजन् जनपदे तव ॥**
**कच्चिद्रक्ताम्बरधराः खड्गहस्ताः स्वलंकृताः ।**
**अभितस्त्वामुपासन्ते रक्षणार्थमरिंदम ॥**

उपधाभिः अवञ्चितानां राजपुरुषाणां दूरागतवणिग्भिः पण्यैश्च कर्तव्यता

**कच्चिदभ्यागता दूराद्वणिजो लाभकारणात् ।**
**यथोक्तमवहार्यन्ते शुल्कं शुल्कोपजीविभिः ॥**
**कच्चित्ते पुरुषा राजन् पुरे राष्ट्रे च मानिताः ।**
**उपानयन्ति पण्यानि उपधाभिरवञ्चिताः ॥**

कार्यभेदेन नियोक्तव्यानां लक्षणानि, अनियोक्तव्यानां दोषाः

**[1]मन्त्रयेत् सह विद्वद्भिः शक्तैः कर्माणि कारयेत् ।**
**स्निग्धैश्च नीतिविन्यासान् मूर्खान् सर्वत्र वर्जयेत् ॥**

स्निग्धैः हितेप्सुभिः । नीतेः प्रजादारापत्यादेः विन्यासाः स्थापनानि । नीटी.

**धार्मिकान् धर्मकार्येषु अर्थकार्येषु पण्डितान् ।**
**स्त्रीषु क्लीबान्नियुञ्जीत क्रूरान् क्रूरेषु कर्मसु ॥**

गुणसंपन्नाध्यक्षद्वारपालशिरोरक्षकादीनां नियुक्तिः

**[2]आकरे लवणे शुल्के तरे नागवने तथा ।**
**न्यसेदमात्यान्नृपतिः स्वाप्तान्वा पुरुषान्हितान् ॥**

आकरे स्वर्णाद्युत्पत्तिस्थाने । लवणे तदुत्पत्तिस्थाने । शुल्के धान्यादिविक्रयस्थाने । तरे नदीसंतरणे । नागबले

---

* राप्र. राकवत् ।

† एतदादीनामेकादशानां श्लोकानां व्याख्यानसंग्रहः स्थलादिनिर्देशश्च 'राजनीतेः सामान्यसिद्धान्ता०' इत्यस्मिन्प्रकरणे ( पृ. ५४८-५५३ ) द्रष्टव्यः ।

(१) राक. ३१ ; राप्र. १८६.

(१) भा. ३।१४९।४५-४६ ; भासु. ३।१५०।४५-४६.

(२) भा. १२।६९।२८ ; भासु. १२।६९।२९ वने (बले).

हस्तियूथे । एतेषु स्थानेषु आयव्ययविचारार्थममात्यान्न्यसेत् । नीटी.

[1]**मा स्म लुब्धांश्च मूर्खांश्च कामे चार्थेषु यूयुजः ।**
**अलुब्धान् बुद्धिसंपन्नान् सर्वकर्मसु योजयेत् ॥**

[2]**मूर्खो ह्यधिकृतोऽर्थेषु कार्याणामविशारदः ।**
**प्रजाः क्लिश्नात्ययोगेन कामद्वेषसमन्वितः ॥**

अयोगेन— योगः इष्टप्राप्तिः, तदभावेन । नीटी.

[3]**कुलीनः शीलसंपन्नो वाग्मी दक्षः प्रियंवदः ।**
**यथोक्तवादी स्मृतिमान् दूतः स्यात् सप्तभिर्गुणैः ॥**

[4]**एतैरेव गुणैर्युक्तः प्रतीहारोऽस्य रक्षिता ।**
**शिरोरक्षश्च भवति गुणैरेतैः समन्वितः ॥**

प्रतीहारः द्वारपालः । शिरोरक्षः— शिरांसीव शिरांसि दुर्गनगरादीनि प्रधानस्थानानि, तद्रक्षणकर्ता । नीटी.

[5]**धर्मार्थशास्त्रतत्त्वज्ञः संधिविग्रहको भवेत् ।**
**मतिमान् धृतिमान् धीमान् रहस्यविनिगूहिता ॥**

[6]**कोशाक्षपटलं यस्य कोशवृद्धिकरैर्जनैः ।**
**आप्तैस्तुष्टैश्च सततं धार्यते स नृपोत्तमः ॥**

पटलं समूहम् । नीटी.

[7]**कोष्ठागारमसंहार्यैराप्तैः संचयतत्परैः ।**
**पात्रभूतैरलुब्धैश्च पाल्यमानं गुणीभवेत् ॥**

कोष्ठागारं धान्यादिसामग्रीगृहम् । गुणीभवेत् बहुगुणिभावं गच्छेत् । नीटी.

[1]**यो यत्र निपुणः कार्ये तं च तत्र नियोजयेत् ।**
**कार्यमुद्दिष्टकर्मा योऽशास्त्रतोऽपि स मुह्यति ॥**

## कौटिलीयमर्थशास्त्रम्

द्रव्यसंग्रहकर्त्रा संनिधातृणा निर्मातव्याः कोशगृहपण्यगृहकोष्ठागारकुप्यगृहायुधागारबन्धनागाराः, संग्राह्यद्रव्यविवेकः, तत्संबन्धिषु अपराधेषु दण्डविधिः

* [2]**संनिधाता कोशगृहं पण्यगृहं कोष्ठागारं कुप्यगृहमायुधागारं बन्धनागारं च कारयेत् ॥**

'संनिधातृनिचयकर्म' इति सूत्रम् । संनिधाता द्रव्यं संचित्य निधाता भाण्डागाराधिपतिः, तस्य निचयकर्म द्रव्यसंग्रहरक्षणकर्म, तदिहोच्यते इति सूत्रार्थः । निचेयद्रव्यप्रसङ्गान्निचेतृव्यापाराभिधानम् ।

संनिधातेति । संनिधाता कोशगृहं रत्नस्वर्णादिनिधानस्थानम्, पण्यगृहं विक्रेयद्रव्यनिवेशस्थानम्, कोष्ठागारम् उदरोपयोगिधान्यस्नेहादिनिक्षेपस्थानम्, कुप्यगृहं सारदारुवेणुवल्लीवर्गादिरक्षणस्थानम्, आयुधागारम्, बन्धनागारं च कारागृहं च कारयेत् । श्रीमूला.

**चतुरश्रां वापीमनुदकोपस्नेहां खानयित्वा पृथुशिलाभिरुभयतः पार्श्वं मूलं च प्रचित्य सारदारुपञ्जरं भूमिसमत्रितलमनेकविधानं कुट्टिमदेशस्थानतलमेकद्वारं यन्त्रयुक्तसोपानं देवतापिधानं भूमिगृहं कारयेत् । तस्योपर्युभयतोनिषेधं सप्रग्रीवमैष्टकं भाण्डवाहिनीपरिक्षिप्तं**

---

(१) भा. १२।७२।८ ; भामु. १२।७१।८ कामे चार्थेषु (कामार्थे च प्र).

(२) भा. १२।७२।९ ; भामु. १२।७१।९ द्वेष (क्रोध).

(३) भा. १२।८६।२७ ; भामु. १२।८५।२८ शील (कुल).

(४) भा. १२।८६।२८ ; भामु. १२।८५।२९.

(५) भा. १२।८६।२९ ; भामु. १२।८५।३० धर्मार्थशास्त्र (धर्मशास्त्रार्थ) हको (हिको) धीमान् (ह्रीमान्).

(६) भा. १२।११६।१९ ; भामु. १२।११५।२० कोशाक्ष (कोशाख्य) जनैः (नरैः) धार्यते (चीयते).

(७) भा. १२।११६।२० ; भामु. १२।११५।२१.

* अध्यक्षप्रचाराख्यस्य द्वितीयाधिकरणस्य प्रथमद्वितीयाध्यायौ 'प्रकृतयः— राष्ट्रम्' इत्यस्मिन् प्रकरणे (पृ. १३८९-१३९५), तृतीयचतुर्थाध्यायौ 'प्रकृतयः-दुर्गम्' इत्यस्मिन् प्रकरणे (पृ. १४४५-१४५२) संगृहीतौ, राष्ट्रदुर्गयोस्तत्र प्राधान्यात् । शेषमधिकरणमत्र संगृहीतम् ।

(१) रार. २६. (२) कौ. २।५.

**कोशगृहं कारयेत् प्रासादं वा । जनपदान्ते ध्रुवनिधिमापदर्थमभित्यक्तैः पुरुषैः कारयेत् ॥**

कोशगृहनिर्माणप्रकारमाह— चतुरश्रामिति । चतुरश्रां वापीं तदाकारं गर्तं अनुदकोपस्नेहाम् उदकोपक्लेदरहितां खानयित्वा, उभयतः समन्तात् पार्श्वे मूलं च पृथुशिलाभिः प्रचित्य, सारदारुपञ्जरं सारदारुमयपञ्जरयुक्तम्, भूमिसमत्रितलं भूमिसमानि भूम्यानुरूप्यनिर्मितानि त्रीणि तलानि उपरितलमध्यमतलाधस्तलानि यस्य तत् तथाभूतम्, अनेकविधानम् अनेकानि विधानानि कोष्ठकादिरचनाः यस्मिंस्तत् तथाभूतम्, कुट्टिमदेशस्थानतलम्— देशः उपरितलम्, स्थानं मध्यतलम्, तलं अधोभूमिका, इत्येतानि कुट्टिमानि दृढनिबद्धानि यस्य तत् तथाभूतम्, एकद्वारम्, यन्त्रयुक्तसोपानं यन्त्रे युक्तानि यथावसरनिवेशनापसरणक्षमतया संश्लिष्टानि सोपानानि यस्य तत् तथाभूतम्, देवतापिधानम् उत्कीर्णदेवताप्रतिमाङ्कं पिधानं दार्वादिमयमाच्छादनं यस्य तत् तथाभूतं भूमिगृहं कारयेत् । तस्येति । तस्य भूमिगृहस्य उपरि उभयतोनिषेधं बहिरन्तश्चार्गलयुक्तं सप्रग्रीवं प्रग्रीवेण मुखशालया सहितम् ऐष्टकं पक्वेष्टकामयं भाण्डवाहिनीपरिक्षिप्तं द्रव्याधारशालापरिवृतं कोशगृहं प्रासादं वा उपरिगृहमिव कारयेत् । जनपदेत्यादि । आपदर्थं विपत्कालोपयोगार्थं ध्रुवनिधिम् अनपायनिधिकम् अर्थात् प्रासादं जनपदान्ते अभित्यक्तैः वध्यैः पुरुषैः कारयेत् । वध्यपुरुषा हि राज्ञा यत्नरक्षिताः निधिगुप्तिस्थानविधानरहस्यं निर्माणकाले नोद्भिन्द्युः, निर्माणनिर्वृत्त्युत्तरकाले च सद्यो मारिता भवन्तीति सोऽयं ध्रुवनिधिरनन्यवेद्यो वेदितव्यः । श्रीमूला.

**पक्वेष्टकास्तम्भं चतुःशालमेकद्वारमनेकस्थानतलं विवृतस्तम्भापसारमुभयतः पण्यगृहं कोष्ठागारं च, दीर्घबहुलशालं कक्ष्यावृतकुडयमन्तः कुप्यगृहम्, तदेव भूमिगृहयुक्तमायुधागारम्, पृथग्धर्मस्थीयं महामात्रीयं विभक्तस्त्रीपुरुषस्थानमपसारतः सुगुप्तकक्ष्यं बन्धनागारं कारयेत् ॥**

पण्यगृहादिविधिमाह— पक्वेत्यादि । पक्वेष्टकास्तम्भं पक्वेष्टकामयैः स्तम्भैर्युक्तम्, चतुःशालं चतस्रः चतुर्दिग्गताः अन्योन्यसंमुखीनाः शालाः यस्मिंस्तत् तथाभूतम्, एकद्वारम्, अनेकस्थानतलम् अनेकैः कोष्ठभूमिकाभिश्च युक्तम्, उभयतः उभयपार्श्वयोः विवृतस्तम्भापसारं विवृतस्तम्भः विस्तृतस्तम्भः अपसारः अलिन्दः यस्य तत् तथाभूतं पण्यगृहं कोष्ठागारं च कारयेत् । दीर्घबहुलशालम्, कक्ष्यावृतकुडयं कक्ष्याभिः प्रकोष्ठकैः वृतं परीतं कुडयं यस्मिंस्तत् तथाभूतं कुप्यगृहम् अन्तः कारयेत् । भूमिगृहयुक्तं तदेव कुप्यगृहमेव आयुधागारं कारयेत् । बन्धनागारं धर्मस्थीयं महामात्रीयं पृथक् कारयेत् धर्मस्थीयमित्येकं महामात्रीयमित्यपरं च प्रत्येकं निर्मापयेत् । तत्र धर्मस्थाः व्यवहारनिर्णेतारः, तत्संबन्धि धर्मस्थीयम् । व्यवहारार्थमागतानामवस्थित्यर्थं व्यवहारपराजितनिरोधार्थं च स्थानमित्यर्थः । महामात्राः संनिधातृसमाहर्तृप्रभृतयः अर्थाधिकारिणः, तत्संबन्धि महामात्रीयम्, विश्वासाधित्वेन गृहीतानां युद्धप्रगृहीतादीनां च जनानां निवेशस्थानमित्यर्थः । बन्धनागारं कीदृशम् ? विभक्तस्त्रीपुरुषस्थानम्, अपसारतः सुगुप्तकक्ष्यं अपसरणमार्गमनुसृत्य सुष्ठु रक्षितकक्ष्यम् । श्रीमूला.

**सर्वेषां शालाखातोदपानवच्च स्नानगृहाग्निविषत्राणमार्जारनकुलारक्षाः स्वदैवपूजनयुक्ताः कारयेत् ॥**

सर्वेषां कोशगृहादीनां षण्णां शालाखातोदपानवत् शालापरिखाकूपैस्तुल्यं स्नानगृहाग्निविषत्राणमार्जारनकुलारक्षाः— स्नानगृहम्, अग्नित्राणं मानुषाग्निना त्रिरपसव्यपरिगमनरूपं निशान्तप्रणिध्युक्तम् (कौ. १।२०), विषत्राणम्, मार्जारनकुलौ, विषत्राणभूतौ मार्जारनकुलौ वा, आरक्षां रक्षिपुरुषैर्गुप्तिं च स्वदैवपूजनयुक्ताः स्वस्वदैवतार्चनयुक्ताः कारयेत् । तत्र कोशगृहस्य धनदो देवता, पण्यकोष्ठागारयोः श्रीदेवी, कुप्यगृहस्य विश्वकर्मा, आयुधबन्धनागारयोर्यमवरुणाविति विवेकः । श्रीमूला.

**कोष्ठागारे वर्षमानमरत्निमुखं कुण्डं स्थापयेत् ॥**

कोष्ठागारे वर्षमानं वर्षं वृष्टिः मीयतेऽनेनेति तथाभूतम् अरत्निमुखम् अरत्निचतुरश्रमुखम् कुण्डं गर्तं स्थापयेत् खानयेत् । श्रीमूला.

**तज्जातकरणाधिष्ठितः पुराणं नवं च रत्नं सारं फल्गु कुप्यं वा प्रतिगृह्णीयात् । तत्र रत्नोपधावुत्तमो दण्डः कर्तुः कारयितुश्च, सारोपधौ मध्यमः, फल्गुकुप्योपधौ तच्च तावच्च दण्डः ॥**

पुराणं नवं च, विविच्येति शेषः । रत्नं मणिमुक्तादिकम्, सारं चन्दनादि, फल्गु वस्त्रादि, कुप्यं वा दारुचर्मवेणुवल्ककोष्ठोपकरणादिकं वा तज्जातकरणाधिष्ठितः रत्नादितत्तद्वस्तुव्यवहारिवंश्यैः कायस्थैश्चोपेतः सन् प्रतिगृह्णीयात् संगृह्णीयात् । तत्रेति । तत्र रत्नोपधौ निर्गुणरत्नं प्रतिनिधाय गुणवद्रत्नहरणे कर्तुः कारयितुश्च उत्तमो दण्डः पणसाहस्ररूपः उत्तमसाहसः । सारोपधौ मध्यमः मध्यमसाहसः । फल्गुकुप्योपधौ तच्च तावच्च दण्डः यत् द्रव्यं हृतं तच्च तत्समपरिमाणं तज्जातीयमपरं चेत्युभयं दण्डो भवति । श्रीमूला.

**रूपदर्शकविशुद्धं हिरण्यं प्रतिगृह्णीयात्, अशुद्धं छेदयेत् । आहर्तुः पूर्वः साहसदण्डः ॥**

हिरण्यं प्रणीतमुद्राङ्कं स्वर्णं रजतं च दीनारादिकं रूपदर्शकविशुद्धं रूपपरीक्षकमुखेन विज्ञातशुद्धिकं प्रतिगृह्णीयात् । अशुद्धं कूटप्रणीतं हिरण्यं छेदयेत् भञ्जयेत् अपुनरुपयोगाय । आहर्तुः कूटहिरण्यानेतुः पूर्वः साहसदण्डः । श्रीमूला.

**शुद्धं पूर्णमभिनवं च धान्यं प्रतिगृह्णीयात् । विपर्यये मूल्यद्विगुणो दण्डः ॥**

शुद्धं निर्बुसं पूर्णम् अनूनमानम् अभिनवं च धान्यं प्रतिगृह्णीयात् धान्यग्रहणाधिकृतः । विपर्यये अतथाविधधान्यप्रतिग्रहे मूलद्विगुणो दण्डः । श्रीमूला.

**तेन पण्यं कुप्यमायुधं च व्याख्यातम् ॥**

पण्यकुप्यायुधप्रतिग्रहेऽपि धान्योक्त एव न्याय इत्याह— तेनेत्यादि । श्रीमूला.

**सर्वाधिकरणेषु युक्तोपयुक्ततत्पुरुषाणां पणद्विपणचतुष्पणाः, परमपहारेषु पूर्वमध्यमोत्तमवधा दण्डाः ॥**

सर्वाधिकरणेषु सर्वेष्वधिकारस्थानेषु युक्तोपयुक्ततत्पुरुषाणाम्— युक्तः प्रधानः, उपयुक्तः तत्सहकारी, तत्पुरुषाः तयोरधश्चराः, तेषां पणद्विपणचतुष्पणाः एकः पणः द्वौ पणौ चत्वारः पणाश्च दण्डाः अपहारेषु पूर्वोक्तजातीयेषु । परमपहारेषु सकृद्दण्डनात् परतोऽपहारेषु पूर्वमध्यमोत्तमवधाः दण्डाः पूर्वसाहसो मध्यमसाहस उत्तमसाहसो वधश्च दण्डाः । तत्राऽऽद्यास्त्रयो दण्डा यथाक्रमं प्रयोक्तव्याः, वधदण्डस्तु ततोऽपि परस्तादपहारेषु प्रयोक्तव्य इति बोद्धव्यम् ।

श्रीमूला.

**कोशाधिष्ठितस्य कोशावच्छेदे घातः । तद्वैयावृत्यकाराणामर्धदण्डः । परिभाषणमविज्ञाते । चोराणामभिप्रधर्षणे चित्रो घातः ॥**

कोशाधिष्ठितस्य कोशाधिष्ठातुः भाण्डागाराध्यक्षस्य कोशावच्छेदे कोशस्य सुरुङ्गाद्युपायेनापहारे घातः वधदण्डः । तद्वैयावृत्यकाराणाम्— तस्य वैयावृत्यकाराः विशेषेण आ समन्तात् वर्तत इति व्यावृत्तः परिचारकः, तस्य कर्म वैयावृत्त्यं परिचर्या, तत् कुर्वन्तः परिचारकाः, तेषाम् अर्धदण्डः । अविज्ञाते सति अर्थात् कोशाधिष्ठातृकृते कोशावच्छेदे, परिभाषणं तद्वैयावृत्यकाराणां सनिन्दोपालम्भः । चोराणामिति । चोराणाम् अभिप्रधर्षणे कुड्यसंधिच्छेदादिना धनापहरणे चित्रो घातः । श्रीमूला.

संनिधातुः कर्तव्यम्

**तस्मादाप्तपुरुषाधिष्ठितः संनिधाता निचयाननुतिष्ठेत् ॥**

स्पष्टम् । श्रीमूला.

**बाह्यमाभ्यन्तरं चायं विद्याद्वर्षशतादपि ।**
**यथा पृष्टो न सज्जेत व्ययशेषं च दर्शयेत् ॥**

बाह्यं जनपदोत्थम् आभ्यन्तरं नगरोत्थं च आयं विद्यात् संनिधाता । कथं विद्यात् ? यथा वर्षशतादपि पृष्टः अतीतं वर्षशतमधिकृत्यापि आयं चोदितः न

सज्जेत न सक्तो भवेत् । निष्प्रतिबन्धं वदेदित्यर्थः । व्ययशेषं दर्शयेच्च व्ययितावशिष्टं द्रव्यं दृष्टिगोचरं कारयेच्च भाण्डागारे । श्रीमूला.

धनोत्पत्त्यर्थं समाहर्तृकर्म दुर्गराष्ट्रखनिसेतु-
वनव्रजवणिक्पथावेक्षणम्

**[1]समाहर्ता दुर्गं राष्ट्रं खनिं सेतुं वनं व्रजं वणिक्पथं चावेक्षेत ॥**

' समाहर्तृसमुदयप्रस्थापनम् ' इति सूत्रम् । समाहर्ता विषयव्रल्यध्यक्षः, तेन करणीयं समुदयप्रस्थापनं धनोत्पत्तिप्रवर्तनम् उच्यते इति सूत्रार्थः । अर्थोपधाशुद्धः संनिधातृकर्मणि समाहर्तृकर्मणि च नियोक्तव्य इत्युक्तं प्राक् । तद्व्यापार इदानीमभिधीयते ।

दुर्गादिसप्तकं समाहर्त्रा चिन्तनीयमित्याह— समाहर्तेत्यादि । श्रीमूला.

दुर्गराष्ट्रखनिसेतुवनव्रजवणिक्पथानां प्रकाराः
सप्तषष्टिः आयशरीरम्

**शुल्कं दण्डः पौतवं नागरिको लक्षणाध्यक्षो मुद्राध्यक्षः सुरा सूना सूत्रं तैलं घृतं क्षारः सौवर्णिकः पण्यसंस्था वेश्या द्यूतं वास्तुकं कारुशिल्पिगणो देवताध्यक्षो द्वारबाहिरिकादेयं च दुर्गम् ॥**

दुर्गपदार्थं विवृणोति— शुल्कमित्यादि । शुल्कं घट्टदेयम्, दण्डः दमः उत्तमसाहसादिः, पौतवं तुलामानपरिच्छेदः, नागरिकः नगराध्यक्षः, लक्षणाध्यक्षः क्षेत्रारामादिसीमाचिह्नाध्यक्षः, मुद्राध्यक्षः, सुरा मद्याध्यक्षः, सूना प्राणिवधाध्यक्षः, सूत्रं सूत्राध्यक्षः, तैलं तद्विक्रयी, घृतं तद्विक्रयी, क्षारः गुडविक्रयी, सौवर्णिकः सुवर्णनियुक्तः, पण्यसंस्था पण्यनिवेशशाला, वेश्याः, द्यूतम्, वास्तुकम् आवसथनिर्मातारः तक्षादयः, कारुशिल्पिगणः— कारवः स्थूलशिल्पकाराः, शिल्पिनः सूक्ष्मशिल्पकाराः, तेषां गणः, देवताध्यक्षः देवालयकार्यधूर्वहः, द्वारबाहिरिकादेयं च द्वारबाहिरिकसंबन्धि आदेयम्, पुरादिद्वारपालैर्भृतित्वेन ग्राह्यं बाहिरिकेभ्यो नटनर्तकादिभ्यो राज्ञा ग्राह्यं चेति यावत्, दुर्गे शुल्कादिद्वाविंशत्युपायलभ्यं द्रव्यं दुर्गशब्दितमित्यर्थः ।

श्रीमूला.

**सीता भागो बलिः करो वणिङ्नदीपालस्तरो नावः पट्टनं विवीतं वर्तनी रज्जूश्चोररज्जूश्च राष्ट्रम् ॥**

सीतादित्रयोदशकं राष्ट्रशब्दितमित्याह— सीतेत्यादि । सीता कृषिः । भागः धान्यषड्भागः । बलिः उपहारः भिक्षा वा । करः फलवृक्षादिसंबद्धं राजदेयम् । वणिक् वणिग्द्वारेणाऽऽदेयम् । नदीपालः तीर्थरक्षकद्वारेणाऽऽदेयम् । तरः नदीतरणवेतनम् । नावः नावध्यक्षद्वारलभ्यम् । पट्टनम् अल्पनगरलभ्यम् । विवीतं विवीताध्यक्षद्वारेणाऽऽदेयम् । वर्तनी मार्गः, तल्लभ्यम् । अर्थादन्तपालद्वारलभ्यम् । रज्जूः विषयपालादेयमित्याहुः । चोररज्जूः चोरग्राहकाय ग्रामदेयमित्याहुः । श्रीमूला.

**सुवर्णरजतवज्रमणिमुक्ताप्रवालशङ्खलोहलवणभूमिप्रस्तररसधातवः खनिः ॥**

खनिमाह— सुवर्णेत्यादि । वज्रः हीरकः । मणिः मरकतादिः । भूमिधातुः प्रस्तरधातुः रसधातुश्च । स्पष्टमन्यत् । सुवर्णादिद्वादशकं खननलभ्यत्वात् खनिशब्दवाच्यम् । श्रीमूला.

**पुष्पफलवाटषण्डकेदारमूलवापाः सेतुः ॥**

सेतुमाह— पुष्पेत्यादि । पुष्पवाटः कुङ्कुमादिवनम् । फलवाटः वार्ताकोर्वारुकादिवाटी । अनयोः पुष्पफलशब्दाभ्यां ग्रहणम्, वाटशब्देन तु इक्षुवाटस्य । षण्डं कदलीक्रमुकादि । केदारः धान्यक्षेत्रम् । मूलवापः आर्द्रकहरिद्रालामज्जाद्युत्पत्तिस्थलम् । पुष्पवाटादयः षट् सेतुशब्दिताः । श्रीमूला.

**पशुमृगद्रव्यहस्तिवनपरिग्रहो वनम् ॥**

वनमाह— पशुमृगेत्यादि । पशुवनमृगवनद्रव्यवनहस्तिवनानां परिग्रहो वनमिति शब्द्यते इत्यर्थः । तत्र पशुः गवयादिः । मृगः हरिणादिः । द्रव्यं शाकतिनिशादि । हस्ती कालिङ्गादिः । श्रीमूला.

---

(१) कौ. २.६.

**गोमहिषमजाविकं खरोष्ट्रमश्वाश्वतराश्च व्रजः ॥**

गवाद्यष्टकं व्रजशब्दितमित्याह— गोमहिषमित्यादि । अजाः छागाः । अविकाः मेषाः । खराः गर्दभाः । अश्वतराः वेसराः । स्पष्टमन्यत् । श्रीमूला.

**स्थलपथो वारिपथश्च वणिक्पथः ॥**

वणिक्पथं द्विविधमाह— स्थलेत्यादि । श्रीमूला.

**इत्यायशरीरम् ॥**

इति आयशरीरम् उक्तसप्तषष्टिप्रकारं दुर्गादिसप्तकं धनागमस्थानम् । श्रीमूला.

**मूलं भागो व्याजी परिघः क्लृप्तं रूपिकमत्ययश्चायमुखम् ॥**

उक्ते आयशरीरे मूलादिसप्तकं प्रधानत्वात् मुखस्थानीयमित्याशयेनाऽऽह— मूलमित्यादि । मूलं धान्यफलादिविक्रयलब्धं धनम् । मूल्यमित्येव पाठः क्वचित् । भागः षड्भागः, व्याजी विंशतिभागः पुनर्माने मा भूदूनतेत्यधिकं गृह्यमाणः, परिघः आतरद्रव्यम्, क्लृप्तं अमुकग्रामस्यैतावदिति प्रतिनियतं हिरण्यं धान्यं च, रूपिकं लवणाध्यक्षेण तद्विक्रयिभ्यः प्रस्थशतस्याष्टशो गृह्यमाणो लवणभागः, अत्ययश्च अध्यक्षप्रचार—धर्मस्थीय—कण्टकशोधनोक्तविधया गृह्यमाणमपराधदण्डद्रव्यं च आयमुखम् । अत्र संग्रहश्लोकान् पठन्ति— ''शरीरं सप्तधाऽऽयस्य तावन्त्येव मुखानि च । प्रभेदाः सप्तषष्टिः स्युर्व्यये द्वाविंशतिः स्थिताः ॥ द्वाविंशतिविधं दुर्गं राष्ट्रभेदास्त्रयोदश । खनिर्द्वादशधा तत्र सेतवश्चैव षड्विधाः ॥ वनं चतुर्विधं ज्ञेयं व्रजभेदोऽपि चाष्टधा । द्विधा वणिक्पथश्चैवं शरीरं सप्तषष्टिधा ॥ ' इति । श्रीमूला.

द्वाविंशतिर्व्ययाः

**देवपितृपूजादानार्थं स्वस्तिवाचनमन्तःपुरं महानसं दूतप्रावर्तिमं कोष्ठागारमायुधागारं पण्यगृहं कुप्यगृहं कर्मान्तो विष्टिः पत्त्यश्वरथद्विपपरिग्रहो गोमण्डलं पशुमृगपक्षिव्यालवाटाः काष्ठतृणवाटश्चेति व्ययशरीरम् ॥**

अथ व्ययशरीरमाह— देवेत्यादि । देवपितृपूजादानार्थं देवपितृपूजादानप्रयोजनकम् । तत्र देवपूजा देवाराधनम्, पितृपूजा श्राद्धकर्म, दानं पर्वसु ब्राह्मणबालवृद्धातुरानाथादिभ्यो दीयमानम् । स्वस्तिवाचनं शान्तिकपौष्टिकार्थे पुरोहिताय दीयमानम् । अन्तःपुरं देवीभोगिनीराजपुत्रेभ्यो देयम् । महानसं पाकशालार्थो व्ययः । दूतप्रावर्तिमं दूतस्य परविषयगतागतप्रवर्तनार्थो व्ययः । कोष्ठागारं भोज्यद्रव्यावस्थानगृहम्, तन्निर्माणादिनिमित्तो व्ययः । आयुधागारं आयुधनिर्माणशाला तद्रक्षणशाला च । पण्यगृहं पण्यगृहार्थो व्ययः । कुप्यगृहं तत्संबद्धं धनम्, शाकतिनिशादिसारदारुवेणुवल्लीवल्कादिच्छेदनानयनरक्षणादिविषयो व्यय इति यावत् । कर्मान्तः कृष्यादिव्यापारव्ययः । विष्टिः हठकारितकर्मार्थो व्ययः । पत्त्यश्वरथद्विपपरिग्रहः पत्त्यादिचतुष्टयार्थो व्ययः । गोमण्डलं गोमहिषमेषाद्यर्थो व्ययः । पशुमृगपक्षिव्यालवाटाः— पशवः वन्यपशवः, मृगाः हरिणादयः, पक्षिणः शुकशारिकादयः, व्यालाः सिंहव्याघ्रादयः, एषां वाटाः रक्षणस्थानानि, तन्निमित्तो व्यय इत्यर्थः । काष्ठतृणवाटः काष्ठतृणवाटार्थो व्ययः । चशब्दात् आवश्यकव्ययान्तरपरिग्रहः । ते एते द्वाविंशतिर्व्ययाः व्ययशरीरम् । श्रीमूला.

व्यवहारार्थः कालः

**राजवर्षं मासः पक्षो दिवसश्च व्युष्टम् । वर्षाहेमन्तग्रीष्माणां तृतीयसप्तमा दिवसोनाः पक्षाः, शेषाः पूर्णाः । पृथगधिमासकः । इति कालः ॥**

राजवर्षम् आ राजराज्याभिषेकादारब्धः संवत्सरः, मासः, पक्षः, दिवसश्च व्युष्टं राजवर्षादिचतुष्टयं व्युष्टसंज्ञमित्यर्थः । एतच्च अमुकराजवर्षेऽमुकमासेऽमुकपक्षेऽमुकदिवसेऽमुकपुरुषेणाऽऽनीतमेतावत् धनम्, अद्यामुकपुरुषायैतावत् दत्तमिति रीत्या निबन्धपुस्तकादिषु लेख्यमिति बोद्धव्यम् । वर्षाहेमन्तेत्यादेरयमर्थः— राजवर्षस्य त्रिधा विभक्तस्य सिंहकन्यातुलावृश्चिकाश्चत्वारो रविमासाः वर्षर्तुः इत्येको भागः । धनुर्मकरकुम्भमीनाख्याश्चत्वारो हेमन्तः इति द्वितीयः । मेषवृषभमिथुनकुलीराख्याश्चत्वारो ग्रीष्मः इति तृतीयः । इत्येतेषां त्रयाणां भागानां ये प्रत्येकमष्टौ पक्षास्तेषु तृतीयपक्षे सप्तमपक्षे चैकैको दिवसो हीयते ।

अवशिष्टास्तु पक्षाः अनूनदिवसाः इति । पृथगिति । अधिमासकः अधिकः सौरमासादतिरिक्तः शुक्लप्रतिपदादिर्दर्शावसानश्चान्द्रो मासः पृथक् । इति कालः उक्तप्रकारो व्यवहारार्थः कालो विज्ञेयः । श्रीमूला.

करणीयादिषट्कम्

**करणीयं सिद्धं शेषमायव्ययौ नीवी च ॥**

करणीयादिषट्कमुद्दिशति— करणीयमित्यादि । श्रीमूला.

**संस्थानं प्रचारः शरीरावस्थापनमादानं सर्वसमुदयपिण्डः संजातमेतत्करणीयम् ॥**

करणीयं षड्विधमाह— संस्थानमित्यादिना । तत्र संस्थानम् अमुकग्रामात् इयत् आदेयमिति क्लृप्तिः । प्रचारः देशः । शरीरावस्थापनं जनपदनगरयोः आयशरीरमेतावत् इति निश्चयः । आदानं धान्यहिरण्यादेर्यथाकालग्रहणम् । सर्वसमुदयपिण्डः सर्वेषां समुदयानां पिण्डः प्रतिग्रामं प्रतिनगरं चोत्पन्नानां धनानां संघातः, तज्ज्ञानमित्यर्थः । संजातं सर्वोपायलब्धधनेयत्ताज्ञानम् । एतत् उक्तं षट्कं करणीयम् अवश्यकार्यत्वात् करणीयशब्दितम् । श्रीमूला.

**कोशार्पितं राजहारः पुरव्ययश्च प्रविष्टम्, परमसंवत्सरानुवृत्तं शासनमुक्तं मुखाज्ञप्तं चाऽऽपातनीयम्, एतत् सिद्धम् ॥**

सिद्धमाह— कोशेत्यादि । कोशार्पितं भाण्डागारिकहस्तेऽर्पितम्, राजहारः राज्ञा स्वीयकार्यार्थं समाहर्तृसकाशात् गृहीतम्, पुरव्ययश्च पुरे शालानिर्माणाद्यर्थं व्ययितं धनं च प्रविष्टं प्रविष्टशब्दितम् । परमसंवत्सरानुवृत्तं अतीतवर्षसंबद्धम् अप्रविष्टतया स्थितम्, शासनमुक्तं राजाज्ञालेखनिरस्तम्, मुखाज्ञप्तं राजवाग्विश्राणितं च आपातनीयम् आपातनीयशब्दितं समुदयाद्यवकलनीयमिति कृत्वा । एतत् प्रविष्टत्रिकम् आपातनीयत्रिकं चेत्युभयरूपं षट्कं सिद्धं सिद्धशब्दितम् । श्रीमूला.

**सिद्धिप्रकर्मयोगः दण्डशेषमाहरणीयम्, बलात्कृतप्रतिस्तब्धमवसृष्टं च प्रशोध्यम्, एतच्छेषमसारमल्पसारं च ॥**

षड्विधं शेषमाह— सिद्धीत्यादि । सिद्धिप्रकर्मयोगः सिद्धौ सिद्धधान्यादौ प्रकर्मयोगः स्वायत्तीकरणप्रवृत्तिः अदत्तकरप्रवेशनार्था, दण्डशेषं सैन्योपयुक्तावशिष्टद्रव्यं च आहरणीयं सुखेनाऽऽहर्तुं शक्यत्वात् आहरणीयसंज्ञम् । बलात्कृतप्रतिस्तब्धं राजवल्लभाद्याश्रयबलाददत्तं देयं प्रतिस्तब्धापरपर्यायम्, अवसृष्टं च पुरमुख्यैः कामचारादत्तं च प्रशोध्यं प्रयत्नसाध्यत्वात् प्रशोध्यसंज्ञम् । एतत् उक्तमाहरणीयद्विकं प्रशोध्यद्विकं चेतीदं चतुष्टयमित्यर्थः, असारं प्रवेशनार्थे कृतेऽपि व्यये निष्फलम् अल्पसारं च बहुव्ययसाध्याल्पफलं च शेषं तत्संज्ञम् । श्रीमूला.

**वर्तमानः पर्युषितोऽन्यजातश्चाऽऽयः । दिवसानुवृत्तो वर्तमानः । परमसांवत्सरिकः परप्रचारसंक्रान्तो वा पर्युषितः । नष्टप्रस्मृतमायुक्तदण्डः पार्श्वं पारिहीणिकमौपायनिकं डमरगतकस्वमपुत्रकं निधिश्चान्यजातः । विक्षेपव्याधितान्तरारम्भशेषश्च व्ययप्रत्यायः । विक्रये पण्यानामर्घवृद्धिरुपजा मानोन्मानविशेषो व्याजी क्रयसंघर्षे वा वृद्धिरित्यायः ॥**

आयं त्रेधा विभज्य व्युत्पादयति— वर्तमान इति । आयः वर्तमानः पर्युषितः अन्यजातश्च इति त्रिविधः । तत्र दिवसानुवृत्तः नित्यः वर्तमानः । परमसांवत्सरिकः अतीतवर्षग्राह्यः वर्तमानवर्षे गृहीतः, परप्रचारसंक्रान्तः भूतपूर्वाध्यक्षकालप्रविष्टः, यद्वा शत्रुविषयादागतः, वाशब्दः समुच्चये, पर्युषितः तदाख्यः । नष्टप्रस्मृताद्यष्टकमन्यजात इत्याह— नष्टेत्यादि । नष्टप्रस्मृतं विस्मृताभिज्ञातमिति भाषाटीका । प्रशब्द इह प्रकर्षे, न तु धात्वर्थविपरीतत्वे इति तत्पक्षे वक्तव्यम् । नष्टम् अपगतं प्रस्मृतं विस्मृतमिति तु कोष्ठागाराध्यक्षप्रकरणे भट्टस्वामी । आयुक्तदण्डः तत्तत्कार्याध्यक्षेभ्योऽपराधिभ्यो गृहीतो दण्डः, पार्श्वं करातिरेचनलक्षणवक्रोपायलब्धं धनम् । प्रभुत्वाधिगम्यमिति केचित् । पारिहीणिकं चतुष्पदविनाशितसस्यदण्डाधिगम्यं धनम्, औपायनिकम् उपायनत्वेन गृहीतम्, डमरगतकस्वम्— डमरः शत्रुकलहविप्लवः, तदवसरे शत्रुसैन्यादपहृतं धनम्, अपुत्रकम् अविद्यमान-

दायादकं धनम्, निधिश्च निधिलाभश्च अन्यजातः अष्टावेते अन्यजातशब्दिताः। आयस्य प्रकारान्तरमाह— विक्षेपेत्यादि । विक्षेपव्याधितान्तरारम्भशेषश्च— विक्षेपशेषः किंचित्कार्यसाधनाय नियुक्तस्य सैन्यस्यार्थे व्ययितावशिष्टं धनम्, व्याधितशेषः भेषजशालाव्ययितशिष्टम्, अन्तरारम्भशेषः दुर्गप्रासादादिनिमित्तव्ययितावशिष्टम्, इत्येतत् त्रिकं व्ययप्रत्यायः तदाख्ययोच्यते। पुनरप्यायस्य पाञ्चविध्यमाह— विक्रय इत्यादिना। विक्रये पण्यानामर्घवृद्धिः क्लृप्ताभ्यधिकेन मूल्येन पण्यविक्रयाल्लब्धमधिकं धनं विक्रेतृसकाशादुपस्थापितम्। उपजा प्रतिषिद्धविक्रयलब्धम् । मानोन्मानविशेषः मानोन्मानयोर्विशेषकरणेन मेयाधिक्यसंपादनाल्लब्धम्। व्याजी विंशतिभागः पुनर्मीयमानमेयोनतापरिहारार्थमधिकतया गृह्यमाणः । क्रयसंघर्षे वृद्धिः स्पर्धया मूल्यवर्धनाल्लब्धम् । वाशब्दश्चकारार्थः। इत्यायः उक्तप्रकारेण आयो व्याख्यातः। भाषाटीका तु नष्टप्रस्मृतादिकमन्तरारम्भशेषान्तमेकादशकमन्यजातभेद इति, व्ययप्रत्यायादिषट्कमायस्य प्रकारान्तरमिति च व्याचष्टे। तत्तु 'विक्षेपव्याधितान्तरारम्भशेषं च व्ययप्रत्यायः' (कौ. २।१५) इति कोष्ठागाराध्यक्षवक्ष्यमाणग्रन्थेन विरुध्यते। श्रीमूला.

**नित्यो नित्योत्पादिको लाभो लाभोत्पादिक इति व्ययः। दिवसानुवृत्तो नित्यः। पक्षमाससंवत्सरलाभो लाभः। तयोरुत्पन्नो नित्योत्पादिको लाभोत्पादिक इति ॥**

अथ व्ययमाह— नित्य इति। नित्यः, नित्योत्पादिकः, लाभः, लाभोत्पादिकः इति चतुर्विधो व्ययः। तत्र दिवसानुवृत्तः प्रात्यहिको व्ययः नित्यः । पक्षमाससंवत्सरलाभ इति तादर्थ्यात् ताच्छब्द्यम्। पक्षलाभार्थो मासलाभार्थः संवत्सरलाभार्थश्च व्ययः लाभः लाभशब्दितः। तयोः नित्यलाभयोः उत्पन्नः तत्र नित्योत्पन्नो लाभोत्पन्नश्च व्ययः नित्योत्पादिको लाभोत्पादिक इति, व्यपदिश्यते इति शेषः। यथाक्रमं च संबन्धः। क्लृप्तवेतनातिरेकेण एतावतः नित्यव्ययस्य एतावदिति विशेषतः कर्मकरेभ्यो यत् दीयते स व्ययः नित्यव्ययोत्पन्नत्वात् नित्योत्पादिकशब्दितः, एतावतः लाभनिमित्तव्ययस्य एतावदिति विशेषतस्तेभ्यो यत् दीयते स लाभाख्यव्ययोत्पन्नत्वात् लाभोत्पादिकशब्दित इति विवेक्तव्यम्। श्रीमूला.

**व्ययसंजातादायविशुद्धा नीवी प्राप्ता चानुवृत्ता चेति ॥**

सर्वव्ययावशेषो नीवीत्याह— व्ययेत्यादि । व्ययसंजातात् व्ययसमष्टेः, सर्वव्ययद्वारेभ्य इत्यर्थः, उत्थितेति शेषः, आयव्ययविशुद्धा आयव्ययसम्यग्गणनपरिनिश्चिता नीवी नीवीशब्दितं द्रव्यमित्यर्थः। सा च द्विप्रकारा— प्राप्ता चानुवृत्ता चेति। तत्र प्राप्ता भाण्डागारं प्रविष्टा, अनुवृत्ता तत्प्रवेशाय प्रस्थिता इति ज्ञेयम्। श्रीमूला.

**एवं कुर्यात् समुदयं वृद्धिं चाऽऽयस्य दर्शयेत्।**
**ह्रासं व्ययस्य च प्राज्ञः साधयेच्च विपर्ययम् ॥**

अध्यायान्ते श्लोकमाह— एवमिति। एवम् उक्तैः प्रकारैः समुदयं धनोत्पत्तिं कुर्यात्, आयस्य वृद्धिं च व्ययस्य ह्रासं च दर्शयेत् समाहर्ता। स कीदृशः? प्राज्ञः प्रजानुपपीडया आयवृद्धिप्रदर्शने कर्मकरानुपपीडया व्ययह्रासप्रदर्शने च निपुणः । विपर्ययं च साधयेत् आयव्यययोर्वृद्धिह्रासवैपरीत्यं यदि यदृच्छयोपनमेत् तदपि वारयेदित्यर्थः । यद्वा विपर्ययं व्ययवृद्धिमपरिहार्यतया प्रसक्तां कालान्तरभाव्यायवृद्ध्युपायनिश्चयेन समर्थयेदपीत्यर्थः। श्रीमूला.

### अर्थसंबद्धगणनकार्यालयस्य कर्तव्यानि तत्संबद्धापराधेषु दण्डविधिश्च

**[1]अक्षपटलमध्यक्षः प्राङ्मुखमुदङ्मुखं वा विभक्तोपस्थानं निबन्धपुस्तकस्थानं कारयेत् ॥**

'अक्षपटले गाणनिक्याधिकारः' इति सूत्रम् । अक्षपटले अक्षाणां द्रव्याणां पटले गणनपुस्तकलेखनादिकर्मानुष्ठानदेशे गाणनिक्याधिकारः— गाणनिकाः गणननियुक्ताः, तेषां कर्म गाणनिक्यम्, तस्य अधिकारः प्रस्तावः इह क्रियते इति सूत्रार्थः। अर्थोपधाशुद्धाः अर्थ-

(१) कौ. २।७.

संबद्धे कर्मणि नियोक्तव्याः इत्युक्तमधस्तात् (कौ. १।१०)। स पुनरर्थव्यापार इदानीमभिधीयत इति संबन्धः।

अक्षेत्यादि। अध्यक्षः आयुक्तप्रधानः अक्षपटलं तत्तदध्यक्षाणां संभूयस्वस्वकर्मानुष्ठानदेशं कारयेत्। कीदृशम्? प्राङ्मुखमुदङ्मुखं वा। दिग्द्वयोपादानं तन्मुखस्य माङ्गलिकत्वद्योतनाय अतादृशस्य वैपरीत्यद्योतनाय च। पुनः कीदृशम्? विभक्तोपस्थानं विभक्तानि उत्तममध्यमाधमानामध्यक्षाणां पृथक्स्थित्यनुकूलतया विभज्य विहितानि उपस्थानानि अन्तःकक्ष्याः यस्मिन् तत् तथाभूतम्। पुनः कथंभूतम्? निबन्धपुस्तकस्थानं गणकपुस्तकनिवेशाधिष्ठानभूतम्। श्रीमूला.

**तत्राधिकरणानां संख्याप्रचारसंजाताग्रम्, कर्मान्तानां द्रव्यप्रयोगे वृद्धिक्षयव्ययप्रयामव्याजीयोगस्थानवेतनविष्टिप्रमाणम्, रत्नसारफल्गुकुप्यानामर्घप्रतिवर्णकप्रतिमानमानोन्मानभाण्डम्, देशग्रामजातिकुलसंघानां धर्मव्यवहारचारित्रसंस्थानम्, राजोपजीविनां प्रग्रहप्रदेशभोगपरिहारभक्तवेतनलाभम्, राज्ञश्च पत्नीपुत्राणां रत्नभूमिलाभम्, निर्देशौत्पादिकप्रतीकारलाभम्, मित्रामित्राणां च संधिविक्रमप्रदानादानं निबन्धपुस्तकस्थं कारयेत्॥**

निबन्धपुस्तकेषु लेखनीयं वस्तुजातमाह— तत्रेति। तत्र अक्षपटले अधिकरणानां संख्याप्रचारसंजाताग्रं द्रव्योत्पत्तिस्थानानां संख्यां नामतः परिगणनम्, प्रचारसंजातयोरग्रं च— प्रचारः जनपदः, संजातं सर्वोत्पत्तिसमुदायः, तयोः इयत्तां च निबन्धपुस्तकस्थं कारयेत् एतावद्भ्यः उत्पत्तिस्थानेभ्यः इयत्परिमाणे जनपदे प्रत्यब्दमेतावत् धनमुत्पद्यते इति निबन्धपुस्तके लेखयेदित्यर्थः। कर्मान्तानां द्रव्यप्रयोगे— कर्मान्ताः खनिधान्योत्पत्तिभूमिपण्यरूप्यादिकर्मस्थानानि, तत्संबद्धे द्रव्यप्रयोगे तत्तत्कर्मकरेभ्यो द्रव्याणां विनियोगे इत्यर्थः, वृद्धिक्षयव्ययप्रयामव्याजीयोगस्थानवेतनविष्टिप्रमाणं वृद्धिं क्षयव्ययादीनामष्टानां प्रमाणं च निबन्धपुस्तकस्थं कारयेत्। तत्र वृद्धिः कुसीदम्। क्षयः युग्यपुरुषविनियोगः। व्ययः धान्यहिरण्यविनियोगः। प्रयामः सिद्धधान्यराशिः क्रयादरो वा। व्याजी तुलादण्डसंबद्धा दण्डव्याजी प्रस्थमानसंबद्धा मानव्याजी चेत्युभयविधा। योगः द्रव्यापद्रव्यमिश्रणम्। स्थानं ग्रामादिकम्। वेतनं कर्मकरभृतिः। विष्टिः बलकारितं कर्म। रत्नसारफल्गुकुप्यानामर्घप्रतिवर्णकप्रतिमानमानोन्मानभाण्डं रत्नादीनां चतुर्णामर्घादिषट्कं निबन्धपुस्तकस्थं कारयेत्। तत्र अर्घ मूल्यम्, प्रतिवर्णकः वर्णगुणः, प्रतिमानं माषगुञ्जादि, मानम् आकृतिपरिच्छेदः, उन्मानम् ऊर्ध्वमानम्, भाण्डं मूलधनम्। देशग्रामजातिकुलसंघानाम्— देशः पूर्वदेशमध्यमदेशादिः, ग्रामः प्रसिद्धः, जातिः ब्राह्मणादिः, कुलं गोत्रम्, संघः गणः, एषां पञ्चानां धर्मव्यवहारचारित्रसंस्थानम्— धर्मः यजनादिः स्मृत्युक्तः, व्यवहारः दायभागः, चारित्रं समुदाचारः देशादिप्रतिनियतः मातुलकन्यापरिणयादिलक्षणः, तेषां संस्थानम् अविचालनं यद्वा स्वरूपं निबन्धपुस्तकस्थं कारयेत्। राजोपजीविनां प्रग्रहप्रदेशभोगपरिहारभक्तवेतनलाभम्— प्रग्रहः पूजा मन्त्रिपुरोहितादीन् प्रति प्रत्युद्गमनबहुमानः, प्रदेशः वासस्थानम्, भोगः उपायनम्, परिहारः करमुक्तिः, भक्तम् अश्वगजपदात्यभ्यवहारः, वेतनं भृतिः, इत्येषां लाभं निबन्धपुस्तकस्थं कारयेत्। राज्ञः पत्नीपुत्राणां च पत्नीनां पुत्राणां च रत्नभूमिलाभं तदुपयुज्यमानानां रत्नानां भूमीनां स्थानीयादीनां च लाभं निबन्धपुस्तकस्थं कारयेत्। निर्देशौत्पादिकप्रतीकारलाभम्— निर्देशं राजतत्पत्नीपुत्राणां नित्यदेयातिरिक्तं देयं सामन्तव्यपदेशाख्यम्, औत्पादिकलाभम् उत्सवादिभवं धनलाभम्, प्रतीकारलाभं व्याध्यादिप्रशमननिमित्तं धनलाभं च निबन्धपुस्तकस्थं कारयेत्। 'औत्पत्तिक' इति पाठे भूकम्पनिर्घाताद्युत्पातदोषशान्त्यर्थं धनलाभमित्यर्थो बोद्धव्यः। मित्रामित्राणां संधिविक्रमप्रदानादानं च मित्रेषु संधाय प्रदीयमानं धनम् अमित्रेषु विक्रम्य विगृह्य आदीयमानं धनं च निबन्धपुस्तकस्थं कारयेत्।

श्रीमूला.

**ततः सर्वाधिकरणानां करणीयं सिद्धं शेषमायव्ययौ नीवीमुपस्थानं प्रचारचरित्रसंस्थानं च निबन्धेन प्रयच्छेत्। उत्तममध्यमावरेषु च कर्मसु तज्जातिकमध्यक्षं कुर्यात्, सामुदायिकेष्ववक्लृप्तिकं यमुपहत्य न राजाऽनुतप्येत ॥**

सर्वाधिकरणानां सर्वेषां कर्मस्थानानाम् अर्थात् तदध्यक्षाणां करणीयं सिद्धं शेषम् आयव्ययौ नीवीं करणीयादिषट्कं पूर्वाध्यायोक्तलक्षणम्, उपस्थानं कायस्थानां स्वस्वकार्यदर्शनार्थसंनिधानकालम्, प्रचारचरित्रसंस्थानं च– प्रचारः जनपदः, चरित्रम् आचारः, संस्थानं पूर्वस्थितिः इत्येतत्त्रिकं च निबन्धेन प्रयच्छेत् निबन्धपुस्तके विलिख्य दद्यात्। उत्तमेत्यादि। उत्तममध्यमावरेषु कर्मसु तज्जातिकं तदनुरूपम् अध्यक्षं कुर्यात्। तत्र उत्तमं कर्म धनसंग्रहणं भाण्डागाराधिकारश्च, मध्यमं कोष्ठागारायुधागारादिगतं कर्म, अवरं सुरासूनाद्यध्यक्षकर्म। तज्जातिकानां बहुत्वे व्यवस्थार्थमाह– सामुदायिकेष्विति। सामुदायिकेषु एककर्मसाधकसमुदायान्तर्गतेषु बहुषु कर्मकरेषु मध्ये अवक्लृप्तिकम्– अवक्लृप्तिः नाम असौ अदः कर्म अध्यक्षयितुं क्षमः इति नैपुणगुणकीर्त्युपलम्भमूला संभावना, साऽस्मिन्नस्तीति अवक्लृप्तिकः, तम्, यथोक्तसंभावनाविषयमित्यर्थः। अयमभिप्रायः– कर्मकरेषु नैपुणयुक्तं समनैपुणेषु गुणयुक्तं समगुणेषु च कीर्तियुक्तमध्यक्षं कुर्यादिति। अवक्लृप्तिकमपि किं सर्वमेवाध्यक्षं कुर्यात्? नेत्याह– यमुपहत्य न राजाऽनुतप्येतेति। राजा यम् उपहत्य अपराधवशात् दण्डयित्वा नानुतप्येत पश्चात्तप्तो न भवेत्, तं तथाविधमवक्लृप्तिकमध्यक्षं कुर्यादिति संबन्धः। एतेन ब्राह्मणात्मबन्धुमहासंबन्धिनां व्युदासः सिद्धः। श्रीमूला.

**सहग्राहिणः प्रतिभुवः कर्मोपजीविनः पुत्रा भ्रातरो भार्या दुहितरो भृत्याश्चास्य कर्मच्छेदं वहेयुः ॥**

अपचरदध्यक्षविषयं सामान्यन्यायमाह– सहग्राहिण इति। अस्य कर्मच्छेदं अनेन अध्यक्षेण अदत्तं देयशेषं सहग्राहिणः सहहर्तारः, प्रतिभुवः लग्नकाः, कर्मोपजीविनः कर्मकराः संख्यायकाः, पुत्राः, भ्रातरः, भार्याः, दुहितरः, भृत्याश्च इत्येतेऽष्टौ वहेयुः प्रापयेयुः पूर्वपूर्वाभावे यथोत्तरं दद्युरित्यर्थः। श्रीमूला.

**त्रिशतं चतुःपञ्चाशच्चाहोरात्राणां कर्मसंवत्सरः। तमाषाढीपर्यवसानमूनं पूर्णं वा दद्यात्। करणाधिष्ठितमधिमासकं कुर्यात्। अपसर्पाधिष्ठितं च प्रचारम्। प्रचारचरित्रसंस्थानान्यनुपलभमानो हि प्रकृतः समुदयमज्ञानेन परिहापयति, उत्थानक्लेशासहत्वादालस्येन, शब्दादिष्विन्द्रियार्थेषु प्रमादेन, संक्रोशाधर्मानर्थभीरुर्भयेन, कार्यार्थिष्वनुग्रहबुद्धिः कामेन, हिंसाबुद्धिः कोपेन, विद्याद्रव्यवल्लभापाश्रयाद्दर्पेण, तुलामानतर्कगणिकान्तरोपधानाल्लोभेन ॥**

अहोरात्राणां त्रिशतं चतुष्पञ्चाशच्च कर्मसंवत्सरः चतुष्पञ्चाशदधिकत्रिशतसंख्याका दिवसाः सर्वकर्मविषयः एकः संवत्सरो गण्यते। तत्र दिवसषट्कोनता ऋतावृतौ एकदिवसह्रासात् बोद्धव्या। तं कर्मसंवत्सरम् आषाढीपर्यवसानं दद्यात् आषाढमासपूर्णिमान्तम् अर्थात् श्रावणमासोपक्रमं कल्पयेत्। ऊनं पूर्णं वा दद्यात् तं चाध्यक्षस्यान्तरालकालापगमे तावत्पर्यन्तमपूर्णं गणयेत्, पूर्णकालस्थितिपक्षे तु पूर्णं गणयेत्, कर्मभृतिशोधनादावित्यर्थः। अधिमासकं करणाधिष्ठितं गणकाधिष्ठितं गणकद्वारेण गणितं कुर्यात्। प्रचारं च जनपदं च अपसर्पाधिष्ठितं चारावेक्षितं कुर्यात्। अपसर्पाप्रणिधाने दोषमाह– प्रचारेत्यादि। प्रचारचरित्रसंस्थानानि देशवृत्तान्तान् तत्पूर्वस्थितीश्च अनुपलभमानः अपसर्पद्वारेणाविजानन् प्रकृतः अध्यक्षः अज्ञानेन हेतुना समुदयं धनोत्पत्तिं परिहापयति परिहीयमानं प्रयोजयति। पुनः केन केन हेतुना इत्येतत् उत्थानेत्यादिनाऽभिधीयते। उत्थानक्लेशासहत्वादालस्येन उद्यमखेदासहनत्वनिमित्तयाऽलसतया। शब्दादिषु इन्द्रियार्थेषु प्रमादेन गीतकामिन्यादिषु विषयेषु अनवधानप्रवृत्त्या। संक्रोशाधर्मानर्थभीरुः भयेन निन्दाधर्मलोपानर्थोपनिपातशङ्कित्वमूलेन साध्वसेन। कार्यार्थिषु अनुग्रहबुद्धिः कामेन

'कार्यार्थिनः अनुग्रहीष्यामि' इत्येवंबुद्धिमूलया स्वेच्छया। हिंसाबुद्धिः कोपेन नृशंसत्वनिमित्तेन क्रोधेन। विद्याद्रव्यवल्लभापाश्रयात् दर्पेण विद्याद्रव्यराजवल्लभव्यपाश्रयनिमित्तेन मदेन। तुलामानतर्कगणिकान्तरोपधानात् लोभेन— तुलान्तरेण उन्मानदण्डविशेषेण, मानान्तरेण प्रस्थादिमानसाधनविशेषेण, तर्कान्तरेण संभावनाविशेषेण, गणिकान्तरेण गणनविशेषेण च यदुपधानं छलनं तत्प्रयोजकेन लोभेनेत्यर्थः। तदेवमज्ञानालस्यप्रमादभयकामकोपदर्पलोभात्मकाः अष्टौ दोषाः समुदयपरिहापननिमित्तभूताः वेदितव्याः। श्रीमूला.

**तेषामानुपूर्व्या यावानर्थोपघातस्तावानेकोत्तरो दण्ड इति मानवाः। सर्वत्राष्टगुण इति पाराशराः। दशगुण इति बार्हस्पत्याः। विंशतिगुण इत्यौशनसाः। यथापराधमिति कौटल्यः॥**

परिहापितसमुदयानां दण्डचिन्तायामाह— तेषामिति। तेषाम् उक्तदोषयुक्तानामष्टानाम् आनुपूर्व्या क्रमेण यावान् अर्थोपघातः तत्तद्दोषवशादुपहतो यत्परिमाणोऽर्थः तावान् एकोत्तरः तत्परिमाणः एकादिगुणाधिकः अर्थः दण्डः इति मानवाः मनुशिष्याः, वदन्तीति शेषः। सर्वेषु दोषेषु अविशेषात् अष्टगुणः इति पाराशराः, दशगुणः इति बार्हस्पत्याः, विंशतिगुणः इति शुक्रशिष्याश्च मन्यन्ते इत्याह— सर्वत्रेत्यादि। स्वमतमाह— यथेत्यादि। यथापराधम् अपराधानुसारेण अपराधमहत्त्वाल्पत्वादिपर्यालोचनया दण्डः कल्पनीय इत्यभिप्रायः। श्रीमूला.

**गाणनिक्यान्याषाढीमागच्छेयुः। आगतानां समुद्रपुस्तभाण्डनीवीकानामेकत्रासंभाषावरोधं कारयेत्। आयव्ययनीवीनामग्राणि श्रुत्वा नीवीमवहारयेत्। यच्चाग्रादायस्यान्तरवर्णे नीव्या वर्धेत, व्ययस्य वा यत् परिहापयेत्, तदष्टगुणमध्यक्षं दापयेत्। विपर्यये तमेव प्रति स्यात्॥**

अथाध्यक्षाणां वार्षिकगणितप्रदर्शनकाल उच्यते— गाणनिक्यानीति। गाणनिक्यानि गणनाः अर्थात् तत्प्रदर्शकाः अध्यक्षाः आषाढीं आगच्छेयुः गणनप्रदर्शनार्थमाषाढमासि आगच्छेयुः। समुद्रपुस्तभाण्डनीवीकानां— समुद्रं मुद्रायुक्तं पुस्तभाण्डं निबन्धपुस्तकपेटी नीवी व्ययितशिष्टधनं च येषां तथाविधानाम् आगतानाम् अध्यक्षाणाम् एकत्रासंभाषावरोधम् पुस्तकदर्शनस्थले अन्योन्यमन्त्रणशून्यम् अवरुध्य रक्षणं कारयेत्। आयव्ययनीवीनाम् अग्राणि इयत्ताः श्रुत्वा मुखतः आकर्ण्य नीवीम् अवहारयेत् उपनाययेत्। यच्चेति। नीव्याः अन्तरवर्णे व्ययितावशेषस्यावहारितस्य प्रकारवर्णनपुस्तके यत् धनम् आयस्य अग्रात् अध्यक्षोक्तात् वर्धेत अधिकतया विभाव्येत, व्ययस्य वा अग्रात् अध्यक्षोक्तात् यत् धनं परिहापयेत् परिहीणं कुर्यात्, तत् अष्टगुणम् अध्यक्षं दापयेत् अध्यक्षसकाशात् गृह्णीयादित्यर्थः। विपर्यय इति। आयस्य यथाप्राप्तादधिकतया लेखनव्ययस्य यथाकृतादूनतया लेखनं व्ययितावशेषस्य यथास्थितादाधिक्येन लेखनं वा विपर्ययः, तस्मिन् पुस्तकदृष्टे सति तमेव प्रति स्यात् अधिकमध्यक्षस्यैव भागः अध्यक्षायैव देयम्, न तु तस्य दण्डः कश्चिदित्यर्थः। 'लक्षणेत्थंभूत' इत्यादिना भागे प्रतेः कर्मप्रवचनीयता। श्रीमूला.

**यथाकालमनागतानामपुस्तनीवीकानां वा देयदशबन्धो दण्डः। कार्मिके चोपस्थिते कारणिकस्याप्रतिबध्नतः पूर्वः साहसदण्डः, विपर्यये कार्मिकस्य द्विगुणः॥**

क्लृप्तकाले अनागतानां पुस्तकनीवीविरहेणाऽऽगतानां चाध्यक्षाणां देयदशगुणो दण्ड इत्याह— यथाकालमित्यादि। कार्मिक इति। कार्मिके अध्यक्षे उपस्थिते पुस्तदर्शनार्थं यथाकालं संनिहिते सति अप्रतिबध्नतः अप्रतियुज्यमानस्य असंबध्नतः कारणिकस्य गणनाधिकृतस्य पूर्वः साहसदण्डः। विपर्यये अप्रतियोगदोषे कार्मिकगते सतीत्यर्थः, कार्मिकस्य द्विगुणः पूर्वः साहसदण्डः।

श्रीमूला.

**प्रचारसमं महामात्राः समग्राः श्रावयेयुरविषममात्राः। पृथग्भूतो मिथ्यावादी चैषामुत्तमदण्डं दद्यात्॥**

महामात्राः राज्ञः प्रधानभूताः कर्मसहायाः समग्राः अविषममात्राः अविषमाः परस्परानुकूलाः प्रवृत्तीः संगताः

आयव्ययनीवीयत्ता वा प्रचारसमं श्रावयेयुः— प्रचारः जनपदः, तात्स्थ्याज्जानपदाः, तत्साधारणं यथा भवति तथा श्रावयेयुः, जानपदान् सदसि मेलयित्वा बोधयेयुरित्यर्थः। एषां महामात्राणां मध्ये पृथग्भूतः विसंवादी मिथ्यावादी च उत्तमदण्डम् उत्तमसाहसदण्डं दद्यात्।

श्रीमूला.

**अकृताहोरूपहरं मासमाकाङ्क्षेत। मासादूर्ध्वं मासद्विशतोत्तरं दण्डं दद्यात्। अल्पशेषनीवीकं पञ्चरात्रमाकाङ्क्षेत ततः परम्॥**

अकृताहोरूपहरं कृते क्लृप्ते अहोरूपे दिवसे हर्तव्यं यो हरति उपनयति स कृताहोरूपहरः उपहर्तव्यद्रव्ययथाकालोपहर्ता, स न भवतीत्यकृताहोरूपहरः, तं तथाविधमध्यक्षं मासम् आकाङ्क्षेत प्रतीक्षेत हर्तव्यहरणार्थमेकमासावधिं तस्मै दद्यादित्यर्थः। मासावधौ अहर्तुर्दण्डमाह— मासादिति। मासात् ऊर्ध्वम् अनुपहरणे मासद्विशतोत्तरं मासस्यैकैकस्य द्वे शते उत्तरे यस्य तं तथाभूतं दण्डं पूर्वोक्तं दद्यात्। अल्पशेषार्पणीयनीवीके विशेषमाह— अल्पेत्यादि। अल्पशेषनीवीकं ततः परं मासात् परतः पञ्चरात्रं रात्रिपञ्चकमधिकम् आकाङ्क्षेत। तत ऊर्ध्वमप्यनुपहरणे दण्डं दद्यादित्यर्थसिद्धम्।

श्रीमूला.

**कोशपूर्वमहोरूपहरं धर्मव्यवहारचरित्रसंस्थानसङ्कलननिर्वर्तनानुमानचारप्रयोगैरवेक्षेत॥**

कोशपूर्वम् अहोरूपहरम् अर्पणीयनीवीधनपुरःसरं क्लृप्तदिवसपुस्तकोपनेतारम् अध्यक्षम् धर्मव्यवहारचरित्रसंस्थानसंकलननिर्वर्तनानुमानचारप्रयोगैः अवेक्षेत धर्मप्रयोगादिभिः अष्टभिः प्रकारैः परीक्षेत 'किमसौ वस्तुत एव सद्वृत्तः उत दाम्भिकः' इति। तत्र धर्मः स्मृतिविहितः। व्यवहारः पूर्वपक्षोत्तरपक्षलक्षणः। चरित्रं लोकाचारः। संस्थानं पूर्वस्थितिः। संकलनं सर्वधनैकीकारगणना। निर्वर्तनं कार्यनिष्पत्तिः। अनुमानं कृतेन अकृताभ्यूहः। चाराः गूढपुरुषाः।

श्रीमूला.

**दिवसपञ्चरात्रपक्षमासचातुर्मास्यसंवत्सरैश्च प्रतिसमानयेत्। व्युष्टदेशकालमुखोत्पत्त्यनुवृत्तिप्रमाणदायकदापकनिबन्धकप्रतिग्राहकैश्चायं समानयेत्। व्युष्टदेशकालमुखलाभकारणदेययोगपरिमाणाज्ञापकोद्धारकनिधातृकप्रतिग्राहकैश्च व्ययं समानयेत्। व्युष्टदेशकालमुखानुवर्तनरूपलक्षणपरिमाणनिक्षेपभाजनगोपायकैश्च नीवीं समानयेत्॥**

गणनलेखनपरिपाटीमाह— दिवसेत्यादि। दिवसपञ्चरात्रपक्षमासचातुर्मास्यसंवत्सरैश्च प्रतिसमानयेत्— दिवसः पञ्चरात्रं पक्षः मासः चातुर्मास्यं संवत्सरः इत्येभिर्विभागैः संख्याय संपादयेत् अर्थात् आयव्ययनीवीः। अयं भावः— संवत्सरस्य आदिमे मासि पूर्वपक्षस्य प्रतिपदमारभ्य आ पञ्चम्याः दैनन्दिनीः आयव्ययनीवीः पृथग् गणनपुस्तकेषु विलिख्य पञ्चमीपर्यन्तदिवसपञ्चकाङ्कान् संकलय्य निवेशयेत्। एवं षष्ठ्यादिदशम्यन्तदिवसपञ्चकाङ्कान् एकादश्यादिपञ्चदश्यन्तदिवसपञ्चकाङ्कांश्च प्रत्येकं संकलय्य निवेशयेत्। तानिमांस्त्रीन् दिवसपञ्चकाङ्कानेकीकृत्य पक्षाङ्कम्, पूर्वापरपक्षद्वयाङ्कैकीकरणेन मासाङ्कम्, मासचतुष्टयाङ्कैकीकरणेन चातुर्मास्याङ्कम्, चातुर्मास्यत्रिकाङ्कैकीकरणेन संवत्सराङ्कं च सम्यक् संख्याय संपादयेदिति। आयव्ययनीवीनां साधारणविधिवचनानन्तरं प्रातिस्विकविधिष्वभिधानीयेषु प्रथममायस्य व्ययनीवीनिमित्तत्वेन प्राधान्यात् तं दर्शयति— व्युष्टेत्यादि। व्युष्टदेशकालमुखोत्पत्त्यनुवृत्तिप्रमाणदायकदापकनिबन्धकप्रतिग्राहकैः आयं समानयेत्। व्युष्टादिविवरणयुक्ताम् आयगणनां संपादयेदित्यर्थः। तत्र व्युष्टं राजवर्षमासपक्षदिवसाः, देशः, कालः वर्षादिः, मुखम् आयमुखम् आयशरीरं च, उत्पत्तिः तदुत्पन्नं शुल्कादि, अनुवृत्तिः स्थानान्तरसंक्रान्तिः, प्रमाणम्, दायकः करस्य दाता, दापकः दापयिता राजपुरुषः, निबन्धकः लेखकः, प्रतिग्राहकः ग्रहीता। व्ययसमानयनविधिमाह— व्युष्टदेशकालमुखलाभेत्यादि। तत्र व्युष्टदेशकालमुखानि पूर्वोक्तानि, लाभः 'पक्षमाससंवत्सरलाभो लाभः' इति गताध्यायोक्तः, कारणं निमित्तम्, देयं दानीयद्रव्यम्, योगः द्रव्यापद्रव्यमिश्रणम्, परिमाणम् इयत्ता, आज्ञापकः चोदकः, उद्धारकः

ऋणग्राही ऋणं वा, निधातृकः भाण्डागारिकः, प्रतिग्राहकः ब्राह्मणादिः । नीवीविधिमाह— व्युष्टदेशकालमुखानुवर्तनेत्यादि । तत्र रूपं द्रव्यस्य स्वरूपम्, लक्षणं तच्चिह्नम्, परिमाणं तन्मानम्, निक्षेपभाजनं द्रव्यनिधानभाण्डम्, गोपायकः तद्रक्षः । शेषं प्रतीतम् ।

श्रीमूला.

**राजार्थं कारणिकस्याप्रतिबध्नतः प्रतिषेधयतो वाऽऽज्ञां निबन्धादायव्ययमन्यथा वाऽपि कल्पयतः पूर्वः साहसदण्डः ॥**

अथ यथासंभवं सामान्यदण्डमाह— राजार्थ इति । राज्ञो धनहिरण्यादिलाभरूपे प्रयोजने अप्रतिबध्नतः असंबध्नतः, राजार्थं पुस्तकेष्वलिखत इत्यर्थः, आज्ञां प्रतिषेधयतो वा अननुतिष्ठतश्च आयव्ययं निबन्धात् क्लृप्तनियमात् अन्यथा प्रकारान्तरेण कल्पयतोऽपि वा कारणिकस्य पूर्वः साहसदण्डः । श्रीमूला.

**क्रमावहीनमुत्क्रममविज्ञातं पुनरुक्तं वा वस्तुकमवलिखतो द्वादशपणो दण्डः ॥**

वस्तुकं क्रमावहीनमवलिखतः उत्तममध्यमाधमेषु क्रमहीनं लिखतः, उत्क्रममवलिखतः पूर्वमधमं पश्चादुत्तममिति व्युत्क्रमं लिखतः, अविज्ञातमवलिखतः वेदितुमनर्हया रीत्या लिखतः, पुनरुक्तमवलिखतो वा लिखितं पुनर्लिखतो वा द्वादशपणो दण्डः । श्रीमूला.

**नीवीमवलिखतो द्विगुणः, भक्षयतोऽष्टगुणः, नाशयतः पञ्चबन्धः प्रतिदानं च । मिथ्यावादे स्तेयदण्डः । पश्चात् प्रतिज्ञाते द्विगुणः प्रस्मृतोत्पन्ने च ॥**

नीवीम् अवलिखतः अवहीनं लिखतः द्विगुणः पणचतुर्विंशतिः दण्डः । नीवीं भक्षयतः अष्टगुणः पणषण्णवतिः दण्डः । नीवीं नाशयतः नटनर्तकादिभ्यो दत्त्वा लोपयतः पञ्चबन्धः पञ्चगुणः षष्टिपणो दण्डः प्रतिदानं च नाशितपुनर्दानं च भवति । मिथ्यावादे स्तेयदण्डः असत्यवचने चौर्यदण्डः । पश्चात् प्रतिज्ञाते पूर्वमलिखिते एव गणनपरिशोधनायां विज्ञाते विषये प्रस्मृतोत्पन्ने च पूर्वं विस्मृत्य पश्चाच्चिन्तिते च विषये द्विगुणः स्तेयदण्डात् द्विगुणः दण्डः । श्रीमूला.

**अपराधं सहेताल्पं तुष्येदल्पेऽपि चोदये ।**
**महोपकारं चाध्यक्षं प्रग्रहेणाभिपूजयेत् ॥**

श्लोकमाह— अपराधमिति । अल्पमपराधं सहेत, अर्थादध्यक्षस्य । अल्पेऽपि उदये आयवृद्धौ अर्थादध्यक्षोपपादितायां तुष्येत् । महोपकारम् अध्यक्षम् । चशब्दः त्वर्थे । प्रग्रहेण प्रकृष्टग्रहणेन यावज्जीवपरिग्रहेण अभिपूजयेत् बहु मानयेत् । श्रीमूला.

समुदयस्य राज्यस्वामिकधनस्य अध्यक्षादिभिरपहृतस्य प्रत्यानयनम् अपराधेषु दण्डविधिश्च

**[1]कोशपूर्वाः सर्वारम्भाः । तस्मात् पूर्वं कोशमवेक्षेत ॥**

'समुदयस्य युक्तापहृतस्य प्रत्यानयनम्' इति सूत्रम् । समुदयो नाम द्रव्योत्पत्तिस्थानेभ्यः उत्थितं धनम् । युक्ताः अध्यक्षाः । युक्तापहृतस्य समुदयस्य प्रत्यानयनं पुनःप्रापणमिहाभिधीयते इति सूत्रार्थः ।

किमर्थं धनसंग्रहे महान् यत्न उपदिश्यत इत्यपेक्षायामाह— कोशेत्यादि । सर्वारम्भाः कोशपूर्वाः सर्वाणि कार्याणि तन्त्रसंबद्धानि जनपदनिवेशादीनि आवापसंबद्धानि च संधिविग्रहादीनि धननिमित्तकानि । तस्मात् कारणात् कोशं पूर्वं सर्वकार्याणामग्रे अवेक्षेत यथा स वृद्धिं प्राप्नुयात्, न क्षयं तथा चिन्तयेदित्यर्थः ।

श्रीमूला.

**प्रचारसमृद्धिश्चरित्रानुग्रहश्चोरग्रहो युक्तप्रतिषेधः सस्यसंपत् पण्यबाहुल्यमुपसर्गप्रमोक्षः परिहारक्षयो हिरण्योपायनमिति कोशवृद्धिः ॥**

कोशस्योदयहेतून् नव दर्शयति— प्रचारेत्यादि । प्रचारसमृद्धिः जनपदसंपत्, चरित्रानुग्रहः देशजातिकुलाचाराणां पूर्वस्थित्यनतिक्रमेण परिपालनं चरित्ररक्षणसंतुष्टा हि जनाः कोशं राज्ञो वर्धयन्तीति, चोरग्रहः तस्करवधः तस्करेभ्यो धनग्रहणं च, युक्तप्रतिषेधः युक्तानाम् अध्य-

(१) कौ. २।८.

क्षाणां प्रतिषेधः धनापहारात् वारणम् उत्कोचग्रहणनिमित्ताद्वा प्रजापीडनात् वारणम्, सस्यसंपत् उच्चावचधान्यसमृद्धिः, पण्यबाहुल्यं पण्यानां जलजानां स्थलजानां च विक्रेयद्रव्याणां बहुलमुत्पत्तिः उपलम्भश्च, उपसर्गप्रमोक्षः अग्न्याद्युपद्रवमोचनम्, परिहारक्षयः करमुक्त्यभावः अवधौ धनग्रहणोपेक्षाविरहो वा, हिरण्योपायनं सुवर्णरजतादिरूपोपदा इति कोशवृद्धिः एवं नव कोशवृद्धिहेतवः। श्रीमूला.

**प्रतिबन्धः प्रयोगो व्यवहारोऽवस्तारः परिहापणमुपभोगः परिवर्तनमपहारश्चेति कोशक्षयः ॥**

कोशक्षयहेतूनष्टावुद्दिशति— प्रतिबन्ध इत्यादि। श्रीमूला.

**सिद्धीनामसाधनमनवतारणमप्रवेशनं वा प्रतिबन्धः। तत्र दशबन्धो दण्डः ॥**

सिद्धीनां सिद्धद्रव्याणां राजग्राह्यकरादीनाम् असाधनम् अनुत्पादनम्, उत्पन्नानां वा अनवतारणम् अहस्तप्रापणम्, अवतारितानां वा अप्रवेशनं भाण्डागाराप्रापणम् इति प्रतिबन्धः त्रिधा। तत्रेति। तत्र प्रतिबन्धे दशबन्धः दशगुणः दण्डः। श्रीमूला.

**कोशद्रव्याणां वृद्धिप्रयोगः प्रयोगः। पण्यव्यवहारो व्यवहारः। तत्र फलद्विगुणो दण्डः ॥**

कोशद्रव्याणां कोशप्रवेश्यद्रव्याणां वृद्धिप्रयोगः वृद्ध्यर्थं प्रयोगः स्वयं वृद्धिमुपजीव्य पश्चात् मूलं कोशेऽर्पयिष्यामीति, स प्रयोगः। पण्यव्यवहारः कोशद्रव्यैर्वाणिज्यकरणं व्यवहारः। तत्र प्रयोगव्यवहारयोः दण्डः फलद्विगुणः। श्रीमूला.

**सिद्धं कालमप्राप्तं करोत्यप्राप्तं प्राप्तं वेत्यवस्तारः। तत्र पञ्चबन्धो दण्डः ॥**

सिद्धं प्राप्तं कालं ग्राह्यद्रव्यग्रहणकालम् अप्राप्तं करोति आपादयति उत्कोचलिप्सया, अप्राप्तं वा कालं प्राप्तं करोति प्रद्वेषेण इति अवस्तारः इति अनेन प्रकारेण प्राप्तकालाप्राप्तीकरणमप्राप्तकालप्राप्तीकरणमिति द्विविधोऽवस्तारः। तत्र अवस्तारे दण्डः पञ्चबन्धः। श्रीमूला.

**क्लृप्तमायं परिहापयति व्ययं वा विवर्धयतीति परिहापणम्। तत्र हीनचतुर्गुणो दण्डः ॥**

क्लृप्तं प्रतिनियतम् आयं परिहापयति न्यूनयति, व्ययं वा क्लृप्तं विवर्धयति अतिरेचयति इति परिहापणम् एवं द्विधा परिहापणम्। तत्र दण्डः हीनचतुर्गुणः नाशितद्रव्यचतुर्गुणः। श्रीमूला.

**स्वयमन्यैर्वा राजद्रव्याणामुपभोजनमुपभोगः। तत्र रत्नोपभोगे घातः, सारोपभोगे मध्यमः साहसदण्डः, फल्गुकुप्योपभोगे तच्च तावच्च दण्डः ॥**

रत्नसारफल्गुकुप्यानां राजद्रव्याणां स्वयमुपभोजनं परैर्वोपभोजनमिति द्विविध उपभोग इत्याह— स्वयमित्यादि। तत्र दण्डोपदेशवाक्यम्— तत्रेत्यादि। तच्च उपभुक्तद्रव्यं च। तावच्च तत्परिमाणमपरं च। श्रीमूला.

**राजद्रव्याणामन्यद्रव्येणाऽऽदानं परिवर्तनम्, तदुपभोगेन व्याख्यातम् ॥**

परिवर्तनं व्याचष्टे— राजद्रव्याणामित्यादि। अन्यद्रव्येणाऽऽदानम् अन्यत् द्रव्यं सच्छायं प्रतिनिधाय ग्रहणम्। उपभोगेन तत् व्याख्यातमिति उपभोगसमानदण्डं परिवर्तनमित्यर्थः। श्रीमूला.

**सिद्धमायं न प्रवेशयति, निबद्धं व्ययं न प्रयच्छति, प्राप्तां नीवीं विप्रतिजानीत इत्यपहारः। तत्र द्वादशगुणो दण्डः ॥**

त्रिप्रकारमपहारमाह— सिद्धमिति। सिद्धम् उत्पन्नम् आयं न प्रवेशयति लेख्ये नाऽऽरोपयति इत्येकोऽपहारः। निबद्धं पुस्तकारोपितं व्ययं राजाज्ञप्तं पारितोषिकादिलक्षणं न प्रयच्छति राजनिर्दिष्टाय पात्राय न ददाति इति द्वितीयोऽपहारः। प्राप्तां हस्तगतां नीवीं विप्रतिजानीते नाद्यापि हस्तप्राप्तेत्यपलपति इति तृतीयोऽपहारः। तत्र अपहारे दण्डो द्वादशगुणः। श्रीमूला.

**तेषां हरणोपायाश्चत्वारिंशत्– पूर्वं सिद्धं पश्चादवतारितम्, पश्चात् सिद्धं पूर्वमवतारितम्, साध्यं न सिद्धम्, असाध्यं सिद्धम्, सिद्ध-**

**मसिद्धं कृतम्, असिद्धं सिद्धं कृतम्, अल्पसिद्धं बहु कृतम्, बहुसिद्धमल्पं कृतम्, अन्यत् सिद्धमन्यत् कृतम्, अन्यतः सिद्धमन्यतः कृतम्, देयं न दत्तमदेयं दत्तम्, काले न दत्तमकाले दत्तम्, अल्पं दत्तं बहु कृतम्, बहु दत्तमल्पं कृतम्, अन्यद्दत्तमन्यत् कृतम्, अन्यतो दत्तमन्यतः कृतम्, प्रविष्टमप्रविष्टं कृतम्, अप्रविष्टं प्रविष्टं कृतम्, कुप्यमदत्तमूल्यं प्रविष्टम्, दत्तमूल्यं न प्रविष्टम्, संक्षेपो विक्षेपः कृतः, विक्षेपः संक्षेपो वा, महार्घमल्पार्घेण परिवर्तितम्, अल्पार्घं महार्घेण वा, समारोपितोऽर्घः, प्रत्यवरोपितो वा, रात्रयः समारोपिताः, प्रत्यवरोपिता वा, संवत्सरो मासविषमः कृतः, मासो दिवसविषमो वा, समागमविषमः, मुखविषमः, धार्मिकविषमः, निर्वर्तनविषमः, पिण्डविषमः, वर्णविषमः, अर्घविषमः, मानविषमः, मापनविषमः, भाजनविषम इति हरणोपायाः ॥**

तेषाम् अध्यक्षाणां हरणोपायाः राजद्रव्यापहरणद्वाराणि चत्वारिंशत् वक्ष्यमाणरीत्या। अपहारपरिहरणार्थमपहृतप्रत्यानयनार्थं च तद्व्युत्पादनम्। तान् दर्शयति— पूर्वं सिद्धमित्यादिना। पूर्वं सिद्धं पश्चादवतारितमिति पूर्वसस्यत्वात् पूर्वप्रवेश्यः शाल्यादेः करः पश्चिमसस्यगोधूमादिकरेण सह प्रवेशितः। स तु मध्यकाले अध्यक्षेणोपजीव्यो भवति। पश्चात् सिद्धं पूर्वमवतारितमिति पश्चिमसस्यगोधूमादिकरस्य कियांश्चित् भागः पूर्वसस्यकरेण सह पूर्वमेव प्रवेशितः आत्ययिकराजकार्यार्थत्वच्छलात्। साध्यं न सिद्धमिति ग्राह्यः करो न गृहीतो लञ्चादिना राज्ञः एवमाज्ञेति। असाध्यं सिद्धमिति अकरददेवब्राह्मणादेरग्राह्यः करो गूढं गृहीतः। सिद्धमसिद्धं कृतमिति करदेन प्रवेशित एव करः अप्रवेशित इत्युक्त्वा अपहृतः, गृहीत एव करस्यैकदेशो न गृहीत इत्यपलपितो वा। असिद्धं सिद्धं कृतमिति कृत्स्नकरदानार्हे काले तस्य करस्यार्धं दत्त्वा शेषार्धं पश्चात् दास्यामीत्युक्तेन लञ्चवशीकृतेनाध्यक्षेण तच्छेषार्धं दत्तत्वेन पुस्तके लिखितम्। अल्पसिद्धं बहु कृतमिति पञ्चाशति प्रविष्टायां शतं प्रविष्टमित्यध्यक्षेण लञ्चग्राहिणा लिखितम्। बहुसिद्धमल्पं कृतमिति शतं गृहीत्वा पञ्चाशदिति पुस्तके लिखितं लञ्चादिना। अन्यत् सिद्धमन्यत् कृतमिति शालिः सिद्धः कोद्रवो लिखितः शालिकरग्रहणनिमित्तस्य लाभस्याऽऽत्मसात्कारार्थम्। अन्यतः सिद्धमन्यतः कृतमिति देवदत्तात् गृहीतं यज्ञदत्तात् गृहीतमिति पुस्तके लिखितम्। देयं न दत्तम् अदेयं दत्तमिति देयं स्वर्णरजतादिकं कस्मैचित् दातव्यतया राज्ञाऽऽज्ञापितं तस्मै न दत्तम्, किंतु अदेयं फल्गुकुप्यादिकं कालांतरे कथंचित् दत्तम्। काले न दत्तमकाले दत्तमिति 'यज्ञार्थं कस्मैचित् दीयताम्' इति राज्ञा आज्ञप्तं यज्ञादिकाले वर्तमाने न दत्तम्, किंतु अतिक्रान्ते कथंचित् दत्तं लञ्चग्रहणपीडापुरःसरम्। अल्पं दत्तं बहुकृतमिति 'शतं दीयताम्' इति राजाज्ञायां तत् पञ्चाशता आत्मसात्कारार्थया साग्रं पुस्तके विलिखितम्। बहुदत्तमल्पं कृतमिति 'शतं देवदत्ताय दीयताम्' इति राजादेशे विंशतिं स्वयं गृहीत्वाऽशीतिमात्रं तस्मै दत्तम्। अन्यद्दत्तमन्यत् कृतमिति राज्ञाऽऽदिष्टाः शालयः, कोद्रवास्तु दत्ताः। अन्यतो दत्तमन्यतः कृतमिति देवदत्तायाऽऽदिष्टं यज्ञदत्ताय दत्तम्। प्रविष्टमप्रविष्टं कृतमिति कोशनिवेश्यमुपहस्तितमेव द्रव्यमनुपहस्तितमिति वा किंचिदेवोपहस्तितमिति वोक्त्वाऽपहृतम्। अथवा कार्यविशेषार्थे 'प्रजाभ्यो धनमुत्थाप्याऽऽनीयताम्' इत्यादिष्टे तदुत्थाप्य नाद्याप्युत्थितमित्युक्त्वा कालहरणेनोपजीवितम्। अप्रविष्टं प्रविष्टं कृतमिति अगृहीत एव करदेभ्यः करो लञ्चं गृहीत्वा प्रविष्ट इति लिखितः। कुप्यमदत्तमूल्यं प्रविष्टमिति कुप्यं वस्त्रादिकं राजादेशात् ऋणेन गृहीतं कथंचित् कालान्तरे दत्तमूल्यैकदेशं कृत्वा दत्तसमग्रमूल्यमिति पुस्तके लिखितम्। दत्तमूल्यं न प्रविष्टमिति महामूल्यदानेन क्रीतं कुप्यं तावन्मूल्यक्रीतत्वेन पुस्तकेऽनिबद्धं अर्थादल्पमूल्यक्रीतत्वेन निबद्धमित्ययं विंशोऽपहारोपायः। संक्षेपो विक्षेपः कृत इति संक्षेपः जनसमूहदेयः पिण्डकरः विक्षेपः कृतः विप्रकीर्णकरः कृतः, समूहिभ्यः प्रत्येकं विभज्य ग्राह्यः कृत इत्यर्थः,

तथा करणे हि राजद्रव्यमुपजीवितुं शक्यं ग्राम्यजनाश्चेति। विक्षेपः संक्षेपो वेति जनात् एकस्मात् बहुभिर्मासैः अल्पशो ग्राह्यः विप्रकीर्णकरः एकस्मिन्नेव समये संपिण्ड्य ग्राह्यः कृतः, एवं हि कुर्वताऽध्यक्षेण राजद्रव्यमुपजीवितुं लभ्यते जनाश्चेति। महार्घमल्पार्घेण परिवर्तितमिति महार्घं युग्यवाहनादि अल्पार्घेण युग्यादिना विनिमितं विनिमायापहृतम्। अल्पार्घं महार्घेण वेति अल्पमूल्यम् अत एव महाविक्रयविषयभूतं सामुद्रलवणादि पण्यं महामूल्येन अत एव अल्पविक्रयविषयेण सैन्धवलवणादिना परिवर्तितं विनिमितम्, तद्धि शीघ्रविक्रयेण लाभमुत्पादयत् पण्याध्यक्षस्योपजीव्यं भवतीति। समारोपितोऽर्घ इति अर्घस्य यथास्थितादर्घादतिरेचनमित्यर्थः, तथा हि करणे क्रेतारः स्वोपकारकामा भवन्तः पण्याध्यक्षस्यार्घनियामकस्योपजीव्या भवन्तीति। प्रत्यवरोपितो वेति। अर्घ इति संबध्यते। अर्घप्रत्यवरोपणे हि कृते विक्रेतारः यथास्थितार्घकामा भवन्तः पण्याध्यक्षस्योपजीव्या भवन्तीति। रात्रयः समारोपिता इति पञ्चरात्रवेतनं कर्मकरेभ्यो दत्त्वा सप्तरात्रवेतनं दत्तमित्येवंजातीयो रात्रिसमारोपः। अनेन ह्युपायेन कर्मकरेभ्यो धनमपह्रियते। प्रत्यवरोपिता वेति। रात्रय इति वर्तते। स्वामिसकाशात् दशरात्रव्ययं गृहीत्वाऽष्टरात्रव्ययो गृहीत इत्येवंजातीयं रात्रिप्रत्यवरोपणम्। अनेन ह्युपायेन स्वामिद्रव्यमुपजीव्यते। संवत्सरो मासविषमः कृत इति अधिमासरहित एव संवत्सरः साधिमासः कृत इत्यर्थः। अनेनोपायेनाधिमासलाभोऽपह्रियते। मासो दिवसविषमो वेति अनूनदिवसो मासो दिवसोनः कृतः। समागमविषम इति समागमे विषये विषमो व्यापार इत्यर्थः। तद्यथा— समागतानां दृष्टानां कर्मकराणां भक्तवेतनदाने परोक्षं कमपि द्रष्टव्यमपदिश्य स्वयं तद्भक्तवेतनं गृह्णाति। मुखविषम इति कुतश्चिदायमुखादुत्पन्नं द्रव्यमन्यस्मादायमुखादुत्पन्नमिति ख्यापितं तदधिकृतादुत्कोचं गृहीत्वा। धार्मिकविषम इति 'ब्राह्मणेभ्यः प्रत्येकं पणशतं दीयताम्' इति राजादेशे पुरोहितेन पुरोहितपुरुषेण वा तदर्धापहरणम्। निर्वर्तनविषम इति किंचित्कर्मनिर्वर्तनप्रवृत्तौ विषमाचरणमित्यर्थः। तद्यथा— करदेभ्यः करोद्ग्राहकर्मनिर्वर्तनप्रसङ्गे करदान् 'युष्माभिरद्यैव करो निर्यातयितव्यः' इत्यवरुध्य लञ्चग्रहणेन कंचित् मुञ्चतीति। पिण्डविषम इति पिण्डे समूहे विषमाचरणम्। यथा— समूहदेये विषये समूहिनमेकं लञ्चग्रहणादिना वर्जयित्वा समूहिभ्य इतरेभ्यो देयग्रहणम्। वर्णविषम इति 'ब्राह्मणाः एवाद्योत्तीर्णाः, नान्ये' इत्युक्त्वा तद्दिवसवेतनस्याऽऽत्मसात्करणं नावध्यक्षेण कृतम्। अथवा स्वर्णे अष्टवर्णके ग्राह्ये नववर्णकं स्वर्णदायकात् गृहीत्वा अष्टवर्णकस्यैव राज्ञेऽर्पणं सुवर्णाध्यक्षेण कृतम्। अर्घविषम इति सेनानिवेशादावर्घस्याव्यवस्थितत्वात् तं किंचिदधिकमपदिश्य राजार्थोपजीवनम्। मानविषम इति परिमाणोन्मानसाधनवैषम्यमित्यर्थः। तच्च हीनैस्तैर्देयं दत्त्वा महद्भिर्दत्तमिति ख्यापनम्। अथवा देयस्य हीनैर्दानं महद्भिः स्वीकरणम्। मापनविषम इति मापनकृतं वैषम्यं मातृहस्तविशेषोत्पादितं वस्त्रादिमानविषयं वैषम्यम्। भाजनविषम इति 'आज्यपूर्णं घटशतं दीयताम्' इत्युक्ते अल्पानां घटानां शतं दत्त्वा महतां घटानां शतं दत्तमिति लेखनम्। तेन राजद्रव्यमपह्रियते। इत्ययं चत्वारिंशत्तमः द्रव्यापहरणोपायः। इतिशब्दः परिसमाप्तिवचनः। हरणोपायाः समाप्ताः। किंचिद्भेदेन संभवन्तोऽप्यन्ये यथोक्तेष्वेवान्तर्भवन्ति इत्यभिप्रायः। श्रीमूला.

**तत्रोपयुक्तनिधायकनिबन्धकप्रतिग्राहकदायकदापकमन्त्रिमन्त्रिवैयावृत्यकरानेकैकशोऽनुयुञ्जीत। मिथ्यावादे चैषां युक्तसमो दण्डः। प्रचारे चावघोषयेत्— अमुना प्रकृतेनोपहताः प्रज्ञापयन्त्विति। प्रज्ञापयतो यथोपघातं दापयेत्। अनेकेषु चाभियोगेष्वपव्ययमानः सकृदेव परोक्तः सर्वं भजेत। वैषम्ये सर्वत्रानुयोगं दद्यात्। महत्यर्थापहारे चाल्पेनापि सिद्धः सर्वं भजेत॥**

तत्र हरणोपायेषु, शङ्क्यमानेष्विति शेषः, उपयुक्तादीन् अष्टौ एकैकशः प्रत्येकम् अनुयुञ्जीत पृच्छेत्—

"इदमनेनाध्यक्षेणापहृतं न वा ?' इति। तत्र उपयुक्तः युक्तानामुपरि नियुक्तः प्रत्ययितपुरुषः। निधायकः भाण्डागारिकः। निबन्धकः लेखकः। प्रतिग्राहकः प्रतिग्रहीता। दायकः करदः। दापकः राजपुरुषः। मन्त्री युक्तस्य धीसचिवः। मन्त्रिवैयावृत्यकरः मन्त्रिणः कर्मकरः। मिथ्येत्यादि। मिथ्यावादे च एषाम् उपयुक्तादीनाम् युक्तसमः अध्यक्षतुल्यः दण्डः। प्रचारे च जनपदे च अवघोषयेत् सपटहताडमवख्यापयेत्। केन प्रकारेण ? अमुना प्रकृतेन अध्यक्षेण उपहताः उत्कोचग्रहणादिना पीडिताः जनाः प्रज्ञापयन्तु आवेदयन्तु, स्वां स्वां पीडामित्यार्थम्, इति अनेन प्रकारेण। प्रज्ञापयतः जनस्य यथोपघातम् उपघातानुरोधेन दापयेत् द्रव्यम्। अनेकेष्विति। अनेकेष्वभियोगेषु उपघातावेदनेष्वनेककृतेषु युगपत् प्राप्तेषु सत्सु अपव्ययमानः सर्वमुपघातमात्मकृतमनभ्युपगच्छन् युक्तः सकृदेव परोक्तः एकत्राभियोगे एकेनाभियोक्त्रा साक्ष्यादिभिर्विभावितः पराजितः सर्वं भजेत सर्वाभियोगार्थं यथाभागं दद्यात्। वैषम्य इति। अनेकेष्वभियोगेषु एकत्र संप्रतिपत्तिरितरत्र विप्रतिपत्तिश्च वैषम्यम्, तस्मिन् सर्वत्रानुयोगं दद्यात् विप्रतिपन्नेषु सर्वेष्वभियोगेषु साक्षिप्रश्नावसरं दद्यात् रागद्वेषादिनिमित्तमिथ्याभियोगशङ्कापनुत्तये। एकाभियोक्तृविषयमाह– महतीति। महति अर्थापहारे प्रभूतस्वर्णरजतादिनानार्थापहारे केनचित् प्रज्ञापिते अल्पेनापि सिद्धः एकदेशेनापि साक्ष्यादिभिर्विभावितापचारः सर्वं भजेत अभियोगविषयं कृत्स्नमर्थं दद्यात्, अर्थात् विप्रतिपद्यमानो युक्तः। श्रीमूला.

**कृतप्रतिघातावस्थः सूचको निष्पन्नार्थः षष्ठमंशं लभेत, द्वादशमंशं भृतकः। प्रभूताभियोगादल्पनिष्पत्तौ निष्पन्नस्यांशं लभेत। अनिष्पन्ने शारीरं हैरण्यं वा दण्डं लभेत, न चानुग्राह्यः॥**

सूचकः अध्यक्षापचारपिशुनः कृतप्रतिघातावस्थः कृतः स्वीकृतः प्रतिघातावस्थः प्रतिघातार्थोऽवस्थः अध्यक्षोत्पाद्यानर्थप्रतीकारार्थः प्रतिभूः येन स तथाभूतः, भवेदिति शेषः। यदि अध्यक्षापचारं कश्चित् सूचयेत् स प्रतिघातप्रातिभाव्यं गृहीत्वैव सूचयेदित्यर्थः। स निष्पन्नार्थः सिद्धसूचितार्थः षष्ठमंशं लभेत साधितात् धनात्। द्वादशमिति। भृतकः भृत्यः सूचकः द्वादशमंशं लभेत। प्रभूतेत्यादि। बहुप्रकारद्रव्यविषयेऽभियोगे प्रभूताभियोगात् अभियोगविषयबहुप्रकारद्रव्यमध्यात् अल्पनिष्पत्तौ अल्पस्यैव साक्ष्यादिभिः संसिद्धौ निष्पन्नस्यांशं लभेत सूचकः। अनिष्पन्न इति। अनिष्पन्ने अभियुक्तेऽर्थे सर्वथैवासंसिद्धे सति शारीरं हैरण्यं वा दण्डं मिथ्याभियोगनिमित्तं दमं लभेत। न चानुग्राह्यः न च रक्षणीयः, निर्दोषविसृष्टाध्यक्षप्रभवेभ्योऽनर्थेभ्य इत्यार्थम्। श्रीमूला.

**निष्पत्तौ निक्षिपेद्वादमात्मानं वाऽपवाहयेत्।**
**अभियुक्तोपजापात्तु सूचको वधमाप्नुयात्॥**

निष्पत्तौ सूचितार्थसत्यत्वसिद्धौ वादम् अभियोगं निक्षिपेत् विरमयेत् सूचकः, आत्मानं वा अपवाहयेत् आत्मानं चाभियोगबन्धान्मोचयेत्। अनिष्पत्तौ वादपरिसमापनमात्ममोचनं वा सूचकेन कर्तुमशक्यमित्यभिप्रायः। भट्टस्वामी तु– "निष्पत्तौ सूचितार्थसंसिद्धौ निक्षिपेत् अन्यत्र दूष्यादौ संचारयेत् वादं सूचकत्वापवादम्। आत्मानं वाऽपवाहयेत् 'अहमेतस्मिन् काले विषयेऽत्र नाऽऽसम्' इति प्रख्यापयेत्" इति व्याचष्टे। यदि तु अभियुक्तेनाध्यक्षेण लञ्चोपप्रलोभनाद्युपायैर्भेदं नीतः सूचकः स्वाभियुक्तार्थसाधकं राजान्तिके ब्रूयात् तदा स वधदण्डमर्हतीत्याह– अभियुक्तेत्यादि। श्रीमूला.

नियुक्तानामध्यक्षाणां परीक्षा दण्डविधिश्च

**[1]अमात्यसंपदोपेताः सर्वाध्यक्षाः शक्तितः कर्मसु नियोज्याः। कर्मसु चैषां नित्यं परीक्षां कारयेत् चित्तानित्यत्वान्मनुष्याणाम्। अश्वसधर्माणो हि मनुष्या नियुक्ताः कर्मसु विकुर्वते॥**

'उपयुक्तपरीक्षा' इति सूत्रम्। उपयुक्ताः युक्तानामुपरि नियुक्ताः प्रत्ययितपुरुषाः, औपरिकाः इति ये व्यपदिश्यन्ते, तेषां परीक्षा दोषगवेषणा इति सूत्रार्थः।

---

(१) कौ. २१९.

युक्तापहृतप्रत्यानयनोक्त्या गताध्याये युक्तानां परीक्षणीयत्वमवगतम्, तत् किमुपयुक्तानामप्यस्ति, उत नेति संदेहे प्रकरणमिदमारब्धमिति संगतिः।

अमात्यसंपदोपेताः 'जानपदोऽभिजातः' (कौ. १।९) इत्युक्तजानपदत्वादिगुणसमृद्धियुक्ताः। एतेन अर्थोपधाशुद्धियोगमात्रेण नालमिति सूचितम्। सर्वाध्यक्षाः सर्वे अध्यक्षाः उपयुक्ताः युक्ताश्च शक्तितः तत्तत्कर्मसामर्थ्यानुसारेण कर्मसु नियोज्याः। एषां कर्मसु च परीक्षां दोषगवेषणां नित्यं कारयेत्। अर्थोपधाशुद्धानामेव कर्मसु नियोक्तव्यत्वस्य प्रागभिधानात् नियोगानन्तरं पुनः परीक्षायाः किं कारणम्? तत्राऽऽह— मनुष्याणां चित्तानित्यत्वादिति। मनुष्यचित्तं स्वभावादव्यवस्थितं यतः। स्वाभाविकचित्तानित्यत्वमुक्त्वाऽवस्थाविशेषभवमाह—अश्वेत्यादि। यथा हि अश्वाः रथवहनकर्मानियोगदशायां साधुशीलाः एव सन्तस्तन्नियोगदशायां विकारं प्राप्नुवन्ति, एवं कर्मसु अनियोगदशायां सुशीला एव परिदृष्टाः नियोगदशायां शीलवैकृतं प्राप्नुवन्तीत्यर्थः। श्रीमूला.

**तस्मात् कर्तारं करणं देशं कालं कार्यं प्रक्षेपमुदयं चैषु विद्यात् ते यथासंदेशमसंहता अविगृहीताः कर्माणि कुर्युः, संहता भक्षयेयुः, विगृहीता विनाशयेयुः। न चानिवेद्य भर्तुः किंचिदारम्भं कुर्युरन्यत्राऽऽपत्प्रतीकारेभ्यः। प्रमादस्थानेषु चैषामत्ययं स्थापयेद्दिवसवेतनव्ययद्विगुणम्॥**

तस्मात् यथोक्तात् कारणात् कर्तारम् अध्यक्षम्, करणं धर्माद्यधिकरणम् अनुष्ठानं वा, देशं स्थानीयादिकम्, कालं अहोरात्रादिं दुर्भिक्षकालादिं वा, कार्यं करणीयम्, प्रक्षेपं कर्मकरभृतिम्, उदयं लाभं च एषु अध्यक्षेषु विषये विद्यात्। ते अध्यक्षाः यथासंदेशं स्वाम्यादेशानतिक्रमेण असंहताः अकृतान्योन्यसङ्केताः, अविगृहीताः अकृतान्योन्यविरोधाः कर्माणि कुर्युः। संहतिविग्रहयोर्दोषमाह— संहता इत्यादि। कर्माणीत्यनुवर्तते। कर्माणि भक्षयेयुः कर्मफलान्यपहरेयुः। कर्माणि विनाशयेयुः निष्फलीकुर्युः। स्वामिनमपृष्ट्वा न कमपि कर्मविशेषमग्निजलादिनिमित्तविपत्प्रतीकारातिरेकेण कुर्युरित्याह— न चानिवेद्येत्यादि। प्रमादेत्यादि। एषाम् अध्यक्षाणाम् प्रमादस्थानेषु स्त्रीमद्यादिव्यसनेषु दृष्टेषु अत्ययं दण्डं स्थापयेत् सद्य एव प्रयुञ्जीत। कियन्तं स्थापयेत्? दिवसवेतनव्ययद्विगुणं दिवसवेतनस्य प्रमाददिवससंबन्धिनोऽध्यक्षवेतनस्य दिवसव्ययस्य प्रमादनिमित्तकतद्दिवसकर्मादर्शनजन्यस्यार्थनाशस्य च द्विगुणम्।

श्रीमूला.

**यश्चैषां यथादिष्टमर्थं सविशेषं वा करोति स स्थानमानौ लभेत॥**

एषाम् अध्यक्षाणां मध्ये यः अर्थं राजकार्यम् यथादिष्टं करोति स्वाम्युपदिष्टप्रकारकं निष्पादयति, सविशेषं वा करोति आदिष्टाभ्यधिकगुणयुक्तं वा निष्पादयति, सः स्थानमानौ लभेत प्रकृष्टं पदान्तरं पूजां च प्राप्नुयात्।

श्रीमूला.

**अल्पायतिश्चेन्महाव्ययो भक्षयति, विपर्यये यथायतिव्ययश्च न भक्षयतीत्याचार्याः। अपसर्पेणैवोपलभ्यत इति कौटल्यः॥**

राजार्थजानपदार्थग्रसनाग्रसनोपलम्भेऽभ्युपायाकाङ्क्षायां व्ययमहत्त्वाल्पत्वसमत्वलिङ्गकमनुमानमाचार्या अभ्युपायं मन्यन्त इत्याह— अल्पेत्यादि। अल्पायतिः अल्पधनागमः महाव्ययश्चेत् अनल्पार्थोपभोगो यदि भवेत् तदा सः भक्षयति राजप्रजार्थमुपजीवति, विपर्यये यथायतिव्ययश्च महायतित्वे सत्यल्पव्यय आयत्यनुरूपव्ययश्च न भक्षयति इत्याचार्याः। स्वमतमाह— अपसर्पेणेवेति। अपसर्पेणैवोपलभ्यते चारद्वारेणैव दुष्टादुष्टत्वमध्यक्षाणां निश्चीयते 'त्रयाणामेकवाक्ये संप्रत्ययः' (कौ. १।१२) इति गूढपुरुषप्रणिध्युक्तदिशेत्यर्थः। एवकारेण महाव्ययत्वाल्पव्ययत्वयोरुपलब्ध्युपायत्वं व्यवच्छिद्यते। ते ह्यल्पायतेरपि महाकुटुम्बिन उद्धारग्रहणेन महाव्ययत्वदर्शनात् प्रभूतराजप्रजाद्रव्यापहारिणोऽपि सहजकृपणतयाऽल्पव्ययत्वदर्शनाच्च व्यभिचरिते इत्यभिप्रायः। श्रीमूला.

**यः समुदयं परिहापयति स राजार्थं भक्षयति। स चेदज्ञानादिभिः परिहापयति तदेनं यथागुणं दापयेत्॥**

यः समुदयं द्रव्योत्पत्तिं परिहापयति न्यूनयति स राजार्थं भक्षयति । सः अज्ञानादिभिः अज्ञानालस्यभयप्रमादकामकोपदर्पलोभैर्गाणनिक्याधिकारोक्तैः परिहापयति चेत् एनं तत् हापितं द्रव्यं यथागुणं द्विगुणं त्रिगुणं अधिकगुणं वा अपराधानुसारिगुणं दापयेत् । श्रीमूला.

**यः समुदयं द्विगुणमुद्भावयति स जनपदं भक्षयति । स चेद्राजार्थमुपनयत्यल्पापराधे वारयितव्यः, महति यथापराधं दण्डयितव्यः ॥**

यः समुदयं द्विगुणं क्लृप्तादधिकम् उद्भावयति सः जनपदं भक्षयति, कथमन्यथा समुदयाधिक्यमिति । सः राजार्थम् उपनयति चेत् स्वोद्भावितमधिकं साकल्येन राज्ञेऽर्पयति चेत् तर्हि अल्पापराधे अल्पेऽपराधे जनपदपीडने वारयितव्यः 'मा पुनरेवं जानपदेभ्यः क्लृप्ताधिकमुद्भावय' इति प्रतिषेद्धव्यः । महति द्विगुणत्रिगुणाद्युद्भावनरूपे कोशक्षयफलकजनपदकर्शनहेतावपराधे स्वयमपहरणरूपे च यथापराधं दण्डयितव्यः । यदुक्तम्— 'यथाऽन्नकर्शनात् प्राणाः क्षीयन्ते सर्वदेहिनाम् । तथा कोशा नरेन्द्राणां क्षीयन्ते राष्ट्रकर्शनात् ॥' इति ।

श्रीमूला.

**यः समुदयं व्ययमुपनयति स पुरुषकर्माणि भक्षयति । स कर्मदिवसद्रव्यमूल्यपुरुषवेतनापहारेषु यथापराधं दण्डयितव्यः ॥**

यः व्ययं कर्मार्थव्ययाय क्लृप्तं धनं समुदयं उपनयति समुदये प्रवेशयति, व्ययितमकृत्वेत्यार्थम्, सः पुरुषकर्माणि भक्षयति पुरुषान् कर्मकरान् कर्माणि च नाशयति कर्माननुष्ठापनेन । तस्य दण्डमाह— स इति । सः कर्मदिवसद्रव्यमूल्यपुरुषवेतनापहारेषु— कर्मार्थदिवसस्य यत् द्रव्यं तद्दिवसकर्मसाध्यं फलं तस्य मूल्यं कल्पितः कश्चिदर्थः कर्मदिवसद्रव्यमूल्यम्, पुरुषवेतनं पुरुषाणां कर्मकराणां वेतनम्, कर्मदिवसद्रव्यमूल्यस्य पुरुषवेतनस्य च अपहारेषु विनाशनेषु यथापराधं अपराधानुसारेण दण्डयितव्यः कर्मदिवसद्रव्यमूल्यं कर्मकरपुरुषवेतनं च यावत् कर्माकरणेन हापितं तावत् दापयितव्यः इत्यभिप्रायः ।

श्रीमूला.

**तस्मादस्य यो यस्मिन्नधिकरणे शासनस्थः स तस्य कर्मणो याथातथ्यमायव्ययौ च व्याससमासाभ्यामाचक्षीत ॥**

तस्मात् समुदयविषयेऽपराधे दण्डविधानात् यः अध्यक्षः यस्मिन्नधिकरणे शासनस्थः नियुक्तः सः तस्य कर्मणः तदधिकरणसंबद्धस्य कर्मणः याथातथ्यं यथास्थितिम् आयव्ययौ च व्याससमासाभ्यां संक्षेपविस्ताराभ्याम् अस्य राज्ञः आचक्षीत निवेदयेत् । श्रीमूला.

**मूलहरतादात्विककदर्यांश्च प्रतिषेधयेत् । यः पितृपैतामहमर्थमन्यायेन भक्षयति स मूलहरः । यो यद्यदुत्पद्यते तत्तद्भक्षयति स तादात्विकः । यो भृत्यात्मपीडाभ्यामुपचिनोत्यर्थं स कदर्यः । स पक्षवांश्चेदनादेयः, विपर्यये पर्यादातव्यः ॥**

मूलहरतादात्विककदर्यान् प्रतिषेधयेत् मूलहरणादिकर्मणो वारयेत् । के पुनर्मूलहरादय इत्यत्राऽऽह— यः पितृपैतामहमिति । यः पितृपैतामहं पितृपितामहार्जितम् अर्थम् अन्यायेन भक्षयति दुर्विनियोगेन नाशयति स मूलहरः । यद्यदुत्पद्यते प्रत्यहं लभ्यते तत्तत् यो भक्षयति दुर्विनियोगेन नाशयति स तादात्विकः । यः भृत्यात्मपीडाभ्याम् अर्थम् उपचिनोति वर्धयति सः कदर्यः । प्रतिषेधानन्तरमपि मूलहरणाद्यनुवृत्तावाह— स इति । सः मूलहराद्यन्यतमः पक्षवांश्चेत्, पक्षो बन्धुसंपत्, तद्वान् यदि अनादेयः अग्राह्यः तद्बन्धुकोपपरिहारार्थमगृहीतधन एव स्थानादवरोपणीय इत्यर्थः । विपर्यये पक्षवत्त्वाभावे पर्यादातव्यः सर्वस्वं हर्तव्य इत्यर्थः ।

श्रीमूला.

**यो महत्यर्थसमुदये स्थितः कदर्यः संनिधत्ते, अवनिधत्ते, अवस्रावयति वा— संनिधत्ते स्ववेश्मनि, अवनिधत्ते पौरजानपदेषु, अवस्रावयति परविषये, तस्य सत्री मन्त्रिमित्रभृत्यबन्धुपक्षमागतिं गतिं च द्रव्याणामुपलभेत ॥**

यः कदर्यः महति अर्थसमुदये स्थितः सन् संनिधत्ते अवनिधत्ते अवस्रावयति वा । तत्र संनिधानावनिधानावस्रावणानि विवृणोति— स्ववेश्मनि संनिधत्ते भूगर्तस्तम्भ-

कोटरादिषु स्थापयति, पौरजानपदेषु अवनिधत्ते रक्षणार्थं निक्षिपति, परविषये अवस्रावयति शत्रुजनपदे धनसंचारणं करोति । तस्य अध्यक्षस्य मन्त्रिमित्रभृत्यबन्धुपक्षं मन्त्र्यादिचतुष्टयबलं द्रव्याणामागतिं गतिं च सत्री गूढपुरुषप्रणिध्युक्तलक्षणः उपलभेत । श्रीमूला.

**यश्चास्य परविषये संचारं कुर्यात् तमनुप्रविश्य मन्त्रं विद्यात् । सुविदिते शत्रुशासनापदेशेनैनं घातयेत् ॥**

यश्च परविषये अस्य कर्दयस्य संचारं द्रव्यसंचारणं कुर्यात् तम् अनुप्रविश्य अनुकूलतया प्रविश्य तन्मित्रं तद्भृत्यो वा भूत्वेत्यर्थः, मन्त्रं विद्यात् अभिसंधिरहस्यं जानीयात् सत्री । सुविदित इति । सुविदिते सत्रिद्वारेण सम्यक् विज्ञाते मन्त्रे एनं कदर्यं शत्रुशासनापदेशेन घातयेत् शत्रुणा कदर्यमभिसंबुध्य प्रहितं 'प्रेषितोऽर्थः प्रतीष्टः, अवशिष्टः क्षिप्रं प्रेष्यताम्' इति लिखितवृत्तान्तं किमपि लेख्यं शत्रुविषयागतजनहस्तादन्तपालेन गृहीतोपनीतमित्येवं कूटसृष्टस्यैव शत्रुशासनस्य अपदेशेन प्रख्यापनेन हतं कारयेत् । श्रीमूला.

**तस्मादस्याध्यक्षाः संख्यायकलेखकरूपदर्शकनीवीग्राहकोत्तराध्यक्षसखाः कर्माणि कुर्युः ॥**

तस्मात् राजद्रव्यापहारे यथोक्तदण्डविधानात् अध्यक्षाः अस्य राज्ञः कर्माणि धनसंबद्धानि कार्याणि संख्यायकलेखकरूपदर्शकनीवीग्राहकोत्तराध्यक्षसखाः कुर्युः संख्यायकादिसाक्षिकाः सन्तः कुर्युः । संख्यायकाः गणकाः । लेखकाः प्रसिद्धाः । रूपदर्शकाः निष्कदीनारादिरूपपरिशोधकाः । नीवीग्राहकाः व्ययितशिष्टधनग्रहणाधिकृताः । उत्तराध्यक्षाः औपरिकाः । श्रीमूला.

**उत्तराध्यक्षा हस्त्यश्वरथारोहाः । तेषामन्तेवासिनः शिल्पशौचयुक्ताः संख्यायकादीनामपसर्पाः ॥**

के पुनरुत्तराध्यक्षाः कर्तव्या इत्यत्राऽऽह– उत्तरेत्यादि । हस्त्यश्वरथारोहाः हस्त्यारोहाः अश्वारोहाः रथारोहाश्च वृद्धभावादिना युद्धाक्षमत्वं प्रतिपन्नाः उत्तराध्यक्षाः कर्तव्याः । तेषामिति । तेषाम् उत्तराध्यक्षाणाम् शिल्पशौचयुक्ताः अन्तेवासिनः– शिल्पं नियोगानुष्ठानकौशलम्, शौचं स्वकृत्याविसंवादनम्, ताभ्यामुपेताः शिष्याः संख्यायकादीनामपसर्पाः संख्यायकलेखकादिप्रवृत्त्युपलम्भार्थाः गूढपुरुषाः कर्तव्याः । श्रीमूला.

**बहुमुख्यमनित्यं चाधिकरणं स्थापयेत् ॥**

अधिकरणं युक्तकर्मस्थानं बहुमुख्यं स्थापयेत् बहवो मुख्याः प्रधानाः यस्मिंस्तत् तथाभूतं कुर्यात्, बहवश्चेत् प्रधानास्तेऽन्योन्यशङ्किता राजाद्यर्थं नापहरन्तीति । अनित्यं च स्थापयेत्– अनित्यं न विद्यते नित्यः स्थिरः चिरस्थायी युक्तो यस्मिंस्तत् तथाभूतं च कुर्यात् । नित्यो हि युक्तः चिरसंवाससुलभां मित्रसंपदमवष्टभ्य आत्मदोषान् निह्नुवीत जानपदाश्च तस्य दोषान् कालान्तरात्मापकारभिया नाऽऽविष्कुर्युरिति । श्रीमूला.

**यथा ह्यनास्वादयितुं न शक्यं**
**जिह्वातलस्थं मधु वा विषं वा ।**
**अर्थस्तथा ह्यर्थचरेण राज्ञः**
**स्वल्पोऽप्यनास्वादयितुं न शक्यः ॥**

अध्यायान्ते श्लोकानाह– यथा हीत्यादि । अनास्वादयितुं न शक्यम् अर्थात् आस्वादनपरिहारमिच्छताऽपि । अशक्यत्वोपपादकमाह– जिह्वातलस्थमिति । विनाऽपि पुरुषयत्नेन तदुदरप्रवेशं यद्देशसंनिकर्षे लभेत तद्देशनित्यसंनिहितमित्यर्थः । अर्थ इति । यः अत्यल्पत्वात् भक्षितविज्ञातोऽपि अनर्थापर्यवसायी मधुस्थानीयः, यश्च महत्त्वात् वधदण्डान्तपरमानर्थपर्यवसायी विषस्थानीयः, स उभयविधोऽपि । अर्थचरः अर्थेषु व्याप्रियमाणोऽध्यक्षः । तदेवमर्थभक्षणस्याध्यक्षदुष्परिहरत्वमनेनोक्तम् । श्रीमूला.

**मत्स्या यथाऽन्तःसलिले चरन्तो**
**ज्ञातुं न शक्याः सलिलं पिबन्तः ।**
**युक्तास्तथा कार्यविधौ नियुक्ता**
**ज्ञातुं न शक्या धनमाददानाः ॥**

**अपि शक्या गतिर्ज्ञातुं पततां खेपतत्रिणाम् ।**
**न तु प्रच्छन्नभावानां युक्तानां चरतां गतिः ॥**

कृतमप्यध्यक्षैरर्थभक्षणं जलचरमत्स्यजलपानवत् गगनचरपक्षिगतिवच्च स्वामिना दुरवबोधमिति श्लोकद्वयेनाऽऽह— मत्स्या यथान्तरिति, अपि शक्या गतिरिति च । श्रीमूला.

**आस्रावयेच्चोपचितान् विपर्यस्येच्च कर्मसु ।**
**यथा न भक्षयन्त्यर्थं भक्षितं निर्वमन्ति वा ॥**

अत एतेषु राजा किं कुर्यात् ? तत्राऽऽह— आस्रावयेदिति । उपचितान् अर्थभक्षणसमृद्धान् अध्यक्षान् आस्रावयेत् भक्षितमर्थमाहारयेत् । उपचयरूपेण लिङ्गेनापसर्पाद्युपायेन च तदपचारमवगम्येत्यार्थम् । कर्मसु विपर्यस्येत् व्यत्ययेन निवेशयेत् उच्चकर्मस्थानेभ्योऽवरोप्य नीचकर्मस्थानेषु नियुञ्जीतेत्यर्थः । आस्रावणविपर्यसनभयाच्च अध्यक्षाः अर्थभक्षणे न प्रवर्तन्ते, भक्षितं चार्थं प्रत्याहरन्तीत्यभिप्रायेणाऽऽह— यथेत्यादि । तथा आस्रावयेदित्येवं पूर्वार्धेन संबन्धः । सोऽयमर्थभक्षकविषयो विधिः प्रपञ्चितः । श्रीमूला.

**न भक्षयन्ति ये त्वर्थान् न्यायतो वर्धयन्ति च ।**
**नित्याधिकाराः कार्यास्ते राज्ञः प्रियहिते रताः ॥**

ये पुनः अर्थचराः अपि सन्तः महान्तं यत्नमास्थाय राजजानपदार्थं न भक्षयन्ति, प्रत्युत न्यायतः परिवर्धयन्ति, तथाविधाः राजप्रियहितानुष्ठानपराः स्थिराधिकाराः कर्तव्या इत्याह— न भक्षयन्तीत्यादि । श्रीमूला.

कोशप्रवेश्यानां रत्नानां प्रशस्तानां मणिमुक्ताचन्दनदुकूलदारुवेण्वादीनां परीक्षा

**[1]कोशाध्यक्षः कोशप्रवेश्यं रत्नं सारं फल्गु कुप्यं वा तज्जातकरणाधिष्ठितः प्रतिगृह्णीयात् ॥**

'कोशप्रवेश्यरत्नपरीक्षा' इति सूत्रम् । कोशः भाण्डागारम्, तत्प्रवेशनार्हाणां रत्नानां माणिक्यमुक्ताप्रवालादीनां रत्नग्रहणेन संग्राह्यद्रव्योपलक्षणात् सारफल्गुकुप्यानां च परीक्षा अत्रोपदिश्यते इति सूत्रार्थः ।

'कोशपूर्वाः सर्वारम्भाः' (कौ. २।८) इति प्रक्रान्तायाः कोशप्रकृतेः समाहर्तृसंनिधातृव्यापारैरुत्पादनं रक्षणं च प्रागभिहितम्, स्वरूपलक्षणं त्वनुक्तमिदानीमभिधीयते इति संगतिः । कोशाध्यक्ष इति । कोशाध्यक्षः भाण्डागाराधिकृतः कोशप्रवेश्यं रत्नं मणिमुक्तादिकम्, सारं चन्दनागुरुप्रभृतिकम्, फल्गु पट्टदुकूलजातीयम्, कुप्यं कुप्याध्यक्षप्रकरणोक्तं सारदारुवेणुवल्कादिकम् आयुधागाराध्यक्षप्रकरणोक्तं यन्त्रायुधावरणादिकं च, वाशब्दः समुच्चये, तज्जातकरणाधिष्ठितः— तेषु रत्नादिषु जाताः तज्जाताः, तत्संबद्धव्यवहारैकवृत्तय इत्यर्थः, तज्जातैः करणैः कायस्थैश्च अधिष्ठितः समन्वितः सन् प्रतिगृह्णीयात् । श्रीमूला.

**ताम्रपर्णिकम्, पाण्ड्यकवाटकम्, पाशिक्यम्, कौलेयम्, चौर्णेयम्, माहेन्द्रम्, कार्दमिकम्, स्रौतसीयम्, ह्रादीयम्, हैमवतं च मौक्तिकम् ॥**

अभ्यर्हितत्वान्मौक्तिकस्य परीक्षां प्रथममाह— ताम्रपर्णिकमिति । मौक्तिकं ताम्रपर्णिकम्— ताम्रपर्णी नाम पाण्ड्येषु प्रसिद्धा नदी, तस्याः समुद्रसंगमप्रदेशे समुत्पन्नम्, पाण्ड्यकवाटकं मलयकोटिपर्वतोत्पन्नम्, पाशिक्यं पाटलिपुत्रान्तिकगतायां पाशिकाख्यायां नद्यामुत्पन्नम्, कौलेयम्— सिंहलद्वीपे मयूरग्रामे कुला नाम नदी, तस्यामुत्पन्नम्, चौर्णेयम्— केरलेषु मुरचिनामकपत्तनसमीपे चूर्णी नाम नदी, तस्यामुत्पन्नम्, माहेन्द्रं महेन्द्रपर्वताभ्यर्णाम्भोधिसंभवम्, कार्दमिकम्— कर्दमा नाम पारसीकेषु नदी, तस्यामुत्पन्नम्, स्रौतसीयम्— बर्बरकूले स्रौतसी नाम नदी, तस्यामुत्पन्नम्, ह्रादीयम्— बर्बरकूले समुद्रैकदेशे श्रीघण्टो नाम ह्रदः, तस्मिन्नुत्पन्नम्, हैमवतं च हिमालयसंभवं च भवति । इत्थं मौक्तिकस्योत्पत्तिक्षेत्राणि दश भवन्ति । श्रीमूला.

**शङ्खः शुक्तिः प्रकीर्णकं च योनयः ॥**

मौक्तिकस्य योनीस्तिस्र आह— शङ्ख इत्यादि । शङ्खः शुक्तिश्च जलजौ प्रसिद्धौ । प्रकीर्णकं गजकुम्भादिकम् । आहुश्च— 'करका वारिधाराश्च मलयाचन्दनोदकम् । शङ्खशुक्तिनिपीतं यन्मौक्तिकं तत् प्रजायते ॥ सूकरमृगेन्द्रदंष्ट्रोद्भवानि करिकुम्भजातानि । वंशाभोगभुजङ्गोत्तमाङ्गजानि प्रकीर्णानि ॥' इति । श्रीमूला.

(१) कौ. २।११.

**मसूरकं त्रिपुटकं कूर्मकमर्धचन्द्रकं कञ्चुकितं यमकं कर्तकं खरकं सिक्थकं कामण्डलुकं श्यावं नीलं दुर्विद्धं चाप्रशस्तम् ॥**

अथ मौक्तिकस्य त्रयोदश दोषानाह— मसूरकमिति । मसूरकं तदाख्यधान्यविशेषाकारम् । त्रिपुटकं तदाख्यधान्याकारम् । कूर्मकं तदाकारम् । अर्धचन्द्रकम् अर्धचन्द्राकृति । कञ्चुकितं पटलितम् । यमकं युग्मकम् । कर्तकं छिन्नकम् । खरकम् अश्लक्ष्णम् । सिक्थकं सिक्थाकारबिन्दुयुक्तम् । कामण्डलुकं कमण्डल्वाकारम् । श्यावं कपिशवर्णम् । नीलं नीलवर्णम् । दुर्विद्धम् अस्थानविद्धम् । ईदृशं मौक्तिकम् अप्रशस्तम् । गुणात् प्राक् दोषवचनं दुष्टस्य अत्यन्तानुपादेयत्वद्योतनार्थम् । श्रीमूला.

**स्थूलं वृत्तं निस्तलं भ्राजिष्णु श्वेतं गुरु स्निग्धं देशविद्धं च प्रशस्तम् ॥**

मौक्तिकस्याष्टौ गुणानाह— स्थूलमिति । स्थूलं पृथु, वृत्तं चारुपरिमण्डलम्, निस्तलं तलरहितं मसृणभूम्यनवस्थायि, भ्राजिष्णु दीप्तिमत्, श्वेतं धवलम्, गुरु अलघु, स्निग्धम् अरूक्षम्, देशविद्धं च यथास्थानविद्धं च मौक्तिकं प्रशस्तम् । एषु यस्यकस्यचित् पूर्वोक्तदोषाभावरूपतया सिद्धस्यापि इह शब्दतो ग्रहणं स्थूलत्वादिनिर्विशेषं गुणत्वं द्योतयितुम् । श्रीमूला.

**शीर्षकमुपशीर्षकं प्रकाण्डकमवघाटकं तरलप्रतिबन्धं चेति यष्टिप्रभेदाः ॥**

अथ पञ्च यष्टिभेदानाह— शीर्षकमिति । मौक्तिकं महदेकं मध्ये, पार्श्वयोस्तु सर्वाणि तनूनि समानि यस्याः सा यष्टिः शीर्षकमित्युच्यते । उपशीर्षकं नाम महदेकं मौक्तिकं मध्ये, तत्पार्श्वयोस्तु सममल्पपरिमाणमेकैकमित्येवंक्रमेणानेकैस्त्रिकैः समैर्ग्रथिता यष्टिः । प्रधानमेकं मध्ये, तत्पार्श्वयोर्द्वे द्वे इत्येवंक्रमेणानेकैः पञ्चकैर्ग्रथिता यष्टिः प्रकाण्डकम् । प्रधानमेकं महन्मौक्तिकं मध्ये कृत्वा पार्श्वयोः क्रमकृशोत्तरोत्तरमौक्तिकैर्ग्रथिता यष्टिः अवघाटकाख्या । तरलप्रतिबन्धं नाम समप्रमाणमौक्तिकगुम्फिता यष्टिः । चशब्दः समुच्चये । इति यष्टिप्रभेदाः यष्टीनां सराणां प्रभेदाः । श्रीमूला.

**यष्टीनामष्टसहस्रमिन्द्रच्छन्दः । ततोऽर्धं विजयच्छन्दः । शतं देवच्छन्दः । चतुःषष्टिरर्धहारः । चतुष्पञ्चाशद्रश्मिकलापः । द्वात्रिंशद्गुच्छः । सप्तविंशतिर्नक्षत्रमाला । चतुर्विंशतिरर्धगुच्छः । विंशतिर्माणवकः । ततोऽर्धमर्धमाणवकः । एत एव मणिमध्यास्तन्माणवका भवन्ति । एकशीर्षकः शुद्धो हारः । तद्वच्छेषाः । मणिमध्योऽर्धमाणवकस्त्रिफलकः फलकहारः पञ्चफलको वा । सूत्रमेकावली शुद्धा । सैव मणिमध्या यष्टिः । हेममणिचित्रा रत्नावली । हेममणिमुक्तान्तरोऽपवर्तकः । सुवर्णसूत्रान्तरं सोपानकम् । मणिमध्यं वा मणिसोपानकम् ॥**

शीर्षकादीनां पञ्चानां यष्टीनां प्रत्येकं संख्यानियमप्रयुक्तानेकादशभेदानाह— यष्टीनामिति । यष्टीनां शीर्षकादिलक्षणानामुक्तानाम् अष्टसहस्रम् अष्टोत्तरं सहस्रम् इन्द्रच्छन्दः तदाख्यं भूषणमुच्यते । शीर्षकेन्द्रच्छन्दः उपशीर्षकेन्द्रच्छन्दः इत्यादिप्रकारैर्व्यपदिश्यते इत्यर्थः । एवमुत्तरत्रापि बोद्धव्यम् । ततोऽर्धं चतुरुत्तरा पञ्चशती विजयच्छन्दः । शतं देवच्छन्दः शतयष्टिकं देवच्छन्दाख्यम् । एकाशीत्युत्तरैर्यष्टीनामष्टभिः शतैर्युक्तः देवच्छन्दः इति क्वचित् व्याख्यातम् । 'चतुःषष्टिः' इत्यादिकम् 'अर्धमाणवकः' इत्येवमन्तमुत्तानार्थम् । एत एवेति । उक्ता एव इन्द्रच्छन्दादयो मणिमध्याः माणिक्यमध्याः सन्तः तन्माणवकाः भवन्ति इन्द्रच्छन्दाद्युपपदमाणवकाः भवन्ति । इन्द्रच्छन्दमाणवकः, विजयच्छन्दमाणवकः इत्येवमादिसंज्ञायुक्ता भवन्तीत्यर्थः । एकेत्यादि । एकशीर्षकः शुद्धो हारः— एकानि केवलानि उपशीर्षकादिलक्षणास्पृष्टानि शीर्षकाणि शीर्षकाख्याः यथोक्तसंख्याः यष्टयो यस्य स तथाभूतः अर्थात् इन्द्रच्छन्दादिः विशेष्यः शुद्धहाराख्यो भवति । इन्द्रच्छन्दशीर्षकशुद्धहारः, विजयच्छन्दशीर्षकशुद्धहारः, देवच्छन्दशीर्षकशुद्धहारः, अर्धहारशीर्षकशुद्धहारः, रश्मिकलापशीर्षकशुद्धहारः इत्यादिरीत्या व्यवहार्यो भवतीत्यर्थः । शीर्षकविषयेऽभिहितं शुद्धहारव्यपदेशमुपशीर्षकादावतिदिशति— तद्वदिति । तद्वत्

शीर्षकवत् शेषाः उपशीर्षकादयः, बोद्धव्याः इति शेषः। एतदुक्तं भवति– एकशीर्षकवत् एकोपशीर्षकः, एकप्रकाण्डकः, एकावघाटकः, एकतरलप्रतिबन्धः इत्यपरे चत्वारः शुद्धहाराः इन्द्रच्छन्दोपशीर्षकशुद्धहारः, विजयच्छन्दोपशीर्षकशुद्धहारः इत्यादिक्रमेण प्रत्येकमुपगृहीतेन्द्रच्छन्दविजयच्छन्दादिसंज्ञाङ्का ऊहनीया इति। मणिमध्य इति। मणिः मरकतादिः मध्ये यस्य सः मणिमध्यः अर्धमाणवकः पूर्वोक्तो दशयष्टिः त्रिफलकः पञ्चफलको वा त्रिभिः पञ्चभिर्वा स्वर्णफलकैर्युक्तो भवन् फलकहारः फलकहारसंज्ञो भवति। स च द्विप्रकारः। सूत्रमिति। शुद्धा मणिहीना एकावली एकः सरः शीर्षकाद्यन्यतमलक्षणः सूत्रं तदाख्या भवति। सैवेति। सैव एकावल्येव मणिमध्या सती यष्टिः यष्टिसंज्ञा। हेमेत्यादि। हेममणिचित्रा हेममयैर्मणिभिराहितवैचित्र्या यष्टिः रत्नावली तदाख्या। हेममणिमुक्तेत्यादि। हेममणिमुक्तान्तरः हेममणिमुक्ताः पूर्वं हेमगुलिका ततः पद्मरागादिरत्नं ततो मौक्तिकमित्येवंक्रमगुम्फिताः अन्तरे मध्ये यस्य स तथाभूतः अपवर्तकः तदाख्यः। सुवर्णेत्यादि। सुवर्णसूत्रान्तरं सुवर्णसूत्रम् अप्रत्युप्तमणिकं केवलस्वर्णफलकं अन्तरे मध्ये यस्य तत् तथाभूतं सोपानकं तत्संज्ञम्। मणीत्यादि। मणिमध्यं मणिसोपानकम्– मणियुक्तं प्रत्युप्तमणिकं मध्यं मध्यसुवर्णफलकं यस्य तत् तथाभूतं मणिसोपानकाख्यम्। श्रीमूला.

**तेन शिरोहस्तपादकटीकलापजालकविकल्पा व्याख्याताः॥**

तेन यथोक्तेन शीर्षकादिकण्ठाभरणप्रकारेण शिरोहस्तपादकटीकलापजालकविकल्पाः शिरआदिचतुष्टयस्य कलापजालकविकल्पाः– कलापः सरः, जालकं सरसमूहः, तयोर्विकल्पाः प्रकाराः व्याख्याताः उक्तप्राया इत्यर्थः। अत्रायं सङ्ग्रहश्लोकः श्रीभट्टस्वामिनः– 'अष्टौ गुणास्त्रिधा योनिर्देश संपत्तिभूमयः। त्रयोदशैव मुक्तानां दोषा हाराश्च विंशतिः॥' इति। श्रीमूला.

**मणिः कौटो मालेयकः पारसमुद्रकश्च॥**

अथ मणीनां गुणादीन् वक्तुमुपक्रमते– मणिरिति। मणिः कौटः– कोटिः मलयसागरान्तरम्, तत्र भवः। मलयैकदेशः कर्णीवनाख्यः माला, तस्यां जातो मालेयकः। पारसमुद्रः सिंहलद्वीपस्थो रोहणाद्रिः, तज्जः पारसमुद्रकः। इति त्रिविध इत्यर्थः। एवं च मणीनां योनयस्तिस्र इत्युक्तं भवति। प्रायिकं चैतत्, स्फटिकवैदूर्यमरकतादीनां विन्ध्यविदूरदर्दरादिषूत्पत्तिदर्शनादित्याहुः। श्लोकं चोदाहरन्ति– 'विन्ध्यो विदूरशैलो मलयो विन्ध्योपलक्षणोद्देशः। स्त्रीराज्यं चेति पुनस्तस्याकरभूमयोऽभिहिताः॥' इति। श्रीमूला.

**सौगन्धिकः पद्मरागोऽनवद्यरागः पारिजातपुष्पको बालसूर्यकः॥**

मणिषु पञ्चप्रकारां माणिक्यजातिमाह– सौगन्धिक इति। सौगन्धिकः तदाख्यकुसुमवत् ईषन्नैल्यरूषितरक्तवर्णः। पद्मरागः पद्मवर्णः। अनवद्यरागः– अनवद्यं कुङ्कुमम्, तद्वर्णः। पारिजातपुष्पकः पारिजातकुसुमवर्णः। बालसूर्यकः उदयमानसूर्यारुणः। श्रीमूला.

**वैडूर्यः– उत्पलवर्णः शिरीषपुष्पक उदकवर्णो वंशरागः शुकपत्रवर्णः पुष्यरागो गोमूत्रको गोमेदकः॥**

अष्टप्रकारां वैदूर्यजातिमाह– वैडूर्य इति। वैडूर्य इत्यधिकारः। उत्पलवर्णः कोकनदशोणः। शिरीषपुष्पकः शिरीषपुष्पवर्णः। उदकवर्णः उदकवत् स्वच्छवर्णः। वंशरागः वेणुपत्रवर्णः। शुकपत्रवर्णः शुकपक्षच्छविः। पुष्यरागः हरिद्रापिञ्जरः इति स्वामी। गोमूत्रकः गोमूत्रच्छायः। गोमेदकः– गोमेदो गोरोचना, तद्वर्णः। श्रीमूला.

**नीलावलीय इन्द्रनीलः कलायपुष्पको महानीलो जाम्बवाभो जीमूतप्रभो नन्दकः स्रवन्मध्यः॥**

अष्टविधामिन्द्रनीलजातिमाह– नीलेत्यादि। नीलावलीयः शुक्ल एव नीलराजितरञ्जितः। इन्द्रनीलः मयूरबर्हवर्णः। कलायपुष्पकः– कलायः धान्यभेदः, तत्पुष्प-

समच्छविः । महानीलः भ्रमरवर्णः । जाम्बवाभः जम्बूफलवर्णः । जीमूतप्रभः मेघवर्णः । नन्दकः अन्तःशुक्लो बहिर्नीलः । स्रवन्मध्यः स्रवज्जलाकाररश्मिप्रसरः ।

श्रीमूला.

**शुद्धस्फटिकः मूलाटवर्णः शीतवृष्टिः सूर्यकान्तश्चेति मणयः ॥**

चतुर्विधां स्फटिकजातिमाह— शुद्धेत्यादि । शुद्धस्फटिकः अत्यन्तशुक्लः । मूलाटवर्णः उद्धृतस्नेहदधिच्छायः । शीतवृष्टिः चन्द्रकान्तः यश्चन्द्रकिरणस्पर्शे द्रवति । सूर्यकान्तः यः सूर्यकरसंपर्के अग्निं वमति । चशब्दः समुच्चये । इति मणयः मणिभेदाः । आर्याश्चात्राऽऽचार्यैरुदाहृताः— 'शशरुधिरजपाबन्धूकसंनिभाः पारिजातपुष्पाभाः । तरुणतरणित्विषो वा त एव खलु पद्मरागाः स्युः ॥ शुकबर्हवारिसैन्धवशिरीषकुसुमप्रभं हरिद्राभम् । मार्जारनयननैल्यं वंशच्छदकान्ति वैदूर्यम् ॥ बर्हिणचन्द्रकवर्णा भ्रमराभाः पक्वजम्ब्वाभाः । सूर्यांशुतापयोगात् कृच्छ्रालोका महानीलाः ॥ मन्दरमथनायासितवासुकिजविषोद्भवा मरकतस्य । प्रथमोत्पत्तिः कथिता केचिद्भुजगाण्डजेति जगुः ॥ गरुडच्छदप्रकाशं कदलीदलवंशपत्रवर्णं वा । परिपक्वकलमकणिशानुकारि वा मरतकं गदितम् ॥' इति । केचित् पुनः सौगन्धिकशब्दस्य माणिक्यपर्यायतां वदन्तः 'सौगन्धिकः' इति वैदूर्याधिकारवत् माणिक्याधिकारः, तस्य प्रभेदाः पद्मरागादयश्चत्वारः इति, उत्पलवर्णादयो नीलावलीयान्ता वैदूर्यस्य नव प्रभेदाः इति, 'इन्द्रनीलः' इत्यधिकारः, कलायपुष्पकादयः स्रवन्मध्यान्तास्तस्य षट् प्रभेदा इति, शुद्धस्फटिकादयश्चत्वारः स्फटिकप्रभेदा इति च व्याचक्षते इत्याह स्वामी ।

श्रीमूला.

**षडश्रश्चतुरश्रो वृत्तो वा, तीव्ररागः संस्थानवानच्छः स्निग्धो गुरुरर्चिष्मानन्तर्गतप्रभः प्रभानुलेपी चेति मणिगुणाः ॥**

अथैकादश मणिगुणानाह— षडश्र इति । षडश्रः षट्कोटिः । चतुरश्रः चतुष्कोटिः । वृत्तः चारुपरिमण्डलः । तीव्ररागः अत्यन्तभास्वरः । संस्थानवान् भूषणप्रतिवापयोग्यावयवसंनिवेशः । अच्छः निर्मलः । स्निग्धः मसृणः । गुरुः भारवान् । अर्चिष्मान् दीप्तिमान् । अन्तर्गतप्रभः मध्यभागेऽपि प्रभातरलः । प्रभया स्वीयया संनिकृष्टमनुलिम्पतीति प्रभानुलेपी । चेति समुच्चये ।

श्रीमूला.

**मन्दरागप्रभः सशर्करः पुष्पच्छिद्रः खण्डो दुर्विद्धो लेखाकीर्ण इति दोषाः ॥**

सप्त मणिदोषानाह— मन्देत्यादि । मन्दरागप्रभः मन्दरागः वर्णरहितः, मन्दप्रभः द्युतिहीनः । सशर्करः पुलकितः । पुष्पच्छिद्रः बिन्दुगर्भः । खण्डः दीर्णः । दुर्विद्धः अस्थानविद्धः । लेखाकीर्णः राजियुक्तः । इति दोषाः । अत्र भट्टस्वामिना बार्हस्पत्यौ द्वौ श्लोकावुदाहृतौ— 'पुष्पच्छिद्रोऽथ दुर्विद्धः शर्करानुगतस्तथा । मन्दरागप्रभश्चैव जातिभेदाः प्रकीर्तिताः ॥ प्रान्तश्च वामवृत्तश्च वलितास्यः (क)शान्वितः । कृष्णिकश्च विशीर्णश्च न हि शास्त्रे प्रशस्यते ॥' इति ।

श्रीमूला.

**विमलकः सस्यकोऽञ्जनमूलकः पित्तकः सुलभको लोहिताक्षो मृगाश्मको ज्योतीरसको मैलेयक आहिच्छत्रकः कूर्पः प्रतिकूर्पः सुगन्धिकूर्पः क्षीरपकः शुक्तिचूर्णकः शिलाप्रवालकः पुलकः शुक्रपुलक इत्यन्तरजातयः ॥**

अथावान्तरजातिमणीनाह— विमलक इति । विमलकः श्वेतहरितः, सस्यकः नीलः, अञ्जनमूलकः नीलश्यामः, पित्तकः गोपित्तवर्णः, सुलभकः शुक्लः, लोहिताक्षः पर्यन्तरक्तः कृष्णमध्यः, मृगाश्मकः सितासितः, ज्योतीरसकः शुक्ललोहितः, मैलेयकः हिङ्गुलकच्छायः, आहिच्छत्रकः मन्दरागः, कूर्पः शर्करिलः, प्रतिकूर्पः सिक्थकरुचिः, सुगन्धिकूर्पः मुद्गवर्णः, क्षीरपकः दुग्धवर्णः, शुक्तिचूर्णकः नैकवर्णः, शिलाप्रवालकः प्रवालवर्णः, पुलकः कृष्णगर्भः, शुक्रपुलकः शुक्लगर्भः इत्यन्तरजातयः अनेन प्रकारेण अष्टादशावान्तरजातिमणयो बोद्धव्याः । ते एते प्रशस्ताः ।

श्रीमूला.

**शेषाः काचमणयः ॥**

अप्रशस्तानाह— शेषा इति । शेषाः उक्तेभ्योऽन्ये काचमणयः अधममणयः । अत्र संग्रहश्लोकं पठन्ति—

" पञ्चविंशतिभेदानां गुणास्त्वेकादश स्मृताः । सप्त दोषा मणीनां तु दशाष्टौ च विजातयः ॥ ' इति । श्रीमूला.

**सभाराष्ट्रकं मध्यमराष्ट्रकं काश्तीरराष्ट्रकं श्रीकटनकं मणिमन्तकमिन्द्रवानकं च वज्रम् ॥**

अथ वज्रमणेराकरयोनिवर्णगुणदोषा वर्ण्यन्ते । तत्राऽऽकरानाह— सभेत्यादि । वज्रं हीरः सभाराष्ट्रकं वैदर्भकम्, मध्यमराष्ट्रकं कोसलोत्पन्नम्, काश्तीरराष्ट्रकं काश्तीरराष्ट्रजम्, श्रीकटनकं श्रीकटनपर्वतभवम्, मणिमन्तकम् उत्तरापथवर्तिमणिमन्तकाख्यपर्वतजम्, इन्द्रवानकं कालिङ्गकम् । चः समुच्चये । एवं सभाराष्ट्रादयो वज्रस्य षडाकारा उक्ताः । एतच्चोपलक्षणम्, अन्यत्रापि वज्रस्योत्पत्तिदर्शनादिति ज्ञेयम् । श्रीमूला.

**खनिः स्रोतः प्रकीर्णकं च योनयः ॥**

वज्रस्य त्रिविधां योनिमाह— खनिरिति । खनिः खन्यमानो भूप्रदेशविशेषः । स्रोतः जलप्रवाहविशेषः । प्रकीर्णकं गजदन्तमूलादि । श्रीमूला.

**मार्जाराक्षकं च शिरीषपुष्पकं गोमूत्रकं गोमेदकं शुद्धस्फटिकं मूलाटीपुष्पकवर्णं मणिवर्णानामन्यतमवर्णमिति वज्रवर्णाः ॥**

वज्रस्य वर्णानाह— मार्जारेत्यादि । मार्जाराक्षकं मार्जारनेत्रच्छायम् । शेषं व्याख्यातचरम् । मार्जारनेत्रादिपुष्पकान्तसवर्णत्वं प्रायिकत्वात् पृथगभिधाय विरलदर्शनं मण्यन्तरसाधारणं वर्णान्तरमतिदिशति— मणिवर्णानामन्यतमवर्णमिति । इति वज्रवर्णाः । श्रीमूला.

**स्थूलं स्निग्धं गुरु प्रहारसहं समकोटिकं भाजनलेखि तर्कुभ्रामि भ्राजिष्णु च प्रशस्तम् ॥**

अष्टौ गुणानाह—स्थूलमिति । स्थूलादित्रिकमवगतार्थम् । प्रहारसहं शिलापुत्रकप्रहारेणाप्यभेद्यम् । समकोटिकं समाः तुल्याः कोटयः यस्य तत् । भाजनलेखि सोदकमसृणकांस्यपात्रीनिवेशितं वज्रं परिचाल्यमानं सत् पात्रे लेखोत्पादकम् । तर्कुभ्रामि— तर्कुः भ्रमियन्त्रम्, तद्वत् भ्रमणशीलम् । भ्राजिष्णु अतिमात्रदीप्तिकम् । चः समुच्चये । प्रशस्तं उत्तमं वज्रम् । श्लोकाश्चात्र भवन्ति— ' तर्कुभ्रामि स्निग्धं समकोटि महद्गुरु प्रहारसहम् । तमति च भाजनलेखि प्रशस्ततमं वज्रमुद्दिष्टम् ॥ क्षिप्तमग्नौ च यद्वज्रं वर्णान्यत्वं न गच्छति । शाणे वा घृष्यमाणं च निकषे वा विरज्यते ॥ वृत्तिकैराहतं यच्च विपत्तिं नैव गच्छति । रागवर्णसमायुक्तं बही रश्मिसमन्वितम् ॥ गुरुस्नेहयुतं चैव गुणैरेभिः समन्वितम् । एतद्विशिष्टं वज्राणां रत्नाधिपतिकीर्तितम् ॥ नष्टकोणं निरश्रीकं पार्श्वयातं च वर्जयेत् ॥ ' इति । श्रीमूला.

**नष्टकोणं निरश्रि पार्श्वापवृत्तं चाप्रशस्तम् ॥**

अधमं त्रिविधमाह— नष्टेत्यादि । नष्टकोणं शिखरशून्यम् । निरश्रि अश्रिरहितम् । पार्श्वापवृत्तं एकपार्श्वनिःसृतम् । अन्ये तु दोषाः यथोक्तगुणवैपरीत्यात्मानः स्वयमूहनीयाः । यदाहुः— ' विरूपान् मन्दरागांश्च निष्प्रभान् क्रूरदर्शनान् । दग्धांश्चोद्गारिणश्चैव वज्राञ्छत्रुषु निक्षिपेत् ॥ ' इति । श्रीमूला.

**प्रवालकमालकन्दकं वैवर्णिकं च रक्तं पद्मरागं च करटगर्भिणिकावर्जमिति ॥**

अथ प्रवालमाह— प्रवालकमिति । प्रवालकम् आलकन्दकम्— अलकन्दो नाम बर्बरकूले समुद्रैकदेशः, तत्र भवम्, वैवर्णिकम्— विवर्णो नाम यवनद्वीपे समुद्रैकदेशः, तत्रोत्पन्नं चेति द्वियोनिकम् । रक्तं पद्मरागं चेति द्विवर्णकम् । करटगर्भिणिकावर्जमिति द्विदोषत्ववचनम् । करटं क्रिमिजग्धं गर्भिणिकां स्थूलमध्यं च वर्जयित्वा अन्यत् प्रवालकमुपादेयमित्यर्थः । इतिशब्दः समाप्तौ । रत्नपरीक्षा समाप्तेत्यर्थः । श्रीमूला.

**चन्दनम्— सातनं रक्तं भूमिगन्धि । गोशीर्षकं कालताम्रं मत्स्यगन्धि । हरिचन्दनं शुकपत्रवर्णमाम्रगन्धि । तार्णसं च । ग्रामेरुकं रक्तं रक्तकालं वा बस्तमूत्रगन्धि । दैवसभेयं रक्तं पद्मगन्धि । जावकं च । जोङ्गकं रक्तं रक्तकालं वा स्निग्धम् । तौरूपं च । मालेयकं पाण्डुरक्तम् । कुचन्दनं कालवर्णकं गोमूत्रगन्धि । कालपर्वतकं रूक्षमगुरुकालं रक्तं रक्तकालं वा । कोशाकार-**

**पर्वतकं कालं कालचित्रं वा। शीतोदकीयं पद्माभं कालस्निग्धं वा । नागपर्वतकं रूक्षं शैवलवर्णं वा। शाकलं कपिलमिति ॥**

अथ सारेषु निरूपणीयेषु प्रथमं सारमुख्यं चन्दनमाह —चन्दनमिति। चन्दनमधिक्रियते इत्यर्थः। तस्य सातनादयः उत्पत्तिभूमयः षोडश, रक्तादयो वर्णाः नव, भूमिगन्धादयो गन्धाः षट्, लघुत्वादयो गुणाः एकादश । ते एतेऽभिधीयन्ते । सातनमिति । सातनं सातनदेशभवम्, रक्तं रक्तवर्णम्, भूमिगन्धि नवसिक्तभूसमानगन्धम्। गोशीर्षकं तद्देशजम्, कालताम्रं कृष्णशोणम्, मत्स्यगन्धि मत्स्यतुल्यगन्धम् । रक्तकरवीरतुल्यगन्धीति स्वामी । हरिचन्दनं हरिदेशजं चन्दनम्, शुकपत्रवर्णम्, आम्रगन्धि चूतफलतुल्यगन्धि । तार्णसं च तृणसाख्यनदीनिकटभवं चन्दनम् । चकारात् शुकपत्रवर्णम् आम्रगन्धि च । ग्रामेरुकं ग्रामेरुप्रभम्, रक्तं रक्तकालं वा, बस्तमूत्रगन्धि अजमूत्रगन्धि । बस्तशब्दः कस्तूरीमृगवचन इत्यन्ये। दैवसभेयं देवसभायां भवम्, रक्तम्, पद्मगन्धि । सातनादयस्त्रयोदश मलयैकदेशाः । जावकं च जावकदेशभवं च । रक्तं पद्मगन्धि चेत्यनुषज्यते । जोङ्गकं रक्तं रक्तकालं वा, स्निग्धं स्नेहगुणयुक्तम् । गन्धान्तरानुक्त्याऽत्रापि पद्मगन्धीति संबध्यते । तौरूपं च । जोङ्गकमिव रक्तं रक्तकालं वा स्निग्धं पद्मगन्धि चेत्यर्थः । जावकादित्रिकं कामरूपजं बोद्धव्यम् । मालेयकं पाण्डुरक्तं पूर्ववत् पद्मगन्धि च । एवं च दैवसभेयादिमालेयकान्तपञ्चकस्य पद्मगन्धित्वमुक्तं भवति । कुचन्दनं कालवर्णकं कृष्णम्, गोमूत्रगन्धि । गोमूत्रं हि परिणामे सुगन्धि । अपरे तु 'गोमूत्रं नीलोत्पलमिति संप्रदायः' इत्याहुः । कालपर्वतकं तद्देशभवम्, रूक्षं खरम्, अगुरुकालम् अगुरुवत् कृष्णम्, रक्तं रक्तकालं वा कृष्णारुणं वा। पूर्वोक्तन्यायेनात्र गोमूत्रगन्धीति संबन्धनीयम् । केषुचिदादर्शेषु 'कुचन्दनं कालरूक्षमगुरुकालं रक्तं रक्तकालं वा कालपर्वतकमनवद्यवर्णं वा' इति पाठो दृश्यते । स गन्धानुक्तेरशुद्धः प्रतिभाति । तत्रानवद्यवर्णमित्यस्य कुङ्कुमवर्णमित्यर्थः । शेषं तु सुबोधम्। कोशकारपर्वतकं तदाख्यदेशभवम्, कालम्, कालचित्रं वा कृष्णकर्बुरं वा । शीतोदकीयं शीतोदकदेशभवम्, पद्माभं पद्मवर्णम्, कालस्निग्धं वा । नागपर्वतकं तदाख्यदेशजम्, रूक्षं खरम्, शैवलवर्णं जलनीलीवर्णम् । शाकलं शाकलदेशोद्भवम्, कपिलं कडारवर्णम् । इह कालपर्वतकादीनां शाकलान्तानां कुचन्दनवत् गोमूत्रगन्धित्वं द्रष्टव्यम् । श्रीमूला.

**लघु स्निग्धमश्यानं सर्पिःस्नेहलेपि गन्धसुखं त्वगनुसार्यनुल्बणमविराग्युष्णसहं दाहग्राहि सुखस्पर्शनमिति चन्दनगुणाः ॥**

एवं जातिवर्णगन्धा उक्ताः, गुणानाह— लघ्वित्यादि। लघु अभारिकम्, स्निग्धं मसृणम्, अश्यानं चिरशोषि, सर्पिःस्नेहलेपि घृतमिव देहं स्नेहेन लिम्पति यत् तथाभूतम्, गन्धसुखं गन्धेन मोदजनकम्, त्वगनुसारि त्वचमनुप्रविश्य सुखकरम्, अनुल्बणं सूक्ष्मत्वादस्फुटम्, अविरागि द्रव्यान्तरमिश्रणे स्वेदाद्युपघाते चाविकृतवर्णगन्धम्, उष्णसहं स्वलिप्ताङ्गस्योष्णसंवेदनप्रतिबन्धि, दाहग्राहि संतापहरम्, सुखस्पर्शनं स्पर्शे नवनीतवत् सुखावहम् इति चन्दनगुणाः अनेन प्रकारेणैकादश चन्दनस्य गुणा विज्ञेयाः । अत्र संग्रहश्लोकं पठन्ति— 'षड् गन्धा नवधा वर्णो गुणाश्चैकादश स्मृताः । चन्दनानां समासेन षोडशोत्पत्तिभूमयः ॥' इति । श्रीमूला.

**अगुरु— जोङ्गकं कालं कालचित्रं मण्डलचित्रं वा । श्यामं दोङ्गकम् । पारसमुद्रकं चित्ररूपम् । उशीरगन्धि नवमालिकागन्धि वेति ॥**

अथागुरुजातिवर्णगन्धगुणानाह— अगुर्वित्यादि । अगुर्वित्यधिकारः । जोङ्गकं तदाख्यमगुरु त्रिविधम्— कालं कृष्णम्, कालचित्रं कृष्णगौररेखामिश्रम्, मण्डलचित्रं कृष्णगौरबिन्दुचित्रमिति स्वामी । वाशब्दः समुच्चये । दोङ्गकं तदाख्यं श्यामम् । जोङ्गकदोङ्गके कामरूपभवे । पारसमुद्रकं सिंहलद्वीपोत्पन्नम्, चित्ररूपं नानावर्णम् । गन्धमाह— उशीरगन्धि नवमालिकागन्धि वेति । गन्धद्वैविध्यमनेनोक्तम् । श्रीमूला.

**गुरु स्निग्धं पेशलगन्धि निर्हार्यग्निसहमसंप्लुतधूमं समगन्धं विमर्दसहमित्यगुरुगुणाः ॥**

अगुरुणो जातिवर्णगन्धानुक्त्वा गुणानाह— गुर्विति । गुरु भारिकम्, स्निग्धम्, अपरुषम्, पेशलगन्धि हृद्यगन्धम्, निर्हारि दूरप्रसृत्वरगन्धम्, अग्निसहम् अग्निना क्षिप्रं न दह्यते, असंप्लुतधूमम् अव्याकुलधूमम्, समगन्धं दह्यमानम् आदिमध्यान्तेष्वेकरूपगन्धम्, विमर्दसहं वस्त्रादिनिर्मार्जनेऽप्यक्षीयमाणगन्धमित्यर्थः । इति अगुरुगुणाः । तदेवम्— 'उत्पत्तिभूमयस्तिस्रः कृष्णो वर्णः प्रधानतः । द्वावेवागुरुणो गन्धौ गुणास्तस्याष्ट कीर्तिताः ॥' इति संग्रहश्लोकः । श्रीमूला.

**तैलपर्णिकम्— अशोकग्रामिकं मांसवर्णं पद्मगन्धि । जोङ्गकं रक्तपीतकमुत्पलगन्धि गोमूत्रगन्धि वा । ग्रामेरुकं स्निग्धं गोमूत्रगन्धि । सौवर्णकुड्यकं रक्तपीतं मातुलुङ्गगन्धि । पूर्णकद्वीपकं पद्मगन्धि नवनीतगन्धि वेति ॥**

अथ तैलपर्णिकस्य योन्यादिकमाह— तैलपर्णिकमित्यादि । तैलपर्णिकमित्यधिकारः । अशोकग्रामिकम् अशोकग्रामे कामरूपवर्तिनि भवम्, मांसवर्णं हरिणमांसपेशीवर्णमिति स्वामी, पद्मगन्धि । जोङ्गकं कामरूपस्थे जोङ्गाख्ये प्रदेशे भवम्, रक्तपीतकं मनःशिलावर्णम्, उत्पलगन्धि गोमूत्रगन्धि वा भवति । ग्रामेरुकं कामरूपवर्तिनि ग्रामेरुसंज्ञे ग्रामे भवम्, स्निग्धम्, गोमूत्रगन्धि, जोङ्गकवत् रक्तपीतवर्णम् । सौवर्णकुड्यकम्— सुवर्णकुड्यो नाम ग्रामः कामरूपगः, तत्र जातम्, रक्तपीतम्, मातुलुङ्गगन्धि । पूर्णकद्वीपकम्— पूर्णकद्वीपः कामरूपेष्वेव, तत्र भवम्, पद्मगन्धि नवनीतगन्धि वा, वर्णतस्तु रक्तपीतम् । श्रीमूला.

**भद्रश्रीयम्— पारलौहित्यकं जातीवर्णम् । आन्तरवत्यमुशीरवर्णम् । उभयं कुष्ठगन्धि चेति ॥**

भद्रश्रीयस्य योन्यादिकमाह— भद्रश्रीयमित्यादि । भद्रश्रीयं चन्दनविशेषः । भद्रश्रीयपदार्थे 'केचित् कर्पूरमित्याहुस्तक्कोलमिति चापरे । श्रीवासकं तथा केचित् केचिल्लोहितचन्दनम् ॥' इति विप्रतिपत्तयः स्वामिनोक्ताः । पारलौहित्यकं कामरूपे लौहित्याख्यनदपारभवम्, जातीवर्णं जातीकुसुमवर्णम् । आन्तरवत्यं कामरूपेष्वेवान्तरवत्याख्यनदीतीरे जातम्, उशीरवर्णं लामज्जच्छायम् । उभयं पारलौहित्यकादिद्विकं कुष्ठगन्धि च पारिभाव्याख्यौषधगन्धि च । इतिशब्दः भद्रश्रीयनिरूपणसमाप्तौ । श्रीमूला.

**कालेयकः— स्वर्णभूमिजः स्निग्धपीतकः । औत्तरपर्वतको रक्तपीतकः । इति साराः ॥**

कालेयकस्य योन्यादिकमाह— कालेयक इति । कालेयको नाम काष्ठविशेषः, स स्वर्णभूमिजः— सुवर्णभूमिः मर्मदेशः, तत्रोत्पन्नः, स्निग्धपीतकः मसृणः पीतवर्णश्च । औत्तरपर्वतकः हैमवतः रक्तपीतकः मनःशिलावर्णः । इति उक्तैः प्रकारैः साराः चन्दनादिकालेयकान्ताः सारपदार्थाः निरूपिता इत्यर्थः । श्रीमूला.

**पिण्डक्वाथधूमसहमविरागि योगानुविधायि च । चन्दनागुरुवच्च तेषां गुणाः ॥**

अथ तैलपर्णिकादीनां त्रयाणां गुणमाह— पिण्डेत्यादि । पिण्डक्वाथधूमसहम्— पिण्डं पेषणादिना पिण्डीकरणम्, क्वाथं अग्निना क्वथनम्, धूमं धूपनं च सहते इति तथाभूतम् । पेषणक्वथनधूपनेषु अविसंवादिगन्धमित्यर्थः । अविरागि द्रव्यान्तरमिश्रणेन कालान्तरेण वा निर्विकारस्वभावं योगानुविधायि च गन्धयुक्त्यनुकूलं च । तैलपर्णिकादित्रिकं तु विशेष्यं गम्यम् । उक्ताः पिण्डसहत्वादयो न केवलं तैलपर्णिकादीनां गुणाः, किंतु चन्दनागुरुवच्च तेषां गुणा भवन्तीत्याह— चन्दनागुरुवच्च तेषां गुणा इति । चन्दनवत् गुणाः एकादश लघुत्वादयः, अगुरुवत् गुणा अष्टौ गुरुत्वादयः । श्रीमूला.

**कान्तनावकं प्रैयकं चौत्तरपर्वतकं चर्म । कान्तनावकं मयूरग्रीवाभम् । प्रैयकं नीलपीतं श्वेतं लेखाबिन्दुचित्रम् । तदुभयमष्टाङ्गुलायामम् ॥**

अथ फल्गुषु निरूपणीयेषु प्रथमं पञ्चदशप्रकारा चर्मजातिर्निरूप्यते— 'कान्तनावकम्' इत्यादिना 'इति चर्मजातयः' इत्यन्तेन । तत्राऽऽदौ प्रकारद्वयमुद्दिशति— कान्त-

नावकमिति। कान्तनावकं तदाख्यदेशभवं प्रैयकं च तदाख्यदेशभवं च औत्तरपर्वतकं हैमवतं चर्म। एवं च कान्तनावकप्रैयकाख्यौ हिमवत एवैकदेशौ बोद्धव्यौ। तत्र कान्तनावकं मयूरग्रीवाभमित्येकविधम्। प्रैयकं तु नीलपीतम्, श्वेतम्, लेखाबिन्दुचित्रं लेखाभिः कृतवैचित्र्यं बिन्दुभिः कृतवैचित्र्यं चेति चतुर्विधम्। तदुभयं कान्तनावकं प्रैयकं च अष्टाङ्गुलायामम्। श्रीमूला.

**बिसी महाबिसी च द्वादशग्रामीये। अव्यक्तरूपा दुहिलिका चित्रा वा बिसी। परुषा श्वेतप्राया महाबिसी। द्वादशाङ्गुलायाममुभयम्॥**

बिसी महाबिसी च इत्येते चर्मणी द्वादशग्रामीये हिमालयस्थेषु द्वादशम्लेच्छग्रामेषु भवे। तत्र बिस्याः स्वरूपमाह— अव्यक्तेत्यादि। बिसी अव्यक्तरूपा सरटविशेषवत् बहुवर्णप्रतिभासयोगादनिर्धारितैकवर्णा, दुहिलिका लोमशा। 'दुहिलितिका' इति क्वापि पाठः। चित्रा वा भवति। महाबिसी परुषा खरस्पर्शा, श्वेतप्राया धवलवर्णभूयिष्ठा। उभयं बिसी महाबिसीति द्वयम् द्वादशाङ्गुलायामम्। श्रीमूला.

**श्यामिका कालिका कदली चन्द्रोत्तरा शाकुला चाऽऽरोहजाः। कपिला बिन्दुचित्रा वा श्यामिका। कालिका कपिला कपोतवर्णा वा। तदुभयमष्टाङ्गुलायामम्। परुषा कदली हस्तायता। सैवचन्द्रचित्रा चन्द्रोत्तरा। कदलीत्रिभागा शाकुला कोठमण्डलचित्रा कृतकर्णिकाजिनचित्रा चेति॥**

आरोहाख्यहिमवत्प्रदेशभवान् श्यामिकाकालिकादीन् पञ्च भेदान् उद्दिशति— श्यामिकेत्यादि। श्यामिका कपिला कडारवर्णा बिन्दुचित्रा वा भवति। कालिका कपिला कपोतवर्णा वा भवति। तदुभयं श्यामिकादिद्वयम् अष्टाङ्गुलायामम्। कदली परुषा कर्कशस्पर्शा, हस्तायता चतुर्विंशत्यङ्गुलदीर्घा। वर्णस्त्वस्याः कालिकावत्। सैव कदली चन्द्रचित्रा चन्द्राकारमण्डलयुक्ता चन्द्रोत्तरा नाम भवति। प्रमाणं त्वस्याः कदलीवत्। शाकुला कदलीत्रिभागा कदल्यपेक्षया त्रिगुणपरिमाणा त्रिहस्तायामेत्यर्थ इत्येके। कदलीप्रमाणतृतीयांशप्रमाणा अष्टाङ्गुलायतेत्यर्थ' इत्यपरे। कोठमण्डलचित्रा रक्तमण्डलयुक्ता, कृतकर्णिकाजिनचित्रा कृतैः स्वभावकृतैः कर्णिकाजिनैः चर्मग्रन्थिभिः चित्रा जनितशोभा। चशब्दः समुच्चये। इतिशब्द आरोहजसमाप्तौ। श्रीमूला.

**सामूरं चीनसी सामूली च बाह्लवेयाः। षट्त्रिंशदङ्गुलमञ्जनवर्णं सामूरम्। चीनसी रक्तकाली पाण्डुकाली वा। सामूली गोधूमवर्णेति॥**

त्रिप्रकारां बाह्लवेयजातिमाह— सामूरमित्यादि। बाह्लवः हिमवत एकदेशः, तत्र भवाश्चर्मजातयो बाह्लवेयाः। ढक्प्रत्ययान्तश्चायम्। षट्त्रिंशदित्यादि। चीनसीसामूल्योः प्रमाणं सामूरवत् षट्त्रिंशदङ्गुलं द्रष्टव्यम्। इतिशब्दः समाप्तौ। श्रीमूला.

**सातिना नलतूला वृत्तपुच्छा च औद्राः। सातिना कृष्णा। नलतूला नलतूलवर्णा। कपिला वृत्तपुच्छा च। इति चर्मजातयः॥**

इत्थं मूषिकादिस्थलचरचर्माण्यभिधाय जलचरचर्माण्याह— सातिनेति। सातिना नलतूला वृत्तपुच्छा चेति त्रिविधाः औद्राः। उद्रः जलमार्जारः, तस्येमे त्वग्भेदा इत्यर्थः। सातिना कृष्णा कृष्णवर्णा। नलतूला नलतूलवर्णा— नलतूलः नलाख्यतृणविशेषस्य पक्ष्म, तस्येव वर्णो यस्याः सा। वृत्तपुच्छा कपिला कडारवर्णा। इति चर्मजातयः उक्तेन प्रकारेण चर्मजातयः अनुक्ता अपि यथाप्रसिद्धि बोद्धव्या इत्यर्थः। श्रीमूला.

**चर्मणां मृदु स्निग्धं बहुलरोम च श्रेष्ठम्॥**

चर्मगुणांस्त्रीनाह— चर्मणामित्यादि। चर्मणामिति निर्धारणे षष्ठी। शेषं स्पष्टम्। श्रीमूला.

**शुद्धं शुद्धरक्तं पक्षरक्तं चाऽऽविकम्। खचितं वानचित्रं खण्डसंघात्यं तन्तुविच्छिन्नं च॥**

अथाऽऽविकं सप्तदशप्रकारं निरूपयिष्यन् प्रथमं रागभेदेन त्रिविधमाह— शुद्धमिति। अवयः मेषाः नाम लोमोपकारिणः पशवः, तल्लोमभवमाविकम्। अधिकारश्चायम्। शुद्धं शुक्लम्, शुद्धरक्तं सर्वारुणम्, पक्षरक्तं च एकदेशारुणं च भवति। क्रियाभेदेन चतुर्विधमाह—

खचितमिति । खचितं सूचिवानकर्मनिष्पादितम्, वानचित्रं वानकर्मणा कृतवैचित्र्यम्, खण्डसंघात्यं खचितानाम् उतानां वा बहूनां खण्डानां संघातेन निष्पादितम्, तन्तुविच्छिन्नं च अनुतविसृष्टैस्तन्तुभिर्मध्ये कृतविच्छेदं जालकोपयोगि च । श्रीमूला.

**कम्बलः केचलकः कलमितिका सौमितिका तुरगास्तरणं वर्णकं तलिच्छकं वारवाणः परिस्तोमः समन्तभद्रकं चाऽऽविकम् ॥**

संस्थानकृतान् दश भेदानाह– कम्बल इति । कम्बलः प्रसिद्धः । केचलकः वन्यशिरस्त्राणम् । 'कौचपकः' इति अपपाठः । कलमितिका गजोपर्यास्तरणम् । 'कुलमितिका' इति क्वचित् पाठः । सौमितिका कलमितिकैव कृष्णवर्णा गजपर्याणोपर्यास्तरणम् । तुरगास्तरणं प्रसिद्धम् । वर्णकं वर्णकम्बलः । तलिच्छकं कम्बलविशेषः । 'तल्लिकथकम्' इत्यपि पाठः । वारवाणः कञ्चुकः । परिस्तोमः कम्बलभेदः विस्तारचित्रः, यो विस्तृतवदवभासते निर्माणवैचित्र्यात् स इति व्याचक्षते । कुथ इति त्वेके । समन्तभद्रकं संनाहपट्टः । गजादिजघनत्राणमित्यपरे । चशब्दः समुच्चये । इहाऽऽविकाधिकारे पुनः 'आविकम्' इति वचनं वैचित्र्यार्थम् । श्रीमूला.

**पिच्छिलमार्द्रमिव च सूक्ष्मं मृदु च श्रेष्ठम् ॥**

गुणानाह– पिच्छिलमिति । पिच्छिलमिव श्लक्ष्णमिव भासमानम्, आर्द्रमिव च भासमानम्, सूक्ष्मम्, मृदु च श्रेष्ठं भवति । श्रीमूला.

**अष्टप्लोतिसंघात्या कृष्णा भिङ्गिसी वर्षवारणम्, अपसारक इति नैपालकम् ॥**

अष्टप्लोतिसंघात्या– प्रोतयः एव प्लोतयः खण्डाः, तत्संघातनिष्पन्ना, सा कृष्णा कृष्णवर्णा, वर्षवारणं वृष्टिरोधसाधनभूता च भिङ्गिसी तदाख्यः कम्बलभेद एकः । अपसारकः काण्डपटः इत्यपरः । अनयोर्भेदयोर्गुणात् प्रागनभिधानं गुणासंबन्धद्योतनार्थम् । इति नैपालकम् अनेन प्रकारेण नेपालदेशभवम् आविकं निरूपितमित्यर्थः । नेपालग्रहणाच्च वक्ष्यमाणं मृगरोमादिकमन्यदेशजं सूचितम् । श्रीमूला.

**संपुटिका चतुरश्रिका लम्बरा कटवानकं प्रावरकः सत्तलिकेति मृगरोम ॥**

षड्विधं मृगरोमजमाह– संपुटिकेति । संपुटिका जङ्घात्राणं सुक्थणाभिधानमिति क्वचिट्टीकादर्शे लिखितम् । सन्थनमित्यन्यत्र लिखितं दृश्यते । चतुरश्रिका दशारहिता नवाङ्गुलिचिह्नितकोणा । लम्बरा प्रच्छदपटविशेषः । कटवानकं स एव स्थूलसूत्रः 'भाष्यकः' इति तद्देशीयानां प्रसिद्धः इति स्वामी । प्रावरकः पूर्वोक्त एवान्यतरतोदशः 'रोमावर्तकः' इति तद्देशप्रसिद्ध इति स्वामी । सत्तलिका तूलिकाख्य आस्तरणविशेष इति स्वामी । इति मृगरोम अनेन प्रकारेण मृगरोमजमुक्तम् । श्रीमूला.

**वाङ्गकं श्वेतं स्निग्धं दुकूलम्, पौण्ड्रकं श्यामं मणिस्निग्धम्, सौवर्णकुड्यकं सूर्यवर्णम् । मणिस्निग्धोदकवानं चतुरश्रवानं व्यामिश्रवानं च ॥**

अथ त्रिप्रकारं दुकूलमाह– वाङ्गकमित्यादि । वाङ्गकं वङ्गदेशभवं दुकूलं श्वेतम्, स्निग्धं मसृणम् । पौण्ड्रकं पुण्ड्रदेशभवं श्यामम्, मणिस्निग्धं मरकतस्निग्धम् । सौवर्णकुड्यकं कामरूपस्थे सुवर्णकुड्याख्ये प्रदेशे भवं सूर्यवर्णम् उद्यदादित्यद्युति । दुकूलस्य वानमपि त्रिप्रकारमाह– मणीत्यादि । मणिस्निग्धोदकवानं नाम दुकूलस्य साधनद्रव्यं जलेनाऽऽर्द्रीकृत्य मणिबन्धेनावघृष्य वानम् । चतुरश्रवानं वर्णान्तरासंसृष्टं शुद्धं वानम् । व्यामिश्रवानं कार्पासकतन्तुमिश्रितैः कौशेयकतन्तुभिर्वानम्, अथवा वर्णान्तरसंसृष्टवानम् । चः समुच्चये । श्रीमूला.

**एतेषामेकांशुकमध्यर्धद्वित्रिचतुरंशुकमिति ॥**

एतेषां दुकूलानां मध्ये एकांशुकं तानवानयोरेकतन्तुकम्, अर्थात् प्रशस्तम्, सूक्ष्मत्वात् । अध्यर्धद्वित्रिचतुरंशुकम् अध्यर्धांशुकं द्व्यंशुकं त्र्यंशुकं चतुरंशुकं च, अर्थात् अपकृष्टमुत्तरोत्तरम्, स्थूलत्वात् । तत्र यदेकगुणं तन्यते द्विगुणमूयते, द्विगुणं वा तन्यते एकगुणमूयते तत् अध्यर्धांशुकम् । यत् द्विगुणं तन्यते द्विगुणमूयते तत् द्व्यंशुकम् । यत् त्रिगुणं तन्यते त्रिगुणमूयते तत् त्र्यंशुकम् । यच्चतुर्गुणं तन्यते चतुर्गुणमूयते तच्चतुरंशुकम् । इतिशब्दो दुकूलनिरूपणसमाप्तौ । श्रीमूला.

**तेन काशिकं पौण्ड्रकं च क्षौमं व्याख्यातम् ॥**

तेन दुकूलगताध्यर्धांशुकत्वादिनिरूपणेन काशिकं काशिदेशभवं पौण्ड्रकं च पुण्ड्रदेशजं च क्षौमं व्याख्यातं क्षौममेव निरूपितम् । अध्यर्धांशुकद्व्यंशुकादिरूपं स्थूलं दुकूलमेव हि क्षौममिति व्यपदिश्यते इत्यभिप्रायः ।

श्रीमूला.

**मागधिका पौण्ड्रिका सौवर्णकुड्यका च पत्रोर्णाः । नागवृक्षो लिकुचो वकुलो वटश्च योनयः । पीतिका नागवृक्षिका, गोधूमवर्णा लैकुची, श्वेता वाकुली, शेषा नवनीतवर्णा ॥**

मगधपुण्ड्रकसुवर्णकुड्यकाख्यदेशत्रयभवां नागकेसरडहुमद्यगन्धन्यग्रोधाख्यवृक्षचतुष्टययोनिं पत्रोर्णामाह— मागधिकेति । पत्रोर्णाः वृक्षपत्रेषु क्रिमिलालाकृता ऊर्णाः पट्टसूत्रस्य योनयः । तासां योनिभेदनिमित्तं गुणभेदमाह— पीतकेत्यादि । नागवृक्षिका पीतिका नागवृक्षयोनिः पीतवर्णा । लैकुची लिकुचयोनिः । वाकुली वकुलयोनिः । शेषा वटयोनिः ।

श्रीमूला.

**तासां सौवर्णकुड्यका श्रेष्ठा । तया कौशेयं चीनपट्टाश्च चीनभूमिजा व्याख्याताः ॥**

मागधिकादीनां पत्रोर्णानां मध्ये श्रेष्ठामाह— तासामित्यादि । तयेति । तया पत्रोर्णया कौशेयं कोशकारभवं चीनभूमिजाश्चीनपट्टाश्च चीनदेशभवा वस्त्रविशेषाश्च व्याख्याताः योनितो वर्णतश्च निर्दिष्टाः । तेऽपि पत्रोर्णावत् नागवृक्षादियोनयः पीतकादिवर्णाश्चेत्यभिप्रायः ।

श्रीमूला.

**माधुरमापरान्तकं कालिङ्गकं काशिकं वाङ्गकं वात्सकं माहिषकं च कार्पासिकं श्रेष्ठमिति ॥**

कार्पासिकमाह— माधुरमिति । माधुरम्— मधुरा पाण्ड्यराजधानी, तया पाण्ड्यदेशलक्षणात् पाण्ड्यदेशजमित्यर्थः । आपरान्तकम्— अपरान्तः कोङ्कणदेशः, तत्प्रभवम् । कालिङ्गकं कलिङ्गभवम् । काशिकं काशिजम् । वाङ्गकं वङ्गजम् । वात्सकं वत्सविषयोद्भवम् । माहिषकम्— माहिष्मती कुन्तलदेशराजधानी, तया देशलक्षणात् तद्देशभवमित्यर्थः । यद्वा महिषकदेशोत्पन्नम् । चः समुच्चये । कार्पासिकं पाण्ड्यादिदेशसप्तकभवं कार्पासतन्तुजं वस्त्रं श्रेष्ठम् । इतिशब्दः फल्गुसमाप्तौ । इति फल्गुनिरूपणम् ।

श्रीमूला.

**अतः परेषां रत्नानां प्रमाणं मूल्यलक्षणम् ।**
**जातिं रूपं च जानीयान्निधानं नवकर्म च ॥**
**पुराणप्रतिसंस्कारं कर्मगुह्यमुपस्करान् ।**
**देशकालपरीभोगं हिंस्राणां च प्रतिक्रियाम् ॥**

अध्यायान्ते श्लोकावाह— अत इति, पुराणेत्यादि च । अतः अस्मादुक्तात् मौक्तिकादिकार्पासिकान्तात् सप्तदशकात् परेषाम् अन्येषां रत्नानां रत्नप्रभृतीनां प्रमाणं माषकाङ्गुलादिकं तुलामानपौतवदेशकालमानप्रकरणयोः ( कौ. २।१९, २० ) वक्ष्यमाणम्, मूल्यलक्षणं मूल्यं लक्षणं च । तत्र मूल्यम्— 'द्वे शते यद्धृतं रत्नं तण्डुलानां प्रमाणतः । शतद्वयं सहस्राणां तस्य मूल्यं प्रकीर्तितम् ॥' इत्युक्तरूपम् । लक्षणं प्राशस्त्यम्, यथा मौक्तिकानां स्थूलनिस्तलादि । अथवा लक्षणम्— 'क्षीरकुम्भे मणिः क्षिप्तो यो रञ्जयति तेजसा । शुक्लत्वं चोद्धृतो याति तं शुद्धमिति निर्दिशेत् ॥' इत्युक्तजातीयम् । जातिं मुक्तादीनां ताम्रपर्णिकत्वादिकम् । रूपं वर्णं षडश्रचतुरश्रादिकं वा । निधानं निधीयमानवस्त्वेकान्तगोपनानुकूलं निधानप्रकारम् । नवकर्म च आकरोद्धृतमात्रस्य शोधनवेधनघर्षणादिकम् । पुराणप्रतिसंस्कारं पुराणस्य असंभोगातिभोगादिभिर्विवर्णितस्य बन्धच्युतस्य श्लथबन्धस्य वा नवीकरणम् । यदाह— 'अतिभोगादसंभोगाद्धूमाग्निस्वेदघर्षणात् । भूम्यम्बुलवणैश्चापि मुक्तावर्णो विरज्यते ॥' इति । कर्मगुह्यं कर्मरहस्यं रत्नादीनां वर्णापचारणरञ्जनघर्षणादिकम् । उपस्करान् शाणादीनि रत्नादिकर्मोपकरणानि । देशकालपरीभोगमिति समाहारद्वन्द्वः । तत्र देशकालौ रत्नादीनामुत्पत्तिक्रयविक्रयानुकूलौ । परीभोगः उपयोगः शीतयोर्देशकालयोर्मृगरोमजमुपयोज्यम्, उष्णयोः कार्पासिकमित्येवंरूपः । हिंस्राणां क्षौमाद्युपघातकानां मूषिकादीनां प्रतिक्रियां मार्जारोत्सर्गादिना प्रतिविधानं कृमिमूषकादिजग्धानां वस्त्रादीनां सीवनादिना संस्करणं च जानीयात्, अर्थात् कोशाध्यक्षः ।

एषोऽत्र भट्टस्वामिनः सर्वसंग्रहः— ' मौक्तिकं मणयो वज्रं प्रवालं च समासतः । रत्नं चतुर्विधं प्रोक्तं साराः पञ्चविधा मताः ॥ चन्दनागुरुणी श्रेष्ठे मध्यमं तैलपर्णिकम् । भद्रश्रीयं च जानीयात् कालेयकमथेतरत् ॥ चर्माविमृगरोमाणि दुकूलं क्षौमजातयः । कार्पासिकं च पत्रोर्णे कौशेयं फल्गु चाष्टधा ॥ कुप्यं कुप्याद्युधाध्यक्षप्रोक्तमित्यत्र नोदितम् । मुक्ताफलाद्यशेषास्तु भेदाः सप्तदशोदिताः ॥ ' इति ।

श्रीमूला.

आकराणां कर्मान्तानां च प्रवर्तनम्

**[1]आकराध्यक्षः शुल्बधातुशास्त्ररसपाकमणिरागज्ञस्तज्ज्ञसखो वा तज्जातकर्मकरोपकरणसंपन्नः किट्टमूषाङ्गारभस्मलिङ्गं वाऽऽकरं भूतपूर्वमभूतपूर्वं वा भूमिप्रस्तररसधातुमत्यर्थवर्णगौरवमुग्रगन्धरसं परीक्षेत ॥**

' आकरकर्मान्तप्रवर्तनम् ' इति सूत्रम् । आकरेषु सुवर्णाद्युत्पत्तिस्थानेषु कर्मान्ताः तदुपलम्भानुकूलाः क्रियाः आकरकर्मान्ताः, तेषां प्रवर्तनम् अनुष्ठापनम् आकरकर्मान्तप्रवर्तनम्, तदिहाभिधीयते इति सूत्रार्थः । ' गुप्तपुत्रदारानाकरकर्मान्तेषु वासयेत् ' ( कौ. १।१३ ) इति पूर्वमुक्तम्, आकरकर्मान्तास्तु नोक्ताः । ते इदानीमुच्यन्ते इति संगतिः ।

आकराध्यक्ष इति । शुल्बधातुशास्त्ररसपाकमणिरागज्ञः— शुल्बशास्त्रं भूसिराविज्ञानं शाकलादि । अथवा शुल्बं ताम्रम्, तस्य ताम्ररजतहेमताः येनोपदिश्यन्ते तच्छुल्बशास्त्रम् । कनकपञ्चाशीक्रियावाद(?दः)शुल्बशास्त्रमिति स्वामी । धातुशास्त्रं धातुभ्यः सर्जिकागन्धकादियुक्त्या सत्त्वपातनोपदेशकं धातुकौटल्यादिशास्त्रम् । रसः रसबन्धविज्ञानं रसोपनिषदाख्यमिति स्वामी । पाकः कनकादीनां वर्णकोत्कर्षणाद्यनुकूलमग्निपचनकर्म । मणिरागः मणीनां वर्णभेदोत्पादनकर्म । एषु शुल्बशास्त्रादिषु ज्ञः कोविदः तज्ज्ञसखो वा शुल्बशास्त्राद्यभिज्ञसहायश्च, तज्जातकर्मकरोपकरणसंपन्नः तज्जातैः तन्नित्योद्योगिभिः कर्मकरैः उपकरणैश्च खनित्रभस्त्रासंदंशशाणयन्त्रादिभिः संपन्नः उपेतः आकराध्यक्षः किट्टमूषाङ्गारभस्मलिङ्गम्— किट्टं लोहमलम्, मूषा आवर्तनभाण्डम्, अङ्गारः भस्म च लिङ्गं भूतपूर्वत्वचिह्नं यस्य तं तथाभूतम्, भूतपूर्वे पूर्वप्रवृत्तविच्छिन्नम् आकरं परीक्षेत उक्तलिङ्गदर्शनेन जानीयात् । भूमिप्रस्तररसधातुं— भूमिः मृत्तिका, प्रस्तरः पाषाणः, रसः सलिलपारतादिः, भूमिप्रस्तररसात्मकाः धातवः सत्त्वप्रकृतयः यस्मिन् तं भूमिधातुकं प्रस्तरधातुकं रसधातुकं चेत्यर्थः, अत्यर्थवर्णगौरवं वर्णोत्कर्षयुक्तं भारोत्कर्षयुक्तं च, उग्रगन्धरसं तीव्रगन्धयुक्तं तीव्ररसयुक्तं च अभूतपूर्वम् आकरं वा परीक्षेत नवमाकरं च परीक्षेत । किमाकरगता धातवः उत्कृष्टसत्त्वाः ? उतापकृष्टसत्त्वाः ? आहो मध्यमसत्त्वाः ? इति तदीयवर्णगुरुत्वगन्धरसानां दर्शनतोलनाघ्राणास्वादनैर्निश्चिनुयादित्यभिप्रायः ।

श्रीमूला.

**पर्वतानामभिज्ञातोद्देशानां बिलगुहोपत्यकालयनगूढखातेष्वन्तःप्रस्यन्दिनो जम्बूचूततालफलपक्वहरिद्राभेदहरितालक्षौद्रहिङ्गुलकपुण्डरीकशुकमयूरपत्रवर्णाः सवर्णोदकौषधिपर्यन्ताश्चिक्कणा विशदा भारिकाश्च रसाः काञ्चनिकाः ॥**

भूमिप्रस्तररसधातुषु रसः परनिर्दिष्टोऽप्यव्यभिचरितफलरूपसुवर्णयोनित्वेन महाफलत्वादल्पायासत्वाच्चाभ्यर्हित इति कृत्वा तमेव पञ्चप्रकारं प्रथमं निरूपयति— पर्वतानामिति । अभिज्ञातोद्देशानाम् अभिज्ञाताः पूर्वभूपपरिज्ञाताः आकरविद्याधीता वा उद्देशाः येषां तथाभूतानां पर्वतानां बिलगुहोपत्यकालयनगूढखातेषु— बिलं भूविवरम्, गुहा देवखातगृहम्, उपत्यका शैलासन्नभूमिः, लयनं शिलाटङ्कनकर्मनिर्मितं गृहम्, गूढखातं महाशिलापिहितद्वारं बिलम् इत्येतेषु पञ्चसु अन्तःप्रस्यन्दिनः मध्यप्रस्राविणः जम्बूचूततालफलपक्वहरिद्राभेदहरितालक्षौद्रहिङ्गुलकपुण्डरीकशुकमयूरपत्रवर्णाः— जम्बूफलादित्रिकं प्रसिद्धम्, पक्वहरिद्राभेदः शोधितहरिद्राभङ्गः, हरितालं धातुभेदः, क्षौद्रं मधु, हिङ्गुलकः रागद्रव्यविशेषः, पुण्डरीकं सिताम्बुजम्, शुकमयूरपत्रे शुकपक्षमयूरपक्षौ,

( १ ) कौ. २।१२.

जम्बूफलादीनां दशानां वर्ण इव वर्णो येषां ते तथाभूताः, सवर्णोदकौषधिपर्यन्ताः— सवर्णोदकः स्ववर्णसमानवर्णजलः, सवर्णौषधिः स्ववर्णसमानवर्णौषधिश्च पर्यन्तः परिसरप्रदेशः येषां ते तथाभूताः, चिक्कणाः स्पृष्टहस्तसङ्गिनः, विशदाः शुचयः, भारिकाश्च गुरवश्च रसाः काञ्चनिकाः— काञ्चनं सुवर्णम्, तत्प्रयोजनाः।

श्रीमूला.

**अप्सु निष्ठ्यूतास्तैलवद्विसर्पिणः पङ्कमलग्राहिणश्च ताम्ररूप्ययोः शतादुपरि वेद्धारः॥**

तेषामेव लक्षणान्तरमाह— अप्स्विति। अप्सु निष्ठ्यूताः जले क्षिप्ताः तैलवद्विसर्पिणः जले तैलवत् विसर्पणशीलाः पङ्कमलग्राहिणश्च जलगतं पङ्कमादाय कतकवदधोगत्वराश्च। यथोक्ताः काञ्चनिकाः रसाः ताम्ररूप्ययोरुपरि वेद्धारः ताम्रस्य रूप्यस्य चोपरि क्षिप्ताः सन्तः जात्यन्तरापादकाः सुवर्णत्वापादका इत्यर्थः। वेध्यवेद्ध्रोः योगपरिमाणमाह— शतादिति। शतमासाद्य। ल्यब्लोपे पञ्चमी। तच्च शतं ताम्ररूप्ययोर्वेध्ययोः पलशतं वेद्धुस्तु रसस्य परिमाणं एकपलात्मकम्, विशेषाकथनात्। तथा च ताम्रपलशते रूप्यपलशते वा काञ्चनिकरसो वेधशास्त्रविधिनैकपलः क्षिप्तस्तत्सर्वं स्वर्णीकरोतीत्युक्तं भवति। इह वेद्धार इति 'विध विधाने' इत्यस्मात् तृच्। विधानं च रूपान्तरापादनलक्षणं विवक्षितमिति बोद्धव्यम्।

श्रीमूला.

**तत्प्रतिरूपकमुग्रगन्धरसं शिलाजतु विद्यात्॥**

तत्समरूपगन्धरसे शिलाजतुनि तद्भ्रमापनोदनार्थमाह— तत्प्रतिरूपकमिति। तत्प्रतिरूपकं तस्य काञ्चनिकरसस्य प्रतिरूपकं सदृशरूपं समानवर्णम्, उग्रगन्धरसं तद्वदुग्रगन्धम् उग्ररसं च रसवस्तु शिलाजतु तत्संज्ञं द्रव्यान्तरं विद्यात् उपयोगादिना परीक्ष्य निश्चिनुयात्। अथवा रूपगन्धरसमात्रसाम्योक्त्या तैलवद्विसर्पित्वपङ्कमलग्राहित्वयोरभावस्य द्योतनात् तेनैव शिलाजतुत्वमवधारयेदित्यर्थः।

श्रीमूला.

**पीतकास्ताम्रकास्ताम्रपीतका वा भूमिप्रस्तरधातवो भिन्ना नीलराजीमन्तो मुद्गमाषकृसरवर्णा वा दधिबिन्दुपिण्डचित्रा हरिद्राहरीतकीपद्मपत्रशैवलयकृत्प्लीहानवद्यवर्णा भिन्नाश्चुञ्चुवालुकालेखाबिन्दुस्वस्तिकवन्तः सगुलिका अर्चिष्मन्तस्ताप्यमाना न भिद्यन्ते बहुफेनधूमाश्च सुवर्णधातवः प्रतीवापार्थास्ताम्ररूप्यवेधनाः॥**

अथ त्रिविधान् भूमिप्रस्तरधातूनाह— पीतका इति। पीतकाः केवलपीताः, ताम्रकाः केवलताम्राः, ताम्रपीतकाः उक्तोभयमिश्राः। वा इति विकल्पे। एवं त्रिविधाः भूमिप्रस्तरधातवः भूमिधातवः प्रस्तरधातवश्च। भिन्ना नीलराजीमन्तः विदारिताः मध्ये नीलरेखायुक्ताः। मुद्गमाषकृसरवर्णा वा मुद्गमाषतिलौदनसवर्णाः। वा इति विकल्पे। दधिबिन्दुपिण्डचित्राः दधिबिन्दुचित्राः दधिकणाकारैः सूक्ष्मैर्बिन्दुभिराकीर्णाः, दधिपिण्डचित्राश्च दधिपिण्डसदृशैः स्थूलबिन्दुभिराकीर्णाश्च। हरिद्राहरीतकीपद्मपत्रशैवलयकृत्प्लीहानवद्यवर्णाः— हरिद्रा रजनी, हरीतकी पथ्या, पद्मपत्रं पद्मदलम्, शैवलं जलनीली, यकृत् कालखण्डाख्यो मांसविशेषः, प्लीहा गुल्मः, अनवद्यं कुङ्कुमम्, एषामिव वर्णो येषां ते तथाविधाः। भिन्नेषु विशेषमाह— भिन्नाः सन्तः चुञ्चुवालुकालेखाबिन्दुस्वस्तिकवन्तः— चुञ्चुवालुका सूक्ष्मवालुकेति स्वामी, तद्वन्तः, लेखाः राजयः, तद्वन्तः, बिन्दुमन्तः, स्वस्तिकः त्रिकोणरेखाविशेषः, तद्वन्तः। सगुलिकाः गुटिकाकारशर्करोपेताः। अर्चिष्मन्तः दीप्तिमन्तः। परीक्षान्तरमाह— ताप्यमानाः सन्तः न भिद्यन्ते न स्फुटन्ति। कीदृशास्तर्हि भवन्तीत्यत्राऽऽह— बहुफेनधूमाः बहुफेनाः बहुधूमाश्च भवन्ति। चशब्दः समुच्चये। एवंलक्षणाः भूमिप्रस्तरधातवः प्रतीवापार्थाः— प्रतीवापो नाम वेधनद्रव्यस्याऽऽवर्तमाने ताम्रे रूप्ये वा चूर्णीकृत्य प्रक्षेपः, तदर्थाः तत्प्रयोजनाः, ताम्ररूप्यवेधनाः ताम्रस्य रूप्यस्य वा स्वर्णत्वापादकाः, अत एव सुवर्णधातवः सुवर्णहेतुभूता धातवः इत्युच्यन्ते इत्यर्थः। श्रीमूला.

**शङ्खकर्पूरस्फटिकनवनीतकपोतपारावतविमलकमयूरग्रीवावर्णाः सस्यकगोमेदकगुडमत्स्यण्डिकावर्णाः कोविदारपद्मपाटलीकलायक्षौमातसी-**

**पुष्पवर्णाः ससीसाः साञ्जना विस्रा भिन्नाः श्वेताभाः कृष्णाः कृष्णाभाः श्वेताः सर्वे वा लेखाबिन्दुचित्रा मृदवो ध्मायमाना न स्फुटन्ति बहुफेनधूमाश्च रूप्यधातवः ॥**

रूप्यधातूनाह— शङ्खेत्यादि । रूप्यधातवः रूप्यहेतवो धातवः शङ्खवर्णकर्पूरवर्णादयोऽष्टौ सस्यकवर्णगोमेदकवर्णादयश्चत्वारः कोविदारवर्णपद्मवर्णादयः षट् इत्येवमष्टादशप्रकाराः । तत्र कपोतः आरण्यः कलरवः, पारावतः ग्राम्यः । विमलकः श्वेतरक्तो मणिः । सस्यकः नीलमणिः । गुडः पिण्डशर्करा । मत्स्यण्डिका शर्करा । कोविदारः ताम्रपुष्पाख्यो वृक्षः । पाटली अमोघाख्या । कलायः सतीनकः । क्षौमं क्षुमाभेदः । अतसी उमाख्या । शेषं प्रसिद्धम् । ससीसाः योगेष्टाख्यलोहानुविद्धाः । साञ्जनाः— सीसकवच्छुक्लवर्णम् अञ्जनम् इति स्वामी, तदनुविद्धाः । विस्राः दुर्गन्धाः । भिन्नाः खण्डिताश्चेत् श्वेताभाः कृष्णाः श्वेतवर्णाः सन्तो मध्ये कृष्णवर्णाः । कृष्णाभाः श्वेताः कृष्णवर्णाः सन्तो मध्ये श्वेतवर्णाः । सर्वे वा । वेति विकल्पे । शङ्खादिवर्णा अष्टादशविधा अपि लेखाबिन्दुचित्राः स्ववर्णभिन्नवर्णाभिर्लेखाभिर्बिन्दुभिश्च चित्राः, मृदवः, ध्मायमानाः न स्फुटन्ति ताप्यमाना न भिद्यन्ते, बहुफेनधूमाश्च भवन्ति । श्रीमूला.

**सर्वधातूनां गौरववृद्धौ सत्त्ववृद्धिः । तेषामशुद्धा मूढगर्भा वा तीक्ष्णमूत्रक्षारभाविता राजवृक्षवटपीलुगोपित्तरोचनामहिषखरकरभमूत्रलण्डपिण्डबद्धास्तत्प्रतीवापास्तदवलेपा वा विशुद्धाः स्रवन्ति ॥**

सर्वधातूनां सर्वेषाम् उक्तानां वक्ष्यमाणानां च धातूनां गौरववृद्धौ गुरुत्वोत्कर्षे सति सत्त्ववृद्धिः— सत्त्वं धातुगतः सारः, तस्य वृद्धिः भवति । अशुद्धानामनभिव्यक्तसत्त्वानां च धातूनां शोधनप्रकारमाह— तेषामिति । तेषां धातूनां मध्ये अशुद्धाः अशुद्धद्रव्यान्तरसंसर्गदुष्टाः मूढगर्भा वा स्वदोषादेवाप्रकाशमानसत्त्वा वा धातवः तीक्ष्णमूत्रक्षारभाविताः— तीक्ष्णमूत्रं नरमूत्रमित्येके, गजाश्वगोगर्दभच्छागमूत्रमित्यपरे इति स्वामी, तीक्ष्णक्षारः कदल्यपामार्गादिभस्म, ताभ्यां भाविताः असकृत् सेचनादिना संस्कृताः, राजवृक्षवटपीलुगोपित्तरोचनामहिषखरकरभमूत्रलण्डपिण्डबद्धाः— राजवृक्षः शम्याकः, वटः प्रसिद्धः, पीलुः गुडफलाख्यो वृक्षः, गोपित्तरोचना गोपित्तं गोरोचना च, महिषखरकरभमूत्रलण्डं सैरिभगर्दभबालोष्ट्राणां मूत्रपुरीषम्, एतैः पिण्डबद्धाः राजवृक्षादिकल्कैर्महिषादिमूत्रलण्डेन च सह मिश्रितैरुक्ततीक्ष्णमूत्रक्षारभावितस्याऽऽत्मनश्चूर्णैर्बद्धपिण्डा इत्यर्थः, तत्प्रतीवापाः राजवृक्षादिचूर्णकृतप्रतीवापाः, तदवलेपा वा तच्चूर्णकृतोपलेपा वा सन्तः, विशुद्धाः द्रव्यान्तरसंसर्गजदोषनिर्मुक्ताः स्रवन्ति मूढगर्भतापहानेन सत्त्वमुद्गिरन्ति । श्रीमूला.

**यवमाषतिलपलाशपीलुक्षारैर्गोक्षीरराजक्षीरैर्वा कदलीवज्रकन्दप्रतीवापो मार्दवकरः ॥**

यवमाषतिलपलाशपीलुभस्मभिर्गोक्षीरराजक्षीरैश्च संमिश्रिताभ्यां कदलीकन्दवनसूरणकन्दाभ्यां प्रतीवापात् स्वर्णरूप्ययोर्मार्दवमुपजायते इत्याह— यवमाषेत्यादि । इह 'वा' इत्यन्तस्य 'विशुद्धाः स्रवन्ति' इत्यनेन संबन्धं मत्वा यवक्षारादिभिः साधनैः पूर्ववत् पिण्डबन्धनादिविधया वा धातवो विशुद्धाः स्रवन्तीत्यर्थं केचित् वर्णयन्ति । श्रीमूला.

**मधु मधुकमजापयः सतैलं**
**घृतगुडकिण्वयुतं सकन्दलीकम् ।**
**यदपि शतसहस्रधा विभिन्नं**
**भवति मृदु त्रिभिरेव तन्निषेकैः ॥**

मृदूकारप्रकारान्तरं श्लोकेनाऽऽह— मधु मधुकमिति । सतैलम्, घृतगुडकिण्वयुतं सर्पिःशर्करासुराबीजसहितम्, सकन्दलीकं कच्छजझाटभेदयुक्तं यत् मधु क्षौद्रम्, मधुकं यष्ट्याख्यम्, अजापयः छागीक्षीरं च, त्रिभिरेव तन्निषेकैः— निषेको नाम स्वर्णादावौषधकल्कनिक्षेपः, मध्वाद्यष्टककल्कनिक्षेपैः शतसहस्रधा विभिन्नमपि नानाप्रकारकाठिन्ययुक्तमपि स्वर्णादिकं मृदु भवति । श्रीमूला.

**गोदन्तशृङ्गप्रतीवापो मृदुस्तम्भनः ॥**

मार्दवापायकरमाह— गोदन्तेत्यादि । गोदन्तशृङ्गप्रतीवापः गोर्दन्तशृङ्गचूर्णयोर्द्रुतसुवर्णाद्युपरि प्रक्षेपः मृदुस्तम्भनः

मार्दवविलोपनो भवति । इति स्वर्णरूप्यधातुप्रकरणम् ।
श्रीमूला.

**भारिकः स्निग्धो मृदुश्च प्रस्तरधातुर्भूमिभागो वा पिङ्गलो हरितः पाटलो लोहितो वा ताम्रधातुः ॥**

अथ ताम्रधातुमाह— भारिक इति । भारिकः गुरुः, स्निग्धः मसृणः, मृदुश्च प्रस्तरधातुः पाषाणधातुः भूमिभागो वा भूमिधातुर्वा ताम्रधातुः ताम्रयोनिर्भवति । तस्य चतुर्विधान् वर्णानाह— पिङ्गलः कपिलः, हरितः नीलः, पाटलः ईषद्रक्तः, लोहितो वा रक्तो वा । श्रीमूला.

**काकमेचकः कपोतरोचनावर्णः श्वेतराजिनद्धो वा विस्रः सीसधातुः ॥**

सीसधातुमाह— काकेत्यादि । काकमेचकः काक इव कृष्णः, कपोतरोचनावर्णः कपोतवर्णो गोरोचनावर्णश्च, श्वेतराजिनद्धः धवललेखाबहुलः, विस्रो वा दुर्गन्धो वा सीसधातुः सीससंज्ञलोहयोनिर्धातुर्भवति । श्रीमूला.

**ऊषरकर्बुरः पक्वलोष्टवर्णो वा त्रपुधातुः ॥**

त्रपुसंज्ञस्य शुक्लसीसस्य योनिं धातुमाह— ऊषरेत्यादि । ऊषरकर्बुरः ऊषरदेशवदापाण्डुः पक्वलोष्टवर्णो वा त्रपुधातुः । श्रीमूला.

**कुरुम्बः पाण्डुरोहितः सिन्दुवारपुष्पवर्णो वा तीक्ष्णधातुः ॥**

अयोधातुमाह— कुरुम्ब इति । कुरुम्बः श्लक्ष्णपाषाणप्रायः इति स्वामी, पाण्डुरोहितः श्वेतरक्तः, सिन्दुवारपुष्पवर्णः निर्गुण्डीपुष्पवर्णः, वेति विकल्पे, तीक्ष्णधातुः— तीक्ष्णम् अयः, तद्योनिर्धातुर्भवति । श्रीमूला.

**काकाण्डभुजपत्रवर्णो वा वैकृन्तकधातुः ॥**

वैकृन्तकधातुमाह— काकाण्डेत्यादि । काकाण्डभुजपत्रवर्णो वा काकाण्डवर्णो भूर्जपत्रवर्णो वा । क्वचित् भूर्जेत्येव पाठः । काण्डेति पाठे काण्डः वृक्षजातिविशेषः इति व्याख्येयम् । वैकृन्तकधातुः वैकृन्तकाख्यलोहविशेषयोनिर्धातुः । कांस्यादिकं तु तमरकादियुक्तताम्रादिनिष्पाद्यमिति तस्य न धात्वन्तरत्वमस्ति । एवं लोहधातवः सप्त अभिहिताः । श्रीमूला.

**अच्छः स्निग्धः सप्रभो घोषवाञ्शीततीव्रस्तनुरागश्च मणिधातुः ॥**

अथ मणिधातूनाह— अच्छ इति । अच्छः बिम्बग्राही, स्निग्धः मसृणः, सप्रभः सद्युतिः, घोषवान् अग्नितापने टङ्कच्छेदने च महाशब्दः, शीततीव्रः अतिशीतस्वभावः अग्नेरपनयने क्षिप्रशीतो वा, तनुरागः अल्परागः मणिधातुः मणियोनिर्धातुर्भवति । इयमत्र संग्रहार्या— 'कनकं रूप्यं ताम्रं सीसं त्रपु तीक्ष्णकं च वैकृन्तम् । मणयोऽष्टौ निर्दिष्टा अष्टानां धातवोऽप्यष्टौ ॥' इति । श्रीमूला.

**धातुसमुत्थं तज्जातकर्मान्तेषु प्रयोजयेत् ॥**

इत्थं धातुपरीक्षामुपदिश्य तत्कर्मान्तप्रवर्तनमधिकृत्याऽऽह— धातुसमुत्थमिति । 'धातुसमुत्थितम्' इत्यपि पाठः । धातुभ्यः स्वल्पधनव्ययत्नेन प्रथममुत्पन्नं स्वर्णादिद्रव्यं तज्जातकर्मान्तेषु धातुसंबद्धकर्मस्थानेषु स्वर्णरूप्याद्याकरेषु प्रयोजयेत् विनियुञ्जीत बहुतरोत्पत्त्यर्थम् । विनियोज्यस्य धातुसमुत्थत्ववचनं पूर्वपूर्वसम्यक्प्रवृत्तिफलोपलम्भे सत्येव उत्तरोत्तरप्रवृत्तिः कार्येति द्योतयितुम् । श्रीमूला.

**कृतभाण्डव्यवहारमेकमुखम्, अत्ययं चान्यत्रकर्तृक्रेतृविक्रेतॄणां स्थापयेत् ॥**

कृतभाण्डव्यवहारं घटितसुवर्णादिभाण्डविक्रयम् एकमुखं एकद्वारकम् एकविक्रयस्थानकं स्थापयेत् प्रख्यापयेत् । अन्यत्रकर्तृक्रेतृविक्रेतॄणां स्थापितान्यदेशे भाण्डक्रियाक्रयविक्रयकारिणाम् अत्ययं च दण्डं च 'पञ्चविंशतिपणमत्ययं चान्यत्र कर्तृक्रेतृविक्रेतृपरीक्षितृभ्यः' इति लक्षणाध्यक्षोक्तं स्थापयेत् । दण्डः इह द्रव्यसारतारतम्यापेक्षः शुल्काध्यक्षधर्मस्थीयकण्टकशोधनोक्तः अपराधानुरूपः कल्पनीयः, प्रमाणाकथनादिति केचित् । श्रीमूला.

**आकरिकमपहरन्तमष्टगुणं दापयेदन्यत्र रत्नेभ्यः ॥**

अपहरन्तम् आकरात् द्रव्यं हरन्तम् आकरिकं आकरकर्मकरम् अष्टगुणम् अपहृतद्रव्याष्टगुणम् अत्ययं दापयेत् । तत्रापवादमाह— अन्यत्र रत्नेभ्य इति । रत्नापहारे तु नायं दण्डः, किंतु घातो वक्ष्यते । श्रीमूला.

**स्तेनमनिसृष्टोपजीविनं च बद्ध्वा कर्म कारयेत्, दण्डोपकारिणं च ॥**

स्तेनम् आकरिकमनाकरिकं वा चोरम् अनिसृष्टोपजीविनं च विना राजानुमतिं धातुवादविद्यया वृत्तिं वर्तयन्तं च बद्ध्वा निगडितं कृत्वा । बद्धमिति पाठेऽप्ययमेवार्थः । कर्म आकरव्यापारं कारयेत् । दण्डोपकारिणं च— महापराधेषु प्राड्विवाकनिर्णीतो देहदण्डप्रतिनिधिर्धनदण्डो देहपीडापरिहारार्थत्वादपराधिनं प्रति उपकारो भवतीति दण्डोपकारः स उच्यते, तद्वन्तं च अर्थात् अदत्तदण्डं बद्ध्वा कर्म कारयेत् । श्रीमूला.

**व्ययक्रियाभारिकमाकरं भागेन प्रक्रयेण वा दद्यात्, लाघविकमात्मना कारयेत् ॥**

व्ययक्रियाभारिकं व्ययक्रिययोर्भारिकं गुरुम्, गुरुधनव्ययसाध्यं गुरुप्रयत्नसाध्यं चेत्यर्थः, आकरं भागेन दद्यात् व्ययलाभभागव्यवस्थया परेषां प्रतिपादयेत् । प्रक्रयेण वा दद्यात् अस्याऽऽकरस्यैतावत् सुवर्णादिकं राजार्थे देयमिति परिपण्य वा परेषां दद्यात् । लाघविकं लघुव्ययसाध्यं लघुश्रमसाध्यं चाऽऽकरम् आत्मना कारयेत् स्वयं व्यापारयेत् । श्रीमूला.

**लोहाध्यक्षस्ताम्रसीसत्रपुवैकृन्तकारकूटवृत्तकंसताललोहकर्मान्तान् कारयेल्लोहभाण्डव्यवहारं च ॥**

अथावान्तराध्यक्षव्यापारमाह— लोहाध्यक्ष इति । लोहाध्यक्षः— सुवर्णरूप्ययोर्वक्ष्यमाणत्वात् तदतिरिक्तं ताम्रादिकमिह लोहः, तदध्यक्षः ताम्रसीसत्रपुवैकृन्तकारकूटवृत्तकंसताललोहकर्मान्तान्— आरकूटः रीतिः, वृत्तं तदाख्यो लोहः, कंसः घोषाख्यः, तालः कांस्यं सातिशयनादयुक्तं वाद्योपयोगि, लोहः कालायसम्, ताम्रादीनां कर्मान्तान् तद्भाण्डघटनकर्माणि कारयेत् । लोहभाण्डव्यवहारं च ताम्रादिनिर्मितभाण्डक्रयविक्रयव्यवहारं च कारयेत् । श्रीमूला.

**लक्षणाध्यक्षः चतुर्भागताम्रं रूप्यरूपं तीक्ष्णत्रपुसीसाञ्जनानामन्यतममाषबीजयुक्तं कारयेत् पणम्, अर्धपणं पादमष्टभागमिति । पादाजीवं ताम्ररूपं माषकमर्धमाषकं काकणीमर्धकाकणीमिति ॥**

अथ पण्यव्यवहारार्थं लक्षणाध्यक्षव्यापारमाह— लक्षणेत्यादि । लक्षणाध्यक्षः— लक्षणं पणमाषकादिरूपनिर्माणम्, तदध्यक्षः, टङ्कशालाध्यक्ष इति यावत् । पणव्यवहारश्च रूप्यरूपश्चतुर्विधः ताम्ररूपश्चतुर्विध इत्यष्टविधे तस्मिन् रूप्यरूपः चतुर्भागताम्रमित्यादिना, ताम्ररूपश्च पादाजीवमित्यादिना व्युत्पाद्यते । षोडशमाषको हि पणः प्रसिद्धः । तस्य चतुर्भागः चत्वारो माषाः, तत्प्रमाणं ताम्रं यस्य तथाविधम्, तीक्ष्णत्रपुसीसाञ्जनानामन्यतममाषबीजयुक्तम्— तीक्ष्णं कालायसम्, त्रपु रङ्गम्, सीसं योगेष्टाख्यम्, अञ्जनं रसाञ्जनम्, एषां चतुर्णामन्यतमस्य माषप्रमाणेन बीजेन निर्माणार्थेन युक्तम्, अर्थात् परिशिष्टैकादशमाषपरिमाणरूप्यकं रूप्यरूपं रूप्यांशभूम्ना रूप्यमयं पणं पणसंज्ञं नाणकविशेषं कारयेत् । इति उक्तेन प्रकारेण अर्धपणम्, पादम्, अष्टभागं कारयेत् । पणोक्तताम्राद्यर्धप्रमाणयोगेनार्धपणाख्यम्, तच्चतुर्भागप्रमाणयोगेन पादपणम्, तदष्टभागप्रमाणयोगेनाष्टभागाख्यं च निर्मापयेदित्यर्थः । प्रकारान्तरार्थो वा इतिशब्दः इति कारयेदिति योज्यः । त्रिपादकादिकं प्रकारान्तरमपि व्यवहारानुगुणं निर्मापयेदित्यर्थः । पादाजीवं रूप्यरूपचतुर्भागव्यवहार्यम्, ताम्ररूपं ताम्रांशभूम्ना ताम्रमयं रूपं माषकं माषकाख्यं कारयेत् । ताम्रस्य एकादश धान्यमाषाः, रूप्यस्य चत्वारः, तीक्ष्णाद्यन्यतमस्य एकः इति योगप्रमाणेन रूप्यरूपपणवत् षोडशधान्यमाषप्रमाणकोऽयं ताम्ररूपमाषको द्रष्टव्यः । एवं माषकोक्तताम्राद्यर्धप्रमाणयोगेनार्धमाषकम्, तच्चतुर्भागप्रमाणयोगेन काकणीम्, तदष्टभागप्रमाणयोगेनार्धकाकणीं च कारयेत् । श्रीमूला.

**रूपदर्शकः पणयात्रां व्यवहारिकीं कोशप्रवेश्यां च स्थापयेत् । रूपिकमष्टकं शतम्, पञ्चकं शतं व्याजीम्, पारीक्षिकमष्टभागिकं शतम् । पञ्चविंशतिपणमत्ययं चान्यत्र कर्तृक्रेतृविक्रेतृपरीक्षितृभ्यः ॥**

रूपदर्शकः रूपपरीक्षकः पणयात्रां पणदानादानप्रस्थानं व्यवहारिकीं व्यवहारप्रयोजनां कोशप्रवेश्यां च कोशप्रवेशनयोग्यां च स्थापयेत् ईदृशी पणयात्रा व्यवहारार्था ईदृशी कोशप्रवेशनार्थेति तत्सारासारभावपर्यालोचनया व्यवस्थापयेत् । इयं राजकर्तृका पणयात्रा । जानपदकारितायां तस्यां राजभाव्यमाह— रूपिकमित्यादि । अष्टास्योपदा दीयते अष्टकम्, पञ्चास्योपदा दीयते पञ्चकम् । अष्टकं शतं पणशते अष्टपणग्रहणं रूपिकसंज्ञम्, पणशते पञ्चपणग्रहणं व्याजीसंज्ञम्, पणशते अष्टभागग्रहणं पारीक्षिकसंज्ञम् । रूपिकं व्याजीं पारीक्षिकं च यथोक्तलक्षणं स्थापयेत् व्यवस्थापयेत् । तत्र रूपिकं कर्मकरभृतिः, व्याजी राजभागः, पारीक्षिकं परीक्षकभृतिरिति बोद्धव्यम् । पञ्चविंशतिपणम् अत्ययं च दण्डं च स्थापयेत्, अर्थादपराधे सति । स चापराधः संनिहिताष्टभागिकपदानुकर्षणेनाष्टभागभवं दण्डमिति व्याख्यानादष्टभागापहारलक्षणो द्रष्टव्यः । अनया दिशा चतुर्भागाद्यपहारे दण्डद्वैगुण्यादिकमुन्नेयम् । केष्वपराधिषु विषयेऽयं दण्ड इत्याकाङ्क्षायामाह— अन्यत्र कर्तृक्रेतृविक्रेतृपरीक्षितृभ्यइति । ये करणक्रयणादावधिकृतास्तदतिरिक्तेषु विषये । ते च जानपदाः अध्यक्षपुरुषकर्मकरा वेत्यवसेयम् । अन्यत्रकर्त्रादीनां त्वपराधे द्रव्यसारासारतापेक्षो दण्डः प्रागुक्त एव । भट्टस्वामी त्वाह— "तेषां त्वन्यत्रकर्त्रादीनामुक्त एव दण्डः 'कूटकुरूपकं कुर्वतः कारयतो निपातयतो वा सहस्रदण्डः' इति" इति । ईदृशं मूलवाक्यं मृग्यम् * ।

श्रीमूला.

**खन्यध्यक्षः शङ्खवज्रमणिमुक्ताप्रवालक्षारकर्मान्तान् कारयेत् पणनव्यवहारं च ॥**

अथ खन्यध्यक्षव्यापारमाह— खन्यध्यक्ष इत्यादि । खन्यध्यक्षः स्वर्णरत्नाद्याकराधिकारी शङ्खवज्रमणिमुक्ताप्रवालक्षारकर्मान्तान्— शङ्खानां कर्मान्तान् पाटनघर्षणादिक्रियाः, वज्रमणिमुक्ताप्रवालानां कर्मान्तान् खननशोधनरञ्जनादिक्रियाः, क्षाराणां कर्मान्तान् यवक्षारादीनां उत्पादनादिक्रियाश्च कारयेत् । पणनव्यवहारं च शङ्खादिक्रयविक्रयव्यवहारं च कारयेत् ।

श्रीमूला.

**लवणाध्यक्षः पाकमुक्तं लवणभागं प्रक्रयं च यथाकालं संगृह्णीयात्, विक्रयाच्च मूल्यं रूपं व्याजीं च ॥**

लवणाध्यक्षव्यापारमाह— लवणेत्यादि । लवणाध्यक्षः पाकमुक्तं परिणतं निष्पन्नम्, लवणभागं भागार्पिताकरलभ्यं लवणस्य भागम्, प्रक्रयं च— प्रक्रयः परिपणः, अमुकाकरस्यैतावल्लवणं देयमिति परिभाष्यार्पितादाकरात्लभ्यं चेत्यर्थः, यथाकालं क्लृप्तकालानतिक्रमेण संगृह्णीयात् । तदिदं राजपण्यं वणिग्भिर्विक्रेतव्यम् । विक्रयाच्चेति । विक्रयाच्च तद्विक्रयलब्धद्रव्याच्च मूल्यं पण्यमूल्यम्, रूपं पारीक्षिकमष्टभागिकलक्षणम्, व्याजीं च पुनर्मीयमानोनतापरिहारार्थमधिकतया गृह्यमाणां मानव्याजीं च, संगृह्णीयादिति वर्तते ।

श्रीमूला.

**आगन्तुलवणं षड्भागं दद्यात् । दत्तभागविभागस्य विक्रयः । पञ्चकं शतं व्याजीम्, रूपम्, रूपिकं च । क्रेता शुल्कम्, राजपण्यच्छेदानुरूपं च वैधरणं दद्यात् । अन्यत्रक्रेता षट्छतमत्ययं च ॥**

इत्थं राजपण्यसंबद्धमभिधायाऽऽगन्तुकपण्यसंबद्धमाह— आगन्तुलवणमिति । आगन्तुलवणं परदेशागतं लवणं अर्थात् तद्विक्रेता षड्भागं दद्यात् षष्ठं भागं राज्ञे दद्यात् । दत्तभागविभागस्य— दत्तः राज्ञेऽर्पितः भागः षड्भागः विभागः मानव्याजी च येन तस्याऽऽगन्तुलवणव्यवहारिणः विक्रयो भवति । विक्रये इति सप्तम्यन्तपाठस्तु श्रेयान्, उत्तरग्रन्थेनैकवाक्यत्वस्य स्वरसतो लाभात् । न केवलं षड्भागमानव्याज्योर्द्वयोरेव दानम्, किंतु अन्येषामपि त्रयाणां तत् भवतीत्याह— पञ्चकमित्यादि । पणशते पणपञ्चकलक्षणां व्याजीम्, पारीक्षिकं शतस्याष्टभागिकलक्षणं रूपशब्दवाच्यम्, पणशते पणाष्टकलक्षणं रूपिकसंज्ञं च, दद्यादित्यनुषज्यते । क्रेतेति । क्रेता शुल्कं दद्यात्, न तु विक्रेता । राजपण्यच्छेदानुरूपं राजपण्यात्

---

* इदं वचनं मुद्रितपुस्तकेषु कौ. ४।१ इत्यत्र 'कूटरूपं कारयतः प्रतिगृह्णतो निर्यापयतो वा सहस्रं दण्डः' इति पाठभेदेन उपलभ्यते ।

विक्रीयमाणात् यश्छेदः यावन्नष्टं तदनुरूपं वैधरणं वैधरण-शब्दितं छिन्नपूरणं च दद्यात् । अन्यत्रक्रेता विद्यमाने राजपण्येऽन्यतो लवणं क्रीणानः षट्छतम् अत्ययं च दण्डं च दद्यात् । श्रीमूला.

*** विलवणमुत्तमं दण्डं दद्यात्, अनिसृष्टोपजीवी चान्यत्र वानप्रस्थेभ्यः । श्रोत्रियास्तपस्विनो विष्टयश्च भक्तलवणं हरेयुः ॥**

विलवणं विड( कृतकलवण )मृदादिमिश्रं(?) लवणम् अर्थात् तथाविधलवणव्यवहर्ता उत्तमं दण्डम् उत्तमसाहसं दद्यात् । अनिसृष्टोपजीवी च यो राजाननुमत एव लवणमुत्पाद्योपजीवति स च उत्तमं दण्डं दद्यात् । तत्रापवादमाह– वानप्रस्थेभ्योऽन्यत्र वानप्रस्थान् विहाय । तेषां त्वनिसृष्टोपजीविनां न दण्ड इत्यर्थः । श्रोत्रिया इति । श्रोत्रियाः वेदाध्यायिनः, तपस्विनः दीनाः, विष्टयः हठकारितकर्मकारिणश्च भक्तलवणं अन्नाभ्यवहारमात्रपर्याप्तं लवणं हरेयुः विनैव शुल्कं नयेयुः । श्रीमूला.

**अतोऽन्यो लवणक्षारवर्गः शुल्कं दद्यात् ॥**

अतोऽन्यः उक्तात् इतरः लवणक्षारवर्गः 'सैन्धवसामुद्रविडयवक्षारसौवर्चलोद्भेदजा लवणवर्गः' इति 'फाणितगुडमत्स्यण्डिकाखण्डशर्कराः क्षारवर्गः' इति च कोष्ठागाराध्यक्षे ( कौ. २।१५ ) वक्ष्यमाणो लवणवर्गः क्षारवर्गश्च, अर्थात् तत्कर्ता शुल्कं दद्यात् शुल्कमेव दद्यात्, न तु व्याज्यादिकमित्यर्थः । श्रीमूला.

**एवं मूल्यं विभागं च व्याजीं परिघमत्ययम् ।**
**शुल्कं वैधरणं दण्डं रूपं रूपिकमेव च ॥**
**खनिभ्यो द्वादशविधं धातुं पण्यं च संहरेत् ।**
**एवं सर्वेषु पण्येषु स्थापयेन्मुखसंग्रहम् ॥**

अथ श्लोकानाह– एवमित्यादि । एवम् उक्तप्रकारेण खनिभ्यः मूल्यं प्रतीतम्, विभागं षड्भागम्, व्याजीं पञ्चकं शतं मानव्याजीत्युभयविधाम्, परिघं पारीक्षिकं धातुसमुत्थितानां तज्जातकर्मान्तेषु प्रयोगात् सिद्धं लाभविशेषं वा, अत्ययम् आश्रावितं दमम्, शुल्कं प्रतीतम्, वैधरणं छिन्नपूरणम्, दण्डम् अश्रावितं दमम्, रूपं रूप्यरूपं ताम्ररूपमिति द्विविधम्, रूपिकम् अष्टकं शतम्, धातुं सुवर्णरूप्यादिधातुम्, पण्यं विक्रेयं च, द्वादशविधम् उक्तद्वादशप्रकारं उपादानं संहरेत् समुत्पादयेत् । एवं सर्वेषु पण्येषु पणनयोग्येषु मध्ये मुखसंग्रहं मुखमिव मुखं प्रधानं सारः तस्य संग्रहं स्थापयेत् ।

श्रीमूला.

**आकरप्रभवः कोशः कोशाद्दण्डः प्रजायते ।**
**पृथिवी कोशदण्डाभ्यां प्राप्यते कोशभूषणा ॥**

आकरस्य सर्वार्थसाधकतामध्यायान्तिमश्लोकेन दर्शयति– आकरेत्यादिना । श्रीमूला.

सुवर्णरजतकर्मान्ते नियुक्तस्याध्यक्षस्य कर्तव्यम्

**[१]सुवर्णाध्यक्षः सुवर्णरजतकर्मान्तानामसंबन्धावेशनचतुःशालामेकद्वारामक्षशालां कारयेत् । विशिखामध्ये सौवर्णिकं शिल्पवन्तमभिजातं प्रात्ययिकं च स्थापयेत् ॥**

'अक्षशालायां सुवर्णाध्यक्षः' इति सूत्रम् । अक्षशालायां सुवर्णरूप्यादिनिर्माणशालायां नियुक्तः सुवर्णाध्यक्षः अर्थात् तस्य व्यापारः इहाभिधीयते इति तदर्थः । प्रक्रान्तायां कोशप्रकृतौ प्रधानभूतस्य सुवर्णादेरुत्पत्तिः समनन्तराध्याययोरुक्ता । तस्यावस्थान–जाति–वर्ण–गुण-शोधन–दोषपरीक्षण–परिकर्मादिकथनपूर्वमर्जनं रक्षणं चेदानीमभिधीयते ।

सुवर्णाध्यक्ष इति । सुवर्णाध्यक्षः सुवर्णरजतकर्मान्तानां सुवर्णरजतसंबद्धानामलंकारादिघटनक्रियाणाम् अक्षशालां अवस्थानभूतां शालां कारयेत् । सुवर्णादिपरिकर्मस्थानमक्षशालेत्यभिधीयते । तां कीदृशीम् ? असंबन्धावेशनचतुःशालाम् असंबन्धानि परस्परानुपश्लिष्टानि आवेशनानि शिल्पकर्मस्थानभूतानि चतुःशालानि पृथक् पृथक् चतस्रश्चतस्रः शालाः यस्यां ताम् । 'असंबाधावेशन' इति पाठेऽप्ययमेवार्थः । एकद्वारां रक्षासौकर्यार्थं द्वारेणैकेन युक्तां च । विशिखामध्ये रथ्यामध्ये सौवर्णिकं पौरजानपदानां रूप्यसुवर्णक्रयविक्रयकर्माधिकारिणं स्थापयेत् ।

* विलवणं विड्लवणम् । डकारलोपश्छान्दसः ।

( १ ) कौ. २।१३.

कथंभूतम्? शिल्पवन्तं क्षेपणादिवक्ष्यमाणकर्मनिपुणम्, अभिजातं कुलीनम्, प्रात्ययिकं उपधाशुद्धम्। चकारात् जानपदत्वादिगुणयुक्तम्। सौवर्णिकस्य व्यापारः सौवर्णिकप्रचारे वक्ष्यते। तस्यात्र निर्देशः सुवर्णाध्यक्षाधीनत्वज्ञापनाय राजधनपौरजानपदधनानां रक्षाविधानतुल्यत्वज्ञापनाय च। श्रीमूला.

**जाम्बूनदं शातकुम्भं हाटकं वैणवं शृङ्गिशुक्तिजं जातरूपं रसविद्धमाकरोद्गतं च सुवर्णम्॥**

अथ पञ्चविधं पञ्चवर्णं त्रियोनिं सुवर्णमाह— जाम्बूनदमिति। सुवर्णं जाम्बूनदं मेरुप्रभवजम्बूनदीसमुद्भूतं जम्बूफलरसवर्णम्, शातकुम्भं शतकुम्भपर्वतोत्पन्नं पद्मकिञ्जल्कवर्णम्, हाटकं हाटकाकरोत्पन्नम् अम्लानाख्यकुरण्डककुसुमसवर्णम्, वैणवं वेणुपर्वतजं कर्णिकारपुष्पवर्णम्, शृङ्गिशुक्तिजं सुवर्णभूमिजमिति भाषाटीका, तच्च मनःशिलावर्णम्। इति पञ्चप्रकारस्य पञ्चवर्णस्य सुवर्णस्य त्रिविधामुत्पत्तिमाह— जातरूपमिति। जातरूपं स्वतः सुवर्णमेवोत्पन्नम्, रसविद्धं रसयोगेन काञ्चनीकृतम्, आकरोद्गतं च आकरगतमृत्पाषाणादिभ्यः पातितं च। क्रियावादोत्पन्नमित्यपि केचित्। तत्पक्षे चतुर्योनित्वं बोध्यम्। अत्रायं भट्टस्वामिनः श्लोकः— 'हेम्नः पञ्चप्रकारस्य त्रियोनेः पञ्च वर्णकाः। जम्बूकोकनदाम्लानकर्णिकारमनःशिलाः॥' इति। श्रीमूला.

**किञ्जल्कवर्णं मृदु स्निग्धमनादि भ्राजिष्णु च श्रेष्ठम्, रक्तपीतकं मध्यमम्, रक्तमवरं श्रेष्ठानाम्॥**

गुणानाह— किञ्जल्केत्यादि। किञ्जल्कवर्णम्, मृदु तप्तमतप्तं च अरूक्षम्, स्निग्धं अखरम्, अनादि नादरहितम्। 'अनुनादि' इति पाठे दीर्घनादम्। भ्राजिष्णु भास्वरं च सुवर्णं श्रेष्ठम् उत्तमोत्तमं भवति। रक्तपीतकं लोहितहारिद्रवर्णं मध्यमं श्रेष्ठानामेव मध्ये भवति। रक्तम् अवरम् उत्तमाधमं भवति। श्रीमूला.

**पाण्डु श्वेतं चाप्राप्तकम्। तद्येनाप्राप्तकं तच्चतुर्गुणेन सीसेन शोधयेत्, सीसान्वयेन भिद्यमानं शुष्कपटलैर्ध्मापयेत्, रूक्षत्वाद्भिद्यमानं तैलगोमये निषेचयेत्॥**

अथ शोधनप्रकारमाह— पाण्डुश्वेतमिति। पाण्डु हरिणवर्णम्, श्वेतं सितं च अप्राप्तकं तत्संज्ञं द्रव्यान्तरयोगेनोत्तमवर्णतामप्राप्तमिति कृत्वा। तत् तथाविधं स्वर्णं येनाप्राप्तकं येनापद्रव्येणाशुद्धतां गतं तच्चतुर्गुणेन सीसेन शोधयेत् आवर्तयेत् आ सीसक्षयात्। सीसान्वयेन सीसानुवेधेन भिद्यमानं वियुज्यमानं शुष्कपटलैः शुष्कारण्यगोमयैः ध्मापयेत्। रूक्षत्वात् भिद्यमानं तैलगोमये तैले गोमये च निषेचयेत् पुनःपुनरावर्त्य प्रक्षिपेत्। श्रीमूला.

**आकरोद्गतं सीसान्वयेन भिद्यमानं पाकपत्राणि कृत्वा गण्डिकासु कुट्टयेत्, कन्दलीवज्रकन्दकल्के वा निषेचयेत्॥**

आकरोद्गतस्य शोधने विशेषमाह— आकरोद्गतमिति। आकरोद्गतं सुवर्णं सीसान्वयेन भिद्यमानं पाकपत्राणि कृशपत्राणि कृत्वा गण्डिकासु काष्ठफलकेषु कुट्टयेत् अर्थात् काष्ठेन। अथवा कन्दलीवज्रकन्दकल्के— कन्दली वल्लिभेदः, वज्रं श्रीबेरम्, कन्दं पद्ममूलम्, एतद्योगसिद्धे कषाये निषेचयेत्। श्रीमूला.

**तुत्थोद्गतं गौडिकं काम्बुकं चाक्रवालिकं च रूप्यम्। श्वेतं स्निग्धं मृदु च श्रेष्ठम्। विपर्यये स्फोटनं च दुष्टम्। तत् सीसचतुर्भागेन शोधयेत्॥**

रूप्यं चतुर्विधमाह— तुत्थोद्गतमिति। तुत्थोद्गतं तुत्थपर्वतजं जातिकुसुमाभम्, गौडिकं कामरूपजं तगरकुसुमवर्णम्, काम्बुकं कम्बुपर्वतोत्पन्नम्, चाक्रवालिकं चक्रवालाकरोद्भूतं तदुभयं कुन्दपुष्पाभमिति चतुर्धा रूप्यं श्रेष्ठम्। तस्य श्वैत्यं स्निग्धत्वं मार्दवमिति त्रीन् गुणानाह— श्वेतमित्यादि। दोषानाह— विपर्यय इति। विपर्यये दुष्टं उक्तगुणवैपरीत्ये दोषाः कृष्णत्वरूक्षत्वखरत्वरूपाः, स्फोटनं च दुष्टं भिद्यमानत्वं च दोषः इत्याहत्य

चत्वारो दोषाः । शुद्धिमाह— तत् दुष्टं रजतं सीसचतुर्भागेन रजतप्रमाणचतुर्भागेन सीसेन शोधयेत् ।

श्रीमूला.

**उद्गतचूलिकमच्छं भ्राजिष्णु दधिवर्णं च शुद्धम् ॥**

शुद्धस्य लक्षणमाह— उद्गतचूलिकमित्यादि । उत्थितबुद्बुदम्, स्वच्छम्, रुचिमत्, दधिप्रभं च शुद्धम् ।

श्रीमूला.

**शुद्धस्यैको हारिद्रस्य सुवर्णो वर्णकः । ततः शुल्बकाकण्युत्तरापसारिता आ चतुःसीमान्तादिति षोडश वर्णकाः ॥**

अथ शुद्धसुवर्णस्य षोडश वर्णकानाह— शुद्धस्येति । शुद्धस्य स्वभावशुद्धस्य यथोक्तविधिशोधितस्य वा हारिद्रस्य हरिद्राभङ्गभासुरस्य सुवर्णस्य सुवर्णः षोडशमाषप्रमाणः एको वर्णकः शुद्धो भवति । ततः तस्मिन् वर्णके शुल्बकाकणी शुल्बस्य ताम्रस्य काकणी माषचतुर्भागः, प्रक्षिप्तेति शेषः, उत्तरा अधिका सुवर्णकाकणी अपसारिता तस्मात् वर्णकात् अपनीता च भवति । आ कुतः इमे काकणीप्रक्षेपापसारणे इत्यत्राऽऽह— आ चतुःसीमान्तात् आ चतुर्माषावधेः । आ षोडशकाकण्यवधेरित्यर्थः । इति एकादिषोडशान्तानां शुल्बकाकणीनां वर्णके मिश्रणं स्वर्णकाकणीनां वर्णकादपनयनं चेत्यनया रीत्या षोडश वर्णकाः, मिश्राः संपद्यन्ते इति शेषः । त एते शुद्धवर्णकेन सह सप्तदश भवन्ति । इह चतुरित्यनेन काकणीग्रहणे वर्णकषोडशत्वासिद्ध्या तत्सिद्धये षोडशपर्यन्तकाकण्यपेक्षणात् सामर्थ्याच्चतुर्माषग्रहणं विज्ञेयम् । श्रीमूला.

**सुवर्णं पूर्वं निकष्य पश्चाद्वर्णिकां निकषयेत् । समरागलेखमनिम्नोन्नते देशे निकषितम् । परिमृदितं परिलीढं नखान्तराद्वा गैरिकेणावचूर्णितमुपधिं विद्यात् । जातिहिङ्गुलकेन पुष्पकासीसेन वा गोमूत्रभावितेन दिग्धेनाग्रहस्तेन संस्पृष्टं सुवर्णं श्वेतीभवति ॥**

निकषच्छेदतापलक्षणां त्रिविधां वर्णकपरीक्षामाह— सुवर्णमिति । सुवर्णं परीक्ष्यं पूर्वं प्रथमं निकष्य निकषे घर्षणेन दत्तरेखं कृत्वा पश्चात् वर्णिकां तद्वर्णकपरीक्षार्थं निकषयेत् । निरुपाधिकं निकषितमाह— समरागेत्यादि । समरागलेखं तुल्यरागया रेखया युक्तम् अनिम्नोन्नते देशे निकषोपलप्रदेशे निकषितम्, न्याय्यं भवतीति शेषः । व्याजनिकषितमाह— परिमृदितमित्यादि । परिमृदितं गाढनिकषितं वर्णकोत्कर्षार्थं विक्रेता करोति । परिलीढम् अगाढनिकषितं वर्णापकर्षार्थं क्रेता करोति । हस्तेनोन्मृष्टलीढमिति स्वामी । नखान्तरात् गैरिकेण नखान्तरनिहितेन पीतधातुना अवचूर्णितं प्रक्षिप्तचूर्णम्, उत्कर्षार्थं विक्रेता तत्पक्ष्यो वा परीक्षकः करोति । इति त्रिविधम् उपधिं विद्यात् । उपधिमन्यमाह— जातीत्यादि । गोमूत्रभावितेन जातिहिङ्गुलकेन हंसपादाख्यहिङ्गुलकविशेषेण पुष्पकासीसेन वा किंचित्पीतवर्णेन हरितालेन वा दिग्धेन लिप्तेन अग्रहस्तेन संस्पृष्टं सुवर्णं श्वेतीभवति हीनवर्णं भवति । अयं क्रेतृप्रयोज्यो व्याजः । श्रीमूला.

**सकेसरः स्निग्धो मृदुर्भ्राजिष्णुश्च निकषरागः श्रेष्ठः ॥**

गुणानाह— सकेसर इति । सकेसरः बहुलकेसरः स्निग्धः मृदुः भ्राजिष्णुश्च निकषरागः निकषरेखावर्णः श्रेष्ठः । श्रीमूला.

**कालिङ्गकस्तापीपाषाणो वा मुद्गवर्णो निकषः श्रेष्ठः । समरागी विक्रयक्रयहितः । हस्तिच्छविकः सहरितः प्रतिरागी विक्रयहितः । स्थिरः परुषो विषमवर्णश्चाप्रतिरागी क्रयहितः ॥**

निकषगुणमाह— कालिङ्गक इति । कालिङ्गकः कलिङ्गदेशे महेन्द्रपर्वतादुत्पन्नः पाषाणः, तापीपाषाणो वा— तापी नाम आरट्टदेशवाहिनी नदी, तद्गतः पाषाणो वा मुद्गवर्णो निकषः श्रेष्ठः । समरागी यथास्थितवर्णग्राही, विक्रयक्रयहितः क्रेतृविक्रेत्रोरुभयोरप्यनुकूलः । हस्तिच्छविकः गजचर्मवत् खरशुष्कः, सहरितः हरितवर्णयुक्तः, प्रतिरागी अपकृष्टस्यापि सुवर्णस्य रागोत्कर्षप्रदर्शकः विक्रयहितः विक्रेतुरनुकूलः । स्थिरः दृढः, परुषः खरः, विषमवर्णः नानावर्णश्च, अप्रतिरागी उत्कृष्टस्यापि सुवर्णस्य यथास्थितरागाप्रदर्शकः निकषः क्रयहितः क्रेतुरनुकूलः ।

श्रीमूला.

**छेदश्चिक्कणः समवर्णः श्लक्ष्णो मृदुर्भ्राजिष्णुश्च श्रेष्ठः ॥**

निकषमुक्त्वा छेदमाह— छेद इति । छेदः छिन्नः स्वर्णखण्डः चिक्कणः स्निग्धः, समवर्णः बहिरन्तश्च तुल्यवर्णः, श्लक्ष्णः मसृणः, मृदुः, भ्राजिष्णुश्च श्रेष्ठः। श्रीमूला.

**तापे बहिरन्तश्च समः किञ्जल्कवर्णः कुरण्डकपुष्पवर्णो वा श्रेष्ठः । श्यावो नीलश्चाप्राप्तकः ॥**

अथ तापमाह— ताप इति अग्नितापितः स्वर्णभागः बहिरन्तश्च समः समानवर्णः, तापनात् पूर्वं पश्चाच्च किञ्जल्कवर्णः, कुरण्डकपुष्पवर्णो वा अम्लानकुसुमवर्णो वा श्रेष्ठः । श्यावः कपिशः, नीलश्च अप्राप्तकः तत्संज्ञः। अशुद्ध इति यावत् । श्रीमूला.

**तुलाप्रतिमानं पौतवाध्यक्षे वक्ष्यामः । तेनोपदेशेन रूप्यसुवर्णं दद्याददीत च ॥**

अथ रूप्यसुवर्णयोरुन्मानविध्यपेक्षायामाह— तुलेत्यादि । तुलाप्रतिमानं तुलापरिच्छेदविधिं पौतवाध्यक्षे तुलामानपौतवप्रकरणे वक्ष्यामः । इयमनागतावेक्षणरूपा तन्त्रयुक्तिः । तेनोपदेशेन तत्प्रकरणोक्तमानविधिना रूप्यसुवर्णं दद्यात् आददीत च गृह्णीयाच्च । श्रीमूला.

**अक्षशालामनायुक्तो नोपगच्छेत् । अभिगच्छन्नुच्छेद्यः । आयुक्तो वा सरूप्यस्वर्णस्तेनैव जीयेत । विचितवस्त्रहस्तगुह्याः काञ्चनपृषतत्वष्टृतपनीयकारवो ध्मायकचरकपांसुधावकाः प्रविशेयुर्निष्कसेयुश्च । सर्वं चैषामुपकरणमनिष्ठिताश्च प्रयोगास्तत्रैवावतिष्ठेरन् । गृहीतं सुवर्णं धृतं च प्रयोगं करणमध्ये दद्यात् । सायं प्रातश्च लक्षितं कर्तृकारयितृमुद्राभ्यां निदध्यात् ॥**

पालनविधिमाह— अक्षशालामिति । अक्षशालाम् अनायुक्तः अनधिकृतः नोपगच्छेत् । अभिगच्छन् वारितोऽप्यभिमुखं गच्छन् उच्छेद्यः हृतसर्वस्वः कर्तव्यः । आयुक्तो वा नियुक्तोऽपि वा सरूप्यस्वर्णः रूप्यस्वर्णसहितः गच्छन् तेनैव रूप्येण स्वर्णेन च जीयेत दण्ड्येत । विचितेत्यादि । विचितवस्त्रहस्तगुह्याः वस्त्रं हस्तो गुह्यं च विचितं रूप्यस्वर्णयुक्तं न वेति परीक्षितं येषां ते तथाविधाः भूत्वा काञ्चनपृषतत्वष्टृतपनीयकारवः— काञ्चनकारवः रसवेधस्वर्णीकरणशिल्पिनः, पृषतकारवः गुलिकादिसूक्ष्मशिल्पकारिणः, त्वष्टृकारवः पट्टपात्रादिशिल्पिनः, तपनीयकारवः नानाजातीयभूषणशिल्पिनश्च, ध्मायकचरकपांसुधावकाः— भस्त्राध्मायकाः, परिचारकाः, धूलिशोधकाश्च प्रविशेयुः अक्षशालाम्, निष्कसेयुश्च ततो निर्गच्छेयुश्च । सर्वं चेति । एषां कारुप्रभृतीनां सर्वम् उपकरणं अनिष्ठिताः प्रयोगाश्च असमाप्तानि शिल्पानि च तत्रैव अवतिष्ठेरन् अक्षशालातो बहिर्न नीयेरन् । गृहीतमिति । गृहीतं भाण्डागारात् आत्मनोपात्तं सुवर्णं प्रयोगं च यत्र सुवर्णं प्रयुक्तं तं पदार्थं च करणमध्ये धृतं दद्यात् करणानां राजलेखकानां स्वस्वपुस्तकेष्वर्थं लिखतां साक्षिभूतानां मध्ये तुलाधृतं कृत्वा प्रत्यर्पयेत्, अर्थात् सुवर्णाध्यक्षः । सायं प्रातश्च दैनन्दिनव्यापारस्यावसाने प्रारम्भे च कर्तृकारयितृमुद्राभ्यां लक्षितं कर्तृकारयित्रोः सौवर्णिकसुवर्णाध्यक्षयोर्मुद्राभ्यां चिह्नितं स्थापयेत् सुवर्णम् । करणमध्य इत्येव । श्रीमूला.

**क्षेपणो गुणः क्षुद्रकमिति कर्माणि । क्षेपणः काचार्पणादीनि । गुणः सूत्रवानादीनि । घनं सुषिरं पृषतादियुक्तं क्षुद्रकमिति ॥**

अथ कर्म त्रिधा विभज्य व्याचष्टे— क्षेपण इत्यादि । क्षेपणः तदाख्यं कर्म— काचार्पणादीनि मणिसंयोजनादीनि । गुणः तत्कर्म— सूत्रवानादीनि कटिसूत्रग्रथनादीनि । क्षुद्रकं सूक्ष्मपरिकर्म— घनं कटकाङ्गुलीयकादि, सुषिरं सरन्ध्रं स्थालीभृङ्गारादि, पृषतादियुक्तम्— पृषतः गुटिकाः, आदिपदात् पत्रभङ्गादि, तद्युक्तम् । इतिशब्दः प्रकारान्तरसंग्रहार्थः । श्रीमूला.

**अर्पयेत् काचकर्मणः पञ्चभागं काञ्चनं दशभागं कटुमानम् । ताम्रपादयुक्तं रूप्यं रूप्यपादयुक्तं वा सुवर्णं संस्कृतकं तस्माद्रक्षेत् ॥**

काचकर्मणः मणिसंयोजनस्य, विधिरुच्यते इति वाक्यशेषः । पञ्चभागं मणेः पञ्चमं भागं तलभागं काञ्चनं

अर्पयेत् आधारसुवर्णे प्रवेशयेत् । दशभागं काञ्चनप्रवेशितस्य भागस्यार्धे कटुमानम् अर्पयेत्— मणिदाढर्यार्थो वास्तुकोपरिसुवर्णपट्टिकाबन्धः कटुमानमित्युच्यते, तत्र प्रवेशयेदित्यर्थः । रत्नार्पणाधारबन्धे रूप्यमये ताम्रपादयोजनेन तावद्रूप्यहरणम्, सुवर्णमये रूप्यपादयोजनेन तावत्सुवर्णहरणं च पश्यतोहरैः सुकरं यतः तस्मात् कारणात् आधारबन्धो द्रव्यान्तरमिश्रणात् यत्नेन रक्षणीय इत्युपदिशति— ताम्रपादेत्यादि । संस्कृतकं यथोक्तमिश्रणाशुद्धमपि रूप्यं सुवर्णं वा शुद्धसदृशं प्रतिभायादित्यर्थः । श्रीमूला.

**पृषतकाचकर्मणः । त्रयो हि भागाः परिभाण्डं द्वौ वास्तुकम् । चत्वारो वा वास्तुकं त्रयः परिभाण्डम् ॥**

शुद्धकाचकर्मविधिमुक्त्वा मिश्रकाचकर्मविधिमाह— पृषतेत्यादि । पृषतकाचकर्मणः* गुटिकामिश्रकाचकर्मणि क्रियमाणे तदर्थे सुवर्णे पञ्चधा विभज्य त्रयो भागाः परिभाण्डं पद्मस्वस्तिकाद्याकारं पृषतमणिप्रतिवापस्थानं भवति, द्वौ वास्तुकं द्वौ भागौ आधारपीठबन्धः । इत्येकः प्रकारः । यदि मणयः स्थूलास्तदा विधिमाह— चत्वारो वेत्यादि । श्रीमूला.

**त्वष्टृकर्मणः । शुल्बभाण्डं समसुवर्णेन संयूहयेत् । रूप्यभाण्डं घनं घनसुषिरं वा सुवर्णार्धेन अवलेपयेत् । चतुर्भागसुवर्णं वालुकाहिङ्गुलकस्य रसेन चूर्णेन वा वासयेत् ॥**

त्वष्टृकर्माऽऽह— त्वष्टृत्यादि । त्वष्टृकर्मणः ताम्ररजतनिर्मितघनपत्रादिकर्मणः, विधिरुच्यत इति शेषः । शुल्बभाण्डं ताम्रभाण्डं समसुवर्णेन संयूहयेत् ताम्रपलतुल्यपलेन सुवर्णेन दृढपत्रीकृतेन संयोजयेत् । रूप्यभाण्डं घनम् अङ्गुलीयककङ्कणादि, घनसुषिरं वा स्थालीकलशभृङ्गारादिकं वा सुवर्णार्धेन अवलेपयेत् रूप्यपलशतकृतं भाण्डं पञ्चाशता सुवर्णपलैस्तनुपत्रीकृतैरेव श्लेषयेत् । अवलेपविधिमुक्त्वा वासनाविधिमाह— चतुर्भागसुवर्णमिति । रूप्यभाण्डमिति वर्तते । अयमर्थः— रूप्यपलशतकृतं भाण्डं पञ्चविंशतिपलसुवर्णेन चूर्णीकृतेन वालुकाहिङ्गुलकचूर्णमिश्रेण पारतयुक्तेन तुषाग्निद्रवीकृतेन वासयेत् । एवं तावत् सुवर्णस्य समस्य अर्धस्य चतुर्भागस्य च योजनेन त्रिप्रकारं त्वष्टृकर्म व्युत्पादितम् । श्रीमूला.

* पूर्वोत्तरानुरोधेन 'विधिरुच्यते इति शेषः ।' इति पूर्णविरामचिह्नावसानो ग्रन्थोऽत्र आवश्यकः, स त्रुटितः स्यादिति भाति ।

**तपनीयं ज्येष्ठं सुवर्णं सुरागम्, समसीसातिक्रान्तं पाकपत्रपक्वं सैन्धविकयोज्ज्वालितं नीलपीतश्वेतहरितशुकपोतवर्णानां प्रकृतिर्भवति । तीक्ष्णं चास्य मयूरग्रीवाभं श्वेतभङ्गं चिमिचिमायितं पीतचूर्णितं काकणिकः सुवर्णरागः ॥**

तपनीयकर्माऽऽह— तपनीयमित्यादि । तपनीयम् अलंकारार्थं घटनीयं कनकं ज्येष्ठम् उत्तमं सप्तदशवर्णकं षोडशवर्णकं वा, सुवर्णं किञ्जल्काद्यन्यतमवर्णम्, सुरागं स्निग्धभ्राजिष्णुरागं नीलपीतादीनां पञ्चानां प्रकृतिः कारणं भवति । अनेवंभूताशुद्धस्वर्णविषये आह— समसीसेत्यादिना । समसीसातिक्रान्तं तत्तुल्यमानसीसशोधितम्, पाकपत्रपक्वं तनुपत्रात्मकं कृत्वा अरण्यगोमयदग्धम्, सैन्धविकया सौराष्ट्रमृत्तिकया सह उज्ज्वालितम्, इत्थं शोधनेन संस्कृतं नीलादीनां प्रकृतिर्भवति । तीक्ष्णं चेति । अस्य तपनीयस्य तीक्ष्णं तदाख्यो लोहविशेषश्च, प्रकृतिर्भवतीत्यनुवर्तते, अर्थान्नीलादीनां पञ्चानाम् । कीदृशं तीक्ष्णम्? मयूरग्रीवाभम्, श्वेतभङ्गं छेदे शुक्लम्, चिमिचिमायितम् अत्यन्तभास्वरम्, ईदृशं तीक्ष्णं पीतचूर्णितं तप्तचूर्णीकृतम् । स्वर्णे प्रक्षितमित्यार्थम् । कियति स्वर्णे कियत् तीक्ष्णं रञ्जनार्थं प्रक्षेप्तव्यमित्यत्राऽऽह— काकणिक इति । सुवर्णरागः षोडशमाषप्रमाणस्य सुवर्णस्य रागः रञ्जकः तीक्ष्णांशः काकणिकः— काकणी माषचतुर्भागः, तत्प्रमाणकः । श्रीमूला.

**तारमुपशुद्धं वा । अस्थितुत्थे चतुः, समसीसे चतुः, शुष्कतुत्थे चतुः, कपाले त्रिः, गोमये द्विः, एवं सप्तदशतुत्थातिक्रान्तं सैन्धविकयोज्ज्वालितम् । एतस्मात् काकण्युत्तरापसारिता ।**

**आ द्विमाषादिति सुवर्णे देयम्, पश्चाद्रागयोगः। श्वेततारं भवति ॥**

स्वर्णानन्तरं रूप्यमाह— तारमित्यादि। उपशुद्धम् अत्यन्तशुद्धं तारं रजतम्। वाशब्दो विकल्पे। नीलादीनां प्रकृतिर्भवतीत्यनुवर्तते। तारस्याशुद्धस्य शोधनप्रकारमाह— अस्थितुत्थ इति। अस्थितुत्थे अस्थिचूर्णयुक्तमृत्तिकानिर्मितायां मूषायां चतुः चतुर्वारान् आवर्तितम्। एवं समसीसे मृत्तिकासीससमप्रमाणनिर्मिते तुत्थे चतुः, शुष्कतुत्थे— शुष्कतुत्थः कटुशर्करामूषा इति भट्टस्वामी, तस्यां चतुः, कपाले शुद्धमृत्तिकामूषायां त्रिः, गोमये गोमयकृतमूषायां द्विः। एवं सप्तदशतुत्थातिक्रान्तं सप्तदशमूषावर्तितम्, पश्चात् सैन्धविकया लवणयुक्तसौराष्ट्रमृत्तिकया सह उज्ज्वालितं उज्ज्वलनसंस्कृतम्, शुद्धमित्यार्थम्। एतस्मात् काकणी उत्तरीत्या शोधितात् रूप्यात् काकणी सुवर्णे प्रक्षिप्ता, उत्तरा अपसारिता अधिका सुवर्णकाकणी अपनीता भवति। इति आ द्विमाषात् सुवर्णे देयम्। एवं सुवर्णकाकण्यपनयनपूर्वकरूप्यकाकणीप्रक्षेपोपचयक्रमेण अष्टकाकण्यधिकः सुवर्णे रूप्यप्रक्षेपः कर्तव्यः। पश्चात् रागयोगः रागयोगार्थो यथोक्ततीक्ष्णकाकणीप्रक्षेपः। श्वेततारं भवति एवं करणे स्वर्णं श्वेततारसमप्रभं संपद्यते। केचित्तु श्वेततारं रागार्थं भवतीति व्याचक्षते। श्रीमूला.

**त्रयोंऽशाः तपनीयस्य द्वात्रिंशद्भागश्वेततारमूर्छितं तच्छ्वेतलोहितकं भवति। ताम्रं पीतकं करोति ॥**

रागयोगमाह— त्रयोंऽशा इत्यादि। एवं स्वामी व्याचष्टे— सामान्यसुवर्णात् द्वात्रिंशद्धा विभक्तात् अंशत्रयमपनीय तपनीयस्य यथोक्तप्रकारशोधिततपनीयस्य त्रयोंऽशाः, सामान्यस्वर्णे प्रक्षिप्यन्ते इति शेषः। तत् स्वर्णं द्वात्रिंशद्भागश्वेततारमूर्छितं द्वात्रिंशद्भागिकेन श्वेतरजतेन सह आवर्तितं सत् श्वेतलोहितकं भवति श्वेतलोहितात्मकवर्णद्वयसंभिन्नं भवति। ताम्रं कर्तृ पीतकं पीतवर्णं करोति, अर्थात् तदेव सामान्यस्वर्णं कर्म। इहापि पूर्ववत् 'त्रयोंऽशाः' इत्यादि योजनीयम्, श्वेततारस्थाने च ताम्रम्। तथा च तत् स्वर्णं द्वात्रिंशद्भागिकताम्रेण सहाऽऽवर्तितं सत् पीतवर्णं जायते इत्युक्तं भवति। भाषाटीका त्वन्यथा व्याचष्टे— द्वात्रिंशति भागेषु त्रयोंऽशाः तपनीयस्य शेषास्तु रजतस्येत्येवं मिश्रयित्वा आवर्तने कृते तच्छ्वेतलोहितवर्णं भवति। एवं द्वात्रिंशद्भागात्मके ताम्रे शुद्धसुवर्णस्य त्रीन् भागान् योजयित्वा आवर्तने कृते तत् पीतरागं भवतीति। श्रीमूला.

**तपनीयमुज्ज्वाल्य रागत्रिभागं दद्यात्। पीतरागं भवति ॥**

तपनीयं सामान्यस्वर्णं सैन्धविकयोज्ज्वाल्य रागत्रिभागं शोधितस्वर्णत्रिभागं दद्यात्। पीतरागं भवति तथाकरणे तत् सामान्यस्वर्णं पीतरागं पीतरक्तं भवति। अपरा व्याख्या— तपनीयं शोधितसुवर्णं सैन्धविकयोज्ज्वाल्य तत्र रागत्रिभागं ताम्रत्रिभागं दद्यात्। तत् पीतरागं भवतीति। श्रीमूला.

**श्वेततारभागौ द्वावेकस्तपनीयस्य मुद्गवर्णं करोति ॥**

द्विगुणशुद्धरूप्ययुक्तं शुद्धसुवर्णमावर्तितं मुद्गवर्णं भवतीत्याह— श्वेततारभागावित्यादि। पश्चाद्रागयोग इति सर्वशेषो द्रष्टव्यः। श्रीमूला.

**कालायसस्यार्धभागाभ्यक्तं कृष्णं भवति। प्रतिलेपिना रसेन द्विगुणाभ्यक्तं तपनीयं शुकपत्रवर्णं भवति। तस्याऽऽरम्भे रागविशेषेषु प्रतिवर्णिकां गृह्णीयात् ॥**

कालायसस्य तीक्ष्णस्य अर्धभागाभ्यक्तम् अर्धभागेन रागार्थस्य तीक्ष्णस्य प्रमाणं तृतीयांशः उक्तः तदर्धभागेन अर्थात् षड्भागेन अभ्यक्तम् अनुलिप्तम्, न त्वावर्तितम्, तपनीयं कृष्णम् अञ्जनवर्णं भवति। प्रतिलेपिना द्रवीकृतेन कालायसेन रसेन पारतयुक्तेन द्विगुणाभ्यक्तं द्विगुणमनुलिप्तं तपनीयं शुकपत्रवर्णं भवति। तस्येति। तस्य नीलादेरुक्तस्य आरम्भे रागविशेषेषु शुद्धाशुद्धस्वर्णरजतरूपेषु रञ्जकभेदेषु विषये प्रतिवर्णिकां तारतम्यपरिच्छेदार्थं गृह्णीयात्। श्रीमूला.

**तीक्ष्णताम्रसंस्कारं च बुध्येत । तस्माद्वज्रमणिमुक्ताप्रवालरूपाणामपनेयिमानं च रूप्यसुवर्णभाण्डबन्धप्रमाणानि चेति ॥**

रञ्जनार्थतीक्ष्णताम्रयोः शुद्धिपरिज्ञानापेक्षायामाह— तीक्ष्णेत्यादि । तीक्ष्णताम्रयोः संस्कारं शोधनं बुध्येत धातुशोधनशास्त्राज्जानीयात् । तस्मात् सुवर्णरजतादिशुद्धिप्रकारज्ञानस्य यो हेतुः कारुहरणशङ्कारूपः तेनैव हेतुनेत्यर्थः, वज्रमणिमुक्ताप्रवालरूपाणाम् अपनेयिमानं च असारहीरमाणिक्यादिप्रक्षेपेण सारहीरमाणिक्यादिपरिवर्तनादिकं हरणप्रकारं च, रूप्यसुवर्णभाण्डबन्धप्रमाणानि च रूप्यसुवर्णाभरणादीनां संव्यूहनादीनि च 'शुल्बभाण्डं समसुवर्णेन संयूहयेत्' इत्यादिनोक्तानि, बुध्येतेति संबध्यते । इतिशब्दः प्रकारे । श्रीमूला.

**समरागं समद्वन्द्वमसक्तपृषतं स्थिरम् ।**
**सुप्रमृष्टमसंपीतं विभक्तं धारणे सुखम् ॥**
**अभिनीतं प्रभायुक्तं संस्थानमधुरं समम् ।**
**मनोनेत्राभिरामं च तपनीयगुणाः स्मृताः ॥**

अध्यायान्ते श्लोकद्वयं तपनीयगुणचतुर्दशकप्रतिपादकमाह— समरागमित्यादि । समरागं समवर्णिकम्, समद्वन्द्वं तोलनतो वर्णतश्च स्वसमानद्वितीयम्, असक्तपृषतम् असंसक्तगुटिकम्, स्थिरम् अविसंवादि, सुप्रमृष्टं पूर्वोक्तविधिना सैन्धविकया सम्यगुज्ज्वालितम्, 'अप्रमृष्टम्' इति पाठे अकृत्रिमच्छायम्, असंपीतं छायोत्कर्षार्थं पायितं न भवति, विभक्तं सुविभक्तावयवम्, धारणे सुखम् आमुञ्चताम् अदुःखकरम्, अभिनीतम् अनुद्ध(? ल्ब)णम्, प्रभायुक्तं द्युतिमत्, संस्थानमधुरं आकृतिरमणीयम्, समम् अनिम्नोन्नतप्रदेशम्, मनोनेत्राभिरामं मनोहरं दृष्टिसुखं च तपनीयगुणाः स्वर्णाभरणगुणाः । श्रीमूला.

आपणे नियुक्तस्य सौवर्णिकस्य कर्माणि

**[1]सौवर्णिकः पौरजानपदानां रूप्यसुवर्णमावेशनिभिः कारयेत् । निर्दिष्टकालकार्यं च कर्म कुर्युः, अनिर्दिष्टकालं कार्यापदेशम् ॥**

(१) कौ. २।१४.

'विशिखायां सौवर्णिकप्रचारः' इति सूत्रम् । विशिखायाम्— विशिखा इह सौवर्णिकविपणिः, तस्यां सौवर्णिकप्रचारः सौवर्णिकस्य सुवर्णे नियुक्तस्य प्रचारः व्यापारः, सोऽभिधीयते इत्यर्थः । पूर्वाध्याये शिल्पवत्त्वाभिजात्यप्रात्ययिकत्वादिगुणयुक्तं विशिखायां सौवर्णिकं कुर्यादित्युक्तम् । तस्य व्यापारस्तु नोक्तः । स इहोच्यते इति संबन्धः ।

सौवर्णिक इति । सौवर्णिकः पौरजानपदानां पुरवासिनां बहिर्विषयवासिनां च रूप्यसुवर्णे रूप्यशिल्पं सुवर्णशिल्पं च आवेशनिभिः शिल्पिशालीयैः सुवर्णकारादिभिः कारयेत् । निर्दिष्टकालकार्यं च कर्म कुर्युः इयता कालेनेदशं कटकाङ्गदादि निर्मायार्पणीयम् एतावच्च वेतनमिति परिभाषणपूर्वं शिल्पं कुर्युः, अर्थादावेशनिनः । कार्यापदेशम् अनिर्दिष्टकालमिति निर्मातव्यवस्तुगौरवनिमित्तं तु अपरिभाषितकालमपि कर्म कुर्युः । श्रीमूला.

**कालातिपातने पादहीनं वेतनं तद्द्विगुणश्च दण्डः । कार्यस्यान्यथाकरणे वेतननाशः तद्द्विगुणश्च दण्डः ॥**

परिभाषितकालातिक्रमे पादहीनं परिभाषितचतुर्भागहीनं वेतनं भवति, तद्द्विगुणः गृह्यमाणवेतनद्विगुणः दण्डश्च भवति । कार्यस्यान्यथाकरणे कटकं परिभाष्य केयूरादिकरणे वेतननाशः तद्द्विगुणः नष्टवेतनद्विगुणः दण्डश्च भवति । कण्टकशोधने कारुकरक्षणे कारूणां सर्वेषां दण्ड उक्तः । सुवर्णकारूणां त्विह दण्डकथनं विशेषज्ञापनार्थम्— कार्वन्तरदण्डवत् सुवर्णकारुदण्डं प्रशास्तारः केवला न कुर्युः, किंतु सौवर्णिकसहिता एव कुर्युरिति । श्रीमूला.

**यथावर्णप्रमाणं निक्षेपं गृह्णीयुस्तथाविधमेवार्पयेयुः, कालान्तरादपि च तथाविधमेव प्रतिगृह्णीयुरन्यत्र क्षीणपरिशीर्णाभ्याम् ॥**

निक्षेपं घटनीयरूप्यसुवर्णादि यथावर्णप्रमाणं यद्वर्णिकं यत्प्रमाणं च गृह्णीयुः तथाविधमेव तत्प्रकारमेव, न तु लेशतोऽपि वर्णप्रमाणयोर्हीनम्, अर्पयेयुः कारवः । कालान्तरादपि चेति । ग्रहीतुः कारुकस्य दीर्घप्रवासादिना

मरणादिना वा निमित्तेन तत्पुत्रादिहस्तादपि च तथाविधमेव प्रतिगृह्णीयुः स्वार्पितवर्णप्रमाणकमेव निक्षेपं प्रतिगृह्णीयुः, न तु तदभ्यधिकवर्णप्रमाणकं कालातिपातदोषापदेशेन प्रार्थयेयुः, न वा पुत्रादीनां वेतनहानिर्दण्डो वेत्यभिप्रायः। अपरा व्याख्या— कालान्तरादपि देशविभ्रमादिनिमित्ते कालातिपाते जातेऽपि तथाविधमेव यथानिक्षिप्तमघटितमेव अर्पयेयुः कारवः, निक्षेपकाश्च प्रतिगृह्णीयुरिति। तत्रापवादमाह— क्षीणपरिशीर्णाभ्यामन्यत्र उपभोगघृष्टं प्रच्युतावयवं च निक्षेपमपहाय। क्षीणपरिशीर्णयोस्तु दण्डो दाप्य एव। श्रीमूला.

**आवेशनिभिः सुवर्णपुद्गललक्षणप्रयोगेषु तत्तज्जानीयात्॥**

सुवर्णपुद्गललक्षणप्रयोगेषु— सुवर्णः किञ्जल्कवर्णादिः, पुद्गलम् आभरणभृङ्गारादि, लक्षणं मुद्रा, एतेषां स्वर्णादिसंबन्धिनां प्रयोगेषु व्यवहारेषु हरणोपायानुष्ठानेषु वा तत्तत् छलमच्छलं च ज्ञेयं सर्वं वस्तुतत्त्वम् आवेशनिभिर्जानीयात् शिल्पिद्वारेण विद्यात् सौवर्णिकः।

श्रीमूला.

**तप्तकलधौतकयोः काकणिकः सुवर्णे क्षयो देयः। तीक्ष्णकाकणी रूप्यद्विगुणा रागप्रक्षेपस्तस्य षड्भागः क्षयः॥**

'अन्यत्र क्षीणपरिशीर्णाभ्याम्' इत्युक्तस्य प्रतिप्रसवमाह— तप्तेत्यादि। तप्तकलधौतकयोः अशुद्धस्वर्णरजतयोर्विषये सुवर्णे काकणिकः षोडशमाषके माषचतुर्भागप्रमाणः क्षयो देयः निक्षेपं घटितं तावन्मात्रन्यूनमेव निक्षेपकः प्रतिगृह्णीयात्। तीक्ष्णकाकणी कालायसकाकणी रूप्यद्विगुणा रजतकाकणीद्वययुक्ता रागप्रक्षेपः रागार्थं षोडशमाषकस्वर्णे प्रक्षेप्तव्येत्यर्थः। तस्य षड्भागः प्रक्षिप्तकाकणीत्रयस्य षड्भागः अर्धादर्धकाकणिकः क्षयः देयो भवति।

श्रीमूला.

**वर्णहीने माषावरे पूर्वः साहसदण्डः, प्रमाणहीने मध्यमः, तुलाप्रतिमानोपधावुत्तमः, कृतभाण्डोपधौ च॥**

अथ दण्डमाह— वर्णेत्यादि। माषावरे वर्णहीने माषप्रमाणे सुवर्णे उत्कृष्टवर्णहानिं नीते सति पूर्वः साहसदण्डः। माषावरे प्रमाणहीने प्रतिमानहानिं नीते सति मध्यमः साहसदण्डः। तुलाप्रतिमानोपधौ न केवलं माषमात्रप्रतिमानहानिः, किंतु ह्रापितप्रतिमानस्य पूरणकैतवमपि यत्र प्रयुज्यते तादृशे विषये इत्यर्थः, उत्तमः साहसदण्डः। कृतभाण्डोपधौ च माषावरविषये घटितरूपपरिवर्तनादिकैतवे च उत्तमः साहसदण्डः। अनया दिशा द्विमाषत्रिमाषादिविषयहान्यादौ तत्तद्दण्डद्वैगुण्यत्रैगुण्यादिकमूह्यम्। श्रीमूला.

**सौवर्णिकेनादृष्टमन्यत्र वा प्रयोगं कारयतो द्वादशपणो दण्डः, कर्तुर्द्विगुणः, सापसारश्चेत्। अनपसारः कण्टकशोधनाय नीयेत। कर्तुश्च द्विशतो दण्डः पणच्छेदनं वा॥**

सौवर्णिकेनाननुमतं विशिखायाम्, अनुमतमपि वा विशिखातोऽन्यत्रालङ्कारादिनिर्माणं कारयतः कर्तुश्च दण्डमाह— सौवर्णिकेनेत्यादि। सापसारश्चेदिति। कारयिता यदि सापसारः तदा अयं दण्ड इत्यर्थः। अपसारः अपसरणम्, तच्च स्वर्णादेः स्वामिशुद्धागमप्रतिपादनेन चोरशङ्काकलङ्कादात्मव्यावृत्तिः, तद्वान् सापसारः। अनपसारविषये त्वाह— अनपसार इति। अनपसारश्चेत् कारयिता कण्टकशोधनाय वाक्यकर्मानुयोगादिना शुद्धाशुद्धत्वनिर्णयाय नीयेत प्रदेष्टृसंनिधिम्। कर्तुश्च स्वर्णकारादेरनपसारस्य द्विशतो दण्डो भवति। तस्य द्विशतपणदण्डदानासामर्थ्ये त्वाह— पणच्छेदनं वेति। पणच्छेदनं पणनसाधनपञ्चाङ्गुलिच्छेदनम्। श्रीमूला.

**तुलाप्रतिमानभाण्डं पौतवहस्तात् क्रीणीयुः। अन्यथा द्वादशपणो दण्डः॥**

तुलाप्रतिमानभाण्डं तुलाप्रतिमानसाधनं माषद्विमाषादिकम्, उपलक्षणात् प्रस्थद्रोणादिकं मानसाधनं च पौतवहस्तात् वक्ष्यमाणपौतवाध्यक्षसकाशात् क्रीणीयुः क्रीत्वा तेन व्यवहरेयुः सुवर्णकारादयः। 'तुलामानभाण्डम्' इति पाठे तुलाभाण्डं माषद्विमाषादिकं मानभाण्डं प्रस्थद्रोणादिकं चेति व्याख्येयम्। अन्यथा स्वयं

निर्माणे अन्यतः क्रयणे वा द्वादशपणो दण्डः ।

श्रीमूला.

**घनं घनसुषिरं संयूह्यमवलेप्यं संघात्यं वासितकं च कारुकर्म ॥**

अथ हरणोपायद्वारभूतं कारोः कर्म षट्प्रकारमाह— घनमित्यादि । घनम् अङ्गुलीयकादि, घनसुषिरं भृङ्गारादि, संयूह्यं स्थूलपत्रयोजनम्, अवलेप्यं लघुपत्रयोजनम्, संघात्यं कटिसूत्रादि, वासितकं रसादिना वासितम् ।

श्रीमूला.

**तुलाविषममपसारणं विस्रावणं पेटकः पिङ्कश्चेति हरणोपायाः ॥**

तेषु कर्मसु प्रयोज्यान् पञ्च हरणोपायान् नामत उद्दिशति— तुलेत्यादि ।

श्रीमूला.

**संनामिन्युत्कीर्णिका भिन्नमस्तकोपकण्ठी कुशिक्या सकटुकक्ष्या पारिवेल्ल्ययस्कान्ता च दुष्टतुलाः ॥**

तत्र तुलाविषममाह— संनामिनीत्यादि । संनामिनी मृदुलोहनिर्मिता यथाकामसंनाम्या । उत्कीर्णिका तीक्ष्णचूर्णेन पारतेन वा पूरिताभ्यन्तरसुषिरा । भिन्नमस्तका सरन्ध्राग्रा । सा हि वाताभिमुखं धृता वातेन नामिता भवतीति । उपकण्ठी ग्रन्थिबहुला । कुशिक्या— शिक्यं तोल्यवस्तुनिवेशाधारः, तत् कुत्सितं यस्याः सा । सकटुकक्ष्या अप्रवणसूत्रा । पारिवेल्ली— परिवेल्लः परिचलनम्, तद्वती । अयस्कान्ता अयस्कान्ताख्यलोहनिर्मिता । सा हि यतः स्वर्णं ततो याति । चः समुच्चये । अष्टावेता दुष्टतुलाः । इत्थं संभाविताष्टविधदुष्टतुलं तुलाविषमम् ।

श्रीमूला.

**रूप्यस्य द्वौ भागावेकः शुल्बस्य त्रिपुटकम् । तेनाकरोद्गतमपसार्यते तत् त्रिपुटकापसारितम्, शुल्बेन शुल्बापसारितम्, वेल्लकेन वेल्लकापसारितम्, शुल्बार्धसारेण हेम्ना हेमापसारितम् ॥**

अथापसारणमुच्यते । तत्र यदसारद्रव्यं प्रक्षिप्य सारद्रव्यमपसार्यते अपह्रियते तदपद्रव्यं चतुर्विधमादावाह— रूप्यस्येति । द्वौ रूप्यस्य भागौ एकः शुल्बस्य भागः इति भागत्रयमिदं मेलयित्वा आवर्तितं त्रिपुटकं तत्संज्ञम् । तेन त्रिपुटकेन प्रक्षिप्तेन आकरोद्गतं शुद्धम् अपसार्यते आकर एवाशुद्धमिदमुत्पन्नमिति व्यपदिश्यापह्रियते तत् तथाविधमपसारणसाधनं त्रिपुटकापसारितं तदाख्यमपद्रव्यमेकम् । शुल्बेन ताम्रप्रक्षेपेण अपसार्यते तथाऽपह्रियते तत् शुल्बापसारितं तदाख्यम् अपसारणसाधनं द्वितीयम् । वेल्लकेन— तीक्ष्णलोहं रूप्यं च समभागमावर्तितं वेल्लकमिति प्रसिद्धम्, तेन साधनेन प्रक्षिप्तेन अपसार्यते तत् वेल्लकापसारितं तृतीयम् । शुल्बार्धसारेण ताम्रसमभागयोगावर्तितेन हेम्ना साधनेन अपसार्यते तथाऽपह्रियते तत् तथाविधं साधनं हेमापसारितं तत्संज्ञं चतुर्थम् ।

श्रीमूला.

**मूकमूषा पूतिकिट्टः करटकमुखं नाली संदंशो जोङ्गनी सुवर्चिका लवणं तदेव सुवर्णमित्यपसारणमार्गाः । पूर्वप्रणिहिता वा पिण्डवालुका मूषाभेदादग्निष्ठा उद्भ्रियन्ते ॥**

अथापद्रव्यप्रक्षेपेण सारद्रव्यापहरणस्य मार्गानाह— मूकमूषेत्यादि । मूकमूषा ससंपुटार्धमूषा, पूतिकिट्टः लोहमलम्, करटकमुखं काकमुखं कर्तरीमुखं वा, नाली प्रसिद्धा, संदंशः कङ्कमुखम्, जोङ्गनी लोहकटिका, सुवर्चिका क्षारविशेषः, लवणं प्रसिद्धम्, तदेव सुवर्णमिति तादृशं हीनवर्णकमेवाकरोद्गतं सुवर्णमिति मिथ्यावादः अपसारणमार्गाः त एते सुवर्णापहरणोपायाः । अयमर्थः— आकरोद्गते मूकमूषायामावर्त्यमाने शुद्धसुवर्णे लोहमलहरणव्याजेन सुवर्चिकालवणक्षेपव्याजेन च त्रिपुटकादिकमपद्रव्यं प्रक्षिप्य करटमुखादिना साधनेन शुद्धसुवर्णमपहरन्ति सुवर्णकाराः कृतकच्छायमीदृशमेव सुवर्णमाकरादुद्गतमिति वदन्त इति । हरणोपायविकल्पमाह— पूर्वप्रणिहिता वेति । पूर्वप्रणिहिताः पूर्वमेवाग्नौ प्रक्षिप्ताः पिण्डवालुका वा । अपसारणमार्गा इति संबध्यते । द्रव्यधात्वनुगमपरिगृहीततच्छायाः सूक्ष्मवालुकाः द्रवीभूतेन रूप्येण सुवर्णेन वा संपर्कात् पिण्डतां प्रतिपन्नाः पिण्डवालुकाः । उपायीभावप्रकारमाह— मूषाभेदादग्निष्ठा

उद्ध्रियन्त इति । पूर्वमेवाग्निप्रक्षिप्तपिण्डवालुकाप्रमाणं सारद्रव्यमपहृत्य मूषा भिन्नेत्यपदेशेन तत्संपृक्तास्ता एव पिण्डवालुकास्तत्स्वामिसमक्षम् अग्नेरुद्ध्रियन्ते इत्यर्थः ।

श्रीमूला.

**पश्चाद्बन्धने आचितकपत्रपरीक्षायां वा रूप्यरूपेण परिवर्तनं विस्रावणम्, पिण्डवालुकानां लोहपिण्डवालुकाभिर्वा ॥**

विस्रावणमाह– पश्चादित्यादि । पश्चाद्बन्धने पूर्वं निर्मितस्य उत्तरकालसंधानप्रसङ्गे आचितकपत्रपरीक्षायां वा प्रचुरघटितपत्रपरीक्षाप्रसक्तौ वा रूप्यरूपेण परिवर्तनं रजतभाण्डप्रक्षेपेण सुवर्णमयस्य विनिमानं विस्रावणम् । इत्येको विस्रावणप्रकारः । अपरमाह– पिण्डेत्यादि । पिण्डवालुकानां सुवर्णाकरसंभूतानां लोहपिण्डवालुकाभिः लोहाकरसंभूताभिर्वालुकाभिः परिवर्तनं वा विस्रावणम् ।

श्रीमूला.

**गाढश्चाभ्युद्धार्यश्च पेटकः संयूह्यावलेप्यसंघात्येषु क्रियते । सीसरूपं सुवर्णपत्रेणावलिप्तमभ्यन्तरमष्टकेन बद्धं गाढपेटकः । स एव पटलसंपुटेष्वभ्युद्धार्यः । पत्रमाश्लिष्टं यमकपत्रं वावलेप्येषु क्रियते । शुल्बं तारं वा गर्भः पत्राणाम् । संघात्येषु क्रियते शुल्बरूपं सुवर्णपत्रसंहतं प्रमृष्टं सुपार्श्वम् । तदेव यमकपत्रसंहतं प्रमृष्टम् । ताम्रताररूपं चोत्तरवर्णकः ॥**

पेटकमाह– गाढश्चेति । पेटकः संश्लेषः, पिटधातोः संश्लेषणार्थत्वात् । स गाढश्च अभ्युद्धार्यश्चेति द्विविधः । संयूह्यावलेप्यसंघात्येषु संयूह्यादिषु त्रिषु पूर्वोक्तेषु कर्मसु विषये क्रियते अनुष्ठीयते । सीसरूपं सीसपत्रं सुवर्णपत्रेण अवलिप्तम् आच्छादितम्, अभ्यन्तरं आच्छादिताच्छादकयोरन्तरालम् अष्टकेन बद्धं जतुसर्जरसादिना पटलसंपुटेषु दृढसंश्लेषणार्थं बद्धम्, यदि भवतीति शेषः । गाढपेटकः अर्थात् स एष बन्धो गाढपेटकाख्यः । स एवेति । स एव पेटकः पटलसंपुटेषु अभ्युद्धार्यः अष्टकबन्धरहितत्वादभ्युद्धर्तुं शक्यः इति सोऽभ्युद्धार्यपेटकः । स एष द्रव्यापद्रव्ययोः समप्रविभागिके संयूहने हरणप्रकारः । अथ सारार्धभागेषु लेप्येषु हरणप्रकारमाह– पत्रमिति । पत्रं सुवर्णपत्रम् आश्लिष्टम् एकपार्श्वयोजितं यमकपत्रं वा उभयपार्श्वयोजितं वा अवलेप्येषु क्रियते । बहिःपत्रमुक्त्वा गर्भपत्रमाह– शुल्बं तारं वा पत्राणां सुवर्णपत्राणां गर्भः क्रियते । संघात्यविषयं विधिमाह– संघात्येष्विति । संघात्येषु विषये शुल्बरूपं ताम्रभाण्डं सुवर्णपत्रसंहतम् एकपार्श्वे सुवर्णपत्रच्छादितं प्रमृष्टं प्रकर्षेणोज्ज्वलितं सुपार्श्वं शोभनैकपार्श्वं क्रियते । तदेव शुल्बरूपं यमकपत्रसंहतम् उभयपार्श्वयोः सुवर्णपत्रावच्छादितं प्रमृष्टं क्रियते । पूर्वस्य सुपार्श्वमिति संज्ञा समनन्तरस्य प्रमृष्टमिति संज्ञेत्येके । ताम्रताररूपं च उत्तरवर्णक इति । न केवलं सुवर्णपत्रं यथोक्तमवच्छादनार्थमुपयुज्यते, किंतु ताम्रभाण्डरजतभाण्डे अपीत्यर्थः । ताभ्यां पुनरौचित्यात् कृष्णायसादिभाण्डमवच्छाद्यं भवतीत्यवगन्तव्यम् ।

श्रीमूला.

**तदुभयं तापनिकषाभ्यां निःशब्दोल्लेखनाभ्यां वा विद्यात् । अभ्युद्धार्यं बदराम्ले लवणोदके वा सादयन्ति । इति पेटकः ॥**

पेटकस्य परीक्षामाह– तदुभयमिति । तदुभयं गाढपेटकं अभ्युद्धार्यपेटकं च तापनिकषाभ्याम् अग्नितापननिकषघर्षणाभ्याम्, निःशब्दोल्लेखनाभ्यां वा– निःशब्दं शब्दहीनं छेदनम्, उल्लेखनं तीक्ष्णमुखलेखनम्, ताभ्यां वा विद्यात् । अभ्युद्धार्ये विशेषमाह– अभ्युद्धार्यं बदराम्ले कर्कन्धूफलरसे लवणोदके वा सादयन्ति निवेशयन्ति । तथा करणे लोहितवर्णः संजायते इति भाषाटीका । इति पेटकः, व्याख्यात इति शेषः । श्रीमूला.

**घनसुषिरे वा रूपे सुवर्णमृन्मालुकाहिङ्गुलुककल्को वा तप्तोऽवतिष्ठते । दृढवास्तुके वा रूपे वालुकामिश्रजतुगान्धारपङ्को वा तप्तोऽवतिष्ठते । तयोस्तापनमवध्वंसनं वा शुद्धिः । सपरिभाण्डे वा रूपे लवणमुल्कया कटुशर्करया तप्तमवतिष्ठते । तस्य क्वाथनं शुद्धिः । अभ्रपटलमष्टकेन द्विगुणवास्तुके वा रूपे बध्यते । तस्यापिहितकाचकस्योदके निमज्जत एकदेशः**

**सीदति । पटलान्तरेषु वा सूच्या भिद्यते । मणयो रूप्यं सुवर्णं वा घनसुषिराणां पिङ्कः । तस्य तापनमवध्वंसनं वा शुद्धिः । इति पिङ्कः ॥**

पञ्चविधं पिङ्कं तत्परीक्षणं चाऽऽह— घनेत्यादि । घनसुषिरे रूपे घने सुषिरवति च भाण्डे कटकाद्यलंकारे सुवर्णमृन्मालुकाहिङ्गुलुककल्को वा— सुवर्णमृत् सुवर्णमालुका च धातुविशेषौ, हिङ्गुलुकः जातिहिङ्गुलकः, एतेषां मिलितानां कल्कः तप्तः तापयित्वा प्रक्षिप्तः अवतिष्ठते अवस्थितो भवति । अतस्तद्योजनेन तावत् स्वर्णमपह्रियते इत्यर्थः । अन्यदपद्रव्यमाह— दृढवास्तुके रूपे वा दृढपीठबन्धे अलंकारे वा वालुकामिश्रः पिण्डवालुकायुक्तः जतुगान्धारपङ्कः लाक्षासिन्दूरपङ्कः तप्तोऽवतिष्ठते । तत्र शुद्धिमाह— तयोः घनसुषिरदृढवास्तुकयोर्विषये तापनं दाहः, अवध्वंसनं वा ताडनं वा शुद्धिः शोधनोपायः । सपरिभाण्डे रूपे पृषतमणिबन्धे लवणम् उल्कया ज्वालया कटुशर्करया तप्तं मृदुपाषाणविशेषेण सह तप्तम् अवतिष्ठते । तस्य क्वाथनम् अर्थात् बदराम्लोदके, शुद्धिः शुद्धिहेतुः । पिङ्कस्य प्रकारान्तरमाह— अभ्रेत्यादि । अभ्रपटलं काचमणिः, अष्टकेन द्विगुणवास्तुके लाक्षादिना द्विगुणावगाढबन्धे रूपे बध्यते संबध्यते अवतिष्ठते इत्यर्थः । तत्परीक्षामाह— तस्येति । तस्य प्रत्युप्तमणेरन्तरवच्छादितकाचस्य सुवर्णाभरणस्य उदके निमज्जतः परीक्षार्थं बदराम्लोदके प्रक्षिप्तस्य एकदेशः सीदति अभ्रपटलरहितः अवयवः गुरुत्वादधो गच्छति, अर्थात् एकदेशान्तरमभ्रपटलयुक्तं लघुत्वादधो न गच्छति । अभ्रपटलातिरिक्तताम्रपटलादिविषये तु सूच्या भेदनमेव शुद्धिज्ञानोपाय इत्याह— पटलान्तरेष्विति । पुनः पिङ्कस्य घनसुषिराभरणविषये त्रीन् प्रकारानाह— मणय इति । घनसुषिराणां घनसुषिराभरणविषये मणयः पिङ्कः काचमणयः, जात्यमणिहरणोपायः, रूप्यं पिङ्कः रजतं सुवर्णहरणोपायः, सुवर्णं पिङ्कः अशुद्धं स्वर्णं शुद्धस्वर्णहरणोपायः । तत्र शोधनप्रकारमाह— तस्येत्यादि । इति पिङ्कः, व्याख्यात इति शेषः ।

श्रीमूला.

**तस्माद्वज्रमणिमुक्ताप्रवालरूपाणां जातिरूपवर्णप्रमाणपुद्गललक्षणान्युपलभेत ॥**

उच्चावचहरणोपायसंभवात् वज्रमणिमुक्ताप्रवालरूपाणां वज्रादिरूपाणां चतुर्णां जातिरूपवर्णप्रमाणपुद्गललक्षणानि— जातिः उत्पत्तिः, रूपम् आकारः, वर्णः रागः, प्रमाणं माषकादिपरिमाणम्, पुद्गलम् आभरणम्, लक्षणं लक्ष्म, एतानि उपलभेत विद्यात् । श्रीमूला.

**कृतभाण्डपरीक्षायां पुराणभाण्डप्रतिसंस्कारे वा चत्वारो हरणोपायाः— परिकुट्टनमवच्छेदनमुल्लेखनं परिमर्दनं वा । पेटकापदेशेन पृषतं गुणं पिटकां वा यत् परिशातयन्ति तत् परिकुट्टनम् । यद्द्विगुणवास्तुकानां वा रूपे सीसरूपं प्रक्षिप्याभ्यन्तरमवच्छिन्दन्ति तदवच्छेदनम् । यद्घनानां तीक्ष्णेनोल्लिखन्ति तदुल्लेखनम् । हरितालमनःशिलाहिङ्गुलकचूर्णानामन्यतमेन कुरुविन्दचूर्णेन वा वस्त्रं संयूह्य यत् परिमृद्नन्ति तत् परिमर्दनम् । तेन सौवर्णराजतानि भाण्डानि क्षीयन्ते । न चैषां किंचिदवरुग्णं भवति ॥**

इदानीं कृतभाण्डपरीक्षणविषयं परिकुट्टनादिकं हरणोपायचतुष्टयमाह— कृतेत्यादि । पुराणभाण्डप्रतिसंस्कारे वा जीर्णभाण्डनवीकरणे वा । परिकुट्टनादिकं लक्षयति— पेटकेत्यादि । पेटकापदेशेन पूर्वोक्तपेटकपरीक्षणव्याजेन पृषतं क्षुद्रगुटिकाम्, गुणं कटकाद्यंशमल्पम्, पिटकां वा बृहदंशं वा यत् परिशातयन्ति पातयन्ति तत् परिकुट्टनं तदाख्यम् । द्विगुणवास्तुकानां बहुपत्रपुटघटितानां रूपे भाण्डे सीसरूपं सीसपत्रं सुवर्णानुलिप्तं प्रक्षिप्य अभ्यन्तरं सुवर्णपत्रं यदवच्छिन्दन्ति अवच्छिद्यापहरन्ति तदवच्छेदनं नाम । घनानां घननिर्मितानाम्, रूप इति वर्तते, तीक्ष्णेन निशितशस्त्रेण यदुल्लिखन्ति तत् उल्लेखनम् । हरितालमनःशिलाहिङ्गुलकानाम् अन्यतमचूर्णेन (वा ?) कुरुविन्दाख्यपाषाणविशेषचूर्णेन च वस्त्रं संयूह्य मिश्रयित्वा यत् परिमृद्नन्ति यत् परिघर्षयन्ति तत् परिमर्दनं तदाख्यम् । तेन परिमर्दनेन सौवर्णराजतानि भाण्डानि क्षीयन्ते प्रमाणहानिं प्राप्नुवन्ति । एषां भाण्डानाम्

अवरुग्णं भङ्गः किंचित् न च भवति मनागपि न भवति च । सोऽयं विनैव भाण्डभङ्गमपहरणोपायः । श्रीमूला.

**भग्नखण्डघृष्टानां संयूह्यानां सदृशेनानुमानं कुर्यात् । अवलेप्यानां यावदुत्पाटितं तावदुत्पाट्यानुमानं कुर्यात् । विरूपाणां वा । तापनमुदकपेषणं च बहुशः कुर्यात् ॥**

परिकुट्टनादिकृतं वर्णकणिकादिपातनं एतावदिति कथं निर्णेतव्यं तत्राऽऽह– भग्नेत्यादि । संयूह्यानां दृढपत्रघटितभाण्डानां भग्नखण्डघृष्टानाम्– भग्नं परिकुट्टनशातितम् , खण्डम् अवच्छेदनहृतम् , घृष्टम् उल्लेखनपरिमर्दनकर्मापहृतम् , एषां भग्नादीनां सदृशेनानुमानं कुर्यात् सजातीयावयवप्रमाणेन लिङ्गेनानुमितिं कुर्यात् । भग्नस्यावयवस्य अभग्नावयवप्रमाणेन, खण्डस्य अखण्डावयवप्रमाणेन, घृष्टस्य अघृष्टावयवप्रमाणेन च इयत्तां निश्चिनुयादित्यर्थः । अवलेप्यानामिति । अवलेप्यानां तनुपत्रघटितभाण्डानां यावदुत्पाटितं तावदुत्पाट्यानुमानं कुर्यात् यावानंशोऽवच्छिद्य गृहीतस्तावन्तमपरमंशमवच्छिद्य तत्प्रतिमानेनापहृतांशमानं निश्चिनुयात् । विरूपाणामिति । विरूपाणां वा प्रचुरापद्रव्यमिश्रणेन हीनवर्णकतामापादितानां सुवर्णभाण्डानां च, सदृशेनानुमानं कुर्यादित्यनुवर्तते । प्रतिमिततदीयैकांशस्य शुद्धीकरणेन वर्णहानीयत्तां विज्ञाय तत्सादृश्येन शेषांशानां वर्णहानीयत्तामभ्यूहेदित्यर्थः । शोधनप्रकारमाह– तापनमिति । तापनं पत्रीकृत्याग्नौ दहनं उदकपेषणं च ततमुदके प्रक्षिप्य चुक्रिकायोजनेन कुट्टनं च बहुशः बहुकृत्वः कुर्यात् । यावत् वैवर्ण्यमपैति तावदित्यार्थम् । इयत्तानिर्णयफलं तु ' वर्णहीने माषकावरे पूर्वः साहसदण्डः ' इत्यादि पूर्वोक्तदण्डविधानम् । श्रीमूला.

**अवक्षेपः प्रतिमानमग्निर्गण्डिका भण्डिकाधिकरणी पिञ्छः सूत्रं चेल्लं बोल्लनं शिर उत्सङ्गो मक्षिका स्वकायेक्षा दृतिरुदकशरावमग्निष्ठमिति काचं विद्यात् ॥**

पूर्वोक्ताकरोद्भवापसारणमार्गातिरेकिणोऽवक्षेपादीन् सप्तदश हरणोपायानाह– अवक्षेप इति । अवक्षेपः हस्तलाघवेन सारमपहृत्य अपद्रव्यप्रक्षेपः , प्रतिमानं तद्विनिमयादि, अग्निः अग्निमध्ये हरणप्रयोगः , गण्डिका काष्ठाधिकरणी रत्नप्रतिवापाधारकाष्ठम् , भण्डिका उपस्काराधारः स्वर्णद्रवनिषेकसाधनम् , अधिकरणी अयस्पात्रविशेषः , पिञ्छः मयूरबर्हः , सूत्रं सुवर्णतुलातन्तुः , चेल्लं वस्त्रम् , बोल्लनं कथाव्याजेन द्रष्टृचित्तव्याक्षेपकरणम् , 'चेल्लबोल्लनम्' इति समस्तपाठे वस्त्रपटलिका, शिरः शीर्षकण्डूयनादि, उत्सङ्गः अङ्कः , उपलक्षणात् गुह्यप्रदेशश्च, मक्षिका मक्षिकानिवारणव्याजेन निर्यासद्रवलिप्तस्वाङ्गसंश्लेषणम् , स्वकायेक्षा स्वेदादिदर्शनव्याजः , दृतिः ध्मानभस्त्रा, उदकशरावं जलपात्रम् , अग्निष्ठम् अग्निप्रक्षिप्तमपद्रव्यम् इति एवंप्रकारं काचम् अपहरणोपायं विद्यात् ।

श्रीमूला.

**राजतानां विस्रं मलग्राहि परुषं प्रस्तीतं विवर्णं वा दुष्टमिति विद्यात् ॥**

राजतानां पञ्च दुष्टिचिह्नान्याह– राजतानामित्यादि । राजतोक्त्या पूर्वोक्तस्य स्वर्णविषयत्वं सूचितम् । विस्रं सीसादिसंसर्गदुर्गन्धि । मलग्राहि मलिनम् । परुषं खरस्पर्शम् । प्रस्तीतं कठिनम् । विवर्णम् अपद्रव्यमिश्रणोपहतनिजप्रभम् । एतच्छोधनप्रकारस्तु ' अस्थितुत्थे चतुः समसीसे चतुः ' इत्यादिना पूर्वाध्याये दर्शित एव ।

श्रीमूला.

**एवं नवं च जीर्णं च विरूपं चापि भाण्डकम् । परीक्षेतात्ययं चैषां यथोद्दिष्टं प्रकल्पयेत् ॥**

अध्यायान्ते श्लोकमाह– एवमित्यादि । विरूपम् अपद्रव्यमिश्रणदूषितम् । अत्ययं दण्डम् । यथोद्दिष्टं ' वर्णहीने माषकावरे ' इत्यादिना विहितप्रकारम् । प्रकल्पयेत् प्रकर्षेण कल्पयेत् अवश्यं प्रयुञ्जीतेत्यर्थः । उदाहृतौ चात्र भट्टस्वामिना बार्हस्पत्यौ श्लोकौ– ' अचोराश्चोरधर्माणो वणिजः कारवस्तथा । तस्मात्तेषु न विश्वासः कर्तव्यो भूतिमिच्छता ॥ प्रकाशतस्करानेतान् परद्रव्यापहारिणः । शिल्पिनो वणिजश्चैव राजा दण्डेन वारयेत् ॥ ' इति । श्रीमूला.

कोष्ठागाराध्यक्षस्य कर्तव्यानि

**कोष्ठागाराध्यक्षः सीताराष्ट्रक्रयिमपरिवर्तकप्रामित्यकापमित्यकसिंहनिकान्यजातव्ययप्रत्यायोपस्थानान्युपलभेत ॥**

'कोष्ठागाराध्यक्षः' इति सूत्रम् । कोष्ठम् उदरम्, तेन तदर्थानि धान्यस्नेहक्षारलवणादीन्यभ्यवहार्यद्रव्याणि लक्ष्यन्ते । तेषामगारं संग्रहसंगोपनस्थानम्, तस्य अध्यक्षः कोष्ठागाराध्यक्षः अर्थात् तद्व्यापारः, स इहाभिधीयते इति सूत्रार्थः ।

प्रक्रान्तायाः कोशप्रकृतेराकरकर्मान्तप्रवर्तनादिनोत्पादनरक्षणादिकमुक्तम्, शरीरस्थितिहेतुतया प्रधानस्य धान्यादेरुत्पादनरक्षणव्ययप्रकारादिकं तु नोक्तम्, तदिहोपदिश्यते इति संबन्धः । यद्वा 'संनिधाता कोशगृहं कोष्ठागारं पण्यगृहं कुप्यगृहमायुधागारं बन्धनागारं च कारयेत्' (कौ. २।५) इति कोष्ठागारकरणं पूर्वमुक्तम्, तदध्यक्षव्यापारस्त्वनभिहित इदानीमभिधीयते इति संगतिः । तमाह— कोष्ठागारेत्यादि । कोष्ठागाराध्यक्षः सीतादीनि— सीता, राष्ट्रम्, क्रयिमम्, परिवर्तकः, प्रामित्यकम्, आपमित्यकम्, सिंहानिका, अन्यजातः, व्ययप्रत्यायः, उपस्थानम् इत्येतान् दश पदार्थान् उपलभेत चिन्तयेत् । श्रीमूला.

**सीताध्यक्षोपनीतः सस्यवर्णकः सीता ॥**

तान् यथोद्देशं विवृणोति— सीताध्यक्षोपनीत इत्यादि । सीताध्यक्षेण धान्यकरग्रहणकर्माधिकृतेन उपनीतः कोष्ठागारे प्रवेशितः सस्यवर्णकः धान्यजातिः सीता तदाख्या । कोष्ठागाराध्यक्षस्तां शुद्धामन्यूनां च गृह्णीयात् ।

श्रीमूला.

**पिण्डकरः, षड्भागः, सेनाभक्तम्, बलिः, करः, उत्सङ्गः, पार्श्वम्, पारिहीणिकम्, औपायनिकम्, कौष्ठेयकं च राष्ट्रम् ॥**

राष्ट्रमाह— पिण्डेत्यादि । पिण्डकरः तत्तद्ग्रामदेयतया क्लृप्तः करसमुदायः । षड्भागः— षडिति चतुर्थादिभागस्याप्युपलक्षणम्, तेन षड्भागचतुर्भागादिरूपस्तत्तद्देशसिद्धो राजभागः इत्यर्थः । सेनाभक्तं सेनासंनाहनकाले यथादेशप्रसिद्धं स्नेहतण्डुललवणादि राजदेयमिति स्वामी । सैनिकानां तण्डुलहिरण्यादिदानसमये राजार्थे तैर्दीयमानः स्नेहतण्डुलाद्यंशः इति भाषाटीका । बलिः षड्भागातिरिक्तः यथादेशप्रसिद्धो दशविंशतिकन्धादिकः, यं भिक्षाभक्तं वदन्ति । करः फलवृक्षादिसंबद्धं राजदेयम् । उत्सङ्गः राज्ञे पुत्रजन्माद्युत्सवावसरेषु पौरजानपदैर्दत्तं शालाकमभ्वादि । पार्श्वम् उचितकरादधिकग्रहणं योगवृत्ताधिकरणस्य द्वितीये कोशाभिसंहरणाध्याये वक्ष्यमाणम् । पारिहीणिकं चतुष्पदविनाशितसस्यदण्डलभ्यम् । औपायनिकम् उपायनार्थं कौशेयादिकम् । कौष्ठेयकं च राजस्थापिततटाकारामाद्युत्पन्नं च । इत्येवं दशप्रकारं राष्ट्रम् । पूर्वं समाहर्तृसमुदयप्रस्थापनाध्याये राष्टान्तर्गतो बलिरुक्तः, पार्श्वपारिहीणिकानि चान्यजातान्तर्गतान्युक्तानि । तेषामिह पुनः पाठः समाहर्त्रुत्पादितानामपि कोष्ठागारप्रवेश्यतां ज्ञापयितुम् ।

श्रीमूला.

**धान्यमूल्यं कोशनिर्हारः प्रयोगप्रत्यादानं च क्रयिमम् ॥**

धान्यमूल्यं धान्यविक्रयहिरण्यम्, कोशनिर्हारः हिरण्येन धान्यक्रयः, प्रयोगप्रत्यादानं वृद्धिप्रयुक्तधान्यप्रवेशनम् इत्येवं त्रिप्रकारं क्रयिमम् । श्रीमूला.

**सस्यवर्णानामर्घान्तरेण विनिमयः परिवर्तकः ॥**

परिवर्तकमाह— सस्येत्यादि । सस्यवर्णानां सस्यजातीयानाम् अर्घान्तरेण विनिमयः एकेन शालिप्रस्थेन चतुःप्रस्थकोद्रवग्रहणमित्येवंजातीयो विनिमयः परिवर्तकः तदाख्यः ।

श्रीमूला.

**सस्ययाचनमन्यतः प्रामित्यकम् ॥**

प्रामित्यकमाह— सस्येत्यादि । अन्यतः मित्रादेः सस्ययाचनम् अप्रतिदानार्थं प्रामित्यकं तत्संज्ञम् ।

श्रीमूला.

**तदेव प्रतिदानार्थमापमित्यकम् ॥**

आपमित्यकमाह— तदेवेति । अन्यतः सस्ययाचनमेव प्रतिदानार्थं सवृद्धिकप्रत्यर्पणार्थम् आपमित्यकं तत्संज्ञम् ।

श्रीमूला.

(१) कौ. २।१५.

**कुट्टकरोचकसक्तुशुक्तपिष्टकर्म तज्जीवनेषु तैलपीडनमौरभ्रचाक्रिकेष्विक्षूणां च क्षारकर्म सिंहनिका ॥**

कुट्टककर्मादिपञ्चकजीविभ्यस्तैलपीडनजीविभ्य इक्षुक्षारकर्मजीविभ्यश्च यदुपादीयते तत् सिंहनिकाख्यमित्याह– कुट्टकेत्यादि । कुट्टकादीनां पञ्चानां द्वन्द्वः । कर्मशब्दश्च तेषु प्रत्येकमभिसंबध्यते । कुट्टककर्म अवघातः, रोचककर्म मुद्गमाषादिविदलनम्, सक्तुकर्म घरट्टादिना यवादिचूर्णीकरणम्, शुक्तकर्म इक्षुरसादिसंधानम्, पिष्टकर्म गोधूमपेषणादि । कुट्टकादिकर्म तज्जीवनेषु कुट्टकादिकर्मोपजीविषु विषये तत्कर्मोपजीवनार्थं तेभ्यः शुल्कं यत् गृह्यते तदित्यर्थः । तैलपीडनं तिलेभ्यो यन्त्रनिष्पीडितेभ्यस्तैलोत्पादनकर्म औरभ्रचाक्रिकेषु औरभ्रेषु यशियोरभ्रसंज्ञपनकर्मकरेषु तैलिषु विषये । तदुपजीवनेष्वित्यनुवर्तनात् तैलपीडनकर्मोपजीवनार्थं तेभ्यो यत् गृह्यते तदित्यर्थः । इक्षूणां क्षारकर्म च फाणितगुडखण्डादिकर्म च, तत्कर्मोपजीविभ्यो यदुपादीयते तच्चेत्यर्थः । 'संहनिका' इति तु व्याख्यापाठः सुष्ठु । श्रीमूला.

**नष्टप्रस्मृतादिरन्यजातः ॥**

अन्यजातमाह– नष्टेत्यादि । नष्टप्रस्मृतादिः– नष्टम् अपगतं प्रस्मृतं विस्मृतं चेति द्वयम् । आदिपदादायुक्तदण्डादिर्ग्राह्यः । श्रीमूला.

**विक्षेपव्याधितान्तरारम्भशेषं च व्ययप्रत्यायः ॥**

व्ययप्रत्यायमाह– विक्षेपेत्यादि । विक्षेपशेषं किंचित्कार्यसाधनाय प्रेषितस्य सैन्यस्यार्थे व्ययितात् धनात् अवशिष्टम् । व्याधितशेषं भेषजशालाव्ययितावशिष्टम् । अन्तरारम्भशेषं दुर्गप्रासादादिपरिकर्मार्थे निर्गतस्य धनस्य लघुपरिव्ययकरणात् शेषम् । श्रीमूला.

**तुलामानान्तरं हस्तपूरणमुत्करो व्याजी पर्युषितं प्रार्जितं चोपस्थानमिति ॥**

उपस्थानमाह– तुलेत्यादि । तुलामानान्तरं तुलामानभेदः, तुलामानाभ्यामधिकाभ्यां गृहीत्वा हीनाभ्यां दानादुत्पन्नम् । हस्तपूरणं कराभ्यां प्रस्थादौ धान्यस्य यत्नप्रवेशनं प्रस्थाग्रे कराभ्यां धान्यधारणं वा । 'हस्तप्रपूरणम्' इति पाठे हस्तश्लथीकाराङ्गुलिविरलीकरणादिना व्रीह्यादिमेयधान्यानां पूगीफलादिगण्यपण्यानां च प्रच्यावनम् । उत्करः धान्यादिराशिः शालाकादिर्वा गणनमानप्रदेशयोर्गण्यमेयवस्तुविक्षेपणं वा । व्याजी षोडशभागादि पुनर्मानन्यूनतापरिहारायाधिकतया गृह्यमाणम् । पर्युषितं गतवत्सरशेषम् । प्रार्जितं च पुष्पताम्बूलादिकं च स्वनैपुण्योत्पादितम् । उपस्थानं तदाख्यम् । इतिशब्दः उद्दिष्टसीतादिपदार्थविवरणोपसंहारार्थः । श्रीमूला.

**धान्यस्नेहक्षारलवणानाम् ॥**

धान्यस्नेहक्षारलवणानामित्यधिकारः आ अध्यायपरिसमाप्तेः । श्रीमूला.

**धान्यकल्पं सीताध्यक्षे वक्ष्यामः । सर्पिस्तैलवसामज्जानः स्नेहाः ॥**

तत्र धान्यकल्पः सीताध्याये वक्ष्यते इत्याह– धान्यकल्पमित्यादि । इयमनागतावेक्षणलक्षणा तन्त्रयुक्तिः । सर्पिरित्यादि । सर्पिः, तैलम्, वसा, मज्जेत्येते चत्वारः स्नेहाः । श्रीमूला.

**फाणितगुडमत्स्यण्डिकाखण्डशर्कराः क्षारवर्गः ॥**

इक्षुविकारभेदाः फाणितादयः क्षारवर्ग इत्याह– फाणितेत्यादि । गुडखण्डशर्करयोर्मध्यमावस्था मत्स्यण्डिका । श्रीमूला.

**सैन्धवसामुद्रविडयवक्षारसौवर्चलोद्भेदजा लवणवर्गः ॥**

सैन्धवादिषट्प्रकारं लवणवर्गमाह– सैन्धवेत्यादि । उद्भेदजः ऊषरलवणमिति स्वामी । श्रीमूला.

**क्षौद्रं मार्द्वीकं च मधु ॥**

क्षौद्रं क्षुद्राभिः संचितम्, मार्द्वीकं मृद्वीकानां रसः इति द्विविधं मधु । श्रीमूला.

**इक्षुरसगुलमधुफाणितजाम्बवपनसानामन्यतमो मेषशृङ्गीपिप्पलीक्वाथाभिषुतो मासिकः षाण्मासिकः सांवत्सरिको वा चिद्भिटोर्वारुकेक्षुकाण्डाम्रफलामलकावसुतः शुद्धो वा शुक्तवर्गः ॥**

शुक्तवर्गमाह– इक्षुरसेत्यादि । इक्षुरसः, गुलः, मधु, फाणितं च प्रसिद्धम्, जाम्बवपनसौ जम्बूफलरसः पनस-

फलरसश्च, एषां षण्णाम् अन्यतमः । मेषशृङ्गीपिप्पली-क्वाथाभिषुतः मेषविषाणाख्यायाः मागध्याख्यायाश्चौषधेः कषायेण मिश्रः । मासिकः षाण्मासिकः सांवत्सरिको वा माषषण्मासादिकालपरिवासेन क्रमादधममध्यमोत्तमभेदं प्रतिपन्नः । चिर्भिटादिपञ्चकरसैर्व्यस्तैः समस्तैर्मिश्रितः शुद्धो वा चिर्भिटाद्यमिश्रितो वा। शुक्तवर्गः आसववर्गः। चिर्भिटं वल्लीफलविशेषः । तदेव कटुकमुर्वारुकम् ।

श्रीमूला.

**वृक्षाम्लकरमर्दाम्रविदलामलकमातुलुङ्गकोल-बदरसौवीरकपरूषकादिः फलाम्लवर्गः ॥**

फलाम्लवर्गमाह— वृक्षाम्लेत्यादि । वृक्षाम्लं तिन्तिडीकम् । करमर्दः वशपर्यायः । आम्रामलके प्रसिद्धे । विदलं दाडिमम् । मातुलुङ्गं दाडिमभेदः । कोलं क्षुद्रबदरम् । बदरं स्थूलबदरम् । सौवीरकं स्वादुबदरम् । परूषकं मध्यदेशादिप्रसिद्धं मधुराम्लफलम् । आदिग्रहणं जम्बीराद्यर्थम् । यथोक्तप्रकारः फलाम्लवर्गः । श्रीमूला.

**दधिधान्याम्लादिर्द्रवाम्लवर्गः ॥**

दधि प्रसिद्धम् । धान्याम्लं काञ्जिकम् । आदिपदात् तक्रादिग्रहणम् । इत्ययं द्रवाम्लवर्गः । श्रीमूला.

**पिप्पलीमरिचशृङ्गिबेराजाजीकिराततिक्त-गौरसर्षपकुस्तुम्बुरुचोरकदमनकमरुवकशिग्रु-काण्डादिः कटुकवर्गः ॥**

पिप्पल्यादित्रिकं प्रसिद्धम् । अजाजी जीरकः । किराततिक्तः भूनिम्बाख्य ओषधिविशेषः । गौरसर्षपः सिद्धार्थः । कुस्तुम्बुरु धान्याख्यम् । चोरकः शतपुष्पानुकारी गुच्छ इति स्वामी । दमनकं कान्ताख्यम् । मरुवकः पिण्डीतकः । शिग्रुकाण्डः शोभाञ्जनकाण्डः । आदिग्रहणं राजसर्षपाद्यर्थम् । इत्येवंजातीयः कटुकवर्गः ।

श्रीमूला.

**शुष्कमत्स्यमांसकन्दमूलफलशाकादि च शाकवर्गः ॥**

शुष्कशब्दो मत्स्यमांसयोः प्रत्येकं संबध्यते । शुष्कमत्स्यः शुष्कमीनः । शुष्कमांसं वल्लूरम् । कन्दः सूरणादिः । मूलं शतमूलीप्रभृति । फलं वार्ताकादि । शाकं वास्तुकादि । आदिग्रहणान्माषविकारादिपरिग्रहः । इत्ययं शाकवर्गः । श्रीमूला.

**ततोऽर्धमापदर्थं जानपदानां स्थापयेत् । अर्धमुपयुञ्जीत । नवेन चानवं शोधयेत् ॥**

ततोऽर्धं स्नेहादिवर्गेभ्यः पूर्वोक्तेभ्यः अर्धं जानपदानाम् आपदर्थं दुर्भिक्षाद्यापत्समयोपयोगार्थं स्थापयेत् । अर्धम् उपयुञ्जीत राजमहानसाद्यर्थे विनियुञ्जीत । नवेन चानवं शोधयेत् नवं प्रक्षिप्य पुराणं कालाक्षमं निचितमुपयुञ्जीत । श्रीमूला.

**क्षुण्णघृष्टपिष्टभृष्टानामार्द्रशुष्कसिद्धानां च धान्यानां वृद्धिक्षयप्रमाणानि प्रत्यक्षीकुर्वीत ॥**

धान्यानां क्षोदघर्षणाद्यवस्थासु सतसु वृद्धिक्षयाववश्यंभाविनौ तत्तत्कर्मकरेभ्योऽनुमन्तव्यौ । अतस्तयोरियत्तानिश्चयं सकृत्प्रत्यक्षीकरणेन कोष्ठागाराध्यक्षोऽधिगच्छेदित्याह— क्षुण्णेत्यादि । क्षुण्णं सकृदवहतम् । घृष्टं फलीकृतम् । पिष्टं श्लक्ष्णचूर्णितम् । भृष्टं भ्राष्ट्रपक्वम् । आर्द्रं तिमितम् । शुष्कं कृतशोषणम् । सिद्धं राद्धम् । सोऽयं धान्यानां सारमात्राया अल्पत्वानल्पत्वतारतम्ये क्षयवृद्धीयत्तापरिज्ञानार्थो विशेषविधिरुक्तः । श्रीमूला.

**कोद्रवव्रीहीणामर्धं सारः । शालीनामष्टभागोनः । त्रिभागोनो वरकाणाम् । प्रियङ्गूणामर्धं सारो नवभागवृद्धिश्च । उदारकस्तुल्यः । यवा गोधूमाश्च क्षुण्णाः ॥**

सामान्यतस्तु तदियत्ताविषयं विधिमुपदेष्टुमाह— कोद्रवेत्यादि । कोद्रवव्रीहीणामर्धं सारः कोद्रवाणां व्रीहीणां च तत्प्रस्थद्वयस्यैकस्तण्डुलप्रस्थः सारः फलति, शेषस्तु क्षय इत्यर्थः । शालीनां कलमाख्यव्रीहिभेदानाम् अष्टभागोनः प्रकृत्यष्टमांशान्यूनः , अर्धं सार इति वर्तते । तेन शालीनां प्रस्थाष्टकस्य प्रस्थत्रयं सारो भवति । वरकाणां धान्यभेदानां त्रिभागोनः प्रस्थत्रये प्रस्थद्वयं सारो भवति । प्रियङ्गूणां कङ्गूनाम् अर्धं सारः नवभागवृद्धिश्च अष्टसु प्रस्थेषु प्रस्थपञ्चकं तण्डुलानां भवति । उदारकः तृणकोलकः तुल्यः प्रियङ्गुतुल्यसारः अनवहतावस्थाप्रमाणतुल्यसारो वा भवति । तत्राऽऽद्यः शुष्कावघाते, सजलावघाते पर इति

विवेकः । यवाः गोधूमाश्च क्षुण्णाः सजलावहताः तुल्याः अनवहतावस्थाप्रमाणतुल्यसाराः । श्रीमूला.

**तिला यवा मुद्गमाषाश्च घृष्टाः । पञ्चभागवृद्धिर्गोधूमः सक्तवश्च । पादोना कलायचमसी । मुद्गमाषाणामर्धपादोना । शैम्बानामर्धं सारः । त्रिभागोनो मसूराणाम् ॥**

क्षुण्णानुक्त्वा घृष्टानाह– तिला इत्यादि । घृष्टाः दलिताः तिलाः यवाः मुद्गमाषाश्च, तुल्या इति वर्तते, अघृष्टावस्थातुल्यप्रमाणाः । गोधूमः पञ्चभागवृद्धिः पञ्चभागेन वर्धते । सक्तवश्च भृष्टयवजाः पञ्चभागवृद्धयः । कलायचमसी– कलायः चणभेदः, तस्य चमसी श्लक्ष्णचूर्णम् पादोना कलायप्रस्थचतुष्टयस्य तच्चूर्णं प्रस्थत्रयप्रमाणं भवति । मुद्गमाषाणां मुद्गानां माषाणां च चमसी अर्धपादोना अष्टभागेन ऊना भवति । शैम्बानां कुलत्थादिकोशीधान्यानाम् अर्धं सारः वितुषांशः भवति । मसूराणां चणविशेषाणां त्रिभागोनः सारः प्रस्थत्रयदलने प्रस्थद्वयं सारो भवति । श्रीमूला.

**पिष्टमामं कुल्माषश्चाध्यर्धगुणः । द्विगुणो यावकः । पुलाकः पिष्टं च सिद्धम् ॥**

पिष्टमाह– पिष्टमिति । आमं पिष्टम् अपक्वं गोधूमादि कुल्माषश्च मुद्गमाषादिश्च अध्यर्धगुणः कुडुबचतुष्टये कुडुबषट्कं भवति । यावकः वितुषीकृतो यवः द्विगुणः चूर्णीकृतो द्वैगुण्यं प्राप्नोति । पुलाकः अर्धसिद्धस्तण्डुलः पिष्टं च गोधूमादितण्डुलचूर्णं च सिद्धं राद्धं सत् द्विगुणं भवति । श्रीमूला.

**कोद्रववरकोदारकप्रियङ्गूणां त्रिगुणमन्नं चतुर्गुणं व्रीहीणां पञ्चगुणं शालीनाम् । तिमितमपरान्नं द्विगुणमर्धाधिकं विरूढानाम् ॥**

सिद्धमाह– कोद्रववरकेत्यादि । कोद्रवादिचतुष्टयान्नं तत्तत्तण्डुलात् त्रिगुणम्, व्रीह्यन्नं चतुर्गुणम्, शाल्यन्नं पञ्चगुणं च वर्धते इत्यर्थः । 'अष्टगुणं शालीनाम्' इति भाषाटीकायां पाठो भाति । तिमितमिति । तिमितं लवनाद्यवसरे केदारादौ आर्द्रीकृतव्रीह्याद्यन्नम् अपरान्नम् अपरिणतव्रीह्याद्यन्नं च द्विगुणं भवति । विरूढानाम् अङ्कुरितानां व्रीह्यादीनाम्, अर्धादन्नम्, अर्धाधिकम् अर्धाधिकद्विगुणं भवति । अपरा व्याख्या– तिमितम् आर्द्रीकृतम् अपरान्नं फलाढकीचणकादि द्विगुणं भवति । चणकादीनामेव विरूढानाम् अङ्कुरितानाम् अर्धाधिकम् अर्धमधिकमार्द्रीकृतात् भवति इति । श्रीमूला.

**पञ्चभागवृद्धिर्भृष्टानाम् । कलायो द्विगुणः, लाजा भरुजाश्च ॥**

भृष्टमाह– पञ्चभागेत्यादि । भृष्टानां कृतभर्जनानां तेषामेवावरान्नानां पञ्चभागवृद्धिः प्रस्थपञ्चकं भृष्टं प्रस्थषट्कं भवति । कलायः चणभेदः भृष्टः द्विगुणः । लाजाः व्रीह्यादयः भरुजाः यवाश्च भृष्टाः द्विगुणाः । श्रीमूला.

**षट्कं तैलमतसीनाम् । निम्बकुशाम्रकपित्थादीनां पञ्चभागः । चतुर्भागिकास्तिलकुसुम्भमधूकेङ्गुदीस्नेहाः ॥**

तैलमाह– षट्कं तैलमतसीनामिति । षट्सु अतसीबीजप्रस्थेषु एकस्तैलप्रस्थो भवति । निम्बकुशाम्रकपित्थादीनां पञ्चभागः निम्बबीजादीनां प्रस्थपञ्चके एकप्रस्थः स्नेहो भवति । आदिग्रहणमेरण्डादिपरिग्रहार्थम् । तिलकुसुम्भमधूकेङ्गुदीस्नेहाः चतुर्भागिकाः तिलकुसुम्भबीजादीनां प्रस्थचतुष्टये एकः स्नेहप्रस्थो भवति । श्रीमूला.

**कार्पासक्षौमाणां पञ्चपले पलसूत्रम् ॥**

सूत्रमाह– कार्पासेत्यादि । क्षौमः वल्कविशेषः । कार्पासपलपञ्चकस्य क्षौमपलपञ्चकस्य च एकपलं सूत्रं भवति । श्रीमूला.

**पञ्चद्रोणे शालीनां द्वादशाढकं तण्डुलानां कलभभोजनम्, एकादशकं व्यालानाम्, दशकमौपवाह्यानाम्, नवकं सांनाह्यानाम्, अष्टकं पत्तीनाम्, सप्तकं मुख्यानाम्, षट्कं देवीकुमाराणाम्, पञ्चकं राज्ञाम् । अखण्डपरिशुद्धानां वा तण्डुलानां प्रस्थः ॥**

अथ भक्तोपयोगाय तण्डुलादीनां व्यवस्थाविशेषानाह– पञ्चद्रोण इत्यादि । शालीनां विंशत्याढकात्मके

पञ्चद्रोणे तण्डुलानां द्वादशाढकं यथा निष्पद्येत तथाऽवहननिष्पादितास्तत्तण्डुलाः कलभभोजनं कलभानां बालगजानां भोजनार्थे विनियोज्याः। व्यालानां दुष्टगजानाम् एकादशकं शाल्याढकविंशतौ एकादशाढकक्रमेण निष्पन्नास्तण्डुलाः, भोजनार्थे विनियोज्या इत्यार्थम्। एवमुत्तरेष्वपि। औपवाह्यानां राजवाह्यानां दशकं दशाढकं विंशतौ दशाढकक्रमेण साधितास्तण्डुलाः विनियोज्याः। सांनाह्यानां समरोचितानां नवकं नवाढकं विंशतौ नवाढकक्रमनिष्पन्नास्तण्डुलाः। पत्तीनां पदातीनाम् अष्टकम् अष्टाढकं अष्टाढकक्रमनिष्पन्नास्तण्डुलाः। मुख्यानां भटप्रधानानां सप्तकं सप्ताढकं सप्ताढकक्रमनिष्पन्नास्तण्डुलाः। देवीकुमाराणां राजपत्नीनां राजपुत्राणां च षट्कं षडाढकं षडाढकक्रमनिष्पन्नास्तण्डुलाः। सेयं पूर्वाभ्यः प्रतिपत्तिभ्य उत्तमा प्रतिपत्तिः। राज्ञां पुनरितोऽप्युत्तमामाह— राज्ञामिति। राज्ञां पञ्चकं पञ्चाढकं शालिविंशत्याढके पञ्चाढकक्रमनिष्पन्नास्तण्डुलाः भोजनार्थे विनियोज्याः। तदेवमष्टौ वर्णिकास्तण्डुलानां भक्तोपयोगिन्य उक्ताः। राजभोजने पक्षान्तरमाह— अखण्डेत्यादि। वाशब्दः पक्षान्तरे। अखण्डपरिशुद्धानाम् अक्षतावयवानां फलीकरणविवेचनसंशोधितानां च तण्डुलानां प्रस्थः आढकचतुर्भागः शाल्यशीतिप्रस्थादवहननादिसंस्कृतात् यथोक्तगुणैकतण्डुलप्रस्थग्रहणक्रमेण संपन्नस्तण्डुल इत्यर्थः। श्रीमूला.

**चतुर्भागः सूपः, सूपषोडशो लवणस्यांशः, चतुर्भागः सर्पिषस्तैलस्य वैकमार्यभक्तम्। प्रस्थषड्भागः सूपः, अर्धस्नेहमवराणाम्। पादोनं स्त्रीणाम्। अर्धं बालानाम्॥**

सूपः चतुर्भागः प्रस्थस्य प्रकृतत्वात् तच्चतुर्थांशः। सूपषोडशः सूपस्य षोडशांशप्रमाणः लवणस्यांशः। सर्पिषः तैलस्य वा चतुर्भागः सूपचतुर्थभागः। एकमार्यभक्तमिति। तदिदमेकं मध्यमप्रतिपत्तिकस्य पुरुषस्य भोजनं भवति। अवरभोजनमाह— प्रस्थेत्यादि। अवराणां निकृष्टानां प्रस्थषड्भागः सूपः। अर्धस्नेहम् अर्धं सूपार्धभागः* स्नेहः तैलादिः यस्य तत्। लवणं तु समानमेव। भोजनस्यान्यपदार्थतामभिप्रेत्य नपुंसकनिर्देशः। पादोनं स्त्रीणामिति। पादन्यूनमार्यपुरुषभक्तमार्यस्त्रीणाम् अवरपुरुषभक्तमवरस्त्रीणां च यथायथं बोध्यम्। अर्धं बालानामिति। पूर्ववत् यथायथमार्यबालानामवरबालानां च। श्रीमूला.

**मांसपलविंशत्या स्नेहार्धकुडुबः, पलिको लवणस्यांशः, क्षारपलयोगः, द्विधरणिकः कटुकयोगः, दध्नश्चार्धप्रस्थः॥**

मांससंस्कारे योजनीयानां स्नेहादीनां परिमाणव्यवस्थामाह— मांसपलेत्यादि। मांसपलविंशत्या सह स्नेहार्धकुडुबः स्नेहस्य अर्धकुडुबः प्रस्थाष्टभागः योज्यः। लवणस्यांशः पलिकः पलमितः। क्षारपलयोगः क्षारस्य सुवर्चिकायवक्षारादेः पलयोगः लवणाभावे। कटुकयोगः कटुकानां पिप्पलीमरिचशृङ्गबेराणां योगः द्विधरणिकः धरणद्वयमानः। धरणप्रमाणं तु 'अष्टाशीतिर्गौरसर्षपा रूप्यमाषकः, ते षोडश धरणम्' (कौ. २।१९) इति पौतवाध्यक्षे वक्ष्यते। दध्नश्च अर्धप्रस्थः प्रस्थस्यार्धं कुडुबद्वयं भवति। श्रीमूला.

**तेनोत्तरं व्याख्यातम्। शाकानामध्यर्धगुणः, शुष्काणां द्विगुणः, स चैव योगः॥**

तेन उक्तयोगमानेन उत्तरम् अधिकं मांसपलत्रिंशच्चत्वारिंशदादीनां स्नेहादियोगमानमर्धगुणद्वैगुण्यादिरूपं व्याख्यातं विवृतप्रायम्, उन्नेतुं शक्यमित्यर्थः। शाकानां वास्तुकादीनां स चैव मांसोक्त एव अध्यर्धगुणः सार्धगुणः योगः। यथा— शाकपलविंशत्या पादोनकुडुबः स्नेहः, अध्यर्धपलिकं लवणम्, अध्यर्धपलिकं क्षारमित्यादि। शुष्काणां मांसानां शाकानां च द्विगुणः स्नेहः मांसविषये कुडुबपरिमाणः शाकविषये अध्यर्धकुडुबपरिमाण इत्यादिः। श्रीमूला.

---

* प्रस्थद्वादशांशभागः सर्पिस्तैलं वेत्यर्थः। तथा च आर्यभोजने प्रस्थषोडशांशः स्नेहः अवरभोजने च प्रस्थद्वादशांशः स्नेह इति स्नेहपरिमाणतारतम्यवैपरीत्यपरत्वादिदं व्याख्यानं न श्लिष्यते। 'आर्यभोजनस्नेहस्य द्वितीयांशोऽवरभोजनस्नेहः' इत्यर्थपरं महाराष्ट्रभाषाव्याख्यानं तु उक्तदोषाभावात्संगच्छते।

**हस्त्यश्वयोस्तदध्यक्षे विधाप्रमाणं वक्ष्यामः । बलीवर्दानां माषद्रोणं यवानां वा पुलाकः । शेषमश्वविधानम् । विशेषो घाणपिण्याकतुला कणकुण्डकं दशाढकं वा ॥**

हस्त्यश्वयोः विधाप्रमाणं तण्डुलादिमानं तदध्यक्षे तयोरध्यक्षे हस्त्यध्यक्षे अश्वाध्यक्षे च वक्ष्यामः । इतीयमनागतावेक्षणरूपा तन्त्रयुक्तिः । बलीवर्दानाम् उक्ष्णां माषद्रोणं यवानां वा पुलाकः अर्धसिद्धस्तण्डुलः, अर्थात् द्रोणपरिमाणः । शेषम् अश्वविधानम् अश्वस्योक्तं विधानं ग्राह्यम् । विशेष इति । विशेषः अश्वापेक्षया विशेषः एषामुच्यते इत्यर्थः । घाणपिण्याकतुला शुष्कस्य तिलकल्कस्य पलशतम्, दशाढकं कणकुण्डकं वा तण्डुलानां सूक्ष्मांशमिश्रमलं वा । श्रीमूला.

**द्विगुणं महिषोष्ट्राणाम् । अर्धद्रोणं खरपृषतरोहितानाम् । आढकमेणकुरङ्गाणाम् । अर्धाढकमजैलकवराहाणां द्विगुणं वा कणकुण्डकम् । प्रस्थौदनः शुनाम् । हंसक्रौञ्चमयूराणामर्धप्रस्थः । शेषाणामतो मृगपशुपक्षिव्यालानामेकभक्तादनुमानं ग्राहयेत् ॥**

उक्तं बलीवर्दविधानं द्विगुणं माषद्विद्रोणं यवपुलाकद्विद्रोणं वा महिषाणामुष्ट्राणां च भवति । अर्धद्रोणं माषाणां यवपुलाकानां वा आढकद्वयं खरपृषतरोहितानां गर्दभानां विन्दुचित्रमृगाणां रोहितमृगाणां च । आढकं प्रस्थचतुष्टयम् एणकुरङ्गाणाम् एणानां कुरङ्गाणां च मृगभेदानाम् । अर्धाढकं प्रस्थद्वयम् अजैलकवराहाणाम् । अत्र पक्षान्तरमाह— द्विगुणम् उक्तार्धाढकात् द्विगुणम् एकाढकं कणकुण्डकं वा । प्रस्थौदनः प्रस्थपरिमितमन्नं शुनाम् । हंसक्रौञ्चमयूराणाम् अर्धप्रस्थः द्विकुडुबमन्नम् । शेषाणामिति । अतः उक्तेभ्यः शेषाणां मृगपशुपक्षिव्यालानाम् एकभक्तात् एकदिवसभुक्तपरीक्षणात् अनुमानं शेषदिवसभक्तेयत्तानिश्चयं ग्राहयेत् कारयेत् । श्रीमूला.

**अङ्गारांस्तुषान् लोहकर्मान्तभित्तिलेप्यानां हारयेत् । कणिका दासकर्मकरसूपकाराणाम् । अतोऽन्यदौदनिकापूपिकेभ्यः प्रयच्छेत् ॥**

पाककर्मणि निष्पन्नानामङ्गाराणाम् अवघातनिष्पतितानां तुषाणां च विनियोगमाह— अङ्गारानित्यादि । अङ्गारान् तुषांश्च लोहकर्मान्तभित्तिलेप्यानां हारयेत् लोहकर्मान्तार्थे भित्तिलेप्यकर्मार्थे च संचिनुयात् । भस्मादिसंग्रहस्याप्येतदुपलक्षणम् । भस्माद्यपि हि केदारादौ दोहदाद्यर्थे विनियुज्यते । कणिकाः तण्डुलकणान् दासकर्मकरसूपकाराणां प्रयच्छेत् भक्तार्थे । अतोऽन्यत् दासादिदत्तशेषम् औदनिकापूपिकेभ्यः सामान्यान्नपाचकेभ्यः अपूपकर्मकरेभ्यश्च प्रयच्छेत् तत्कर्मविनियोगार्थे ।

श्रीमूला.

**तुलामानभाण्डं रोचनीदृषन्मुसलोलूखलकुट्टकरोचकयन्त्रपत्रकशूर्पचालनिकाकण्डोलीपिटकसंमार्जन्यश्चोपकरणानि ॥**

उपकरणान्याह— तुलेत्यादि । तुलामानभाण्डं तुलाभाण्डं मानभाण्डं च पौतवाध्यक्षे वक्ष्यमाणम् । रोचन्यादिद्वादशकं च उपकरणानि । तत्र रोचनी दलनयन्त्रम् । दृषत् पेषणी । मुसलोलूखले प्रतीते । कुट्टकरोचकयन्त्रे कुट्टकयन्त्रं रोचकयन्त्रं च । आद्यम् उष्ट्रग्रीवाकारं तण्डुलादिकुट्टनसाधनम् । द्वितीयं तु पेषणयन्त्रम् । 'तच्च त्रिविधं मनुष्यप्रावर्तितं बलीवर्दप्रावर्तितं सलिलप्रावर्तितं चेति' इति भट्टस्वामी । पत्रकं दारुमयः आवपनभेदः । शूर्पं प्रस्फोटनम् । चालनिका तितउः । कण्डोली वंशदलादिनिर्मितं भाण्डम् । पिटकः पेटारिका । संमार्जनी शोधनी । श्रीमूला.

**मार्जकारक्षकधारकमायकमापकदायकदापकशलाकाप्रतिग्राहकदासकर्मकरवर्गश्च विष्टिः ॥**

कर्मकरानाह— मार्जकेत्यादि । मार्जकः भूमिसंस्कारकः । आरक्षकः कोष्ठागाररक्षी । धारकः तुलोन्माता । मायकः धान्यमाता । मापकः तदधिष्ठाता । दायकः दाता । दापकः तदधिष्ठाता । शलाकाप्रतिग्राहकः भारयष्ट्यादिप्रतिग्राही । दासः क्रीतः । कर्मकरः तादात्विकभृतिभुक् । वर्गः उक्तजातीयगणः आहितकादिः । विष्टिरिति । ते एते मार्जकादयो विष्टिसंज्ञिताः । श्रीमूला.

**उच्चैर्धान्यस्य निक्षेपो मूताः क्षारस्य संहताः ।**
**मृत्काष्ठकोष्ठाः स्नेहस्य पृथिवी लवणस्य च ॥**

अध्यायान्ते श्लोकमाह— उच्चैरित्यादि । धान्यस्य उच्चैः उपरि निक्षेपः भूमिस्पर्शो यथा न भवेत् तथा निक्षेपस्थानम् । क्षारस्य गुडफाणितादेः संहताः सान्द्रघटिताः मूताः तृणादिबन्धाः निक्षेपः गोपनस्थानम् । स्नेहस्य घृततैलादेः मृत्काष्ठकोष्ठाः मृत्कोष्ठाः कुम्भादयः काष्ठकोष्ठाः दारुकोष्ठाश्च मधूच्छिष्टजतुरसाद्यनुलिप्ताः निक्षेपः । लवणस्य पृथिवी भूमिः पार्थिवो घटादिर्वा निक्षेपः । चकारात् अनुक्तमन्यदपि निक्षेपस्थानमुक्तानामनुक्तानां शाकशुक्तादीनां निवेशस्थानं च यथार्हं कार्यमिति सूचयति । श्रीमूला.

पण्याध्यक्षस्य कर्तव्यानि

**[1]पण्याध्यक्षः स्थलजलजानां नानाविधानां पण्यानां स्थलपथवारिपथोपयातानां सारफल्गवर्घान्तरं प्रियाप्रियतां च विद्यात् । तथा विक्षेपसंक्षेपक्रयविक्रयप्रयोगकालान् ॥**

'पण्याध्यक्षः' इति सूत्रम् । पण्यं विक्रेयं राजद्रव्यम्, तस्य विक्रये क्रये च नियुक्तः पण्याध्यक्षः इति सूत्रार्थः । संनिधातृनिचयकर्म अभिहितम्, निचितस्य राजपण्यस्य क्रयविक्रयव्यवहारः इदानीमुच्यते इति संबन्धः । अथवा 'संनिधाता कोशगृहं पण्यगृहं कोष्ठागारम्' (कौ. २।५) इत्यादिना पण्यगृहकरणमुक्तम्, तदध्यक्षः तदध्यक्षव्यापारो वा नोक्तः, स इहोच्यते इति संबन्धः । ननु च— पण्याध्यक्षकर्म नाम वाणिज्यम् । तच्च कृषिपाशुपाल्यसहपाठात् सीताध्यक्षगोध्यक्षाभ्यामनन्तरं वक्तुमुचितम् । सत्यम्, किंतु तस्येह कोष्ठागाराध्यक्षानन्तर्येण वचनं कोष्ठागाराध्यक्षस्यापि स्वव्यापाराः क्रयिमपरिवर्तकप्रामित्यकादयः पण्याध्यक्षापेक्षयाऽनुष्ठेया इति ज्ञापनार्थम् ।

पण्याध्यक्ष इति । पण्याध्यक्षः स्थलजलजानां स्थलजानां कुङ्कुमादीनां जलजानां मुक्ताप्रवालादीनां च नानाविधानां पृथक् बहुप्रकाराणां स्थलपथवारिपथोपयातानां पण्यानां सारफल्गवर्घान्तरं सारस्य बहुमूल्यस्य फल्गुनः अल्पमूल्यस्य च अर्घान्तरं मूल्यतारतम्यं प्रियाप्रियतां च प्रियतां शीघ्रविक्रयताम् अप्रियतां मन्दविक्रयतां च विद्यात् । तथा विक्षेपादिप्रयोगकालान्— विक्षेपः संक्षिप्तद्रव्यविस्तारः, संक्षेपः विक्षिप्तद्रव्यसंक्षेपः, क्रयः पण्यसंग्रहः, विक्रयः संगृहीतपण्यव्ययः, इत्येतेषां प्रयोगकालान् अनुष्ठानानुष्ठानकालान्, विद्यादिति संबध्यते । श्रीमूला.

**यच्च पण्यं प्रचुरं स्यात् तदेकीकृत्यार्घमारोपयेत् । प्राप्तेऽर्घे वाऽर्घान्तरं कारयेत् ॥**

यत् पण्यं कुङ्कुमादि प्रचुरं प्राज्यं स्यात् तत् एकीकृत्य तत् सर्वमेकत्रगतं कृत्वा अर्घम् आरोपयेत् आरूढमधिकं स्थापयेत् । प्राप्तेऽर्घे वा न्यायलभ्येऽर्घेऽधिगते वा सति अर्घान्तरम् अर्घभेदम् आरोपिताल्लघुं कारयेत् । श्रीमूला.

**स्वभूमिजानां राजपण्यानामेकमुखं व्यवहारं स्थापयेत्, परभूमिजानामनेकमुखम् । उभयं च प्रजानामनुग्रहेण विक्रापयेत् । स्थूलमपि च लाभं प्रजानामौपघातिकं वारयेत् । अजस्रपण्यानां कालोपरोधं संकुलदोषं वा नोत्पादयेत् ॥**

स्वभूमिजानां स्वविषयोद्भवानां राजपण्यानाम् एकमुखम् एकस्थानं व्यवहारं विक्रयं स्थापयेत् राजा । परभूमिजानां परविषयोपनीतानाम् अनेकमुखं स्थापयेत् । उभयं च स्वभूमिजं परभूमिजं च प्रजानाम् अनुग्रहेण अनुपपीडया विक्रापयेत्, अर्थात् पण्याध्यक्षः । स्थूलं प्रभूतमपि लाभं प्रजानाम् औपघातिकम्— उपघातः पीडा, तत्पर्यवसायिनं वारयेत् । अजस्रपण्यानां क्षीरशाकादीनां कालोपरोधं कालविक्रयप्रतिषेधं संकुलदोषं वा शाकादिषु कैश्चिदानीतचरेषु अविक्रीतेषु अन्यैः शाकाद्यानयनं वा नोत्पादयेत् । श्रीमूला.

**बहुमुखं वा राजपण्यं वैदेहकाः कृतार्घं विक्रीणीरन् । छेदानुरूपं च वैधरणं दद्युः ॥**

वैदेहकाः वणिजः कृतार्घं व्यवस्थापितमूल्यं राजपण्यं बहुमुखं वा बहुषु स्थलेषु वा विक्रीणीरन् । छेदानुरूपं च

(१) कौ. २।१६.

वैधरणमिति । यदि विक्रये कश्चिच्छेदः अर्घहानिः भवेत् तदनुरूपं छेदतुल्यमानं वैधरणं दद्युः । छेदप्रतिनिधेर्वैधरणमिति संज्ञा । श्रीमूला.

**षोडशभागो मानव्याजी । विंशतिभागस्तुलामानम् । गण्यपण्यानामेकादशभागः ॥**

वणिग्भ्य उपादेयां राजोपदामाह— षोडशेत्यादि । षोडशभागो मानव्याजी मेयद्रव्यषोडशांशो मानव्याजीसंज्ञः । स राज्ञे देयः । तुलामानं विंशतिभागः तोलनीयद्रव्यं पलशते पञ्चपलमितं राज्ञे देयम् । गण्यपण्यानां क्रमुकफलादीनाम् एकादशभागः राज्ञे देयः । सर्वेयं व्याजी क्रेतृग्राह्येति केचित् । श्रीमूला.

**परभूमिजं पण्यमनुग्रहेणाऽऽवाहयेत् । नाविकसार्थवाहेभ्यश्च परिहारमायतिक्षमं दद्यात् । अनभियोगश्चार्थेष्वागन्तूनामन्यत्र सभ्योपकारिभ्यः ॥**

परभूमिजं पण्यम् अनुग्रहेण अन्तपालाटविकराजवल्लभाद्युपद्रववारणेन व्याजीमोक्षेण च आवाहयेत् आनाययेत् । नाविकसार्थवाहेभ्यश्च जलपथवाहकवणिग्भ्यश्च परिहारम् आदेयमोक्षम् आयतिक्षमम् उत्तरकालाबाधकं दद्यात् । अनभियोगश्च उत्तमर्णकर्तृकाभियोगप्रतिषेधश्च अर्थेषु ऋणादिषु विषये आगन्तूनां देशान्तरागतानाम् । तद्विषये अभियोगं विनैव ऋणदानं व्यवस्थाप्यमिति भावः । अत्रापवादमाह— अन्यत्र सभ्योपकारिभ्यः तदुपकारिकर्मकरानपहाय । तेषां तु परस्पराभियोगो भवत्येव । श्रीमूला.

**पण्याधिष्ठातारः पण्यमूल्यमेकमुखं काष्ठद्रोण्यामेकच्छिद्रापिधानायां निदध्युः । अह्नश्चाष्टमे भागे पण्याध्यक्षस्यार्पयेयुः— इदं विक्रीतमिदं शेषमिति । तुलामानभाण्डकं चार्पयेयुः । इति स्वविषये व्याख्यातम् ॥**

राजपण्यविक्रेतारः पण्यमूल्यं पण्यविक्रयागतं धनम् एकमुखम् एकस्थानागतं काष्ठद्रोण्यां दारुपेटिकायाम्, एकच्छिद्रापिधानायाम् एकद्वाराच्छादनायां निदध्युः निक्षिपेयुः । अह्नश्च अष्टमे चरमे भागे, उपलक्षणात् क्रयसमयावसाने वा, पण्याध्यक्षस्य अर्पयेयुः । किं कृत्वा? इदं विक्रीतम्, इदं शेषमिति एतावत् विक्रीतम्, एतावत् विक्रेयमवशिष्यत इति बोधयित्वा । तुलामानभाण्डकं तुलाप्रस्थकुडुवादिकं च अर्पयेयुः पण्याध्यक्षस्य । इति स्वविषये व्याख्यातमिति । एवं स्वदेशे पण्यपणनविधिर्विवृतः । श्रीमूला.

**परविषये तु— पण्यप्रतिपण्ययोरर्घं मूल्यं च आगमय्य शुल्कवर्तन्यातिवाहिकगुल्मतरदेयभक्तभाटकव्ययशुद्धमुदयं पश्येत् । असत्युदये भाण्डनिर्वहणेन पण्यप्रतिपण्यार्घेण वा लाभं पश्येत् । ततः सारपादेन स्थलव्यवहारमध्वना क्षेमेण प्रयोजयेत् । अटव्यन्तपालपुरराष्ट्रमुख्यैश्च प्रतिसंसर्गं गच्छेदनुग्रहार्थम् ॥**

परविषये त्विति । व्याख्यायते इति शेषः । पण्येत्यादि । पण्यप्रतिपण्ययोः स्वपण्यपरविषयपण्ययोः अर्घं समन्यूनाधिकं मूल्यं च भाण्डोपस्कारादिमूल्यं च आगमय्य विज्ञाय शुल्कादिव्ययशुद्धं शुल्कादिव्ययशोधितावशेषम् उदयं लाभं पश्येत् समीक्षेत । सति लाभदर्शने स्वपण्यं परविषये प्रेषयेदित्यभिप्रायः । तत्र शुल्कं शुल्काध्यक्षोक्तम् । देयशब्दस्य वर्तन्यादिभिः प्रत्येकमभिसंबन्धः । वर्तनीदेयम् अन्तपालदेयम् । आतिवाहिकदेयं मार्गातिवाहनसहायभूतायुधीयदेयम् । गुल्मदेयं वनस्थानिकदेयम् । तरदेयं नद्याद्युत्तारकनाविकादिदेयम् । भक्तं भोजनं कर्मकरबलीवर्दादिभृतिश्च । भाटकः प्रसेवकादिग्रहणार्थः प्रक्रयः । 'भाग' इति त्वपपाठ इति भाति । असतीति । असत्युदये लाभादर्शने भाण्डनिर्वहणेन स्वपण्यस्य परदेशनयनेन लाभकालप्रतीक्षापूर्वकविक्रयद्वारेण लाभं पश्येत् । वा अथवा पण्यप्रतिपण्यार्घेण स्वपण्यस्य प्रतिपण्यार्घकरणेन, स्वपण्यदानपूर्वकप्रियपण्यान्तरग्रहणेनेत्यर्थः, लाभं पश्येत् । तत इति । ततः लाभदर्शनानन्तरं सारपादेन समीक्षितलाभचतुर्थांशव्ययेन स्थलव्यवहारं सुलभापायो जलपथ इति कृत्वा स्थलपथव्यवहारं क्षेमेणाध्वना स्थलपथेनापि चोराद्युपद्रवरहितेन प्रयोजयेत् । अटव्यन्तपालपुरराष्ट्रमुख्यैश्च अटवीपालान्तपालपुरमुख्यराष्ट्रमुख्यैश्च सह प्रति-

संसर्गे सोपदानं संगतं गच्छेत् अनुग्रहार्थे तदानुकूल्यार्थम् । श्रीमूला.

**आपदि सारमात्मानं वा मोक्षयेत् । आत्मनो वा भूमिमप्राप्तः सर्वदेयविशुद्धं व्यवहरेत् ॥**

आपदि चोरोपरोधे सारं रत्नादिद्रव्यम् आत्मानं वा स्वशरीरं च मोक्षयेत् रक्षेत् । इदं च सति संभवे । उभयमोक्षणासौकर्ये तु सारपरित्यागेनाऽऽत्मैव मोक्षणीयः । यदाहुः— ' शरीरमर्थाद्गोप्तव्यं राजगुह्यभयार्दितम् । वित्तहीनोऽल्पवित्तो वा जीवन् भद्राणि पश्यति ॥ ' इति । आत्मनो वेति । आत्मनो वा भूमिमप्राप्तः स्वपण्यविक्रयभूमिभूतात् परविषयात् स्वविषयमप्रत्यागतः , परविषयवासकाले कृत्स्नेऽपीत्यर्थः , सर्वदेयविशुद्धं व्यवहरेत् शुल्कादिनिखिलदेयाप्रदानापराधविधुरं विक्रयव्यवहारं कुर्यात् स्वल्पप्रत्याशया सर्वनाशो मा भूदिति । श्रीमूला.

**वारिपथे च यानभाटकपथ्यदनपण्यप्रतिपण्यार्घप्रमाणयात्राकालभयप्रतीकारपण्यपत्तनचारित्राण्युपलभेत ॥**

जलपथे च यानभाटकादीनि उपलभेत ज्ञात्वा तदनुरोधेन व्यवहरेत् । तत्र यानभाटकः नाविकभृतिः । पथ्यदनं मार्गभक्तम् । पण्यप्रतिपण्यार्घप्रमाणं पण्यप्रतिपण्ययोरर्घतारतम्यम् । यात्राकालः यात्रार्हऋतुविशेषलक्षणः गतागतापेक्षितकालेयत्ता वा । भयप्रतीकारः संभाविततस्करादिभयप्रतिविधिः । पण्यपत्तनचारित्रं स्वपण्यविक्रयस्थानभूतपरकीयपत्तनसमुदाचारः । श्रीमूला.

**नदीपथे च विज्ञाय व्यवहारं चरित्रतः ।**
**यतो लाभस्ततो गच्छेदलाभं परिवर्जयेत् ॥**

अध्यायान्ते श्लोकमाह— नदीपथे चेति । नदीपथे च न केवलं समुद्रमार्गे, किंतु नदीमार्गेऽपि व्यवहारं वाणिज्यं चरित्रतः तत्तद्देशाचारानुरोधेन विज्ञाय यतः येन पथा लाभः ततो गच्छेत् । अलाभम् अल्पलाभं क्षयव्ययप्रवासादिमहाक्लेशाननुरूपलाभं जलपथं परिवर्जयेत् । श्रीमूला.

वन्यानां दारुवेणुवल्लिवल्कादिद्रव्याणामध्यक्षस्य कर्तव्यानि

**[1]कुप्याध्यक्षो द्रव्यवनपालैः कुप्यमानाययेत् । द्रव्यवनकर्मान्तांश्च प्रयोजयेत् । द्रव्यवनच्छिदां च देयमत्ययं च स्थापयेदन्यत्राऽऽपद्भ्यः ॥**

' कुप्याध्यक्षः ' इति सूत्रम् । कुप्यं सारदारुवेणुवल्लिवल्कादि, तत्र नियुक्तः कुप्याध्यक्षः अर्थात् तस्य व्यापारः कुप्यविषय इहोच्यते इति सूत्रार्थः । कोशप्रवेश्यरत्नपरीक्षायां रत्नसारफल्गुकुप्यान्युपक्रम्य रत्नसारफल्गुप्रतिग्रहणमुक्तम् , कुप्यस्य त्वनुक्तमिहोच्यते इति संबन्धः । अथवा ' संनिधाता कोशगृहम् ' (कौ. २।५) इत्यादिना कुप्यगृहविधानं पूर्वमुक्तम् , तदध्यक्षव्यापारस्त्वधुनोच्यते इति ।

कुप्याध्यक्ष इत्यादि । कुप्याध्यक्षः द्रव्यवनपालैः वार्क्षवनरक्षिभिः कुप्यं सारदार्वादि आनाययेत् आवाहयेत् । द्रव्यवनकर्मान्तांश्च दारुनिर्मेयान् गृहशकटादिकान् प्रयोजयेत् कारयेत् । द्रव्यवनच्छिदां च द्रव्यवनच्छेदोपजीविनां च वृक्षमर्मज्ञानां देयं छेदनीयशिरःशाखास्कन्धमूलभागभेदेन छेदनदुर्गतारणाद्यर्थे प्रदेयं वेतनं स्थापयेत् एतावदिति व्यवस्थापयेत् । अत्ययं च दण्डं च अननुज्ञातच्छेदने स्थापयेत् । किं सर्वदा ? नेत्याह— अन्यत्राऽऽपद्भ्य इति । शकटयुगभङ्गादिविपत्प्राप्तौ तु कालविलम्बासहयुगयोजनाद्यर्थे अननुज्ञातच्छेदनं नापराधः । श्रीमूला.

**कुप्यवर्गः— शाकतिनिशधन्वनार्जुनमधूकतिलकसालशिंशपारिमेदराजादनशिरीषखदिरसरलतालसर्जाश्वकर्णसोमवल्ककशाम्रप्रियकधवादिः सारदारुवर्गः ॥**

कुप्यवर्ग इति । वक्ष्यते इति शेषः । अयं चाधिकारः । तत्र शाकाद्येकविंशतिः सारदारुवर्ग इत्याह— शाकतिनिशेत्यादि । शाकः पृथुच्छदाख्यो वृक्षः । तिनिशः नेमी । धन्वनः धनुर्वृक्षः । अर्जुनः ककुभः । मधूकः मधुद्रुमः । तिलकः क्षुरकः । सालः कार्श्यकाख्यः ।

---

(१) कौ. २।१७.

शिंशपा तीक्ष्णधूमाख्या । अरिमेदः विट्खदिरः पूतिखदिराख्यः । राजादनः फलाध्यक्षाख्यः । शिरीषः कपीतनः । खदिरः तिक्तसाराख्यः । सरलः पूतिकाष्ठाख्यः । तालः तृणद्रुमः । सर्जः पीतसालकः । अश्वकर्णः सर्जभेदः । सोमवल्कः सितखदिरः । कशः लोमशपुच्छको नकुलवृक्षभेदः । आम्रः चूतः । प्रियकः गौरसर्जः । धवः धुरंधराख्यः । आदिग्रहणमनुक्तसंग्रहार्थम् । श्रीमूला.

**उटजचिमियचापवेणुवंशसातीनकण्टकभाल्लूकादिर्वेणुवर्गः ॥**

वेणुवर्गमाह— उटजेत्यादि । उटजः महासुषिरः तनुकण्टकः कर्कशपृष्ठः । चिमियः निःसुषिरः मृदुत्वकः । चापः स्वल्पसुषिरः अतिखरश्च । वेणुः निष्कण्टकः चापयोग्यः । वंशः दीर्घपर्वकः सरन्ध्रः सकण्टकश्च । सातीनकण्टकौ वेणुभेदौ । भाल्लूकः स्थूलदीर्घो महाप्रमाणो निष्कण्टकः । श्रीमूला.

**वेत्रशीकवल्लीवाशीश्यामलतानागलतादिर्वल्लीवर्गः ॥**

वल्लीवर्गमाह— वेत्रेत्यादि । वेत्रं प्रसिद्धम् । शीकवल्ली हंसवल्लीति देशविशेषप्रसिद्धा । वाशी अर्जुनपुष्पसमानपुष्पा । श्यामलता त्रिपुटीसदृशी । नागलता नागजिह्वा । श्रीमूला.

**मालतीमूर्वार्कशणगवेधुकातस्यादिर्वल्कवर्गः ॥**

वल्कवर्गमाह— मालतीत्यादि । मालती माहुलनीति देशविशेषप्रसिद्धा । मूर्वा मरुलिति द्रविडप्रसिद्धा । अर्कः शणः अतसी च प्रतीताः । गवेधुका नागबला । श्रीमूला.

**मुञ्जबल्बजादि रज्जुभाण्डम् । तालीतालभूर्जानां पत्रम् । किंशुककुसुम्भकुङ्कुमानां पुष्पम् ॥**

रज्जुभाण्डादिकमाह— मुञ्जेत्यादि । मुञ्जबल्बजादि— मुञ्जः शरः, बल्बजाः तृणविशेषः, इत्येवमादि रज्जुनिर्माणसाधनम् । तालीत्यादि । ताली तालभूर्जाः प्रसिद्धाः, तेषां पत्रं लेख्योपयोगि । किंशुककुसुम्भकुङ्कुमानां पुष्पं वस्त्रादिरञ्जनसाधनम् । श्रीमूला.

**कन्दमूलफलादिरौषधवर्गः ॥**

ओषधिवर्गमाह— कन्दमूलेत्यादि । कन्दाः सूरणादयः, मूलानि उशीरादीनि, फलानि आमलकहरीतक्यादीनि, एतदादिः ओषधिवर्गः । श्रीमूला.

**कालकूटवत्सनाभहालाहलमेषशृङ्गमुस्ताकुष्ठमहाविषवेल्लितकगौरार्द्रबालकमार्कटहैमवतकालिङ्गकदारदकाङ्कोलसारकोष्ट्रकादीनि विषाणि ॥**

विषवर्गमाह— कालकूटेत्यादि । कालकूटः अश्वत्थपत्राकृतिपत्रो वृक्षः पर्वान्तराच्छुष्कमार्द्रं च निर्यासमुद्गिरति । वत्सस्येव नाभिरस्य वत्सनाभः । निर्गुण्डीसदृशपत्रं सूचीपत्रं नीलपल्लवं गोस्तनाकृतिफलं हालाहलम् । मेषशृङ्गम् उत्पलमुकुलाकारम् । मुस्ता द्विविधा मुस्ताकारा खण्डशर्करोपमा च । शङ्खपाण्डरा चेति स्वामी । कुष्ठं कुष्ठसमानकन्दम् । महाविषं मांसवर्णं स्तनचूचुकाकारम् । वेल्लितकं मूलजं कृष्णरक्तम् । गौरार्द्रं कन्दजं कृष्णम् । बालकं पिप्पल्याकारम् । मार्कटं कपिमेढ्राकारम् । हैमवतं हिमवदुत्पन्नं दीर्घपत्रम् । कालिङ्गकं कलिङ्गभवं यवाकृति । दारदकं दरदप्रभवं पत्रविषम् । अङ्कोलसारकम् अङ्कोलवृक्षजं विषम् । उष्ट्रकम् उष्ट्रमेढ्राकारम् । इत्येवं षोडश । आदिग्रहणात् अनुक्तानामेकोनसप्ततिप्रकाराणां ग्रहणम् । तदेवं स्थावराणि विषाणि पञ्चाशीतिर्भवन्ति दशाश्रयाणि । तथाच भट्टस्वामिनः श्लोकः (?कौ)— 'त्वक्कन्दपत्रपुष्पाणि फलं निर्यास एव च । मूलं सारस्तथा धातुर्बीजं चेति दशाऽऽश्रयाः ॥ अव्यक्तरसगन्धानि तीक्ष्णान्येकरसानि च । पञ्चाशीतिर्विषाण्येवमुपदिष्टानि तत्त्वतः ॥' इति । श्रीमूला.

**सर्पाः कीटाश्च । त एव कुम्भगताः । विषवर्गः ॥**

जङ्गमविषाणि द्विविधान्याह— सर्पाः कीटाश्चेति । सर्पाः कृष्णसर्पादयः । कीटाः चित्रभेककौण्डिन्यकादयः । उभये चैते प्रत्येकं द्विविधाः संस्कृतासंस्कृतभेदेन । तत्र असंस्कृताः स्वभावस्थिताः । संस्कृतांस्त्वाह— त एवेति । त एव सर्पाः कीटाश्च कुम्भगताः औपनिषदोक्तविधानेन संस्कृत्य कुम्भे त्रपुघटे संयोजिताः । स एषः विषवर्गः । श्रीमूला.

**गोधासेरकद्वीपिशिंशुमारसिंहव्याघ्रहस्तिमहिषचमरसृमरखड्गगोमृगगवयानां चर्मास्थिपित्तस्नाय्वस्थि(?)दन्तशृङ्गखुरपुच्छानि । अन्येषां वाऽपि मृगपशुपक्षिव्यालानाम् ॥**

अथ चर्मादिवर्गानाह– गोधासेरकेत्यादि । सेरकः गौरत्वक् गोधाभेदः । द्वीपी चित्रकायः । सृमरः शरभः । अन्ये प्रसिद्धाः । एषां चर्मादीनि कुप्याधिकारात् कुप्यसंज्ञानि संग्राह्याणि च भवन्ति । अन्येषां वाऽपि अनुक्तानामपि मृगपशुपक्षिव्यालानां चर्मादीनि यथोपयोगं संग्राह्याणि । श्रीमूला.

**कालायसताम्रवृत्तकांस्यसीसत्रपुवैकृन्तकारकूटानि लोहानि ॥**

लोहान्याह– कालायसेत्यादि । आकरकर्मान्तप्रवर्तनप्रकरणे पूर्वमुक्तानामपि लोहानामिह पुनः पाठः कुप्यसंज्ञार्थः । श्रीमूला.

**विदलमृत्तिकामयं भाण्डम् ॥**

भाण्डमाह– विदलेत्यादि । भाण्डं विदलमृत्तिकामयं विदलमयं वंशवेत्रादिमयं पिटकफेलकादि, मृत्तिकामयं कुलालभाण्डं घटशरावादि । श्रीमूला.

**अङ्गारतुषभस्मानि मृगपशुपक्षिव्यालवाटाः काष्ठतृणवाटाश्चेति ॥**

अङ्गारतुषभस्मानि, मृगपशुपक्षिव्यालवाटाः मृगादीनां वाटाः स्थानानि, काष्ठतृणवाटाश्च काष्ठतृणानां समूहाश्च कुप्यसंज्ञाः तेऽपि संग्राह्याः । श्रीमूला.

**बहिरन्तश्च कर्मान्ता विभक्ताः सर्वभाण्डिकाः । आजीवपुररक्षार्थाः कार्याः कुप्योपजीविना ॥**

अध्यायान्ते श्लोकमाह– बहिरिति । बहिः द्रव्यवननिकटप्रदेशो जनपदे च अन्तश्च दुर्गाभ्यन्तरे च कर्मान्ताः शकटादिघटनरूपाः विभक्ताः असंकीर्णाः पृथगवस्थानाः सर्वभाण्डिकाः सर्वविधभाण्डसम्बद्धाः आजीवपुररक्षार्थाः आजीवार्थाः जीविकाप्रयोजनाः हलमुसलशकटादयः पुररक्षार्था यन्त्रायुधादयश्च कार्याः कारयितव्याः कुप्योपजीविना तत्तत्कुप्यशिल्पाजीवेन प्रयोज्यकर्त्रा कुप्याध्यक्षेण प्रयोजकेन । श्रीमूला.

### आयुधागाराध्यक्षस्य कर्तव्यानि

**[1]आयुधागाराध्यक्षः साङ्ग्रामिकं दौर्गकर्मिकं परपुराभिघातिकं यन्त्रमायुधमावरणमुपकरणं च तज्जातकारुशिल्पिभिः कृतकर्मप्रमाणकालवेतनफलनिष्पत्तिभिः कारयेत् । स्वभूमौ च स्थापयेत् । स्थानपरिवर्तनमातपप्रवातप्रदानं च बहुशः कुर्यात् । ऊष्मोपस्नेहक्रिमिभिरुपहन्यमानमन्यथा स्थापयेत् । जातिरूपलक्षणप्रमाणागममूल्यनिक्षेपैश्चोपलभेत ॥**

‘ आयुधागाराध्यक्षः ’ इति सूत्रम् । आयुधशालाध्यक्षव्यापारः अभिधीयते इति सूत्रार्थः । कुप्यप्रसङ्गात् तदन्तर्गतायुधप्रस्तावसंगतिः । अथवा संनिधातुरायुधागारकरणं पूर्वमुक्तम् , तदध्यक्षस्त्वनुक्त इहाभिधीयते इति संगतिः ।

आयुधागारेत्यादि । आयुधागाराध्यक्षः साङ्ग्रामिकं सङ्ग्रामप्रयोजनकम् , दौर्गकर्मिकम्– दुर्गकर्म स्वदुर्गरक्षणम् , तत्साधकम् , परपुराभिघातिकं शत्रुदुर्गविध्वंसनानुकूलम् , यन्त्रं सर्वतोभद्रजामदग्न्यादि । ‘चक्रयन्त्रम्’ इति मूलपाठश्चिन्त्यः । आयुधं शक्तिचापादि, आवरणं लोहजालादि, उपकरणं च युग्यादि च तज्जातकारुशिल्पिभिः तज्जातैः तत्कर्मसमर्थैः कारुभिः स्थूलकर्मकारिभिः , शिल्पिभिः सूक्ष्मकर्मकारिभिश्च । तैः कीदृशैः ? कृतकर्मप्रमाणकालवेतनफलनिष्पत्तिभिः । कृतकर्मप्रमाणकालवेतना– कर्मप्रमाणं कर्तव्ययन्त्रायुधादीनां संख्यासंस्थानादिमानम् , कालः अवधिः , वेतनं भृतिः इत्येतानि कृतानि परिभाषितानि यस्यां सा तथाभूता फलनिष्पत्तिः यन्त्रादिनिष्पत्तिः येषां तैः तथाभूतैः कारयेत् । स्वभूमौ च स्थापयेदिति । कारितानि च तानि स्वायत्ते स्थाने निवेश्य रक्षेत् । स्थानपरिवर्तनं स्थानात्स्थानान्तरनिवेशनम् आतपप्रवातप्रदानं आतपवातविसारणं च तेषां बहुशः असकृत् त्रिचतुर्दिवसाभ्यासं कुर्यात् । ऊष्मोपस्नेहक्रिमिभिः घर्मप्रस्वेदघुणकादिभिः उपहन्यमानम्

(१) कौ. २।१८.

अन्यथा प्रकारान्तरेण अनुपघातहेतुना स्थापयेत् । जाती-त्यादि । जात्यादिभिश्च उपलभेत तानि विजानीयात् । तत्र जातिः स्वभावः पाटनादिः । रूपम् ऋजुवक्रतादि । लक्षणं शास्त्रोक्तमुत्तमादिचिह्नम् । प्रमाणं मानोन्मानतो दैर्घ्यविस्तारादिपरिच्छेदः । आगमः यतो लब्धं सः । मूल्यम् अर्घः । निक्षेपः कोशभस्त्रादिः । श्रीमूला.

**सर्वतोभद्रजामदग्न्यबहुमुखविश्वासघाति-संघाटियानकपर्जन्यकबाह्वूर्ध्वबाह्वर्धबाहूनि स्थित-यन्त्राणि ॥**

यन्त्राण्याह— सर्वतोभद्रेत्यादि । अत्र स्वामी व्याचष्टे— ' तत्र सर्वतोभद्रं शकटचक्रप्रमाणं तीक्ष्णनेमि कुड्यस्थित-गन्धर्वहस्तस्थं भ्रमणात् सर्वतः पाषाणान् क्षिपति । अपरे तु सिद्धभूमिकायन्त्राख्यं लघुतरपाषाणक्षेपणमाचक्षते । जाम-दग्न्यं मध्यरन्ध्रविनिहितमहाशरं यन्त्रम् । बहुमुखं प्राकारो-त्सेधाधिगतश्चक्रसंनिविष्टश्चर्मावृतस्त्रिचतुस्तलो धानुष्काधि-ष्ठानं च अट्टालको भवति । तत्र स्थिता धन्विनो नराः सर्वतः शरान् क्षिपन्ति । विश्वासघाति तिर्यगवस्थितो नगरस्य बहिः परिघो यन्त्रविश्लेषणेन हन्ति । संघाटि दीर्घकाष्ठसंघटितमट्टालकादिप्रदीपनार्थमग्नियन्त्रम् । यानकं चक्रारूढं दण्डायतं फलककोष्ठि । पर्जन्यकं अग्निप्रशम-नार्थमुदकयन्त्रम् । अन्ये तु पञ्चाशद्धस्तायतं बहिः प्राकारस्य संततं यन्त्रविश्लेषणेन समीपगतं व्यापादयती-त्याचक्षते । विश्वासघातिनोऽस्य च विशेषः— तत्प्रच्छन्नं लघुतरं च भवति, एतत्तु तद्विपरीतमिति । बाहुयन्त्रं पर्जन्यकार्धप्रमाणं स्तम्भद्वयं परस्पराभिमुखं यन्त्रविश्लेषणेन मारयति । ऊर्ध्वबाहु ऊर्ध्वस्थितः पर्जन्यकप्रमाणो महा-स्तम्भः समीपगतान् यन्त्रविश्लेषणेन हन्ति । अर्धबाहु पूर्वस्यैवार्धप्रमाणम् । इत्येवमेतानि दश स्थितयन्त्राणि ' इति । श्रीमूला.

**पञ्चालिकदेवदण्डसूकरिकामुसलयष्टिहस्ति-वारकतालवृन्तमुद्गरद्रुघणगदास्पृक्तलाकुद्दाला-स्फोटिमोद्घाटिमोत्पाटिमशतघ्नीत्रिशूलचक्राणि चलयन्त्राणि ॥**

चलयन्त्राण्याह— पञ्चालिकेत्यादि । पञ्चालिकं तीक्ष्ण-मुखनिरन्तरसारदारुफलकं प्राकारात् बहिरुदकमध्ये शत्रु-मार्गनिरोधार्थं क्रियते । 'देवदण्डः कीलरहितः महास्तम्भः प्रतीतरोचाभिधानः ' इति स्वामी । स प्राकारस्योपरि स्थाप्यते । 'सूकरिका सूत्रचर्ममयी कार्पासोर्णादिपूर्णमध्या महाभस्त्रा प्रमाणतो गोपुराट्टालकदेवपथादीनां प्रच्छादनी बाह्यपाषाणनिवारणाय क्रियते इति केचित् । वेणुमयी चर्मावृता सूकराकारा प्राकारग्रहणनिवारणाय क्रियते इत्यन्ये ' इति स्वामी । मुसलयष्टिः खादिरः शूलः । हस्तिवारकः ' द्विमुखस्त्रिमुखो वेति केचित् । हस्त्या-घाताय हस्तिपरिघः इत्यपरे ' इति स्वामी । तालवृन्तं वातचक्रम् । मुद्गरः प्रसिद्धः । द्रुघणः मुद्गराकारः । गदा लगुडी । स्पृक्तला गदैव कण्टकनिचिता । कुद्दालः खनित्रम् । आस्फोटिमं चर्मावृतं चतुःस्तम्भं मृत्पाषाण-क्षेपणयन्त्रम् । उद्घाटिमं मुद्गराकृतिरेव यन्त्रभेदः । उत्पाटिमं स्तम्भाद्युत्पाटनं श्येनयन्त्रम् । शतघ्नी स्थूल-दीर्घकीलाचितो महास्तम्भः पर्यन्ताहितशकटचक्रः प्राकारो-परि क्रियते । त्रिशूलचक्रे प्रसिद्धे । इत्येतानि सप्तदश चलयन्त्राणि । श्लोकश्चात्र भट्टस्वामिनः— ' व्यधितं भ्रामितं चैव भारयुक्तं च कारयेत् । पीडनाद्भ्रमणा-द्धारात्त्रिधा यन्त्रं प्रवर्तते ॥ ' इति । श्रीमूला.

**शक्तिप्रासकुन्तहाटकभिण्डिपालशूलतोमर-वराहकर्णकणयकर्पणत्रासिकादीनि च हल-मुखानि ॥**

आयुधान्याह— शक्तिप्रासेत्यादि । शक्तिः सर्वलोहमयं करवीरपत्राकृतिमुखं अधस्तात् गोस्तनाकारं चतुर्हस्तदीर्घ-मायुधम् । प्रासः चतुर्विंशत्यङ्गुलो द्विपीठः सर्वलोहमयः काष्ठगर्भश्च । कुन्तः ' हस्ताः सप्तोत्तमः कुन्तः षड्ढस्तै-श्चैव मध्यमः । कनिष्ठः पञ्चहस्तैस्तु कुन्तमानं प्रकीर्ति-तम् ॥ ' इत्युक्तलक्षणः । हाटकं त्रिकण्टकं कुन्ततुल्य-प्रमाणम् । भिण्डिपालः कुन्त एव पृथुफलः । शूलम् एकमुखमनियतहस्तप्रमाणम् । तोमरः शराकृतिशिखः ' चतुर्हस्तः कनिष्ठस्तु चत्वारोऽर्धं च मध्यमः । उत्तमः पञ्चहस्तस्तु प्रमाणात्तोमरो भवेत् ॥ ' इत्यभिहित-

त्रिभेदः । वराहकर्णः प्रास एव वराहकर्णाकृतिमुखः । कणयः सर्वलोहमयः उभयतस्त्रिकण्टकाकारमुखो मध्य-मुष्टिः ' कनिष्ठो विंशतिः स्यात्तदङ्गुलानां प्रमाणतः । द्वाविंशतिर्मध्यमः स्याच्चतुर्विंशतिरुत्तमः ॥ ' इत्युक्तप्रकारत्रयः । कर्पणः तोमरतुल्यमानो हस्तक्षेप्यः पक्षयुक्तः शरः ' कनीयः सप्तकर्षं तु द्विपलं मध्यमं भवेत् । उत्तमं नवकर्षं तु कर्पणस्य पलं भवेत् ॥ ' इत्युक्तत्रिप्रकारपलप्रमाणः । त्रासिका सर्वलोहमयी प्रासप्रमाणा चूडोपेता । इत्येवंजातीयानि आयुधानि हलमुखानि, तीक्ष्णाग्रत्वात् । श्रीमूला.

**तालचापदारवशार्ङ्गाणि कार्मुककोदण्डद्रूणा धनूंषि ॥**

धनूंष्याह— तालेत्यादि । तालचापदारवशार्ङ्गाणि— तालं तालमयम् , चापं वेणुविशेषमयम् , दारवं धन्वनादिसारवृक्षदारुनिर्मितम् , शार्ङ्गं विषाणमयम् इत्येवं चतुष्प्रकृतीनि धनूंषि भवन्ति । तानि च कार्मुककोदण्डद्रूणाः आकृतिक्रियादिभेदात् कार्मुकादिसंज्ञानि भवन्ति । तत्र कार्मुककोदण्डयोः प्रमाणलक्षणादिकं धनुर्वेदादवगन्तव्यम् । ' द्रूणस्तु लोकप्रतीतः ' इति स्वामी । श्रीमूला.

**मूर्वार्कशणगवेधुवेणुस्नायूनि ज्याः ॥**

ज्या आह— मूर्वेत्यादि । स्नायुः वायुवाहिनी नाडी । शेषं प्रतीतम् । तत्र वेणुविदलज्या कोदण्डस्यैव, अन्ययोस्त्वन्या इति स्वामी । श्रीमूला.

**वेणुशरशलाकादण्डासननाराचाश्चेषवः । तेषां मुखानि छेदनभेदनताडनान्यायसास्थिदारवाणि ॥**

इषूनाह— वेण्वित्यादि । तत्र वेणुः उटजचिमियादिः , शरः जात्यशराख्यः स्तम्बः , शलाका सारदारुमयी, दण्डासनः अर्धनाराचः , नाराचः सर्वलोहमयः । चकारो भ्रमरद्रोणमक्षिकादिसंग्रहार्थः इति स्वामी । इषुकर्माण्याह— तेषामिति । तेषाम् इषूणां मुखानि अग्राणि छेदनानि कर्तनानि, भेदनानि सशोणिताभिघातदायकानि, ताडनानि अशोणितप्रहारदायकानि च भवन्ति । मुखानां प्रकृतिमाह— आयसास्थिदारवाणीति । आयसानि, अस्थिमयानि, दारवाणि सारदारुमयानि च । श्रीमूला.

**निस्त्रिंशमण्डलाग्रासियष्टयः खड्गाः । खड्गमहिषवारणविषाणदारुवेणुमूलानि त्सरवः ॥**

खड्गानाह— निस्त्रिंशेत्यादि । तत्र निस्त्रिंशः वक्राग्रः , मण्डलाग्रः ऋजुवृत्ताकाराग्रः , असियष्टिः तनुदीर्घाकृतिः । त्सरुप्रकृतीराह— खड्गेत्यादि । खड्गः गण्डकमृगः , महिषः सैरिभः , वारणः गजः इत्येतेषां विषाणानि शृङ्गाणि, दारूणि सारदारूणि, वेणुमूलानि वंशमूलानि च त्सरवः खड्गमुष्टयः । श्रीमूला.

**परशुकुठारपट्टसखनित्रकुद्दालक्रकचकाण्डच्छेदनाः क्षुरकल्पाः ॥**

क्षुरकल्पानाह— परशुकुठारेत्यादि । तत्र परशुः सर्वलोहमयश्चतुर्विंशत्यङ्गुलः । पट्टसः उभयान्तत्रिशूलः । क्रकचः करपत्रम् । काण्डच्छेदनः काण्डासिकः । शेषं प्रतीतम् । श्रीमूला.

**यन्त्रगोष्पणमुष्टिपाषाणरोचनीदृषदश्चाऽऽयुधानि ॥**

पाषाणशब्दस्य यन्त्रादिषु प्रत्येकं संबन्धः । यन्त्रपाषाणः यन्त्रक्षेप्यपाषाणः । गोष्पणपाषाणः गोष्पणाख्ययष्टिविशेषक्षेप्यः पाषाणः । ' गावण ' इति भाषापाठः साधुतरः । मुष्टिपाषाणः मुष्टिक्षेप्यः पाषाणः । रोचनी दलनयन्त्रशिला । दृषत् महाशिला । चकारः समुच्चयार्थः । इत्येतानि आयुधानि । श्रीमूला.

**लोहजालजालिकापट्टकवचसूत्रकङ्कटशिंशुमारकखड्गिधेनुकहस्तिगोचर्मखुरशृङ्गसंघातं वर्माणि । शिरस्त्राणकण्ठत्राणकूर्पासकञ्चुकवारवाणपट्टनागोदरिकाः । पेटीचर्महस्तिकर्णतालमूलधमनिकाकवाटकिटिकाप्रतिहतवलाहकान्ताश्चाऽऽवरणानि ॥**

वर्माण्याह— लोहजालेत्यादि । लोहशब्दो जालादिषु चतुर्षु प्रत्येकं संबध्यते । लोहजालं सशिरस्त्राणा प्रावरणी, लोहजालिका मुण्डसंनाहः , लोहपट्टः विबाहुसंनाहः , लोहकवचं बाहुरहितं वक्षःपृष्ठमात्रावरणम् , सूत्रकङ्कटः

कार्पासादिसूत्रमयः संनाहः, शिंशुमारकादीनां पञ्चानां चर्मखुरशृङ्गसंघातश्च चतुरशिल्पिघटितानि त्वक्शफविषाणानि च वर्माणि भवन्ति। तत्र शिंशुमारकः अम्बुकपिनामा जलचरः। खड्गी खड्गमृगः। धेनुकः गोसदृशो गवयः इति व्याख्येयम्। सेरकपाठस्तु धेनुकस्थाने भाषाटीकायामुपलभ्यते। हस्ती गजः। गौः वृषभः। शिरस्त्राणेत्यादि। शिरस्त्राणादयः सप्त च वर्माणि। तत्र शिरस्त्राणं शिरोमात्रावरणम्। कण्ठत्राणं कण्ठमात्रावरणम्। कूर्पासः अर्धबाहुकः। कञ्चुकः जानुपर्यन्तः। वारवाणः गुल्फपर्यन्तः। पट्टः विबाहुरलोहमयः। नागोदरिका कराङ्गुलित्राणम्। इत्येतानि देहधार्याणि। करधार्याण्यावरणान्याह— पेटीत्यादि। पेट्यादयो नव। तत्र पेटी काष्ठवल्लीमयं खेटकम्। चर्म चर्मफलकम्। हस्तिकर्णः अवकुण्ठनफलकम्। तालमूलं काष्ठनिर्मितं खेटकम्। धमनिका सूत्रमयी। कवाटं काष्ठमयफलकभेदः। किटिका चर्मवेणुविदलमयी। अप्रतिहतः हस्तवारकाख्यः। वलाहकान्तः अप्रतिहत एव पर्यन्तबद्धलोहपट्टः। चः समुच्चये। श्रीमूला.

**हस्तिरथवाजिनां योग्याभाण्डमालंकारिकं संनाहकल्पनाश्चोपकरणानि। ऐन्द्रजालिकमौपनिषदिकं च कर्म॥**

उपकरणान्याह— हस्तीत्यादि। हस्तिरथवाजिनां योग्याभाण्डं शिक्षापरिकरभूतं कशाङ्कुशादिकम्, आलंकारिकं अलंकारप्रयोजनकं पताकाक्षुरप्रमालादिकम्, संनाहकल्पनाश्च वर्मतोमरशरीरावारकादयश्च उपकरणानि। उपकरणान्तरमाह— ऐन्द्रेत्यादि। ऐन्द्रजालिकं कर्म अल्पसैन्यस्य बहुसैन्यत्वप्रदर्शनम् अनग्नौ अग्निप्रदर्शनमित्येवंजातीयं मायिकम्, औपनिषदिकं च औपनिषदकाधिकरणोक्तं विषधूमाम्बुदूषणप्रलम्भनादिप्रयोगतत्प्रतिक्रियालक्षणम्। चकारादनुक्तमन्यच्च कर्म उपकरणपदानुवर्तनादुपकरणसंज्ञम्। श्रीमूला.

**कर्मान्तानां च—**

**इच्छामारम्भनिष्पत्तिं प्रयोगं व्याजमुद्दयम्।**
**क्षयव्ययौ च जानीयात्कुप्यानामायुधेश्वरः॥**

कर्मान्तानां चेति वक्ष्यमाणश्लोकान्वयि। श्लोकमाह— इच्छामिति। कुप्यानां कर्मान्तानां गतप्रकृताध्यायद्वयोक्तद्रव्यसंबन्धिनां व्यापाराणां विषये इच्छां राजरुचिम्, आरम्भनिष्पत्तिम् आरम्भसहितां निष्पत्तिम्, राजेच्छानुसारेणोपक्रममर्थसिद्धिं चेत्यर्थः, प्रयोगम् उपयोगम्, व्याजं दोषम्। 'व्याजिम्' इति पाठे राजपण्यविक्रये अन्तरग्राह्यम्। उद्दयं लाभम्। 'उन्नयम्' इति भाषापाठश्च श्रेयान्। क्षयव्ययौ च क्षयं साधनच्छेदं व्ययं कर्मकरादिभक्तादिपरिव्ययं च जानीयात् पर्यालोचयेत्। आयुधेश्वरः आयुधागाराध्यक्षः। इदं कुप्याध्यक्षस्याप्युपलक्षणम्। श्रीमूला.

धनधान्यादिभाण्डानां तुलादिमाननिर्माणविधिः

**[1]पौतवाध्यक्षः पौतवकर्मान्तान् कारयेत्॥**

'तुलामानपौतवम्' इति सूत्रम्। तुलायाः उन्मानसाधनस्य मानस्य प्रस्थकुडुबादेश्च पौतवम्— पोतुः मानभाण्डशोधकः, तस्य कर्म अकृतकरणं कृतशोधनं चेहाभिधीयते इति सूत्रार्थः। 'तुलाप्रतिमानं पौतवाध्यक्षे वक्ष्यामः' (कौ. २।१३) इत्युक्तं सुवर्णाध्यक्षे, तदेतत् कुप्याङ्गत्वात् कुप्यानन्तरमभिधीयते इति संगतिः।

पौतवेत्यादि। पौतवाध्यक्षः पौतवाधिकृतः पौतवकर्मान्तान् तुलाकुडुबादिघटनकर्माणि कारयेत्। श्रीमूला.

**धान्यमाषा दश सुवर्णमाषकः। पञ्च वा गुञ्जाः। ते षोडश सुवर्णः कर्षो वा। चतुष्कर्षं पलम्॥**

अभ्यर्हितत्वात् प्रथमं सुवर्णस्य प्रतिमानमाह— धान्येत्यादि। धान्यमाषाः दश सुवर्णमाषकः धान्यमाषदशकप्रतिमानं सुवर्णं माषकसंज्ञम्। पञ्च वा गुञ्जाः गुञ्जापञ्चकं वा माषक इत्यनुवर्तनान्माषकसंज्ञम्। ते षोडश सुवर्णः कर्षो वा माषषोडशकं सुवर्णसंज्ञं भवति कर्षसंज्ञं वा। चतुष्कर्षं पलमिति। चत्वारः कर्षाः पलाख्याः।

श्रीमूला.

**अष्टाशीतिर्गौरसर्षपा रूप्यमाषकः। ते षोडश धरणम्। शैम्ब्यानि वा विंशतिः॥**

---

(१) कौ. २।१९.

रूप्यस्य प्रतिमानमाह– अष्टाशीतिरिति । अष्टाशीतिः गौरसर्षपाः रूप्यमाषकः रूप्यस्यैको माषकः । ते रूप्य-माषकाः षोडश धरणं धरणाख्याः । शैम्ब्यानि विंशतिर्वा शिम्बिफलविंशतिर्वा धरणम् । श्रीमूला.

**विंशतितण्डुलं वज्रधरणम् ॥**

वज्राख्यस्य रत्नस्य प्रतिमानमाह– विंशतीत्यादि । विंशतितण्डुलं मध्यमाखण्डव्रीहितण्डुलप्रमाणं वज्रधरणं भवति । श्रीमूला.

**अर्धमाषकः, माषकः, द्वौ, चत्वारः, अष्टौ माषकाः, सुवर्णः, द्वौ, चत्वारः, अष्टौ सुवर्णाः, दश, विंशतिः, त्रिंशत्, चत्वारिंशत्, शतमिति ॥**

प्रतिमानसंख्या आह– अर्धमाषक इति । अर्ध-माषकः, माषकः, द्वौ माषकौ, चत्वारः माषकाः, अष्टौ माषकाः, सुवर्णः, द्वौ सुवर्णौ, चत्वारः सुवर्णाः, अष्टौ सुवर्णाः, दश, विंशतिः, त्रिंशत्, चत्वारिंशत्, शतम् इति चतुर्दश भवन्ति । श्रीमूला.

**तेन धरणानि व्याख्यातानि ॥**

सुवर्णोक्तं प्रतिमानविधिं रूप्येष्वतिदिशति– तेनेति । तेन सुवर्णप्रतिमानकथनेन धरणानि व्याख्यातानि । रूप्यधरणानामपि धरणम्, द्वे, चत्वारि, अष्टौ, दश, विंशतिः, त्रिंशत्, चत्वारिंशत्, शतमित्येवं प्रतिमान-संख्या योज्या इत्यर्थः । एवं धरणग्रहणेन रूप्यमाषकाणा-मप्युपलक्षणात् अर्धमाषकः, माषकः, द्वौ, चत्वारः इत्या-दयः शतान्तसंख्याः ( ? अष्टौ इति संख्याः ) तत्राप्यूह-नीयाः श्रीमूला.

**प्रतिमानान्ययोमयानि मागधमेकलशैलमयानि, यानि वा नोदकप्रदेहाभ्यां वृद्धिं गच्छेयुरुष्णेन वा ह्रासम् ॥**

कीदृशानि प्रतिमानानीत्यत्राऽऽह– प्रतिमानानीति । प्रतिमानानि अयोमयानि लोहमयानि, मागधमेकलशैल-मयानि मगधदेशोत्पन्नशिलामयानि मेकलापरनामकाटवी-राज्योद्भवशिलामयानि च भवन्ति । पक्षान्तरमाह– शङ्खशुक्तिप्रभृतीनि यानि उदकप्रदेहाभ्यां जलार्द्रीकरण-मललेपाभ्यां वृद्धिम् आधिक्यम् उष्णेन ह्रासं वा न्यूनतां वा न गच्छेयुः तन्मयानि वा भवन्ति । तन्मयानीत्येतच्च यत्पदसामर्थ्यलभ्यम् । श्रीमूला.

**षडङ्गुलादूर्ध्वमष्टाङ्गुलोत्तरा दश तुलाः कारयेल्लोहपलादूर्ध्वमेकपलोत्तराः । यन्त्रमुभयतः शिक्यं वा ॥**

दशविधास्तुला आह– षडङ्गुलादिति । षडङ्गुलात् षडङ्गुलायामात् प्रभृति ऊर्ध्वम् अष्टाङ्गुलोत्तराः अष्टा-ष्टाङ्गुलाधिकायामाः दश तुलाः दशप्रकाराः तुलाः कार-येत् । कियल्लोहपरिमाणाः ? लोहपलादूर्ध्वमेकपलोत्तराः । एकलोहपलात् प्रभृति एकैकलोहपलाधिकाः । तत्र प्रथमा षडङ्गुलायामा लोहपलप्रमाणा, द्वितीया चतुर्दशाङ्गुला-यामा लोहपलद्वयप्रमाणा, तृतीया द्वाविंशत्यङ्गुलायामा त्रिपललोहा च भवतीत्यनेन क्रमेणाष्टसप्तत्यङ्गुला दश-पललोहा च दशमी तुला भवति । यन्त्रमुभयतः तुला-यन्त्रस्योभयोः पार्श्वयोः शिक्यं कारयेत् मेयमानयो-र्युगपद्धारणार्थम् । वाशब्दात् एकतः शिक्यं वा, तयोः पर्यायधारणसंभवात् । ता एताः सुवर्णरूप्यतुलाः । श्रीमूला.

**पञ्चत्रिंशत्पललोहां द्विसप्तत्यङ्गुलायामां समवृत्तां कारयेत् । तस्याः पञ्चपलिकं मण्डलं बद्ध्वा समकरणं कारयेत् । ततः कर्षोत्तरं पलम्, पलोत्तरं दशपलम्, द्वादश पञ्चदश विंशतिरिति पदानि कारयेत् । तत आ शताद्दशोत्तरं कारयेत् । अक्षेषु नद्ध्रीपिनद्धं कारयेत् ॥**

तदन्यतुलामाह– पञ्चत्रिंशदित्यादि । पञ्चत्रिंशत्पल-लोहां पञ्चत्रिंशत्पलप्रमाणलोहनिर्मिताम्, द्विसप्तत्यङ्गुला-यामां त्रिहस्तदीर्घाम्, समवृत्तां तदाख्यां वर्तुलतया-न्वितार्थां कारयेत् । तस्याः पञ्चपलिकं मण्डलं चेलं बद्ध्वा समकरणम् अनुन्नतानवनतोभयान्तचिह्नं कारयेत् । ततः समचिह्नात्परतः कर्षोत्तरं पलं कर्षः अर्धपलं पादोन-पलं पलमिति कारयेत् । ततः पलोत्तरं दशपलं एकं पलं द्वे त्रीणि चत्वारि पञ्च षट् सप्त अष्ट नव दशेति । ततः द्वादश पञ्चदश विंशतिरिति षोडश पदानि रेखाः

कारयेत् । तत इति । ततः विंशतेरुपरि आ शतात् शतमभिव्याप्य दशोत्तरं दशदशाधिकं त्रिंशत् चत्वारिंशत् पञ्चाशदित्यादिकं कारयेत् । अक्षेषु पञ्चमदशमपञ्चदशादिषु नद्ध्रीपिनद्धं वरत्राबन्धं वरत्राकाररेखाबन्धं कारयेत् विशेषार्थम् । स्वामिटीकादर्शे तु 'नान्दीपिनद्धं स्वस्तिकम्' इति दृश्यते । श्रीमूला.

**द्विगुणलोहां तुलामतः षण्णवत्यङ्गुलायामां परिमाणीं कारयेत् । तस्याः शतपदादूर्ध्वं विंशतिः, पञ्चाशत्, शतमिति पदानि कारयेत् ॥**

परिमाणीसंज्ञां तुलामाह— द्विगुणेत्यादि । अतः समवृत्तायाः द्विगुणलोहां सप्ततिपललोहां षण्णवत्यङ्गुलायामां चतुर्हस्तदीर्घां परिमाणीं कारयेत् । तस्याः शतपदादूर्ध्वं समवृत्तादर्शितदिशा कर्षादिक्रमेण कृताच्छतपदात् परतः विंशतिः, तदूर्ध्वं पञ्चाशत्, तदूर्ध्वं शतम्, अर्थाच्छतद्वयम् इति पदानि कारयेत् । श्रीमूला.

**विंशतितौलिको भारः ॥**

विंशतितौलिकः— तुला नाम पलशतम्, विंशतितुलाप्रमाणः भारः तत्संज्ञः । श्रीमूला.

**दशधरणिकं पलम् । तत्पलशतमायमानी ॥**

अथ पूर्वोक्तात् सुवर्णपलादधिकं पलविशेषं सुवर्णरूप्यातिरिक्तद्रव्यपरिच्छेदोपयोगिनमाह— दशधरणिकमिति । दशधरणिकं पूर्वोक्तधरणदशकपरिमाणं पलम् । तत्पलशतं तेषां दशधरणिकानां पलानां शतम् आयमानी आय एव मीयते अनयेति व्युत्पत्तेः आयमानीसंज्ञा तुला । श्रीमूला.

**पञ्चपलावरा व्यावहारिकी भाजन्यन्तःपुरभाजनी च ॥**

अन्यास्तिस्रस्तुला आह— पञ्चपलावरेति । सप्तपर्णवदिह वीप्सालोपो । पञ्चभिः पञ्चभिः पलैः अवरा पूर्वपूर्वापेक्षया यथोत्तरं न्यूना पञ्चपलावरा तुला व्यावहारिकी तदाख्या क्रयविक्रयोपयोगिनी, भाजनी तदाख्या भृत्यदेयार्था, अन्तःपुरभाजनी तदाख्या देवीकुमारादिदेयार्था च भवति । तत्र प्रथमा आयमानीतः पञ्चपलन्यूना पञ्चनवतिपला, द्वितीया व्यावहारिकीतः तावन्न्यूना नवतिपला, तृतीया भाजनीतः तावन्न्यूना पञ्चाशीतिपलेति विवेकः । श्रीमूला.

**तासामर्धधरणावरं पलम् । द्विपलावरमुत्तरलोहम् । षडङ्गुलावराश्चाऽऽयामाः ॥**

व्यावहारिक्यादीनामपि पलादिमाने परस्परविशेषमाह— तासामित्यादि । तासां व्यावहारिक्यादीनाम् अर्धधरणावरं अर्धेनार्धेन धरणेन पूर्वपूर्वापेक्षया न्यूनं पलं भवति । तद्यथा— दशधरणिकात् आयमानीपलात् अर्धोनं सार्धनवधरणिकं पलं व्यावहारिक्याः, ततः अर्धोनं नवधरणिकं भाजन्याः, ततः अर्धोनं सार्धाष्टधरणिकम् अन्तःपुरभाजन्याः इति । द्विपलावरं द्वाभ्यां द्वाभ्यां पलाभ्यां पूर्वपूर्वतो न्यूनम् उत्तरलोहं उत्तरासां लोहं भवति । षडङ्गुलावराश्च षट्षडङ्गुलन्यूनाश्च आयामाः दैर्घ्याणि भवन्ति, अर्थादुत्तरासाम् । तद्यथा— पञ्चत्रिंशत्पललोहा द्विसप्तत्यङ्गुलायामा च यद्यायमानी तदा त्रयस्त्रिंशत्पललोहा षट्षष्ट्यङ्गुलायामा च व्यावहारिकी भवति, एकत्रिंशत्पललोहा षष्ट्यङ्गुलायामा च भाजनी, एकोनत्रिंशत्पललोहा चतुष्पञ्चाशदङ्गुलायामा चान्तःपुरभाजनीति । श्रीमूला.

**पूर्वयोः पञ्चपलिकः प्रयामो मांसलोहलवणमणिवर्जम् ॥**

प्रयाममाह— पूर्वयोरिति । पूर्वयोः परिमाण्यायमान्योः पञ्चपलिकः प्रयामः पलशते पञ्चपलमधिकदेयं भवति । मांसलोहलवणमणिवर्जं मांसलोहादीन् वर्जयित्वा । तेषां तु न प्रयामः । श्रीमूला.

**काष्ठतुलाऽष्टहस्ता पदवती प्रतिमानवती मयूरपदाधिष्ठाना ॥**

काष्ठतुलामाह— काष्ठेत्यादि । काष्ठतुला सारदारुप्रकृतिस्तुला अष्टहस्ता, पदवती एकद्वित्र्यादिपदरेखोपेता, प्रतिमानवती प्रमाणपाषाणयुक्ता, मयूरपदाधिष्ठाना मयूरपदौ तदाकारस्तम्भौ अधिष्ठानम् आधारः यस्यास्तादृशी । 'मयूरपदाधिष्ठिता' इति पाठे मयूरपदाश्रितेत्यर्थः । कर्तव्या । श्रीमूला.

**काष्ठपञ्चविंशतिपलं तण्डुलप्रस्थसाधनम् । एष प्रदेशो बह्वल्पयोः ॥**

काष्ठपञ्चविंशतिपलं इन्धनपलपञ्चविंशतिः तण्डुलप्रस्थसाधनं प्रस्थमिततण्डुलपाकनिष्पादकं भवति । एष प्रदेशो बह्वल्पयोरिति । प्रस्थाधिकतण्डुलस्य प्रस्थन्यूनतण्डुलस्य चायमेव पाकापेक्षितकाष्ठमानव्यवस्थापनमार्गः । एतच्च कोष्ठागाराध्यक्षशेषम् असारस्याप्यमितो व्ययो न कर्तव्यः, किमुत सारस्येति सामान्यज्ञापनद्वारेण प्राकरणिकेषु मानेष्ववधानोपदेशार्थं द्रष्टव्यम् । श्रीमूला.

**इति तुलाप्रतिमानं व्याख्यातम् ॥**

इति उक्तप्रकारेण तुलाप्रतिमानं व्याख्यातं तुलाः षोडशविधाः प्रतिमानानि च चतुर्दशविधानि निरूपितानि । श्रीमूला.

**अथ धान्यमाषद्विपलशतं द्रोणमायमानम् । सप्ताशीतिपलशतमर्धपलं च व्यावहारिकम् । पञ्चसप्ततिपलशतं भाजनीयम् । द्विषष्टिपलशतमर्धपलं चान्तःपुरभाजनीयम् ॥**

अथ द्रोणाढकादिनिरूपणमारभते— अथेत्यादि । धान्यमाषद्विपलशतं तुलाद्वयमितधान्यमाषपूरणीयम् आयमानं नाम द्रोणम् । सप्ताशीतिपलशतमर्धपलं चेति । अर्थात् आयमानद्रोणात् अर्धत्रयोदशभिः* पलैर्न्यूनं व्यावहारिकं नाम द्रोणं भवति । पञ्चसप्ततिपलशतमिति । अर्थात् व्यावहारिकद्रोणादर्धत्रयोदशपलैर्न्यूनं भाजनीयं नाम द्रोणं भवति । द्विषष्टिपलशतमर्धपलं चेति । अर्थात् भाजनीयद्रोणात् अर्धत्रयोदशपलैर्न्यूनम् अन्तःपुरभाजनीयं नाम द्रोणं भवति । इति चतुर्विधं द्रोणम् । श्रीमूला.

**तेषामाढकप्रस्थकुडुबाश्चतुर्भागावराः ॥**

तेषां चतुर्णां द्रोणानाम् आढकप्रस्थकुडुबाः चतुर्भागावराः क्रमेण चतुर्भागाः अवराः स्वस्वपूर्वचतुर्भागात्मकाः अत एव स्वस्वपूर्वतो निकृष्टाश्चेत्यर्थः । एतदुक्तं भवति— द्रोणचतुर्भागः आढकः, आढकचतुर्भागः प्रस्थः, प्रस्थचतुर्भागः कुडुबः इति । श्रीमूला.

**षोडशद्रोणा खारी, विंशतिद्रोणिकः कुम्भः, कुम्भैर्दशभिर्वहः ॥**

द्रोणादुत्कृष्टान् मानविशेषानाह— षोडशेत्यादि । षोडशद्रोणमिता खारी, विंशतिद्रोणमितः कुम्भः, दशकुम्भमितः वहः । श्रीमूला.

**शुष्कसारदारुमयं समं चतुर्भागशिखं मानं कारयेत् । अन्तःशिखं वा । रसस्य तु ॥**

मानसाधनान्याह— शुष्केत्यादि । शुष्कसारदारुमयं समं तुल्यमूलाग्रं चतुर्भागशिखम्— शिखा मुखोपरितनावकाशः आ मुखात् भागत्रयवतः शिखायां मेयचतुर्भागो यथा तिष्ठेत्तथा कृतशिखं मानं कारयेत् । अन्तःशिखं वा अन्तर्गता आमूलमुखान्तावकाशान्तःप्रविष्टा शिखा पूर्वोक्तश्चतुर्भागावकाशो यस्य तत् तथाभूतं वा मानं कारयेत् । धान्यादिमाने चायं विकल्पः । रसस्य त्विति । अन्तःशिखमित्यनुवर्तते । तत्र तुशब्दोऽवधारणार्थः संबध्यते । तदयमर्थः— रसस्य घृततैलादेरन्तःशिखमेव मानं भवतीति । श्रीमूला.

**सुरायाः पुष्पफलयोः तुषाङ्गाराणां सुधायाश्च शिखामानं द्विगुणोत्तरा वृद्धिः ॥**

सुरादीनां षण्णां शिखामानमस्ति । किंतु द्विगुणोत्तरा वृद्धिः द्विगुणाधिका तस्य वृद्धिः । धान्यादिषु शिखामानं यदुक्तं चतुर्भागात्मकं तदिह द्वैगुण्यं यातीत्यर्थः । अतश्च सुरादीनां प्रस्थः पञ्चभिरेव कुडुबैर्भवति, न तु धान्यानामिव चतुर्भिः । तत्रापि सुराया बहिःशिखासंभवाभावात् प्रस्थोऽन्तशिखः अर्थादन्तःप्रविष्टपञ्चकुडुबः कार्यः ।

श्रीमूला.

**सपादपणो द्रोणमूल्यम् । आढकस्य पादोनः । षण्माषकाः प्रस्थस्य । माषकः कुडुबस्य ॥**

तुलामानभाण्डस्य मूल्यमाह— सपादपण इत्यादि । माषकः कुडुबस्येत्येतदन्तमतिरोहितार्थम् । श्रीमूला.

---

* 'त्रयोदशैः' इति साधु । अर्धं त्रयोदशं येषु तानि अर्धत्रयोदशानि, तैः । सार्धद्वादशभिरित्यर्थः । एवमुत्तरत्रापि त्रयोदशशब्दः पूरणान्तो ज्ञेयः ।

**द्विगुणं रसादीनां मानमूल्यम् ॥**

रसादीनां घृततैलादीनां द्विगुणं सपादपणादिपूर्वोक्तद्विगुणम् अर्धतृतीयपणादिकं द्रोणादिमूल्यं भवति । धान्यमानापेक्षया रसादिमानानामन्तःशिखत्वेन रूपपृथुत्वात् श्लक्ष्णतरदारुघटितत्वाच्च मूल्यद्वैगुण्योपपत्तिः ।

श्रीमूला.

**विंशतिपणाः प्रतिमानस्य । तुलामूल्यं त्रिभागः ॥**

प्रतिमानस्य चतुर्दशविधप्रतिमानसमुदायस्य विंशतिपणाः मूल्यम् । तुलामूल्यमित्यादि । तुलामूल्यम् अनन्तरोक्तस्य विंशतिपणात्मकस्य प्रतिमानमूल्यस्य त्रिभागः ।

श्रीमूला.

**चतुर्मासिकं प्रातिवेधनिकं कारयेत् । अप्रतिविद्धस्यात्ययः सपादः सप्तविंशतिपणः । प्रातिवेधनिकं काकणिकमहरहः पौतवाध्यक्षाय दद्युः ॥**

चतुर्मासिकं चतुर्षु चतुर्षु मासेषु भवं प्रतिवेधनमेव प्रातिवेधनिकं परिशोधनम्, विनयादित्वाट्ठक्, कारयेत् । अप्रतिद्धस्येति । अप्रतिविद्धस्य अपरिशोधितस्य तुलामानस्य व्यवहारे अत्ययः दण्डः सपादः सप्तविंशतिपणः । प्रातिवेधनिकमिति । प्रातिवेधनिकं परिशोधननिमित्तं काकणिकम् अहरहः प्रतिदिनं पौतवाध्यक्षाय दद्युः । दिवसस्यैका काकणीति क्रमेण मासचतुष्टयस्य सविंशति काकणीनां शतं शोधनकाले तुलामानव्यवहारिणोऽर्पयेयुरित्यर्थः ।

श्रीमूला.

**द्वात्रिंशद्भागस्तप्तव्याजी सर्पिषश्चतुःषष्टिभागस्तैलस्य । पञ्चाशद्भागो मानस्रावो द्रवाणाम् ॥**

रसादिप्रसङ्गात् घृतादिगतं किंचिदाह— द्वात्रिंशदित्यादि । सर्पिषः घृतस्य विलापितस्य क्रीयमाणस्य द्वात्रिंशद्भागः, अधिकतया ग्राह्य इति वाक्यशेषः । तप्तव्याजी स तप्तव्याजीसंज्ञः । तैलस्य चतुःषष्टिभागः ग्राह्यः । पञ्चाशद्भाग इति । पञ्चाशद्भागो मानस्रावः तदाख्यो द्रवाणां ग्राह्यः । द्रवसामान्यविषयोऽयं मानस्रावः सर्पिस्तैलयोर्यथोक्तव्याज्या सह समुच्चीयते इत्याहुः ।

श्रीमूला.

**कुडुबार्धचतुरष्टभागानि मानानि कारयेत् ॥**

कुडुबादीनामल्पपरिमाणानां मानसाधनान्याह— कुडुबार्धेत्यादि । प्रस्थचतुर्भागः कुडुबः उक्तः । तस्य मानसाधनं कुडुबं कुडुबार्धं कुडुबचतुर्भागं कुडुबाष्टभागम् इत्येतानि मानानि कारयेत् निर्मापयेत् ।

श्रीमूला.

**कुडुबाश्चतुरशीतिर्वारकः सर्पिषो मतः ।**
**चतुःषष्टिस्तु तैलस्य पादश्च घटिकानयोः ॥**

अध्यायान्ते श्लोकमाह— कुडुबा इत्यादि । सर्पिषः चतुरशीतिः कुडुबाः यत्र मान्ति स वारकः तत्संज्ञः मतः । तैलस्य तु चतुःषष्टिः कुडुबाः यत्र मान्ति स वारकः । अनयोः सर्पिर्वारकतैलवारकयोः पादः चतुर्भागः घटिका सर्पिर्घटिकाख्या तैलघटिकाख्या च मता ।

श्रीमूला.

### देशकालमाननिरूपणम्

**[1]मानाध्यक्षो देशकालमानं विद्यात् ॥**

'देशकालमानम्' इति सूत्रम् । देशः भूमिः तद्विकारः प्राकारस्तम्भादिः, कालः त्रुटिलवादिः, तयोर्मानमिति सूत्रार्थः । 'द्वादशहस्तादूर्ध्वमोजं युग्मं वा आ चतुर्विंशतिहस्तात्' (कौ. २।३) इति दुर्गविधाने, 'चतुर्दण्डान्तरा रथ्याः' 'पञ्चारत्नयो रथपथः' (कौ. २।४) इति दुर्गनिवेशेऽन्यत्र च हस्तदण्डारत्न्यादीनां व्यवहारः कृतः, तेषां प्रमाणं तु नोक्तम् । तथा 'पूर्वे दिवसस्याष्टभागे रक्षाविधानमायव्ययौ च शृणुयात्' (कौ. १।१९) इत्येवं राजप्रणिधौ कालविभाग उक्तः, तस्य मानं तु नोक्तम् । तदुभयमिह मानप्रसङ्गादुच्यते इति संगतिः ।

मानाध्यक्ष इति । मानाध्यक्षः पौतवाध्यक्षः देशकालमानं विद्यात् वक्ष्यमाणप्रकारेण जानीयात् ।

श्रीमूला.

**अष्टौ परमाणवो रथचक्रविप्रुट् । ता अष्टौ लिक्षा । ता अष्टौ यूकामध्यः । ते अष्टौ यवमध्यः । अष्टौ यवमध्याः अङ्गुलम् ॥**

---

(१) कौ. २।२०.

अष्टौ परमाणवः अतीन्द्रिया अणवः संहताः रथचक्रविप्रुट् रथचक्रोत्थापितं चक्षुर्ग्राह्यमेकं रजो भवति । ताः विप्रुषः अष्टौ लिक्षा । ता अष्टौ लिक्षाः यूकामध्यः । ते यूकामध्याः अष्टौ यवमध्यः । अष्टौ यवमध्याः अङ्गुलमेकम् । श्रीमूला.

**मध्यमस्य पुरुषस्य मध्यमाया अङ्गुल्या मध्यप्रकर्षो वाऽङ्गुलम् ॥**

अङ्गुलस्य प्रकारान्तरमाह— मध्यमस्येत्यादि । अङ्गुलशतोत्सेधः अर्धनवत्यङ्गुलपरिणाहः मध्यमः पुरुष इति स्वामी । मध्यमस्य पुरुषस्य मध्यमाया अङ्गुल्याः हस्तमध्यमाङ्गुल्याः मध्यप्रकर्षः मध्यप्रदेशपृथुत्वातिशयो वा अङ्गुलम् । श्रीमूला.

**चतुरङ्गुलो धनुर्ग्रहः । अष्टाङ्गुला धनुर्मुष्टिः ॥**

चत्वारि अङ्गुलानि धनुर्ग्रहः धनुर्ग्रहसंज्ञानि । अष्टाङ्गुलेति । धनुर्ग्रहद्विगुणा धनुर्मुष्टिः ।

श्रीमूला'

**द्वादशाङ्गुला वितस्तिश्छायापौरुषं च । चतुर्दशाङ्गुलं शमः शलः परिरयः पदं च । द्विवितस्तिररत्निः प्राजापत्यो हस्तः ॥**

द्वादशाङ्गुला वितस्तिः तदाख्या । छायापौरुषं चेति । छायापौरुषं शङ्कुप्रमाणम्, तदपि द्वादशाङ्गुलमित्यर्थः । चतुर्दशेत्यादि । चतुर्दशाङ्गुलं शमसंज्ञं शलसंज्ञं परिरयसंज्ञं पदसंज्ञं च । द्विवितस्तिरिति । चतुर्विंशत्यङ्गुलः अरत्निः । स प्राजापत्यः विश्वकर्मसंमतः हस्तः । श्रीमूला.

**सधनुर्ग्रहः पौतवविवीतमानम् । सधनुर्मुष्टिः किष्कुः कंसो वा ॥**

धनुर्ग्रहयुक्तः चतुरङ्गुलाधिकः प्राजापत्यः अर्थादष्टाविंशत्यङ्गुलमानं पौतवविवीतमानं काष्ठतुलादेः पश्वर्थक्षेत्रादेश्च हस्तमानं भवति । सधनुर्मुष्टिरिति । अष्टाङ्गुलाधिकः प्राजापत्यः किष्कुसंज्ञः कंससंज्ञो वा ।

श्रीमूला.

**द्विचत्वारिंशदङ्गुलस्तक्षणः क्राकचिककिष्कुः स्कन्धावारदुर्गराजपरिग्रहमानम् । चतुष्पञ्चाशदङ्गुलः कुप्यवनहस्तः ॥**

द्विचत्वारिंशदङ्गुलः हस्तः तक्षणः वर्धकेः कर्मणि क्राकचिककिष्कुः करपत्रकर्ममानोपयोगी किष्कुः स्कन्धावारदुर्गराजपरिग्रहमानं स्कन्धावारादीनां च मानं भवति । चतुष्पञ्चाशदित्यादि । चतुष्पञ्चाशदङ्गुलः कुप्यवनहस्तः द्रव्यवनकर्ममानहस्तः । श्रीमूला.

**चतुरशीत्यङ्गुलो व्यामो रज्जुमानं खातपौरुषं च ॥**

चतुरशीत्यङ्गुलः हस्तः व्यामः, स च रज्जुमानं खातपौरुषं च कूपादेः पुरुषमानं च भवति ।

श्रीमूला.

**चतुररत्निर्दण्डो धनुर्नालिका पौरुषं च ॥**

चः संज्ञासमुच्चये । चतुररत्निप्रमाणस्य दण्डः धनुः नालिका पौरुषमिति चतस्रः संज्ञाः । श्रीमूला.

**गार्हपत्यमष्टशताङ्गुलं धनुः पथिप्राकारमानम् । पौरुषं चाग्निचित्यानाम् ॥**

गृहपतिः विश्वकर्मा, तद्दृष्टं गार्हपत्यम् अष्टशताङ्गुलं धनुः तदाख्यम् । तच्च पथिप्राकारमानम् अध्वमानं प्राकारमानं च भवति । पौरुषं चेति । पुरुषमानम् अग्निचित्यानाम् अग्निचयनविशेषाणाम् । श्रीमूला.

**षट्कंसो दण्डो ब्रह्मदेयातिथ्यमानम् । दशदण्डा रज्जुः । द्विरज्जुकः परिदेशः । त्रिरज्जुकं निवर्तनम् ॥**

कंसषट्कप्रमाणः अर्थात् प्राजापत्यहस्ताष्टकप्रमाणः दण्डः । सः ब्रह्मदेयातिथ्यमानं ब्रह्मदेयानाम् आतिथ्यानां च मानं भवति । ब्रह्मदेयानि ऋत्विगादिब्राह्मणदेयानि, आतिथ्यानि अतिथिभोजनार्थविसृष्टक्षेत्राणि । दशदण्डेति । अर्थात् चत्वारिंशद्धस्तप्रमाणा रज्जुः । द्विरज्जुक इति । विंशतिदण्डप्रमाणः परिदेशः । त्रिरज्जुकमिति । त्रिंशद्दण्डप्रमाणं निवर्तनं चतुरश्रनिवर्तनम् । श्रीमूला.

**एकतो द्विदण्डाधिको बाहुः । द्विधनुःसहस्रं गोरुतम् । चतुर्गोरुतं योजनम् । इति देशमानम् ॥**

निवर्तनस्यैव एकपार्श्वे दण्डद्वयाधिकप्रमाणः पार्श्वान्तरेषु( ? रे तु )* अनधिकप्रमाणः अर्थात् द्वात्रिंशद्दण्डदीर्घस्त्रिंशद्दण्डविस्तारश्च मानविशेषः बाहुः तत्संज्ञः । द्विधनुःसहस्रमिति । धनुःसहस्रद्वयप्रमाणं गोरुतम् । स क्रोश इति व्यवह्रियते । चतुर्गोरुतमिति । अर्थात् क्रोशचतुष्टयं योजनसंज्ञम् । इति देशमानमिति । व्याख्यातमिति शेषः । श्रीमूला.

**कालमानमत ऊर्ध्वम् । तुटो लवो निमेषः काष्ठा कला नालिका मुहूर्तः पूर्वापरभागौ दिवसो रात्रिः पक्षो मास ऋतुरयनं संवत्सरो युगमिति कालाः ॥**

कालमानमित्यादि । व्याख्यास्यते इति शेषः । कालं सप्तदशधा विभजते– तुट इत्यादि । श्रीमूला.

**निमेषचतुर्भागस्तुटः ॥**

* 'पार्श्वान्तरेषु' इति बहुवचनं चिन्तनीयम् । निवर्तनमिति समचतुष्कोणचतुरस्रक्षेत्ररूपो मानविशेष उक्तः । तत्र चत्वारि पार्श्वानि भवन्ति । तत्रैकस्मिन्पार्श्वे दण्डद्वयाधिकप्रमाणत्वे पार्श्वान्तरेषु त्रिषु चानधिकप्रमाणत्वे बाहोः शङ्काकारतापत्तेर्मानव्यवहारसाधनत्वरूपं मानत्वमनुपपन्नम्, 'द्वात्रिंशद्दण्डदीर्घस्त्रिंशद्दण्डविस्तारश्च' इति निष्कर्षश्च नोपपद्यते । अतोऽत्र 'पार्श्वान्तरे तु' इति शुद्धः पाठः कल्प्यते । तत्रायमभिप्रायः– बाहुरपि निवर्तनवत् समचतुष्कोणचतुरस्रक्षेत्ररूपः । तादृशक्षेत्रे संमुखे द्वे द्वे पार्श्वे समे भवतः । अत एव तादृशक्षेत्रस्य दैर्घ्ये एकं विस्तारे चैकमिति द्वे एव पार्श्वे मेये भवतः । तत्संमुखे च पार्श्वान्तरे तत्तन्मेयसमानमाने इत्यर्थसिद्धम् । एवं च एकस्य मेयपार्श्वस्य दण्डद्वयाधिक्योक्त्या तत्संमुखपार्श्वस्य दण्डद्वयाधिक्यम्, अपरस्य मेयपार्श्वस्य तत्संमुखपार्श्वस्य चानधिकप्रमाणत्वमित्यर्थाल्लभ्यते इति न काऽप्यनुपपत्तिः ।

तुटादीनि व्याचष्टे– निमेषेत्यादि । निमेषचतुर्भागः कालपरमाणुरिति स्वामी । परमाणुद्वयमिति भाषा । स तुटः तुटसंज्ञः । अयं तुटिस्त्रुटिरिति चोच्यते ।

श्रीमूला.

**द्वौ तुटौ लवः । द्वौ लवौ निमेषः । पञ्च निमेषाः काष्ठा । त्रिंशत् काष्ठाः कला । चत्वारिंशत् कला नालिका ॥**

'द्वौ तुटौ' इत्यादि 'चत्वारिंशत्कला नालिका' इत्यन्तमतिरोहितम् । श्रीमूला.

**सुवर्णमाषकाश्चत्वारश्चतुरङ्गुलायामाः कुम्भच्छिद्रमाढकमम्भसो वा नालिका ॥**

नालिकायाः प्रकारान्तरमाह– सुवर्णेत्यादि । सुवर्णमाषकाश्चत्वारश्चतुरङ्गुलायामा इति मेयमानयोरभेदोपचारात् सुवर्णमाषकचतुष्टयप्रमाणा चतुरङ्गुलदीर्घा जलनिर्गमनालशलाकोच्यते । कुम्भच्छिद्रं तत्समानं जलधारकघटच्छिद्रम् । आढकमम्भसः तत्कुम्भगतमाढकमितं जलम् । इतिशब्दः इहाध्याहार्यः । इति वा नालिका इत्येतत्त्रितययोगेन वा नालिका परिच्छिद्यते । यथोक्तमानशलाकायुक्तच्छिद्रात् कुम्भादाढकपरिमितं जलं छिद्रतो यावता कालेन गलति सा वा नालिकेत्यर्थः ।

श्रीमूला.

**द्विनालिको मुहूर्तः । पञ्चदशमुहूर्तो दिवसो रात्रिश्च चैत्रे मास्याश्वयुजे च मासि भवतः । ततः परं त्रिभिर्मुहूर्तैरन्यतरः षण्मासं वर्धते ह्रसते चेति ॥**

नालिकाद्वयं मुहूर्तः । एतदुत्तरं पूर्वापरभागयोर्व्याख्यानं क्रमप्राप्तम् । तत्तु न कृतं सुबोधत्वात् । तौ हि मुहूर्तान्तानामुक्तानां वक्ष्यमाणानां च दिवसादीनां यथासंभवं पूर्वभागोत्तरभागौ भवतः । तत्र पूर्वाह्णः दिवसपूर्वभागः, अपराह्णः दिवसोत्तरभागः, तथा पूर्वरात्रः रात्रिपूर्वभागः, अपररात्रः रात्र्युत्तरभागः इत्यादि यथाव्यवहारमूह्यम् । पञ्चदशेत्यादि । पञ्चददशमुहूर्तो दिवसो रात्रिश्च भवतः । किं सर्वेषु मासेषु ? नेत्याह– चैत्रे मासि आश्वयुजे मासि च अर्थात् विषुवयोर्द्वयोः । ततः परमिति । विषुवद्द्वया-

दुपरि अन्यतरः दिवसो रात्रिश्च त्रिभिर्मुहूर्तैः षण्मासं वर्धते ह्रसते च एकशश्चतुर्लवोपचयापचयक्रमेण मुहूर्तत्रयं यावत् षण्मासान् उपचीयते क्षीयते च। तत्र दिवसस्य चैत्रविषुवादुपरि वृद्धिः आश्वयुजविषुवादुपरि ह्रासः, रात्रेराश्वयुजविषुवादुपरि वृद्धिश्चैत्रविषुवादुपरि ह्रासः।

श्रीमूला.

**छायायामष्टपौरुष्यामष्टादशभागश्छेदः, षट्पौरुष्यां चतुर्दशभागः, चतुष्पौरुष्यामष्टभागः, द्विपौरुष्यां षड्भागः, पौरुष्यां चतुर्भागः, अष्टाङ्गुलायां त्रयो दशभागाः, चतुरङ्गुलायां अष्टभागाः, अच्छायो मध्याह्न इति॥**

छायया कालमानमाह– छायायामित्यादि। छायायाम् अष्टपौरुष्यां षण्णवत्यङ्गुलायां दिवसस्य अष्टादशभागः छेदः अष्टादशो भागः गतांशः *त्रिंशन्नाडिकासु पादोनं नाडिकाद्वयमतीतं ज्ञेयम्, सपादाष्टाविंशतिनाडिकास्तु शेषाः। षट्पौरुष्यां द्विसप्तत्यङ्गुलायां छायायां चतुर्दशभागः छेदः, त्रयोदश तु शेषाः। चतुष्पौरुष्याम् अष्टाचत्वारिंशदङ्गुलायाम् अष्टभागः छेदः अर्धयामो गतः, सप्त शेषाः। द्विपौरुष्यां चतुर्विंशत्यङ्गुलायां षड्भागश्छेदः पञ्चनालिका गताः, पञ्चविंशतिस्तु शेषाः। पौरुष्यां द्वादशाङ्गुलायां चतुर्भागश्छेदः यामो गतः, यामत्रयमवशिष्टम्। अष्टाङ्गुलायां छायायां त्रयो दशभागाः दशधा विभक्तस्य दिवसस्य त्रयो दशमांशाः अर्थात् नवनालिकाः छेदः, एकविंशतिस्तु नालिकाः शिष्टाः। चतुरङ्गुलायाम् अष्टभागाः अष्टधा विभक्तस्य दिवसस्य त्रयोऽष्टमांशाः गता विज्ञेयाः, पञ्च तु शिष्टाः। अच्छायः शङ्कुप्रविष्टच्छायः मध्याह्नो भवति। श्रीमूला.

**परावृत्ते दिवसे शेषमेवं विद्यात्॥**

मध्याह्नात् परतोऽप्येवमेव छायामानम्, किंतु छेदस्थाने शेषकल्पनया विज्ञेयमित्याह– परावृत्त इति। परावृत्ते दिवसे मध्याह्नात् परतः शेषं गतावशिष्टं दिवसभागम् एवं विद्यात् 'चतुरङ्गुलायां त्रयोऽष्टभागाः' इत्यादिना 'छायायामष्टपौरुष्यामष्टादशभागः' इत्यन्तेन प्रकारेणाष्टभागत्रयप्रभृतिमष्टादशभागान्तं जानीयात्।

श्रीमूला.

**आषाढे मासि नष्टच्छायो मध्याह्नो भवति। अतः परं श्रावणादीनां षण्मासानां द्व्यङ्गुलोत्तरा माघादीनां द्व्यङ्गुलावरा छायेति॥**

आषाढे मासि आषाढमासान्ते नष्टच्छायः अच्छायः मध्याह्नः भवति। अतः परं श्रावणादीनां षण्मासानां पौषान्तानां द्व्यङ्गुलोत्तरा द्विद्व्यङ्गुलक्रमवृद्धा छाया भवति। तद्यथा– श्रावणस्यान्ते द्व्यङ्गुला, भाद्रपदस्य चतुरङ्गुला, आश्वयुजस्य षडङ्गुला, कार्तिकस्याष्टाङ्गुला, मार्गशीर्षस्य दशाङ्गुला, पौषस्य द्वादशाङ्गुलेति। अतः परं माघादीनां षण्मासानामाषाढान्तानां द्व्यङ्गुलावरा द्विद्व्यङ्गुलक्रमक्षीणा छाया भवति। यथा– माघस्यान्ते दशाङ्गुला छाया, फाल्गुनस्याष्टाङ्गुला, चैत्रस्य षडङ्गुला, वैशाखस्य चतुरङ्गुला, ज्येष्ठस्य द्व्यङ्गुला, आषाढस्य तु शङ्कुप्रविष्टेति। श्रीमूला.

**पञ्चदशाहोरात्राः पक्षः। सोमाप्यायनः शुक्लः। सोमावच्छेदनो बहुलः॥**

पञ्चदशाहोरात्रसमुदायः पक्षसंज्ञः। तत्र सोमाप्यायनः चन्द्रवृद्धिकरः पक्षः शुक्लः तत्संज्ञः। सोमावच्छेदनः चन्द्रक्षयकरः बहुलः तदाख्यः। श्रीमूला.

**द्विपक्षो मासः॥**

उक्तौ शुक्लबहुलपक्षौ समुदितौ मासः। *स एव सावनः। श्रीमूला.

---

* इयं रभसोक्तिः। त्रिंशन्नाडिकात्मकदिवसस्य तृतीयांशद्वयाधिका नाडिका अष्टादशांशो भवति। तथाच तावान् दिवसांशोऽतीतः, सतृतीयांशाष्टाविंशतिनाडिकास्तु शेषा इति ज्ञेयम्।

* द्विपक्षात्मकमासस्य सावनत्वोक्तिरियं चिन्तनीया, वक्ष्यमाणस्य त्रिंशदहोरात्ररूपस्य प्रकर्ममासस्यैव सावनत्वस्य स्मृत्यादिषूक्तत्वात्। ननु– पञ्चदशाहोरात्ररूपपक्षद्वयात्मकस्य मासस्य त्रिंशदहोरात्ररूपत्वेन सावनत्वोक्तिर्न विरुद्धेति चेन्न, पक्षयोः शुक्लबहुलत्वरूपत्वेन मासस्यास्य चान्द्ररूपत्वमेवाभिप्रेतमिति निर्णयात्, पक्षे पञ्चदशाहोरात्रनियमाभावाच्च। पक्षस्य पञ्चदशाहोरात्ररूपत्वोक्तिस्तु प्रायवादः। अथवा

**त्रिंशदहोरात्रः प्रकर्ममासः ॥**

त्रिंशदहोरात्रसमुदायः प्रकर्ममासः कर्मकरभृतिगणनीयो मासः । श्रीमूला.

**सार्धः सौरः ॥**

अर्धाहोरात्रसहितस्त्रिंशदहोरात्रः सौरः सौरमासः । श्रीमूला.

**अर्धन्यूनश्चान्द्रमासः ॥**

अर्धाहोरात्रन्यूनस्त्रिंशदहोरात्रः चान्द्रमासः । श्रीमूला.

**सप्तविंशतिर्नाक्षत्रमासः ॥**

सप्तविंशत्यहोरात्रो नाक्षत्रमासः । श्रीमूला.

**द्वात्रिंशन्मलमासः ॥**

द्वात्रिंशदहोरात्रो मलमासः । श्रीमूला.

**पञ्चत्रिंशदश्ववाहायाः ॥**

पञ्चत्रिंशदहोरात्रः तावन्मानो मासः अश्ववाहायाः अश्वप्रवाहणस्य अर्थादश्वकर्मभृत्यानाम् । 'अथ प्रवाहणे । वाहा नृस्त्री स्त्रियां बाहौ' इति केशवस्वामी । श्रीमूला.

**चत्वारिंशद्धस्तिवाहायाः ॥**

चत्वारिंशदहोरात्रो गजशुश्रूषाकर्मकरवेतनमासः । श्रीमूला.

**द्वौ मासावृतुः ॥**

उभौ द्विपक्षलक्षणौ मासौ मिलितौ ऋतुसंज्ञौ । श्रीमूला.

**श्रावणः प्रोष्ठपदश्च वर्षाः ॥**
**आश्वयुजः कार्तिकश्च शरत् ॥**
**मार्गशीर्षः पौषश्च हेमन्तः ॥**
**माघः फाल्गुनश्च शिशिरः ॥**
**चैत्रो वैशाखश्च वसन्तः ॥**
**ज्येष्ठामूलीय आषाढश्च ग्रीष्मः ॥**

---

अग्रिमसूत्रव्याख्यानशेषभूतोऽयं ग्रन्थः प्रमादादत्र मुद्रितः स्यात् ।

ऋतुं विभज्य व्याचष्टे— श्रावण इत्यादिना ग्रीष्म इत्यन्तेन । वर्षाः वर्षासंज्ञः । ज्येष्ठामूलीयः ज्येष्ठः । शेषं सुगमम् । श्रीमूला.

**शिशिराद्युत्तरायणम् । वर्षादि दक्षिणायनम् ॥**

शिशिरप्रभृति ग्रीष्मान्तमृतुत्रयम् उत्तरायणसंज्ञम् । वर्षादि हेमन्तान्तमृतुत्रयं दक्षिणायनम् । श्रीमूला.

**द्व्ययनः संवत्सरः ॥**

अयनद्वयात्मा संवत्सरो भवति । श्रीमूला.

**पञ्चसंवत्सरो युगमिति ॥**

संवत्सरपञ्चकात्मकः कालः युगं युगसंज्ञया व्यवह्रियते । इतिशब्दो व्यावहारिककालमानसमाप्तौ । श्रीमूला.

**दिवसस्य हरत्यर्कः षष्टिभागमृतौ ततः ।**
**करोत्येकमहश्छेदं तथैवैकं च चन्द्रमाः ॥**
**एवमर्धतृतीयानामब्दानामधिमासकम् ।**
**ग्रीष्मे जनयतः पूर्वं पञ्चाब्दान्ते च पश्चिमम् ॥**

अधिमासं श्लोकद्वयेनाऽऽह— दिवसस्येति । अर्कः सूर्यः दिवसस्य अहोरात्रस्य षष्टिभागम् एकघटिकात्मकं हरति प्रतिदिवसं छिनत्ति । ततः प्रतिदिवसमेकघटिकाहरणात् ऋतौ षष्टिदिवसात्मकमासद्वयावसाने एकमहश्छेदम् एकमधिकमहोरात्रं करोति उत्पादयति । तथैव अर्कवदेव चन्द्रमाश्च एकं अहश्छेदं करोति । एवम् अनेन प्रकारेण अर्धतृतीयानामब्दानाम् अर्धोनतृतीयानां वर्षाणाम् अर्थात् माघप्रभृतीनां त्रिंशतो मासानां ग्रीष्मे पूर्वम् अधिमासकम् अधिकमासं त्रिंशत्तमं द्वितीयम् आषाढम्, पञ्चाब्दान्ते अर्थात् पुनरर्धतृतीयवर्षात्मनां श्रावणप्रभृतीनां त्रिंशतो मासानामन्ते पश्चिममधिमासकं च उत्तरमधिकमासं च अर्थात् त्रिंशत्तमं द्वितीयं पौषं च जनयतः अर्कचन्द्रमसौ । श्रीमूला.

शुल्कग्रहणविधिः अपराधेषु दण्डविधिश्च

**'शुल्काध्यक्षः शुल्कशालां ध्वजं च प्राङ्मुखमुदङ्मुखं वा महाद्वाराभ्याशे निवेशयेत् ॥**

---

(१) कौ. २।२१.

'शुल्काध्यक्षः' इति सूत्रम् । शुल्कः राज्ञे देयं पञ्चदशभागादि, तस्य अध्यक्षः शुल्काध्यक्षः । तद्व्यापारोऽभिधीयते इति सूत्रार्थः । देशविशेषभूतदुर्गसंबन्धित्वात् मानपरिच्छेद्यनानाभाण्डविषयत्वाच्च शुल्कस्य देशमानानन्तरमभिधानसङ्गतिः ।

शुल्काध्यक्ष इति । शुल्कशालाध्यक्षः शुल्कशालां शुल्कग्रहणावस्थानं ध्वजं च तच्चिह्नं च प्राङ्मुखमुदङ्मुखं वा महाद्वाराभ्याशे प्रधानद्वारसमीपे निवेशयेत् कारयेत् । श्रीमूला.

**शुल्कादायिनश्चत्वारः पञ्च वा सार्थोपयातान् वणिजो लिखेयुः— के कुतस्त्याः कियत्पण्याः क्व चाभिज्ञानमुद्रा वा कृतेति ॥**

शुल्कग्राहिणः चत्वारः पञ्च वा पुरुषाः शुल्काध्यक्षनियुक्ताः सार्थोपयातान् सभाण्डोपगतान् वणिजो नैगमान् लिखेयुः । किं कृत्वा ? के कुतस्त्या इत्यादि । पृष्ट्वेति शेषः । तत्र के इति नामजातिविषयः प्रश्नः, कुतस्त्याः इति निवासविषयः, कियत्पण्याः इति विक्रेयवस्तुपरिमाणविषयः, क्व चाभिज्ञानमुद्रेति अन्तपालकृतपण्यविशेषज्ञप्तिमुद्राविषयः । शुल्कादायिनां बहुत्वं विसंवादपरिहारार्थम् । श्रीमूला.

**अमुद्राणामत्ययो देयद्विगुणः ॥**

मुद्रारहितानां वणिजाम् अत्ययः दण्डः देयद्विगुणः अन्तपालदेयवर्तनीद्विगुणः । वर्तनी त्वनुपदं वक्ष्यते । श्रीमूला.

**कूटमुद्राणां शुल्काष्टगुणो दण्डः ॥**

कूटमुद्राणां कपटकृतमुद्राणां शुल्काष्टगुणो दण्डः । श्रीमूला.

**भिन्नमुद्राणामत्ययो घटिकाः स्थाने स्थानम् ॥**

भिन्नमुद्राणामत्ययः गृहीतनष्टमुद्राणां दण्डः घटिकाः स्थाने स्थानं वणिगन्तरद्वये क्वापि शुल्कशालैकदेशे घटिकात्रयकालावस्थानं भवति । घटिका इति स्थानक्रियात्यन्तसंयोगे द्वितीया । कपिञ्जलाधिकरणन्यायेन च तासां त्रित्वम् । श्रीमूला.

**राजमुद्रापरिवर्तने नामकृते वा सपादपणिकं वहनं दापयेत् ॥**

राजमुद्रापरिवर्तने नामकृते वा, परिवर्तने इत्यनुषङ्गात्, कार्पासादिद्रव्याणां तूलादिनामनिवेशेन नामव्यत्ययकरणे वा सपादपणिकं पादाधिकपणदण्डं वहनं पण्यहारकं दापयेत् । श्रीमूला.

**ध्वजमूलोपस्थितस्य प्रमाणमर्घं च वैदेहकाः पण्यस्य ब्रूयुः— एतत्प्रमाणेनार्घेण पण्यमिदं कः क्रेतेति । त्रिरुद्घोषितमर्थिभ्यो दद्यात् । क्रेतृसंघर्षे मूल्यवृद्धिः । सशुल्का कोशं गच्छेत् ॥**

ध्वजमूलोपस्थितस्य शुल्कशालाङ्गणगतस्य पण्यस्य प्रमाणम् इयत्ताम् अर्घं च वैदेहकाः वणिजः ब्रूयुः एतत्प्रमाणेनेत्यादिविधया । त्रिरुद्घोषितं यथोक्तप्रकारेण वारत्रयघोषणया श्रावितं पण्यम् अर्थिभ्यः क्रेतृभ्यः दद्यात् तेनैव वैदेहकनिर्दिष्टेनार्घेण । क्रेतृसंघर्षे क्रेतॄणाम् अर्घवर्धनहेतुभूतपरस्परस्पर्धासंभवे मूल्यवृद्धिः वणिङ्निर्दिष्टप्रमाणादधिकं मूल्यस्य प्रमाणम्, इष्यते इति शेषः । किंतु सशुल्का शुल्कसहिता सा मूल्यवृद्धिः कोशं गच्छेत् राजभाण्डागारं प्राप्नुयात्, निर्दिष्टमूल्यमात्रमेव तु वैदेहकानित्यर्थः । 'सशुल्कम्' इत्यपि पाठः । श्रीमूला.

**शुल्कभयात् पण्यप्रमाणं मूल्यं वा हीनं ब्रुवतस्तदतिरिक्तं राजा हरेत् । शुल्कमष्टगुणं वा दद्यात् ॥**

शुल्कभयात् पण्यप्रमाणं भाण्डेयत्तां मूल्यं वा पण्यार्घं वा हीनम् अवरं ब्रुवतः तदतिरिक्तं तदुक्तातिरिक्तं प्रमाणं मूल्यं चोपलभ्यमानं राजा हरेत् । इति तद्दण्डविधिः । तद्विकल्पमाह— शुल्कमष्टगुणं वा दद्यात् वणिक् । श्रीमूला.

**तदेव निविष्टपण्यस्य भाण्डस्य हीनप्रतिवर्णकेनार्घापकर्षणे सारभाण्डस्य फल्गुभाण्डेन प्रतिच्छादने च कुर्यात् ॥**

तदेव तदुक्तातिरिक्तं शुल्काष्टगुणं वा निविष्टपण्यस्य पण्यपूरितस्य भाण्डस्य हीनप्रतिवर्णकेन निकृष्टप्रतिवर्णक-

प्रदर्शनेन अर्घापकर्षणे मूल्यपातने सारभाण्डस्य फल्गुभाण्डेन प्रतिच्छादने च महार्घस्य पण्यस्य मणिमुक्तादेः अल्पार्घकार्पासतूलादिनाऽवच्छादने च कुर्यात् ।

श्रीमूला.

**प्रतिक्रेतृभयाद्वा पण्यमूल्यादुपरि मूल्यं वर्धयतो मूल्यवृद्धिं राजा हरेत्, द्विगुणं वा शुल्कं कुर्यात् ॥**

प्रतिक्रेतृपुरुषविशेषक्रयणशङ्कया पण्यमूल्यात् न्याय्यात् उपरि मूल्यं वर्धयतः क्रेतुः तन्मूल्यवृद्धिं राजा हरेत् । द्विगुणं वा शुल्कं कुर्यादिति दण्डविकल्पः । श्रीमूला.

**तदेवाष्टगुणमध्यक्षस्य च्छादयतः ॥**

तदेव वैदेहकानां तत्तदपराधे यत् देयं विहितं तदेव अष्टगुणम् अध्यक्षस्य छादयतः वैदेहकापराधं मैत्रीलञ्चग्रहणादिना गोपयतः कुर्यात् राजा । श्रीमूला.

**तस्माद् विक्रयः पण्यानां धृतो मितो गणितो वा कार्यः, तर्कः फल्गुभाण्डानामानुग्रहिकाणां च ॥**

यथोक्तानृतव्यवहारसंभवात् विक्रयः पण्यानां तोलनीयपरिमेयगणनीयानां धृतः तुलातोलितः, मितः प्रस्थादिपरिमितः, गणितो वा कार्यः । तर्कः इदमियत् स्यादिति मानार्घसंभावनात्मा कार्यः फल्गुभाण्डानां अङ्गाराद्यल्पपण्यानाम्, आनुग्रहिकाणां लवणादीनां च ।

श्रीमूला.

**ध्वजमूलमतिक्रान्तानां चाकृतशुल्कानां शुल्कादष्टगुणो दण्डः । पथिकोत्पथिकास्तद्विद्युः ॥**

अकृत एव शुल्के शुल्कशालामतिक्रम्य गतानां विषये शुल्कादष्टगुणो दण्डः । पथिकेत्यादि । पथिकोत्पथिकाः— पथिकाः पथि वाणिज्यच्छलचारिणः, उत्पथिकाः अनुज्ञातोत्पथगतागतास्तृणेन्धनहारकाः पशुपालकाश्च प्रणिहिताः तत् अकृतशुल्कवणिगतिक्रमणं विद्युः, अत एव साक्षिणश्च स्युर्विवादे । श्रीमूला.

**वैवाहिकमन्वायनमौपायनिकं यज्ञकृत्यप्रसवनैमित्तिकं देवेज्याचौलोपनयनगोदानव्रतदीक्षणादिषु क्रियाविशेषेषु भाण्डमुच्छुल्कं गच्छेत् ॥**

अशुल्कनेयं भाण्डमाह— वैवाहिकमिति । वैवाहिकं विवाहप्रयोजनकम् । अन्वायनं परिणीतायाः पतिगृहं गच्छन्त्याः पितृगृहान्नीयमानम् । औपायनिकम्— उपायनम् अन्नसत्राद्यर्थं उपहारः, तत्प्रयोजनकम् । यज्ञकृत्यप्रसवनैमित्तिकम्— यज्ञकृत्यनैमित्तिकं पयोदधिघृतादिकं प्रसवनैमित्तिकं जातकर्मसूतिकाभेषजाद्यर्थं च । देवेज्यादिषु क्रियाविशेषेषु । देवेज्या देवानां देवालयगतानां इज्या नित्यनैमित्तिकपूजोत्सवादिः । चौलोपनयनगोदानानि संस्कारविशेषाः प्रसिद्धाः । व्रतदीक्षणं दानविशेषादिलक्षणव्रतपरिग्रहः । एवंप्रकारेषु धर्म्यकार्येषु भाण्डम् उच्छुल्कम् अशुल्कम् गच्छेत् । श्रीमूला.

**अन्यथावादिनः स्तेयदण्डः ॥**

अवैवाहिकादिकमेव भाण्डं वैवाहिकादिकमिति मिथ्या ब्रुवतो वणिजः स्तेयदण्डः चौर्यस्य यो दण्डो धर्मस्थीयविहितः स कार्यः । श्रीमूला.

**कृतशुल्केनाकृतशुल्कं निर्वाहयतो द्वितीयमेकमुद्रया भित्त्वा पुटमपहरतो वैदेहकस्य तच्च तावच्च दण्डः ॥**

कृतशुल्केन दत्तशुल्केन पण्यवासनेन सह अकृतशुल्कम् अदत्तशुल्कं निर्वाहयतः संकुले निष्क्रामयतः । इत्येकोऽपराधः । द्वितीयमेकमुद्रयेति । एकस्य पण्यवासनस्य मुद्राप्रदर्शनेन तत्तुल्यरूपमपरं पण्यवासनं निर्वाहयतः । इत्यपरः । भित्त्वा पुटमपहरत इति । पुटं पण्यवासनं कृतशुल्कं भित्त्वा तस्मिन् पण्यमकृतशुल्कं निवेश्य नयतः । इति तृतीयः । एवमेवमपराधिनो वैदेहकस्य तच्च तावच्च यदेव पण्यं यत्परिमाणमपहृतं तदेव तत्परिमाणमेव दण्डः । श्रीमूला.

**शुल्कस्थानाद्गोमयपलालं प्रमाणं कृत्वाऽपहरत उत्तमः साहसदण्डः ॥**

ध्वजमूलात् गोमयपलालं प्रमाणं कृत्वाऽपहरतः गोपुरीषं धान्यस्तम्बं चात्यन्तनिःसारद्रव्यं विश्वासपदमपदिश्य तन्निगूहितं सारद्रव्यं नयतः उत्तमः साहसदण्डः पणसाहस्ररूपो दण्डः । श्रीमूला.

**शस्त्रवर्मकवचलोहरथरत्नधान्यपशूनामन्यतमानिर्वाह्यं निर्वाहयतो यथावघुषितो दण्डः पण्यनाशश्च ॥**

शस्त्रादीनामष्टानाम् अन्यतमानिर्वाह्यम् अन्यतमम् अनिर्वाह्यत्वेन कस्मिंश्चिन्निमित्ते राज्ञा प्रख्यापितं निर्वाहयतः यथावघुषितः प्रख्यापितप्रकारः दण्डः पण्यनाशश्च निर्वाह्यमानशस्त्रादिपण्यहानिश्च । तत्र वर्म आवरणसामान्यम् । कवचं बाहुकादियुक्तस्तद्विशेषः । शेषं प्रतीतम् । श्रीमूला.

**तेषामन्यतमस्याऽऽनयने बहिरेवोच्छुल्को विक्रयः ॥**

अनिर्वाह्यानाम् अन्यतमस्याऽऽनयने बहिरेव दुर्गबाह्यदेशे एव उच्छुल्को विक्रयः अशुल्कस्तस्य विक्रयः । श्रीमूला.

**अन्तपालः सपादपणिकां वर्तनीं गृह्णीयात् पण्यवहनस्य, पणिकामेकखुरस्य, पशूनामर्धपणिकाम्, क्षुद्रपशूनां पादिकाम्, अंसभारस्य माषिकाम्। नष्टापहृतं च प्रतिविदध्यात् ॥**

विषयान्तरक्षाधिकारिणो भृतिमाह— अन्तेत्यादि । अन्तपालः, सपादपणिकां पादाधिकपणरूपां वर्तनीं तत्संज्ञां मार्गरक्षाभृतिं गृह्णीयात् पण्यवहनस्य पण्यवाहिनः शकटादेः । पणिकाम् एकखुरस्य एकपणात्मिकां वर्तनीं खरादेः गृह्णीयात् । पशूनामर्धपणिकां गवादीनां अर्धपणात्मिकाम्, क्षुद्रपशूनां पादिकां मेषादीनां पादपणरूपाम्, अंसभारस्य माषिकां स्कन्धभारवाहिनः ताम्रमाषात्मिकां च वर्तनीं गृह्णीयात् । नष्टापहृतमिति । मुष्टनष्टं च प्रतिविदध्यात् तस्करात् प्रत्यानीय वा तस्करानुपलम्भे स्वहस्ताद्वा दद्यात् अन्तपालः । श्रीमूला.

**वैदेश्यं सार्थं कृतसारफल्गुभाण्डविचयनमभिज्ञानं मुद्रां च दत्त्वा प्रेषयेदध्यक्षस्य ॥**

वैदेश्यं विदेशागतं सार्थं वणिक्संघं कृतसारफल्गुभाण्डविचयनम् अमुकस्यैतावन्ति सारभाण्डानि एतावन्ति फल्गुभाण्डानीति स्वेन कृतं सारफल्गुभाण्डानां विचयनम् अन्वेषणं यस्य तं तथाभूतम् अध्यक्षस्य शुल्काध्यक्षस्य प्रेषयेत् । किं कृत्वा ? अभिज्ञानं स्वहस्तलेखाङ्कं मुद्रां च पण्यवासनकरणीयां दत्त्वा । एष शुल्काध्यक्षहरणस्य निषेधोपायः । श्रीमूला.

**वैदेहकव्यञ्जनो वा सार्थप्रमाणं राज्ञः प्रेषयेत्। तेन प्रदेशेन राजा शुल्काध्यक्षस्य सार्थप्रमाणमुपदिशेत् सर्वज्ञत्वख्यापनार्थम्। ततः सार्थमध्यक्षोऽभिगम्य ब्रूयात्— इदममुष्यामुष्य च सारभाण्डं फल्गुभाण्डं च न निगूहितव्यम्, एष राज्ञः प्रभाव इति ॥**

सर्वनियुक्तपुरुषहरणनिषेधोपायमाह— वैदेहकेत्यादि । वैदेहकव्यञ्जनो वा वणिक्छद्मचारी वा गूढपुरुषो राजनियुक्तः सार्थप्रमाणं पण्यवहनादिसंख्यां राज्ञः प्रेषयेत् रहसि निवेदयेत् । इत्थमवगतसार्थप्रमाणस्य प्रतिपत्तिमाह— तेनेति । तेन प्रदेशेन गूढपुरुषोपदेशेन राजा शुल्काध्यक्षस्य सार्थप्रमाणं स्वविदितम् उपदिशेत् ज्ञापयेत् सर्वज्ञत्वख्यापनार्थं सर्वज्ञो राजा परोक्षमपि सार्थवाहप्रमाणं दिव्यदृष्ट्या जानातीति ख्यापनार्थम् । तत इति । ततः उपदेशानन्तरं सार्थम् अध्यक्षः अभिगम्य ब्रूयात् । किमिति ? इदममुष्यामुष्य च सारभाण्डम् फल्गुभाण्डं च न निगूहितव्यम् । कस्मात् ? एष राज्ञः प्रभावः ईदृशो राज्ञो महिमोपलभ्यते यत् परोक्षस्यापि भवदीयसारफल्गुभाण्डजातस्येयत्तां दिव्यदृष्ट्याऽवगम्यास्मभ्यमुपदिशतीति । श्रीमूला.

**निगूहतः फल्गुभाण्डं शुल्काष्टगुणो दण्डः, सारभाण्डं सर्वापहारः ॥**

निगूहतः राजप्रभावकथनेऽप्यवच्छादयतः फल्गुभाण्डं कार्पासादिकम्, शुल्काष्टगुणो दण्डः । सारभाण्डं मणिमुक्ताप्रवालादिकं निगूहतः सर्वापहारः गूहितसर्वसारापहरणं दण्डः । श्रीमूला.

**राष्ट्रपीडाकरं भाण्डमुच्छिन्द्यादफलं च यत् । महोपकारमुच्छुल्कं कुर्याद् बीजं तु दुर्लभम् ॥**

अध्यायान्ते श्लोकमाह— राष्ट्रेत्यादि । राष्ट्रपीडाकरं भाण्डं गरलमदिरादिपण्यम् उच्छिन्द्यात् वारयेत् अत्यन्ताय वा नाशयेत् । अफलम् अल्पफलं यत् भाण्डं

वार्ताकोर्वारुकादि तच्च उच्छिन्द्यात्, देशान्तरान्नाऽऽनाययेत् । महोपकारं दुर्लभं स्वविषये बीजम् अभ्यवहार्यं व्रीह्यादिधान्यं भैषज्यार्थं च मरिचहरीतक्यादि उच्छुल्कं शुल्करहितं कुर्यात् । तुशब्दो विशेषार्थः । 'बीजं च' इति पाठे चशब्दः तुशब्दस्यार्थे । श्रीमूला.

भाण्डप्रकारस्थानभेदानुरोधेन शुल्कप्रकाराः अपराधेषु दण्डविधिश्च

**[1]शुल्कव्यवहारः ॥**

अमुकपण्यस्यैतावच्छुल्कमिति व्यवस्थाकरणं शुल्कव्यवहारः । स इहोच्यते । श्रीमूला.

**बाह्यमाभ्यन्तरं चाऽऽतिथ्यम्, निष्क्राम्यं प्रवेश्यं च शुल्कम् ॥**

शुल्कमादौ त्रिधा पुनर्द्विधा च विभजते— बाह्यमित्यादि । चः प्रथमो भिन्नक्रमः । शुल्कं बाह्यमाभ्यन्तरमातिथ्यं चेति त्रिधा भवतीत्यर्थः । तत्र स्वजनपदोत्पन्नपण्यसंबन्धि बाह्यम् । दुर्गस्थानीयाद्यभ्यन्तरभूमिप्रभवपण्यसंबन्धि आभ्यन्तरम् । विदेशागतपण्यसंबन्धि आतिथ्यम् । त्रिविधमपि तत् नैष्क्राम्यं निष्क्राम्यपण्यनिष्क्रमणनिमित्तम्, प्रावेश्यं च प्रवेशनीयपण्यप्रवेशननिमित्तं च इति पुनः प्रत्येकं द्विविधम् । वृद्धपाठोऽयं व्याख्याभाष्ययोरुपलब्धः । अवृद्धपाठे तु संबन्धि लक्ष्यम् । श्रीमूला.

**प्रवेश्यानां मूल्यपञ्चभागः ॥**

प्रवेश्यानां परदेशात् स्वदेशं स्वदेशेऽपि स्थानीयं प्रवेशयितव्यानां पण्यानां मूल्यपञ्चभागः शुल्कं भवति । एष सामान्यविधिः । श्रीमूला.

**पुष्पफलशाकमूलकन्दवल्लिक्यबीजशुष्कमत्स्यमांसानां षड्भागं गृह्णीयात् ॥**

तदपवादं त्वाह— पुष्पफलेत्यादि । पुष्पं कुसुम्भादि, फलं पनसादि, शाकं वास्तुकादि, मूलं वालुकादि, कन्दः सूरणादिः, वल्लिक्यं वल्लिजं कूष्माण्डादि, बीजं धान्यादि, एतेषां शुष्कमत्स्यमांसयोश्च षड्भागं मूल्यषड्भागं शुल्कं गृह्णीयात् । श्रीमूला.

(१) कौ. २।२२.

**शङ्खवज्रमणिमुक्ताप्रवालहाराणां तज्जातपुरुषैः कारयेत् कृतकर्मप्रमाणकालवेतनफलनिष्पत्तिभिः ॥**

शङ्खादीनां षण्णां तज्जातपुरुषैः तल्लक्षणविचक्षणैः कारयेत् विधापयेत् शुल्कम् । कीदृशैः ? कृतकर्मप्रमाणकालवेतनफलनिष्पत्तिभिः कृताः स्वानुभवावगताः कर्मप्रमाणकालवेतनफलनिष्पत्तयः यैः तथाविधैः । पदमिदमायुधागाराध्यक्षेऽपि व्याख्यातम् । श्रीमूला.

**क्षौमदुकूलक्रिमितानकङ्कटहरितालमनःशिलाहिङ्गुलुकलोहवर्णधातूनां चन्दनागुरुकटुककिण्वावराणां सुरादन्ताजिनक्षौमदुकूलनिकरास्तरणप्रावरणक्रिमिजातानामजैलकस्य च दशभागः पञ्चदशभागो वा ॥**

क्षौमादीनाम्— क्षौमं स्थूलवल्कजम्, दुकूलं सूक्ष्मवल्कजम्, क्रिमितानः चीनपट्टः, कङ्कटः सूत्रसंनाहः, हरितालमनःशिलाहिङ्गुलुका व्याख्याताः, अञ्जनं सौवीरकादि, इदं व्याख्यायामेव पठ्यते, लोहवर्णः लोहजातिः, धातुः गैरिकादिः इत्येतेषाम्, चन्दनादीनाम्— चन्दनागुरुणी प्रसिद्धे, कटुकं पिप्पल्यादि, किण्वावरम्— किण्वं मद्यबीजम्, तदन्तं तैलजातीयं द्रवजातम् इत्येतेषाम्, सुरादीनाम्— सुरा मद्यभेदः, दन्तः गजदन्तः, अजिनं कृष्णचर्म, क्षौमदुकूलनिकराः क्षौमनिष्पादनार्थाः दुकूलनिष्पादनार्थाश्च तन्तुनिकराः, आस्तरणं शयनोपवेशनसाधनम्, प्रावरणं प्रावारः, क्रिमिजातं कौशेयम् इत्येतेषाम्, अजैलकस्य च अजैलकालोमजस्य च दशभागः पञ्चदशभागो वा शुल्कं भवति । श्रीमूला.

**वस्त्रचतुष्पदद्विपदसूत्रकार्पासगन्धभैषज्यकाष्ठवेणुवल्कलचर्ममृद्भाण्डानां धान्यस्नेहक्षारलवणमद्यपक्वान्नादीनां च विंशतिभागः पञ्चविंशतिभागो वा ॥**

वस्त्रादयो धान्यादयश्च प्रसिद्धाः । तेषां विंशतिभागः पञ्चविंशतिभागो वा शुल्कम् । अयं पूर्वोक्तश्च विकल्पो यथादेशकालं द्रष्टव्यः । श्रीमूला.

**द्वारादेयं शुल्कपञ्चभागः। आनुग्राहिकं वा यथादेशोपकारं स्थापयेत् ॥**

द्वाराध्यक्षग्राह्यं शुल्कपञ्चभागः यस्य यच्छुल्कमुपदिष्टं तस्य तच्छुल्कपञ्चभागः भवति। आनुग्राहिकम् अनुग्रहानीतपण्यविषयं शुल्कं द्वारादेयं वा यथादेशोपकारं स्वदेशानुग्रहानुगुण्येन स्थापयेत् कल्पयेत्। श्रीमूला.

**जातिभूमिषु च पण्यानामविक्रयः ॥**

जातिभूमिषु च उत्पत्तिदेशेषु च पण्यानाम् अविक्रयः विक्रयो न कर्तव्यः इत्यर्थः। श्रीमूला.

**खनिभ्यो धातुपण्यादाने षट्छतमत्ययः ॥**

निषेधातिक्रमे दण्डमाह— खनिभ्य इति। लोहलवणाद्याकरेभ्यः धातुपण्यादाने धातुपण्यस्य कारणरूपस्य कार्यरूपस्य वा ग्रहणे षट्छतम् अत्ययः षट्पणशतानि दण्डो भवति, अर्थात् आदातुर्विक्रेतुश्च। श्रीमूला.

**पुष्पफलवाटेभ्यः पुष्पफलादाने चतुष्पञ्चाशत्पणो दण्डः ॥**

पुष्पफलवाटेभ्य इत्यादि। सुगमम्। श्रीमूला.

**षण्डेभ्यः शाकमूलकन्दादाने पादोनं द्विपञ्चाशत्पणो दण्डः ॥**

षण्डेभ्यः शाकाद्युद्भिजक्षेत्रेभ्यः। स्पष्टमन्यत्। श्रीमूला.

**क्षेत्रेभ्यः सर्वसस्यादाने त्रिपञ्चाशत्पणः, पणोऽध्यर्धपणश्च सीतात्ययः ॥**

क्षेत्रेभ्यः धान्यकेदारेभ्यः सर्वसस्यादाने त्रिपञ्चाशत्पणो दण्डः। पणः अध्यर्धपणश्च क्रेतृविक्रेत्रोर्यथाक्रमं सीतात्ययः धान्यदण्डः। अयं च दण्डस्त्रिपञ्चाशत्पणेन समुच्चीयते। श्रीमूला.

**अतो नवपुराणानां देशजातिचरित्रतः।**
**पण्यानां स्थापयेच्छुल्कमत्ययं चापकारतः ॥**

अध्यायान्ते श्लोकमाह— अत इति। अतः उक्तशुल्कदण्डप्रकारातिरेकेण नवपुराणानां पण्यानां देशजातिचरित्रतः देशाचारजात्याचारानुसारात् शुल्कं स्थापयेत्। अपकारतः अपकारानुसारात् अत्ययं च दण्डं च स्थापयेत्। श्रीमूला.

सूत्रवस्त्रनिर्माणवेतनकर्मकरादिसंबद्धो विधिः तत्संबद्धापराधेषु दण्डविधिश्च

**[1]सूत्राध्यक्षः सूत्रवर्मवस्त्ररज्जुव्यवहारं तज्जातपुरुषैः कारयेत् ॥**

'सूत्राध्यक्षः' इति सूत्रम्। सूत्रं ऊर्णादिजो गुणः, तस्य अध्यक्षः कर्तनवानादिकारयिता, तद्व्यापारोऽभिधीयते इति सूत्रार्थः। 'कार्पासक्षौमाणां पञ्चपले पलसूत्रम्' (कौ. २।१५) इत्युक्तं कोष्ठागाराध्यक्षे। तदध्यक्षस्तद्व्यापारश्चानुक्त इहोच्यते।

सूत्राध्यक्ष इति। सूत्राध्यक्षः सूत्रवर्मवस्त्ररज्जुव्यवहारं सूत्रादीनां कर्तनवानादिकं तज्जातपुरुषैः तच्छिल्पिकुलजैस्तत्कर्मकुशलैश्च पुरुषैः कारयेत्। श्रीमूला.

**ऊर्णावल्ककार्पासतूलशणक्षौमाणि च विधवान्यङ्गाकन्याप्रव्रजितादण्डप्रतिकारिणीभी रूपाजीवामातृकाभिर्वृद्धराजदासीभिर्व्युपरतोपस्थानदेवदासीभिश्च कर्तयेत् ॥**

ऊर्णा मेषादिलोम। वल्कः मूर्वादित्रसरः। कार्पासः प्रसिद्धः। तूलं शाल्मल्यादि। शणः क्षुपभेदजम्। क्षौमम् अतसीजम्। एतानि च विधवादिभिः पञ्चभिः। तत्र न्यङ्गा अङ्गविकला। दण्डप्रतिकारिणी कर्मणा दण्डनिष्क्रयकारिणी। शेषाः प्रसिद्धाः। रूपाजीवामातृकाभिः गणिकाधात्रीभिः, वृद्धराजदासीभिः वृद्धाभिर्नृपतिपरिचारिकाभिः, व्युपरतोपस्थानदेवदासीभिश्च— उपस्थानं देवालयेषु नृत्तगीतादिना देवसभाजनकर्म, तत् व्युपरतं अनर्हतया निवृत्तं यासां ताभिः तथाभूताभिः देवदासीभिः देवालयपरिचारिकाभिश्च कर्तयेत् सूत्रयेत्। श्रीमूला.

**श्लक्ष्णस्थूलमध्यतां च सूत्रस्य विदित्वा वेतनं कल्पयेत्। बह्वल्पतां च। सूत्रप्रमाणं ज्ञात्वा तैलामलकोद्वर्तनैरेता अनुगृह्णीयात् ॥**

श्लक्ष्णतां स्थूलतां मध्यतां च सूत्रस्य विदित्वा भृतिं कल्पयेत्। बह्वल्पतां चेति। तुल्ये काले कर्तनस्य बहुत्वमल्पत्वं च, विदित्वा वेतनं कल्पयेदित्यनुषज्यते। सूत्रप्रमाणमिति। सूत्रस्य श्लक्ष्णतातिशयं बहुत्वं च ज्ञात्वा

(१) कौ. २।२३.

तैलामलकोद्वर्तनैः तैलाभ्यञ्जनस्नपनैः ऊष्मशमनार्थैः एताः दृष्टगुणाः अनुगृह्णीयात् उपकुर्यात् तत्प्रीतये तदन्यप्रोत्साहनाय च । श्रीमूला.

**तिथिषु प्रतिपादनमानैश्च कर्म कारयितव्याः । सूत्रह्रासे वेतनह्रासो द्रव्यसारात् ॥**

तिथिषु कर्मदिवसेषु प्रतिपादनमानैश्च— प्रतिपादनं वेतनदानं दीयमानवेतनं वा, तस्य मानैः एतावतः कर्मण एतावत् वेतनमित्येवंरूपैः परिच्छेदैश्च कर्म कारयितव्याः । अथवा तिथिषु दिवसविशेषेषु पर्वादिषु अशनदानसत्कारैश्च कर्म कारयितव्याः । सूत्रह्रासे सूत्रस्य न्याय्यप्रमाणतो न्यूनत्वे वेतनह्रासः द्रव्यसारात् द्रव्यार्घमपेक्ष्य, कर्तव्य इति शेषः । श्रीमूला.

**कृतकर्मप्रमाणकालवेतनफलनिष्पत्तिभिः कारुभिश्च कर्म कारयेत्, प्रतिसंसर्गं च गच्छेत् ॥**

कृतकर्मेत्यादि । इदं पदमन्यत्र व्याख्यातम् । एवंभूतैः कारुभिश्च तन्तुवायादिभिश्च कर्म कारयेत्, प्रतिसंसर्गं सख्यं च गच्छेत् तत्कर्मसंभावितच्छलप्रयोगज्ञानार्थम् । श्रीमूला.

**क्षौमदुकूलक्रिमितानराङ्कवकार्पाससूत्रवानकर्मान्तांश्च प्रयुञ्जानो गन्धमाल्यदानैरन्यैश्चौपग्राहिकैराराधयेत् । वस्त्रास्तरणप्रावरणविकल्पानुत्थापयेत् ॥**

राङ्कवं रङ्कुलोमजम् । क्षौमादिचतुष्कमन्यत्र व्याख्यातम् । क्षौमादीनां पञ्चानां सूत्रवानकर्मान्तान् प्रयुञ्जानः कारयन् अध्यक्षः गन्धमाल्यदानैः अन्यैश्च औपग्राहिकैः आनुकूल्यसंपत्तिफलैः आराधयेत् उपचरेत् तत्कारून् । तदाराधनफलमाह— वस्त्रेत्यादि । वस्त्रास्तरणप्रावरणानां विकल्पान् प्रकारभेदान् उत्थापयेत् अपूर्वानुल्लेख्य निर्मापयेत् । श्रीमूला.

**कङ्कटकर्मान्तांश्च तज्जातकारुशिल्पिभिः कारयेत् ॥**

कङ्कटकर्मान्तांश्च सूत्रसंनाहकर्माणि. तज्जातकारुशिल्पिभिः तत्कर्मनिपुणैः कारुभिः शिल्पिभिश्च कारयेत् । श्रीमूला.

**याश्चानिष्कासिन्यः प्रोषितविधवा न्यङ्गाः कन्यका वाऽऽत्मानं बिभृयुस्ताः स्वदासीभिरनुसार्य सोपग्रहं कर्म कारयितव्याः ॥**

याश्च अनिष्कासिन्यः प्रोषितविधवाः भर्तृप्रवासनिमित्तवियुक्तभर्तृकाः परित्यक्तबहिर्निष्क्रमणाः, न्यङ्गाः अङ्गविकलाः, कन्यकाः वा आत्मानं बिभृयुः स्वपरिश्रमार्जितग्रासादिना देहयात्रां कुर्युः ताः स्वदासीभिः अनुसार्य अनुवर्त्य सोपग्रहं सप्रीतिबहुमानं यथा भवति तथा कर्म सूत्रकर्तनादि कारयितव्याः । श्रीमूला.

**स्वयमागच्छन्तीनां वा सूत्रशालां प्रत्युषसि भाण्डवेतनविनिमयं कारयेत् । सूत्रपरीक्षार्थमात्रः प्रदीपः ॥**

स्वयमागच्छन्तीनाम्, वाशब्दात् स्वदासीसमानीतानां वा, सूत्रशालां प्रत्युषसि ईषत्तमसि दिनमुखे भाण्डवेतनविनिमयं तद्गृहकर्तितभाण्डग्रहणपूर्वकवेतनार्पणं कारयेत् । सूत्रपरीक्षार्थमात्रः प्रदीप इति । सूत्रगुणपरीक्षणप्रयोजना तदन्यप्रयोजनाक्षमा मात्रा प्रकाशपरिमाणं यस्य स तथाभूतः दीपः कार्यः, तत्काले इति शेषः । श्रीमूला.

**स्त्रिया मुखसंदर्शनेऽन्यकार्यसंभाषायां वा पूर्वः साहसदण्डः । वेतनकालातिपातने मध्यमः, अकृतकर्मवेतनप्रदाने च ॥**

स्त्रियाः मुखसंदर्शने मुखनिर्वर्णने अन्यकार्यसंभाषायां प्रकृतकार्यातिरिक्तकार्यप्रश्नादौ वा पूर्वः साहसदण्डः । वेतनकालातिपातने भृतिदानकालातिक्रमे मध्यमः साहसदण्डः । अकृतकर्मवेतनप्रदाने च अकृतकर्मणामुत्कोचग्रहणेन वेतनस्य दाने च, मध्यमः इत्यनुषज्यते । श्रीमूला.

**गृहीत्वा वेतनं कर्माकुर्वत्याः अङ्गुष्ठसंदंशं दापयेत् । भक्षितापहृतावस्कन्दितानां च । वेतनेषु च कर्मकराणामपराधतो दण्डः ॥**

गृहीत्वा पूर्वमादाय वेतनं कर्माकुर्वत्याः अङ्गुष्ठसंदंशम्— दक्षिणाङ्गुष्ठतन्मध्यमाङ्गुल्यग्रयोश्छेदः अङ्गुष्ठसंदंशः, तं दापयेत् । भक्षितापहृतावस्कन्दितानां भक्षणापहरणपलायनानां च अर्थात् भक्षयित्वा अपहृत्य वा

पलायितानां च अङ्गुष्ठसंदंशं दापयेदित्येव । उक्त एव विषये दण्डविकल्पमाह— वेतनेष्विति । कर्मकराणां तन्तुवायादीनाम् अपराधतः अपराधानुसारेण वेतनेषु च दण्डः । नावश्यं देहदण्डो यथोक्तः, किंतु तत्स्थाने यथापराधं वेतनदण्डोऽपि केवल इष्यत इत्यभिप्रायः । एवं च विकल्पपर्यवसित इह चकारो द्रष्टव्यः । श्रीमूला.

**रज्जुवर्तकैश्चर्मकारैश्च स्वयं संसृज्येत । भाण्डानि च वरत्रादीनि वर्तयेत् ॥**

रज्जुवर्तकैः रज्जुकल्पनजीविभिः चर्मकारैश्च चर्ममयाश्वोपकरणादिकारिभिश्च । 'वर्मकारैः' इति पाठे सूत्रकङ्कटादिकारिभिः । स्वयं संसृज्येत सख्यं कुर्यात् रज्ज्वादिपालनार्थं तत्कर्मानुष्ठापनार्थं च । भाण्डानि च उपकरणानि च वरत्रादीनि गवादिबन्धनीप्रभृतीनि वर्तयेत् कारयेत् । 'भाण्डादीनि' इति तु पाठो न सुष्ठु । श्रीमूला.

**सूत्रवल्कमयी रज्जूर्वरत्रा वैत्रवैणवीः ।**
**सांनाह्या बन्धनीयाश्च यानयुग्यस्य कारयेत् ॥**

अध्यायान्ते श्लोकमाह— सूत्रेत्यादि । सूत्रवल्कमयीः कार्पासादितन्तुमयीः शणादिवल्कमयीश्च रज्जूः, वैत्रवैणवीर्वरत्राः वेत्रमयीर्वेणुमयीश्च वरत्राः । कीदृशीः ? सांनाह्याः संनाहोपयोगिनीः, यानयुग्यस्य बन्धनीयाश्च रथादेरश्वादेश्च बन्धनयोग्याश्च कारयेत् । श्रीमूला.

### कृषिकर्मविधिः तत्संबद्धो दण्डविधिश्च

**[१]सीताध्यक्षः कृषितन्त्रशुल्बवृक्षायुर्वेदज्ञस्तज्ज्ञसखो वा सर्वधान्यपुष्पफलशाककन्दमूलवाल्लिक्यक्षौमकार्पासबीजानि यथाकालं गृह्णीयात् ॥**

'सीताध्यक्षः' इति सूत्रम् । कृषिकर्माध्यक्षः इति सूत्रार्थः । 'सीताध्यक्षोपनीतः सस्यवर्णः सीता' (कौ. २।१५) इत्युक्तं कोष्ठागाराध्यक्षे । तदध्यक्षस्तद्व्यापारश्चाधुनोच्यते ।

सीताध्यक्ष इति । सीताध्यक्षः कृषितन्त्रशुल्बवृक्षायुर्वेदज्ञः— कृषितन्त्रं वृद्धपराशरादिप्रणीतम्, शुल्बशास्त्रं भूमिसिराज्ञानशास्त्रम्, वृक्षायुर्वेदः आग्निवेश्यादिप्रणीतः, तज्ज्ञः तज्ज्ञसखो वा सर्वधान्यादीनि धान्यादीनि सर्वविधस्वस्वावान्तरभेदयुक्तानि यथाकालं संगृह्णीयात् । तत्र वाल्लिक्यं कूश्माण्डादिवल्लीफलम् । शेषं प्रसिद्धम् ।
श्रीमूला.

**बहुहलपरिकृष्टायां स्वभूमौ दासकर्मकरदण्डप्रतिकर्तृभिर्वापयेत् ॥**

बहुसीरविलिखितायां स्वभूमौ तत्तद्धान्याद्यनुगुणायां भूमौ दासादिभिः वापयेत् । दासः उदरदासक्रीतदासादिः । कर्मकरः वेतनार्थकर्मकारी । दण्डप्रतिकर्ता कर्मणा दण्डनिष्क्रेता । श्रीमूला.

**कर्षणयन्त्रोपकरणबलीवर्दैश्चैषामसङ्गं कारयेत् । कारुभिश्च कर्मारकुट्टाकमेदकरज्जुवर्तकसर्पग्राहादिभिश्च ॥**

कर्षणयन्त्राणि हलदण्डयुगादीनि । उपकरणानि रज्जुदात्रादीनि परिकर्मकरा जनाश्च । बलीवर्दाः प्रसिद्धाः । एतैर्निर्दिष्टैः एषां दासादीनाम् असङ्गं क्रियानुपरोधं कारयेत् । कारुभिश्च कर्मारादिभिः असङ्गं कारयेत् । तत्र कर्मारः अयस्कारः । कुट्टाकः तक्षा । मेदकः खनकः, हिंसकत्वात् । भेदकपाठो वा । रज्जुवर्तकः रज्जुकल्पकः । सर्पग्राहः व्यालग्राही । श्रीमूला.

**तेषां कर्मफलविनिपाते तत्फलहानं दण्डः ॥**

कारूणां कर्मफलविनिपाते तद्दोषजनिते कृषिफलविनाशे तत्फलहानं दण्डः हापितफलपरिमाणो दण्डः । श्रीमूला.

**षोडशद्रोणं जाङ्गलानां वर्षप्रमाणम्, अध्यर्धमानूपानाम् । देशवापानाम्— अर्धत्रयोदशाश्मकानाम्, त्रयोविंशतिरवन्तीनाम्, अमितमपरान्तानाम्, हैमन्यानां च कुल्यावापानां च कालतः ॥**

भूमिविशेषेषु सस्यनिष्पत्तिनिमित्तं वृष्टिप्रमाणमाह— षोडशद्रोणं जाङ्गलानां वर्षप्रमाणमिति । हस्तप्रमाणमुखयुक्ते वृष्टिमानार्थं निर्मिते कुण्डे मेघाभिवृष्टोदकासारपरिपूरिते यदि तद्गतं जलं षोडशद्रोणात्मकमुपलभ्येत तदा तावत् वर्षप्रमाणं मरुप्रायाणां भूभागानां सस्यनिष्पादन-

---

(१) कौ. २।२४.

पर्याप्तं भवतीत्यर्थः । अध्यर्धं चतुर्विंशतिद्रोणम् आनूपानां जलप्रायाणाम् । इदं जाङ्गलानूपभेदेन वर्षप्रमाणमुक्तम् । देशभेदेन तदाह— देशवापानामिति । वर्षप्रमाणं वक्ष्यते इति शेषः । अर्धत्रयोदश अर्धाधिकास्त्रयोदश वर्षप्रमाणद्रोणानि अश्मकानाम् आरट्टानाम् । त्रयोविंशतिः द्रोणानि अवन्तीनां मालवानाम् । अमितम् असंख्यातं वर्षप्रमाणम् अपरान्तानां पाश्चात्यदेशस्य । हैमन्यानां च हिमाम्बुनिष्पाद्यसस्यानां हिमवत्प्रदेशानां च, हैम्यानामिति पाठेऽप्ययमेवार्थः, कुल्यावापानां च कुल्योपनेयजलमातृकप्रदेशानां च कालतः स्वस्वकालानुसारेण सस्यसंपत्तिः, न तु वर्षप्रमाणापेक्षेत्यर्थः । श्रीमूला.

**वर्षत्रिभागः पूर्वपश्चिममासयोः, द्वौ त्रिभागौ मध्यमयोः सुषमारूपम् ॥**

शोभनसंवत्सरस्य रूपमाह— वर्षत्रिभाग इत्यादि । वर्षत्रिभागः वर्षस्य तत्तद्देशोक्तवृष्टिप्रमाणस्य त्रिधा विभक्तस्य एकस्त्रिभागः पूर्वपश्चिममासयोः श्रावणप्रोष्ठपदाश्वयुजकार्तिकाख्यमासचतुष्टये प्रथमचरमयोः श्रावणकार्तिकयोः भवति । शेषौ द्वौ त्रिभागौ मध्यमयोः प्रोष्ठपदाश्वयुजयोः भवतः । सुषमारूपं सुषमायाः शोभनस्य संवत्सरस्य रूपं भवति । अर्थात् यथोक्तं भागशो वर्षणम् । श्रीमूला.

**तस्योपलब्धिर्बृहस्पतेः स्थानगमनगर्भाधानेभ्यः शुक्रोदयास्तमयचारेभ्यः सूर्यस्य प्रकृतिवैकृताच्च ॥**

भविष्यतः सुषमारूपस्य ज्ञापकमाह— तस्येत्यादि । तस्य सुषमारूपस्य उपलब्धिः अनुमितिः बृहस्पतेः स्थानादित्रिकात् शुक्रोदयादित्रिकात् सूर्यस्य प्रकृतिवैकृताच्च भवति । तत्र स्थानं मेषादिराशिस्थितिः । गमनं मेषादेर्वृषभादिसंक्रमः । तयोर्वृष्ट्यादिफलहेतुत्वं ज्योतिःशास्त्रप्रसिद्धम् । गर्भाधानं मार्गशीर्षादिषु षट्सु मासेषु तुषारादिदर्शनम् । तदुक्तम्— 'मार्गशिराः सतुषारः सहिमः पौषः समारुतो माघः । साभ्रः फाल्गुनमासः सपवनवृष्टिश्च यदि चैत्रः ॥ तडिदभ्रानिलविद्युज्जलवृष्टितो भवति यदि च वैशाखः । सम्यग् वर्षति मघवान् धारणदिवसेषु वर्षति चेत् ॥' । धारणदिवसाः वैशाखकृष्णप्रतिपदादयश्चत्वारः इति व्याख्यातारः । शुक्रस्योदयास्तमयौ प्रसिद्धौ । चारः आषाढमासपञ्चम्यादिषु नवसु तिथिषु संचारः । सूर्यस्य प्रकृतिवैकृतं स्वभावान्यथाभावः सपरिवेषत्वादि । इत्थं सुषमारूपोपलब्धिकरणं ग्रहत्रयचरितमुक्तम् । श्रीमूला.

**सूर्याद्बीजसिद्धिः । बृहस्पतेः सस्यानां स्तम्बकरिता । शुक्राद् वृष्टिरिति ॥**

तत्र विशेषमाह— सूर्यादिति । सूर्यात् प्रकृतिस्थात् विकृतात् वा बीजसिद्धिः बीजस्य सस्यफलस्य सिद्धिः निष्पत्तिः अनुमीयते भवति न वेति । बृहस्पतेः स्थानादियुक्तात् सस्यानां स्तम्बकरिता स्तम्बकरिबृहणम् अनुमीयते भवति न वेति । शुक्रात् उदयादियुक्तात् वृष्टिः अनुमीयते भवति न वेति । श्रीमूला.

**त्रयः सप्ताहिका मेघा अशीतिः कणशीकराः ।**
**षष्टिरातपमेघानामेषा वृष्टिः समा हिता ॥**

शोभनवृष्टिक्रमं श्लोकाभ्यामाह— त्रय इत्यादि । त्रयो मेघाः सप्ताहिकाः सप्ताहोरात्राविच्छिन्नवृष्टिकारिणः । अशीतिर्मेघाः कणशीकराः सान्द्रबिन्दुवर्षिणः । आतपमेघानाम् आतपयुक्तानां मेघानां षष्टिः । एषा इत्थं परिसंख्यातमेघा वृष्टिः समा अन्यूनानतिरिक्ता, अत एव हिता लोकश्रेयस्करी च । श्रीमूला.

**वातमातपयोगं च विभजन् यत्र वर्षति ।**
**त्रीन् कर्षकांश्च जनयंस्तत्र सस्यागमो ध्रुवः ॥**

वातम् आतपयोगं च विभजन् तदुभयासंकरेण तिष्ठन्, त्रीन् कर्षकान् जनयन् तिसृभिर्वृष्टिभिर्ज्यैष्ठादिवापकालेषु तिस्रः कृषीः प्रवर्तयंश्च । 'त्रीन् करीषान् जनयन्' इति पाठे दोहलार्थानां शुष्कगोमयानां त्रीन् संग्रहावसरान् विच्छिन्नवर्षणेनोत्पादयन्नित्यर्थः । अर्थात् पर्जन्यः यत्र देशे वर्षति तत्र सस्यागमो ध्रुवः सस्यनिष्पत्तौ संदेहो नास्ति । श्रीमूला.

**ततः प्रभूतोदकमल्पोदकं वा सस्यं वापयेत् ॥**

ततः यथोक्तवृष्टिप्रमाणादिपरिज्ञानानन्तरं प्रभूतोदकं प्रचुरजलनिष्पाद्यम् अल्पोदकं वा अल्पजलनिष्पाद्यं वा

सस्यं वापयेत् । अर्थात् प्रभूतवृष्टावल्पवृष्टौ वा देशे यथाक्रमम् । श्रीमूला.

**शालिव्रीहिकोद्रवतिलप्रियङ्गुदारकवरकाः पूर्ववापाः । मुद्गमाषशैम्ब्या मध्यवापाः । कुसुम्भमसूरकुलुत्थयवगोधूमकलायातसीसर्षपाः पश्चाद्वापाः ॥**

सस्येषु विशेषमाह— शालीत्यादि । शाल्यादयः सप्त पूर्ववापाः पूर्वमेव वपनीयाः । मुद्गमाषशैम्ब्याः मध्यवापाः । कुसुम्भादयोऽष्टौ पश्चाद्वापाः पश्चिमकालवपनीयाः । श्रीमूला.

**यथर्तुवशेन वा बीजवापाः ॥**

य एते शाल्यादिबीजवापा उक्ताः अनुक्ताश्चान्ये ते सर्वे तत्तद्बीजसम्यङ्निष्पत्तियोग्यकालानुरोधेन कर्तव्याः । श्रीमूला.

**वापातिरिक्तमर्धसीतिकाः कुर्युः । स्ववीर्योपजीविनो वा चतुर्थपञ्चभागिकाः । यथेष्टमनवसितभागं दद्युरन्यत्र कृच्छ्रेभ्यः ॥**

कृतवापक्षेत्रातिरिक्तं क्षेत्रम् अर्धसीतिकाः कृषिफलार्धभागस्वीकरणसंविदा कृषन्तः बीजबलीवर्दादिसंपन्ना ग्राम्यकुटुम्बिनः कुर्युः साधयेयुः कर्षणबीजवपनादिना । स्ववीर्येत्यादि । स्ववीर्योपजीविनो वा बीजादिषु स्वामिसंबन्धिषु सत्सु स्वकायायासमात्रं क्षेत्रे कुर्वाणा वा कर्मकराः चतुर्थपञ्चभागिकाः निष्पन्नस्य फलस्य चतुर्थभागं पञ्चमभागं वा लभन्ते । यथेष्टमिति । अनवसितभागम् अनवसितस्य अभ्युपेत्याकृष्टस्य क्षेत्रस्य सस्यभागं यथेष्टं स्वामीच्छानतिक्रमेण दद्युः अर्थादर्धसीतिकादयः । तत्रापवादः— अन्यत्र कृच्छ्रेभ्य इति । कर्षणविघातकविपदुपनिपातव्यतिरेके । श्रीमूला.

**स्वसेतुभ्यो हस्तप्रावर्तिममुदकभागं पञ्चमं दद्युः । स्कन्धप्रावर्तिमं चतुर्थम् । स्रोतोयन्त्रप्रावर्तिमं च तृतीयम् ॥**

स्वसेतुभ्यः स्वदेहायासस्वद्रव्यव्ययनिष्पादितेभ्यस्तटाकादिभ्यः हस्तप्रावर्तिमं कुम्भादिजलपायनरूपहस्तप्रवृत्तिसाधितम् उदकभागम् उदकार्थं फलभागं पञ्चमं दद्युः राज्ञे अर्पयेयुः कृषीवलाः । स्कन्धप्रावर्तिमं स्कन्धवहप्रवर्तितयन्त्रपायितजलनिष्पन्नम् उदकभागं चतुर्थं दद्युः । स्रोतोयन्त्रप्रावर्तिमं सारणीपायितजलनिष्पन्नं च उदकभागं तृतीयं दद्युः । उदककरश्चायं भूमिकरवत् द्रष्टव्यः, यतो राजा भूम्युदकयोरविशेषात् स्वामी । तदुक्तम्— ' राजा भूमेः पतिर्दृष्टः शास्त्रज्ञैरुदकस्य च । ताभ्यामन्यत्तु यद्द्रव्यं तत्र स्वाम्यं कुटुम्बिनाम् ॥ ' इति । श्रीमूला.

**चतुर्थं नदीसरस्तटाककूपोद्घाटम् ॥**

स्वसेतुभ्योऽन्यत्र देयमाह— चतुर्थमिति । नदीसरस्तटाककूपोद्घाटम् । उद्घाट्यते निःसार्यते जलमनेनेत्युद्घाटः अरघट्टकादियन्त्रम् । लक्षणया त्विह तज्जनितग्रहणम् । नद्यादिचतुष्टयात् यन्त्रविशेषपायितजलनिष्पन्नं चतुर्थं भागं दद्युः । श्रीमूला.

**कर्मोदकप्रमाणेन कैदारं हैमनं ग्रैष्मिकं वा सस्यं स्थापयेत् ॥**

कृष्यपेक्षितजलप्राचुर्याल्पत्वानुरोधेन कैदारं शाल्यादिक्षेत्रवाप्यम्, हैमनं हेमन्तकालवाप्यम्, ग्रैष्मिकं ग्रीष्मकालवाप्यं वा सस्यं स्थापयेत् वापयेत् । श्रीमूला.

**शाल्यादि ज्येष्ठम् । षण्डो मध्यमः । इक्षुः प्रत्यवरः । इक्षवो हि बह्वाबाधा व्ययग्राहिणश्च ॥**

शाल्यादिधान्यं ज्येष्ठं श्रेष्ठम्, प्रधानाहारद्रव्यत्वादल्पव्ययायाससाध्यानल्पफलत्वाच्च । षण्डः कदल्यादिः मध्यमः, अल्पव्ययायाससाध्यफलत्वात् । इक्षुः प्रत्यवरः शाल्याद्यपेक्षया निकृष्टः । कुतः ? हि यतः इक्षवः बह्वाबाधाः मनुष्यमूषिकाद्युपद्रवबहुलाः व्ययग्राहिणश्च, छेदनपीडनपचनादिबहुकर्मकरसापेक्षत्वात् । श्रीमूला.

**फेनाघातो वल्लीफलानाम्, परीवाहान्ताः पिप्पलीमृद्वीकेक्षूणाम्, कूपपर्यन्ताः शाकमूलानाम्, हरणिपर्यन्ता हरितकानाम्, पाल्यो लवानां गन्धभैषज्योशीरह्रीबेरपिण्डालुकादीनाम् । यथास्वं भूमिषु च स्थल्याश्चानूप्याश्चौषधीः स्थापयेत् ॥**

अथ वापयोग्यभूमीराह— फेनाघात इति । फेनेन आहन्यते इति फेनाघातः जलपर्यन्तदेशः वल्लीफलानां

कूश्माण्डादीनाम् । परीवाहान्ताः जलोच्छ्वासपरिसर-देशाः पिप्पलीमृद्वीकेक्षूणाम् । कूपपर्यन्ताः कूपपरिसरदेशाः शाकमूलानाम् । हरणिपर्यन्ताः— हरणिः कुल्या, सरस्तटाकादेः रिक्तीभूत आर्द्रप्रदेश इति स्वामी, तस्याः पर्यन्ताः हरितकानां यवसादीनाम् । पाल्यः क्षेत्रमध्यकृताः सेतवः लवानां छिन्नानां गन्धादिपञ्चकप्रभृतीनाम्— गन्धः मांसीग्रन्थिपर्णकादिः , भैषज्यं लशुनशतपुष्पादि, उशीरं लामज्जम्, ह्रीबेरं बालाख्यम् , पिण्डालुकः रोमकन्दः इत्येतदादीनाम् । वापदेश इति सर्वत्र शेषः । यथास्वमिति । यथास्वं भूमिषु च स्वस्वयोग्यभूमिषु । जलभूमिषु अनूपभूमिषु चेत्यर्थः । स्थल्याश्च स्थलप्ररोहिणीश्च अनूप्याश्च जलप्रायदेशप्ररोहिणीश्च ओषधीः स्थापयेत् । श्रीमूला.

**तुषारपायनमुष्णशोषणं चाऽऽ सप्तरात्रादिति धान्यबीजानाम्, त्रिरात्रं पञ्चरात्रं वा कोशीधान्यानाम्, मधुघृतसूकरवसाभिः शकृद्युक्ताभिः काण्डबीजानां छेदलेपः, मधुघृतेन कन्दानाम् । अस्थिबीजानां शकृदालेपः । शाखिनां गर्तदाहो गोस्थिशकृद्भिः काले दौहृदं च ॥**

बीजसंस्कारमाह— तुषारेत्यादि । तुषारपायनं रात्रौ तुषारे निवेशनम् उष्णशोषणम् आतपे दिवा निवेशनं च आ सप्तरात्रात् सप्तरात्रमभिव्याप्य, कर्तव्यमिति शेषः । इति एष प्रकारः, धान्यबीजानाम् । त्रिरात्रं पञ्चरात्रं वा कोशीधान्यानां मुद्गमाषादीनां तुषारपायनमुष्णशोषणं च । मधुघृतसूकरवसाभिः शकृद्युक्ताभिः माध्वीकसर्पिर्वराहकायस्नेहैर्गोमययुक्तैः काण्डबीजानाम् इक्षुप्रभृतीनां छेदलेपः छिन्नप्रदेशलेपनम् । मधुघृतेन कन्दानां सूरणादीनां छेदलेपः । अस्थिबीजानां कार्पासादिबीजानां शकृदालेपः । शाखिनाम् आम्रपनसादिवृक्षाणां गर्तदाहः तन्निवेशगर्ते तृणादिदहनं गोस्थिशकृद्भिः गवास्थिपुरीषैः काले दौहृदं च पुष्पफलप्रसवार्हवयःप्राप्तौ दोहलं च, कर्तव्यमिति शेषः । श्रीमूला.

**प्ररूढांश्चाशुष्ककटुमत्स्यांश्च स्नुहिक्षीरेण पाययेत् ॥**

कृमिकीटाद्युपघातप्रतीकारमाह— प्ररूढांश्चेति । प्ररूढांश्च अङ्कुरितत्रिपत्रितमात्रांश्च पूर्वोक्तान् शाखिपर्यन्तान् अशुष्ककटुमत्स्यान् स्नुहिक्षीरेण पाययेत् आर्द्रक्षुद्रमत्स्यैः समन्तदुग्धाख्यौषधिक्षीरयुक्तैः सेचयेत् । चः समुच्चये । श्रीमूला.

**कार्पाससारं निर्मोकं सर्पस्य च समाहरेत् ।**
**न सर्पास्तत्र तिष्ठन्ति धूमो यत्रैष तिष्ठति ॥**

सर्पप्रतीकारं श्लोकेनाऽऽह— कार्पासेत्यादि । कार्पाससारं कार्पासबीजस्य सारं सर्पस्य निर्मोकं च कञ्चुकं च समाहरेत् संमेल्य धूपयेत् । एषः धूमः मिलितोभयधूपनजनितो धूमः यत्र तिष्ठति तत्र सर्पाः न तिष्ठन्ति । श्रीमूला.

**सर्वबीजानां तु प्रथमवापे सुवर्णोदकसंप्लुतां पूर्वमुष्टिं वापयेदमुं च मन्त्रं ब्रूयात्— प्रजापतये काश्यपाय देवाय नमः सदा । सीता मे ऋध्यतां देवी बीजेषु च धनेषु च ॥**

प्रथमवापे विशेषमाह— सर्वबीजानामिति । तुशब्दो विशेषे । सर्वबीजानां प्रथमवापे सुवर्णोदकसंप्लुतां स्वर्णयुक्तजलकृतसंप्लवां पूर्वमुष्टिं प्रथमां बीजमुष्टिं वापयेत् । अमुं वक्ष्यमाणं च मन्त्रं मन्त्रश्लोकं ब्रूयात् वापयन्नुच्चारयेत् । प्रजापतय इत्यादि । देवाय पर्जन्याय । ऋध्यतां वर्धताम् । ऋध्यतेरात्मनेपदमार्षम् । *आद्ययोः श्लोकपादयोर्विसंधानमपि मन्त्रत्वकृतम् । ' प्रजापतेः काश्यपाय देवलाय नमः सदा ' इति भाषापाठः । ¶तत्र तु 'नमः'

---

* ' काश्यपाय ' इत्येकस्य पदस्य प्रथमद्वितीयपादयोर्विभक्तत्वमत्र विसंधानपदेनाभिप्रेतं स्यात् । ' मे ऋध्यताम् ' इति तृतीयपादगतं विसंधानमपि मन्त्रत्वकृतमिति बोध्यम् ।

¶ अत्रेदं विचारणीयम्— ' अनव्ययं परिकल्प्य ' इत्यत्र अनव्ययस्यैव नमःशब्दस्य परिकल्पनाया विवक्षितत्वे अव्ययनमःशब्दयोगस्यैव चतुर्थीनिमित्तत्वस्य व्याख्यात्रा वक्ष्यमाणत्वात् ' काश्यपाय, देवलाय ' इति चतुर्थी नोपपद्यते । तस्मात् अव्ययानव्ययनमःशब्दयोस्तन्त्रेणोच्चारणमिति कल्पनीयम् । किंच, नमनार्थकानव्ययनमःशब्दयोगस्य चतुर्थ्यनिमित्तत्वे प्रमाणमपि न पश्यामः । प्रत्युत ' नमांसि त आयुधायानातताय ' ( कासं. १७।११।४५ ) इत्यादौ

इत्येतदनव्ययं परिकल्प्य प्रजापतेरिति षष्ठी संबन्धे समर्थनीया, 'नमःस्वस्ति' इति सूत्रे स्वस्त्यादिसाहचर्येणाव्ययस्यैव नमःशब्दस्य ग्रहणात्। श्रीमूला.

**षण्डवाटगोपालकदासकर्मकरेभ्यो यथापुरुषपरिवापं भक्तं कुर्यात्। सपादपणिकं मासं दद्यात्। कर्मानुरूपं कारुभ्यो भक्तवेतनम्॥**

षण्डवाटपालकेभ्यो गोपालकेभ्यो दासेभ्यः कर्मकरेभ्यश्च यथापुरुषपरिवापं पुरुषपरिश्रमानुरूप्येण भक्तं भोजनं कुर्यात् कल्पयेत्। सपादपणिकं मासं पादाधिकपणयुक्तं मासजीवितं दद्यात्। कर्मानुरूपं कारुभ्यः तक्षादिभ्यः भक्तवेतनं भोजनं वेतनं च, दद्यादित्यनुकर्षः। श्रीमूला.

**प्रशीर्णं च पुष्पफलं देवकार्यार्थं व्रीहियवमाग्रयणार्थं श्रोत्रियास्तपस्विनश्चाऽऽहरेयुः। राशिमूलमुञ्छवृत्तयः॥**

प्रशीर्णं वृक्षादेः स्वयं पतितं पुष्पफलं पुष्पाणि फलानि च देवकार्यार्थं देवपूजार्थम्, व्रीहियवं स्वयं पतितान् व्रीहीन् यवांश्च आग्रयणार्थं नवसस्यार्थं श्रोत्रियाः छन्दोध्यायिनः तपस्विनः तापसाश्च आहरेयुः गृह्णीयुः। राशिमूलं खलनिवेशितधान्यराश्यन्तिकगतं कणिशादि उञ्छवृत्तयः धान्यकणादानजीविनः। आहरेयुरित्यनुषङ्गः। श्रीमूला.

**यथाकालं च सस्यादि जातं जातं प्रवेशयेत्।**
**न क्षेत्रे स्थापयेत् किंचित् पलालमपि पण्डितः॥**

अध्यायान्ते श्लोकानाह— यथाकालमिति। यथाकालं प्रवेशनार्हकालानतिक्रमेण सस्यादि जातं जातं निष्पन्नमखिलं प्रवेशयेत्। क्षेत्रे किंचित् पलालमपि न स्थापयेत् पण्डितः अर्थसंचयविधानाभिज्ञः। यदाहुः— 'यस्य विघ्नान्न कुर्वन्ति शीतमुष्णं रतिर्भयम्। समृद्धिरसमृद्धिर्वा स वै पण्डित उच्यते॥' इति। श्रीमूला.

**प्रकराणां समुच्छ्रायान् वलभीर्वा तथाविधाः।**
**न संहतानि कुर्वीत न तुच्छानि शिरांसि च॥**

प्रकराणां धान्यनिवेशस्थानानां समुच्छ्रायान् उन्नतसंनिवेशान् कुर्वीत। वलभीर्वा तथाविधाः उच्छ्रितानि कूटागाराणि वा कुर्वीत। शिरांसि च तेषां न संहतानि कुर्वीत अन्योन्योपश्लिष्टानि न कुर्वीत, न तुच्छानि रिक्तकानि न कुर्वीत, किंतु चण्डवाताद्यपहारनिषेधार्थं लोहपाषाणादिगुरुद्रव्यगर्भाणि कुर्वीत। श्रीमूला.

**खलस्य प्रकरान् कुर्यान्मण्डलान्ते समाश्रितान्।**
**अनग्निकाः सोदकाश्च खले स्युः परिकर्मिणः॥**

प्रकरान् खलस्य मण्डलान्ते— स्तम्बधान्यविश्लेषणाय यत्र बलीवर्दपङ्क्तिर्मण्डलभ्रमणं कार्यते स प्रदेशः मण्डलम्, तस्यान्ते समीपे समाश्रितान् कुर्यात्। खले परिकर्मिणः परिकर्मकारिणः अनग्निकाः धान्यदाहभयात् अग्निरहिताः सोदकाश्च यादृच्छिकाग्निदीपनप्रशमार्थं संनिहितजलाश्च स्युः। श्रीमूला.

सुराव्यवहारविधिः अपराधेषु दण्डविधिश्च

**[1]सुराध्यक्षः सुराकिण्वव्यवहारान् दुर्गे जनपदे स्कन्धावारे वा तज्जातसुराकिण्वव्यवहारिभिः कारयेदेकमुखमनेकमुखं वा विक्रयक्रयवशेन वा। षट्छतमत्ययमन्यत्र कर्तृक्रेतृविक्रेतॄणां स्थापयेत्।**

---

चतुर्थीदर्शनात् तादृशनमःशब्दयोगस्यापि चतुर्थीनिमित्तत्वमवगम्यत इति षष्ठीं समर्थयितुमनव्ययत्वकल्पनाऽपि न श्लिष्यते। अपिच, 'नमःस्वस्ति०' इति सूत्रेऽव्ययस्यैव नमःशब्दस्य ग्रहणे स्वस्त्यादिसाहचर्यस्य हेतुत्वमपि न संगच्छते, स्वस्तिस्वाहास्वधाशब्दानामव्ययानव्ययोभयरूपत्वात्, चतुर्थीनिमित्तयोगप्रतियोगिनोर्देवपित्रुद्देश्यकत्यागार्थकस्वाहास्वधाशब्दयोरव्ययत्वाव्यभिचारेऽपि स्वस्तिशब्दव्यवहितयोस्तयोः साहचर्याभावात्, स्वस्तिशब्दयोगस्याव्ययानव्ययस्वस्तिशब्दसाधारणस्य चतुर्थीनिमित्तत्वस्य 'स्वस्तिर्मानुषेभ्यः' (मैसं. ४।१३।१०) इत्यादौ दर्शनात्, अलमित्यस्य पर्याप्त्यर्थग्रहणत्वेन प्रभुसमर्थादिनामयोगस्यापि चतुर्थीनिमित्तत्वेन प्रकृतसूत्रविहितचतुर्थीनिमित्तयोगप्रतियोगित्वस्याव्ययत्वव्यभिचाराच्च।

(१) कौ. २।२५.

**ग्रामादनिर्णयनमसंपातं च सुरायाः, प्रमादभयात् कर्मसु निर्दिष्टानाम्, मर्यादातिक्रमभयादार्याणाम्, उत्साहभयाच्च तीक्ष्णानाम् ॥**

'सुराध्यक्षः' इति सूत्रम्। सुरा गौडी माध्वी पैष्टी इत्येवं त्रिविधा, तस्याः अध्यक्षः तत्संधानाद्यधिकृतः, स इहोच्यते इति सूत्रार्थः। समाहर्तृप्रत्यवेक्षणीये दुर्गे सुरा निर्दिष्टा। तदध्यक्षस्तद्व्यापारो वाऽनभिहित इदानीमभिधीयते।

सुराध्यक्ष इत्यादि। सः सुराकिण्वव्यवहारान् सुरातद्बीजसंबद्धान् तत्संधानविक्रयादिव्यवहारान् तज्जातसुराकिण्वव्यवहारिभिः तत्कर्मकुलोत्पन्ननिपुणतद्व्यवहारिभिः कारयेत्। कथमित्याह– एकमुखम् एकस्थानकम्, अनेकमुखं वा अनेकस्थानकं वा, विक्रयक्रयवशेन वा क्रयविक्रयप्रियाप्रियत्वानुरोधेन वा। षट्छतमत्ययं षट्छतपणात्मकं दण्डम् अन्यत्र कर्तृक्रेतृविक्रेतृणां व्यवस्थितस्थानेतरस्थानेषु संधानक्रयविक्रयकारिणां स्थापयेत्। ग्रामादिति। सुराया मद्यस्य उपलक्षणया तत्पानमदवतां च ग्रामात् अनिर्णयनं बहिरनिःसरणम् असंपातम् अगमनं च गृहात् गृहान्तरे जनाकीर्णे वा, स्थापयेदित्यनुषङ्गः। तत्र कारणमाह– प्रमादभयात् कर्मसु निर्दिष्टानां तत्तत्कर्मनियुक्तानामध्यक्षादीनां स्वकर्मसु अवधानभङ्गभयात्, मर्यादातिक्रमभयात् आर्याणां साधूनां स्वधर्मातिलङ्घनभयात्, उत्साहभयाच्च तीक्ष्णानां शूराणामस्थानशस्त्रप्रयोगभयाच्च।

श्रीमूला.

**लक्षितमल्पं वा चतुर्भागमर्धकुडुबं कुडुबमर्धप्रस्थं प्रस्थं वेति ज्ञातशौचा निर्हरेयुः ॥**

निर्णयनाभ्यनुज्ञानपक्षमाह– लक्षितमिति। वाशब्दः पक्षान्तरे। लक्षितम् अभिज्ञानमुद्राचिह्नितम् अल्पम् अल्पपरिमाणम्। अल्पत्वस्यैव व्याख्यानं चतुर्भागमित्यादिना। चतुर्भागं पादकुडुबम्, अर्धकुडुबम्, कुडुबम्, अर्धप्रस्थम्, प्रस्थं वा परमावधिपरिमाणम् इति एवंप्रकारं सुरापरिमाणं ज्ञातशौचाः प्रतीतवृत्ताव्यभिचाराः निर्हरेयुः निर्णयेयुः।

श्रीमूला.

**पानागारेषु वा पिबेयुरसंचारिणः ॥**

सामान्यविधिमाह– पानागारेष्वित्यादि। वेति वाक्यपूरणे। असंचारिणः मदकालवर्जितसंपाताः।

श्रीमूला.

**निक्षेपोपनिधिप्रयोगापहृतादीनामनिष्टोपगतानां च द्रव्याणां ज्ञानार्थमस्वामिकं कुप्यं हिरण्यं चोपलभ्य निक्षेप्तारमन्यत्र व्यपदेशेन ग्राहयेत्। अतिव्ययकर्तारमनायतिव्ययं च ॥**

एवं गर्ह्योऽपि सुराव्यवहारश्चोरसाहसिकाद्युपलम्भसाधनत्वान्महाफल इत्यभिप्रायेणाऽऽह– निक्षेपेत्यादि। निक्षेपः भाण्डघटनाय दत्तम्, उपनिधिः न्यासः, प्रयोगः आधिः, अपहृतं चोरितम्। आदिशब्दात् याचितकादि गृह्यते। एषां निक्षेपादीनाम् अनिष्टोपगतानां साहसहृतानां च द्रव्याणां ज्ञानार्थं तत्त्वावगमार्थम् अस्वामिकम् अविदितस्वामिकं कुप्यं खड्गादिकं हिरण्यं च मद्यपायिना पानायाऽऽहितम् उपलभ्य निक्षेप्तारं कुप्यहिरण्याधातारं पुरुषम् अन्यत्र पानागारादन्यस्मिन् प्रदेशे व्यपदेशेन वाक्पारुष्यादिच्छलेन ग्राहयेत् नगराध्यक्षेण। पानागारे एव तद्ग्रहणे व्यपदेशाकरणे च अन्ये चोरादयः पानशौण्डाः यथोक्तकुप्यादिकमविश्वासात् तत्र नाऽऽनयेयुरित्यत उक्तम् 'अन्यत्र' इति 'व्यपदेशेन' इति च। अतिव्ययकर्तारम् आयाधिकव्ययकारिणम् अनायतिव्ययम् आयतिं विना व्ययकारिणं च, ग्राहयेदित्यनुषङ्गः।

श्रीमूला.

**न चानर्घेण कालिकां वा सुरां दद्यादन्यत्र दुष्टसुरायाः। तामन्यत्र विक्रापयेत्। दासकर्मकरेभ्यो वा वेतनं दद्यात्। वाहनप्रतिपानं सूकरपोषणं वा दद्यात् ॥**

अनर्घेण अल्पेन मूल्येन कालिकां वा सवृद्धिकमूल्यदानकालावधिमतीं वा, कालान्तरदेयमूल्येन वेति यावत्, सुरां न च दद्यात् क्रेतृभ्यः अन्यत्र दुष्टसुरायाः दुष्टसुराव्यतिरेकेण। दुष्टसुरामपि प्रशस्तसुराविक्रयस्थानादन्यत्र नीत्वा धारणकक्रेतृभ्यो दापयेदित्याह– तामन्यत्र विक्रापयेदिति। दासेत्यादि। दासकर्मकरेभ्यो वा वेतनं

दद्यात् वेतनस्थाने दुष्टसुरां दद्यात् । तच्च वेतनं क्षुद्रकर्मविषयमित्यभिप्रायेणाऽऽह— वाहनेत्यादि । वाहनप्रतिपानम् उष्ट्रबलीवर्दादिप्रतिपालनविषयं सूकरपोषणं वा वराहपोषणविषयं वा दद्यात् । अर्थात् वेतनम् । वाहनप्रतिपानमित्यस्य उष्ट्रादिव्यापारणभृतिनिष्क्रयार्थां सुरामिति वाऽर्थः सुवचः । श्रीमूला.

**पानागाराण्यनेककक्ष्याणि विभक्तशयनासनवन्ति पानोद्देशानि गन्धमाल्योदकवन्ति ऋतुसुखानि कारयेत् ॥**

पानोद्देशानि पानयोग्योत्कृष्टप्रदेशोपेतानि । ऋतुसुखानि ऋतुषु सर्वेषु सुखानि तत्तदुचितभोग्यवस्तुसमृद्धतया सुखकराणि । शेषं सुगमम् । श्रीमूला.

**तत्रस्थाः प्रकृत्यौत्पत्तिकौ व्ययौ गूढा विद्युरागन्तूंश्च ॥**

तत्रस्थाः पानागारस्थाः प्रकृत्यौत्पत्तिकौ— प्रकृतिसिद्धः प्रकृतिः नित्यः, अपूर्वोपजनः उत्पत्तिः, तत्सिद्धः औत्पत्तिकः, तथाविधौ व्ययौ मद्यपायिनां गूढाः पानागारकर्मकरादिव्यञ्जनाः विद्युः । आगन्तून् विदेशागतांश्च पातॄन् विद्युः । श्रीमूला.

**क्रेतॄणां मत्तसुप्तानामलङ्काराच्छादनहिरण्यानि च विद्युः । तन्नाशे वणिजस्तच्च तावच्च दण्डं दद्युः ॥**

मद्यपायिनां मत्तसुप्तानामलंकाराच्छादनहिरण्यानि च देहगतानि विद्युः, गूढा इत्येव । तन्नाशे तेषामलंकारादीनां चोरादिनाऽपहारे वणिजः मद्यविक्रयिणः, तच्च तावच्च दण्डं नष्टसदृशरूपपरिमाणं ( च ) दण्डं दद्युः । श्रीमूला.

**वणिजस्तु संवृतेषु कक्ष्याविभागेषु स्वदासीभिः पेशलरूपाभिरागन्तूनां वास्तव्यानां चाऽऽर्यरूपाणां मत्तसुप्तानां भावं विद्युः ॥**

वणिग्विषयं प्रस्तावान्तरमाह— वणिजस्त्विति । मद्यविक्रयिणः संवृतेषु विविक्तेषु कक्ष्याविभागेषु स्वदासीभिः आप्तप्रेष्याभिः पेशलरूपाभिः रुचिराकृतिभिः आगन्तूनां विदेशागतानां वास्तव्यानां च स्वदेशगतानां च आर्यरूपाणाम् आर्यवत् प्रतिभासमानानां मत्तसुप्तानां भावं विद्युः अभिप्रायं गृह्णीयुः चोरत्वपरप्रयुक्तत्वादिपरीक्षार्थम् । श्रीमूला.

**मेदकप्रसन्नासवारिष्टमैरेयमधूनाम् ॥**

मेदकादियोगविधिं प्रतिजानीते— मेदकेत्यादि । मेदकादीनां षण्णाम् । योगविधिरुच्यते इति शेषः । श्रीमूला.

**उदकद्रोणं तण्डुलानामर्धाढकं त्रयः प्रस्थाः किण्वस्येति मेदकयोगः ॥**

मेदकयोगमाह— उदकद्रोणमित्यादि । द्रोणपरिमितं जलम्, अर्धाढकपरिमितास्तण्डुलाः, त्रिप्रस्थपरिमितं मद्यबीजमित्यनेन मिश्रणप्रकारेण मेदकयोगो भवति । श्रीमूला.

**द्वादशाढकं पिष्टस्य पञ्च प्रस्थाः किण्वस्य पुत्रकत्वक्फलयुक्तो वा जातिसंभारः प्रसन्नायोगः ॥**

प्रसन्नायोगमाह— द्वादशाढकमित्यादि । पुत्रकत्वक्फलयुक्तः कामरूपजनपदप्रसिद्धपुत्रकाख्यवृक्षविशेषत्वक्फलसहितः जातिसंभारः 'पाठालोध्र' इत्यादिना अनुपदं वक्ष्यमाणः पाठादिप्रयोगः । शेषं सुगमम् । पूर्वत्र तण्डुलोक्तदिशा जलप्रमाणमप्यत्र पिष्टाष्टगुणमूहनीयम् । श्रीमूला.

**कपित्थतुला फाणितं पञ्चतौलिकं प्रस्थो मधुन इत्यासवयोगः । पादाधिको ज्येष्ठः पादहीनः कनिष्ठः ॥**

आसवयोगमाह— कपित्थेत्यादि । कपित्थतुला शतपलः कपित्थफलसारः, फाणितं पञ्चतौलिकं तुलापञ्चकपरिमाणम्, मधुनः प्रस्थः प्रस्थपरिमाणं माध्वीकम् इत्येवंप्रकार आसवयोगः । एष एव *कपित्थादिप्रमाण-

* कपित्थादीत्यादिपदेन फाणितमधुनोरपि ग्रहणात्कपित्थादीनां त्रयाणामपि पादाधिक्यं पादन्यूनत्वं च संपन्नम् । तथा च मिश्रणराशिपरिमाणमेव भिद्येत, परस्परसापेक्षपरिमाणभेदाभावात् ज्येष्ठत्वकनिष्ठत्वप्रयोजकौ गुणोत्कर्षापकर्षौ न

चतुर्भागाधिको ज्येष्ठः, तच्चतुर्भागन्यूनस्तु कनिष्ठ इत्युच्यते इत्याह— पादाधिक इत्यादि। अर्थात् पूर्वोक्तो मध्यमः। श्रीमूला.

**चिकित्सकप्रमाणाः प्रत्येकशो विकाराणामरिष्टाः॥**

तत्तद्रोगाणां यथास्वं चिकित्सोपयोगिनः अत एव भिषगुपदिष्टयोज्यद्रव्यप्रमाणाः अरिष्टयोगाः इत्याह— चिकित्सकप्रमाणा इत्यादि। विकाराणां वातादिविकाररूपाणां रोगाणाम्। अरिष्टाः अभयारिष्टादयो वैद्यप्रसिद्धाः।

श्रीमूला.

**मेषशृङ्गीत्वक्क्वाथाभिषुतो गुलप्रतीवापः पिप्पलीमरिचसंभारस्त्रिफलायुक्तो वा मैरेयः। गुलयुक्तानां वा सर्वेषां त्रिफलासंभारः॥**

मैरेयमाह— मेषशृङ्गीत्यादि। मेषशृङ्गीत्वक्क्वाथाभिषुतः मेषशृङ्गीसंज्ञकवृक्षत्वक्कषायसंहितः, गुलप्रतीवापः गुलोपचारयुक्तः, पिप्पलीमरिचसंभारः पिप्पलीमरिचचूर्णमिश्रः, त्रिफलायुक्तो वा त्रिफलाचूर्णयुक्तो वा मैरेयः। वाशब्दः संभारविकल्पने। गुलप्रतिवापिनां मद्यानां सर्वेषामपि त्रिफलासंभारः साधारण इति कंचित् पक्षमाह— गुलयुक्तानामित्यादि। श्रीमूला.

**मृद्वीकारसो मधु। तस्य स्वदेशो व्याख्यानं कापिशायनं हारहूरकमिति॥**

मधुविधिमाह— मृद्वीकारस इति। द्राक्षारसः पक्वद्राक्षाफलरसः मधु भवति। तस्य मधुनः स्वदेशो व्याख्यानं स्वोत्पत्तिदेशसंबन्धनिमित्तकं विविधम् अर्थात् द्विविधम् आख्यानं संज्ञा कापिशायनमिति हारहूरकमिति च। कपिशेति नदी तत्तीरगतं नगरं च, तत्र भवं कापिशायनम्। हरहूरं तदेव नगरम्, तत्र भवं हारहूरकम्। द्व्याख्यानमिति टीकाभाष्ययोः स्वरसप्रतीते पाठे आख्यानद्वयमित्यर्थः। क्लीबत्वं त्रिभुवनवत्। श्रीमूला.

**माषकलनीद्रोणमामं सिद्धं वा त्रिभागाधिकतण्डुलं मोरटादीनां कार्षिकभागयुक्तं किण्वाबन्धः॥**

किण्वविधिमाह— माषकलनीत्यादि। माषकलनीद्रोणं माषकल्कभावितमुदकद्रोणम् आमं सिद्धं वा अक्वथितं क्वथितं वा त्रिभागाधिकतण्डुलं त्रिभागाधिकद्रोणपरिमाणतण्डुलपिष्टयुक्तं मोरटादीनां वक्ष्यमाणानां कार्षिकभागयुक्तं प्रत्येकपादपलभागयुक्तं किण्वाबन्धः किण्वयोगः।

श्रीमूला.

**पाठालोध्रतेजोवत्येलावालुकमधुकमधुरसाप्रियङ्गुदारुहरिद्रामरिचपिप्पलीनां च पञ्चकर्षिकः संभारयोगो मेदकस्य प्रसन्नायाश्च। मधुकनिर्यूहयुक्ता कटशर्करा वर्णप्रसादनी च॥**

मेदकप्रसन्नयोः संभारयोगमाह— पाठालोध्रेत्यादि। पाठा अम्बष्ठाख्या। लोध्रः तिरीटकल्कः। तेजोवती इभपिप्पली। एला प्रसिद्धा। वालुकं हरिवालुकम्। मधुकं मधुयष्टिः। मधुरसा दूर्वा। प्रियङ्गु कुङ्कुमम्। दारुहरिद्रा दार्वीसंज्ञा। 'दारु' इति भिन्नं वा पदम्। तच्च पीतदारुसंज्ञम्। हरिद्रा तु प्रसिद्धा। मरिचं कोलम्। पिप्पली प्रसिद्धा। पाठादीनां पञ्चकर्षिकः प्रत्येकं चूर्णपञ्चकर्षप्रमाणः संभारयोगः मेदकस्य प्रसन्नायाश्च। मधुकनिर्यूहयुक्ता यष्टिमधुककषाययुक्ता कटशर्करा गङ्गेष्टिः वर्णप्रसादनी च मेदकप्रसन्नयोर्वर्णप्रसादहेतुश्च। श्रीमूला.

**चोचचित्रकविलङ्गजपिप्पलीनां च कार्षिकः क्रमुकमधुकमुस्तालोध्राणां द्विकार्षिकश्चाऽऽसवसंभारः। दशभागश्चैषां बीजबन्धः॥**

आसवसंभारमाह— चोचेत्यादि। चोचं त्वचसंज्ञम्, चित्रकः अग्निसंज्ञः, विलङ्गम् अमोघा, गजपिप्पली प्रसिद्धा, एतासां चतसृणां च कार्षिकः प्रत्येकं कर्ष-

---

स्यातामिति नेदं व्याख्यानमुपपद्यते। 'कपित्थादीनामन्यतमस्याऽऽधिक्यं न्यूनत्वं वा, अन्यतमान्तरे तूक्तप्रमाणे' इति व्याख्यातुरभिप्रायश्चेत् सोऽपि न संतोषकरः। एवं च सति ज्येष्ठकनिष्ठयोः प्रत्येकं त्रिप्रकारत्वं संपद्येतेति तदनुक्तिमूले महती न्यूनता स्यात्। महाराष्ट्रभाषाव्याख्याने तु मधुन एवाऽऽधिक्यन्यूनत्वयोरुक्तेर्नोक्ताऽनुपपत्तिः, किंतु मधुन एवाऽऽधिक्यन्यूनत्वे ग्राह्ये, न कपित्थस्य न वा फाणितस्येत्यत्र प्रमाणं मृग्यम्।

प्रमाणः । टीकाभाष्ययोरनुमिते 'षट्कार्षिकः' इति पाठे सार्धपलप्रमाण इत्यर्थः । क्रमुकमधुकमुस्तालोध्राणाम्— क्रमुकः घोण्टा, मधुकं श्यामकङ्गुः, मुस्ता कुरुविन्दः, लोध्रः तिरीटः, एतेषां द्विकार्षिकश्च कर्षद्वयप्रमाणश्च आसवसंभारः । दशभागश्चैषां चोचादीनां दशभागः बीजबन्धः आसवकरणद्रव्येषु योज्यः । श्रीमूला.

**प्रसन्नायोगः श्वेतसुरायाः ॥**

प्रसन्नाया योगो य उक्तः स एव श्वेतसुराया अपि योगो भवति । किंतु स संभाररहितः समकिण्वाबन्धश्चेत्याह स्वामी । संभारबीजबन्धावुभावपि नेत्याह भाषा । श्रीमूला.

**सहकारसुरा, रसोत्तरा, बीजोत्तरा वा महासुरा, संभारिकी वा ॥**

अथ सुराभेदाः— सहकारसुरेति । सुरैव सहकारतैलयुक्ता सहकारसुरा, गुडप्रतिवापयुक्ता सुरा रसोत्तराख्या या शीधु इत्युच्यते, बीजोत्तरा बीजद्रव्यमात्राधिका महासुरा । संभारमात्राधिका सुरा संभारिकी । श्रीमूला.

**तासां मोरटापलाशपत्तूरमेषशृङ्गीकरञ्जक्षीरवृक्षकषायभावितं दग्धकटशर्कराचूर्णं लोध्रचित्रकविलङ्गपाठामुस्ताकलिङ्गयवदारुहरिद्रेन्दीवरशतपुष्पापामार्गसप्तपर्णनिम्बास्फोतकल्कार्धयुक्तमन्तर्नखो मुष्टिः कुम्भीं राजपेयां प्रसादयति । फाणितः पञ्चपलिकश्चात्र रसवृद्धिर्देयः ॥**

सुराप्रसादनविधिमाह— तासामिति । तासां सर्वासां सुराणां मोरटादिषट्ककषायभावितम्— मोरटा मूलपुष्पिकाख्यो वल्लीभेदः, पलाशः किंशुकः, पत्तूरः लोहमारकः, मेषशृङ्गी विषाणी, करञ्जः नक्तमालः, क्षीरवृक्षः वटादिः, एतेषां निर्यूहेन भावितं दग्धकटशर्कराचूर्णं लोध्रादिकल्कार्धयुक्तम्— कलिङ्गयवः देशविशेषभवो यवः, शतपुष्पा सितच्छत्राख्या, अपामार्गः खरमञ्जरी, आस्फोतः ब्रह्मवृक्षः, शेषं प्रसिद्धम्, एषां लोध्रादीनां कल्कस्य अर्धेन कटशर्कराचूर्णार्धप्रमाणेन युक्तम् अन्तर्नखो मुष्टिः अदृश्यनखमुष्टिमेयम्, प्रक्षितमिति शेषः, कुम्भीं खारीमितां सुरां राजपेयां प्रसादयति राजपानयोग्या यथा भवेत् तथा स्वच्छां करोति । फाणितः, पञ्चपलिकश्च पलपञ्चकप्रमाणश्च अत्र प्रसादितसुरायां रसवृद्धिर्देयः रसवृद्धिप्रयोजनः क्षेप्तव्यः । श्रीमूला.

**कुटुम्बिनः कृत्येषु श्वेतसुरामौषधार्थं वाऽरिष्टमन्यद्वा कर्तुं लभेरन् ॥**

कुटुम्बिनः पौरजानपदाः कृत्येषु विवाहादिकार्येषु श्वेतसुराम् औषधार्थं वाऽरिष्टम् औषधार्थं भिषगुपदिष्टमरिष्टं वा अन्यद्वा मेदकादि वा कर्तुं संधातुं लभेरन् । श्रीमूला.

**उत्सवसमाजयात्रासु चतुरहः सौरिको देयः। तेष्वननुज्ञातानां प्रहवणान्तं दैवसिकमत्ययं गृह्णीयात् ॥**

उत्सवसमाजयात्रासु वसन्ताद्युत्सवेषु बन्धुजनमेलनेषु इष्टदेवतापूजासु च चतुरहः सौरिको देयः चत्वारो दिवसाः *सुरापानार्थाः अनुज्ञातव्याः सुराध्यक्षेण । तेषु उत्सवादिषु अननुज्ञातानाम् अनुज्ञां विनैव पिबतां प्रहवणान्तम्— प्रहवणं तुष्टिभोजनम्, तेनोत्सवादिसमाप्तिकालो लक्ष्यते, तदवधिकमित्यर्थः, दैवसिकमत्ययं गृह्णीयात् प्रात्यहिकं दण्डं गृह्णीयात् सुराध्यक्षः । अननुज्ञातपानजनितमददिवसेषु कर्महानिनिमित्तं दण्डं कर्मकरेभ्यो गृह्णीयादिति केचित् व्याचक्षते । श्रीमूला.

---

* राजानुज्ञयैव सुरापानं कर्तव्यमिति विधिरस्मिन्प्रकरणे नास्ति । अध्यायारम्भे सुरानिर्माणदेशनियमेऽपि सुरा निर्माणार्थं राजानुज्ञालम्भनस्याऽऽवश्यकत्वं यद्यपि नोक्तं तथाऽपि पूर्ववाक्ये 'कर्तुं लभेरन्' इत्यनेन सामान्यतो निर्माणार्थं पूर्वोक्तदेशातिरिक्तदेशे निर्माणार्थं वा राजानुज्ञाया आवश्यकत्वं प्रतीयते । अतः 'सुरापानार्थाः' इति व्याख्यानं चिन्त्यम् । अत एव 'अननुज्ञातानाम्' इति पदमपि 'अनुज्ञां विनैव निर्मातॄणाम्' इत्येव व्याख्यातुमुचितम् । 'अनुज्ञातानाम्' इति पाठे अत्ययशब्दः शुल्कपरो ग्राह्यः । अत्रात्ययप्रमाणं मूले नोक्तं व्याख्यात्राऽपि न व्याख्यातमिति सुधीभिरेव शोधनीयम् ।

**सुराकिण्वविचयं स्त्रियो बालाश्च कुर्युः ॥**

सुराकिण्वविचयं सुरायाः विचयं श्रपणादिरूपं कर्म किण्वस्य विचयं शोषणादिरूपं च स्त्रियो बालाश्च कुर्युः तद्रसानभिज्ञाः । श्रीमूला.

**अराजपण्याः पञ्चकं शतं शुल्कं दद्युः सुरका-मेदकारिष्टमधुफलाम्लाम्लशीधूनां च ॥**

स्वोत्पादितमद्यविक्रयिणः शुल्कं राजभागं दद्युः । कथं दद्युः ? पञ्चकं शतम् । इतिशब्द इहाध्याहर्तव्यः । पञ्चकं शतमिति पञ्च शुल्कोऽस्मिञ्छते दीयत इत्यनेन क्रमेण दद्युरित्यर्थः । केषां पण्यानामित्याकाङ्क्षायामाह— सुरके-त्यादि । तत्र सुरैव सुरका । मेदकारिष्टमधूनि प्रतीतानि । फलाम्ला तालनालिकेरादिमद्यम् । अम्लशीधु उदक्षु प्रतीतमिति स्वामी । चकारः किण्वादिग्रहणार्थः ।

श्रीमूला.

**अहृश्च विक्रयं व्याजीं ज्ञात्वा मानहिरण्ययोः ।**
**तथा वैधरणं कुर्यादुचितं चानुवर्तयेत् ॥**

उक्तशुल्कातिरेकेण व्याज्या अपि करणमध्यायान्त-श्लोकेनाऽऽह— अहृश्चेति । अहृश्च विक्रयं दिनकृतं विक्रयं तथा वैधरणं मानावश्यंभाविनं पण्यच्छेदं च ज्ञात्वा इयत्तया निर्धार्य मानहिरण्ययोर्व्याजीं षोडशभाग-रूपां मानव्याजीं विंशतिभागरूपां हिरण्यव्याजीं च कुर्यात् कल्पयेत् सुराध्यक्षः । करणं च न यथाकामं भवति, किंतु समुदाचारसिद्धमेवानुसर्तव्यमित्याह— उचितं चानुवर्तयेदिति । श्रीमूला.

मांसविक्रयनियमाः अभयवनवासिनां प्राणिनां दत्ता-भयप्राणिनां च हिंसायां दण्डविधिश्च

**[1]सूनाध्यक्षः प्रदिष्टाभयानामभयवनवासिनां च मृगपशुपक्षिमत्स्यानां बन्धवधहिंसायामुत्तमं दण्डं कारयेत् । कुटुम्बिनामभयवनपरिग्रहेषु मध्यमम् ॥**

'सूनाध्यक्षः' इति सूत्रम् । सूना भक्ष्यप्राणिवध-स्थानम्, तदध्यक्षव्यापारोऽभिधीयते इति सूत्रार्थः । उत्तममध्यमाधमेषु कर्मसु तदनुरूपा अध्यक्षाः कार्या इत्युक्तमधस्तात् । तत्र समाहर्तृसंनिधातृप्रभृतय उत्तमाः पौतवाध्यक्षादयो मध्यमाश्चाभिहिताः । इदानीमधम-कर्माध्यक्षा अभिधीयन्ते इति संबन्धः ।

तदाह— सूनाध्यक्ष इति । सूनाध्यक्षः प्रदिष्टाभयानां प्रख्यापिताहिंसानाम् अभयवनवासिनां च ब्रह्मसोमारण्य-सर्वातिथिमृगवनादिवासिनां च मृगपशुपक्षिमत्स्यानाम्— मृगाणां कुरङ्गादीनां पशूनां खड्गमहिषादीनां पक्षिणां मयूरादीनां मत्स्यानां च । बन्धवधहिंसायां बन्धनप्रहार-मारणेषु उत्तमम् उत्तमसाहसं दण्डं कारयेत् । कुटुम्बिनाम् अभयवनपरिग्रहेषु अभयवनवासिमृगादिविषये वधादौ मध्यमं साहसं कारयेत् । श्रीमूला.

**अप्रवृत्तवधानां मत्स्यपक्षिणां बन्धवधहिंसायां पादोनसप्तविंशतिपणमत्ययं कुर्यात्, मृगपशूनां द्विगुणम् ॥**

अप्रवृत्तवधानाम्— चिरानुष्ठीयमानवधाः प्रवृत्तवधाः, तथा न भवन्तीत्यप्रवृत्तवधाः, तेषां मत्स्यपक्षिणां बन्ध-वधहिंसायां पादोनसप्तविंशतिपणम् अत्ययं दण्डं कुर्यात् । मृगपशूनां तथाविधानां द्विगुणम् अर्धोनचतुष्पञ्चाशत्पणं दण्डं कुर्यात् । श्रीमूला.

**प्रवृत्तहिंसानामपरिगृहीतानां षड्भागं गृह्णी-यात् । मत्स्यपक्षिणां दशभागं वाऽधिकम्, मृग-पशूनां शुल्कं वाऽधिकम् ॥**

प्रवृत्तहिंसानाम् अपरिगृहीतानाम् अस्वामिकारक्षित-वनगतानां वधादौ षड्भागं गृह्णीयात् । मत्स्यपक्षिणां दशभागं वाऽधिकं दशमांशं ततोऽधिकं वा गृह्णीयात् । मृगपशूनां शुल्कं वाऽधिकं राजादेयं मृगपशुमूल्यस्य दशभागं ततोऽधिकं वा गृह्णीयात् । श्रीमूला.

**पक्षिमृगाणां जीवत्षड्भागमभयवनेषु प्रमुञ्चेत् ॥**

पक्षिमृगाणां वनगृहीतानां जीवत्षड्भागं जीवतां षड्-भागम् अभयवनेषु प्रमुञ्चेत् । श्रीमूला.

**सामुद्रहस्त्यश्वपुरुषवृषगर्दभाकृतयो मत्स्याः सारसा नादेयास्तटाककुल्योद्भवा वा, क्रौञ्चो-त्क्रोशकदात्यूहहंसचक्रवाकजीवंजीवकभृङ्गराज-**

---

(१) कौ. २।२६.

**चकोरमत्तकोकिलमयूरशुकमदनशारिका विहारपक्षिणो मङ्गल्याश्चान्येऽपि प्राणिनः पक्षिमृगा हिंसाबाधेभ्यो रक्ष्याः । रक्षातिक्रमे पूर्वः साहसदण्डः ॥**

रक्ष्यप्राणिन आह— सामुद्रेत्यादि । सामुद्राः समुद्रभवाः हस्त्यश्वाद्याकृतयश्चेति विग्रहः, तथाभूताः मत्स्याः जलचरविशेषाः, तथा सारसाः सरश्चराः नादेयाः नदीचराः तटाककुल्योद्भवा वा तटाकभवाः कुल्याभवाश्च मत्स्याः, तथा क्रौञ्चोत्क्रोशकादयस्त्रयोदश पक्षिणः । तत्र क्रौञ्चः कुङ्नामा, उत्क्रोशकः कुररः, दात्यूहः कालकण्ठकः, जीवंजीवकः पक्षिभेदः, भृङ्गराजः धूम्याटः, चकोरः चन्द्रिकाप्रियः, मदनशारिके पक्षिजातिभेदौ । शेषाः प्रसिद्धाः । विहारपक्षिणः क्रीडार्थाः कुक्कुटादयः, मङ्गल्याश्चान्येऽपि प्राणिनः पक्षिमृगाः मङ्गलार्थाश्च गरुडभरद्वाजादय इतरेऽपि प्राणिनः पक्षिणो मृगाश्च हिंसाबाधेभ्यः मारणपीडनेभ्यः, रक्ष्याः । रक्षातिक्रमे तद्रक्षणानास्थायां पूर्वः साहसदण्डः सूनाध्यक्षस्य ।

श्रीमूला.

**मृगपशूनामनस्थि मांसं सद्योहतं विक्रीणीरन् । अस्थिमतः प्रतिपातं दद्युः । तुलाहीने हीनाष्टगुणम् ॥**

मांसविक्रयविधिमाह— मृगेत्यादि । मृगपशूनाम् अनस्थि अस्थिविनाकृतं मांसं सद्योहतं अयातयामम् अभिनवं विक्रीणीरन् । अस्थिमतः अस्थियुक्तस्य मांसस्य प्रतिपातं दद्युः— पातः हानिः, तत्प्रतिनिधिः प्रतिपातः हीनप्रतीकारः, तं दद्युः । अस्थियोगहापितमांसमात्राप्रतिपूरणार्थमधिकमांसमात्रां दद्युरित्यर्थः । तुलाहीने हीनाष्टगुणम् । तुलोन्मानच्छद्मनिमित्तहानियोगिनि मांसे हीनमांसादष्टगुणं मांसं दद्युः । तत्र चाष्टगुणेऽष्टभाग एव हापितपूरणार्थः क्रेतुः, अवशिष्टास्तु अष्टभागाः सप्त सूनाध्यक्षस्येत्याह स्वामी ।

श्रीमूला.

**वत्सो वृषो धेनुश्चैषामवध्याः । घ्नतः पञ्चाशत्को दण्डः । क्लिष्टघातं घातयतश्च ॥**

वत्सः स्तनंधयः, वृषः रेतःसेचनक्षमः, धेनुश्च प्रसवधर्मिणी गौश्च एषां मृगपशूनाम् अनुज्ञातवधानामपि मध्ये अवध्याः । घ्नतः वत्सादिमारयितुः पञ्चाशत्कः पञ्चाशत्पणिकः दण्डः । क्लिष्टघातं घातयतश्च विचित्रव्यथोत्पादनदारुणो वधो यथा भवेत् तथा वधं कारयतश्च उक्त एव दण्डः ।

श्रीमूला.

**परिसूनमशिरःपादास्थि विगन्धं स्वयंमृतं च न विक्रीणीरन् । अन्यथा द्वादशपणो दण्डः ॥**

अविक्रेयमांसान्याह— परिसूनमिति । परिसूनम्—सूना मांसपरिनिष्पादनस्थानम्, तत् परिवर्जितं यस्य तत् तथाभूतम्, अर्थात् सूनातिरिक्तस्थलनिहतप्राणिदेहोद्धृतं मांसम्, तथा अशिरःपादास्थि शिरःपादास्थिशून्यं वनहतखादितावशिष्टमृगाङ्गसंबन्धि मांसम्, तथा विगन्धं दुर्गन्धि मांसम्, स्वयंमृतं च रोगमृतमांसं च न विक्रीणीरम् । अन्यथा परिसूनादिविक्रये द्वादशपणो दण्डः ।

श्रीमूला.

**दुष्टाः पशुमृगव्याला मत्स्याश्चाभयचारिणः ।**
**अन्यत्र गुप्तिस्थानेभ्यो वधबन्धमवाप्नुयुः ॥**

अध्यायप्रान्ते श्लोकमाह— दुष्टा इति । अभयचारिणः अभयवनेषु रक्ष्यमाणाः दुष्टाः हिंस्राः पशुमृगव्यालाः पशवः गवयादयः मृगाः शुनकादयः व्यालाः व्याघ्रादयश्च, मत्स्याश्च शिंशुमारादयः गुप्तिस्थानेभ्योऽन्यत्र अभयवनेभ्योऽन्यस्मिन् स्थाने, समागताः इति शेषः, वधबन्धम् अवाप्नुयुः । स एषोऽभयवनस्थपशुमृगादिवधस्य प्राक्प्रतिषिद्धस्य प्रतिप्रसवः ।

श्रीमूला.

गणिकादीनां व्यवहारविधिः अपराधेषु दण्डविधिश्च

**'गणिकाध्यक्षो गणिकान्वयामगणिकान्वयां वा रूपयौवनशिल्पसंपन्नां सहस्रेण गणिकां कारयेत् । कुटुम्बार्धेन प्रतिगणिकाम् ॥**

'गणिकाध्यक्षः' इति सूत्रम् । गणिकाः रूपाजीवाः, तासामध्यक्षः अर्थात् तद्व्यापारः उच्यते इति सूत्रार्थः । 'रूपाजीवाः स्नान( प्रघर्ष )शुद्धशरीराः परिवर्तितवस्त्रा-

(१) कौ. २।२७.

लंकाराः * पश्येत्' (कौ. १।२०) इत्युक्तम्। तदध्यक्षस्त्वनुक्त इदानीमभिधीयते।

गणिकाध्यक्ष इति। स गणिकान्वयां गणिकावंशभवाम् अगणिकान्वयां वा। वाशब्देन गणिकात्वं प्रति वंशस्याप्रयोजकत्वे सूचिते गणिकात्वप्रयोजकं धर्ममाह— रूपयौवनशिल्पसंपन्नां सौन्दर्यतरुणिमकलाकौशलशालिनीं स्त्रियं सहस्रेण गणिकां कारयेत् नवकुटुम्बस्थापनार्थरूप्यसहस्रदानेन गणिकास्थाने स्थापयेत् वक्ष्यमाणनियोगानुष्ठानाय। अयमेकगणिकास्थापनपक्षः। अनेकगणिकास्थापनपक्षमाह— कुटुम्बार्धेनेति। कुटुम्बं गणिकाकुटुम्बकर्म राजपरिचर्यालक्षणम्, तस्यार्धेन अर्धमेकमनयाऽनुष्ठेयमपरमन्ययेत्यर्धशो विभजनेन, अथवा कुटुम्बस्थापनार्थदेयद्रव्यं कुटुम्बम्, तस्यार्धेन अर्धशो दानेन प्रतिगणिकां द्वितीयामपि कारयेत्। § कुटुम्बार्धोक्त्या पूर्वोक्तस्य सहस्रस्याप्यर्धशो विभज्य दानं गणिकाप्रतिगणिकयोरुक्तप्रायम्। श्रीमूला.

**निष्पतिताप्रेतयोर्दुहिता भगिनी वा कुटुम्बं भरेत। तन्माता वा प्रतिगणिकां स्थापयेत्। तासामभावे राजा हरेत्॥**

निष्पतिताप्रेतयोः प्रोषिताप्रमीतयोर्गणिकयोः दुहिता भगिनी वा कुटुम्बं गणिकातन्त्रं भरेत वहेत। अर्थात् तद्धनं च हरेत। तन्माता वा प्रतिगणिकां स्थापयेत्। दुहितृभगिन्योरभावे तन्मातैव तत्स्थाने अन्यामादिश्य तत्कार्यं कारयेत्। तासां दुहितृभगिनीप्रतिगणिकामातॄणाम् अभावे राजा हरेत् गणिकाधनम्। श्रीमूला.

**सौभाग्यालंकारवृद्ध्या सहस्रेण वारं कनिष्ठं मध्यममुत्तमं वाऽऽरोपयेत्। छत्रभृङ्गारव्यजनशिबिकापीठिकारथेषु च विशेषार्थम्॥**

सौभाग्यालङ्कारवृद्ध्यानुगुण्येन सहस्रेण उपदापणसहस्रग्रहणेन वारं नियोगं कनिष्ठम् अधमं मध्यमम् उत्तमं वा आरोपयेत् दद्यात्। तत्र कनिष्ठस्य सहस्रग्रहणे मध्यमस्य द्विसहस्रग्रहणम् उत्तमस्य त्रिसहस्रग्रहणमिति बोद्धव्यम्। किमर्थं कनिष्ठादिमारोपयेदित्यत्राऽऽह— छत्रभृङ्गारव्यजनशिबिकापीठिकारथेषु च विशेषार्थमिति। छत्रादिग्रहणादिकर्मसु अनुष्ठानप्रतिनियमार्थम्। यद्वा तेषु यथायोगमनुष्ठीयमानेषु शोभोत्कर्षार्थम्। तत्र छत्रादिषु षट्सु मध्ये प्रथमद्विकं नियोगस्य कनिष्ठस्य, द्वितीयद्विकं मध्यमस्य, तृतीयद्विकमुत्तमस्येति क्रमः औचित्यादवसेयः। श्रीमूला.

**सौभाग्यभङ्गे मातृकां कुर्यात्॥**

रूपयौवनापगमे वार्धकनिमित्ते मातृकां कुर्यात् तावत्कालभुक्तां मातृस्थानीयां कुर्यात्, अर्थात् भोग्यगणिकायाः। श्रीमूला.

**निष्क्रयश्चतुर्विंशतिसाहस्रो गणिकायाः। द्वादशसाहस्रो गणिकापुत्रस्य। अष्टवर्षात् प्रभृति राज्ञः कुशीलवकर्म कुर्यात्॥**

गणिकात्वनिर्मोक्षविधिमाह— निष्क्रय इति। निष्क्रयः राजदास्यनिर्मोक्षमूल्यं चतुर्विंशतिसाहस्रः चतुर्विंशतिसहस्रपणः गणिकायाः। द्वादशसाहस्रः द्वादशसहस्रपणः निष्क्रयः गणिकापुत्रस्य। निष्क्रयाभावे त्वाह— अष्टवर्षादिति। अष्टवर्षात् प्रभृति राज्ञः कुशीलवकर्म चारणकर्म कुर्यात् गणिकापुत्रः। श्रीमूला.

**गणिकादासी भग्नभोगा कोष्ठागारे महानसे वा कर्म कुर्यात्। अविशन्ती सपादपणमवरुद्धा मासवेतनं दद्यात्॥**

गणिकायाः परिचारिका भग्नभोगा भोगार्हवयोतिक्रान्ता कोष्ठागारे महानसे वा कर्म व्रीह्यवघातादिकं पाकपात्रमार्जनादिकं वा कुर्यात्। अविशन्ती कर्माकुर्वती सपादपणं मासवेतनं दद्यात् गणिकायै। का दद्यात्? अवरुद्धा पुरुषेण केनचित् गृहे अवरुध्याऽऽत्मैकभोग्यतां नीता गणिकादासी। श्रीमूला.

**भोगं दायमायं व्ययमायतिं च गणिकाया निबन्धयेत्। अतिव्ययकर्म च वारयेत्॥**

---

* इदमाश्चर्यम्— 'पश्येयुः' इति सर्वेषु पुस्तकेषु मूलपाठः। 'रूपाजीवाः कर्त्र्यो राजानं पश्येयुः' इति स्वयमेव व्याख्यात्रा पूर्वं व्याख्यातम्। अत्र तु एकवचनेनानुवादात् कर्तृत्वकर्मत्वविपर्ययात्मको महान् तात्पर्यभेदः कृतः।

§ कुटुम्बार्धेनेत्यस्य यः प्रथमोऽर्थस्तत्रेदं बोध्यम्।

भोगं भोक्तृपुरुषदत्तं धनम्, दायं मातृक्रमागतं धनम्, आयं भोगातिरिक्तलाभम्, व्ययम्, आयतिं च प्रभावं च गणिकायाः निबन्धयेत् पुस्तके लेखयेत् गणिकाध्यक्षः। अतिव्ययकर्म च वारयेत् प्रतिषेधयेत्।

श्रीमूला.

**मातृहस्तादन्यत्राऽऽभरणन्यासे सपादचतुष्पणो दण्डः। स्वापतेयं विक्रयमाधानं नयन्त्याः सपादपञ्चाशत्पणो दण्डः॥**

मातृहस्तादन्यत्र प्रियविटादिहस्ते आभरणन्यासे आभरणानां रक्षार्थे अर्पणे सपादचतुष्पणो दण्डः गणिकायाः। स्वापतेयं स्वं वस्त्रभाजनादि विक्रयम् आधानं वा नयन्त्याः सपादपञ्चाशत्पणो दण्डः। श्रीमूला.

**चतुर्विंशतिपणो वाक्पारुष्ये। द्विगुणो दण्डपारुष्ये। सपादपञ्चाशत्पणः पणोऽर्धपणश्च कर्णच्छेदने॥**

चतुर्विंशतिपणः तावन्मानो दण्डः वाक्पारुष्ये वाचा पराक्रोशे। द्विगुणः अष्टचत्वारिंशत्पणः दण्डपारुष्ये करपादलगुडताडनादौ। सपादपञ्चाशत्पणः पणोऽर्धपणश्च सार्धपण इत्यर्थः, कर्णच्छेदने दण्डः। तत्राऽऽद्यो राज्ञे देयः, द्वितीयस्तु गणिकाध्यक्षाय। त एते गणिकादण्डाः।

श्रीमूला.

**अकामायाः कुमार्या वा साहसे उत्तमो दण्डः। सकामायाः पूर्वः साहसदण्डः॥**

अथ तत्कामुकपुरुषदण्डमाह— अकामाया इति। अकामायाः इच्छारहितायाः कुमार्याः। वाशब्दः प्रस्तावान्तरद्योतनार्थः। साहसे बलात्करणे उत्तमो दण्डः उत्तमसाहसः। सकामायाः इच्छन्त्याः कुमार्याः साहसे पूर्वः साहसदण्डः। श्रीमूला.

**गणिकामकामां रुन्धतो निष्पातयतो वा व्रणविदारणेन वा रूपमुपघ्नतः सहस्रदण्डः। स्थानविशेषेण वा दण्डवृद्धिरा निष्क्रयद्विगुणात्॥**

गणिकाम् अकामां रुन्धतः स्वगृहे अवरुध्य वासयतः निष्पातयतो वा निष्पतनं निर्मोक्षणं कारयतो वा व्रणविदारणेन वा रूपम् उपघ्नतः व्रणहेतुना दन्तनखादिक्षतेन रूपं विकारयतो वा सहस्रदण्डः। स्थानेत्यादि। स्थानविशेषेण वा शरीरगततत्तत्स्थानविशेषानुरूप्येण वा दण्डवृद्धिः उक्तस्य सहस्रदण्डस्य वृद्धिः गुणनिका कल्पनीया। आ कुतः एषा वृद्धिकल्पनेत्याह— आ निष्क्रयद्विगुणात्। निष्क्रयश्चतुर्विंशतिसाहस्रो य उक्तस्तस्य द्विगुणं अष्टाचत्वारिंशत्साहस्रमभिव्याप्य। तदुपरि शरीरावयवोपघातनिमित्ता दण्डवृद्धिर्नास्तीत्यर्थः। स्वामी तु 'स्थानविशेषेण वा' इति प्रतीकमुपादाय व्याचष्टे— 'उत्तमादिवारप्राधान्येन दण्डवृद्धिः कल्पनीया। आ कुतः इत्याह— आ निष्क्रयद्विगुणादिति। निष्क्रयः चतुर्विंशतिसाहस्रः, तद्द्विगुणः अष्टाचत्वारिंशत्साहस्रः' इति। आ निष्क्रयद्विगुणादित्येतदनन्तरं 'पणसहस्रं वा दण्डः' इति वाक्यम् अर्थशास्त्रादर्शेषु पठ्यते। तत्तु स्वामिटीकाभाषयोरननुसंहितत्वात् पूर्वोत्तरग्रन्थानाकाङ्क्षितत्वाच्च प्रक्षिप्तं मन्यमानैर्न व्याख्यातमस्माभिः।

श्रीमूला.

**प्राप्ताधिकारां गणिकां घातयतो निष्क्रयत्रिगुणो दण्डः। मातृकादुहितृकारूपदासीनां घात उत्तमः साहसदण्डः॥**

लब्धच्छत्रभृङ्गारादिनियोगां गणिकां घातयतः निष्क्रयत्रिगुणः द्वासप्ततिसाहस्रपणो दण्डः। मातृकादुहितृकारूपदासीनां घाते कुट्टन्याः कुमार्याः प्रतिकर्मदास्या वा ताडने उत्तमः साहसदण्डः। श्रीमूला.

**सर्वत्र प्रथमेऽपराधे प्रथमः, द्वितीये द्विगुणः। तृतीये त्रिगुणः, चतुर्थे यथाकामी स्यात्॥**

सर्वस्मिन् प्रथमेऽपराधे यो यः उक्तस्तस्मिंस्तस्मिन्निदं प्रथमकृतेऽपराधे प्रथमः यो य उक्तो दण्डः स स प्रथम इत्यर्थः। द्वितीये तस्मिंस्तस्मिन्नपराधे पुनरारब्धे द्विगुणः, स स दण्डः कार्य इति शेषः। तृतीये त्रिगुणः। चतुर्थेऽपराधे यथाकामी स्यात् चतुर्गुणसर्वस्वहरणप्रवासनादिरूपं दण्डं स्वेच्छानुरोधेन विदध्यादित्यर्थः।

श्रीमूला.

**राजाज्ञया पुरुषमनभिगच्छन्ती गणिका शिफासहस्रं लभेत। पञ्चसहस्रं वा दण्डः॥**

राजाज्ञानुरोधेन पुरुषमनभिगच्छन्ती गणिका शिफासहस्रं कशाघातसहस्रं दण्डं लभेत । पञ्चसहस्रं वा दण्डः शिफासहस्राभावपक्षे पञ्चसहस्रपणात्मको दण्डः । श्रीमूला.

**भोगं गृहीत्वा द्विषत्या भोगद्विगुणो दण्डः । वसतिभोगापहारे भोगमष्टगुणं दद्यादन्यत्र व्याधिपुरुषदोषेभ्यः ॥**

भोगं संभोगवेतनं गृहीत्वा द्विषत्याः भोगदं पुरुषमरोचयमानायाः भोगद्विगुणो दण्डः । वसतीत्यादि । वसतिभोगापहारे वसतिभोगस्य रात्रिसंभोगस्य अपहारे कथादिव्याजेन कालयापने भोगं संभोगवेतनं गृहीतमष्टगुणं दद्यात् । तत्रापवादः— अन्यत्र व्याधिपुरुषदोषेभ्य इति । व्याधयः कुष्ठादयः , पुरुषदोषाः अरागत्वादयः , तद्व्यतिरेकेण । श्रीमूला.

**पुरुषं घ्नत्याश्चिताप्रतापोऽप्सु प्रवेशनं वा ॥**

पुरुषं घ्नत्याः मारयन्त्याः चिताप्रतापः तेनैव सह चितायामारोप्य दहनम् अप्सु प्रवेशनं वा गलमहाशिलाबन्धेन जलनिमज्जनं वा कर्तव्यम् । श्रीमूला.

**गणिकाभरणमर्थं भोगं वाऽपहरतोऽष्टगुणो दण्डः । गणिका भोगमायतिं पुरुषं च निवेदयेत् ॥**

गणिकाया आभरणम् अर्थं तदन्यत् वा वस्तु भोगं वा संभोगवेतनं वा अपहरतः अष्टगुणः अपहृतद्रव्याष्टगुणः दण्डः । गणिकेति । सा भोगम् आयतिं तन्मूलमायं पुरुषं च कृतवासं निवेदयेत् । श्रीमूला.

**एतेन नटनर्तकगायकवादकवाग्जीवनकुशीलवप्लवकसौभिकचारणस्त्रीव्यवहारिणां स्त्रियो गूढाजीवाश्च व्याख्याताः ॥**

उक्तेन गणिकाकल्पेन नटादीनां दशानां स्त्रियः गूढाजीवाश्च प्रच्छन्नव्यभिचारजीविन्यश्च व्याख्याताः उक्ताः । ते एते गणिकाविधय एव यथासंभवमासु योजनीया इत्यर्थः । तत्र नटाः अर्थाभिनयजीविनः । नर्तकाः गात्रविक्षेपमात्रकारिणः । गायकाः कण्ठगायिनः । वादकाः वैणिकादयः । वाग्जीवनाः कथकाः । कुशीलवाः नर्तकीप्रधानाः । प्लवकाः रज्ज्वारोहकाः । 'सौभिकाः ऐन्द्रजालिकाः , छायाग्राहका इत्यपरे ' इति स्वामी । चारणाः विटमल्लादयः । स्त्रीव्यवहारिणः बन्धकीकुटुम्बिनः । ' चारणानां स्त्रीव्यवहारिणाम् ' इति व्यस्तपाठोऽपि । श्रीमूला.

**तेषां तूर्यमागन्तुकं पञ्चपणं प्रेक्षावेतनं दद्यात् ॥**

तेषां तूर्यं नटनर्तकादिमेलकम् आगन्तुकं विदेशादागतं पञ्चपणं प्रेक्षावेतनं स्वकलाप्रकाशनार्थं वेतनं दद्यात् राज्ञे । श्रीमूला.

**रूपाजीवा भोगद्वयगुणं मासं दद्युः ॥**

गणिकाः भोगद्वयगुणं दिवसद्वयलाभं मासं मासदेयं दद्युः । श्रीमूला.

**गीतवाद्यपाठ्यनृत्तनाट्याक्षरचित्रवीणावेणुमृदङ्गपरचित्तज्ञानगन्धमाल्यसंयूहनसंपादनसंवाहनवैशिककलाज्ञानानि गणिका दासी रङ्गोपजीविनीश्च ग्राहयतो राजमण्डलादाजीवं कुर्यात् ॥**

गीतादीनां कलान्तानां षोडशानां ज्ञानानि गणिकाः पूर्वोक्ताः , दासीरङ्गोपजीविनीश्च— दासीः गणिकातिरिक्तवेश्याः रङ्गोपजीविनीः नटादिस्त्रियश्च ग्राहयतः शिक्षयतः आचार्यस्य राजमण्डलात् राज्ञो यन्मण्डलं नगरग्रामादिसमूहोत्थमायजातं तत्सकाशात् आजीवं वृत्तिं कुर्यात् कल्पयेत् राजा । तत्र गीतवाद्ये प्रसिद्धे । पाठ्यम् आख्यायिकादि । नृत्तं पदार्थाभिनयः । नाट्यं वाक्यार्थाभिनयः । अक्षरं लिपिः । चित्रम् आलेख्यकर्म । वीणा वेणुर्मृदङ्गश्च प्रसिद्धाः । परचित्तज्ञानं परेङ्गिताकारवेदनम् । गन्धमाल्यसंयूहनसंपादने— गन्धसंयूहनं गन्धयुक्तिः , माल्यसंपादनं माल्यगुम्फनम् । संवाहनम् अङ्गमर्दनम् । वैशिकं दत्तकाचार्यादितन्त्रम् । कलाः उक्तातिरिक्ताश्चतुष्षष्ट्यन्तर्गताः कलाविद्याः । श्रीमूला.

**गणिकापुत्रान् रङ्गोपजीविनश्च मुख्यान् निष्पादयेयुः सर्वतालावचराणां च ॥**

गणिकापुत्रान् रङ्गोपजीविनश्च मुख्यान् निष्पादयेयुः प्रधानान् आचार्यादिस्थानीयान् कुर्युः । केषाम् ? सर्वतालावचराणां च सर्वेषामपि रङ्गोपजीविनाम् । श्रीमूला.

**संज्ञाभाषान्तरज्ञाश्च स्त्रियस्तेषामनात्मसु ।**
**चारघातप्रमादार्थं प्रयोज्या बन्धुवाहनाः ॥**

प्रान्ते श्लोकमाह— संज्ञेत्यादि । संज्ञाभाषान्तरज्ञाः सङ्केतविशेषज्ञाः भाषाविशेषज्ञाश्च तेषां तालावचराणां स्त्रियः अनात्मसु अजितेन्द्रियेषु दूष्येषु चारघातप्रमादार्थं चाराणां परप्रयुक्तगूढपुरुषाणां घातार्थं रहोविस्रम्भवधार्थं प्रमादार्थं च विषयासक्तिजननेन स्वकर्तव्योपेक्षोत्पादनार्थं च प्रयोज्याः विधेयीकृत्य प्रयोक्तव्याः राज्ञा । विधेयत्वार्थमाह— बन्धुवाहना इति । बन्धुभिः अर्थदानवशीकृतैः वाह्यमानाः यथाराजादेशं नीयमानाः । श्रीमूला.

नौयानव्यवहारविधिः तत्संबद्धदण्डविधिश्च

**[1]नावध्यक्षः समुद्रसंयाननदीमुखतरप्रचारान् देवसरोविसरोनदीतरांश्च स्थानीयादिष्ववेक्षेत ॥**

'नावध्यक्षः' इति सूत्रम् । नावां यानपात्राणाम् अध्यक्षः आदेयभागाधिकृतः इत्यर्थः । समाहर्तृकर्मणि आत्मरक्षितके च नावोऽभिहिताः । तदध्यक्षस्त्वनुक्तः इहाभिधीयते ।

नावध्यक्ष इति । सः समुद्रसंयाननदीमुखतरप्रचारान् समुद्रकूलसमीपयानस्य नदीसमुद्रसंगमतरणस्य च मार्गान् । देवसरोविसरोनदीतरांश्च— देवसरः सदाजलसमृद्धं महासरः, विसरः शोष्यसरः, नदी प्रसिद्धा, एषां तरणमार्गांश्च स्थानीयादिषु स्थानीयद्रोणमुखखार्वटिकसंग्रहग्रामेषु अवेक्षेत । श्रीमूला.

**तद्वेलाकूलग्रामाः क्लृप्तं दद्युः ॥**

तद्वेलाकूलग्रामाः समुद्रतटमहासरःप्रभृतितीरवर्तिग्रामवासिनः क्लृप्तं कल्पितं किमपि तरणार्थं राजादेयं दद्युः नौव्यापारसततोपयोगात् । तदभावात् नान्ये जानपदास्तत् दद्युः । श्रीमूला.

**मत्स्यबन्धका नौकाभाटकं षड्भागं दद्युः । पत्तनानुवृत्तं शुल्कभागं वणिजो दद्युः । यात्रावेतनं राजनौभिः संपतन्तः । शङ्खमुक्ताग्राहिणो नौभाटकं दद्युः, स्वनौभिर्वा तरेयुः ॥**

मत्स्यबन्धकाः दाशाः नौकाभाटकं राजकीयाया नौकाया अवक्रयं षड्भागं मत्स्यषष्ठभागं दद्युः । पत्तनानुवृत्तं पण्यपत्तनसिद्धं शुल्कभागं शुल्कार्थं भागं पण्यमूल्यस्य पञ्चमभागं षष्ठभागं वा वणिजः दद्युः । शुल्काध्यक्षग्राह्य एवायं शुल्कभागः इहोक्तः तदतिरिक्तप्रार्थना नावध्यक्षेण मा कारीत्येतदर्थम् । यात्रावेतनं राजनौभिः संपतन्तः गतागतं कुर्वन्तः दद्युर्यथाप्रसिद्धम् । शङ्खमुक्ताग्राहिणः नौभाटकं दद्युः, विशेषाकथनात् उक्तमत्स्यबन्धकवत् षड्भागम् । स्वनौभिर्वा तरेयुः । एषां स्वनौतरणाभ्यनुज्ञानान्मत्स्यबन्धानां स्वनौतरणप्रतिषेधो गम्यते । 'नौहाटकम्' इत्यपपाठः । 'नौविभागकम्' इति तु व्याख्यापाठः । श्रीमूला.

**अध्यक्षश्चैषां खन्यध्यक्षेण व्याख्यातः ॥**

नावध्यक्षश्च एषां शङ्खादीनां विषये खन्यध्यक्षेण व्याख्यातः । खन्यध्यक्षवत् भाटकलब्धशङ्खादीनां कर्मान्तान् पण्यव्यवहारं च नावध्यक्षः कारयेदित्यर्थः । श्रीमूला.

**पत्तनाध्यक्षनिबन्धं पण्यपत्तनचारित्रं नावध्यक्षः पालयेत् ॥**

पत्तनाध्यक्षनिबन्धं पत्तनाध्यक्षप्रतिष्ठापितं पण्यपत्तनचारित्रं पण्यपत्तनाचारं नावध्यक्षः पालयेत् नातिवर्तेत । श्रीमूला.

**मूढवाताहतां तां पितेवानुगृह्णीयात् । उदकप्राप्तं पण्यमशुल्कमर्धशुल्कं वा कुर्यात् ॥**

मूढां दिङ्मोहापयातां वाताहतां विपरीतवाताकुलितां च तां नावं पितेव अनुगृह्णीयात् तारयेत् । उदकप्राप्तं जलदूषितं पण्यम् अशुल्कम् अर्धशुल्कं वा कुर्यात् तच्छेदानुरूप्येण । श्रीमूला.

**यथानिर्दिष्टाश्चैताः पण्यपत्तनयात्राकालेषु प्रेषयेत् । संयान्तीर्नावः क्षेत्रानुगताः शुल्कं याचेत । हिंस्रिका निर्घातयेत्, अमित्रविषयातिगाः पण्यपत्तनचारित्रोपघातिकाश्च ॥**

अशुल्काः अर्धशुल्का वा एता नावः पण्यपत्तनयात्राकालेषु प्रेषयेत् असङ्गं विसृजेत् । संयान्तीः गच्छन्तीः

---

(१) कौ. २।२८.

नावः क्षेत्रानुगताः शुल्कस्थानगताः शुल्कं याचेत । इह शुल्कस्य याचनं न वक्तव्यं सिद्धत्वात्, तदिहोच्यते शुल्कतोऽधिकं मा याचीत्युपदेशार्थम्। हिंस्रिकाः हिंस्राः चोरादयः, तद्वतीः नावः निर्घातयेत् । अमित्रविषयातिगाः शत्रुदेशयायिनीः पण्यपत्तनचारित्रोपघातिकाश्च नावः निर्घातयेत् । श्रीमूला.

**शासकनियामकदात्ररश्मिग्राहकोत्सेचकाधिष्ठिताश्च महानावो हेमन्तग्रीष्मतार्यासु महानदीषु प्रयोजयेत्। क्षुद्रिकाः क्षुद्रिकासु वर्षास्राविणीषु ॥**

शासकादिपञ्चकाधिष्ठिताश्च— शासकः निर्देष्टा, नियामकः पोतवाहः, दात्रग्राहकः लवित्रग्राही, रश्मिग्राहकः प्रग्रहग्राही, उत्सेचकः प्रविशज्जलापनेता, एतैरपायप्रतिविधायिभिरध्यासिताश्च महानावः हेमन्तग्रीष्मतार्यासु अवर्षाकालेऽपि नौतरणीयासु महानदीषु सिन्धुसरयूप्रभृतिषु प्रयोजयेत् । क्षुद्रिकाः क्षुद्रनावः क्षुद्रिकासु वर्षास्राविणीषु वर्षाकालमात्रतरणीयजलासु कुनदीषु, प्रयोजयेदिति वर्तते । श्रीमूला.

**बद्धतीर्थाश्चैता कार्याः राजद्विष्टकारिणां तरणभयात् ॥**

बद्धतीर्थाश्च बद्धाः संयताः सनियन्त्रणाः, कृतारक्षा इति यावत्, तीर्थाः अवताराः यासां तास्तथाभूताः एताः नावः कार्याः । कुतः ? राजद्विष्टकारिणां शत्रुप्रयुक्ततीक्ष्णरसदादीनां तरणभयात् । श्रीमूला.

**अकालेऽतीर्थे च तरतः पूर्वः साहसदण्डः। काले तीर्थे चानिसृष्टतारिणः पादोनसप्तविंशतिपणस्तरात्ययः ॥**

नियन्त्रणविधिमाह— अकाल इति । अकाले निशीथादौ अतीर्थे अघट्टे च तरतः पूर्वः साहसदण्डः। काले तीर्थे च अनिसृष्टतारिणः अननुज्ञातस्य तरतः पादोनसप्तविंशतिपणः तरात्ययः तरणदण्डः । श्रीमूला.

**कैवर्तकाष्ठतृणभारपुष्पफलवाटषण्डगोपालकानामनत्ययः संभाव्यदूतानुपातिनां च सेनाभाण्डचारप्रयोगाणां च । स्वतरणैस्तरताम्, बीजभक्तद्रव्योपस्करांश्चानूपग्रामाणां तारयताम् ॥**

तरणदण्डापवादमाह— कैवर्तेत्यादि । कैवर्तादीनाम्— कैवर्तानां धीवराणाम्, काष्ठवाहिनाम्, तृणवाहिनाम्, पुष्पवाटपालकानाम्, फलवाटपालकानाम्, षण्डपालकानाम्, गोपालकानां च अनत्ययः अदण्डः । संभाव्यदूतानुपातिनां च संभाव्यम् अनुपतनीयतया शङ्कितं चोरादिमनुपततां दूतं राजदूतं कार्यशेषार्थमनुपततां च । अनत्ययः इत्यनुषज्यते । सेनाभाण्डचारप्रयोगाणां च सेनोपकरणगूढपुरुषप्रयोगाणां च अनत्ययः । स्वतरणैः स्वकीयैस्तरणसाधनैः बाहुलाबूभस्त्रादिभिः तरताम्, बीजभक्तद्रव्योपस्करांश्च— बीजं वापार्थम्, भक्तं कर्मकराशनम्, द्रव्यं पुष्पफलशाकादि, उपस्करः वेशवारः इत्येतांश्च आनूपग्रामाणां जलप्रचुरदेशसंनिविष्टग्रामवासिनां तारयताम् अनत्ययः । श्रीमूला.

**ब्राह्मणप्रव्रजितबालवृद्धव्याधितशासनहरगर्भिण्यो नावध्यक्षमुद्राभिस्तरेयुः ॥**

आतराप्रदानेन नावध्यक्षमुद्रामात्रं गृहीत्वा ये तरणार्हा जनास्तानाह— ब्राह्मणेत्यादि । सुगमम् । श्रीमूला.

**कृतप्रवेशाः पारविषयिकाः सार्थप्रमाणा वा विशेयुः ॥**

कृतप्रवेशाः अभ्यनुज्ञातप्रवेशाः पारविषयिकाः परदेशागताः सार्थप्रमाणा वा अननुज्ञातप्रवेशत्वेऽपि अनुज्ञातसार्थाधिष्ठातृका वा विशेयुः नृपस्य देशम् ।

श्रीमूला.

**परस्य भार्यां कन्यां वित्तं वाऽपहरन्तं शङ्कितमाविग्नमुद्भाण्डीकृतं महाभाण्डेन मूर्ध्नि भारेणावच्छादयन्तं सद्योगृहीतलिङ्गिनमलिङ्गिनं वा प्रव्रजितमलक्ष्यव्याधितं भयविकारिणं गूढसारभाण्डशासनशस्त्राग्नियोगं विषहस्तं दीर्घपथिकममुद्रं चोपग्राहयेत् ॥**

परस्य भार्यां कन्यां वित्तं वा अपहरन्तम् उपग्राहयेत् शङ्कितत्वादिलिङ्गैर्वक्ष्यमाणैरनुमाय बन्धयेत् । तत्र शङ्कितं चकितचारिणम्, आविग्नं संभ्रान्तम्, उद्भाण्डीकृतं

समधिकभाण्डभारवाहिनम्, महाभाण्डेन मूर्ध्नि भारेणावच्छादयन्तं बृहदाकृतिना पलालादिभारेण शिरसि कृतेनाऽऽवृतप्रायमुखम्, सद्योगृहीतलिङ्गिनं प्रव्रजितं तत्कालकलितपरिव्राजकचिह्नम्, अलिङ्गिनं वा प्रव्रजितं सद्यःपरित्यक्तपरिव्राजकचिह्नं वा, अलक्ष्यव्याधितं व्याधितव्यपदेशिनमदृष्टव्याधिचिह्नम्, भयविकारिणं वदनश्वेतीभावादिभयचिह्नयुक्तम्, गूढसारभाण्डशासनशस्त्राग्नियोगम्— गूढसारभाण्डं गूढरत्नादिद्रव्यम्, गूढशासनं गूढलेखम्, गूढशस्त्रं गूढायुधम्, गूढाग्नियोगं गूढोऽग्नियोगः औपनिषदवक्ष्यमाणनिष्प्रतीकाराद्यग्नियोगद्रव्यं यस्य तं तथाभूतं च, विषहस्तम्, दीर्घपथिकं दूराध्वगमनश्रान्तम्, अमुद्रम् अन्तपालमुद्रारहितं च उपग्राहयेत्। श्रीमूला.

**क्षुद्रपशुर्मनुष्यश्च सभारो माषकं दद्यात्। शिरोभारः कायभारो गवाश्वं च द्वौ। उष्ट्रमहिषं चतुरः। पञ्च लघुयानम्। षड् गोलिङ्गम्। सप्त शकटम्। पण्यभारः पादम्॥**

तरवेतनविधिमाह— क्षुद्रेत्यादि। क्षुद्रपशुः अजादिः मनुष्यश्च सभारः करगृहीतभारः माषकं दद्यात्। शिरोभारः शिरोधार्यो भारः कायभारः स्कन्धधार्यः गवाश्वं च गौश्चाश्वश्च द्वौ माषौ। दद्यादिति संबध्यते। उष्ट्रमहिषम् उष्ट्रश्च महिषश्च चतुरः माषकान् दद्यात्। पञ्च लघुयानं लघुगन्त्री पञ्च माषकान् दद्यात्। षड् गोलिङ्गं मध्यमगन्त्री षट् माषान् दद्यात्। सप्त शकटं दद्यात्। पण्यभारः पण्यानां तुलाविंशतिः पादं पणचतुर्भागं दद्यात्। श्रीमूला.

**तेन भाण्डभारो व्याख्यातः। द्विगुणो महानदीषु तरः॥**

तेन पण्यभारवेतनकथनेन भाण्डभारः महिषोष्ट्रादिवाह्यः व्याख्यातः उक्तः एकैकस्य भारस्यैकं माषकं दद्यादिति। त एते आतरा लघुनदीविषयाः। अत एवाऽऽह— द्विगुणो महानदीषु तर इति। तरः तरणवेतनम्। श्रीमूला.

**क्लृप्तमानूपग्रामा भक्तवेतनं दद्युः॥**

क्लृप्तं यत्किंचित् आनूपग्रामाः भक्तवेतनं राजभाव्यातिरिक्तं दद्युः नाविकस्य। श्रीमूला.

**प्रत्यन्तेषु तराः शुल्कमातिवाहिकं वर्तनीं च गृह्णीयुः। निर्गच्छतश्चामुद्रस्य भाण्डं हरेयुः। अतिभारेणावेलायामतीर्थे तरतश्च॥**

विषयसीमसु तराः तारकाः शुल्कम् आतिवाहिकम् अतिवाहननिमित्तं राजभाव्यं वर्तनीं च अन्तपालदेयं च गृह्णीयुः सार्थात्। निर्गच्छतश्चामुद्रस्य सार्थस्य भाण्डं हरेयुः। अतिभारेणेति। अतिभारेण पुरुषद्वयवहनीयेन भारेण युक्तस्य अवेलायाम् अकाले अतीर्थे अघट्टे तरतश्च। भाण्डं हरेयुरिति वर्तते। श्रीमूला.

**पुरुषोपकरणहीनायामसंस्कृतायां वा नावि विपन्नायां नावध्यक्षो नष्टं विनष्टं वाऽभ्यावहेत्॥**

पुरुषैः शासकनियामकादिभिः उपकरणैश्च अरिष्टसेचनादिभिः हीनायाम् असंस्कृतायां वा सीवनादिसंस्काररहितायां वा नावि विपन्नायां सत्यां नावध्यक्षः नष्टं जलप्रलीनं लवणजातीयं विनष्टं जलयोगदूषितरूपादिकं वा पण्यद्रव्यम् अभ्यावहेत् दद्यात्। श्रीमूला.

**सप्ताहवृत्तामाषाढीं कार्तिकीं चान्तरा तरः। कार्मिकप्रत्ययं दद्यान्नित्यं चाऽऽह्निकमावहेत्॥**

तरवेतनकालं श्लोकेनाऽऽह— सप्ताहेत्यादि। सप्ताहो वृत्तो यस्या ऊर्ध्वं सा सप्ताहवृत्ता, तादृशीम् आषाढीं आषाढपौर्णमासीं कार्तिकीं कार्तिकपौर्णमासीं तथाविधाम् अन्तरा आषाढबहुलसप्तम्याः कार्तिकबहुलसप्तम्याश्च मध्ये इत्यर्थः, तरः आतरः। ग्राह्य इति शेषः। निर्दिष्टस्य कालस्य वर्षात्वात् वर्षातार्यासु नदीषु। सर्वर्तुतार्यासु तु नित्यं ग्राह्यः इत्यर्थात् सिद्धम्। कार्मिकप्रत्ययम् अयमयं कर्मदिवस इति कर्मदिवसज्ञानं दद्यात् नावध्यक्षाय। नित्यं च आह्निकं दिने दिनेऽधिगतमातरम् आवहेत् दद्यात्। श्रीमूला.

गोमहिषाश्वगर्दभोष्ट्रसूकरादिपशुव्यवहारविधिः तत्संबद्ध-
दण्डविधिश्च

**'गोध्यक्षो वेतनोपग्राहिकं करप्रतिकरं भग्नोत्सृष्टकं भागानुप्रविष्टकं व्रजपर्यग्रं नष्टं विनष्टं क्षीरघृतसंजातं चोपलभेत ॥**

'गोध्यक्षः' इति सूत्रम् । गवाम् उपलक्षणया महिषादीनां गोमहिषाद्याजीवानां चाध्यक्षो गोध्यक्षः, तत्कर्माभिधीयत इत्यर्थः । स्वपक्षपरपक्षवशीकरणसाधनभूतासु वार्तापदार्थेषु कृषिपाशुपाल्यवणिज्यासु कृषिवणिज्ये सीताध्यक्षपण्याध्यक्षयोरुपपादिते । पाशुपाल्यं त्वनुक्तमिहाभिधीयत इति संगतिः ।

गोध्यक्ष इति । गोध्यक्षः वेतनोपग्राहिकादीन्यष्टौ उपलभेत अध्यक्षयेत् । श्रीमूला.

**गोपालकपिण्डारकदोहकमन्थकलुब्धकाः शतं शतं धेनूनां हिरण्यभृताः पालयेयुः । क्षीरघृतभृता हि वत्सानुपहन्युरिति वेतनोपग्राहिकम् ॥**

तानि क्रमशो व्याचष्टे— गोपालकेत्यादि । गोपालकादयः पञ्च— गोपालकः प्रसिद्धः, पिण्डारकः महिषपालः, दोहकः क्षीरदोग्धा, मन्थकः दधिमथनकर्मा, लुब्धकः व्यालभयपरिहर्ता इत्येते शतं शतं धेनूनां गवां पालयेयुः । किंवेतनास्ते ? हिरण्यभृताः हिरण्येन धनधान्यरूपेण वेतनेन भृताः पुष्टाः, न तु तदन्येन क्षीरेण घृतेन वेत्यर्थः । कुतः क्षीरघृतभृता न कर्तव्यास्तत्राऽऽह— क्षीरघृतभृता हीति । तद्वेतना हि वत्सान् स्तनंधयान् उपहन्युः क्षीरलोभनिमित्तादतिदोहनात् कर्शयेयुः । इति एतत् वेतनोपग्राहिकं वेतनोपग्राहनिमित्तत्वात् तत्संज्ञम् । श्रीमूला.

**जरद्गुधेनुगर्भिणीपष्ठौहीवत्सतरीणां समविभागं रूपशतमेकः पालयेत् । घृतस्याष्टौ वारकान् पणिकं पुच्छमङ्कचर्म च वार्षिकं दद्यादिति करप्रतिकरः ॥**

जरद्गुः जरद्गवी । गोर्ह्रस्वत्वमार्षम् । धेनुः दोग्ध्री, गर्भिणी प्रसिद्धा, पष्ठौही वृषगवेषिणी, वत्सतरी अतीतस्तनंधयभावा, इत्येतासां पञ्चानां समविभागं प्रत्येकं विंशतिक्रमेण तुल्यविभागयुक्तं रूपशतं शतात्मकं जरद्ग्व्यादिभेदमेलकम् एकः पालनवृत्तिः पालयेत् । घृतस्येति । घृतस्य अष्टौ वारकान् चतुरशीतिकुडुबान्, पणिकं पुच्छम्— पुच्छगणनया देयः करः पुच्छः, तमेकैकस्य पशोरेकैकपणात्मकम्, अङ्कचर्म च राजमुद्रायुक्तं मृतचर्म च वार्षिकं वर्षदेयं दद्यात् स्वामिने । इति करप्रतिकरः एष प्रकारः करप्रतिकरसंज्ञः । श्रीमूला.

**व्याधितान्यङ्गानन्यदोहीदुर्दोहापुत्रघ्नीनां च समविभागं रूपशतं पालयन्तस्तज्जातिकं भागं दद्युरिति भग्नोत्सृष्टकम् ॥**

व्याधितादीनां पञ्चानाम्—व्याधिता रुग्णा, न्यङ्गा अङ्गविकला, अनन्यदोही एकेनैव दोहनीया न त्वन्येन दोहनीया, दुर्दोहा पादबन्धनादिकृच्छ्रदोह्या, पुत्रघ्नी स्रवद्गर्भा म्रियमाणवत्सा च, इत्येतासां च समविभागं रूपशतं पूर्वोक्तप्रत्येकविंशतिप्रकारं पालयन्तः तज्जातिकं भागं पूर्वोक्तस्यार्धं त्रिभागं वा तदनुरूपं घृतादिराजभागं दद्युः । इति भग्नोत्सृष्टकं तदाख्यम् । श्रीमूला.

**परचक्राटवीभयादनुप्रविष्टानां पशूनां पालनधर्मेण दशभागं दद्युरिति भागानुप्रविष्टकम् ॥**

भागानुप्रविष्टकमाह— परचक्रेत्यादि । परचक्राटवीभयात् शत्रुच्छलनभयात् वनचरापहारभयाच्च अनुप्रविष्टानां राजव्रजप्रवेशितानां पशूनां पालनधर्मेण पालनस्य सवेतनत्वनियमेन दशभागं दद्युः पशुस्वामिनो राज्ञे । इत्येतत् भागानुप्रविष्टकं तदाख्यम् । श्रीमूला.

**वत्सा वत्सतरा दम्या वहिनो वृषा उक्षाणश्च पुङ्गवाः । युगवाहनशकटवहा वृषभाः सूनामहिषाः पृष्ठस्कन्धवाहिनश्च महिषाः । वत्सिका वत्सतरी पष्ठौही गर्भिणी धेनुश्चाप्रजाता वन्ध्याश्च गावो महिष्यश्च । मासद्विमासजातास्तासामुपजा वत्सा वत्सिकाश्च । मासद्विमासजातानङ्कयेत् ।**

---

(१) कौ. २।२९.

**मासद्विमासपर्युषितमङ्कयेत् । अङ्कं चिह्नं वर्णं शृङ्गान्तरं च लक्षणम्, एवमुपजा निबन्धयेदिति व्रजपर्यग्रम् ॥**

व्रजपर्यग्रमाह— वत्सा इत्यादि । वत्साः स्तनंधयाः, वत्सतराः परित्यक्तस्तनपानाः, दम्याः दमनयोग्याः, वहिनः वोढारः, वृषाः सेक्तारः, उक्षाणश्च जरद्गवाश्च, पुङ्गवाः इत्येते षड्विधाः पुमांसो गावः । युगवाहन-शकटवहाः, वृषभाः सेक्तारः, सूनामहिषाः मांसमात्रो-पयोगिनो महिषाः, पृष्ठस्कन्धवाहिनश्च महिषाः इत्येते चतुर्विधाः महिषाः । स्त्रीगवीनां महिषीणां च साधा-रणान् भेदानाह— वत्सिकेत्यादि । तत्र पष्ठौही भारवहन-समर्था । धेनुः दोग्ध्री । अप्रजाता विजननार्हवयोऽ-नधिरूढा । वन्ध्या वशा । शेषाः प्रसिद्धाः । इत्थं सप्तविधाः गावो महिष्यश्च । मासेत्यादि । मासद्विमास-जाताः मासजाताः द्विमासजाताश्च तासां गोमहिषीणां-वत्साः स्तनंधयाः वत्सिकाः स्तनंधय्यश्च उपजाः उपजा-संज्ञिताः । तासु मासद्विमासजातान् अङ्कयेत् तत्त-मुद्रया योजयेत् । भागानुप्रविष्टकादिविषयमङ्कनमाह— मासद्विमासपर्युषितमङ्कयेदिति । ज्ञातस्वामिकस्याज्ञात-स्वामिकस्य वा राजव्रजप्रविष्टस्यैकमासपरिवासे द्विमास-परिवासे वा जाते तमप्यङ्कयेत् गोऽध्यक्ष इत्यर्थः । चतु-र्विधं लक्षणमाह— अङ्कमिति । अङ्कं स्वस्तिकादिसंनिवेशं तत्तमुद्राकृतं कृत्रिमम्, चिह्नं पुच्छश्वेतिमकालिमादि सहजम्, वर्णं शुक्लकृष्णादिम्, शृङ्गान्तरं च शृङ्गगतं विशेषं च लक्षणं निबन्धयेत् पुस्तके लेखयेत् । एवम् अनेन प्रकारेण उक्तचतुर्लक्षणीयोगेन उपजाः निबन्ध-येत् । इति एतत् सप्तदशविधं व्रजपर्यग्रं तदाख्यम् ।

श्रीमूला.

**चोरहृतमन्ययूथप्रविष्टमवलीनं वा नष्टम् ॥**

त्रिविधं नष्टमाह— चोरेत्यादि । चोरहृतम् अन्ययूथ-प्रविष्टम् अवलीनं वा वने स्वयूथात् भ्रष्टं वा, नष्टं नष्टाख्यम् । श्रीमूला.

**पङ्कविषमव्याधिजरातोयाहारावसन्नं वृक्षतट-काष्ठशिलाभिहतमीशानव्यालसर्पग्राहदावाग्नि-विपन्नं विनष्टम् । प्रमादादभ्यावहेयुः ॥**

विनष्टमाह— पङ्केत्यादि । पङ्कादिभिः षड्भिः— पङ्केन कर्दममज्जनेन, विषमेण गर्तादिपतनेन, व्याधिना रोगेण, जरया वयोवृद्धतया, तोयेन महारयजलप्रवाहाकृष्टया, आहारेण इत्येतैः अवसन्नं विपन्नम्, वृक्षादिभिश्चतुर्भिः— वृक्षपातभृगुभ्रंशमहाकाष्ठपतनमहाशिलापातरूपैः अभि-हतम्, ईशानादिपञ्चकविपन्नम्— ईशानेन विद्युज्ज्योतिषा, हिंस्रमृगपन्नगनक्रवनवह्निभिश्च प्रमीतं विनष्टं तदाख्यं भवति । प्रमादादिति । पालकानवधानदोषात्, विनष्ट-मिति वर्तते, अभ्यावहेयुः दद्युः, अर्थात् पालकादयः ।

श्रीमूला.

**एवं रूपाग्रं विद्यात् ॥**

उक्तेन प्रकारेण रूपाग्रं गवादिप्रमाणं विद्यात् ।

श्रीमूला.

**स्वयं हन्ता घातयिता हर्ता हारयिता च वध्यः ॥**

स्वयमेव गवादिहननहरणकर्तुस्तत्प्रयोजयितुश्च गो-पालकस्य वधो दण्ड इत्याह— स्वयं हन्तेत्यादि ।

श्रीमूला.

**परपशूनां राजाङ्केन परिवर्तयिता रूपस्य पूर्वं साहसदण्डं दद्यात् ॥**

अराजपशूनां राजाङ्केन रूपस्य परिवर्तयिता राज-कीयाङ्कदानेन रूपभेदयिता पूर्वं साहसदण्डं दद्यात् ।

श्रीमूला.

**स्वदेशीयानां चोरहृतं प्रत्यानीय पणिकं रूपं हरेत् । परदेशीयानां मोक्षयिताऽर्धं हरेत् ॥**

स्वदेशीयानामिति । तेषां चोरहृतं प्रत्यानीय प्रत्यर्प्य पणिकं रूपं हरेत् । रूपसंख्यानग्राह्यो दण्डः इह रूप-मित्युच्यते । एकैकस्य रूपस्यैकपणप्रमाणं रूपदण्डं गृह्णी-यात् । परदेशीयानां परदेशपशूनामुपगतानां मोक्षयिता तत्स्वामी अर्धं हरेत् तन्मूल्यस्यार्धं गृह्णीयात् । अर्थात् अर्धं दण्डं दद्यात् ।

श्रीमूला.

**बालवृद्धव्याधितानां गोपालकाः प्रतिकुर्युः ॥**

बालवृद्धेत्यादि । सुगमम् । श्रीमूला.

**लुब्धकश्वगणिभिरपास्तस्तेनव्यालपरबाधभयमृतुविभक्तमरण्यं चारयेयुः ॥**

व्याधैः श्वगणपोषकैश्च अपास्तस्तेनव्यालपरबाधभयं परिहृतचोरहिंस्रमृगशत्रूपद्रवभयम्, ऋतुविभक्तं ऋतुषु विभक्तम् अस्मिन्नस्मिन् ऋताविदमिदं तृणजलादिसमृद्धतया समुचितमिति विभज्य व्यवस्थितम् अरण्यं चारयेयुः । श्रीमूला.

**सर्पव्यालत्रासनार्थं गोचरानुपातज्ञानार्थं च त्रस्नूनां घण्टातूर्यं च बध्नीयुः ॥**

सर्पव्यालत्रासनार्थं सर्पव्यालानां भयजननार्थम्, गोचरानुपातज्ञानार्थं देशममुकमनुसंचरन्ति गावः इति घण्टातूर्यशब्दतोऽनुमानार्थं च त्रस्नूनां शब्दत्रासिनां पशूनाम् अत्रासार्थपरिचेतव्यशब्दानां घण्टातूर्यं लोहघण्टारूपं तूर्यं बध्नीयुः कण्ठे । श्रीमूला.

**समव्यूढतीर्थमकर्दमग्राहमुदकमवतारयेयुः पालयेयुश्च ॥**

समव्यूढतीर्थम् अविषमविस्तीर्णायतारम् अकर्दमग्राहम् अपङ्कनक्रम् उदकम् अवतारयेयुः स्नानपानार्थम्, पालयेयुश्च यावत्स्नानपानकालमप्रमत्ताः जलजन्यभयात् रक्षेयुश्च पशुयूथम् । श्रीमूला.

**स्तेनव्यालसर्पग्राहगृहीतं व्याधिजरावसन्नं च आवेदयेयुरन्यथा रूपमूल्यं भजेरन् ॥**

चोराद्यपहृतं रोगवार्धकप्रमीतं पशुमध्यक्षाय काले निवेदयेयुः, अनिवेदने मूल्यमेकैकस्य रूपस्य दद्युरित्याह— स्तेनेत्यादि । श्रीमूला.

**कारणमृतस्याङ्कचर्म गोमहिषस्य, कर्णलक्षणमजाविकानाम्, पुच्छमङ्कचर्म चाश्वखरोष्ट्राणाम्, बालचर्मबस्तिपित्तस्नायुदन्तखुरशृङ्गास्थीनि चाऽऽहरेयुः ॥**

कारणमृतस्य व्याधिजरादिमृतस्य अङ्कचर्म अङ्कयुक्तं चर्म गोमहिषस्य आहरेयुः आहृत्य दर्शयेयुः प्रत्ययार्थम् । कर्णलक्षणं कर्णकृतं चिह्नम् अजाविकानां बस्तोरभ्राणाम् आहरेयुः । पुच्छम् अङ्कचर्म च अश्वखरोष्ट्राणाम् आहरेयुः । बालादीनि च नव आहरेयुः कुप्यार्थम् । तत्र वस्तिः मूत्राशयः, पित्तं मायुः, स्नायुः स्नावः । शेषं प्रसिद्धम् । श्रीमूला.

**मांसमाममार्द्रं शुष्कं वा विक्रीणीयुः ॥**

मांसम् आमम् अपक्वम् आर्द्रं शुष्कं वा विक्रीणीयुः । श्रीमूला.

**उदश्वित् श्ववराहेभ्यो दद्युः ॥**

उदश्वित् तक्रं श्ववराहेभ्यो दद्युः पोषणार्थम् । श्रीमूला.

**कूर्चिकां सेनाभक्तार्थमाहरेयुः ॥**

कूर्चिकामिति । तक्रयुक्तक्षीरविकृतिम् । शुष्कघनीकृततक्रविकारमिति स्वामी । सेनाभक्तार्थम् आहरेयुः । श्रीमूला.

**किलाटो घाणपिण्याकक्लेदार्थः ॥**

किलाटः क्षीरविकृतिः घाणपिण्याकक्लेदार्थः— किंचित्सावशेषतैलः पिण्याकः घाणपिण्याकः, तस्य गोमहिषादिभक्ष्यस्य क्लेदार्थः क्लेदनरूपे संस्कारे विनियोक्तव्यः । श्रीमूला.

**पशुविक्रेता पादिकं रूपं दद्यात् ॥**

पशुविक्रेतेति । सः पादिकं रूपम् एकैकस्य रूपस्य विक्रीयमाणस्य पादपणं दद्यात् अध्यक्षाय । श्रीमूला.

**वर्षाशरद्धेमन्तानुभयतः कालं दुहयुः । शिशिरवसन्तग्रीष्मानेककालम् ॥**

वर्षाशरद्धेमन्तान् ऋतून्, उभयतः कालं सायं प्रातश्च दुह्युः गोमहिषीः । शिशिरवसन्तग्रीष्मान् एककालं रात्रावेव दुह्युः । श्रीमूला.

**द्वितीयकालदोग्धुरङ्गुष्ठच्छेदो दण्डः । दोहकालमतिक्रामतस्तत्फलहानं दण्डः ॥**

द्वितीयकालदोग्धुरङ्गुष्ठच्छेदो दण्ड इति । 'अयं च कालनियमो देशव्यवस्थया द्रष्टव्यः, क्वचित् देशे ग्रीष्मेऽपि त्रिकालदोहदर्शनात्' इत्याह स्वामी । दोहकालमिति । तं प्रातः सायं च यथोक्तम् अतिक्रामतः तत्फलहानं तद्दिवसवेतनहानिः दण्डः । श्रीमूला.

**एतेन नस्यदम्ययुगपिङ्गनवर्तनकाला व्याख्याताः ॥**

एतेनेति दोहकालातिपातनेन नस्यदम्ययुगपिङ्गनवर्तन-कालाः— नस्यकालः नासावेधनकालः, दम्यकालः दमनार्हकालः, युगपिङ्गनकालः अदान्तस्य दान्तेन सह युगे योजनकालः, वर्तनकालः मेथिबन्धनप्रचारणकालः इत्येते व्याख्याताः। तानप्यतिक्रामतस्तत्फलहानं दण्ड इत्यर्थः। श्रीमूला.

**क्षीरद्रोणे गवां घृतप्रस्थः। पञ्चभागाधिको महिषीणाम्। द्विभागाधिकोऽजावीनाम्। मन्थो वा सर्वेषां प्रमाणम्, भूमितृणोदकविशेषाद्धि क्षीरघृतवृद्धिर्भवति ॥**

क्षीरद्रोणे गवां घृतप्रस्थः प्रस्थमितं घृतं जायते। पञ्च-भागाधिकः प्रस्थपञ्चमभागयुक्तो घृतप्रस्थः महिषीणां क्षीरद्रोणे भवति। द्विभागाधिकः अर्धकुडुबाधिको घृतप्रस्थः अजावीनां क्षीरद्रोणे भवति। इदं च घृतप्रमाणं प्रायि-कम्। अत एवाऽऽह— मन्थो वेति। मथनमेव सर्वेषां घृतपरिमाणानां प्रमाणं निश्चायकम्। तत्र हेतुकथनम्— भूमितृणोदकविशेषाद्धीत्यादिना। क्षीरघृतवृद्धिः क्षीरघृतयो-र्वृद्धिः क्षीरे घृतस्य वृद्धिर्वा। श्रीमूला.

**यूथवृषं वृषेणावपातयतः पूर्वः साहसदण्डः, घातयत उत्तमः ॥**

यूथवृषं सेक्तारं वृषेण तथाविधेन सह अवपातयतः योधयतः पूर्वः साहसदण्डः। घातयतः उत्तमः साहस-दण्डः। श्रीमूला.

**वर्णावरोधेन दशतीरक्षा ॥**

वर्णावरोधेन दशतीरक्षा वर्णनियमेन दशकवर्गाणां रक्षा। शुक्लवर्णः एको दशकवर्गः, लोहितवर्णोऽन्य इत्येवं नियतैकैकवर्णयोगिनां दशानां दशतां रक्षणं कर्त-व्यम्। * दशतीशब्दस्य स्त्रीत्वमत एव पाठात् कल्प्यम्। दशतामिति वा पाठः। श्रीमूला.

* दशत्-शब्दस्य स्त्रीत्वं स्त्रीप्रत्ययश्चेत्यर्थः।

**उपनिवेशदिग्विभागो गोप्रचाराद्बलान्वयतो वा गवां रक्षासामर्थ्याच्च ॥**

उपनिवेशदिग्विभागः गवाद्युपनिवेशदिग्व्यवस्था गो-प्रचारात् गोप्रचारदिशमनुसृत्य बलान्वयतो वा गवां गोबलयोगमनुसृत्य च रक्षासामर्थ्याच्च चोरादिभयरहितत्व-निमित्तकं रक्षणसौकर्यमनुसृत्य च भवति। श्रीमूला.

**अजादीनां षाण्मासिकीमूर्णां ग्राहयेत् ॥**

अजाविप्रभृतीनां षाण्मासिकीं षण्मासप्रवृद्धाम् ऊर्णां ग्राहयेत्। श्रीमूला.

**तेनाश्वखरोष्ट्रवराहव्रजा व्याख्याताः ॥**

उक्तेन गवादिकल्पेन अश्वखरोष्ट्रवराहव्रजाः व्याख्याताः। वेतनोपग्राहिकादीनि अश्वादियूथेष्वपि यथासंभवं योज्यानीत्यर्थः। श्रीमूला.

**बलीवर्दानां नस्याश्वभद्रगतिवाहिनां यवसस्यार्धभारः, तृणस्य द्विगुणम्, तुला घाणपिण्याकस्य, दशाढकं कणकुण्डकस्य, पञ्चपलिकं मुखलवणम्, तैलकुडुबो नस्यम्, प्रस्थः पानम्। मांसतुला, दध्नश्चाऽऽढकम्, यवद्रोणम्, माषाणां वा पुलाकः। क्षीरद्रोणमर्धाढकं वा सुरायाः, स्नेहप्रस्थः, क्षारदशपलं शृङ्गिबेरपलं च प्रतिपानम् ॥**

अशनादिकमाह— बलीवर्दानामिति। तेषां मध्ये नस्याश्वभद्रगतिवाहिनां नस्यानां कृतनासावेधानाम् अश्वभद्रगतिवाहिनां च— अश्वाः तेजःसत्त्वयुक्ता अश्व-भद्राः, तद्गतिवाहिनां रथ्यायोगार्हाणां गवां यवसस्य घासस्य अर्धभारः दश तुलाः, अशनं भवतीति शेषः। तृणस्य सामान्यस्य द्विगुणं विंशतितुलाः। तुला घाण-पिण्याकस्य। दशाढकं चत्वारिंशत् प्रस्थाः कणकुण्डकस्य सूक्ष्मतण्डुलांशयुक्तस्य तण्डुलमलस्य। पञ्चपलिकं मुख-लवणं सिन्धूद्भवं लवणम्। तैलकुडुबो नस्यं कुडुबमितं तैलं नासापुटनिषेव्यमौषधम्। * प्रस्थः प्रस्थपरिमाणं

* अत्रेदं विचार्यम्— अत्र मूले पानद्रव्यं नोक्तम्। अत एवोत्सर्गत उदकं तदिति प्रतीयते। यदि स्नेहो विवक्षित-स्तदा प्रतिपाने स्नेहप्रस्थस्य विधानात् स्नेहप्रस्थस्य द्वि-

तैलं घृतं वा पानम् । मांसतुला शतपलप्रमाणं मांसम् । दध्नश्चाऽऽढकम् । यवद्रोणं यवानां द्रोणं माषाणां वा पुलाकः अर्धपक्वः सिक्थो वा द्रोणपरिमाणः । यवमाषपुलाकयोश्चायं विकल्पः । क्षीरद्रोणमिति । द्रोणमितं क्षीरम् अर्धाढकं वा सुरायाः क्षीराभावे अर्धाढकमिता सुरा, स्नेहप्रस्थः तैलघृतान्यवरस्य प्रस्थः, क्षारदशपलं गुडपलदशकम्, शृङ्गिबेरपलं शुण्ठ्याः पलं च इत्येतचतुष्टयं मिलितं प्रतिपानम् अग्निदीपनार्थं पानं भवति ।

श्रीमूला.

**पादोनमश्वतरगोखराणाम्, द्विगुणं महिषोष्ट्राणां कर्मकरबलीवर्दानाम् । पायनार्थं च धेनूनाम् । कर्मकालतः फलतश्च विधानम् । सर्वेषां तृणोदकप्राकाम्यम् । इति गोमण्डलं व्याख्यातम् ॥**

पादन्यूनं पूर्वोक्तं भद्रगतिबलीवर्दविधानमेव अश्वतरगोखराणां वेसरपुङ्गवान्तरगर्दभानां भवति । द्विगुणमिति । द्विगुणं भद्रगत्युक्तद्विगुणं महिषोष्ट्राणां कर्मकरबलीवर्दानां शकटाद्युपयोगिनां पुङ्गवानां च । पायनार्थे च धेनूनामिति । पायनप्रयोजनकं यद्विधानमुक्तं तच्च, चकाराद् भक्षणार्थं च, द्विगुणमिति वर्तते । कर्मकरबलीवर्दविषये धेनुविषये च विधानद्वैगुण्यवचनेनाप्यपरितुष्यन् विधानसारमुपदिशति— कर्मकालतः फलतश्च विधानमिति । कर्मकालपरिमाणाद्यनुसारेण कर्मकरबलीवर्दानां दुग्धबाहुल्यादिफलप्राप्त्यनुसारेण च धेनूनामशनपानविधानं द्विगुणं ततोऽप्यधिकं वा निश्चेतव्यमित्यभिप्रायः । सर्वेषामिति । सर्वपशूनां तृणोदकप्राकाम्यं तृणस्य उदकस्य च प्राकाम्यं पर्याप्तत्वं कार्यम् । 'तृणोदकं प्रकाम्यम्' इति पाठे तृणं च उदकं च प्रकर्षेण काम्यं दुग्धवृद्ध्यनुरूपमपेक्षणीयम् । यद्वा कामः पश्वभिलाषः, तत्पूरणानुरूपमित्यर्थः । इति गोमण्डलं तत्संबद्धं विधाजातं व्याख्यातं वितत्य प्रतिपादितम् ।

श्रीमूला.

**पञ्चर्षभं खराश्वानामजावीनां दशर्षभम् ।**
**शत्यं गोमहिषोष्ट्राणां यूथं कुर्याच्चतुर्वृषम् ॥**

यूथकल्पनां श्लोकेनाऽऽह— पञ्चर्षभमिति । शत्यं व्यक्तिशतप्रमाणं यूथं खराश्वानां पञ्चर्षभं पञ्च ऋषभाः सेक्तारः यस्मिंस्तत् तथाभूतं कुर्यात् । अजावीनां यूथं दशर्षभं दशसेक्त्रधिष्ठितं कुर्यात् । गोमहिषोष्ट्राणां यूथं चतुर्वृषं सेक्तृचतुष्टयाधिष्ठितं कुर्यात् ।

श्रीमूला.

राजस्वामिकानामश्वानां संख्यादिलेखनम्, पालनम्, आहारविधिः, चिकित्सा, उच्चावचमध्यमा जातयः, प्रशिक्षा, कर्माणि, सेवकवर्गः, अपराधेषु दण्डविधिश्च

**[1]अश्वाध्यक्षः पण्यागारिकं क्रयोपागतमाहवलब्धमाजातं साहाय्यागतकं पणस्थितं यावत्कालिकं वाऽश्वपर्यग्रं कुलवयोवर्णचिह्नकर्मवर्गागमैर्लेखयेत् ॥**

'अश्वाध्यक्षः' इति सूत्रम् । अश्वाध्यक्षः सर्वाश्वनायकः अर्थात् तद्व्यापारः अभिधीयते इति सूत्रार्थः । स्वाम्यादिप्रकृत्यभिधानानन्तरं दण्डप्रकृतिं प्राप्तावसरां वक्तुमुपक्रमः । तत्राश्वानां प्राधान्यात् प्रथमं तदध्यक्षाभिधानम् ।

अश्वाध्यक्ष इत्यादि । अश्वपतिः पण्यागारिकं प्राभृतोपनीतं पण्यागारगतम्, क्रयोपागतं क्रीतम्, आहवलब्धं युद्धाहृतम्, आजातं निजाश्वोत्पन्नम्, साहाय्यागतकं साहाय्यदानेन लब्धम्, पणस्थितम् आधित्वेन स्थितम्, यावत्कालिकं यावान् प्रयोजनकालस्तावते कालायान्यस्मादानीतम् । वाशब्दश्चार्थे । इत्थं सप्तप्रकारम् अश्वपर्यग्रम्

---

विधानमुदकविधानाभावान्न्यूनता चाऽऽपद्यते। यद्युदकमविधेयं तदा पश्वन्तरविषयमुपरितनमुदकप्राकाम्यविधानं व्यर्थं स्यात् । तस्मादत्रोदकमेव पानद्रव्यमभिप्रेयते इति युक्तं प्रतिभाति । प्रस्थपरिमाणमुदकमपर्याप्तमिति चेत्, घनद्रव्यपाचनौपयिकक्लेदनं पिपासाशमनं चोदककार्यं क्षीरदधिभ्यामपि भवत्येवेति क्षीरद्रोणेन दध्याढकेन च सहित उदकप्रस्थो नापर्याप्त इति भाति । महाराष्ट्रभाषाव्याख्यानेऽपि तैलमेवात्र पानद्रव्यमुक्तम् । तदिदं सुधीभिर्निर्णेयम् ।

(१) कौ. २।३०.

अश्वानां प्रमाणं कुलवयोवर्णचिह्नकर्मवर्गागमैः— कुलेन पारसीककाम्बोजारट्टवनायुप्रभृतिना, वयसा द्विवर्ष-त्रिवर्षचतुर्वर्षादिना, वर्णेन शुक्लकृष्णादिना, चिह्नेन धवलवालफालप्रोथादिना, कर्मणा सांनाह्यादिना, वर्गेण पारसीकादिभिरियद्भिरियानयं वर्ग इति वर्गीकरणेन, आगमेन प्राप्तिस्थानेन च इत्येवं सप्तभिर्विशेषैर्युक्तं लेखयेत् । श्रीमूला.

**अप्रशस्तन्यङ्गव्याधितांश्चाऽऽवेदयेत् ॥**

अप्रशस्तान् शृङ्गस्थानमांसबुद्बुदत्वान्यप्रभैकाङ्घ्रित्वादिदोषयुक्तान् न्यङ्गान् अङ्गविकलान् व्याधितांश्च आवेदयेत् यथाकालं परिवर्तनार्थं चिकित्सार्थं च ।

श्रीमूला.

**कोशकोष्ठागाराभ्यां च गृहीत्वा मासलाभमश्ववाहश्चिन्तयेत् ॥**

कोशात् कोष्ठागाराच्च गृहीत्वा मासलाभं मासपरिव्ययक्लृप्तं हिरण्यम् अश्वभोज्यं चाऽऽदाय अश्ववाहः चिन्तयेत् तत्कार्यम् । श्रीमूला.

**अश्वविभवेनाऽऽयतामश्वायामद्विगुणविस्तारां चतुर्द्वारोपावर्तनमध्यां सप्रग्रीवां प्रद्वारासनफलकयुक्तां वानरमयूरपृषतनकुलचकोरशुकशारिकाभिराकीर्णां शालां निवेशयेत् ॥**

शालाविधिमाह— अश्वविभवेनेति । अश्वविभवेनाऽऽयताम् अश्वपर्यग्रानुरूप्येण दीर्घाम्, अश्वायामद्विगुणविस्ताराम् अश्वायाममनुपदं वक्ष्यति, तद्द्विगुणविस्ताराम्, चतुर्द्वारोपावर्तनमध्याम्— चतुर्द्वारं सुखप्रवेशनिर्गमार्थमग्न्यादिभये निष्क्रमणद्वाराणां सर्वतः सौलभ्यार्थं च परिकल्पितद्वारचतुष्टयम् उपावर्तनं प्रलुठनस्थानं मध्ये यस्यास्तां तथाभूताम्, सप्रग्रीवां प्रग्रीवेण मुखप्रासादेन सहिताम्, प्रद्वारासनफलकयुक्तां प्रद्वाराभ्यां द्वारोभयपार्श्वगताभ्याम् आसनफलकाभ्यां युक्ताम्, वानरमयूरादिभिः सप्तभिः विषप्रतीकारप्रयोजनाभिः आकीर्णां शालां मन्दुरां निवेशयेत् निर्मापयेत् । श्रीमूला.

**अश्वायामचतुरश्रश्लक्ष्णफलकास्तारं सखादनकोष्ठकं समूत्रपुरीषोत्सर्गमेकैकशः प्राङ्मुखमुदङ्मुखं वा स्थानं निवेशयेत् । शालावशेन वा दिग्विभागं कल्पयेत् । वडवावृषकिशोराणामेकान्तेषु ॥**

अश्वायामचतुरश्रश्लक्ष्णफलकास्तारम् अश्वदैर्घ्यानुगुण्येन चतुरश्रनिर्मितं श्लक्ष्णं च फलकम् आस्तारः आस्तरणं यस्मिंस्तत् तथाभूतम्, सखादनकोष्ठकं खादनकोष्ठैः यवसादिविकरणाधारभूतैस्तद्भक्षणकोष्ठैः सहितम्, समूत्रपुरीषोत्सर्गं मूत्रपुरीषानवरोधसंविधानसहितम् अर्थात् किंचिदग्रतः समुन्नतम्, एकैकशः प्रत्यश्वं प्राङ्मुखं उदङ्मुखं वा स्थानं निवेशयेत् । शालावशेन वा दिग्विभागं कल्पयेदिति । राजभवनस्य यः उत्तरपूर्वो दिग्विभागः अश्वशालार्थं उक्तः ' उत्तरपूर्वं भागं कोशो गवाश्वं च ' (कौ. २।४) इति, स चेदश्वानां बाहुल्यादपर्याप्तः तदा निर्मातव्यशालामहत्त्वानुगुण्येन दिग्विभागोऽन्यः स्वीकरणीय इत्यर्थः । वडवेत्यादि । वडवानां प्रसविनीनां वृषाणां सेक्तॄणाम्, किशोराणां षण्मासादूर्ध्वम् आ त्रिवर्षात् किशोराः तेषां च एकान्तेषु तदन्याश्वानां तेषां चान्योन्यदृष्टयगोचरेषु स्थलेषु स्थानं कल्पयेदिति वर्तते ।

श्रीमूला.

**वडवायाः प्रजातायास्त्रिरात्रं घृतप्रस्थपानम्, अत ऊर्ध्वं सक्तुप्रस्थः स्नेहभैषज्यप्रतिपानं दशरात्रम्, ततः पुलाको यवसमार्तवश्चाऽऽहारः ॥**

वडवाया इति । तस्याः प्रजातायाः प्रसूतायाः त्रिरात्रं घृतप्रस्थपानं प्रथमदिवसादूर्ध्वं प्रातः प्रातरिति स्वामी । अत ऊर्ध्वं सक्तुप्रस्थः अपराह्णभोजनं तदनन्तरं स्नेहभैषज्यप्रतिपानं स्नेहयुक्तमूलक्वाथादिप्रतिपानं दशरात्रम् । तत इति । तदनन्तरं पुलाकः अर्धसिद्धयवादिः यवसं घासः आर्तवश्चाऽऽहारः ऋतुयोग्यश्चाऽऽहारः सस्यलक्षणः । श्रीमूला.

**दशरात्रादूर्ध्वं किशोरस्य घृतचतुर्भागः सक्तुकुडुबः, क्षीरप्रस्थश्चाऽऽहार आ षण्मासादिति । ततः परं मासोत्तरमर्धवृद्धिर्यवप्रस्थ आ त्रिवर्षाद्**

**द्रोण आ चतुर्वर्षादिति। अत ऊर्ध्वं चतुर्वर्षः पञ्चवर्षो वा कर्मण्यः पूर्णप्रमाणः॥**

दशरात्रादूर्ध्वं किशोरस्य घृतचतुर्भागः पादकुडुबघृतयुक्तः सक्तुकुडुबः क्षीरप्रस्थश्च आहारः। आ षण्मासादिति। आमासषट्कम् एवं कर्तव्यम्। ततः परमिति। षण्मासादूर्ध्वं मासोत्तरमर्धवृद्धिः प्रतिमासं वर्धमानार्धप्रस्थः यवप्रस्थः। आ कुतोऽयं यवप्रस्थो वर्धते इत्याह— आ त्रिवर्षादिति। द्रोण इति। यवद्रोणः त्रिवर्षादूर्ध्वम् आ चतुर्वर्षात् आहारः। अत ऊर्ध्वं चतुर्वर्षः पञ्चवर्षो वा अश्वः कर्मण्यः सांनाह्यादिकर्मार्हः पूर्णप्रमाणः पूर्णं प्रमाणं वक्ष्यमाणं यस्य स तथाभूतो भवति। श्रीमूला.

**द्वात्रिंशदङ्गुलं मुखमुत्तमाश्वस्य, पञ्च मुखान्यायामः, विंशत्यङ्गुला जङ्घा, चतुर्जङ्घ उत्सेधः। त्र्यङ्गुलावरं मध्यमावरयोः। शताङ्गुलः परिणाहः। पञ्चभागावरं मध्यमावरयोः॥**

तदेव प्रमाणं व्याचष्टे— द्वात्रिंशदित्यादि। उत्तमाश्वस्य द्वात्रिंशदङ्गुलं मुखम्, पञ्च मुखानि आयामः षष्ट्यधिकशताङ्गुलं दैर्घ्यम्, विंशत्यङ्गुला जङ्घा, चतुर्जङ्घः उत्सेधः अशीत्यङ्गुलम् औन्नत्यम्। त्र्यङ्गुलावरं मध्यमावरयोः। यदुक्तमुत्तमस्य मुखादिप्रमाणं तत् मध्यमस्य त्र्यङ्गुलावरं त्र्यङ्गुलन्यूनम्, अवरस्य अधमस्य ततोऽपि त्र्यङ्गुलन्यूनम्। टीकाभाष्ययोः 'द्व्यङ्गुलावरम्' इति पाठ उपात्तः। अथ परिणाहस्य प्रमाणमाह— शताङ्गुल इति। अङ्गुलशतप्रमाणः परिणाहः परिक्षेपः अर्थादुत्तमाश्वस्य। पञ्चभागावरं मध्यमावरयोः उत्तमाश्वपरिणाहप्रमाणात् पञ्चभागन्यूनम् अर्थादशीत्यङ्गुलं मध्यमाश्वस्य, षष्ट्यङ्गुलमवराश्वस्य परिणाहप्रमाणम्। श्रीमूला.

**उत्तमाश्वस्य द्विद्रोणं शालिव्रीहियवप्रियङ्गूणामर्धशुष्कमर्धसिद्धं वा, मुद्गमाषाणां वा पुलाकः। स्नेहप्रस्थश्च। पञ्चपलं लवणस्य। मांसं पञ्चाशत्पलिकम्। रसस्याऽऽढकं द्विगुणं वा दध्नः पिण्डक्लेदनार्थम्। क्षारपञ्चपलिकः सुरायाः प्रस्थः पयसो वा द्विगुणः प्रतिपानम्। दीर्घपथभारक्लान्तानां च खादनार्थं स्नेहप्रस्थोऽनुवासनम्। कुडुबो नस्यकर्मणः। यवसस्यार्धभारः, तृणस्य द्विगुणः, षडरत्निपरिक्षेपः पुञ्जीलग्रहो वा॥**

आहारविधानमाह— उत्तमाश्वस्येति। तस्य द्विद्रोणं शालिव्रीहियवप्रियङ्गूणां शाल्याद्यन्यतमस्य द्रोणद्वयम् अर्धशुष्कम् अर्धसिद्धं वा, भोजनमिति शेषः। मुद्गमाषाणां वा पुलाकः भक्तसिक्थकः उक्तपरिमाणः। स्नेहप्रस्थश्च घृतस्य तैलस्य वा प्रस्थश्च पानार्थः। पञ्चपलं लवणस्य। मांसं पञ्चाशत्पलिकं पञ्चाशत्पलप्रमाणम्। रसस्य मांससंस्कृतस्य आढकं द्विगुणं वा दध्नः दध्याढकद्वयं वा पिण्डक्लेदनार्थं भुक्तपुलाकक्लेदनार्थम्। क्षारपञ्चपलिकः गुलादिपञ्चपलयुक्तः सुरायाः प्रस्थः पयसो वा द्विगुणः प्रस्थद्वयं प्रतिपानम् अपराह्णदेयम्। दीर्घपथभारक्लान्तानां च दीर्घाध्वलङ्घनभारवहनपरिश्रान्तानां च खादनार्थम् अग्निदीपनद्वारेण सम्यगाहारग्रहणार्थं स्नेहप्रस्थः अनुवासनम् अनुवासनाख्यवस्तिचिकित्सादानं भवति। यदुक्तम् 'वस्तिर्द्विधाऽनुवासाख्यो निरूहश्च ततः परः। यः स्नेहैर्दीयते स स्यादनुवासननामकः। कषायक्षीरतैलैर्यो निरूहः स निगद्यते॥' इति। कुडुबः स्नेहस्य प्रस्थचतुर्भागः नस्यकर्मणः नासिकासेचनस्य। यवसस्य हरितसस्यादेः अर्धभारः दश तुलाः। तृणस्य शुष्कस्य द्विगुणः विंशतितुलाः यवसाभावे। षडरत्निपरिक्षेपः पुञ्जीलग्रहो वा हस्तषट्कपरिणाहः पुञ्जीलानां तृणस्तम्बानां ग्रहो वा अर्थात् भुजद्वयालिङ्गनग्राह्यस्तृणस्तम्बसंघातो वा। श्रीमूला.

**पादावरमेतन्मध्यमावरयोः। उत्तमसमो रथ्यो वृषश्च मध्यमः। मध्यमसमश्चावरः। पादहीनं वडवानां पारशमानां च। अतोऽर्धं किशोराणां च। इति विधायोगः॥**

पादावरमेतन्मध्यमावरयोरिति। उत्तमस्याश्वस्योक्तं द्विद्रोणादिकं सर्वं चतुर्भागन्यूनं मध्यमस्य, ततोऽपि चतुर्भागन्यूनमधमस्य। उत्तमसम इति। उत्तमाश्वविधासमानविधः रथ्यो वृषश्च मध्यमः रथवाही मध्यमाश्वः सेक्ता च मध्यमाश्वः। मध्यमसमश्चावरः अधमाश्वो

रथवाही अधमाश्वः सेक्ता च मध्यमाश्वविधासमानविधः। पादहीनं चतुर्भागहीनम् अर्थात् त्रिविधमपि विधाविधानं वडवानां पारशमानां च अश्वतराणां च। इह 'पारशमानाम्' इति माकारयुक्तपाठलेखनं कोशेषु चिन्त्यम्। 'पारशवानाम्' इति तु वाकारयुक्तं पठितव्यम्। तदा हि पारशवशब्दः संकरजातिमनुष्यवचनः संकरजेऽश्वे वेगसराख्ये भक्त्या प्रयुक्त इति शक्यते वक्तुम्। अतोऽर्धे वडवाविधाया अर्धे किशोराणां च। इति एवं विधायोगः उक्तः। श्रीमूला.

**विधापाचकसूत्रग्राहकचिकित्सकाः प्रतिस्वादभाजः॥**

अश्वाहारपक्तारः अश्वपरिचारकाः अश्ववैद्याश्च प्रतिस्वादभाजः विधाभागिनः। अतो विधायास्तद्भजनीया मात्राऽपि अश्वभोज्यमात्राभिः सह संविधेयेत्यभिप्रायः। श्रीमूला.

**युद्धव्याधिजराकर्मक्षीणाः पिण्डगोचरिकाः स्युः। असमरप्रयोग्याः पौरजानपदानामर्थेन वृषा वडवास्वायोज्याः॥**

युद्धादित्रयक्षीणाः सांनाह्यादिकर्मक्षीणाश्च पिण्डगोचरिकाः अप्रशस्तः पिण्डः कुक्षिपूरणमात्रार्थः आहारः गोचरः एषामिति तथाभूताः स्युः। असमरप्रयोग्याः इति। युद्धानर्हाः पौरजानपदानाम् अर्थेन प्रसूतिरूपप्रयोजनेन वृषाः सेक्तारः भवन्तः वडवासु आयोज्याः। श्रीमूला.

**प्रयोग्यानामुत्तमाः काम्बोजकसैन्धवारट्टजवानायुजाः। मध्यमा बाह्लीकपापेयकसौवीरकतैतलाः। शेषाः प्रत्यवराः॥**

प्रगतचर्याशिक्षाणां युद्धयोग्यानामश्वानां मध्ये उत्तमाः काम्बोजकादयः कम्बोजादिदेशचतुष्टयोत्पन्नाः। मध्यमाः बाह्लीकादिदेशचतुष्टयोत्पन्नाः। शेषाः उक्तेतरसौराष्ट्रादिदेशभवाः प्रत्यवराः अधमाः। श्रीमूला.

**तेषां तीक्ष्णभद्रमन्दवशेन सांनाह्यमौपवाह्यकं वा कर्म प्रयोजयेत्॥**

अश्वानां द्विविधं कर्माऽऽह— तेषामिति। उत्तमादीनां तीक्ष्णभद्रमन्दवशेन— तीक्ष्णः अतिमात्रतेजःसत्त्वः आघातलेशस्याप्यसोढा, भद्रः तेजःसत्त्वयुक्तः आघातसत्त्वानुरूपचेष्टी, मन्दः निस्तेजःसत्त्वः महाघातोत्पादनीयकर्मप्रतिपत्तिः, त्रिविधैतत्स्वभावानुगुण्येन सांनाह्यं साङ्ग्रामिकम् औपवाह्यकं वा क्रीडायानाध्वयानादिप्रयोजनकं वा कर्म प्रयोजयेत्। श्रीमूला.

**चतुरश्रं कर्माश्वस्य सांनाह्यम्॥**

चतुरश्रं सौष्ठवयुक्तं कर्म शालिहोत्रादिप्रपञ्चितविशेषं साङ्ग्रामिककर्म सांनाह्यं भवति। श्रीमूला.

**वल्गनो नीचैर्गतो लङ्घनो धोरणो नारोष्ट्रश्चौपवाह्याः॥**

औपवाह्यं पञ्चधा विभजते— वल्गन इत्यादिना। औपवाह्याः औपवाह्याश्वमार्गाः। श्रीमूला.

**तत्रौपवेणुको वर्धमानको यमक आलीढप्लुतः पृथग( ? पूर्वग )स्त्रिकचाली च वल्गनः॥**

वल्गनमार्गं विवृणोति— तत्रेत्यादि। तत्र वल्गनादिषु पञ्चसु मार्गेषु मध्ये औपवेणुकः हस्तमात्रमण्डलः इति स्वामी, वर्धमानकः तावन्मात्रमण्डलपङ्क्तिपरिपाटीवल्गनः, यमकः युगपदुभयमण्डलवल्गनः, आलीढप्लुतः एकपादसंकोचापरपादप्रसारणपूर्वप्लुतियुक्तः, पूर्वगः पूर्वार्धवल्गनः, त्रिकचाली— त्रिकं पृष्ठवंशाधरः, तेन पश्चार्धलक्षणात् पश्चार्धवल्गनः। श्रीमूला.

**स एव शिरःकर्णविशुद्धो नीचैर्गतः षोडशमार्गो वा। प्रकीर्णकः प्रकीर्णोत्तरो निषण्णः पार्श्वानुवृत्त ऊर्मिमार्गः शरभक्रीडितः शरभप्लुतः त्रितालो बाह्यानुवृत्तः पञ्चपाणिः सिंहायतः स्वाधूतः क्लिष्टः श्लिङ्गितो बृंहितः पुष्पाभिकीर्णश्चेति नीचैर्गतमार्गाः॥**

वल्गनमार्ग एव शिरःकर्णविशुद्धः शिरसा कर्णाभ्यां चाविकृतः नीचैर्गतः तदाख्यः। षोडशमार्गो वा वक्ष्यमाणषोडशविधश्च सः। के ते प्रकारा इत्याह— प्रकीर्णक इत्यादि। प्रकीर्णकः सर्वगतिसंकरयुक्तः, प्रकीर्णोत्तरः

प्रकीर्ण एवैकगतिप्रधानः, निषण्णः निष्कम्पपृष्ठगतिः, पार्श्वानुवृत्तः तिर्यग्गतिः, ऊर्मिमार्गः उन्नतानतगतिः, शरभक्रीडितः शरभगतिः, शरभप्लुतः शरभतुल्योत्पतनः, त्रितालः त्रिपदगामी, बाह्यानुवृत्तः सव्यापसव्यवल्गनगतिः, पञ्चपाणिः चरणत्रयं सकृदवस्थाप्य एकं द्विरवस्थापयति, सिंहायतः सिंहतुल्यगतिः, स्वाधूतः अतिदीर्घगतिः, क्लिष्टः विवहनविस्रब्धगतिः, श्लिङ्गितः अवनताग्रयायी, बृंहितः उन्नताग्रयायी, पुष्पाभिकीर्णः गोमूत्रिकागतिः। इति एते नीचैर्गतमार्गाः। श्रीमूला.

**कपिप्लुतो भेकप्लुत एणप्लुत एकपादप्लुतः कोकिलसंचार्युरस्यो बकचारी च लङ्घनः॥**

लङ्घनमाह— कपिप्लुत इत्यादि। वानरमण्डूकहरिणप्लुतैः सदृशप्लुतत्वात् कपिप्लुतो भेकप्लुत एणप्लुतश्च, एकपादप्लुतः संकोच्य पादत्रयमेकेन पादेन प्लुतं यस्य सः, कोकिलसंचारी पिकवत्संचारः, उरस्यः संकोच्य सर्वान् पादान् उरसैव प्लवमानः, बकचारी च बकवत्संचारश्च लङ्घनः। श्रीमूला.

**काङ्को वारिकाङ्क्षो मायूरोऽर्धमायूरो नाकुलोऽर्धनाकुलो वाराहोऽर्धवाराहश्चेति धोरणः॥**

धोरणमाह— काङ्क इत्यादि। कङ्कसमानगतिः काङ्कः, वारिकाङ्क्षः हंसादिसमानगतिः। एवं मायूरादिर्व्याख्येयः। इति एवम् अष्टविधो धोरणः। श्रीमूला.

**संज्ञाप्रतिकारो नारोष्ट्र इति॥**

नारोष्ट्रमाह— संज्ञाप्रतिकार इति। शिक्षितसङ्केतानुरूपचेष्टितः नारोष्ट्राख्यः। इतिशब्दः औपवाह्यनिरूपणसमाप्तौ। श्रीमूला.

**षण्णवद्वादशेति योजनान्यध्वा रथ्यानाम्। पञ्च योजनान्यर्धाष्टमानि दशेति पृष्ठवाह्यानामश्वानामध्वा॥**

गन्तव्याध्वमानमाह— षण्णवद्वादशेत्यादि। रथ्यानां रथवाहिनाम् उत्तममध्यमाधमानाम् अश्वानाम् अध्वा षट् नव द्वादशेति क्रमात् षड्योजनो नवयोजनो द्वादशयोजनश्च भवति। तथा पञ्च योजनानि, अर्धाष्टमानि सार्धानि सप्त योजनानि, दश योजनानि, इति क्रमेण पृष्ठभारवाहिनाम् अश्वानां त्रिविधानाम् अध्वा। श्रीमूला.

**विक्रमो भद्राश्वासो भारवाह्य इति मार्गाः॥**

त्रिविधं गतिभेदमाह— विक्रम इति। विक्रमः शनैर्गमनम्, भद्राश्वासो मध्यमः, भारवाह्यो द्रुतगमनम्, इति मार्गाः। श्रीमूला.

**विक्रमो वल्गितमुपकण्ठमुपजवो जवश्च धाराः॥**

धारा आह— विक्रमो वल्गितमिति। विक्रमः शनैर्गमनम्, वल्गितं प्रेङ्खितम्, उपकण्ठम् उत्प्लुत्योत्प्लुत्य गमनम्, उपजवः प्रथमवेगः, जवः चरमवेगः इति धाराः। श्रीमूला.

**तेषां बन्धनोपकरणं योग्याचार्याः प्रतिदिशेयुः। साङ्ग्रामिकं रथाश्वालंकारं च सूताः। अश्वानां चिकित्सकाः शरीरह्रासवृद्धिप्रतीकारमृतुविभक्तं चाऽऽहारम्॥**

रथ्यानां पृष्ठवाह्यानां चाश्वानां बन्धनोपकरणं बन्धनान्युपकरणानि च मुखकण्ठपृष्ठपादादियोजनीयानि कवियपर्याणादीनि योग्याचार्याः प्रतिदिशेयुः अश्वशिक्षाचार्याः उपदिशेयुः। साङ्ग्रामिकं रथाश्वालंकारं च सूताः सारथयः प्रतिदिशेयुः। अश्वानां चिकित्सकाः अश्ववैद्याः शरीरह्रासवृद्धिप्रतीकारं देहबलहानिप्रतिक्रियां मेदोवृद्धिप्रतिक्रियां च ऋतुविभक्तं चाऽऽहारं तत्तदृतुयोग्यतया व्यवस्थितम् आहारं च प्रतिदिशेयुः। श्रीमूला.

**सूत्रग्राहकाश्वबन्धकयावसिकविधापाचकस्थानपालकेशकारजाङ्गलीविदश्च स्वकर्मभिरश्वानाराधयेयुः॥**

सूत्रग्राहकादयः सप्त स्वकर्मभिः अश्वान् आराधयेयुः उपचरेयुः। तत्र सूत्रग्राहकः सूत्रग्रहणाधिकृतः वेल्लनपायनोद्वर्तनादिकर्ता। अश्वबन्धकः खलीनपर्याणाद्युपकरणबन्धनाधिकृतः। यावसिकः ऋत्वनुगुणयवसप्राशयिता। विधापाचकः शालिमुद्गमाषादिपक्ता। स्थानपालः अश्वावस्थानदेशशोधकः। केशकारः कालिककेशकल्पकः। जाङ्गलीवित् विषविद्याकोविदः। श्रीमूला.

**कर्मातिक्रमे चैषां दिवसवेतनच्छेदनं कुर्यात्। नीराजनोपरुद्धं वाहयतश्चिकित्सकोपरुद्धं वा द्वादशपणो दण्डः। क्रियाभैषज्यसङ्गेन व्याधिवृद्धौ प्रतीकारद्विगुणो दण्डः। तदपराधेन वैलोम्ये पत्रमूल्यं दण्डः॥**

स्वस्वकर्मणामननुष्ठानेऽन्यथानुष्ठाने वा एषां सूत्रग्राहकादीनां दिवसवेतनच्छेदनं कुर्यात्। नीराजनोपरुद्धम्— नीराजना शान्त्युदकपुष्पदीपादिना सत्कारो दुरितशान्तये बलवृद्धये च क्रियमाणः, तदर्थमुपरुद्धं चिकित्सकोपरुद्धं वा चिकित्सार्थं (? र्थमुपरुद्धं वा) वाहयतः द्वादशपणो दण्डः। क्रियाभैषज्यसङ्गेन क्रियायाश्चिकित्सनस्य भैषज्यस्य औषधस्य च यथाकालाकरणेन व्याधिवृद्धौ प्रतीकारद्विगुणः प्रतिक्रियार्थव्ययद्विगुणः दण्डः अश्वाध्यक्षस्य। तदपराधेन क्रियाभैषज्यदोषेण वैलोम्ये अश्वस्य विपत्तौ पत्रमूल्यं विपन्नवाहमूल्यं दण्डः। श्रीमूला.

**तेन गोमण्डलं खरोष्ट्रमहिषमजाविकं च व्याख्यातम्॥**

तेन अश्वाराधनादिविधिना उक्तेन गोमण्डलं खरोष्ट्रमहिषम् अजाविकं च व्याख्यातं गोमण्डलादिविधिरप्युक्तप्रायः। अश्ववदेव गोमण्डलादेरप्याराधनादिकं कर्तव्यम्, तदकरणे गवाध्यक्षस्य दण्डश्च भवतीत्यर्थः। श्रीमूला.

**द्विरह्नः स्नानमश्वानां गन्धमाल्यं च दापयेत्।**
**कृष्णसंधिषु भूतेज्याः शुक्लेषु स्वस्तिवाचनम्॥**
**नीराजनामाश्वयुजे कारयेन्नवमेऽहनि।**
**यात्रादाववसाने वा व्याधौ वा शान्तिके रतः॥**

अध्यायान्ते श्लोकावाह— द्विरह्नः स्नानमश्वानामित्यादि। दिने दिने वारद्वयम् अश्वानां स्नानं शरद्ग्रीष्मयोः दापयेत्। गन्धमाल्यं च दापयेत् नित्यम्। कृष्णसंधिषु भूतेज्याः कृष्णपर्वसु अमावास्यासु भूतबलीन् दापयेत्। शुक्लेषु शुक्लसंधिषु स्वस्तिवाचनं ब्राह्मणाशीर्वादनं दापयेत्। नीराजनाम् आरात्रिकाम् आश्वयुजे मासि कारयेत् नवमेऽहनि नवम्याम्, यात्रादौ अवसाने वा उद्योगस्याऽऽरम्भे समाप्तौ च, व्याधौ वा अश्वमारके च, शान्तिके रतः शान्तिप्रयोजनके कर्मण्यासक्तः। श्रीमूला.

हस्तिनां वनरक्षा, शालाकर्माणि, ग्राह्यत्वाग्राह्यत्वे, प्रशिक्षा, चिकित्सा, सङ्ग्रामकर्माणि, उपकरणानि, सेवकवर्गश्च

**[1]हस्त्यध्यक्षो हस्तिवनरक्षां दम्यकर्मक्षान्तानां हस्तिहस्तिनीकलभानां शालास्थानशय्याकर्मविधायवसप्रमाणं कर्मस्वायोगं बन्धनोपकरणं साङ्ग्रामिकमलंकारं चिकित्सकानीकस्थोपस्थायुकवर्गं चानुतिष्ठेत्॥**

'हस्त्यध्यक्षः' इति सूत्रम्। हस्त्यध्यक्षव्यापारोऽभिधीयते इति सूत्रार्थः। संगतिस्तु अश्वाध्यक्षवत् द्रष्टव्या। इदं च प्रकरणमध्यायद्वयेन वितन्यते।

हस्त्यध्यक्ष इति। सः हस्तिवनरक्षां गजवनप्रवेशनिषेधादिरूपां दम्यकर्मक्षान्तानां शिक्षाग्रहणदान्तानां हस्तिहस्तिनीकलभानां शालादिषट्कप्रमाणम्— शाला कुटी, स्थानम् आलानप्रदेशः, शय्या संवेशस्थानम्, कर्म सांनाय्यादिकम्, विधा आहारः, यवसं हस्तिसस्यादि, एतेषां प्रमाणम्, कर्मसु आयोगम्— दम्यादिकर्मसु वक्ष्यमाणेषु आसक्तिम्, बन्धनोपकरणम्— बन्धनम् आलानग्रैवेयकादि, उपकरणम् अङ्कुशवेणुयन्त्रादिं च, साङ्ग्रामिकं वर्मतोमरादिकम्, अलंकारं वैजयन्तीक्षुरप्रमालादिकम्, चिकित्सकादिवर्गं च— चिकित्सकाः गजवैद्याः, अनीकस्थाः गजशिक्षाविचक्षणाः, उपस्थायुकाः कर्मकराः, तेषां वर्गं च अनुतिष्ठेत् अवेक्षेत। श्रीमूला.

**हस्त्यायामद्विगुणोत्सेधविष्कम्भायामां हस्तिनीस्थानाधिकां सप्रग्रीवां कुमारीसंग्रहां प्राङ्मुखीमुदङ्मुखीं वा शालां निवेशयेत्॥**

शालानिवेशमाह— हस्त्यायामेत्यादि। नवहस्तः हस्त्यायामः, तद्द्विगुणः अष्टादशहस्तः उत्सेधः उच्छ्रयः विष्कम्भः विस्तारः आयामः दैर्घ्यं च यस्यास्तां तथाभूताम्, हस्तिनीस्थानाधिकाम्— हस्तिनीस्थानं षडरत्नि, तेनाधिकाम् अर्थाच्चतुर्विंशतिहस्तदीर्घाम्, सप्रग्रीवां

(1) कौ. 2।31।

प्रग्रीवेण मुखशालया उपेताम्, कुमारीसंग्रहाम्— कुमारी आलानस्तम्भोपरिनिवेशिता तुला सुखबन्धनार्था, तत्संग्रहवतीम्, प्राङ्मुखीम् उदङ्मुखीं वा शालां निवेशयेत् निर्मापयेत्। श्रीमूला.

**हस्त्यायामचतुरश्रश्लक्ष्णालानस्तम्भफलकान्तरकं मूत्रपुरीषोत्सर्गस्थानं निवेशयेत्। स्थानसमशय्यामर्धापाश्रयां दुर्गे सांनाह्यौपवाह्यानां बहिर्दम्यव्यालानाम्॥**

स्थाननिवेशमाह— हस्त्यायामेत्यादि। हस्त्यायामः नवहस्तः, तच्चतुरश्रं तदनुरूपमवृत्ताद्याकारम्, श्लक्ष्णः मसृणः आलानस्तम्भः फलकान्तरं फलकरूपं स्थलच्छादकं च यस्य तत् तथाभूतं च, मूत्रपुरीषोत्सर्गस्थानं तदुत्सर्गानुगुणं किंचिदग्रोन्नतं स्थानं निवेशयेत्। स्थानसमशय्यां स्थानसमां शय्याम् अर्धापाश्रयाम्— अर्धम् अर्धपञ्चमहस्तः, तावन्मानः अपाश्रयः उन्नतस्थानं यस्यां तादृशीम्, दुर्गे दुर्गान्तः सांनाह्यौपवाह्यानां बहिर्दम्यव्यालानां दुर्गबहिर्देशे दमनीयानां हिंस्राणां च निवेशयेत्।

श्रीमूला.

**प्रथमसप्तमावष्टमभागावह्नः स्नानकालौ, तदनन्तरं विधायाः। पूर्वाह्णे व्यायामकालः, पश्चाह्णः प्रतिपानकालः। रात्रिभागौ द्वौ स्वप्नकालौ, त्रिभागः संवेशनोत्थानिकः॥**

कालविनियोगमाह— प्रथमेत्यादि। अह्नः प्रथमसप्तमौ अष्टमभागौ स्नानकालौ। एतेन द्विः स्नानमुक्तम्। तदनन्तरं विधायाः द्वितीयोऽष्टभागो भोजनस्य कालः। पूर्वाह्णे व्यायामस्य कर्माभ्यासस्य कालः। पश्चाह्णः अपराह्णः प्रतिपानकालः। इह अपरशब्दस्याह्नशब्दपरकस्य पश्चभावकरणमार्षम्। रात्रिभागाविति। रात्रेर्द्वौ त्रिभागौ स्वप्नकालौ। त्रिभागः संवेशनोत्थानिकः अवशिष्टस्तृतीयभागो दशघटिकात्मकः संवेशनोत्थानविनियोज्यः। तत्र पञ्च घटिकाः संवेशनस्य पराः उत्थानस्येति द्रष्टव्यम्। श्रीमूला.

**ग्रीष्मे ग्रहणकालः। विंशतिवर्षो ग्राह्यः॥**

गजग्रहणकालमाह— ग्रीष्मे ग्रहणकाल इति। तदा हि गजाः तापातिरेकात् प्रक्षीणबला भूत्वा सुग्रहा भवन्तीति। विंशतिवर्षः अतिक्रान्तविंशतिवयस्कः तदधिकवयस्को वा ग्राह्यः ग्रहणार्हः। श्रीमूला.

**विक्को मूढो मत्कुणो व्याधितो गर्भिणी धेनुका हस्तिनी चाग्राह्याः॥**

अग्राह्यानाह— विक्क इति। विक्कः स्तनंधयः, मूढः हस्तिनीसमानदन्तः, मत्कुणः दन्तरहितः, व्याधितः रोगी, गर्भिणी प्रसिद्धा धेनुका स्तनपानदायिनी हस्तिनी च अग्राह्याः। श्रीमूला.

**सप्तारत्निरुत्सेधो नवायामो दशपरिणाहः प्रमाणतश्चत्वारिंशद्वर्षो भवत्युत्तमः। त्रिंशद्वर्षो मध्यमः। पञ्चविंशतिवर्षोऽवरः॥**

प्रमाणमाह— सप्तारत्निरुत्सेध इति। सप्तहस्तोच्छ्रायवान् नवायामः नवहस्तदैर्घ्यः दशपरिणाहः दशहस्तपरिक्षेपः प्रमाणतः प्रमाणेन यथोक्तेन युक्तः चत्वारिंशद्वर्षः उत्तमो भवति। त्रिंशद्वर्षः तावद्वयस्कः वक्ष्यमाणषडरत्निप्रमाणो मध्यमः। पञ्चविंशतिवर्षोऽवरः तावद्वयस्को वक्ष्यमाणप्रमाणः अधमः। श्रीमूला.

**तयोः पादावरो विधाविधिः॥**

विधाविधिमाह— तयोः पादावरो विधाविधिरिति। वक्ष्यमाणोत्तमविधाविध्यपेक्षया चतुर्भागन्यूनो विधाविधिर्मध्यमस्य, मध्यमविधापेक्षया चतुर्भागन्यूनश्चाधमस्य।

श्रीमूला.

**अरत्नौ तण्डुलद्रोणः। अर्धाढकं तैलस्य। सर्पिषस्त्रयः प्रस्थाः। दशपलं लवणस्य। मांसं पञ्चाशत्पलिकम्। रसस्याऽऽढकं द्विगुणं वा दध्नः पिण्डक्लेदनार्थम्। क्षारं दशपलिकम्। मद्यस्य आढकं द्विगुणं वा पयसः प्रतिपानम्। गात्रावसेकस्तैलप्रस्थः शिरसोऽष्टभागः प्रादीपिकश्च। यवसस्य द्वौ भारौ सपादौ शष्पस्य शुष्कस्यार्धतृतीयो भारः। कडङ्गरस्यानियमः॥**

उत्तमस्य विधाप्रमाणमाह— अरत्नौ तण्डुलद्रोण इति। एकस्योत्सेधारत्नेः प्रमाणस्य एकस्तण्डुलद्रोणः। अर्धाढकं तैलस्येत्यादि सुगमम्। रसस्य मांससंस्कृतस्य आढकं द्विगुणं वा दध्नः रसाभावे दध्याढकद्वयं वा पिण्डक्लेदनार्थं भुक्तपिण्डसेचनार्थम्। क्षारं दशपलिकं गुडादि दशपलप्रमाणम्। मद्यस्याऽऽढकं द्विगुणम् आढकद्वयं वा पयसः क्षीरस्य प्रतिपानम् अपराह्णदेयम्। गात्रावसेकः शरीराभ्यङ्गः तैलप्रस्थः। शिरसः अष्टभागः तैलार्धकुडुबः प्रादीपिकश्च प्रदीपार्थश्च अष्टभागः। यवसस्य हरितसस्यादेः द्वौ भारौ चत्वारिंशत् तुलाः। शष्पस्य बालतृणस्य हरितस्य सपादौ द्वौ भारौ। शुष्कस्य यवसस्य शष्पस्य च अर्धतृतीयो भारः सार्धं भारद्वयम्। कडङ्गरस्य शाखाबुसस्य सल्लकीपल्लवादेः अनियमः यावत्तृप्ति दानमित्यर्थः। अनया चैकारत्न्युत्सेधोक्तया प्रक्रियया सप्तारत्न्युत्सेधस्योत्तमहस्तिनस्तण्डुलादिकडङ्गरान्तं विधाजातं सप्तगुणितं द्रष्टव्यम्। श्रीमूला.

**सप्तारत्निना तुल्यभोजनोऽष्टारत्निरत्यरालः॥**

अष्टारत्न्युत्सेधस्यात्यरालाख्यस्यानेन प्रकारेण विधाधिक्यप्राप्तावपवादमाह— सप्तारत्निना तुल्यभोजन इत्यादि। श्रीमूला.

**यथाहस्तमवशेषः षडरत्निः पञ्चारत्निश्च॥**

षडरत्नेस्तण्डुलद्रोणषट्कं पञ्चारत्नेस्तण्डुलद्रोणपञ्चकमित्येवमुत्सेधहस्तमानानुरोधेन अवशेषः सप्तारत्न्यष्टारत्न्यतिरिक्तः षडरत्निः सप्तारत्न्युत्सेधापेक्षयैकारत्निन्यूनोत्सेधो मध्यमगणनीयः पञ्चारत्निश्च मध्यमापेक्षयैकारत्निन्यूनोत्सेधोऽधमगणनीयश्च विधापरिमाणयोगीति शेषः। तत्र मध्यमाधमयोरुत्सेधवदायामे परिणाहे चैकैकारत्निह्रासो द्रष्टव्यः। श्रीमूला.

**क्षीरयावसिको विक्कः क्रीडार्थं ग्राह्यः॥**

क्रीडार्थम्, न तु कर्मार्थम्, ग्राह्यो विक्को यदि कौतुकात् गृहीतः तदा स क्षीरयवसाभ्यां यथातृप्तिदत्ताभ्यां पोषणीय इत्यर्थः। श्रीमूला.

**संजातलोहिता प्रतिच्छन्ना संलिप्तपक्षा समकक्ष्या व्यतिकीर्णमांसा समतल्पतला जातद्रोणिकेति शोभाः॥**

सप्तविधाः शोभा आह— संजातलोहितेति। त्वगस्थिमात्रयुक्तस्य हस्तिनः उपजातरुधिरा प्रथमावस्था, तत्कृता शोभा संजातलोहिता नाम। प्रतिच्छन्ना किंचिन्मांसोपजनच्छन्नास्थिका। संलिप्तपक्षा मांसलेपमसृणपार्श्वा। समकक्ष्या अन्यूनानतिरिक्तमांसावयवा। व्यतिकीर्णमांसा क्वचिदुन्नतं क्वचिदवनतमित्येवं व्यामिश्रं मांसं यस्यां सा तथाभूता। समतल्पतला समं पृष्ठवंशसमोत्पन्नमांसं तल्पतलं पृष्ठवंशपार्श्वे यस्यां सा तथा। जातद्रोणिका— द्रोणीव द्रोणिका द्रोणीसमाना पृष्ठस्याऽऽकृतिः, सा वंशस्य निम्नीभावात् तत्पार्श्वोन्नतिकृताज्जाता यस्यां सा तथा। इति शोभाः सप्त सप्तावस्थाकृताः। श्रीमूला.

**शोभावशेन व्यायामं भद्रं मन्दं च कारयेत्।**
**मृगसंकीर्णलिङ्गं च कर्मस्वृतुवशेन वा॥**

अध्यायान्ते श्लोकमाह— शोभावशेनेत्यादि। उक्तावस्थानुगुण्येन व्यायामं शिक्षां कारयेत्। कम्? भद्रम् उत्तमम्, मन्दं मध्यमम्, चकारात् मृगमवरं च हस्तिनम्। मृगसंकीर्णलिङ्गं च मृगं भद्रादिसंकरजं च भद्रमन्दभद्रमृगादिनवप्रकारं हस्तिनं कर्मसु सांनाह्यौपवाह्येषु व्यायामं परिश्रमं कारयेत्। ऋतुवशेन वा शरदाद्यनुष्णकालानुसारेण च कर्मसु व्यायामं कारयेत्। श्रीमूला.

हस्तिनां हस्तिसेवकानां च प्रकारोपप्रकाराः,
अपराधेषु दण्डविधिश्च

**[1]कर्मस्कन्धाश्चत्वारो दम्यः सांनाह्य औपवाह्यो व्यालश्च॥**

कर्मस्कन्धाः क्रियासमूहाः चत्वारः चतूरूपाः। रूपाण्याह— दम्य इत्यादि। श्रीमूला.

**तत्र दम्यः पञ्चविधः— स्कन्धगतः स्तम्भगतो वारिगतोऽवपातगतो यूथगतश्चेति। तस्योपविचारो विक्ककर्म॥**

(१) कौ. २।३२.

तेषु चतुर्षु मध्ये दम्यः पञ्चविधः । ता एव विधा आह– स्कन्धगतः स्कन्धारोहप्रवणः, स्तम्भगतः आलानबन्धनसहः, वारिगतः– वारिः गजग्रहणभूमिः, तत्प्रविष्टः, अवपातगतः अवपातनार्थे कल्पितं तृणादिच्छन्नं गर्ते गतः, यूथगतः दान्तहस्तिनीसहविहारव्यसनी । चः समुच्चये । तस्य दम्यस्य उपविचारः उपचरणं विक्ककर्म विक्कस्योपचरणमिव भवति । तच्च क्षीरयवसेक्षुकाण्डादिदानम् । श्रीमूला.

**सांनाह्यः सप्तक्रियापथः– उपस्थानं संवर्तनं संयानं वधावधो हस्तियुद्धं नागरायणं साङ्ग्रामिकं च । तस्योपविचारः कक्ष्याकर्म ग्रैवेयकर्म यूथकर्म च ॥**

सांनाह्यमाह– सांनाह्य इत्यादि । सः सप्तक्रियापथः उपस्थानादिसप्तविधक्रियामार्गः । तत्र उपस्थानं पूर्वापरावयवानां नमनोन्नमनादिकं ध्वजोल्कावेणुरज्ज्वादिलङ्घनं च । संवर्तनं शयनोपवेशनरेखागर्तविषमलङ्घनादिकं भूमिकर्म । संयानम् ऋजुवक्रगोमूत्रिकामण्डललाघवादिगतिविशेषः । वधावधः हस्तदन्तगात्रैः अश्वनररथादेस्तत्प्रतिनिधेर्वा घातो ग्रहणं वा । हस्तियुद्धं हस्तिभिर्हीनतुल्यसमैः सह वरण्डकाद्यामिषमन्तरतः कृत्वा युद्धम् । 'प्रसिद्धलालापिण्डिकाख्यम्' इति स्वामी । नागरायणं गोपुराट्टालकपरिघादिभञ्जनम् । साङ्ग्रामिकं प्रकाशयुद्धसौप्तिकादिकम् । तस्योपविचार इति । सांनाह्यस्योपचरणम्– कक्ष्याकर्म वरत्राबन्धनशिल्पम्, ग्रैवेयकर्म कलापकादिकण्ठबन्धनकौशलम्, यूथकर्म च पूर्वकायोन्नतत्वापरकायोन्नतत्वसमकायत्वादिचिह्नैर्हस्तिशास्त्रोक्तैर्गिरिचरादियूथान्तर्गतत्वं विज्ञाय तत्तद्यूथानुगुणकर्मसु नियोजनं च । श्रीमूला.

**औपवाह्योऽष्टविधः– आचरणः, कुञ्जरौपवाह्यः, धोरणः, आधानगतिकः, यष्ट्युपवाह्यः, तोत्रोपवाह्यः, शुद्धोपवाह्यः, मार्गायुकश्चेति, तस्योपविचारः– शारदकर्म हीनकर्म नारोष्ट्रकर्म च ॥**

औपवाह्यमाह– औपवाह्योऽष्टविध इत्यादि । तत्र आचरणः पूर्वकायोन्नतावनतापरकायोन्नतावनतादिसर्वविधगजगत्यनुसारी । कुञ्जरौपवाह्यः कुञ्जरान्तरेण सहौपवाह्यादिकर्ता । धोरणः एकेनैव पक्षेण सर्वकर्मकरः । आधानगतिकः द्वित्रविधगतियायी सर्वगतिकुशलश्च । यष्ट्युपवाह्यः यष्ट्यैव केवलया क्रियाकारी । तोत्रोपवाह्यः सकण्टकयष्ट्या क्रियाकारी । शुद्धोपवाह्यः यष्टितोत्रनैरपेक्ष्येण पदाघातादिसंज्ञयैव केवलया सर्वकर्मकरः । मार्गायुकश्च मृगयुकर्मशिक्षितश्च इति । 'मार्गयुकः' इति ह्रस्वद्वितीयाच्कपाठो युक्तः । तस्य औपवाह्यस्य उपविचारः उपचरणम् । तदेवाऽऽह– शारदकर्म शारदस्याप्रतिभस्य अनुरूपं कर्म । शारदश्च चतुर्विधः स्थूलकृशलोहितप्राकृतभेदात् । तेन स्थूलस्य कृशीकरणं कृशस्य स्थूलीकरणं लोहितस्य मन्दाग्नेरग्निदीपनं प्राकृतस्य प्रकृतिस्थस्य स्वास्थ्यरक्षणमिति चतुष्प्रकारं शारदकर्म । हीनः निर्व्यायामः, तस्य व्यायामयोजनं हीनकर्म । नारोष्ट्रकर्म च संज्ञाशिक्षणं च । श्रीमूला.

**व्याल एकक्रियापथः । तस्योपविचार आयम्यैकरक्षः– कर्मशङ्कितोऽवरुद्धो विषमः प्रभिन्नः प्रभिन्नविनिश्चयो मदहेतुविनिश्चयश्च ॥**

व्याल इति । सः एकक्रियापथः एककर्ममार्गः । तस्योपविचारः, उच्यते इति शेषः । आयम्यैकरक्षः नियम्यैकेन रक्षणीयः । अथवा आयम्यः दण्डः, तेनैवैकेन रक्षणीयः सः । तस्य विशेषानाह– कर्मशङ्कितः शिक्षाकाले विसंवादी, अवरुद्धः कर्मानुपयोगोपेक्षितः, विषमः यदृच्छानुष्ठायी, प्रभिन्नः मददोषदुष्टः, प्रभिन्नविनिश्चयः मदात् विषादिदोषाच्च व्याकुलीभूतः, मदहेतुविनिश्चयश्च सदामदत्वादविज्ञातमदहेतुश्च ।

श्रीमूला.

**क्रियाविपन्नो व्यालः शुद्धः सुव्रतो विषमः सर्वदोषप्रदुष्टश्च ॥**

व्यालसामान्यलक्षणमाह– क्रियाविपन्न इति । दुष्टकर्मदूषितः व्यालः । शुद्ध इत्यादि तद्विशेषकथनम् । तत्र शुद्धः केवलघातुकः अष्टादशदोषयुक्तः । सुव्रतः केवल-

चालकः पञ्चदशदोषयुक्तः । विषमः घातनचालनोभयकारी शुद्धसुव्रतोभयदोषैर्युक्तः । सर्वदोषप्रदुष्टः उक्तैस्त्रयस्त्रिंशद्दोषैः स्वकीयैश्चैकोनविंशतिदोषैर्युक्तः । शुद्धादीनां तद्दोषाणां च लक्षणं हस्तिशास्त्रतोऽवगन्तव्यम् ।

श्रीमूला.

**तेषां बन्धनोपकरणमनीकस्थप्रमाणम् । आलानग्रैवेयकक्ष्यापरायणपरिक्षेपोत्तरादिकं बन्धनम् । अङ्कुशवेणुयन्त्रादिकमुपकरणम् । वैजयन्तीक्षुरप्रमालास्तरणकुथादिकं भूषणम् । वर्मतोमरशरावापयन्त्रादिकः साङ्ग्रामिकालंकारः ॥**

गजानां बन्धनोपकरणं बन्धनमुपकरणं च अनीकस्थप्रमाणम्— अनीकस्थः हस्तिशिक्षाविचक्षणः, तत्प्रमाणकं तदुपदिष्टं करणीयम् । आलानेत्यादि । आलानादिकं बन्धनम् । तत्र आलानं स्तम्भः । ग्रैवेयं कलापकः कण्ठबन्धः । कक्ष्या वरत्रा । परायणम् आरोहणालम्बरज्जुः । परिक्षेपः पादपाशादिः । उत्तरं द्वितीयं कलापादिकम् । आदिशब्दात् त्रिपद्यादिग्रहणम् । अङ्कुशेत्यादि । अङ्कुशादिकम् उपकरणम् । तत्र अङ्कुशः सृणिः, वेणुः दण्डः, यन्त्रम् आयुधागाराध्यक्षोक्तं पाञ्चालिकादि । भूषणमाह— वैजयन्तीत्यादि । वैजयन्ती गजपताका, क्षुरप्रमाला नक्षत्रमाला, आस्तरणं नमतम्, कुथः वर्णकम्बलः । आदिपदात् शङ्खादिग्रहणम् । साङ्ग्रामिकालंकारमाह— वर्मेत्यादि । वर्म कवचम्, तोमरः चतुर्हस्तादिरायुधागाराध्यक्षोक्तः, शरावापः तूणी, यन्त्रं नानारूपमायुधागाराध्यक्षोक्तम् एतदादिकः साङ्ग्रामिकः युद्धार्थः अलंकारः ।

श्रीमूला.

**चिकित्सकानीकस्थारोहकाधोरणहस्तिपकौपचारिकविधापाचकयावसिकपादपाशिककुटीरक्षकौपशायिकादिरौपस्थायिकवर्गः ॥**

हस्तिकर्मकरवर्गमाह— चिकित्सकेत्यादि । चिकित्सकः गजवैद्यः । अनीकस्थः प्रतीतः । आरोहकः शास्त्रज्ञो गजारोहः । आधोरणः शास्त्राभिज्ञः कर्मकुशलः । हस्तिपकः हस्तिरक्षी । औपचारिकः चारणोद्वर्तनाभ्यञ्जनादिकर्ता । विधापाचकः आहारपक्ता । यावसिकः यवसप्रवेशकः । पादपाशिकः पादबन्धकः । कुटीरक्षकः शालाप्रालनशुचीकरणाद्यधिकृतः । औपशायिकः शयनशालाधिकृतः । एतदादिः औपस्थायिकवर्गः कर्मकरवर्गः ।

श्रीमूला.

**चिकित्सककुटीरक्षविधापाचकाः प्रस्थौदनं स्नेहप्रसृतिं क्षारलवणयोश्च द्विपलिकं हरेयुः । दशपलं मांसस्यान्यत्र चिकित्सकेभ्यः ॥**

चिकित्सकादयस्त्रयः प्रस्थौदनं प्रस्थप्रमाणमन्नं स्नेहप्रसृतिं तैलघृतादेरर्धाञ्जलिं क्षारलवणयोश्च द्विपलिकं पलद्वयप्रमाणं हरेयुः हस्त्याहाराल्लभेरन् प्रत्येकमात्मार्थे । दशपलं मांसस्य अन्यत्र चिकित्सकेभ्यः चिकित्सकान् वर्जयित्वा हरेयुः कुटीरक्षाः विधापाचकाश्च । श्रीमूला.

**पथिव्याधिकर्ममदजराभितप्तानां चिकित्सकाः प्रतिकुर्युः ॥**

पथ्यादिपञ्चकाभितप्तानां हस्तिनां चिकित्सकाः प्रतिकुर्युः पथिगमनादिजन्याभितापप्रतीकारं कुर्युः । श्रीमूला.

**स्थानस्याशुद्धिर्यवसस्याग्रहणं स्थले शायनमभागे घातः परारोहणमकाले यानमभूमावतीर्थेऽवतारणं तरुषण्ड इत्यत्ययस्थानानि । तमेषां भक्तवेतनादाददीत ॥**

दण्डहेतूनाह— स्थानस्येत्यादि । स्थानस्य अशुद्धिः अमार्जनम्, यवसस्य अग्रहणम् आशनाभावः, स्थले स्थण्डिले शायनम्, अभागे घातः ताडनानर्हे मर्मादौ ताडनम्, परारोहणम् आरोहणानधिकृतस्याऽऽरोहणम्, अकाले यानम्, अनियते काले चारणम्, अभूमौ विषमदेशे यानम्, अतीर्थे नद्यादेरघट्टे अवतारणम्, तरुषण्डे तरुगहने अवतारणम् इति एवंजातीयानि अत्ययस्थानानि दण्डस्य कारणानि, अर्थात् औपस्थायिकवर्गस्याध्यक्षस्य च । तं दण्डम् एषां भक्तवेतनात् आददीत गृह्णीयात् ।

श्रीमूला.

**तिस्रो नीराजनाः कार्याश्चातुर्मास्यृतुसंधिषु । भूतानां कृष्णसंधीज्याः सेनान्यः शुक्लसंधिषु ॥**

विधिशेषं श्लोकद्वयेनाऽऽह— तिस्र इति । तिस्रो नीराजनाः बलवृद्धिदुरितशान्तिप्रयोजनाः आरात्रिकाः

कार्याः । कदा कदा ? चातुर्मास्यर्तुसंधिषु— चातुर्मास्यः चतुर्षु मासेषु भवाः पौर्णमास्यः, तासु ऋतुसंधिषु पूर्वापरऋतुसंधिस्थासु अर्थात् कार्तिकीफाल्गुन्याषाढीषु । भूतानां कृष्णसंधीज्याः अमावास्यासु बलयः कार्याः । सेनान्यः स्कन्दस्य शुक्लसंधिषु पूर्णिमासु, इज्याः कार्याः इति शेषः । श्रीमूला.

**दन्तमूलपरीणाहद्विगुणं प्रोज्झ्य कल्पयेत् । अब्दे द्व्यर्धे नदीजानां पञ्चाब्दे पर्वतौकसाम् ॥**

दन्तमूलपरीणाहद्विगुणं विषाणमूलपरिक्षेपमानद्विगुणमानं भागं प्रोज्झ्य परिहाय कल्पयेत् छित्वा गृह्णीयात् । प्रोज्झितातिरिक्तं दन्तभागमित्यार्थम् । छेदकालमाह— अब्दे द्व्यर्धे सार्धे वर्षद्वये अतीते नदीजानां नदीचारिणां हस्तिनाम्, पञ्चाब्दे अतीते पर्वतौकसां गिरिचराणाम् । श्रीमूला.

रथकर्मान्ताः सारथ्यादीनां कर्माणि च

**[1]अश्वाध्यक्षेण रथाध्यक्षो व्याख्यातः ॥**

'रथाध्यक्षः' इति सूत्रम् । रथानाम् अध्यक्षः घटनसंस्करणाद्यधिकृतः रथाध्यक्षः । अर्थात् तत्कर्माभिधीयते इति सूत्रार्थः ।

अश्वाध्यक्षेणेति । अश्वाध्यक्षविधानेन रथाध्यक्षः व्याख्यातः रथाध्यक्षविधानं व्याख्यातम् । रथ्यानां शालानिवेशनम्, विधादानम्, कर्मायोजनम्, गन्तव्याध्वपरिकल्पनम्, बन्धनोपकरणघटनम्, कर्मकरनियोजनम्, नीराजनमित्येवंजातीयमश्वाध्यक्षोक्तं कर्म रथाध्यक्षेणाप्यनुष्ठेयमित्यर्थः । श्रीमूला.

**स रथकर्मान्तान् कारयेत् ॥**

अधिकं त्वाह— स इत्यादि । रथाध्यक्षः रथकर्मान्तान् घटनसंस्करणरूपान् कारयेत् । श्रीमूला.

**दशपुरुषो द्वादशान्तरो रथः । तस्मादेकान्तरावरा आ षडन्तरादिति सप्त रथाः ॥**

रथस्य प्रमाणमाह— दशपुरुष इति । 'द्वादशाङ्गुला वितस्तिश्छायापौरुषं च' ( कौ. २।२० ) इति द्वादशाङ्गुलो यः पुरुष उक्तः तेन पुरुषप्रमाणेन दशपुरुषः दशवितस्तिः अर्थात् उत्सेधे पञ्चहस्तः, द्वादशान्तरः हस्तषट्कविस्तारः रथः । अयमुत्तमः । इतो न्यूनप्रमाणान् रथानाह— तस्मादिति । दशपुरुषरथात् एकान्तरावराः आ षडन्तरात् आ षड्वितस्तिविस्तारात् एकैकवितस्तिविस्तारन्यूनाः, अर्थात् विस्तारन्यूनतानुगुणोत्सेधन्यूनतायुक्ताश्च, रथा भवन्तीति शेषः । इति अनेन प्रकारेण सप्त रथाः दशपुरुषेण आदिमेन सह । श्रीमूला.

**देवरथपुष्यरथसाङ्ग्रामिकपारियाणिकपरपुराभियानिकवैनयिकांश्च रथान् कारयेत् ॥**

विनियोगभेदनिबन्धनांस्तत्संज्ञाभेदानाह— देवरथेत्यादि । देवरथः यात्रोत्सवेषु देवप्रतिमासंचारणार्थो रथः, पुष्यरथः विवाहादिमङ्गलावसरारोहणार्थः, साङ्ग्रामिकः युद्धार्थः, पारियाणिकः अध्वसंचारार्थः, परपुराभियानिकः शत्रुदुर्गभञ्जनावसरोपयोज्यः, वैनयिकः— विनयः चर्याशिक्षणम्, तदर्थः, एवंसंज्ञान् रथान् कारयेत् । श्रीमूला.

**इष्वस्त्रप्रहरणावरणोपकरणकल्पनाः सारथिरथिकरथ्यानां च कर्मस्वायोगं विद्यात् । आ कर्मभ्यश्च भक्तवेतनं भृतानामभृतानां च योग्यारक्षानुष्ठानमर्थमानकर्म च ॥**

इष्वादिकल्पनाः— इषूणां बाणानां सतूणीराणाम् अस्त्राणां धनुषां प्रहरणानां तोमरादीनाम् आवरणानां पल्याणादीनाम् उपकरणानां वल्गादीनां च कल्पनाः रचनाः, सारथिरथिकरथ्यानां कर्मसु आयोगं च यन्तॄणां रथयोक्तॄणां रथवाहानां च स्वस्वकर्मसु अभियोगातिशयं च विद्यात् । आ कर्मभ्यश्चेति । आ कर्मणां परिसमाप्तेः भक्तवेतनं भृतानां नित्यनियुक्तशिल्पिनाम् अभृतानाम् आगन्तुशिल्पिनां च सपरिकर्मिणाम्, योग्यारक्षानुष्ठानम्— योग्यानां स्वकर्मण्यतिनिपुणानां शिल्पिनां यद्वा अश्वहृदयरथचर्यादिशिक्षारूपयोग्योपदेशाचार्याणाम् आरक्षा परोपजापात् रक्षणम्, अनुष्ठानं व्यापारसौष्ठवासौष्ठवमात्रां च, अर्थमानकर्म च— अर्थकर्म प्रभूतधन-

(१) कौ. २।३३.

दानम्, मानकर्म पारितोषिकवलयवस्त्रादिदानसत्कारं च विद्यात् आकलयेत्। श्रीमूला.

पत्त्यध्यक्षसेनापत्योः कर्माणि

**एतेन पत्त्यध्यक्षो व्याख्यातः। स मौलभृतश्रेणिमित्रामित्राटवीबलानां सारफल्गुतां विद्यात्। निम्नस्थलप्रकाशकूटखनकाकाशदिवारात्रियुद्धव्यायामं च विद्यात्। आयोगमयोगं च कर्मसु॥**

'पत्त्यध्यक्षः' इति सूत्रम्। पदात्यधिकृतव्यापारोऽभिधीयते इति सूत्रार्थः।

एतेनेति। उक्तेन रथाध्यक्षव्यापारेण पत्त्यध्यक्षो व्याख्यातः। पदात्यध्यक्षः इष्वस्त्रप्रहरणादिकल्पनाः कर्मस्वायोगं भक्तवेतनं योग्यारक्षानुष्ठानमर्थमानकर्म चेत्येतत् सर्वं पदातिविषयं चिन्तयेदित्यर्थः। अधिकविधिमाह— स इत्यादि। पत्त्यध्यक्षः मौलभृतश्रेणिमित्रामित्राटवीबलानाम्— मौलं मूले स्थानीये भवं सैन्यम्, भृतं वेतनपरिगृहीतं बलम्, श्रेणिः जनपदवर्ती आयुधीयगणः, मित्रबलम्, अमित्रबलम्, अटवीपालबलमिति षड्विधानां बलानां सारफल्गुतां विद्यात् स्थानविनियोगाय जानीयात्। निम्नादियुद्धव्यायामं च निम्नयुद्धाद्यष्टविधयुद्धशिक्षां च विद्यात्। तत्र निम्नयुद्धं सतृणजलमध्यदेशयुद्धम्। स्थलयुद्धं निरुदकस्तम्बदेशयुद्धम्। प्रकाशयुद्धं प्रतीतम्। कूटयुद्धं साङ्ग्रामिकाधिकरणविकल्पितं कपटयुद्धम्। खनकयुद्धं भूमिं खात्वा तत्र स्थित्वा क्रियमाणं युद्धम्। आकाशयुद्धं प्राकारादिकमारुह्य क्रियमाणं युद्धम्। दिवायुद्धरात्रियुद्धे प्रतीते। आयोगमयोगं च कर्मस्विति। पत्तीनां स्वकर्मसु 'सर्वदेशकालशस्त्रवहनं व्यायामश्चेति पदातिकर्माणि' (कौ. १०।४) इति साङ्ग्रामिकाधिकरणे वक्ष्यमाणेषु तत्परत्वमव्यापारं च विद्यात्। श्रीमूला.

मुद्राध्यक्षकर्तव्यम्

**[1]मुद्राध्यक्षो मुद्रां माषकेण दद्यात्॥**

'मुद्राध्यक्षः' इति सूत्रम्। मुद्रा नाम पण्यलेख्यादिषु करणीयो राजकीयश्चिह्नविशेषः शुल्काध्यक्षे प्रस्तुतः, तस्याः अध्यक्षो मुद्राध्यक्षः। सः तद्व्यापारश्च तत्रानुक्त इहाभिधीयते इत्यर्थः।

मुद्राध्यक्ष इति। सः मुद्राम् 'नायं चोरः शत्रुचारो वा' इति प्रत्ययजननार्थी माषकेण दद्यात् माषकं राजकोशवृद्ध्यर्थं गृहीत्वा दद्यात् प्रवेष्ट्रे निष्क्रमित्रे च। श्रीमूला.

**समुद्रो जनपदं प्रवेष्टुं निष्क्रमितुं वा लभेत॥**

मुद्राग्रहणस्य फलमाह— समुद्र इति। गृहीतमुद्र एव जनः जनपदं विजिगीषुदेशं प्रवेष्टुं निष्क्रमितुं तस्मान्निर्गन्तुं च लभेत अधिकारं प्राप्नुयादित्यर्थः। श्रीमूला.

**द्वादशपणममुद्रो जानपदो दद्यात्। कूटमुद्रायां पूर्वः साहसदण्डः। तिरोजनपदस्योत्तमः॥**

अगृहीतमुद्रस्य प्रविशतो निर्गच्छतश्च दण्डमाह— द्वादशपणमित्यादि। द्वादशपणं दण्डम् अमुद्रः अगृहीतमुद्रः जानपदः विजिगीषुजनपदभवः दद्यात्। अन्यजनपदभवस्य तु अमुद्रस्य कूटमुद्राकरणवक्ष्यमाणदण्डवृद्धिन्यायेन दण्डवृद्धिः काचित् स्थापनीया। कूटमुद्रायां कृत्रिममुद्रायां प्रदर्श्यमानायां पूर्वः साहसदण्डः। अर्थात् विजिगीषुजनपदभवस्यैव। तिरोजनपदस्य अन्यजनपदभवस्य कूटमुद्राप्रदर्शयितुः उत्तमः साहसः। श्रीमूला.

गोप्रचारभूमिनियुक्तस्य विवीताध्यक्षस्य कर्तव्यम्

**विवीताध्यक्षो मुद्रां पश्येत्॥**

'विवीताध्यक्षः' इति सूत्रम्। विवीतं गोप्रचरणार्हस्तृणादिमान् प्रदेशः, तस्याध्यक्षः तद्व्यापारः अभिधीयते इति सूत्रार्थः। ये एते मुद्राध्यक्षदण्डनीया उक्ताः अमुद्रकूटमुद्राः ते महापथमृजुमपहाय विमार्गेणैव विवीतगतेन प्रायश्चरन्तो विवीताध्यक्षेणैव स्वयं स्वपुरुषद्वारेण वा गृहीत्वा मुद्राध्यक्षायार्पणीया इत्यतो मुद्राध्यक्षानन्तरं विवीताध्यक्षकथनसंगतिः।

विवीताध्यक्ष इति। सः मुद्रां पश्येत् प्रतिविवीतपथिकं मुद्राऽस्ति न वेति परीक्षेत। श्रीमूला.

---

(१) कौ. २।३४.

ध. रा. २९०

**भयान्तरेषु च विवीतं स्थापयेत् । चोरव्यालभयान्निम्नारण्यानि शोधयेत् ॥**

मुद्राविचयस्य व्याप्त्यर्थमाह— भयान्तरेषु चेति । भयं चोरपरापसर्पचारशङ्का, तद्गोचरेषु भूप्रदेशेषु कृष्येष्वकृष्येषु वा सर्वविधेषु विवीतं स्थापयेत् । एतेन 'अकृष्यायां भूमौ पशुभ्यो विवीतानि प्रयच्छेत्' (कौ. २।२) इति भूमिच्छिद्रविधानप्रकरणोक्त्या कृष्यभूमौ विवीताभावात् तत्पथचारिषु मुद्राविचयाभावप्रसङ्ग इति शङ्का निरस्ता । चोरव्यालभयात् निम्नारण्यानि निम्नानि गभीराणि भूच्छिद्राणि अरण्यानि च शोधयेत् तस्कराः हिंस्रमृगाश्च तत्र निलीय वसन्ति न वेति मुहुः परीक्षेत । श्रीमूला.

**अनुदके कूपसेतुबन्धोत्सान् स्थापयेत्, पुष्पफलवाटांश्च ॥**

निर्जले प्रदेशे कूपसेतुबन्धोत्सान् कूपान् उदपानान् सेतुबन्धान् जलावरोधबन्धान् उत्सान् तात्कालिकान् क्षुद्रकूपांश्च स्थापयेत् । पुष्पफलवाटान् चकारात् प्रपादिकं च स्थापयेत् । श्रीमूला.

**लुब्धकश्वगणिनः परिव्रजेयुररण्यानि । तस्करामित्राभ्यागमे शङ्खदुन्दुभिशब्दमग्राह्याः कुर्युः शैलवृक्षाधिरूढा वा शीघ्रवाहना वा ॥**

लुब्धकाश्च श्वगणिनश्च परिव्रजेयुररण्यानि वनानि परितश्चरेयुः अर्थाच्चोरामित्रादीनां प्रवेशपरिहाराय प्रविष्टपरिज्ञानाय च । चोराद्यागमस्य अन्तपालादीन् प्रति निवेदनार्थमाह— तस्करेत्यादि । तस्करामित्राभ्यागमे शङ्खदुन्दुभिशब्दम् अग्राह्याः तस्करामित्राणां ग्रहणागोचराः सन्तः कुर्युः । अग्राह्यत्वप्रकारमाह— शैलवृक्षाधिरूढा वेत्यादि । स्पष्टार्थम् । श्रीमूला.

**अमित्राटवीसंचारं च राज्ञो गृहकपोतैर्मुद्रायुक्तैर्हारयेयुः धूमाग्निपरंपरया वा ॥**

अमित्राटवीसंचारं च अमित्राणां शत्रूणाम् अटवीसंचारं मृगयाद्यर्थं वनसंचारवृत्तान्तं राज्ञः स्थानीयस्थितस्य गृहकपोतैर्मुद्रायुक्तैः लेखयुक्तैर्गृहकपारावतैः हारयेयुः नयेयुः । धूमाग्निपरंपरया वा हारयेयुः दिवा धूमपरंपरया नक्तमग्निपरंपरया वा नयेयुः । परंपरा तु आ वनाद् आस्थानीयं विवीताध्यक्षपुरुषाः कृतसङ्केताः क्रोशान्तरेषु स्थिताः वनगतपुरुषप्रथमप्रदर्शितधूमाग्निदर्शनात् तदुत्तरक्रोशान्तरस्थितेन स्वोत्तरं क्रोशान्तरस्थितं प्रति धूमाग्निप्रदर्शनम्, तेन स्वोत्तरं प्रति, तेन स्वोत्तरं प्रतीत्येवंरूपा द्रष्टव्या । श्रीमूला.

**द्रव्यहस्तिवनाजीवं वर्तनीं चोररक्षणम् । सार्थातिवाह्यं गोरक्ष्यं व्यवहारं च कारयेत् ॥**

व्यापारशेषं श्लोकेनाऽऽह— द्रव्येत्यादि । द्रव्यहस्तिवनाजीवं द्रव्यवने हस्तिवने च विद्यमानो य आजीवः उपजीव्यपदार्थः कुप्याध्यक्षहस्त्यध्यक्षोपादेयव्यतिरिक्तः यवसेन्धनाङ्गारादिः तम्, वर्तनीं दुर्गमार्गसंतारणभृतिम्, चोररक्षणं तद्भृतिम्, सार्थातिवाह्यं भयस्थानेषु वणिक्संघस्यातिवाहनवेतनम्, गोरक्ष्यं गोरक्षानिमित्तमादेयम्, व्यवहारं यथोक्तपदार्थक्रयविक्रयव्यवहारं च कारयेत् अनुष्ठापयेत् । श्रीमूला.

राजार्थसंग्राहकस्य समाहर्तुः कर्तव्यम्— जनपदं विविधप्रकारैः संविभज्य, राजार्थप्रकारान् परिगणय्य, गोपान् प्रणिधींश्च च नियोज्य जनपदचिन्तनम्

**[१]समाहर्ता चतुर्धा जनपदं विभज्य ज्येष्ठमध्यमकनिष्ठविभागेन ग्रामाग्रं परिहारकमायुधीयं धान्यपशुहिरण्यकुप्यविष्टिप्रतिकरमिदमेतावदिति निबन्धयेत् ॥**

'समाहर्तृप्रचारः' इति सूत्रम् । सर्वेभ्य आयस्थानेभ्यो दुर्गराष्ट्रखनिसेतुवनव्रजवणिक्पथलक्षणेभ्यो राजार्थानां सम्यगाहर्ता समाहर्ता, तस्य प्रचारः व्यापारः सर्वजनपदचिन्तनरूपः अभिधीयते इति सूत्रार्थः । एकैकार्थाध्यक्षाणां प्रतिपादनानन्तरं सर्वार्थाध्यक्षस्य प्राप्तावसरत्वात् कथनम् ।

समाहर्तेत्यादि । समाहर्ता चतुर्धा जनपदं विभज्य चतुर्भिरंशैर्जनपदं पृथक्कृत्य ज्येष्ठमध्यमकनिष्ठविभागेन चतुर्ष्वप्यंशेषु प्रत्येकं ज्येष्ठो मध्यमः कनिष्ठ इति विभागं

---

(१) कौ. २।३५.

कुल्यसंख्याप्रयुक्तं ग्रामाणां सारफल्गुत्वप्रयुक्तं च कृत्वा ग्रामाग्रं निबन्धयेत् ग्रामाणां प्रातिस्विकं सामूहिकं च परिमाणं लेखयेत् । कथं निबन्धयेदित्याह– इदमेतावदितीति । एतच्च ग्रामाग्रादौ सर्वत्र संबध्यते । अमुकग्रामः ईदृग्रूपः एतत्परिमाणः, अमुकग्रामसमुदायः ईदृग्रूपः एतत्परिमाणश्चेत्यनेन प्रकारेण । तथा परिहारकम्– परिहारः महादानादिनिमित्तः करमोक्षः, तद्युक्तं ग्रामाग्रम् इदमेतावदिति निबन्धयेत् एते एतावन्तो ग्रामाः करमोक्षिताः इति लेखयेत् । आयुधीयं दण्डकरदायकं ग्रामाग्रम् इदमेतावदिति निबन्धयेत् एते एतावन्तो ग्रामाः एतावत आयुधीयान् प्रयच्छन्तीति लेखयेत् । धान्यादिपञ्चकप्रतिकरम् इदमेतावदिति निबन्धयेत् । प्रतिनियतः करः प्रतिकरः । स धान्यादिषु प्रत्येकं संबध्यते । धान्यप्रतिकरं पशुप्रतिकरं हिरण्यप्रतिकरं कुप्यप्रतिकरं विष्टिप्रतिकरं च इदमेतावदिति निबन्धयेत् एष्वेषु ग्रामेषु अमुकामुकधान्येभ्यः एतावद्भ्यः एतावांस्तत्तद्धान्यप्रतिकरः प्रतिवत्सरमुपसंपद्यते इति लेखयेत्, एतावान् पशुप्रतिकरः अमुकामुकजातीयान् वाहदोहलोमाद्युपकर्तॄन् एतावतः पशून् उपनयतीति लेखयेत्, एषः एतावान् हिरण्यप्रतिकरः कोशप्रवेश्यं हेमरूप्यं रूप्यरूपं ताम्ररूपं चैतावत् प्रयच्छतीति लेखयेत्, कुप्यप्रतिकर एष एतावान् एतान्येतावन्ति कुप्यद्रव्याणि वितरतीति लेखयेत्, विष्टिप्रतिकर एष एतावानेतावतां कर्मकरपुरुषाणामर्पणेनोपकरोतीति लेखयेत् । श्रीमूला.

**तत्प्रदिष्टः पञ्चग्रामीं दशग्रामीं वा गोपश्चिन्तयेत् ॥**

इत्थं कृतनिबन्धस्य जनपदस्य चतुर्भागमेकैकमेकैकः स्थानिकश्चिन्तयेदिति वक्ष्यति । चतुर्भागेऽपि ग्रामान् पञ्चशो दशशो वा विभज्य एकैकस्मिन् ग्रामविभागे स्थानिकनियम्यमवान्तरचिन्तकं गोपसंज्ञमेकैकं कुर्यादित्याह– तत्प्रदिष्ट इति । तेन समाहर्त्रा प्रदिष्टः नियुक्तः पुरुषः पञ्चग्रामीं दशग्रामीं वा ग्रामाणामुत्तमत्वे तत्पञ्चकम्, अधमत्वे तद्दशकम्, अर्थान्मध्यमत्वे तत्षट्कादिकं च यथोचितं गोपश्चिन्तयेत् गोपसंज्ञः सन् चिन्तयेत् । यश्चिन्तयति स गोपसंज्ञयोच्यते इत्यर्थः ।

श्रीमूला.

**सीमावरोधेन ग्रामाग्रं कृष्टाकृष्टस्थलकेदारारामषण्डवाटवनवास्तुचैत्यदेवगृहसेतुबन्धश्मशानसत्रप्रपापुण्यस्थानविवीतपथिसंख्यानेन क्षेत्राग्रम्, तेन सीम्नां क्षेत्राणां च मर्यादारण्यपथिप्रमाणसंप्रदानविक्रयानुग्रहपरिहारनिबन्धान् कारयेत् । गृहाणां च करदाकरदसंख्यानेन ॥**

कथं चिन्तयेदित्याह– सीमावरोधेनेति । नदीशैलादिसीमपरिच्छेदेन ग्रामाग्रं ग्रामपरिमाणं कारयेत् निबन्धयेत् । कृष्टाकृष्टाद्यष्टादशसंख्यानेन क्षेत्राग्रं क्षेत्रपरिमाणं कारयेत् एतावत् कृष्टमेतावदकृष्टमित्येवं कृष्टादिक्षेत्रं परिच्छिद्य निबन्धयेत् । तत्र कृष्टं कृष्टपच्यव्रीह्याद्युत्पत्तिक्षेत्रम् । अकृष्टम् अकृष्टपच्यनीवाराद्युत्पत्तिक्षेत्रम् । स्थलम् उज्जटदेशः । केदारः शालेयादिक्षेत्रम् । आरामः उपवनम् । षण्डः कदल्यादिक्षेत्रम् । वाटः इक्ष्वादिभूमिः । वनं ग्रामवास्युपजीव्यवृक्षवृन्दस्थानम् । वास्तु ग्रामभूमिः । चैत्यः उद्देशवृक्षः । देवगृहादित्रयं प्रसिद्धम् । सत्रम् अन्नदानशाला । प्रपा पानीयशाला । पुण्यस्थानं तीर्थादि । विवीतं गोप्रचारप्रदेशः । पन्थाः रथशकटपद्गतागतमार्गः । तेनेति । तेन संख्यानेन सीम्नां नदीशैलादीनां क्षेत्राणां च मर्यादादिनिबन्धान् कारयेत् मर्यादादिपुस्तकानि लेखयेत् । तत्र मर्यादा परस्परावधिः । अरण्यम् अनुपजीव्यवनम् । पन्थाः कृष्टादिपरस्परप्रवेशनिर्गममार्गः । प्रमाणं स्वस्वपरिमाणम् । संप्रदानम् अमुकेनामुकस्य दत्तमितीदृशम् । विक्रयः प्रसिद्धः । अनुग्रहः धान्याद्दृणदानेन कर्षकाणामुपकारः । परिहारः करमोक्षः । गृहाणां च करदाकरदसंख्यानेन निबन्धान्, कारयेदिति वर्तते । एतावन्ति गृहाणि करदायकैर्जनैरध्युषितानि, एतावन्ति चाकरदायकैरित्येवं संख्याय पुस्तकेषु लेखयेत् ।

श्रीमूला.

**तेषु चैतावच्चातुर्वर्ण्यमेतावन्तः कर्षकगोरक्षकवैदेहकारुकर्मकरदासाश्चैतावच्च द्विपदचतुष्पदमिदं च हिरण्यविष्टिशुल्कदण्डं समुत्तिष्ठतीति ॥**

तेषु च गृहेषु एतावत् चातुर्वर्ण्यम् एतावन्तः अमुकामुकवर्णभवा जनाः, एतावन्तः कर्षकादयः षड्वर्गाश्च, एतावच्च द्विपदचतुष्पदमिदं च पिण्डेनैतावन्तो मनुष्याश्च पशवश्चैते। वसन्तीति सर्वत्र शेषः। इदं च हिरण्यविष्टिशुल्कदण्डम्– हिरण्यं स्वर्णरूप्यादि, विष्टिः कर्मकरः, शुल्कः घट्टदेयम्, दण्डः सैन्यः इत्येतच्चतुष्टयं वार्षिकं समुत्तिष्ठति उत्पद्यते राजार्थम्। इति अनेन प्रकारेण। निबन्धान् कारयेदिति वर्तते। श्रीमूला.

**कुलानां च स्त्रीपुरुषाणां बालवृद्धकर्मचरित्राजीवव्ययपरिमाणं विद्यात् ॥**

कुलानां च स्त्रीपुरुषाणाम्– कुटुम्बसंबन्धिनां च स्त्रीणां पुरुषाणां च बालादिपरिमाणं बालवृद्धपरिमाणं एतावद्वयस्काः स्त्रियः पुरुषाश्चेत्येवं वयःपरिच्छेदम्, कर्माणि वर्णजातिप्रसिद्धानि तत्परिमाणम्, चरित्रं देशजात्याद्याचारः तत्परिमाणम्, आजीवः वृत्तिः अर्थात् तन्निमित्तः आयः तत्परिमाणम्, व्ययः कुटुम्बभरणार्थधनविनियोगः तत्परिमाणं च विद्यात् गोपः। श्रीमूला.

**एवं च जनपदचतुर्भागं स्थानिकः चिन्तयेत् ॥**

अनेन प्रकारेण जनपदचतुर्भागं स्थानिकः स्थानिकपदव्यपदेश्यश्चतुर्भागनायकः चिन्तयेत्।

श्रीमूला.

**गोपस्थानिकस्थानेषु प्रदेष्टारः कार्यकरणं बलिप्रग्रहं च कुर्युः ॥**

गोपस्थानिकस्थानेषु गोपानां स्थानिकानां च स्वव्यापारानुष्ठानप्रदेशेषु प्रदेष्टारः कण्टकशोधनाधिकारिणः कार्यकरणं कण्टकोद्धरणलक्षणकार्यानुष्ठानं बलिप्रग्रहं च बलिनां गोपस्थानिकनिबन्धारूढानां राजार्थानां प्रसभग्रहणं च अर्थात् स्वयमदायकेभ्यः, अथवा बलिप्रग्रहं बलिनां राष्ट्रमुख्यानां राजार्थोत्थापनविघ्नकारिणां प्रग्रहं गोपस्थानिकविधेयास्ते यथा स्युस्तथा दमनं कुर्युः। श्रीमूला.

**समाहर्तृप्रदिष्टाश्च गृहपतिकव्यञ्जना येषु ग्रामेषु प्रणिहितास्तेषां ग्रामाणां क्षेत्रगृहकुलाग्रं विद्युः। मानसंजाताभ्यां क्षेत्राणि भोगपरिहाराभ्यां गृहाणि वर्णकर्मभ्यां कुलानि च। तेषां जङ्घाग्रमायव्ययौ च विद्युः। प्रस्थितागतानां च प्रवासावासकारणमनर्थ्यानां च स्त्रीपुरुषाणां चारप्रचारं च विद्युः ॥**

'गृहपतिकवैदेहकतापसव्यञ्जनाः प्रणिधयः' इति सूत्रम्। गृहपतिकव्यञ्जनाः वैदेहकव्यञ्जनास्तापसव्यञ्जनाश्च संस्थाविशेषाः गूढपुरुषोत्पत्तिप्रकरणोक्ताः प्रणिधयः गूढपुरुषाः लक्षणया तेषां प्रणिधानानि ग्रामेषु जनपदेषु च नियोजनानि अभिधीयन्ते इति सूत्रार्थः। 'गृहपतिकवैदेहकतापसव्यञ्जनप्रणिधयः' इति समस्तपाठे गृहपतिव्यञ्जनादीनां त्रयाणां संस्थाविशेषाणां प्रणिधयः प्रणिधानानि नियोजनानीति स्पष्ट एवार्थः। संस्थापञ्चके तिसृणां प्राधान्यात् ग्रहणमन्ययोरप्यभ्युपायत्वाविशेषादुपलक्षणम्। तेन कापटिकोदास्थितसंस्थयोरपि प्रणिधानं संगृहीतं द्रष्टव्यम्। संस्थाप्रणिधानं च ग्रामजनपदवृत्तान्तज्ञानस्य गोपस्थानिकप्रचारपरीक्षणस्य च समाहर्त्रवश्यापेक्षणीयस्याभ्युपायभूतं समाहर्तृप्रचारस्यैवाङ्गमिति तस्येहाभिधानसंगतिः।

तत्र गृहपतिव्यञ्जनप्रणिधानं तावदाह– समाहर्तृप्रदिष्टाश्चेति। समाहर्त्रा नियुक्ताः गृहपतिकव्यञ्जनाः येषु ग्रामेषु प्रणिहिताः नियोजिताः तेषां ग्रामाणां क्षेत्रगृहकुलाग्रं क्षेत्रसंख्यां गृहसंख्यां कुलसंख्यां च विद्युः। कानि कानि कथं विद्युरित्याह– मानसंजाताभ्यां क्षेत्राणीति। मानेन आयामविस्तारादिपरिच्छेदेन उत्पन्नसस्यपिण्डेन च क्षेत्राग्रं विद्युः। भोगपरिहाराभ्यां गृहाणि करकरमोक्षाभ्यां गृहवास्तव्यान् विद्युः। वर्णकर्मभ्यां कुलानि च ब्राह्मणादिजात्या तथा यजनकृष्यादिकर्मणा कुटुम्बानि च विद्युः। तेषामिति। कुलानां जङ्घाग्रम्– जङ्घाशब्देन पादचारिणो लक्ष्यन्ते, कुलसंबन्धिनां पादचारिणां द्विपदचतुष्पदानामग्रम् इयत्ताम् आयव्ययौ च धनोत्पत्तिविनियोगौ च विद्युः। प्रस्थितेत्यादि। प्रस्थिता-

गतानामिति व्यस्तसमस्तविपर्यस्तग्रहणम् । प्रस्थितानां निजाधिवासस्थलादन्यत्र वस्तुं गच्छताम्, आगतानां वस्तुमन्यप्रदेशादागतानाम्, प्रस्थितागतानां वस्तुमन्यत्र गत्वा पुनः प्रत्यागतानाम्, आगतप्रस्थितानां क्वचित् वस्तुमागत्य ततोऽन्यत्र वस्तुं प्रस्थितानां चेत्यर्थः । प्रवासावासकारणं प्रवासे अध्युष्यमाणस्थलवासपरित्यागे आवासे तदन्यस्थलवासपरिग्रहे च कारणं विद्युः । अनर्थ्यानां च स्त्रीपुरुषाणां अनाशंसनीयानां नर्तकीबन्धक्यादीनां स्त्रीणां विटकितवादीनां पुरुषाणां च प्रवासावासकारणं विद्युः । चारप्रचारं च परप्रयुक्तापसर्पप्रवृत्तिं च विद्युः । श्रीमूला.

**एवं वैदेहकव्यञ्जनाः स्वभूमिजानां राजपण्यानां खनिसेतुवनकर्मान्तक्षेत्रजानां परिमाणमर्घं च विद्युः । परभूमिजातानां वारिस्थलपथोपयातानां सारफल्गुपण्यानां कर्मसु च । शुल्कवर्तन्यातिवाहिकगुल्मतरदेयभागभक्तपण्यागारप्रमाणं विद्युः ॥**

वैदेहकव्यञ्जनप्रणिधानमाह– एवमिति । एवं यथा गृहपतिव्यञ्जनास्तथा वैदेहकव्यञ्जनाः स्वभूमिजानां राजपण्यानां पण्याध्यक्षप्रतिपादितानां खनिसेतुवनकर्मान्तक्षेत्रजानाम्– खनिजानां खन्यध्यक्षोक्तानां शङ्खवज्रादीनां सेतुजानां मत्स्यप्लवादीनां वनजानां कुप्याध्यक्षोक्तानां द्रव्यवनभवानां कर्मान्तजानां खातवप्रादिकर्मान्तभूम्युत्पन्नानां क्षेत्रजानां व्रीह्यादीनां सीताध्यक्षोक्तानां च परिमाणम् इयत्ताम् अर्घं मूल्यं च विद्युः । परभूमिजातानां देशान्तरजातानां वारिस्थलपथोपयातानां जलमार्गेण स्थलमार्गेण च स्वदेशमुपगतानां सारफल्गुपण्यानां साराणां रत्नादीनां फल्गूनां शाकादीनां च पण्यानां कर्मसु च क्रयविक्रयादिषु च । परिमाणमर्घं च विद्युरिति वर्तते । तथा शुल्काद्यष्टकप्रमाणम्– शुल्कस्य शुल्काध्यक्षोक्तस्य, वर्तन्याः अन्तपालादेयस्य, आतिवाहिकस्य सार्थातिवाहनार्थस्य विवीताध्यक्षग्राह्यस्य, गुल्मदेयस्य रक्षिसंघदेयस्य, तरदेयस्य नावध्यक्षदेयस्य, भागस्य सहव्यवहारिविभाज्यांशस्य, भक्तस्य व्यवहर्तृपुरुषबलीवर्दादिभोजनव्ययस्य, पण्यागारस्य पण्यगृहभाटकादेश्च प्रमाणम् इयत्तां विद्युः । श्रीमूला.

**एवं समाहर्तृप्रदिष्टास्तापसव्यञ्जनाः कर्षकगोरक्षकवैदेहकानामध्यक्षाणां च शौचाशौचं विद्युः । पुराणचोरव्यञ्जनाश्चान्तेवासिनश्चैत्यचतुष्पथशून्यपदोदपाननदीनिपानतीर्थायतनाश्रमारण्यशैलवनगहनेषु स्तेनामित्रप्रवीरपुरुषाणां च प्रवेशनस्थानगमनप्रयोजनान्युपलभेरन् ॥**

तापसव्यञ्जनप्रणिधानमाह– एवमिति । अनेन प्रकारेण समाहर्तृप्रदिष्टाः समाहर्तृनियुक्ताः तापसव्यञ्जनाः कर्षकगोरक्षकवैदेहकानाम् अध्यक्षाणां च गोपादीनां च शौचाशौचं विद्युः । पुराणचोरव्यञ्जनाश्चेति । संधिच्छेदादिना परद्रव्यापहारिणश्चोराः । ते चिराभ्यस्ततत्कर्माणः पुराणचोराः । तद्व्यञ्जनाः तद्वेषाः, अन्तेवासिनः तापसव्यञ्जनशिष्याः चैत्यादिष्वेकादशसु स्थानेषु– तत्र चैत्यं देवालयः, चतुष्पथं शृङ्गाटकम्, शून्यपदं निर्जनस्थानम्, उदपानः स्रोतःप्रापितावरुद्धजलो जलाधारः, नदी प्रसिद्धा, निपानम् उपकूपजलाशयः, तीर्थायतनं पुण्योदकप्रदेशः, आश्रमः मुनिगृहम्, अरण्यं ब्रह्मसोमारण्यम्, शैलगहनवनगहने प्रसिद्धे, एतेषु । स्थित्वेति शेषः । स्तेनामित्रप्रवीरपुरुषाणां च– स्तेनानां चोराणाम् अमित्रपुरुषाणां शत्रुप्रयुक्तानां तीक्ष्णरसदादीनां प्रवीरपुरुषाणाम् अल्पनिमित्तपरमारणसाहसिकानां च । चकारादनर्थ्यस्त्रीपुरुषाणां च । प्रवेशनस्थानगमनप्रयोजनानि अमुष्मिन् देशे अमुष्मिन् काले प्रवेशः स्थितिर्निर्गमनमित्येतानि प्रयोजनं च उपलभेरन् जानीयुः । श्रीमूला.

**समाहर्ता जनपदं चिन्तयेदेवमुत्थितः ।**
**चिन्तयेयुश्च संस्थास्ताः संस्थाश्चान्याः स्वयोनयः ॥**

अध्यायान्ते श्लोकमाह– समाहर्तेति । एवम् उक्तेन प्रकारेण उत्थितः उद्युक्तः समाहर्ता जनपदं चिन्तयेत् । अर्थात् गोपस्थानिकसहायः । ताश्च संस्थाः समाहर्तृप्रदिष्टाः पूर्वोक्ताः गृहपतिकव्यञ्जनादयः संस्थाविशेषाः

जनपदं चिन्तयेयुः । चकारात् गोपस्थानिकौ च । संस्थाश्च ताश्च तत्तद्व्यञ्जनयोनीन् संस्थाविशेषान् अन्याः स्वयोनयः तत्तद्योनिसमानयोनयः संस्थाः चिन्तयेयुः परीक्षेरन् । संस्थापरीक्षार्थस्य चेदं संस्थान्तरप्रणिधानस्य वचनं न तात्पर्यतो विध्यर्थम्, किंतु कर्मकराः प्रायोऽर्थलोभात् राजार्थं वा ह्रापयन्ति प्रजा वा परिपीडयन्तीत्यवश्यं तत्कर्मशोधने समाहर्त्रा नित्यं प्रतिजागरितव्यमित्युपदेशार्थम् । तेन संस्थाचिन्तनाय संस्थान्तरकल्पने संस्थानवस्थाप्रसङ्ग इति न चोदनीयम् ।

नागरिकप्रणिधीनां कर्तव्यं दण्डविधिश्च

**[१]समाहर्तृवन्नागरिको नगरं चिन्तयेत् । दशकुलीं गोपो विंशतिकुलीं चत्वारिंशत्कुलीं वा । स तस्यां स्त्रीपुरुषाणां जातिगोत्रनामकर्मभिः जङ्घाग्रमायव्ययौ च विद्यात् ॥**

'नागरिकप्रणिधिः' इति सूत्रम् । नगरे स्थानीये नियुक्तो नागरिकः, तस्य प्रणिधिः प्रणिधानं व्यापारे नियोजनमभिधीयते इति सूत्रार्थः । सर्वसमुदयानां यथोक्तरूपाणां रक्षणीयत्वात् तद्रक्षणस्य तदाश्रयस्थानरक्षणाधीनत्वात् स्थानीयस्य तदाश्रयस्थानत्वात् तद्रक्षणस्येहाभिधानसंगतिः ।

समाहर्तृवदिति । नागरिकः नगरं स्थानीयं समाहर्तृवत् चिन्तयेत् । यथा समाहर्ता जनपदं चतुर्धा विभज्य गोपस्थानिकसहायश्चिन्तयेत् तथा स्थानीयं चतुर्धा विभज्य गोपस्थानिकसहायश्चिन्तयेत् । तत्र गोपस्य चिन्तनीयं विषयमाह—दशकुलीमिति । दशकुलीं दशकुलानि उत्तमानि गोपः चिन्तयेदिति संबध्यते । तथा विंशतिकुलीं विंशतिं कुलानि मध्यमानि चत्वारिंशत्कुलीं वा चत्वारिंशतं कुलानि वा अधमानि चिन्तयेत् । सः गोपः तस्यां दशकुल्यां विंशतिकुल्यां चत्वारिंशत्कुल्यां वा स्वचिन्ताविषयभूतायां स्त्रीपुरुषाणां स्त्रीणां पुरुषाणां च जातिगोत्रनामकर्मभिः जङ्घाग्रम्— जङ्घाशब्देन पादचारिजनो लक्ष्यते, तेन जनसंख्यामित्यर्थः, आयव्ययौ च विद्यात् । श्रीमूला.

**एवं दुर्गचतुर्भागं स्थानिकश्चिन्तयेत् ॥**

स्थानिकस्य चिन्तनीयमाह— एवमिति । एवं यथा गोपो दशकुलीप्रभृतिं तद्गतस्त्रीपुरुषजङ्घाग्रायव्ययज्ञानपूर्वं चिन्तयेत् तद्वत् दुर्गचतुर्भागं स्थानिकः चिन्तयेत् दुर्गचतुर्भागगतस्त्रीपुरुषजङ्घाग्रायव्ययज्ञानपूर्वं तन्त्रयेत् । दुर्गचतुर्भागचिन्तकश्चायं स्थानिकाख्यः । श्रीमूला.

**धर्मावसथिनः पाषण्डिपथिकानावेद्य वासयेयुः । स्वप्रत्ययाश्च तपस्विनः श्रोत्रियांश्च ॥**

धर्मावसथाः धर्मशालाः, तदधिकारिणो धर्मावसथिनः पाषण्डिपथिकान् पाशुपतशाक्यभिक्षुकादीन् अध्वगान् आवेद्य गोपाय निवेद्य वासयेयुः धर्मावसथेषु । स्वप्रत्ययाश्च स्वकृतः स्वयं विचार्य कृतः प्रत्ययः तपस्विश्रोत्रियविश्वासः येषां ते तथाभूताः सन्तः तपस्विनः तापसान् श्रोत्रियान् छान्दसांश्च । वासयेयुरिति वर्तते । स्वप्रत्ययत्ववचनं तद्वासननिमित्तस्य दोषस्य स्वगामित्वद्योतनार्थम् । श्रीमूला.

**कारुशिल्पिनः स्वकर्मस्थानेषु स्वजनं वासयेयुः । वैदेहकाश्चान्योन्यं स्वकर्मस्थानेषु । पण्यानामदेशकालविक्रेतारमस्वकरणं च निवेदयेयुः ॥**

कारवः शिल्पिनश्च स्वकर्मस्थानेषु स्वजनं वासयेयुः स्वप्रत्ययाः । वैदेहकाश्च वणिजश्च स्वप्रत्ययाः अन्योन्यं स्वकर्मस्थानेषु तत्पण्यवणिक् तत्पण्यवणिजमिति न्यायमनपहाय पण्यव्यवहारस्थानेषु वासयेयुः । पण्यानाम् अदेशकालविक्रेतारम् अदेशे अकाले च विक्रयकर्तारम् आगन्तुकं निवेदयेयुः नागरिकाय । अस्वकरणं च अस्वीयस्य पण्यस्य व्यवहरणं च निवेदयेयुः । श्रीमूला.

**शौण्डिकपाक्वमांसिकौदनिकरूपाजीवाः परिज्ञातमावासयेयुः । अतिव्ययकर्तारमत्याहितकर्माणं च निवेदयेयुः ॥**

शौण्डिकाः मद्यविक्रयिणः, पाक्वमांसिकाः पक्वमांसविक्रयिणः, औदनिकाः अन्नविक्रयिणः, रूपाजीवाः वेश्याश्च परिज्ञातं समानशीलादिद्वारेण विदितम्

(१) कौ. २।३६.

आवासयेयुः । पुनः किं कुर्युः ? अतिव्ययकर्तारम् अतिव्ययस्य विज्ञातायत्यभ्यधिकस्य अविज्ञातायतिकस्य वा व्ययस्य कर्तारम् अत्याहितकर्माणं च अतिमात्रारब्धमद्यपानादिकर्माणं च निवेदयेयुः गोपस्थानिकेभ्यः ।

श्रीमूला.

**चिकित्सकः प्रच्छन्नव्रणप्रतीकारकारयितारमपथ्यकारिणं च गृहस्वामी च निवेद्य गोपस्थानिकयोर्मुच्यते । अन्यथा तुल्यदोषः स्यात् ॥**

भिषक् प्रच्छन्नव्रणप्रतीकारकारयितारं प्रच्छन्नं स्वकृतापराधोद्भेदभयादन्याविदितं यथा भवति तथा व्रणानां शस्त्राद्युत्पादितानां प्रतीकारस्य चिकित्सायाः कारयितारम्, अपथ्यकारिणं च— अपथ्यानि रोगमरणोत्पादकानि द्रव्याणि करोति संपादयति अन्विष्यति वेत्यपथ्यकारी, तं च निवेद्य गोपस्थानिकयोः, मुच्येत शुध्येत् । अन्यथा अनिवेदने तुल्यदोषः स्यात् । अपराधिभ्यां समानदोषो गण्येतेत्यर्थः । तथा गृहस्वामी च यस्मिन् गृहे व्रणप्रतीकारयित्रपथ्यकारिणोरनुष्ठानं तद्गृहपतिश्च निवेद्य गोपस्थानिकयोर्मुच्येत, अन्यथा तुल्यदोषः स्यात् ।

श्रीमूला.

**प्रस्थितागतौ च निवेदयेत् । अन्यथा रात्रिदोषं भजेत । क्षेमरात्रिषु त्रिपणं दद्यात् ॥**

प्रस्थितः स्वगृहात् कार्यान्तरेण देशान्तरं प्रस्थितः, आगतः देशान्तरात्कार्यान्तरेण स्वगृहं प्राप्तः, तौ च निवेदयेत् प्रस्थानागमनकालप्रयोजनाद्याख्यानपूर्वमावेदयेत् । अर्थात् गृहस्वामी । अन्यथा निवेदनाभावे रात्रिदोषं भजेत रात्रौ ताभ्यां कृतस्य चौर्यादिलक्षणस्य दोषस्य भागी भवेत् । क्षेमरात्रिषु क्षेमयुक्तासु अनुपजातचौर्यासु अनिवेदनरात्रिषु त्रिपणं पणत्रयात्मकमनिवेदनापराधदण्डं दद्यात् । क्षेमेऽपि दण्डविधानं निवेदनानुष्ठानस्य कदाऽप्यव्यभिचारार्थम् ।

श्रीमूला.

**पथिकोत्पथिकाश्च बहिरन्तश्च नगरस्य देवगृहपुण्यस्थानवनश्मशानेषु सव्रणमनिष्टोपकरणमुद्भाण्डीकृतमाविग्नमतिस्वप्नमध्वक्लान्तमपूर्वं वा गृह्णीयुः ॥**

पथिकोत्पथिकाश्च पथिकाः महामार्गचारिणो वैदेहकादिव्यञ्जनाः उत्पथिकाः विवीतपथचारिणः काष्ठतृणादिहारकगोपालकादिव्यञ्जनाः, ते उभये संचाराः बहिरन्तश्च नगरस्य विद्यमानेषु देवगृहादिषु चतुर्षु स्थानेषु सव्रणं शस्त्राद्युत्पादितव्रणम्, अनिष्टोपकरणम् अनिष्टानि वर्जनीयानि उपकरणानि काकल्यादीनि चोरादिसाधनानि यस्य तम्, उद्भाण्डीकृतं समधिकभाण्डभारवाहिनम्, आविग्नं भीतम्, अतिस्वप्नं रात्रिव्यायामजागरवशादतिमात्रनिद्रापन्नम्, अध्वक्लान्तं दीर्घाध्वसंचारश्रान्तम्, अपूर्वं वा अज्ञातपूर्वं वा गृह्णीयुः, अर्थात् नागरिकाय चार्पयेयुः ।

श्रीमूला.

**एवमभ्यन्तरे शून्यनिवेशावेशनशौण्डिकौदनिकपाक्वमांसिकद्यूतपाषण्डावासेषु विचयं कुर्युः ॥**

अनेन प्रकारेण अभ्यन्तरे स्थानीयान्तराले शून्यनिवेशादिषु— शून्यनिवेशे शून्यालये, आवेशने शिल्पशालायाम्, शौण्डिकावासे, औदनिकावासे, पाक्वमांसिकावासे, द्यूतावासे, पाषण्डावासे चेत्येवं सप्तसु विचयं सव्रणाद्यन्वेषणं कुर्युः, अर्थात् गूढपुरुषाः नागरिकादिसंबन्धिनः ।

श्रीमूला.

**अग्निप्रतीकारं च ग्रीष्मे मध्यमयोरह्नश्चतुर्भागयोः । अष्टभागोऽग्निदण्डः । बहिरधिश्रयणं वा कुर्युः ॥**

कुर्युरित्यनुवर्तते । अग्निप्रतिषेधं च अग्निकार्याणां महताम् अग्न्यतिप्रज्वलनबहुलस्फुलिङ्गोद्गतिहेतूनां वारणं च कुर्युः । कदा ? ग्रीष्मे ग्रीष्मर्तौ । तत्रापि न सर्वदा, किंतु मध्यमयोः अह्नश्चतुर्भागयोः दिवससंबन्धिनोः द्वितीयतृतीययामयोः । तृणपर्णादिमयपटलावृतगृहविषयश्चायं प्रतिषेधः । निषिद्धकारिणां दण्डमाह— अष्टभाग इति । पणाष्टभागः अग्निदण्डः निषिद्धकालाग्निकार्यकरणनिमित्तो दण्डः । अग्निकार्यस्य पाकार्थस्याल्यधिश्रयणस्य तदानीमवर्जनीयत्वे त्वाह— बहिरिति । बहिरधिश्रयणं वा पटलानावृतावकाशाधिश्रयणं वा कुर्युः ।

श्रीमूला.

**पादः पञ्चघटीनाम् । कुम्भद्रोणीनिःश्रेणीपरशुशूर्पाङ्कुशकचग्रहणीदृतीनां चाकरणे ॥**

अग्निकार्यकरणस्य घटिकाविशेषसंबन्धे दण्डविशेषमाह— पाद इति । पादः पणचतुर्भागदण्डः पञ्चघटीनां द्वितीयतृतीययाममध्यमपञ्चघटिकानाम् । सार्धद्वादशघटिकात ऊर्ध्वम् आ सार्धसप्तदशघटिकात इत्यर्थः । कुम्भद्रोण्यादीनां चाकरणे— कुम्भः घटः जलपूर्णः, द्रोणी दारुमयो जलाधारो जलपूर्णः, निःश्रेणी अधिरोहणी उच्चदेशारोहणार्था, परशुः कुठारः दार्वादिच्छेदनार्थः, शूर्पं प्रस्फोटनं प्रतिमुखधूमप्रसरवारणार्थम्, अङ्कुशं सृणिः दह्यमानवस्त्वाकर्षणार्थः, कचग्रहणी शालापटलतृणहरणसाधनम्, दृतिः चर्ममयमुदकपात्रम् इत्येतेषामग्निनिर्वापणसाधनानां ग्रीष्मकाले गृहद्वारेष्वनिवेशने । पादः इत्यनुवर्तते । पणचतुर्भागो दण्डः । श्रीमूला.

**तृणकटच्छन्नान्यपनयेत् । अग्निजीविन एकस्थान् वासयेत् । स्वगृहप्रद्वारेषु गृहस्वामिनो वसेयुरसंपातिनो रात्रौ । रथ्यासु कुटव्रजाः सहस्रं तिष्ठेयुः, चतुष्पथद्वारराजपरिग्रहेषु च ॥**

तृणकटमयच्छदींषि गृहाणि अपनयेत् निरस्येत् ग्रीष्मे । अग्निजीविनः अयस्कारताम्रतक्षादीन् एकस्थान् वासयेत् एकस्मिन्महति चतुःशाले कृताग्निभयप्रतिविधाने वासयित्वा कर्म कारयेत् । स्वगृहेत्यादि । स्वगृहप्रद्वारेषु स्वगृहमुखद्वारेषु गृहस्वामिनो वसेयुः । कथंभूताः ? असंपातिनो रात्रौ निशायामन्यत्र संचारं वर्जयन्तः । रथ्यासु विशिखासु कुटव्रजाः सजलाः कुम्भपङ्क्तयः सहस्रं तिष्ठेयुः । चतुष्पथद्वारराजपरिग्रहेषु च— चतुष्पथेषु शृङ्गाटकेषु द्वारेषु नगरादिद्वारेषु राजपरिग्रहेषु कोशगृहकुप्यगृहकोष्ठागारपण्यगृहगजाश्वशालादिषु च कुटव्रजास्तिष्ठेयुः । श्रीमूला.

**प्रदीप्तमनभिधावतो गृहस्वामिनो द्वादशपणो दण्डः । षट्पणोऽवक्रयिणः । प्रमादाद्दीप्तेषु चतुष्पञ्चाशत्पणो दण्डः ॥**

प्रदीप्तम् अनभिधावतः प्रज्वलिताग्निकं किमपि गृहं दृष्ट्वाऽपि अनभिद्रवतः गृहस्वामिनः द्वादशपणो दण्डः भवति । षट्पणोऽवक्रयिणः भाटकेन गृहे वसतोऽनभिधावतो गृहस्वाम्युक्तदण्डार्धदण्डः । प्रमादादिति । प्रमादात् अनवधानात् दीप्तेषु सत्सु अर्थात् स्वगृहेष्वपि चतुष्पञ्चाशत्पणो दण्डः । स गृहारक्षस्येत्येके । श्रीमूला.

**प्रादीपिकोऽग्निना वध्यः ॥**

प्रदीपिका वह्निना गृहसंदीपनम्, तत्कर्ता अग्निना तद्दीपितेनैव वध्यः तदैव गृहीतश्चेत् । कालान्तरगृहीतस्याप्यग्निदाहः कण्टकशोधने वक्ष्यते— 'विवीतक्षेत्रखलवेश्मद्रव्यहस्तिवनादीपकमग्निना दाहयेत्' (कौ. ४।११) इति । श्रीमूला.

**पांसुन्यासे रथ्यायामष्टभागो दण्डः । पङ्कोदकसंनिरोधे पादः । राजमार्गे द्विगुणः ॥**

रथ्यायां रथशकटादिसंचारमार्गे पांसुन्यासे पांसूनां धूलीनां तज्जातीयानामवकाराणां च निक्षेपे अष्टभागः पणाष्टमांशः दण्डः । तत्रैव पङ्कोदकसंनिरोधे पङ्कमिश्रजलावरोधने पादः पादपणदण्डः । राजमार्गे महामार्गे द्विगुणः पांसुन्यासे पङ्कोदकसंनिरोधे च रथ्योक्तद्विगुणः पादपणात्मकोऽर्धपणात्मकश्च क्रमेण दण्डः ।

श्रीमूला.

**पुण्यस्थानोदकस्थानदेवगृहराजपरिग्रहेषु पणोत्तरा विष्ठादण्डाः । मूत्रेष्वर्धदण्डाः ॥**

राजमार्गे इत्यनुवर्तते । तत्र पुण्यस्थानादिषु चतुर्षु च पणोत्तराः उत्तरोत्तरैकैकपणाधिकाः राजमार्गे एकपणः, पुण्यस्थाने द्विपणः, उदकस्थाने तटाकादौ त्रिपणः, देवगृहे चतुष्पणः, राजपरिग्रहे राजगृहकोशागारादौ पञ्चपणः इत्येवमात्मकाः विष्ठादण्डाः । मूत्रेषु उक्तेष्वेव प्रदेशेषु मूत्रविसर्जने अर्धदण्डाः क्रमात् अर्धपणैकपणसार्धपणद्विपणार्धतृतीयपणात्मका दण्डाः । श्रीमूला.

**भैषज्यव्याधिभयनिमित्तमदण्ड्याः ॥**

भैषज्यं विरेचनद्रव्यसेवनम्, व्याधिः अतिसारप्रमेहादिः, भयं प्रसिद्धम्, एतन्निमित्तकं चेत् विष्ठामूत्रकरणं राजमार्गादौ तर्हि दण्ड्या न भवन्ति ।

श्रीमूला.

**मार्जारश्वनकुलसर्पप्रेतानां नगरस्यान्तरुत्सर्गे त्रिपणो दण्डः। खरोष्ट्राश्वतराश्वपशुप्रेतानां षट्पणः। मनुष्यप्रेतानां पञ्चाशत्पणः ॥**

मार्जारेत्यादिवाक्यत्रयमतिरोहितार्थम्। श्रीमूला.

**मार्गविपर्यासे शवद्वारादन्यतः शवनिर्णयने पूर्वः साहसदण्डः। द्वाःस्थानां द्विशतम्। श्मशानादन्यत्र न्यासे दहने च द्वादशपणो दण्डः ॥**

मार्गविपर्यासे प्रसिद्धमार्गादन्येन मार्गेण शवानां नयने, शवद्वारादन्यतः शवनिर्णयने व्यवस्थितप्रेतनिर्हरणद्वारातिरिक्तद्वारेण प्रेतनिर्हरणे पूर्वः साहसदण्डः। द्वाःस्थानां द्वाररक्षिणां द्वारान्तरनिर्णयनमप्रतिषेधतां द्विशतं पणद्विशतदण्डः। श्मशानादित्यादि। न्यासे स्थापने, स च बालानाथादीनाम्। शेषं स्पष्टम्। श्रीमूला.

**विषण्नालिकमुभयतोरात्रं यामतूर्यम्। तूर्यशब्दे राज्ञो गृहाभ्याशे सपादपणमक्षणताडनं प्रथमपश्चिमयामिकम्। मध्यमयामिकं द्विगुणम्। बहिश्चतुर्गुणम् ॥**

यामतूर्यं यामे यन्त्रणीयजनसंचारे प्रहरे भवं तूर्यं तत्संचारनिरोधसूचकं वाद्यघोषणं यामतूर्यम्, तत् उभयतोरात्रं रात्रेरुभयोः पार्श्वयोः अर्थात् प्रथमपश्चिमयामयोः, कर्तव्यमिति शेषः। तत्रापि घटिकानियमार्थमाह— विषण्नालिकं विवर्जिताः षट् नालिकाः रात्रिपूर्वपश्चिमभागसंबन्धिन्यो यस्मिंस्तत् यथा भवति तथा। रात्रेरादितः षट्सु घटिकास्वतीतासु अन्ततश्च षट्सु घटिकास्ववशिष्टास्वित्यर्थः। इह उभयतोरात्रमिति रात्रिमुभयत इत्यर्थेऽव्ययीभावः समासान्तश्चाऽऽर्षः। तूर्यशब्द इति। श्रूयमाणे राज्ञो गृहाभ्याशे गृहसमीपे, संचरतामिति शेषः, सपादपणम् अक्षणताडनं पादाधिकपणः अकालसंचारदण्डो भवति। तच्चाक्षणसंचारदण्डनं किं सर्वरात्रियामविषयम्? नेत्याह— प्रथमपश्चिमयामिकम्। प्रथमयामशेषसंचारविषयं पश्चिमयामशेषसंचारविषयं चेत्यर्थः। द्वितीयतृतीययामसंचारविषयमाह— मध्यमेत्यादि। मध्यमयामिकम् अक्षणताडनं द्विगुणम् अर्धतृतीयपणम्। इदं सर्वं नगरान्तःसंचारविषयम्। नगरबहिर्देशसंचारविषयमाह— बहिरिति। बहिर्नगरात् बहिर्नगरपरिसरदेशे चतुर्गुणं राजगृहाभ्याशसंचारोक्तदण्डचतुर्गुणम् अर्थात् पञ्चपणात्मकं अक्षणताडनं भवति। श्रीमूला.

**शङ्कनीये देशे लिङ्गे पूर्वापदाने च गृहीतमनुयुञ्जीत ॥**

शङ्क्यन्ते अस्मिन् स्थितं पुरुषं चोरजारादित्वेनेति शङ्कनीयः, तथाभूते सति देशे निष्कुटादौ शङ्कनीये लिङ्गे अवगुण्ठनकुड्यच्छायानिलयनादिके सति पूर्वापदाने च पूर्वकृते चौर्यादिवृत्ते च प्रतीते सति गृहीतम् अनुयुञ्जीत तद्देशस्थं तल्लिङ्गिनं तदपदानकं च जनं दृष्ट्वा गृहीत्वा पृच्छेत्— कस्त्वम्, कुतः, कस्य, किमर्थमिहाऽऽगतोऽसीति। श्रीमूला.

**राजपरिग्रहोपगमने नगररक्षारोहणे च मध्यमः साहसदण्डः ॥**

राजकीयावसथोद्यानादिषु अननुमतस्य प्रवेशने नगररक्षारोहणे च नगररक्षाणां प्राकाराट्टालकादीनामारोहणे च मध्यमः साहसदण्डः। श्रीमूला.

**सूतिकाचिकित्सकप्रेतप्रदीपयाननागरिकतूर्यप्रेक्षाग्निनिमित्तं मुद्राभिश्चाग्राह्याः ॥**

सूतिकादिसप्तकनिमित्तम्— सूतिका प्रसूता। तत्पदेन तच्छुश्रूषणं लक्ष्यते। सूतिकानिमित्तं सूतिकाशुश्रूषणे निमित्ते, चिकित्सकनिमित्तं चिकित्सकपरिचरणे निमित्ते, प्रेतनिमित्तं शवनिर्हरणे निमित्ते, प्रदीपयाननिमित्तं दीपेनाऽऽत्मानं प्रकाश्य गमने निमित्ते, नागरिकतूर्यनिमित्तं नागरजनसमूहनचिह्नतूर्यवादने निमित्ते, प्रेक्षानिमित्तं राजानुज्ञातनाटकादिप्रयोगदर्शने निमित्ते, अग्निनिमित्तं च स्वपरगृहाद्यग्निदीपने निमित्ते च, अग्निग्रहणस्योपलक्षणार्थत्वादन्यस्मिन्नपि भयहेतौ निमित्ते अग्राह्याः अक्षणसंचारिणो न ग्राह्याः। किंतु निमित्तं परीक्ष्य मोक्तव्याः इत्यर्थः। तथा मुद्राभिश्चाग्राह्याः मन्त्रिनागरिकादिमुद्रोपेताश्चाक्षणचारिणो न ग्राह्याः। श्रीमूला.

**चाररात्रिषु प्रच्छन्नविपरीतवेषाः प्रव्रजिता दण्डशस्त्रहस्ताश्च मनुष्या दोषतो दण्ड्याः ॥**

चारः सर्वसंचारः, तत्संबन्धिनीषु रात्रिषु अनुमतसर्वसंचारासु महोत्सवादिरात्रिष्वित्यर्थः, प्रच्छन्नविपरीतवेषाः प्रच्छन्नाः अवगुण्ठनादिसंवृतस्वरूपाः विपरीतवेषाः पुंवेषाः स्त्रियः स्त्रीवेषाः पुरुषाश्च राजाज्ञानिष्कासिताः, प्रव्रजिताः परिव्राजकाः, दण्डशस्त्रहस्ताश्च दण्डपाणयः शस्त्रपाणयश्च मनुष्याः दोषतो दण्ड्याः परीक्ष्य यथादोषोपलम्भं दण्डनीयाः । श्रीमूला.

**रक्षिणामवार्यं वारयतां वार्यं चावारयतामक्षणद्विगुणो दण्डः । स्त्रियं दासीमधिमेहयतां पूर्वः साहसदण्डः, अदासीं मध्यमः, कृतावरोधामुत्तमः, कुलस्त्रियं वधः ॥**

अवार्यम् अभ्यनुज्ञाताक्षणसंचारं सूतिकाशुश्रूषुप्रभृतिं वारयतां वार्यं च सामान्यजनम् अवारयतां रक्षिणां नागरिकपुरुषाणाम् अक्षणद्विगुणः अक्षणसंचारविहितदण्डद्विगुणः सार्धपणद्वयात्मकः दण्डः । स्त्रियं दासीम् अन्यदीयाम् अधिमेहयतां बलात् गच्छतां रक्षिणां पूर्वः साहसदण्डः । अदासीं गणिकाम् अधिमेहयतां मध्यमः साहसदण्डः । कृतावरोधां दासीमदासीं वा केनचित् भार्यात्वेन परिगृहीताम् अधिमेहयताम् उत्तमः साहसदण्डः । कुलस्त्रियम् अधिमेहयतां वधः प्राणवियोजनं दण्डः ।

श्रीमूला.

**चेतनाचेतनिकं रात्रिदोषमशंसतो नागरिकस्य दोषानुरूपो दण्डः, प्रमादस्थाने च ॥**

चेतनभवमचेतनभवं च रात्रिदोषं रात्रिदृष्टममङ्गलम् अशंसतः अनिवेदयतः नागरिकस्य पौरस्य दोषानुरूपो दण्डः कल्प्यः । प्रमादस्थाने च– प्रमादः रक्षिपुरुषाणां रक्षाव्यापारशैथिल्यम्, तस्य स्थाने हेतुभूते मद्यपानादौ च दोषानुरूपो दण्डः । श्रीमूला.

**नित्यमुदकस्थानमार्गभूमिच्छन्नपथवप्रप्राकाररक्षावेक्षणम्, नष्टप्रस्मृतापसृतानां च रक्षणम् ॥**

उदकस्थानानि नदीकूपतटाकादीनि, मार्गाः प्रवेशनिर्गमद्वाराणि, भूमयः स्थलानि, छन्नपथाः सुरुङ्गादिमार्गाः, वप्राः प्राकाराधाराः, प्राकाराः वरणाः, रक्षाः अट्टालकपरिखादयः, एषामुदकस्थानादीनां सप्तपदार्थानाम् अवेक्षणं परीक्षणं नित्यं प्रतिदिवसानुष्ठेयं कर्म भवति नागरिकस्य । नष्टप्रस्मृतापसृतानां च– नष्टानां स्वामिप्रमादगलितानां भूषणादीनाम्, प्रस्मृतानां स्वामिविस्मृतानाम्, अपसृतानां स्वयमपगतानां द्विपदचतुष्पदानां च रक्षणं नित्यं नियतानुष्ठेयम् आ स्वामिदर्शनात् ।

श्रीमूला.

**बन्धनागारे च बालवृद्धव्याधितानाथानां जातनक्षत्रपौर्णमासीषु विसर्गः । पुण्यशीलाः समयानुबद्धा वा दोषनिष्क्रयं दद्युः ॥**

कारागृहे च स्थितानां बालादीनां चतुर्णां जातनक्षत्रपौर्णमासीषु राज्ञो वार्षिकजन्मर्क्षोत्सवेषु पूर्णिमासु च विसर्गः बन्धनगृहात् मोक्षणम् । कर्तव्यमिति शेषः । पुण्येत्यादि । पुण्यशीलाः धर्माचरणस्वभावाः, कुतोऽपि याहच्छिकाद् वृत्तव्यतिक्रमात् प्रसक्तकारागृहप्रवेशा इत्यार्थम्, समयानुबद्धाः दोषनिष्क्रयं दद्युः समयेन आयतिविशुद्धिप्रातिभाव्यसंविदा प्रतिबद्धाः कृतदोषानुरूपं हिरण्यदण्डं दद्युः बन्धनगृहे प्रवेशाभावाय । तदिदं बन्धनगृहप्रवेशनपक्षप्रतिक्षेपकं पक्षान्तरं वाशब्दो द्योतयति ।

श्रीमूला.

**दिवसे पञ्चरात्रे वा बन्धनस्थान् विशोधयेत् । कर्मणा कायदण्डेन हिरण्यानुग्रहेण वा ॥**

अध्यायान्ते श्लोकावाह– दिवस इति । दिवसे प्रतिदिवसं पञ्चरात्रे वा प्रतिपञ्चरात्रं वा बन्धनस्थान् विशोधयेत् विशोधनं दण्डग्रहणेन दोषनिष्क्रयं कारयेत् । कथम् ? कर्मणा भारवहनशकटाकर्षणादिना दण्डदानासामर्थ्ये, कायदण्डेन शरीरताडनादिना कर्मकरणासौकर्ये, हिरण्यानुग्रहेण वा हिरण्यग्रहणरूपेणानुग्रहेण वा बन्धनस्थगुणित्वे । इह केचित् 'विशोधयेत्' इत्यस्याऽऽवृत्त्या 'बन्धनगतान् विशोधयेत् सुस्था दुःस्था वेति परीक्षेत' इत्यर्थान्तरमपि संगृह्णन्ति । श्रीमूला.

अपूर्वदेशाधिगमे युवराजाभिषेचने ।
पुत्रजन्मनि वा मोक्षो बन्धनस्य विधीयते ॥

बद्धमोक्षनिमित्तान्याह— अपूर्वेत्यादि । अपूर्वदेशाधिगमे शत्रुजयनिमित्ते नूतनदेशलाभे । शेषं सुगमम् ।
श्रीमूला.

द्यूताध्यक्षस्य कर्तव्यम्

* [1]द्यूताध्यक्षः द्यूतमेकमुखं कारयेत् ॥

## चाणक्यसूत्राणि

कार्येषु कुशलो नियोज्यः

[2]यो यस्मिन् कर्मणि कुशलस्तं तस्मिन्नेव योजयेत् ॥

## वृद्धचाणक्यः

नियोज्यानां कार्याध्यक्षाणां गुणाः

[3]पार्थिवस्य तु वक्ष्यामि भृत्यानां गुणलक्षणम् ।
येन संवर्धते राज्यं भाण्डागारस्तथैव च ॥

[4]पितृपैतामहो दक्षः शास्त्रज्ञो मिष्टपाचकः ।
सत्यशौचसमायुक्तः सूपकारः स उच्यते ॥

[5]मेधावी वाक्पटुः प्राज्ञः सत्यवादी जितेन्द्रियः ।
सर्वशास्त्रसमालोकी एष साधुः स लेखकः ॥

* द्यूताध्यक्षविषयकं संपूर्ण प्रकरणं तद्व्याख्यानं च व्यवहारकाण्डे द्यूतसमाह्वयप्रकरणे ( पृ. १९०४ ) द्रष्टव्यम् ।

( १ ) कौ. ३।२०. ( २ ) चासू. ११७.

( ३ ) वृचा. ४।७ ; चासा. १।६४ तु वक्ष्यामि भृत्यानां ( च भृत्यस्य वदामि ) राज्यं ( राजा ).

( ४ ) वृचा. ४।१० ; चासा. १।५८ पैता ( पिता ) उत्तरार्धे ( शुचिश्च कठिनश्चैव सूपकारः , प्रशस्यते ॥ ) ; चाशा. ५।१० उत्तरार्धे ( शौचयुक्तः प्रभोर्भक्तः सूपकारोऽभिधीयते ॥ ).

( ५ ) वृचा. ४।१२ ; चाशा. ५।६ उत्तरार्धे ( सर्वशास्त्रार्थतत्त्वज्ञो लिपिज्ञः साधु लेखकः ॥ ).

[1]समस्तहयशास्त्रज्ञो वाहनेषु जितश्रमः ।
शौर्यवीर्यगुणोपेतः अश्वाध्यक्षो विधीयते ॥

## चाणक्यनीतिशास्त्रम्

नियोज्यानां कार्याध्यक्षाणां गुणाः

[2]कुलशीलगुणोपेतः सर्वधर्मपरायणः ।
प्रवीणः प्रेषणाध्यक्षो धर्माध्यक्षो विधीयते ॥

[3]सकृदुक्तगृहीतार्थो लघुहस्तो जिताक्षरः ।
सर्वशास्त्रसमालोकी प्रकृष्टो नाम लेखकः ॥

[4]समस्तशस्त्रशास्त्रज्ञो वाहनेषु जितश्रमः ।
शौर्यवीर्यगुणोपेतः सेनाध्यक्षो विधीयते ॥

[5]पुत्रपौत्रगुणोपेतः शास्त्रज्ञो मिष्टपाचकः ।
शूरश्च कठिनश्चैव सूपकारः स उच्यते ॥

[6]इङ्गिताकारतत्त्वज्ञो बलवान् प्रियदर्शनः ।
अप्रमादी सदा दक्षः प्रतीहारः स उच्यते ॥

## चाणक्यसारसंग्रहः

नियोज्यानां कार्याध्यक्षाणां गुणाः

[7]कुलशीलगुणोपेतः सत्यधर्मपरायणः ।
प्रवीणः पेशलो दक्षोः राजाध्यक्षो (?) विधीयते ॥

[8]मूलवृत्तिहितो धीरः सर्वरत्नपरीक्षकः ।
शुचिश्च व्यवसायी च कोशाध्यक्षो विधीयते ॥

( १ ) वृचा. ४।१३ ; चासा. १।६२ जितश्रमः ( पराजितः ).

( २ ) चानी. १००.

( ३ ) चानी. १०२ ; चासा. १।५९ चतुर्थचरणे ( एष लेखक उच्यते ).

( ४ ) चानी. १०३ ; चासा. १।६१ शस्त्र ( कृत ) वाहनेषु ( पण्डितश्च ) शौर्यवीर्य ( धैर्यशौर्य ).

( ५ ) चानी. १०५.

( ६ ) चानी. १०६ ; चासा. १।६० ; चाशा. ५।५ सदा दक्षः ( महार्थश्च ).

( ७ ) चासा. १।५४. ( ८ ) चासा. १।५६.

## चाणक्यराजनीतिशास्त्रम्

नियोज्यानां कार्याध्यक्षादीनां गुणाः

[1]मूलवृत्त्यर्जितो धीरः सर्वरत्नपरीक्षकः ।
शुचिश्च व्यवसायी च भाण्डाध्यक्षो महीपतेः ॥
[2]समानि समशीर्षाणि वर्तुलानि घनानि च ।
मात्रासु प्रतिबद्धानि यो जानाति स लेखकः ॥
प्रवीणः स्वामिनो भक्तः सत्यवादी जितेन्द्रियः ।
अलुब्धः स्वधनैस्तृप्तो गजाध्यक्षो महीपतेः ॥
ज्ञानविज्ञानसंपन्नः प्रियवादी जितेन्द्रियः ।
सम्यग् विद्योपदेशी च शुचिराचार्य उच्यते ॥
खञ्जः कुब्जो मन्दबुद्धिर्वृद्धोऽशक्तो जितेन्द्रियः ।
निस्पृहश्च प्रयोक्तव्यो राज्ञोऽन्तःपुररक्षकः ॥

## मनुः

नियोज्यानां कार्याध्यक्षाणां गुणाः

*[3]अन्यानपि प्रकुर्वीत शुचीन्प्राज्ञानवस्थितान् ।
सम्यगर्थसमाहर्तॄनमात्यान् सुपरीक्षितान् ॥
निर्वर्तेतास्य यावद्भिरितिकर्तव्यता नृभिः ।
तावतोऽतन्द्रितान्दक्षान्प्रकुर्वीत विचक्षणान् ॥
†[4]संधिविग्रहकालज्ञान् समर्थानायतिक्षमान् ।
परैरहार्यान्शुद्धांश्च धर्मतः कामतोऽर्थतः ॥
समाहर्तुं प्रकुर्वीत सर्वशास्त्रविपश्चितः ।
कुलीनान् वृत्तिसंपन्नान् निपुणान् कोशवृद्धये ॥
आयव्ययस्य कुशलान् गणितज्ञानलोलुपान् ।
नियोजयेद्धर्मनिष्ठान् सम्यक्कार्यार्थचिन्तकान् ॥
कर्मणि चातिकुशलांल्लिपिज्ञानायतिक्षमान् ।
सर्वविश्वासिनः सत्यान्सर्वकार्येषु निश्चितान् ॥
अकृताशांस्तथा भर्तुः कालज्ञांश्च प्रसङ्गिनः ।
कार्यकामोपधाशुद्धान् बाह्याभ्यन्तरचारिणः ॥
कुर्यादासन्नकार्येषु गृहसंरक्षणेषु च ॥
[1]तेषामर्थे नियुञ्जीत शूरान् दक्षान् कुलोद्गतान् ।
शुचीनाकरकर्मान्ते भीरूनन्तर्निवेशने ॥

(१) अर्थे आयव्ययव्यवहारे । शुचीन् अर्थेष्वस्पृहान् नियुञ्जीत । तान्यर्थस्थानान्युदाहरणेन दर्शयति— आकरकर्मान्त इति । आकराः सुवर्णरूप्याद्युत्पत्तिसंस्कारस्थानानि । कर्मान्ताः भक्ष्यकार्पासावापादयः । अन्तर्निवेशने( ? नम् ) अन्तःपुर( ? रं )भोजनशय्यास्त्रीगृहाणि । भीरवस्तत्र नियोज्याः । शूरा हि राजानमेकाकिनमुपजप्ता हन्युः । दक्षाः सर्वेऽपि व्युत्थानशीलतया द्वन्द्वोपरिपातमपरिगणय्य स्वामिनः कार्यं काले नातिपातयन्ति । * मेधा.

(२) तेषां मध्ये शूरान् चतुरान् कोशे विनियुञ्जीत । स्वाकरेषु सुवर्णाद्युत्पत्तिस्थानेषु (कर्मान्तेषु) इक्षुधान्यादिपीडनादिस्थानेषु अर्थशौचोपेतान् कुर्वीत । अन्तर्निवेशने च भोजनान्तःपुरादौ भीरून् विनियोजयेत् । गोरा.

(३) तेषां मध्ये अर्थे अर्थोत्पादने । 'शुचीन् भीरून्' इत्युभयमुभयतोऽन्वितम् । आकरे रत्नाद्युद्धार-

---

* अस्य श्लोकद्वयस्य व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च 'प्रकृतयः— मन्त्रिणः' (पृ. १२५२) इत्यस्मिन् प्रकरणे द्रष्टव्यः ।

† बहुत्वसंख्यावाचकशब्दघटिता एते श्लोका एकत्वसंख्यावाचकशब्दघटितदूतवर्णनप्रघट्टकमध्यपठिता अपि तत्रानन्विताः सन्तोऽन्वयलोभेनान्तिमश्लोकार्धानुरोधेन चापकृष्यात्र संगृहीताः ।

(१) चाशा. ५।४.

(२) चाशा. ५।७, ९, १२, १६.

(३) मस्मृ. ७।६०, ६१.

(४) मस्मृ. ७।६३ इति ७।६४ इति वा श्लोकादूर्ध्वमेते सार्धपञ्च श्लोकाः क– ख-पुस्तकयोः पुस्तकान्तरीयाधिकत्वेन निर्दिष्टाः । तत्र द्वितीयश्लोके राप्र. १८७ पूर्वार्धं (समाहर्तॄन्प्रकुर्वीत धर्मशास्त्रार्थनिश्चितान् ।) वृत्ति (वित्त) निपुणान् (समर्थान्).

* नीम. मेधागतं गोरागतं च ।

(१) मस्मृ. ७।६२ ; गोरा. आकर (स्वाकर) ; अप. १।३२०–३२१ अन्तर्निवेशने (अन्तरवेश्मनि) ; राक. ३२ ; राप्र. १८७ ; नीम. ४२ षामर्थे (षां मध्ये) ; भाच. द्गतान् (द्भवान्).

स्थाने । कर्मान्ते भूषणशस्त्रादिनिष्पादने । भीरून् मारणादिभीतान् । अन्तर्निवेशने अन्तःपुरे । मवि.

(४) कुलोद्गतान् कुलाङ्कुशनियमितान् । अर्थे धनोत्पत्तिस्थाने । * ममु.

(५) तत्र व्यवस्थितिमाह– तेषामिति । तेषां कर्मसचिवानां मध्ये ये शूराः तान् अर्थे अर्ज(र्जु ?)नवत् परतोऽर्थाहरणे । आकरकर्मान्ते शुचीन्, ‡ 'योऽर्थे शुचिर्हि स शुचिर्न मृद्वारिशुचिः शुचिः ।' इति (उक्तेः ?) तेषामेव शुचित्वाभिधानात् । आकरकर्मान्ते । आकरः सुवर्णाद्युत्पत्तिस्थानम्, तदेव कर्मणोऽप्यन्तम्, ऐहिकचेष्टामात्रस्य धनार्थत्वात् । अन्तर्निवेशने भोजनशयनस्त्रीपुरादौ, भीरोर्हि राजदारदूषणविषदानादौ स्वातन्त्र्यादर्शनात् । मच.

(६) भीरून् इहलोकपरलोकभीतान् ।

¶ राप्र. १८७

(७) तेषां मध्ये शूरान् अर्थे कोशे । आकरकर्मान्ते आकरकर्मणि शुचीन् अर्थशुद्धान् नियुञ्जीत, आकरद्रव्यस्याकृतपरिमाणत्वात् । नन्द.

(८) तेषाम् अधिकारिणाम् अर्थे कार्ये कुलोद्भवान् नियुञ्जीत । † भाच.

**[1]अध्यक्षान् विविधान्कुर्यात्तत्र तत्र विपश्चितः ।**
**तेऽस्य सर्वाण्यवेक्षेरन्नृणां कार्याणि कुर्वताम् ॥**

(१) अध्यक्षाः अधिकृताः प्रत्यवेक्षितारः, तान् कुर्यात् । विविधान् बहुप्रकारान् मृदून् उग्रान् धार्मिकान् अर्थार्जनपरांश्च । तत्र तत्र सुवर्णकोष्ठागारे पण्यकुप्यकर्मसु अधिकृताः प्रत्यवेक्षितारः तान् शुल्कनौहस्त्यश्वरथपदात्यादीन् विपश्चितः स्थापयेत् । सर्वे एते अमात्यगुणसंपद्युक्ता विज्ञेयाः । यथोक्तमध्यक्षप्रचारे* । ते अध्यक्षाः सर्वाणि कार्याण्यवेक्षेरन्नन्येषां नृणां तत्स्थानोपजीविनां कार्याणि कुर्वताम् । हस्त्यध्यक्षेण हस्तिपकाः, अश्वाध्यक्षेण तुरंगमाद्याः, गवाध्यक्षेण कर्षणादयः ।

मेधा.

(२) कार्याणि सुकृतदुष्कृतकर्माणि । अप.

(३) अध्यक्षान् ईक्षणेनाधिष्ठातॄन् । कार्याणि अर्थानयनादीनि । कुर्वतां कार्याण्यवेक्षेरन् । मवि.

(४) तत्र तत्र हस्त्यश्वरथपदाताद्यर्थादिस्थानेषु अध्यक्षान् अवेक्षितॄन् विविधान् पृथक् पृथक् विपश्चितः कर्मकुशलान् कुर्यात् । ते अस्य राज्ञः तेषु हस्त्यश्वादिस्थानेषु मनुष्याणां कुर्वतां सर्वाणि कार्याणि सम्यक्कार्यार्थमवेक्षेरन् । ‡ ममु.

(५) अध्यक्षान् उक्तविषयान् अधि लक्षीकृतानि अक्षाणि इन्द्रियाणि येषां तान् अवेक्षितॄन् । ¶ मच.

(६) कराहारिणामनुसंधायकानाह– अध्यक्षानिति । तत्र तत्र करविशेषे । कार्याणि कराहरणकार्याणि । नन्द.

अधिकृतानां राष्ट्ररक्षकाणामुच्चावचस्थानेषु नियुक्तिः

**§[1]राष्ट्रस्य संग्रहे नित्यं विधानमिदमाचरेत् ।**
**सुसंगृहीतराष्ट्रो हि पार्थिवः सुखमेधते ॥**
**द्वयोस्त्रयाणां पञ्चानां मध्ये गुल्ममधिष्ठितम् ।**
**तथा ग्रामशतानां च कुर्याद्राष्ट्रस्य संग्रहम् ॥**

---

* शेषं मेधागतं गोरागतं च ।

‡ अत्र 'अर्थशौचोपेतान्' इत्यर्थकं हेतुमत्पदमावश्यकम् ।

¶ शेषं मेधागतं ममुगतं च ।

† शेषं गोरागतम् ।

(१) मस्मृ. ७।८१ ; गोरा. तेऽस्य सर्वा (तस्य कार्या) ; अप. १।३२० ; राक. ३२–३३ वेक्षे (वीक्षे) ; मच. सर्वाण्य (सम्यग) ; राप्र. १८७ ; नीम. ४२ पू.

* 'अमात्यसंपदोपेताः सर्वाध्यक्षाः शक्तितः कर्मसु नियोज्याः' (कौ. २।९) इति कौटिलीयवचनमत्रानुसंधेयम् ।

‡ गोराव्याख्यानमशुद्धिसंदेहान्नोद्धृतम् । तच्च ममुगतम् । नीम., भाच. ममुगतम् ।

¶ शेषं मभुगतम् ।

§ एतेषां द्वादशानां श्लोकानां व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च 'प्रकृतयः– राष्ट्रम्' इत्यस्मिन् प्रकरणे (पृ. १४०४–१४०९) द्रष्टव्यः ।

(१) मस्मृ. ७।११३–१२४.

ग्रामस्याधिपतिं कुर्याद्दशग्रामपतिं तथा ।
विंशतीशं शतेशं च सहस्रपतिमेव च ॥
ग्रामदोषान्समुत्पन्नान् ग्रामिकः शनकैः स्वयम् ।
शंसेद्ग्रामदशेशाय दशेशो विंशतीशिने ॥
विंशतीशस्तु तत् सर्वं शतेशाय निवेदयेत् ।
शंसेद्ग्रामशतेशस्तु सहस्रपतये स्वयम् ॥
यानि राजप्रदेयानि प्रत्यहं ग्रामवासिभिः ।
अन्नपानेन्धनादीनि ग्रामिकस्तान्यवाप्नुयात् ॥
दशी कुलं तु भुञ्जीत विंशी पञ्च कुलानि च ।
ग्रामं ग्रामशताध्यक्षः सहस्राधिपतिः पुरम् ॥
तेषां ग्राम्याणि कार्याणि पृथक्कार्याणि चैव हि ।
राज्ञोऽन्यः सचिवः स्निग्धस्तानि पश्ये-
दतन्द्रितः ॥
नगरे नगरे चैकं कुर्यात् सर्वार्थचिन्तकम् ।
उच्चैः स्थानं घोररूपं नक्षत्राणामिव ग्रहम् ॥
स ताननुपरिक्रामेत् सर्वानेव सदा स्वयम् ।
तेषां वृत्तं परिणयेत् सम्यग्राष्ट्रेषु तच्चरैः ॥

भृत्येभ्यः प्रजारक्षणम्

राज्ञो हि रक्षाधिकृताः परस्वादायिनः शठाः ।
भृत्या भवन्ति प्रायेण तेभ्यो रक्षेदिमाः प्रजाः ॥
ये कार्यिकेभ्योऽर्थमेव गृह्णीयुः पापचेतसः ।
तेषां सर्वस्वमादाय राजा कुर्यात् प्रवासनम् ॥

शुल्कादाने अर्घस्थापना अपराधेषु दण्डविधिश्च

*[1]शुल्कस्थानेषु कुशलाः सर्वपण्यविचक्षणाः ।
कुर्युरर्घं यथापण्यं ततो विंशं नृपो हरेत् ॥

(१) येषु प्रदेशेषु शुल्कमादीयते तानि शुल्कस्थानानि राजभिर्वणिग्भिः स्वप्रतिदेशनियतानि कल्पितानि । तेषु स्थानेषु ये कुशलाः शौल्किकाः ये धूर्तैः न शक्यन्ते वञ्चयितुम्, तथा सर्वेषां पण्यानामागमक्रयविक्रयक्षयव्ययसारासारादिविधिज्ञाः विचक्षणाः ते भाण्डस्याऽऽगतस्य देशान्तरात् नीयमानस्य वा अर्घं कुर्युः । ततो विंशतिभागं राजा गृह्णीयात् । किं पुनरर्घकरणेन ? एतावदेव वक्तव्यं पण्यानां विंशतिभागमिति । सत्यम् । यदा स्वरूपेण द्रव्यं राजा गृह्णाति, स्वरूपकान्यु( ? सकलान्यु )पयुज्यन्ते सा( ? शा )टकादीनि । तत्र विंशतिभागः प्राग्विंशतेः न पाटनमन्तरेणोपपद्यते इत्येवमर्थमर्घकरणम् । अविक्रेयाणामात्मोपयोगिनां नास्ति शुल्क इति ज्ञापयितुं यथापण्यम् । एवं कालानुरूप्येण । न सर्वपण्यं सर्वदा विक्रीयते एकरूपेणार्घेण । अतो देशकालापेक्षया पण्यानामर्घव्यवस्था, न नियतोऽर्घ इति । मेधा.

(२) शुल्कस्थानेषु पण्यविक्रयस्थानेषु अर्घं मूल्यं कुर्युः व्यवस्थापयेयुः नियुक्ताः । विंशं विंशतिभागैकभागं हरेत् अर्घकरणनिमित्तम् । मवि.

(३) स्थलजलपथव्यवहारतो राजग्राह्यो भागः शुल्कम् । तस्यावस्थानेषु ये कुशलाः तथा सर्वपण्यानां सारासारज्ञाः ते पण्येषु यम् अर्घं मूल्यम् अनुरूपं कुर्युः ततः लाभधनात् विंशतिभागं राजा गृह्णीयात् । * ममु.

(४) एवं राजकीयदण्डस्य राजसूयवत् प्राकरणिकत्वात् शुल्कादेरपि तदन्तर्गतत्वं प्रकटयन्नाह— शुल्केति । † मच.

(५) विचक्षणाः क्रयविक्रयविधौ विवेकिनः यथापण्यं विक्रेयद्रव्यानुरूपं मूल्यं कुर्युः कल्पयेयुः । ततो विंशतिभागं नृपो हरेत् । नन्द.

[1]राज्ञः प्रख्यातभाण्डानि प्रतिषिद्धानि यानि च ।
तानि निर्हरतो लोभात् सर्वहारं हरेन्नृपः ॥

(१) राज्ञः संबन्धितया प्रख्यातानि यानि भाण्डानि राजोपयोगितया । यथा— हस्तिनः, काश्मीरेषु कुङ्कुमम्, प्राच्येषु पट्टोर्णादीनि, प्रतीच्येषु अश्वाः, दाक्षिणात्येषु मणिमुक्तादीनि । यत् यस्य राज्ञो विषये सुलभम्

---

* राप्रग्रन्थाख्यानं 'स्वदेशपण्याच्च' इत्यादिविष्णुवचने 'प्रकृतयः— कोशः' इत्यत्र ( पृ. १३१२ ) द्रष्टव्यम् ।

(१) मस्मृ. ८।३९८ ; राप्र. २६४.

* गोरा व्याख्यानमशुद्धिसंदेहान्नोद्धृतम् । गोरा., भाच. ममुगतम् ।

† शेषं मविगतं ममुगतं च ।

(१) मस्मृ. ८।३९९ ; राप्र. २७४.

अन्यत्र दुर्लभं तत्र तस्य प्रख्यापनं भवति । तेन हि राजानः इतरेतरं संदधते । प्रतिषिद्धानि यानि राज्ञा मदीयाद्देशान्नैतदन्यत्र नेयम्, अत्रैव वा विक्रेयम्, यथा दुर्भिक्षे धान्यमित्येवमादीनि । लोभान्निर्हरतः देशान्तरं नयतः विक्रीणानस्य वा सर्वहारं हरेत् । सर्वहरणं सर्वहारः । अयं धनलोभान्नयतो दण्डः । राजान्तरोपायनार्थे त्वधिकतरः शारीरोऽपि दुर्गावरोधादिः । * मेधा.

(२) राज्ञो योग्यान्येतानीति प्रसिद्धानि सिंहासनादीनि । प्रतिषिद्धानि अन्यत्र विक्रेतुं राज्ञा । निर्हरतः अन्यत्र नयतः वाणिजकस्य लोभादुचितमूल्याधिकेच्छया । सर्वहारं मूलमदत्त्वा तस्य सर्वस्वहरणं यथा स्यात् । मवि.

(३) राज्ञः प्रख्यातभाण्डानि राज्ञः एव उपभोक्तव्यत्वेन प्रख्यातद्रव्याणि, प्रतिषिद्धानि शास्त्रे क्रेयत्वेन प्रतिषिद्धानि च निर्हरतः विक्रयार्थमाहरतः सकाशात् सर्वहारं हरेत् विक्रयार्थमापणमध्ये आहृतं द्रव्यं सर्वं दण्डत्वेनापहरेत् । नन्द.

**[1]शुल्कस्थानं परिहरन्नकाले क्रयविक्रयी ।**
**मिथ्यावादी च संख्याने दाप्योऽष्टगुणमत्ययम् ॥**

(१) क्रयविक्रयी वाणिजक उच्यते । शुल्कस्थानं परिहरन् उत्पथेन गच्छन् । अकाले वा रात्रौ शुल्काध्यक्षेषु गतेषु । संख्याने मिथ्यावादी न्यूनं कथयति गणनायाम् । उपलक्षणं चैतत्संख्यानम् । तेन प्रच्छादनेऽप्येष एव विधिः । दाप्यः अष्टगुणम् अत्ययं दण्डम् । यावदपह्नुते तावदष्टगुणम्, यावान्वा तस्यापह्नुतस्योचितः शुल्कस्तम( ? स्तद)ष्टगुणं दाप्यः । आद्यमेव युक्तम् । अत्ययशब्दो हि तत्र समञ्जसः, तद्धेतुत्वात् द्रव्ये । अन्ये त्वकाले क्रयविक्रयी इति संबन्धं कुर्वन्ति । अकालश्चागृहीते शुल्के रहसि वा । प्रतिषेधोऽयम् । $ मेधा.

(२) यः शुल्कमोषणायोत्पथेन गच्छति, अकाले रात्र्यादौ वा क्रयविक्रयं करोति, शुल्कखण्डनार्थं विक्रेयद्रव्यस्याल्पां संख्यां वक्ति, सः राजदेयमपलपितमष्टगुणं दण्डरूपतया दाप्यः । * ममु.

**[1]आगमं निर्गमं स्थानं तथा वृद्धिक्षयावुभौ ।**
**विचार्य सर्वपण्यानां कारयेत् क्रयविक्रयौ ॥**

(१) आपणभूमौ ये विक्रेतारस्ते न स्वेच्छया मूल्यं कर्तुं लभेरन्, नापि राजा क्रीणीयात् स्वरुचिकृतेन मूल्येन । कथं तर्हि ? इदमिदं निरूप्य । आगमम्— किं प्रत्यागच्छति देशान्तरादुत न ? तथा इ(? कि)यतो दूरादागच्छति । एवं निर्गमस्थाने । किं संप्रत्येव विक्रीयते उत तिष्ठति । संप्रति निष्क्रामतो द्रव्यस्य स्वल्पोऽपि लाभो महाफलः, तदुत्थितेन मूल्येन द्रव्यान्तरविक्रयेण क्रयविक्रयेण पुनर्लाभः । स्थानात् वृद्धिक्षयौ । कियत्यस्य वृद्धिस्तिष्ठति कीदृशो वा क्षयः ? इत्येतत् सर्वं परीक्ष्य स्वदेशे क्रयविक्रयौ कारयेत् । यथा न वणिजां पीडा भवति नापि क्रेतॄणां तथाऽर्घं व्यवस्थापयेत् । मेधा.

(२) आगमम् एतावता व्ययेनाऽऽगमनमत्रेति । एवं निर्गमः । §चकारात् स्थानम् एतदवशिष्टं तिष्ठतीति । वृद्धिम् एतावद्वर्धते इति । क्षयम् आनीयमानद्रव्यस्यैवापचय इतस्ततः पातेन । मवि.

(३) कियतो दूरादागतमिति देशान्तरीयद्रव्यस्याऽऽगमनम्, कियद्दूरं नीयते इति स्वदेशोद्भवस्य निर्गमम्, कियत्कालस्थितं कियन्मूल्यं लभते इति स्थितम्, तथा कियती वृद्धिरिति, अत्र कर्मकाराणां भक्ताच्छादनादिना कियानपक्षय इत्येवं विचार्य तथा वणिजां क्रेतॄणां यथा पीडा न भवति तथा सर्वपण्यानां क्रयविक्रयौ कारयेत् । $ ममु.

---

* गोरा., ममु., भाच. मेधागतम् । मच. मेधागतं मविगतं च ।

$ गोरा. व्याख्यानमशुद्धिसंदेहान्नोद्धृतम् । तच्च मेधागतम् । मवि., नन्द. मेधागतम् ।

(१) मस्मृ. ८।४०० ; राप्र. २७४.

* मच., भाच. ममुगतम् ।

§ श्लोके किंचित्पाठान्तरं व्याख्यातुरभिप्रेतमिति प्रतीयते ।

$ गोराव्याख्यानमशुद्धिसंदेहान्नोद्धृतम् । तच्च ममुगतम् ।

(१) मस्मृ. ८।४०१.

(४) स्थानं द्रव्यावस्थितकालवशात् परिमाणंक्षयादि। वृद्धिक्षयौ लाभालाभौ। * मच.

(५) उपक्षयरूपेण वणिजो हस्तात् द्रव्यसंवासः स्थानम्। † नन्द.

**'पञ्चरात्रे पञ्चरात्रे पक्षे पक्षेऽथवा गते।**
**कुर्वीत चैषां प्रत्यक्षमर्घसंस्थापनं नृपः॥**

(१) आगमनिर्गमनादेर्द्रव्यस्यानित्यत्वादुपचयापचयौ अर्घस्यानेकरूपौ। ततोऽर्घसंस्थापनं पञ्चरात्रे पञ्चरात्रे प्रत्यक्षीकार्यम्, न सकृत् कृतं मन्तव्यम्। नापि वणिजो विश्वसितव्याः। किं तर्हि? स्वयं प्रतिजागरणीयम्। यत् द्रव्यं चिरेण निष्क्रामति तत्र पक्षेऽर्घगवेषणमन्यत्र पाञ्चरात्रिकम्। ‡ मेधा.

(२) प्रत्यक्षम् आत्मगोचरम्। कालविकल्पः शङ्काल्पत्वाधिक्यापेक्षया। मवि.

(३) आगमनिर्गमोपाययोगादेः पण्यानामनियतत्वात् अस्थिरार्घादीनां पञ्चरात्रे पञ्चरात्रे गते स्थिरप्रायार्घाणां पक्षे पक्षे गते वणिजामर्घविदां प्रत्यक्षं नृपतिः आप्तपुरुषैः व्यवस्थां कुर्यात्। ममु.

(४) राज्ञा क्रयादावपि तत्परेण भाव्यमित्याह—पञ्चेति। स्थिरास्थिरार्थभेदेन पञ्चरात्र इत्यादिविकल्पः। तेषां वणिजामर्घस्थापनं तत्स्थानं प्रत्यक्षमाप्तपुरुषैः कुर्यात्। यथा ते विक्रीय न पलायन्ते अपह्नुवते वा। मच.

(५) एषां पण्यवस्तूनां सर्वं संस्थापनं प्रत्यक्षम् आत्मनः पुरतः नृपः कुर्वीत। भाच.

* शेषं ममुगतम्।

† शेषं मेधागतम्।

‡ गोरा. मेधागतम्।

(१) मस्मृ. ८।४०२; मच. चैषां (तेषां); भाच. क्षमर्वं (क्षं सर्वं).

**'तुलामानं प्रतीमानं सर्वं च स्यात्सुलक्षितम्।**
**षट्सु षट्सु च मासेषु पुनरेव परीक्षयेत्॥**

(१) तुला प्रसिद्धा। मानं प्रस्थो द्रोण इत्यादि। प्रतीमानं सुवर्णादीनां परिच्छेदार्थं यत् क्रियते। सर्वतोभागे तत् सुलक्षितं राजचिह्नैरङ्कितं कार्यम्। स्वयं प्रत्यक्षेण परिच्छिद्य स्वमुद्रया परीक्षयेत् षट्सु षट्सु मासेषु पुनः परीक्षां कारयेत् आप्तैरधिकारिभिः यथा न विचालयन्ति केचित्। * मेधा.

(२) तुलामानं कार्पासादितुलारूपं मानम्। प्रतिमानं माषकादिप्रतिकृतप्रमाणम्। मवि.

(३) तुलामानं सुवर्णादीनां परीच्छेदार्थं यत् क्रियते, प्रतिमानं प्रस्थद्रोणादि, तत्सर्वं स्वनिरूपितं यथा स्यात्। † ममु.

(४) अत्रापि राज्ञा सावधानेन भाव्यमित्याह—तुलेति। तुला कार्पासलवणादिपरिच्छेदिका, मानं प्रस्थद्रोणादि, प्रतीमानं सुवर्णादीनां परिच्छेदार्थं यन्निरूपितम्, सर्वं तत् स्वलक्षितं स्वमुद्रामुद्रितं तुलादि धूर्तवणिजः कदाचित् तन्न्यूनाधिकं कुर्वन्तीति कृत्वा परीक्षयेत् भग्नादिकं त्यक्त्वा पुनर्मुद्रयेत्। षट्सु षट्सु इति वीप्सा प्रत्यक्षाभिप्राया। मच.

(५) मानं प्रस्थादि। लक्षितं राजनामाङ्कनादिना। नन्द.

(६) तुलामानं तुलया मीयते तत् तुलामानम्। $ भाच.

* गोरा. मेधागतम्।

† शेषं मेधागतम्।

$ शेषं मविगतं ममुगतं च।

(१) मस्मृ. ८।४०३; मेधा. तुलामा (तुला मा) सर्वं च (सर्वतः); गोरा. तुलामा (तुला मा); मवि. च स्यात्सु (पार्थिव); ममु. स्यात्सु (स्यात्स्व); मच. तुलामा (तुला मा) स्यात्सु (स्यात्स्व); नन्द. तुलामा (तुला मा).

नावध्यक्षव्यवहारः

***¹पणं यानं तरे दाप्यं पौरुषोऽर्धपणं तरे ।**
**पादं पशुश्च योषिच्च पादार्धं रिक्तकः पुमान् ॥**
**भाण्डपूर्णानि यानानि तार्यं दाप्यानि सारतः ।**
**रिक्तभाण्डानि यत्किंचित्पुमांसश्चापरिच्छदाः ॥**
**दीर्घाध्वनि यथादेशं यथाकालं तरो भवेत् ।**
**नदीतीरेषु तद्विद्यात् समुद्रे नास्ति लक्षणम् ॥**
**गर्भिणी तु द्विमासादिस्तथा प्रव्रजितो मुनिः ।**
**ब्राह्मणा लिङ्गिनश्चैव न दाप्यास्तारिकं तरे ॥**

## याज्ञवल्क्यः

नियोज्यानां कार्याध्यक्षाणां गुणाः अपराधेषु दण्डविधिश्च

**²तत्र तत्र च निष्णातानध्यक्षान्कुशलाञ्शुचीन् ।**
**प्रकुर्यादायकर्मान्तव्ययकर्मसु चोद्यतान् ॥**

( १ ) तत्र तत्र धर्मार्थकामादिषु अध्यक्षान् योग्यानधिकारिणः प्रकुर्यात् नियुञ्जीत । यथाऽऽहुः— ' धर्मकृत्येषु धर्मज्ञानर्थकृत्येषु पण्डितान् । स्त्रीषु क्लीबान्नियुञ्जीत नीचान्निन्द्येषु कर्मसु ॥ ' इति । कीदृशान् ? निष्णातान् अनन्यव्यापारान्, कुशलान् तत्तद्व्यापारचतुरान्, शुचीन् चतुर्विधोपधाशुद्धान्, आयकर्मसु सुवर्णाद्युत्पत्तिस्थानेषु व्ययकर्मसु सुवर्णादिदानस्थानेषु च उद्यतान् अनलसान् । चशब्दात् प्राज्ञत्वादिगुणयुक्तान् । उक्तं च— ' प्राज्ञत्वमुपधाशुद्धिरप्रमादोऽभियुक्तता । कार्येषु व्यसनाभावः स्वामिभक्तिश्च योग्यता ॥ ' इति ।

मिता.

( २ ) तत्र तत्र धर्मार्थकामप्रयोजनेषु कर्मसु निष्णातान् प्रवीणान् धर्मशास्त्राभिज्ञान् कर्मकुशलान्, शुचीनर्थेषु, चोद्यतान् उद्यमिनः धनागमान्तःपुरव्ययकर्मसु अध्यक्षान् अधिकृतपुरुषनियन्तॄन् प्रयत्नेन कुर्यात् । योग्यानध्यक्षान् कुर्यादिति तात्पर्यार्थः ।

अप.

( ३ ) तत्र तत्र दुर्गादौ ।

दीक.

( ४ ) तत्र तत्र धर्मकोशहस्त्यश्वादिस्थानान्तःपुरादिषु अध्यक्षान् अधिकारिणः प्रकुर्यात् नियुञ्जीत । शुचीन् परद्रव्यग्रहणादिजन्याशौचरहितान् । चकारात् पूर्वोक्तस्थिरत्वसमुच्चयः । आये सुवर्णाद्युत्पादने कर्मान्ते आरब्धकर्मनिर्वाहे व्ययकर्मणि आवश्यकदुर्गादिरक्षणोपयोगिधनव्यये च कर्मणि । चकारादायस्थानरक्षणादिके ।

* वीमि.

**¹†ये राष्ट्राधिकृतास्तेषां चारैर्ज्ञात्वा विचेष्टितम् ।**
**साधून् संमानयेद्राजा विपरीतांश्च घातयेत् ॥**
**उत्कोचजीविनो द्रव्यहीनान्कृत्वा विवासयेत् ॥**

क्रयविक्रयेषु अर्घस्थापना, शुल्कादानव्यवस्था,

अपराधेषु दण्डविधिश्च

**§²राजनि स्थाप्यते योऽर्घः प्रत्यहं तेन विक्रयः ।**
**क्रयो वा निःस्रवस्तस्माद्वणिजां लाभकृत्स्मृतः ॥**

केन पुनरर्घेण पणितव्यमित्यत आह— राजनीति । राजनि संनिहिते सति यस्तेनार्घः स्थाप्यते निरूप्यते तेनार्घेण प्रतिदिनं क्रयो विक्रयो वा कार्यः । निर्गतः स्रवः निःस्रवः विशेषः तस्मात् राजनिरूपितार्घात् यः निःस्रवः स एव वणिजां लाभकारी, न पुनः स्वच्छन्दपरिकल्पितात् । मनुना चार्घकरणे विशेषो दर्शितः— 'पञ्च-

---

* एतेषां चतुर्णां श्लोकानां व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च ' प्रकृतयः— कोशः ' इत्यस्मिन्प्रकरणे ( पृ. १३४७ –१३४८ ) द्रष्टव्यः ।

( १ ) मनु. ८।४०४–४०७.

( २ ) यास्मृ. १।३२२ ; विश्व. १।३१८ ; मिता. ; अप. १।३२०–३२१ न्तव्यय ( न्तर्व्यय ); रार. २४ शुचीन् ( ऋजून् ) ; वीमि. कर्मसु ( कर्मणि ).

* शेषं मितागतम् ।

† अस्य सार्धश्लोकस्य व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च 'प्रकृतयः— राष्ट्रम्' ( पृ. १४१३ ) इत्यत्र द्रष्टव्यः ।

§ एतदादिश्लोकत्रयस्य शेषव्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च व्यवहारकाण्डे स्तेयप्रकरणे ( पृ. १७३१ ), चतुर्थश्लोकस्य व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च ' प्रकृतयः— कोशः ' इत्यस्मिन् प्रकरणे ( पृ. १३५५ ) द्रष्टव्यः ।

( १ ) यास्मृ. १।३३८, ३३९.

( २ ) यास्मृ. २।२५१–२५३.

रात्रे पञ्चरात्रे पक्षे मासे तथा गते । कुर्वीत चैषां प्रत्यक्ष-मर्घसंस्थापनं नृपः ॥' ( मस्मृ. ८।४०२ ) इति ।

मिता.

**स्वदेशपण्ये तु शतं वणिग्गृह्णीत पञ्चकम् ।**
**दशकं पारदेश्ये तु यः सद्यः क्रयविक्रयी ॥**

स्वदेशप्राप्तं पण्यं गृहीत्वा यो विक्रीणीते असौ पञ्चकं शतं पणशते पणपञ्चकं लाभं गृह्णीयात्, परदेशात् प्राप्ते पुनः पण्ये शतपणमूल्ये दशपणान् लाभं गृह्णीयात्, यस्य पण्यस्य ग्रहणदिवसे एव विक्रयः संपद्यते । यः पुनः कालान्तरे विक्रीणीते तस्य कालोत्कर्षवशाल्लाभोत्कर्षः कल्प्यः । एवं च यथाऽर्घे निरूपिते पणशते पञ्चपणो लाभो भवति तथैवार्घो राज्ञा स्वदेशपण्यविषये स्थापनीयः ।

मिता.

**पण्यस्योपरि संस्थाप्य व्ययं पण्यसमुद्भवम् ।**
**अर्घोऽनुग्रहकृत् कार्यः क्रेतुर्विक्रेतुरेव च ॥**

पारदेश्यपण्ये अर्घनिरूपणप्रकारमाह— पण्यस्येति । देशान्तरादागते पण्ये देशान्तरगमनप्रत्यागमनभाण्डग्रहण-शुल्कादिस्थानेषु यावानुपयुक्तोऽर्थस्तावन्तमर्थं परिगणय्य पण्यमूल्येन सह मेलयित्वा यथा पणशते दशपणो लाभः संपद्यते तथा क्रेतृविक्रेत्रोरनुग्रहकारी अर्घः राज्ञा स्थापनीयः ।

मिता.

**[1]अर्घप्रक्षेपणाद्विंशं भागं शुल्कं नृपो हरेत् ।**
**व्यासिद्धं राजयोग्यं च विक्रीतं राजगामि तत् ॥**
**[2]मिथ्या वदन् परीमाणं शुल्कस्थानादपासरन् ।**
**दाप्यस्त्वष्टगुणं यश्च सव्याजक्रयविक्रयी ॥**

( १ ) राजभाव्यशुल्कनिमित्तं च पण्यद्रव्यादेः मिथ्या वदन् . . . . ।

विश्व.

( २ ) यः पुनर्वणिक् शुल्कवञ्चनार्थं पण्यपरिमाणं निह्नुते, शुल्कग्रहणस्थानाद्वा अपसरति, यश्च अस्येद-मस्येदं वेत्येवं विवादास्पदीभूतं पण्यं क्रीणाति विक्रीणीते वा ते सर्वे पण्यादष्टगुणं दण्डनीयाः ।

मिता.

( ३ ) यश्च सव्याजौ शौल्किकप्रतारणवन्तौ क्रय-विक्रयौ करोति सोऽपि शुल्कादष्टगुणं दण्ड्यः । * अप.

( ४ ) यश्च विक्रयकाले राजवञ्चनार्थं छद्मना अकाले क्रयं विक्रयं वा करोति सोऽपहृतद्रव्यापेक्षयाऽष्टगुणं दण्डं दाप्यः । शुल्कस्थानमगत्वैव विवर्त्मनाऽन्यत्र गच्छति तदा सर्वापहारः । यथा विष्णुः— 'शुल्कस्थानमपक्रम्य सर्वापहारमाप्नुयात्' ( विस्मृ. ३।३१ ) । * दीक.

( ५ ) इदं मयाऽत्र स्थाप्यते, न तु क्रीयते विक्रीयते ( वा ) इति वञ्चयित्वा क्रयविक्रयकारी च वणिक् पण्या-दष्टगुणं दण्डं दाप्यः । चकाराभ्यां शत्रन्तप्रतिपाद्यस्य व्याजक्रयविक्रयिणश्च प्रत्येकं दण्डनिमित्तत्वं द्योतयति ।

* वीमि.

**[1]तरिकः स्थलजं शुल्कं गृह्णन् दाप्यः पणान् दश ॥**

( १ ) अपि च शुल्कं हि द्विविधं स्थलजं जलजं च । तत्र स्थलजम् 'अर्घप्रक्षेपणाद्विंशं भागं शुल्कं नृपो हरेत् ।' इत्यत्रोक्तम् । जलजं तु मानवेऽभिहितम्— 'पणं यानं तरे दाप्यः पुरुषोऽर्धपणं तरे । पादं पशुश्च योषिच्च पादार्धं रिक्तकः पुमान् ॥ भाण्डपूर्णानि यानानि तार्यं दाप्यानि सारतः । रिक्तभाण्डानि यत्किंचित् पुमांसश्चा-परिच्छदाः ॥ गर्भिणी तु द्विमासादिस्तथा प्रव्रजितो मुनिः । ब्राह्मणा लिङ्गिनश्चैव न दाप्यास्तारिकं नराः ॥' ( मस्मृ. ८।४०४, ४०५, ४०७ ) इति । शुल्कद्वये-ऽप्ययमपरो विशेषः— 'न भिन्नकार्षापणमस्ति शुल्कं न शिल्पवृत्तौ न शिशौ न दूते । न भैक्षलब्धे न हृताव-शेषे न श्रोत्रिये प्रव्रजिते न यज्ञे ॥' ( वस्मृ. १९।२५ ) इति । तीर्यतेऽनेनेति तरिः नावादिः । तज्जन्यशुल्केऽधि-

---

( १ ) यास्मृ. २।२६१.

( २ ) यास्मृ. २।२६२ ; विश्व. २।२६७ सरन् ( क्रमन् ) सव्याज ( स व्याज ) ; मिता. सव्याज ( स व्याज ) ; अप. ; वीमि. त्वष्ट ( श्चाष्ट ) सव्याज ( स व्याज ).

* शेषं मितागतम् ।

( १ ) यास्मृ. २।२६३ ; मिता. ; अप. ; वीमि.

कृतस्तरिकः । स यदा स्थलोद्भवं शुल्कं गृह्णाति तदा दशपणान् दण्डनीयः । * मिता.

(२) शुल्कमप्रयच्छतो वणिज इवासमुचितं शुल्कं गृह्णतोऽपि राजाधिकृतस्य दण्ड इत्यभिदधानः तत्तुल्यापराधेऽपि दण्डमाह– तरिक इति । ¶ वीमि.

## नारदः

अपराधे दण्डविधिः

[1]**शुल्कस्थानं परिहरन्नकाले क्रयविक्रयी ।**
**मिथ्योक्त्वा च परीमाणं दाप्योऽष्टगुणमत्ययम् ॥**

शुल्कमदत्त्वा शुल्कस्थानं परिहृत्य गच्छन् शुल्कस्थानं प्राप्तश्चाकृतशुल्कः राज्यादौ अकाले प्रच्छन्नक्रयविक्रयकृत् मिथ्योक्त्वा द्रव्याणां सारासाराणां परिमाणमूनमुक्त्वा दाप्यः शुल्कादष्टगुणं दण्डम् । अधिकवचने न दोषः, यद्यप्यधिकवचनेन मिथ्योक्तिस्तथाऽपि राजभाव्यस्यानपहारात् । स्वार्थहानेश्च न छलं ग्राह्यम् । नाभा.

## बृहस्पतिः

नियोज्यानां कार्याध्यक्षाणां गुणाः

[2]**कुलाढ्य उद्युक्तो मृदुरुदात्तः समरचित्तः शूरोऽनुरक्तोऽभेद्यः पत्तिविशेषज्ञः इङ्गिताकारकुशलः प्रतिहारः स्यात् ॥**

**वनकुलकालजातिसात्म्यगुणवयःशीलायुरादानगमनकल्पनावान् व्यपगतभयो विजयोर्जितमना हस्त्यध्यक्षः स्यात् ॥**

**क्षेत्रजातिसात्म्यगुणलक्षणवाहनाभिज्ञोऽस्त्यर्थसमर्थः शुचिरनुद्धतोऽनुरूपोऽश्वाध्यक्षः स्यात् ॥**

अधिकृतानां गुणाः

**अविकार्योऽविकलेन्द्रियः प्रतापवान् सुभगः सुमुखोऽकृपणोऽप्रमादी दक्षो दाक्षिण्यचारित्ररक्षणार्थमधिकरणसंदिग्धविवेककृदुपरिकः स्यात् ॥**

* अप., दीक. मितागतम् ।

¶ शेषं मितागतम् ।

(१) नासं. ४।१३ ; नास्मृ. ६।१३.

(२) विश्व. १।३०७.

[1]**शब्दाभिधानतत्त्वज्ञौ गणनाकुशलौ शुची ।**
**नानालिपिज्ञौ कर्तव्यौ राज्ञा गणकलेखकौ ॥**

शब्दाभिधानं कोषः । गणकः ज्योतिर्वित् । लेखकः व्याकरणकोषवेत्ता । द्वावपि योगरूढौ । उभयत्र तयोरेव कुशलतेत्यर्थः । रार. २१

## उशना

निधिपगुणाः

[2]**विद्याभिजनयुक्तान् पूर्वदृष्टप्रमाणान् वृद्धान् निधिपालने नियुञ्ज्यात् ॥**

## बृहत्पराशरः

अध्यक्षादीनां गुणाः

[3]**शूरानथ शुचीन् प्राज्ञान् परविश्वासकारिणः ।**
**सर्वस्थानेषु चाध्यक्षान् सत्कृत्य वेदिनो परे ॥**

[4]**नरान् दण्डधृतः कुर्याद्धर्मज्ञानार्थसाधकान् ।**
**समर्थानश्वपत्यादीञ्शूरान् स्वामिहितोद्यतान् ॥**
**शुचीन् प्राज्ञान्स्वधर्मज्ञान्विप्रान्मुद्राकरान् हितान् ।**
**लेखकानपि कायस्थान् लेख्यकृत्यविचक्षणान् ॥**
**अमात्यान् मन्त्रिणो दूतान् यथोदितपुरोहितान् ।**
**प्राड्विवाकान्समस्तान्वा हितांश्चाऽऽरक्षकानपि ॥**

[5]**वृद्धान्कञ्चुकिनो विप्राञ्शुचीनाढ्यांश्च वीरकान् ॥**

## आश्वलायनः

चाररक्षाधिकृतादीनां गुणाः

[6]**चारांश्च रक्षकांश्चापि क्षत्तारश्चाधिवासयेत् ॥**

[7]**अन्तःपुरस्याऽऽत्मनश्च स्त्रीणां च परिरक्षणे ।**
**कुर्याद् ब्राह्मणदेशस्य स्वात्मेष्टानधिकारिणः ॥**

(१) रार. २१. (२) मभा. १०।३६.

(३) बृपसं. १२।१२. (४) बृपसं. १२।९–११.

(५) बृपसं. १२।१३. (६) आश्वस्मृ. ८।३३.

(७) आश्वस्मृ. ८।१२६, १२७.

आप्तशास्त्राञ्शुचीन् दान्तान् कुलीनान् धर्मतत्परान् ।
शूरान् विनीतान् सर्वत्र कुर्याद्रक्षाधिकारिणः ॥
[1]कुशलान्निर्मलान्बन्धूञ्शुचींल्लोभविवर्जितान् ।
यूनः पुंसश्च युवतीः सूदान् कुर्यान्महानसे ॥

## * मत्स्यपुराणम्

अध्यक्षाणामवान्तराधिकृतानां च गुणाः

[2]प्रांशुः सुरूपो दक्षश्च प्रियवादी न चोद्धतः ।
चित्तग्राहश्च सर्वेषां प्रतीहारो विधीयते ॥
[3]प्रांशवोऽशयनाः शूरा दृढभक्ता निराकुलाः ।
राज्ञा तु रक्षिणः कार्याः सदा क्लेशसहा हिताः ॥
[4]अनाहार्योऽनृशंसश्च दृढभक्तिश्च पार्थिवे ।
ताम्बूलधारी भवति नारी वाऽप्यथ तद्गुणा ॥

अनाहार्यः परैरभेद्यः । ‡ राक. २६

[5]षाड्गुण्यविधितत्त्वज्ञो देशभाषाविशारदः ।
सांधिविग्रहिकः कार्यो राज्ञा नयविशारदः ॥

षड्गुणाः संधिविग्रहयानासनद्वैधीभावसंश्रयाः, तेषां विधेः प्रकारस्य वेत्ता । * राक. २६

[1]कृताकृतज्ञो भृत्यानां ज्ञेयः स्याद्देशरक्षिता ।
आयव्ययज्ञो लोकज्ञो देशोत्पत्तिविशारदः ॥

( १ ) अक्षरक्षिता अक्षपरिपालकः । राक. २६

( २ ) अक्षरक्षिता अक्षाणां पाशानां क्रीडासाधनीभूतानां रक्षिता पालकः । राप्र. १८३

[2]सुरूपस्तरुणः प्रांशुर्दृढभक्तिः कुलोचितः ।
शूरः क्लेशसहश्चैव खड्गधारी प्रकीर्तितः ॥
[3]शूरश्च बलयुक्तश्च गजाश्वरथकोविदः ।
धनुर्धारी भवेद्राज्ञः सर्वक्लेशसहः शुचिः ॥
[4]निमित्तशकुनज्ञानी हयशिक्षाविशारदः ।
हयायुर्वेदतत्त्वज्ञो भुवो भागविचक्षणः ॥
[5]बलाबलज्ञो रथिनः स्थिरदृष्टिः प्रियंवदः ।
शूरश्च कृतविद्यश्च सारथिः परिकीर्तितः ॥

---

* यत् मत्स्यसमानाक्षरं विष्णुधर्मोत्तरं तस्य स्थलादिनिर्देशोऽत्रैव कृतः ।

‡ राप्र. राकवत् ।

( १ ) आश्वस्मृ. ८।१२९.

( २ ) मत्स्य. २१५।११ ; विध. २।२४।११–१२ ; राक. २५ ग्राहश्च ( ग्राही च ) हारो ( हारी ) ; राप्र. १८० ग्राहश्च ( ग्राही च ).

( ३ ) मत्स्य. २१५।१४ ; विध. २।२४।१४–१५ ऽशयनाः (व्यायताः) सदा ( तदा ) ; राक. २६ ऽशयनाः ( व्यायताः ) ; राप्र. १८० राकवत् .

( ४ ) मत्स्य. २१५।१५ ; विध. २।२४।१५–१६ पूर्वार्धे ( अहार्याश्चानृशंसाश्च दृढभक्ताश्च पार्थिवे । ) वाऽप्य ( चाप्य ) ; राक. २६ ; राप्र. १८१.

( ५ ) मत्स्य. २१५।१६ ; विध. २।२४।१६–१७ सांधि ( संधि ) हिकः ( हकः ) ; राक. २६ भाषा (काल) ; राप्र. १८१ राकवत् .

* राप्र. राकवत् ।

( १ ) मत्स्य. २१५।१७ ; विध. २।२४।१७–१८ स्याद्देश ( स्याद्दक्ष ) श्लोकार्धौ व्यत्यासपठितौ ; राक. २६ स्याद्देश ( स्यादक्ष ) श्लोकार्धौ व्यत्यासपठितौ ; राप्र. १८३ राकवत् .

( २ ) मत्स्य. २१५।१८ ; विध. २।२४।१८–१९ प्रांशुर्दृढभक्तिः ( शूरो दृढभक्तः ) ; राक. २६ ; राप्र. १८१ सुरूप ( पु( ? प )रुष ).

( ३ ) मत्स्य. २१५।१९ ; विध. २।२४।१९–२० बल ( बहु ) धनुर्धा ( कोशधा ) सर्व ( सदा ) हः शुचिः ( हश्च यः ) ; राक. २६ ; राप्र. १८१.

( ४ ) मत्स्य. २१५।२० ; विध. २।२४।२०–२१ ज्ञानी ( ज्ञान ) भुवो ( भूमि ) विचक्षणः ( विशेषवित् ) ; राक. २६–२७ विधवत् ; राप्र. १८१ भुवो ( भूमि ) विचक्षणः ( विशेषवित् ).

( ५ ) मत्स्य. २१५।२१ ; विध. २।२४।२१–२२ रथिनः ( रथिनां ) प्रियंवदः ( विशारदः ) ; राक. २७ ; राप्र. १८१.

[1]अनाहार्यः शुचिर्दक्षश्चिकित्सितविदां वरः ।
सूपशास्त्रविशेषज्ञः सूदाध्यक्षः प्रशस्यते ॥

अनाहार्यः परैरभेद्यः । राप्र. १८१

[2]सूदशास्त्रविधानज्ञाः परामेद्याः कुलोद्गताः ।
सर्वे महानसे धार्याः कृत्तकेशनखा नराः ॥

[3]सर्वदेशाक्षराभिज्ञः सर्वशास्त्रविशारदः ।
लेखकः कथितो राज्ञः सर्वाधिकरणेषु वै ॥

[4]शीर्षोपेतान् सुसंपूर्णान् समश्रेणिगतान् समान् ।
अक्षरान् वै लिखेद्यस्तु लेखकः स वरः स्मृतः ॥

[5]उपायवाक्यकुशलः सर्वशास्त्रविशारदः ।
बह्वर्थवक्ता चाल्पेन लेखकः स्यान्नृपोत्तम ॥

उपायाः सामदानभेददण्डाः । तेषु वाक्ये च निपुणः । * राक. २७

[6]वाक्याभिप्रायतत्त्वज्ञो देशकालविभागवित् ।
अनाहार्ये भवेत् सक्तो लेखकः स्यान्नृपोत्तम ॥

---

* राप्र. राकवत् ।

(१) मत्स्य. २१५।२२ ; विध. २।२४।२२–२३ द्वितीयचरणे (श्चिकित्सकवचोरतः) सूप (सूद) शेष (धान) ; राक. २७ ; राप्र. १८१ सूप (सूद).

(२) मत्स्य. २१५।२३ ; विध. २।२४।२३–२४ धार्याः कृत्त (कार्या नीच) नराः (जनाः) ; राक. २७ कृत्त (नीच) ; राप्र. १८२ राकवत्.

(३) मत्स्य. २१५।२५–२६ ; विध. २।२४।२६ भिज्ञः (भिज्ञाः) रदः (रदाः) तृतीयचरणे (लेखकाः कथिता राम) ; राक. २७ करणेषु वै (करणो बुधैः) ; राप्र. १८२.

(४) मत्स्य. २१५।२६–२७ ; विध. २।२४।२७ श्रेणि (द्रोणी) वै लिखे (विलिखे) ; राक. २७ समान् (शुभान्) ; राप्र. १८२ सम (शुभ).

(५) मत्स्य. २१५।२७–२८ ; विध. २।२४।२८ नृपो (भृगू) ; राक. २७ ; राप्र. १८३.

(६) मत्स्य. २१५।२८–२९ ; राक. २७,२८ तृतीयचरणे (अनाहार्यो नृपे भक्ते) ; राप्र. १८३ वाक्या (राजा) तृतीयचरणे (अनाहार्यो नृपे भक्तो).

[1]पुरुषान्तरतत्त्वज्ञाः प्रांशवश्चाप्यलोलुपाः ।
धर्माधिकरणे कार्या जनाह्वानकरा नराः ।
एवंविधास्तथा कार्या राज्ञा दौवारिका जनाः ॥

[2]लोहवस्त्राजिनादीनां रत्नानां च विधानवित् ।
विज्ञाता फल्गुसाराणामनाहार्यः शुचिः सदा ॥

[3]निपुणश्चाप्रमत्तश्च धनाध्यक्षः प्रकीर्तितः ॥

[4]आयद्वारेषु सर्वेषु धनाध्यक्षसमा नराः ।
व्ययद्वारेषु च तथा कर्तव्याः पृथिवीक्षिता ॥

[5]हस्तिशिक्षाविधानज्ञो वनजातिविशारदः ।
क्लेशक्षमस्तथा राज्ञो गजाध्यक्षः प्रशस्यते ॥

[6]एतैरेव गुणैर्युक्तः स्थविरश्च विशेषतः ।
गजारोही नरेन्द्रस्य सर्वकर्मसु शस्यते ॥

(१) स्थासनः दृढासनः । राक. २८

(२) स्थासनः दृढासनः । दुष्टगजेनापि चालयितुमशक्यम् आसनम् उपवेशनं यस्य स तथा । राप्र. १८४

---

(१) मत्स्य. २१५।२९–३० करणे (कारिणः) जनाह्वान (जना दान) ; विध. २।२४।२९–३० राज्ञा (राज्ञो) ; राक. २८ करणे (करणैः) ; राप्र. १८३.

(२) मत्स्य. २१५।३१ ; विध. २।२४।३०–३१ जिनादीनां (दिधातूनां) विधान (विभाग) णामना (णां त्वना) ; राक. २८ ; राप्र. १८३.

(३) मत्स्य. २१५।३२ ; विध. २।२४।३१ ; राक. २८ ; राप्र. १८३.

(४) मत्स्य. २१५।३३ ; विध. २।२४।३२ च तथा (सर्वेषु) ; राक. २८ ; राप्र. १८३.

(५) मत्स्य. २१५।३६ ; विध. २।२४।३५ ; राक. २८ ; राप्र. १८४.

(६) मत्स्य. २१५।३७ ; विध. २।२४।३६ स्थविर (स्वाधीन) रोही (रोहो) ; राक. २८ स्थविर (स्थासन) ; राप्र. १८४ राकवत्.

[1]हयशिक्षाविधानज्ञश्चिकित्सितविशारदः ।
अश्वाध्यक्षो महीभर्तुः स्वासनश्च प्रशस्यते ॥

[2]अनाहार्यश्च शूरश्च तथा प्राज्ञः कुलोद्गतः ।
दुर्गाध्यक्षः स्मृतो राज्ञ उद्युक्तः सर्वकर्मसु ॥

[3]वास्तुविद्याविधानज्ञो लघुहस्तो जितश्रमः ।
दीर्घदर्शी च शूरश्च स्थपतिः परिकीर्तितः ॥

[4]यन्त्रमुक्ते पाणिमुक्ते विमुक्ते मुक्तधारिते ।
अस्त्राचार्यो निरुद्वेगः कुशलश्च विशिष्यते ॥

यन्त्रमुक्ते शरादौ । पाणिमुक्ते शक्त्यादौ । अमुक्ते खड्गादौ । मुक्तधारिते यष्ट्यादौ । * राक. २९

[5]वृद्धः कुलोद्गतः सूक्तः पितृपैतामहः शुचिः ।
राज्ञामन्तःपुराध्यक्षो विनीतश्च तथेष्यते ॥

[6]पञ्चाशाब्दाधिका योषाः पुरुषाः सप्ततेः परे ।
अन्तःपुरचराः कार्या राज्ञा सर्वेषु कर्मसु ॥

---

* राप्र. राकवत् ।

(१) मत्स्य. २१५।३८ ; विध. २।२४।३७ द्वितीयचरणे ( स्वच्चिकित्सितपारगः ) ; राक. २९ ; राप्र. १८४ विधवत् .

(२) मत्स्य. २१५।३९ ; विध. २।२४।३८ राज्ञ ( राम ) ; राक. २९ ; राप्र. १८४.

(३) मत्स्य. २१५।४० ; विध. २।२४।३९ लघु ( लग्न ) ; राक. २९ ; राप्र. १८४.

(४) मत्स्य. २१५।४१ ; विध. २।२४।४० विमुक्ते ( अमुक्ते ) निरुद्वेगः ( नियुद्धे च ) विशि ( तथे ) ; राक. २९ विमुक्ते ( अमुक्ते ) ; राप्र. १८४.

(५) मत्स्य. २१५।४२ ; राक. २९ ; राप्र. १८४ सूक्तः ( श्लक्ष्णः ).

(६) मत्स्य. २१५।४३ ( एवं सप्ताधिकारेषु पुरुषाः सप्त ते पुरे ( ? सप्ततेः परे ) । परीक्ष्य चाधिकार्याः स्यू राज्ञा सर्वेषु कर्मसु ॥ ) ; विध. २।२४।४१ पूर्वार्धे ( पञ्चाशदधिका नार्यः पुरुषाः सप्ततिस्तथा । ) ; राक. २९ ; राप्र. १८४.

[1]स्थापनाजातितत्त्वज्ञः सततं प्रतिजागृतः ।
राज्ञः स्यादायुधागारे दक्षः ( ? गाराध्यक्षः )
कर्मसु चोद्यतः ॥

स्थापना आयुधयन्त्राणामुचितदेशनिवेशः । जातयः आयुधादीनामवान्तरभेदाः । * राक. २९

## गरुडपुराणम्

अध्यक्षाणामवान्तराधिकृतानां च गुणाः

[2]कुलशीलगुणोपेतः सत्यधर्मपरायणः ।
रूपवान् सुप्रसन्नश्च कोशाध्यक्षो विधीयते ॥

[3]मूल्यरूपपरीक्षाकृद्भवेद्रत्नपरीक्षकः ॥

[4]इङ्गिताकारतत्त्वज्ञो बलवान् प्रियदर्शनः ।
अप्रमादी प्रमाथी च प्रतीहारः स उच्यते ॥

[5]मेधावी वाक्पटुः प्राज्ञः सत्यवादी जितेन्द्रियः ।
सर्वशास्त्रसमालोकी ह्येष साधुः स लेखकः ॥

[6]समस्तस्मृतिशास्त्रज्ञः पण्डितोऽथ जितेन्द्रियः ।
शौर्यवीर्यगुणोपेतो धर्माध्यक्षो विधीयते ॥

[7]पितृपैतामहो दक्षः शास्त्रज्ञः सत्यवाचकः ।
शुचिश्च कठिनश्चैव सूपकारः स उच्यते ॥

---

* राप्र. राकवत् ।

(१) मत्स्य. २१५।४४ तत्त्वज्ञः ( तत्त्वज्ञाः ) जागृतः ( जागृताः ) ; विध. २।२४।४२ स्थापनाजा ( स्थविरा जा ) त्वज्ञः ( त्वज्ञाः ) जागृतः ( जाग्रतः ) ; राक. २९ जागृतः ( जाग्रतः ) ; राप्र. १८४.

(२) गरुड. १।११२।४ ; राप्र. १७९ रूपवान् ( रूपेण ) कोशा ( राज्या ).

(३) गरुड. १।११२।५ ; राप्र. १७९.

(४) गरुड. १।११२।६ ; राप्र. १८० बल ( धन ).

(५) गरुड. १।११२।७ ; राप्र. १८२.

(६) गरुड. १।११२।९ ; राप्र. १८२ स्मृति (कृत).

(७) गरुड. १।११२।१० ; राप्र. १८२ वाचकः ( पाचकः ) तृतीयचरणे ( शौचयुक्तः सदाचारः ).

शास्त्रज्ञः नलभीमसुषेणादिकृतसूपशास्त्रज्ञः 'आर्द्रकं गुडसंयुक्तम्', 'ताम्रपात्रे स्थितं गव्यम्' इत्यादिनिषिद्धज्ञानाय धर्मशास्त्रज्ञश्च । राप्र. १८२

## अग्निपुराणम्

अध्यक्षादीनां गुणाः यथायोगं नियोजनं च

[1]राज्ञा सेनापतिः कार्यो ब्राह्मणः क्षत्रियोऽथ वा ॥
कुलीनो नीतिशास्त्रज्ञः प्रतीहारश्च नीतिवित् ।
दूतश्च प्रियवादी स्यादक्षीणोऽतिबलान्वितः ॥
ताम्बूलधारी ना स्त्री वा भक्तः क्लेशसहः प्रियः ।
सांधिविग्रहिकः कार्यः षाड्गुण्यादिविशारदः ॥
खड्गधारी रक्षकः स्यात्सारथिः स्याद्बलादिवित् ।
सूदाध्यक्षो हितो विज्ञो महानसगतो हि सः ॥
सभासदस्तु धर्मज्ञा लेखकोऽक्षरविद्धितः ।
आह्वानकालविज्ञाः स्युर्हिता दौवारिका जनाः ॥
रत्नादिज्ञो धनाध्यक्षो ह्यर्थद्वारे हितो नरः ।
स्यादायुर्वेदविद्वैद्यो गजाध्यक्षोऽथ हस्तिवित् ॥
जितश्रमो गजारोहो हयाध्यक्षो हयादिवित् ।
दुर्गाध्यक्षो हितो धीमान्स्थपतिर्वास्तुवेदवित् ॥
यन्त्रमुक्ते पाणिमुक्ते अमुक्ते मुक्तधारिते ।
अस्त्राचार्यो नियुद्धे च कुशलो नृपतेर्हितः ॥
वृद्धश्चान्तःपुराध्यक्षः पञ्चाशद्वार्षिकाः स्त्रियः ।
सप्तत्यब्दास्तु पुरुषाश्चरेयुः सर्वकर्मसु ॥
जाग्रत्स्यादायुधागारे ज्ञात्वा वृत्तिर्विधीयते ।
उत्तमाधममध्यानि बुद्ध्वा कर्माणि पार्थिवः ॥
उत्तमाधममध्यानि पुरुषाणि नियोजयेत् ।
जयेच्छुः पृथिवीं राजा सहायानानयेद्धितान् ॥
धर्मिष्ठान् धर्मकार्येषु शूरान् संग्रामकर्मसु ।
निपुणानर्थकृत्येषु सर्वत्र च तथा शुचीन् ॥
स्त्रीषु षण्ढान्नियुञ्जीत तीक्ष्णान् दारुणकर्मसु ।
यो यत्र विदितो राज्ञा शुचित्वेन तु तं नरम् ॥
धर्मे चार्थे च कामे च नियुञ्जीताधमेऽधमान् ।
राजा यथार्हं कुर्याच्च उपधाभिः परीक्षितान् ॥
समन्त्री च यथान्यायात्कुर्याद्धस्तिवनेचरान् ।
तत्पदान्वेषणे यत्तानध्यक्षांस्तत्र कारयेत् ॥
यस्मिन्कर्मणि कौशल्यं यस्य तस्मिन्नियोजयेत् ।
पितृपैतामहान्भृत्यान् सर्वकर्मसु योजयेत् ॥
[1]कुर्यादुद्योगसंपन्नानध्यक्षान् सर्वकर्मसु ॥

## कालिकापुराणम्

कार्याधिकृतानां गुणाः

[2]अभितिष्ठेत् स्वयं राजा कृषिमात्मसमैस्तथा ।
वणिक्पथे तु दुर्गादौ तेषु शक्तान्नियोजयेत् ॥
अन्तःपुरे पितुस्तुल्यान्धीरान्वृद्धान्नियोजयेत् ।
षण्ढान्पण्डांस्तथा वृद्धान्स्त्रियो वा बुद्धितत्पराः ॥
शुद्धान्ते द्वारि युञ्जीयात्स्त्रियो वृद्धा मनीषिणीः ॥

## कामन्दकीयनीतिसारः

विविधेषु कर्मसु परीक्षितभृत्यनियोजनम्, अग्नाविव राज्ञि भृत्यवर्तनमिष्टम्

*[3]आयद्वारेषु सर्वेषु कुर्यादाप्तान्परीक्षितान् ।
आददीत धनं तैस्तु भास्वानुस्रैरिवोदकम् ॥
अभ्यस्तकर्मणस्तज्ज्ञाञ्शुचीञ्शुद्धार्थसंगतान् ।
कुर्यादुद्योगसंपन्नानध्यक्षान् सर्वकर्मसु ॥
यो यद्वस्तु विजानाति तं तत्र विनियोजयेत् ।
अशेषविषयप्राप्ताविन्द्रियार्थेष्विवेन्द्रियम् ॥
आस्रावयेदुपचितान् साधु दुष्टव्रणानिव ।
आयुक्तास्ते च वर्तेरन्नग्नाविव महीपतौ ॥

---

* अस्य श्लोकपञ्चकस्य व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च 'स्वाम्यनुजीविवृत्तम्' इत्यस्मिन् प्रकरणे (पृ.१७३४–१७३८) द्रष्टव्यः ।

(१) अग्नि. २२०।१-१६.
(१) अग्नि. २३९।४४.
(२) कालिका. ८७।७२-७४.
(३) कानी. ५।७३-७५, ८४-८५.

**स्वल्पमप्यपकुर्वन्ति ये पापाः पृथिवीपतौ ।**
**ते वह्नाविव दह्यन्ते पतङ्गा मूढचेतसः ॥**

## शुक्रनीतिः

पुरुषत्रयनियुक्तिः प्रत्येकमधिकारे, अधिकारपरिवर्तन-व्यवस्था

**[1]एकस्मिन्नधिकारे तु पुरुषाणां त्रयं सदा ।**
**नियुञ्जीत प्राज्ञतमं मुख्यमेकं तु तेषु वै ॥**

एकस्मिन् अधिकारे कर्मणि विषये सदा पुरुषाणां त्रयं नियुञ्जीत, तेषु त्रिषु मध्ये एकं मुख्यतमम् अतिश्रेष्ठं प्राज्ञं प्रकृष्टज्ञानवन्तं नियुञ्जीत । शुनीटी.

**द्वौ दर्शकौ तु तत्कार्ये हायनैस्तन्निवर्तयेत् ।**
**त्रिभिर्वा पञ्चभिर्वाऽपि सप्तभिर्दशभिश्च वा ॥**

तत्कार्ये तस्मिन् कर्मणि दर्शकौ, नियोक्तव्यौ इति शेषः । त्रिभिः पञ्चभिर्वा सप्तभिर्वा दशभिः हायनैः वर्षैः तन्निवर्तनं तयोर्दर्शकयोः निवर्तनं परिवर्तनम्, कर्तव्यमिति शेषः । शुनीटी.

**दृष्ट्वा तत्कार्यकौशल्ये तथा तौ परिवर्तयेत् ।**
**नाधिकारं चिरं दद्याद्यस्मै कस्मै सदा नृपः ॥**

तत्कार्यकौशल्ये तयोः कार्ये कौशल्यं नैपुण्यं च दृष्ट्वा तौ परिवर्तयेत् । नृपः सदा सततं यस्मै कस्मै अपि चिरम् अधिकारं न दद्यात् । शुनीटी.

**अधिकारे क्षमं दृष्ट्वा ह्यधिकारे नियोजयेत् ।**
**अधिकारमदं पीत्वा को न मुह्येत् पुनश्चिरम् ॥**

अधिकारे क्षमं कार्यक्षमं दृष्ट्वा हि दृष्ट्वैव अधिकारे नियोजयेत् । कः पुनः चिरम् अधिकारजं मदं पीत्वा न मुह्येत् ? अपि तु सर्व एव मुह्येदित्यर्थः । अतश्चिरम् अधिकारो न दातव्य इति भावः ।

शुनीटी.

**अतः कार्यक्षमं दृष्ट्वा कार्येऽन्ये तं नियोजयेत् ।**
**तत्कार्ये कुशलं चान्यं तत्पदानुगतं खलु ॥**
**नियोजयेद्वर्तने तु तदभावे तथाऽपरम् ।**
**तद्गुणो यदि तत्पुत्रस्तत्कार्ये तं नियोजयेत् ॥**

अतः अस्मात्कारणात् तं कर्मकरं कार्यक्षमं दृष्ट्वा एकस्मात् कार्यात् अन्ये अन्यस्मिन् । अन्ये इति आर्षम् । कार्ये नियोजयेत् । वर्तने तु कार्यचलने सति तु अन्यं च तत्पदानुगतं तत्पदस्थितं जनं तत्कार्ये कुशलं परिवर्तितकार्यक्षमं नियोजयेत् । खलु अवधारणे । तदभावे अशक्तौ तथा कार्यक्षमम् अपरं नियोजयेत् । यदि तत्पुत्रः तस्य पूर्वकर्मचारिणः पुत्रः तद्गुणः पितृवद्गुण शाली । विद्यते इति शेषः । तदा तत्कार्ये तं नियोजयेत् । शुनीटी.

**यथा यथा श्रेष्ठपदे ह्यधिकारी यदा भवेत् ।**
**अनुक्रमेण संयोज्यो ह्यन्ते तं प्रकृतिं नयेत् ॥**

यदा नवः कर्मचारी यथा यथा यादृशे यादृशे श्रेष्ठपदे अधिकारी योग्यः भवेत् तादृशे तादृशे सः अनुक्रमेण संयोज्यः उत्तरोत्तरं नियोक्तव्यः । हिशब्दः अवधारणे । अन्ते चरमे तं क्रमोन्नतं कर्मचारिणं *प्रकृतिं स्वभावं प्रधानं वा स्वपैतृकपदमित्यर्थः नयेत् प्रापयेत् ।

शुनीटी.

**अधिकारबलं दृष्ट्वा योजयेद्दर्शकान् बहून् ।**
**अधिकारिणमेकं वा योजयेद्दर्शकैर्विना ॥**

अधिकारबलं कार्यबलं कार्यगौरवमित्यर्थः, दृष्ट्वा विचार्य बहून् दर्शकान् कार्यदर्शिनः योजयेत् नियोजयेत् । वा अथवा दर्शकं विना एकं कार्यसमर्थम् अधिकारिणं योजयेत् । शुनीटी.

विविधकार्याध्यक्षाणां नियुक्तिः तेषां गुणाश्च

**ये चान्ये कर्मसचिवास्तान्सर्वान्विनियोजयेत् ।**
**गजाश्वरथपादातपशूष्ट्रमृगपक्षिणाम् ॥**
**सुवर्णरत्नरजतवस्त्राणामधिपान् पृथक् ।**
**वित्तानामधिपं धान्याधिपं पाकाधिपं तथा ॥**
**आरामाधिपतिं चैव सौधगेहाधिपं पृथक् ।**
**संभारपं देवतुष्टिपतिं दानपतिं सदा ॥**

---

(१) शुनी. २।१०९–१३६.

* वस्तुतोऽत्र प्रकृतिशब्देन पूर्वोक्तपुरोहिताद्यन्यतमा प्रकृतिरभिधीयते ।

**साहसाधिपतिं चैव ग्रामनेतारमेव च ।**
**भागहारं तृतीयं तु लेखकं च चतुर्थकम् ।**
**शुल्कग्राहं पञ्चमं च प्रतिहारं तथैव च ॥**
**षट्कमेतन्नियोक्तव्यं ग्रामेग्रामे पुरेपुरे ॥**

ये च अन्ये कर्मसचिवाः कर्मक्षमाः पुरुषाः तान् सर्वान् यथायथं गजानाम् अश्वानां रथानां पादातानां पशूनां गवादीनाम् उष्ट्राणां मृगाणां पक्षिणां सुवर्णानां रत्नानां रजतानां तथा वस्त्राणाम् अधिपान्, वित्ताधिपं धनाध्यक्षम्, धान्याधिपम्, पाकाधिपं पाकाध्यक्षम्, आरामाधिपतिम् उद्यानाध्यक्षम्, सौधगेहाधिपं हर्म्याध्यक्षम्, संभारपं सामान्यद्रव्यसमूहाधिपतिम्, देवतुष्टिपतिं देवसेवाध्यक्षम्, दानपतिं दानाध्यक्षम्, साहसाधिपतिं संग्रामादिसाहसकर्माध्यक्षम्, ग्रामनेतारं ग्रामाध्यक्षम्, भागहारं प्रजाभ्यः राजग्राह्यांशादायिनम्, लेखकं लिपिकरम्, शुल्कग्राहं राजग्राह्यवाणिज्याद्यंशहरम्, तथा प्रतिहारं द्वारपालं पृथक्पृथक् योजयेत् तत्तदाधिपत्यकर्मणि नियोजयेत् । किं च साहसाधिपतिप्रभृतिषट्कं ग्रामेग्रामे प्रतिग्रामं पुरेपुरे प्रतिपुरं नियोक्तव्यम् । शुनीटी.

***तपस्विनो दानशीलाः श्रुतिस्मृतिविशारदाः ।**
**पौराणिकाः शास्त्रविदो दैवज्ञा मान्त्रिकाश्च ये ॥**
**आयुर्वेदविदः कर्मकाण्डज्ञास्तान्त्रिकाश्च ये ।**
**ये चान्ये गुणिनः श्रेष्ठा बुद्धिमन्तो जितेन्द्रियाः ॥**
**तान्सर्वान्पोषयेद् भृत्यान्दानैर्मानैः सुपूजितान् ।**
**हीयते चान्यथा राजा ह्यकीर्तिं चापि विन्दति ॥**

**बहुसाध्यानि कार्याणि तेषामप्यधिपांस्तथा ।**
**तत्तत्कार्येषु कुशलाञ्ज्ञात्वा तांस्तु नियोजयेत् ॥**

कार्याणि बहुसाध्यानि बहुजननिर्वाह्यानि ज्ञात्वा तत्तत्कार्येषु कुशलान् तान् पूर्वोक्तान् जनान् तेषां बहुसाध्यानां कार्याणाम् अधिपान् नियोजयेत् ।

शुनीटी.

---

* एतदादिश्लोकत्रयस्य व्याख्यानं 'राजकर्तव्यानि' इत्यस्मिन् प्रकरणे (पृ. ११५१) द्रष्टव्यम् ।



**अमन्त्रमक्षरं नास्ति नास्ति मूलमनौषधम् ।**
**अयोग्यः पुरुषो नास्ति योजकस्तत्र दुर्लभः ॥**

अक्षरं वर्णः अमन्त्रम् अमन्त्रात्मकं नास्ति । वर्णमात्रस्य ब्रह्मरूपत्वात् सर्व एव वर्णो मन्त्र इत्यर्थः । मूलं तरुगुल्मादीनामित्यर्थः, अनौषधम् औषधव्यतिरिक्तं नास्ति । सर्वमेव मूलम् औषधं किमपि भेषजमित्यर्थः । पुरुषः अयोग्यः अक्षमः नास्ति । यस्य कस्यचिदपि पुरुषस्य यस्मिन् कस्मिन्नपि कार्ये पाटवादिति भावः । तत्र तथा स्थिते योजकः यथायोग्यप्रयोक्ता पुरुषः दुर्लभः अप्राप्यः । सर्वस्य अक्षरस्य मन्त्रत्वेऽपि सर्वस्य मूलस्य औषधत्वेऽपि सर्वस्य पुरुषस्य योग्यत्वेऽपि यथायथप्रयोगस्य सर्वैरसुकरत्वादिति भावः । शुनीटी.

**प्रभद्रादिजातिभेदं गजानां च चिकित्सितम् ।**
**शिक्षां व्याधिं पोषणं च तालुजिह्वानखैर्गुणान् ।**
**आरोहणं गतिं वेत्ति स योज्यो गजरक्षणे ॥**
**तथाविधाधोरणस्तु हस्तिहृदयहारकः ॥**

यः गजानां प्रभद्रादिजातिभेदम्, चिकित्सितम्, शिक्षाम्, व्याधिं पीडाम्, पोषणं पालनम्, तालुजिह्वानखैः गुणान्, आरोहणम्, तथा गतिं वेत्ति जानाति सः गजरक्षणे योज्यः नियोक्तव्यः । तथाविधः तादृशः आधोरणः हस्तिपालकस्तु हस्तिनां हृदयहारकः मनोहरः । हस्तिनियमने निपुण इत्यर्थः । शुनीटी.

**अश्वानां हृदयं वेत्ति जातिवर्णभ्रमैर्गुणान् ।**
**गतिं शिक्षां चिकित्सां च सत्त्वं सारं रुजं तथा ॥**
**हिताहितं पोषणं च मानं यानं दतो वयः ।**
**शूरश्च व्यूहवित्प्राज्ञः कार्योऽश्वाधिपतिश्च सः ॥**

यः अश्वानां हृदयं मनोभावम् । जातिः भेदज्ञापकधर्मविशेषः, वर्णः श्वेतलौहित्यादिकम्, भ्रमाः रोम्णामावर्तादयः, तैः गुणान् विशेषान् । गतिं नियमम्, शिक्षाम्, चिकित्साम्, सत्त्वं बलम्, सारं क्षमत्वम्, रुजं रोगम्, हिताहितं शुभाशुभकरम्, पोषणं पालनम्, मानं परिमाणम्, यानं गमनम्, दतः दन्तान्, वयः वयःक्रमं च वेत्ति जानाति, तथा शूरः बलवान्,

व्यूहवित् सैन्यविन्यासविज्ञः, तथा प्राज्ञः प्रकृष्टबुद्धिमान् भवति, सः अश्वाधिपतिः कार्यः। शुनीटी.

**एभिर्गुणैश्च संयुक्तो धुर्यान् युग्यांश्च वेत्ति यः।**
**रथस्य सारं गमनं भ्रमणं परिवर्तनम्॥**
**समापतत्सु शस्त्रास्त्रलक्ष्यसंधाननाशकः।**
**रथगत्या स रथपो हयसंयोगगुप्तिवित्॥**

यश्च एभिः उक्तैः अश्वहृदयादिज्ञानादिभिः गुणैः संयुक्तः उपलक्षितः धुर्यान् भारवहनक्षमान् युग्यान् अश्वान्, रथस्य सारं दार्ढ्यादिकम्, गमनम्, भ्रमणम्, परिवर्तनं विनिमयं च वेत्ति जानाति, यश्च रथगत्या रथस्य गतिवैचित्र्येण समापततां समागच्छतां सुशस्त्रास्त्राणां प्रतिबलवीराणामित्यर्थः, लक्ष्यस्य स्वरथस्थस्य वीरस्य कर्मभूतस्य यत् संधानं शरव्यीकरणं तस्य नाशकः ध्वंसकः, तथा हयानाम् अश्वानां संयोगे प्रतिबलाश्वैः मेलने या गुप्तिः स्वहयरक्षणं तां वेत्तीति तथोक्तः भवति, स रथपः सारथिरित्यर्थः। भवेदिति शेषः। शुनीटी.

**सादिनश्च तथा कार्याः शूरा व्यूहविशारदाः।**
**वाजिगतिविदः प्राज्ञाः शस्त्रास्त्रैर्युद्धकोविदाः॥**

शूराः बलवन्तः, व्यूहविशारदाः बलरचनाभिज्ञाः, वाजिनाम् अश्वानां गतिविदः गतिज्ञाः, प्राज्ञाः बुद्धिमन्तः, तथा शस्त्रास्त्रैः युद्धकोविदाः रणपण्डिताः जनाः सादिनः अश्वारोहिवीराः कार्याः। शुनीटी.

**चक्रितं रेचितं वल्गितकं धौरितमाप्लुतम्।**
**तुरं मन्दं च कुटिलं सर्पणं परिवर्तनम्॥**
**एकादशाऽऽस्कन्दितं च गतीरश्वस्य वेत्ति यः।**
**यथाबलं यथार्थं च शिक्षयेत् स च शिक्षकः॥**

यः अश्वस्य चक्रितं चक्राकारेण भ्रमणम्, रेचितं गतिविशेषम्, वल्गितम् उल्लम्फनरूपगतिम्, धौरितं गतिभेदम्, आप्लुतं लम्फनम्, तुरं त्वरितपातम्, मन्दं मृदुगतिम्, कुटिलं वक्रगतिम्, सर्पणं गतिप्रभेदम्, परिवर्तनं प्रत्यावर्तनगतिम्, तथा आस्कन्दितं शत्रून् प्रति आक्रमणम् इत्येकादश गतीः वेत्ति जानाति, तथा यथाबलं यथार्थं च शिक्षयेत् विनयेत् स च शिक्षकः अश्वशिक्षकः। भवेदिति शेषः। शुनीटी.

**वाजिसेवासु कुशलः पल्याणादिनियोगवित्।**
**दृढाङ्गश्च तथा शूरः स कार्यो वाजिसेवकः॥**

यः, वाजिसेवायाम् अश्वपरिचर्यायां कुशलः निपुणः, पल्याणादीनाम् अश्वसज्जाविशेषाणां नियोगवित् प्रयोगज्ञः, दृढाङ्गः कठिनशरीरः, तथा शूरः बलवान्, स वाजिसेवकः अश्वसेवकः कार्यः। शुनीटी.

**'अजाविगोमहिष्येणमृगाणामधिपाश्च ये।**
**तद्वृद्धिपुष्टिकुशलास्तद्वात्सल्यनिपीडिताः।**
**तथाविधा गजोष्ट्रादेर्योज्यास्तत्सेवका अपि॥**

ये च अजानां छागानाम्, अवीनां मेषाणाम्, गवाम्, महिषीणाम्, एणानां जन्तुविशेषाणाम्, तथा मृगाणां तत्तद्वृद्धिपुष्टिकुशलाः तत्तदुन्नतिसाधनपोषणनिपुणाः, तद्वात्सल्येन तेषु अजादिषु वात्सल्येन स्नेहेन निपीडिताः, ते तदधिपाः। तथा गजानाम् उष्ट्रादीनां च ये तथाविधाः पालका इत्यर्थः, ते अपि तत्सेवकाः तेषां गजादीनां सेवकाः योज्याः नियोक्तव्याः। शुनीटी.

**युद्धप्रवृत्तिकुशलास्तित्तिरादेश्च पोषकाः।**
**शुकादेः पाठकाः सम्यक् श्येनादेः पातबोधकाः।**
**तत्तद्धृदयविज्ञानकुशलाश्च सदा हि ते॥**

किं च तित्तिरादेः पक्षिजातेः युद्धप्रवृत्तिकुशलाः पोषकाश्च, शुकादेः सम्यक् पाठकाः पाठनकारिणः, तथा श्येनादेः पक्षिविशेषस्य पातबोधकाः पतनज्ञानवन्तः जना नियोक्तव्याः इति अध्याहार्यम्। हि यतः ते जनाः सदा तत्तद्धृदयविज्ञानकुशलाः तेषां तेषां पक्षिणां हृदयविज्ञाने निपुणाः। शुनीटी.

**मानाकृतिप्रभावर्णजातिसाम्याच्च मौल्यवित्।**
**रत्नानां स्वर्णरजतमुद्राणामधिपश्च यः॥**

यश्च रत्नानां स्वर्णरजतमुद्राणां च मानं परिमाणम्, आकृतिः आकारः, प्रभा दीप्तिः, वर्णः रक्तनीलत्वादि, जातिः भेदज्ञापकधर्मविशेषः, तथा साम्यम् औपम्यम्,

(१) शुनी. २।१४९–१७२, १७४–१७५.

तस्मात् मौल्यवित् मूल्यविज्ञः सः रत्नादीनामधिपः । शुनीटी.

**दान्तस्तु सधनो यस्तु व्यवहारविशारदः ।**
**धनप्राणोऽतिकृपणः कोशाध्यक्षः स एव हि ॥**

यस्तु दान्तः विनीतः, सधनः धनवान्, व्यवहारविशारदः लोकाचारविज्ञः, धनप्राणः धनेषु प्राणसमबुद्धिः, तथा अतिकृपणः अतिव्ययकुण्ठः स एव कोषाध्यक्षः धनाध्यक्षः । शुनीटी.

**देशभेदैर्जातिभेदैः स्थूलसूक्ष्मबलाबलैः ।**
**कौशेयादेर्मानमूल्यवेत्ता वस्त्रस्य वस्त्रपः ॥**

यश्च देशभेदैः जातिभेदैः स्थूलसूक्ष्मबलाबलैः देशतः जात्या च विभिन्नैः स्थौल्यसौक्ष्म्यस्थायित्वास्थायित्वरूपैः कौशिकादेः कृमिकोशोत्थादेः वस्त्रस्य मानस्य परिमाणस्य मूल्यस्य च वेत्ता विशेषज्ञः स वस्त्रपः । शुनीटी.

**कुटीकञ्चुकनेपथ्यमण्डपादेः परिक्रियाम् ।**
**प्रमाणतः सौचिकेन रञ्जनानि च वेत्ति यः ॥**
**तथा शय्यादिसंधानं वितानादेर्नियोजनम् ।**
**वस्त्रादीनां च स प्रोक्तो वितानाद्यधिपः खलु ॥**

यश्च कुटीकञ्चुकनेपथ्यमण्डपादेः– कुट्याः कुटीरस्य, कञ्चुकस्य वारबाणस्य, नेपथ्यस्य परिच्छदस्य, तथा मण्डपादेः गृहादेः परिक्रियाम् अनुष्ठानपरिपाटीं प्रमाणतः परिमाणेन, रञ्जनानि च सौचिकेन सूचीकर्मनैपुण्येन, तथा शय्यादिविधानं वितानादेः उल्लोचादेः वस्त्रादीनां च नियोजनं वेत्ति जानाति स खलु वितानाद्यधिपः प्रोक्तः कथितः । शुनीटी.

**जातिं तुलां च मौल्यं च सारं भोगं परिग्रहम् ।**
**संमार्जनं च धान्यानां विजानाति स धान्यपः ॥**

यः धान्यानां जातिम्, तुलाम्, मौल्यं मूल्यम्, सारम्, भोगम्, परिग्रहं ग्रहणोपायम्, संमार्जनं च विजानाति स धान्यपः । शुनीटी.

**धौताधौतविपाकज्ञो रससंयोगभेदवित् ।**
**क्रियासु कुशलो द्रव्यगुणवित् पाकनायकः ॥**

धौतं च क्षालितम्, अधौतम् अक्षालितम्, तयोः विपाकः विशेषेण पचनम्, तं जानातीति तथोक्तः, रसानां कटुकषायतिक्ताम्ललवणमधुराणां संयोगे यः भेदः विशेषः तं वेत्तीति तथाभूतः, क्रियासु पाकक्रियासु कुशलः निपुणः, तथा द्रव्याणां गुणानां च विभागवित् विभागज्ञः जनः पाकनायकः रन्धनाधिपः, भवतीति शेषः । शुनीटी.

**फलपुष्पवृद्धिहेतुं रोपणं शोधनं तथा ।**
**पादपानां यथाकालं कर्तुं भूमिजलादिना ।**
**तद्भेषजं च संवेत्ति ह्यारामाधिपतिश्च सः ॥**

यः पादपानां वृक्षाणां यथाकालं भूमिजलादिना मृत्तिकाप्रदानजलसेचनादिना फलपुष्पाणां वृद्धिहेतुं वर्धनसाधनं रोपणम्, शोधनं संस्करणम्, तथा तेषां भेषजं कीटादिरूपरोगप्रतिकारं संवेत्ति सम्यक् जानाति सः हि एव आरामाधिपतिः । शुनीटी.

**प्रासादं परिखां दुर्गं प्राकारं प्रतिमां तथा ।**
**यन्त्राणि सेतुबन्धं च वापीं कूपं तडागकम् ॥**
**तथा पुष्करिणीं कुण्डं जलाद्यूर्ध्वगतिक्रियाम् ।**
**सुशिल्पशास्त्रतः सम्यक् सुरम्यं तु यथा भवेत् ॥**
**कर्तुं जानाति यः सैव गृहाद्यधिपतिः स्मृतः ॥**

यः सुशिल्पशास्त्रतः शोभनशिल्पशास्त्रसमालोचनया सम्यक् सुरम्यं यथा भवेत्तथा प्रासादं देवराजभवनम्, परिखां दुर्गवेष्टनजलाशयम्, दुर्गम्, प्राकारं प्राचीरम्, प्रतिमां प्रतिमूर्तिम्, यन्त्राणि, सेतुबन्धम्, वापीं दीर्घिकाम्, कूपम्, तडागकं सरोवरम्, पुष्करिणीम्, कुण्डम्, तथा जलादीनाम् ऊर्ध्वे गतिक्रियां यन्त्रादिना ऊर्ध्वगमनं कर्तुं जानाति सैव स एव गृहादीनामधिपतिः स्मृतः कथितः । *सैवेति संधिः आर्षः प्रयोगः । शुनीटी.

**राजकार्योपयोग्यान् हि पदार्थान् वेत्ति तत्त्वतः ।**
**संचिनोति यथाकाले संभाराधिप उच्यते ॥**

---

* भ्रान्तिविलसितमिदम् । यतः 'सोऽचि लोपे चेत् पादपूरणम्' ( पासू. ६।१।१३४ ) इति पाणिन्यनुशासनात् सुलोपे वृद्धौ च सत्यां 'सैव' इति प्रयोगः 'सैष दाशरथी रामः' इत्यादिप्रयोगवत् लौकिक एव ।

यः तत्त्वतः याथार्थ्येन राजकार्योपयोग्यान् पदार्थान् वस्तूनि वेत्ति जानाति, यथाकाले संचिनोति च स संभाराधिपः उच्यते। शुनीटी.

**स्वधर्माचरणे दक्षो देवताराधने रतः।**
**निस्पृहः स च कर्तव्यो देवतुष्टिपतिः सदा॥**

यश्च सदा स्वधर्माचरणे दक्षः तत्परः, देवतानाम् आराधने परिचर्यायां रतः आसक्तः, तथा निस्पृहः निराकाङ्क्षः, लोभरहित इत्यर्थः, सः देवतुष्टिपतिः देवार्चनाध्यक्षः कर्तव्यः। शुनीटी.

**याचकं विमुखं नैव करोति न च संग्रहम्।**
**दानशीलश्च निर्लोभो गुणज्ञश्च निरालसः॥**

**दयालुर्मृदुवाग्दानपात्रविन्नतितत्परः।**
**नित्यमेभिर्गुणैर्युक्तो दानाध्यक्षः प्रकीर्तितः॥**

किं च, यः दानशीलः, निर्लोभः, गुणज्ञः, निरालसः आलस्यरहितः, दयालुः, मृदुवाक् मधुरभाषी, दानपात्रवित्, नतितत्परः विनतः सन् याचकं विमुखं नैव करोति। कदाऽपि न करोतीत्येवशब्दात् प्रतीयते। संग्रहं स्वयं ग्रहणं च न करोति, सः नित्यं सततम् एभिर्गुणैः दानशीलत्वादिभिः युक्तः दानाध्यक्षः प्रकीर्तितः। शुनीटी.

**व्यवहारविदः प्राज्ञा वृत्तशीलगुणान्विताः।**
**रिपौ मित्रे समा ये च धर्मज्ञाः सत्यवादिनः॥**

**निरालसा जितक्रोधकामलोभाः प्रियंवदाः।**
**सभ्याः सभासदः कार्या वृद्धाः सर्वासु जातिषु॥**

ये च सर्वासु जातिषु मध्ये व्यवहारविदः ऋणादानाद्यष्टादशविवादज्ञाः वा लौकिकाचारज्ञाः, प्राज्ञाः विद्वांसः, वृत्तैः सदाचारैः शीलैः सौजन्यादिभिः गुणैः दयादाक्षिण्यादिभिः अन्विताः युक्ताः, रिपौ शत्रौ मित्रे सुहृदि च समाः, धर्मज्ञाः धार्मिकाः, सत्यवादिनः, निरालसाः आलस्यवर्जिताः, जितक्रोधकामलोभाः, प्रियंवदाः प्रियभाषिणः, वृद्धाः स्थविराः, तथा सभ्याः सभासदः कार्याः। शुनीटी.

**सर्वभूतात्मतुल्यो यो निस्पृहोऽतिथिपूजकः।**
**दानशीलश्च यो नित्यं सैव सत्राधिपः स्मृतः॥**

यः सर्वभूतेषु सर्वप्राणिषु आत्मतुल्यः, निस्पृहः निर्लोभः, नित्यम् अतिथिपूजकः, तथा दानशीलश्च, सैव स एव सत्राधिपः यज्ञाध्यक्षः स्मृतः। सैवेति पूर्ववदार्षम् (?)। शुनीटी.

**परोपकारनिरतः परमर्माप्रकाशकः।**
**निर्मत्सरो गुणग्राही तद्विद्यः स्यात्परीक्षकः॥**

यः परेषाम् उपकारे निरतः, परेषां मर्माप्रकाशकः मर्मदारणदोषाप्रकाशी, निर्मत्सरः अन्यशुभद्वेषरहितः, गुणग्राही, तथा तद्वित् गुणज्ञः, सः परीक्षकः स्यात्। शुनीटी.

**प्रजा नष्टा नहि भवेत्तथा दण्डविधायकः।**
**नातिक्रूरो नातिमृदुः साहसाधिपतिश्च सः॥**

यः प्रजा यथा नष्टा न भवेत् तथा दण्डविधायकः तादृशदण्डकरः, नातिक्रूरः नातिनिष्ठुरः, नातिमृदुः नात्यन्तकोमलश्च, स साहसाधिपतिः चौर्यादिशासनाध्यक्षः। कर्तव्य इति शेषः। शुनीटी.

**आधर्षकेभ्यश्चोरेभ्यो ह्यधिकारिगणात्तथा।**
**प्रजासंरक्षणे दक्षो ग्रामपो मातृपितृवत्॥**

**वृक्षान् संपुष्य यत्नेन फलं पुष्पं विचिन्वति।**
**मालाकार इवात्यन्तं भागहारस्तथाविधः॥**

* ग्रामपः ग्रामाधिपतिः आधर्षकेभ्यः दस्युभ्यः, चोरेभ्यः, तथा अधिकारिगणात् दुर्वृत्तराजपुरुषवर्गात् मातृपितृवत् मातेव पितेव च प्रजानां संरक्षणे सम्यक् प्रतिपालने दक्षः यत्नवान् सन् यथा मालाकारः माली

---

* अस्य श्लोकद्वयस्य ग्रामाधिपतिपरत्वेन जीवानन्दव्याख्यानं न समीचीनम्। वस्तुतस्तु प्रथमश्लोको ग्रामाधिपतिपरः, द्वितीयश्लोकस्तु भागहारसंज्ञकापराधिकारिपरः। अत्र 'साहसाधिपतिं चैव ग्रामनेतारमेव च। भागहारं तृतीयं तु' (शुनी. २।१२०) इति पूर्वपठितं वचनम्, तथा 'भागग्राही क्षत्रियस्तु ... ग्रामपो ब्राह्मणो योज्यः' (शुनी. २।४२८) इत्युत्तरपठितं च वचनमनुसंधेयम्।

यत्नेन वृक्षान् अत्यन्तं संपुष्य सम्यक् वर्धयित्वा फलं पुष्पं च विचिन्वति लभते तथाविधः भागहारः तद्वद्भागहारीत्यर्थः । भवेदिति शेषः । प्रजाभ्यः रक्षणमूल्यस्वरूपराजग्राह्यांशं गृह्णीयादिति यावत् । शुनीटी.

**शस्त्रास्त्रकुशलो यस्तु दृढाङ्गश्च निरालसः ।**
**यथायोग्यं समाहूयात् प्रणम्रः प्रतिहारकः ॥**

यस्तु शस्त्रेषु अक्षेपणीयेषु प्रहरणेषु अस्त्रेषु क्षेपणीयेषु प्रहरणेषु कुशलः निपुणः, दृढाङ्गः कठिनशरीरः, निरालसः आलस्यहीनः, तथा प्रणम्रः विनतः सन् यथायोग्यं समाहूयात् समाह्वानं कुर्यात्, करोतीत्यर्थः, स प्रतिहारकः । शुनीटी.

**यथा विक्रयिणां मूलधननाशो भवेन्नहि ।**
**तथा शुल्कं तु हरति शौल्किकः स उदाहृतः ॥**

विक्रयिणां व्यवसायिनां यथा मूलधननाशः नहि नैव भवेत् यः तथा शुल्कं तादृशं राजग्राह्यं हरति आदत्ते, वणिग्भ्यः इति शेषः, स शौल्किकः शुल्कग्राही उदाहृतः कथितः । शुनीटी.

**[1]भागग्राही क्षत्रियस्तु साहसाधिपतिश्च सः ।**
**ग्रामपो ब्राह्मणो योज्यः कायस्थो लेखकस्तथा ॥**

क्षत्रियः भागग्राही राजकरग्रहणे नियुक्तः । तथा साहसाधिपतिः साहसकार्यदत्तपारुष्यादिरूपकार्याणामधिपतिः, शासनाधिकारीत्यर्थः । ब्राह्मणः ग्रामपः ग्रामाध्यक्षः । तथा कायस्थः लेखकः योज्यः नियोक्तव्यः । शुनीटी.

**शुल्कग्राही तु वैश्यो हि प्रतिहारश्च पादजः ॥**

वैश्यः शुल्कानां वाणिज्यादिषु राजकराणां ग्राही । पादजः शूद्रः प्रतिहारः द्वारपालः । शुनीटी.

**[2]जपोपवासनियमकर्मध्यानरतः सदा ।**
**दान्तः क्षमी निस्पृहश्च तपोनिष्ठः स उच्यते ॥**

यः सदा जपे, उपवासे, नियमे व्रतपालने, कर्मणि, तथा ध्याने समाधौ रतः, दान्तः निगृहीतेन्द्रियः, क्षमी क्षमावान्, तथा निस्पृहः निर्लोभश्च स तपोनिष्ठ उच्यते । शुनीटी.

**याचकेभ्यो ददात्यर्थं भार्यापुत्रादिकं त्वपि ।**
**न संगृह्णाति यत्किंचिद्दानशीलः स उच्यते ॥**

यः याचकेभ्यः अर्थिभ्यः अर्थं ददाति, किं तु भार्यापुत्रादिकं स्त्रीपुत्रादिनिमित्तमित्यर्थः (?), अपि यत् किंचित्, धनमिति शेषः, न संगृह्णाति संचिनोति स दानशील उच्यते । शुनीटी.

**पठनं पाठनं कर्तुं क्षमास्त्वभ्यासशालिनः ।**
**श्रुतिस्मृतिपुराणानां श्रुतज्ञास्ते प्रकीर्तिताः ॥**

ये श्रुतिस्मृतिपुराणानां पठनम् अध्ययनं पाठनम् अध्यापनं च कर्तुं क्षमाः, तथा अभ्यासशालिनः अभ्याससमर्थाः, ते श्रुतज्ञाः प्रकीर्तिताः । शुनीटी.

**साहित्यशास्त्रनिपुणः संगीतज्ञश्च सुस्वरः ।**
**सर्गादिपञ्चकज्ञाता स वै पौराणिकः स्मृतः ॥**

यः साहित्यशास्त्रेषु काव्यशास्त्रेषु निपुणः, संगीतज्ञः, सुस्वरः मधुरवाक्, तथा सर्गादिपञ्चकानां (? ञ्चकस्य) सर्गप्रतिसर्गवंशमन्वन्तरवंशानुचरितानाम्, 'सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च । वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ॥' इत्युक्तेः, ज्ञाता वेत्ता, स वै स एव पौराणिकः पुरावृत्तज्ञः स्मृतः कथितः । शुनीटी.

**मीमांसातर्कवेदान्तशब्दशासनतत्परः ।**
**ऊहवान् बोधितुं शक्तस्तत्त्वज्ञः शास्त्रविच्च सः ॥**

यः मीमांसायाम्, तर्के, वेदान्ते, तथा शब्दशासने व्याकरणादिशब्दशास्त्रे तत्परः विज्ञः, ऊहवान् तर्कविचारक्षमः, तथा तत्त्वज्ञः, बोधितुं बोधयितुमित्यर्थः, आर्षमिदम्, शक्तः समर्थः स शास्त्रवित् शास्त्रज्ञः । शुनीटी.

---

(१) शुनी. २।४२८–४२९.

(२) शुनी. २।१७६–१८०, १८४–१८७, १८९–२०४.

**श्रुतिस्मृतीतरैर्मन्त्रानुष्ठानैर्देवतार्चनम् ।**
**कर्तुं हिततमं मत्वा यतते स च तान्त्रिकः ॥**

यः * श्रुत्या, स्मृत्या, इतरेण पुराणादिना विहितैः मन्त्रानुष्ठानैः देवतार्चनं हिततमं मत्वा कर्तुं यतते स तान्त्रिकः । शुनीटी.

**नपुंसकाः सत्यवाचः सुभाषाश्च प्रियंवदाः ।**
**सुकुलाश्च सुरूपाश्च योज्यास्त्वन्तःपुरे सदा ॥**

ये सत्यवाचः सत्यवादिनः, सुभूषाः शोभनालंकाराः, प्रियंवदाः प्रियभाषिणः, सुकुलाः सद्वंशजाः, सुरूपाः, नपुंसकाः क्लीबाः, ते सदा अन्तःपुरे योज्याः रक्षणीयाः । शुनीटी.

**अनन्याः स्वामिभक्ताश्च धर्मनिष्ठा दृढाङ्गकाः ।**
**अबाला मध्यवयसः सेवासु कुशलाः सदा ॥**
**सर्वं यद्यत् कार्यजातं नीचं वा कर्तुमुद्यताः ।**
**निदेशकारिणो राज्ञा कर्तव्याः परिचारकाः ॥**

ये अनन्याः नापरसंक्रान्ताः इत्यर्थः, स्वामिभक्ताः प्रभुपरायणाः, धर्मनिष्ठाः धर्मपराः, दृढाङ्गकाः कठिनशरीराः, अबालाः शैशवातीताः, मध्यवयसः तरुणाः, सेवासु कुशलाः परिचर्याभिज्ञाः, सर्वं यत् यत् कार्यजातं नीचं वा घृणितमपि मलमूत्रादिनिष्काशनादि कर्तुमुद्यताः, किं बहुना ? सदा निदेशकारिणः आज्ञाकारिणः, ते राज्ञा परिचारकाः दासाः कर्तव्याः । शुनीटी.

**राज्ञः समीपप्राप्तानां नतिस्थानविबोधकाः ।**
**दण्डधरा वेत्रधराः कर्तव्यास्ते सुशिक्षकाः ॥**

ये राज्ञः समीपप्राप्तानां समीपोपस्थितानाम्, जनानामिति शेषः, नतिं प्रणामप्रकारं स्थानं स्थितिनियमं च विशेषेण बोधयन्ति ज्ञापयन्ति बोधयितुं शक्नुवन्ति, सुशिक्षकाः सुविनयशिक्षाविदश्च, ते दण्डधराः वेत्रधराः वा कर्तव्याः । शुनीटी.

* वस्तुतस्तु 'श्रुतिस्मृतिविहितेभ्य इतरैः, श्रौतस्मार्तभिन्नैरित्यर्थः' इत्येव व्याख्यातुमुचितम् ।

**तन्त्रीकण्ठोत्थितान्सप्त स्वरान्स्थानविभागतः ।**
**उत्पादयति संवेत्ति ससंयोगविभागिनः ॥**
**अनुरागं सुस्वरं च सतालं च प्रगायति ।**
**सनृत्यं वा गायकानामधिपः स च कीर्तितः ॥**

यः तन्त्रीभ्यः कण्ठेभ्यश्च उत्थितान् सप्त स्वरान् निषादादीन् स्थानविभागतः उत्पादयति जनयति, ससंयोगविभागिनः संयुक्तान् विभक्तांश्च, संवेत्ति सम्यक् जानाति, तथा अनुरागम् अनुगतः रागः यस्मिन् तत्, सुस्वरं मधुरस्वनम्, सतालं तालसहितम्, सनृत्यं नृत्यसहितं वा यथा तथा प्रगायति, सः गायकानामधिपः कीर्तितः कथितः । शुनीटी.

**तथाविधा च पण्यस्त्री निर्लज्जा भावसंयुता ।**
**शृङ्गाररसतत्त्वज्ञा सुन्दराङ्गी मनोरमा ।**
**नवीनोत्तुङ्गकठिनकुचा सुस्मितदर्शिनी ॥**
**ये चान्ये साधकास्ते च तथा चित्तविरञ्जकाः ।**
**सुभृत्यास्तेऽपि संधार्या नृपेणाऽऽत्महिताय च ॥**

नृपेण राज्ञा आत्महिताय आत्मनः मनसः हिताय संतोषाय तथाविधा तादृशसंगीतचतुरा इत्यर्थः, निर्लज्जा, भावसंयुता अनुरागवती, शृङ्गाररसस्य तत्त्वज्ञा सुविदितशृङ्गाररसा इत्यर्थः, सुन्दराङ्गी सुरूपा, मनोरमा चित्तहारिणी, नवीना नवयुवती, उत्तुङ्गकठिनकुचा उन्नतकठिनस्तनी, तथा सुस्मितं यथा तथा पश्यतीति तथोक्ता सहास्यदर्शना पण्यस्त्री वेश्या संधार्या रक्षणीया । तथा ये च अन्ये साधकाः मनोनीतकार्यसाधनचतुराः, चित्तविरञ्जकाः चित्ततोषिणः सुभृत्याः तेऽपि संधार्याः रक्षणीयाः । * एकेन संधार्या इति पदेन

* वस्तुतस्तु सार्धश्लोकात्मकपण्यस्त्रीविषयकवाक्यं पूर्वश्लोकतो वचनविपरिणामेनानुवर्तितेन कर्तव्यापदेनैव निराकाङ्क्षम्, न तस्य 'संधार्या नृपेण' इत्याद्युत्तरवाक्यैकदेशेनैकवाक्यता । 'ये चान्ये' इति तु पृथग्वाक्यमन्यसाधकानामन्यचित्तविरञ्जकानां च संधारणस्य विधायकम् । तत्र च 'अन्ये साधकाः' इत्यस्य पूर्वोक्तगजाधिपादिभ्योऽन्ये कर्मसचिवा इत्यर्थः, 'अन्ये चित्तविरञ्जकाः'

उभयत्र अन्वयः, बहुवचनेऽपि विसर्गलोपादिति विभावनीयम्। शुनीटी.

**वैतालिकाः सुकवयो वेत्रदण्डधराश्च ये।**
**शिल्पज्ञाश्च कलावन्तो ये सदाऽप्युपकारकाः॥**

एते वैतालिकादयः कार्यानुरूपतः कार्यानुसारेण योज्याः रक्षणीया इत्यर्थः। नृपेणेति शेषः। इति उत्तरेणान्वयः। ये वैतालिकाः स्तुतिपाठकाः बोधकराः इति ख्याताः। सुकवयः उत्कृष्टकवयः। वेत्रदण्डधराः पुररक्षकविशेषाः। शिल्पज्ञाः शिल्पकुशलाः। कलावन्तः चतुःषष्टिप्रकारकामविद्याकुशलाः। *तथा सदा उपकारिणः हितैषिणः। शुनीटी.

दुर्गशस्त्रास्त्ररथमार्गादिकारिणां नियुक्तिः

**दुर्गुणासूचका भाणा नर्तका बहुरूपिणः।**
**आरामकृत्रिमवनकारिणो दुर्गकारिणः॥**

दुर्गुणासूचकाः दोषाप्रकाशकाः। भाणाः परिहारकुशलाः। नर्तकाः नटाः। बहुरूपिणः विविधरूपधारिणः। आरामस्य उपवनस्य कृत्रिमवनस्य च कारिणः करणनिपुणाः, तथा दुर्गकारिणः गुप्तिस्थाननिर्मातारः। शुनीटी.

**महानालिकयन्त्रस्थगोलैर्लक्ष्यविभेदिनः।**
**लघुयन्त्राग्नेयचूर्णबाणगोलासिकारिणः॥**

महानालिकं बृहन्नालीयुक्तं यत् यन्त्रं तत्रस्थैः गोलैः गोलाकारैः पिण्डैः लक्ष्यस्य रिपुपक्षस्य भेदिनः भेदनकुशलाः। तथा लघु क्षुद्रं यन्त्रं येषां तादृशानाम् आग्नेयचूर्णानां गुलीतिख्यातानाम्, बाणानां शराणाम्, गोलानां वर्तुलाकारपिण्डानाम्, असीनां तलवाराणां च कारिणः निर्मातारः। शुनीटी.

**अनेकयन्त्रशस्त्रास्त्रधनुस्तूणादिकारकाः।**
**स्वर्णरत्नाद्यलंकारघटका रथकारिणः॥**

अनेकानि विविधानि यन्त्राणि येषां तादृशानां शस्त्राणाम् अस्त्राणां धनुषां तूणादीनां च कारकाः करणक्षमाः। स्वर्णरत्नादिभिः अलंकारघटका भूषणकारिणः। तथा रथकारिणः शकटादिनिर्माणकारिणः। शुनीटी.

**पाषाणघटका लोहकारा धातुविलेपकाः।**
**कुम्भकाराः शौल्विकाश्च तक्षाणो मार्गकारकाः॥**

पाषाणानां प्रस्तराणां घटकाः प्रस्तरैर्गृहादिनिर्मातारः। लोहकाराः कर्मकाराः। धातुभिः गैरिकादिभिः विलेपकाः गृहादिरञ्जनकारिणः। कुम्भकाराः। शौल्विकाः *जातिभेदाः। तक्षाणः सूत्रधरजातिविशेषाः। तथा मार्गकारकाः रथ्याबन्धिनः। शुनीटी.

**नापिता रजकाश्चैव वासिका मलहारकाः॥**
**वार्ताहराः सौचिकाश्च राजचिह्नाग्रधारिणः॥**

नापिताः। रजकाः। वासिकाः काष्ठच्छेदादिजातिभेदाः। मलहारकाः पुरीषादिनिष्काशकाः। वार्ताहराः संवादवाहिनः। सौचिकाः सूचीकर्मकारिणः। तथा राजचिह्नानि अग्रे धारयन्तीति तथोक्ताः। शुनीटी.

**भेरीपटहगोपुच्छशङ्खवेण्वादिनिस्वनैः।**
**ये व्यूहरचका यानव्यपयानादिबोधकाः॥**

ये व्यूहरचकाः सैनिकरचयितारः भेरीणां पटहानां गोपुच्छानां शङ्खानां वेण्वादीनां च वाद्यानां निस्वनैः ध्वनिभिः यानस्य शत्रून् प्रति यात्रायाः व्यपयानस्य शत्रुभ्यः पराङ्मुखीभावस्य आदिपदेन आक्रमणादेश्च बोधकाः ज्ञापकाः। शुनीटी.

**नाविकाः खनका व्याधाः किराता भारिका अपि।**
**शस्त्रसंमार्जनकरा जलधान्यप्रवाहकाः॥**

---

इत्यस्य च पूर्वोक्तगायकाधिप–पण्यस्त्रीभिन्ना नर्मसचिवा इत्यर्थः। इत्थमेव ग्रन्थलापनमुचितं मन्यामहे।

* वस्तुतस्तु 'उपकारकाः' इति सर्वेषां सहायानां विशेषणम्, न तु सहायान्तरबोधकम्।

* नहि जातिः संधार्यत्वे प्रयोजिका, अपि तु कर्मविशेषद्वारकोपकार एवेति 'ताम्रकाराः' इत्येव व्याख्यातुमुचितम्। एवमुत्तरत्रापि जातिनिर्देशे बोध्यम्।

नाविकाः कर्णधाराः । खनकाः खननकारिणः । व्याधाः । किराताः । भारिकाः भारवाहिनः । शस्त्राणां संमार्जनकराः तीक्ष्णयितारः । तथा जलानां धान्यानां च प्रवाहकाः वहनकारिणः । शुनीटी.

**आपणिकाश्च गणिका वाद्यजायाप्रजीविनः ।**
**तन्तुवायाः शाकुनिकाश्चित्रकाराश्च चर्मकाः ॥**

आपणिकाः विपणिवासिनः । गणिकाः वाराङ्गनाः, वैदेशिककर्मचारिणां स्थित्यर्थमिति भावः । वाद्यैः जायाभिः पत्नीभिर्वा प्रकर्षेण जीवन्तीति तथोक्ताः । तन्तुवायाः प्रसिद्धाः । शाकुनिकाः पक्षिजीविनः । चित्रकाराः आलेख्यव्यवसायिनः । तथा चर्मकाः चर्मकाराः ।

शुनीटी.

**गृहसंमार्जकाः पात्रधान्यवस्त्रप्रमार्जकाः ।**
**शय्यावितानास्तरणकारकाः शासका अपि ॥**

गृहाणां संमार्जकाः शोधकाः । पात्राणां तैजसानाम्, धान्यानां वस्त्राणां च प्रमार्जकाः शुद्धिकारिणः । शय्यानाम्, वितानानाम् उल्लोचाख्यानामाच्छादनपटानाम्, आस्तरणानां शय्योपरिपातनीयानां पटानां कारकाः निर्मातारः । शासकाः अपि शिक्षकाश्च । शुनीटी.

**आमोदास्वेदसद्धूपकारास्ताम्बूलिकास्तथा ।**
**हीनाल्पकर्मिणश्चैते योज्याः कार्यानुरूपतः ॥**

आमोदानां सुगन्धानाम्, अस्वेदानां स्वेदाजनकानाम् अनुष्णानामित्यर्थः, सताम् उत्कृष्टानां धूपानां गन्धद्रव्यविशेषाणां *काराः कारकाः । ताम्बूलिकाः ताम्बूलप्रस्तोतारः (१), †तथा हीनाल्पकर्मिणः हीनकर्मिणः निकृष्टकर्मकराः अल्पकर्मिणः क्षुद्रकर्मकराश्च ।

शुनीटी.

---

* अयं प्रयोगोऽसाधुः, अकर्मोपपदकादणः कर्तरि घञश्चाविधानात् । कारः कृतिः, सोऽस्यास्तीत्यर्थे अर्शआद्यचा वा समाधेयम् ।

† वस्तुतः पूर्वोक्तानां वैतालिकादीनां सर्वेषां कर्मिणामेतद्विशेषणम्, न तु कर्म्यन्तरनिर्देशः ।

यामिकनियुक्तिः यामिककार्याणि च

***[1]कार्यस्थानानि सर्वाणि यामिकैरभितोऽनिशम् ॥**
**नयवान्नीतिनतिवित् सिद्धशस्त्रादिकैर्वरैः ।**
**चतुर्भिः पञ्चभिर्वाऽपि षड्भिर्वा गोपयेत् सदा ॥**

**तत्रत्यानि दैनिकानि शृणुयाल्लेखकाधिपैः ।**
**दिने दिने यामिकानां प्रकुर्यात् परिवर्तनम् ॥**
**गृहपङ्क्तिमुखे द्वारं कर्तव्यं यामिकैः सदा ।**
**तैस्तद्वृत्तं तु शृणुयाद्गृहस्थभृतिपोषितैः ॥**
**निर्गच्छन्ति च ये ग्रामाद्ये ग्रामं प्रविशन्ति च ।**
**तान् सुसंशोध्य यत्नेन मोचयेद्दत्तलग्नकान् ॥**
**प्रख्यातवृत्तशीलांस्तु ह्यविमृश्य विमोचयेत् ।**
**वीथिवीथिषु यामार्धैर्निशि पर्यटनं सदा ॥**
**कर्तव्यं यामिकैरेव चौरजारनिवृत्तये ॥**

**[2]अष्टधा दशधा वाऽपि कुर्याद्द्वादशधाऽपि वा ।**
**यामिकार्थमहोरात्रं यामिकान् वीक्ष्य नान्यथा ॥**

यामिकान् प्रहरिणः वीक्ष्य विचार्य यामिकार्थे प्रहरिणां निमित्तम् अहोरात्रम् अष्टधा दशधा अथवा द्वादशधा कुर्यात् विभजेदित्यर्थः । अन्यथा न, यामिकानामेव दिवाविभागस्य आवश्यकत्वादिति भावः । शुनीटी.

**आदौ प्रकल्पितानंशान् भजेयुर्यामिकास्तथा ।**
**आद्यः पुनस्त्वन्तिमांशं स्वपूर्वांशं ततोऽपरे ॥**

यामिकाः प्रहरिणः आदौ अग्रतः तथा तेन प्रकारेण प्रकल्पितान् निर्दिष्टान् अंशान् भजेयुः गृह्णीयुः । किंच आद्यः प्रथमः यामिकः अन्तिमांशं शेषभागम्, ततः आद्यात् अपरे अन्ये यामिकाः स्वपूर्वांशं निजनिजपूर्वभागं भजेयुरिति शेषः । शुनीटी.

---

* एतदादीनां षण्णां श्लोकानां व्याख्यानं 'राजकर्तव्यानि' इत्यस्मिन्प्रकरणे (पृ. ११४३) द्रष्टव्यम् ।

(१) शुनी. १।२८७–२९३.

(२) शुनी. ४।७।४०२–४०८.

**पुनर्वा योजयेत्तद्वदाद्येऽन्त्यं चान्तिमे ततः ।**
**स्वपूर्वांशं द्वितीयेऽह्नि द्वितीयादिक्रमागतम् ॥**

पुनश्च आद्ये यामिके अन्त्यम्, तद्वत् तथा अन्तिमे शेषे यामिके वा आद्यम्, तथा द्वितीये अह्नि द्वितीयादिक्रमागतं स्वपूर्वांशं योजयेत् । शुनीटी.

**चतुर्भ्यस्त्वधिकान्नित्यं यामिकान्योजयेद्दिने ।**
**युगपद्योजयेद् दृष्ट्वा बहून् वा कार्यगौरवम् ॥**

दिने चतुर्भ्यः अधिकान् यामिकान् नित्यं प्रत्यहं योजयेत् नियुञ्ज्यात् । वा अथवा कार्यगौरवं दृष्ट्वा युगपत् एककालं बहून् यामिकान् योजयेत् । शुनीटी.

**चतुरूनान् यामिकांस्तु कदा नैव नियोजयेत् ॥**

कदाऽपि चतुरूनान् चतुर्भ्यः हीनान् एकं द्वौ त्रीन् वेत्यर्थः, यामिकान् नैव नियोजयेत् । शुनीटी.

**यद्रक्ष्यमुपदेक्ष्यं(? श्यं) यदादेश्यं यामिकाय तत् ।**
**तत्समक्षं हि सर्वं स्याद्यामिकोऽपि च तत्तथा ॥**

यत् रक्ष्यं रक्षणीयं यच्च उपदेश्यं शिक्षणीयं तत् यामिकाय आदेश्यम् उपदेष्टव्यम् । हि यतः सर्वं प्रजानां कार्यं तत्समक्षं तस्य यामिकस्य समक्षं प्रत्यक्षं स्यात् । तस्मात् यामिकोऽपि तत् सर्वं तथा, शिक्षेतेति शेषः । शुनीटी.

**कीलकोष्ठे तु स्वर्णादि रक्षेन्नियमितावधि ।**
**स्वांशान्ते दर्शयेदन्ययामिकं तु यथार्थकम् ॥**

यामिकः नियमितावधि निर्धारितकालं यावत् स्वर्णादि यत् अस्वामिकं वा सस्वामिकं चोरितादि प्राप्तमिति भावः, कीलकोष्ठे कीलस्य आश्रयस्तम्भस्य कोष्ठे मध्ये रक्षेत् । ततः स्वस्य अंशान्ते प्रहरिकालस्य अंशावसाने अन्ययामिकम्, स्वपदे उपस्थितमिति शेषः, यथार्थकं तत्सर्वं दर्शयेत् दर्शयित्वा बोधयेदित्यर्थः । शुनीटी.

**क्षणे क्षणे यामिकानां कार्यं दूरात् सुबोधनम् ॥**

क्षणे क्षणे दूरात् सुबोधनं प्रजानां सतर्कतासंपादनं यामिकानां कार्यम् । शुनीटी.

## नीतिवाक्यामृतम्

नियोज्यानां गुणा दोषाश्च

†[1]**सोऽधिकारी यः स्वामिना सति दोषे सुखेन निग्रहीतुं शक्यते ॥**

**ब्राह्मणक्षत्रियसंबन्धिनो न कुर्यादधिकारिणः ॥**

**ब्राह्मणो जातिवशात् सिद्धमप्यर्थं कृच्छ्रेण प्रयच्छति न प्रयच्छति वा ॥**

**क्षत्रियो नियुक्तो याचितः खड्गं दर्शयति ॥**

**संबन्धी ज्ञातिभावेनाऽऽक्रम्य सामवायिकान् सर्वमप्यर्थं ग्रसते ॥**

**संबन्धस्त्रिविधः श्रौतो मौखो यौनश्च ॥**

**सहदीक्षितः सहाध्यायी वा श्रौतः ॥**

**मुखेन परिज्ञातो मौखः ॥**

**योनेर्जातो यौनः ॥**

**वाचिकसंबन्धे नास्ति संबन्धान्तरानुवृत्तिः ॥**

**न तं कमप्यधिकुर्यात् सत्यपराधे यमुपहत्यानुशयीत ॥**

**मान्योऽधिकारी राजाज्ञामवज्ञाय निरवग्रहश्चरति ॥**

**चिरसेवको नियोगी नापराधेष्वाशङ्कते ॥**

**उपकर्ताऽधिकारस्थ उपकारमेव ध्वजीकृत्य सर्वमवलुम्पति ॥**

**सहपांशुक्रीडितोऽमात्योऽतिपरिचयात् स्वयमेव राजायते ॥**

**अन्तर्दुष्टो नियुक्तः सर्वमनर्थमुत्पादयति ॥**

**सुहृदि नियोगिन्यवश्यं भवति धनमित्रनाशः ॥**

**मूर्खस्य नियोगो भर्तुर्धर्मार्थयशसां संदेहो निश्चितमनर्थनरकपातौ ॥**

---

† एतदादीनां पञ्चचत्वारिंशतः सूत्राणां व्याख्यानं 'प्रकृतयः- अमात्याः' इत्यस्मिन् प्रकरणे (पृ. १२३३-१२३८) द्रष्टव्यम् ।

(१) नीवा. १८।२१-६२,६४-६५.

सोऽधिकारी चिरं नन्दति स्वामिप्रसादो नोत्सेकयति ॥

किं तेन परिच्छदेन यत्राऽऽत्मक्लेशेन कार्यं सुखं वा स्वामिनः ॥

का नाम निर्वृतिः स्वयमूढतृणभोजिनो गजस्य ॥

अश्वसधर्माणः पुरुषाः कर्मसु नियुक्ता विकुर्वते ॥

तस्मादहन्यहनि तान् परीक्षेत ॥

मार्जारेषु दुग्धरक्षणमिव नियोगिषु विश्वासकरणम् ॥

ऋद्धिश्चित्तविकारिणी नियोगिनामिति सिद्धानामादेशः ॥

सर्वोऽप्यतिसमृद्धोऽधिकारी भवत्यायत्यामसाध्यः कृच्छ्रसाध्यः स्वामिपदाभिलाषी वा ॥

भक्षणमुपेक्षणं प्रज्ञाहीनत्वमुपरोधः प्राप्तार्थाप्रवेशो द्रव्यविनिमयश्चेत्यमात्यदोषाः ॥

बहुमुख्यमनित्यं च करणं स्थापयेत् ॥

स्त्रीष्वर्थेषु च मनागप्यधिकारे न ज्ञातिसंबन्धः ॥

परदेशजं चापेक्ष्य नित्यश्चाधिकारः(?) ॥

आदायकनिबन्धकप्रतिबन्धकनीवीग्राहकराजाध्यक्षाः करणानि ॥

आयव्ययविशुद्धं द्रव्यं नीवी ॥

नीवीनिबन्धकपुस्तकग्रहणपूर्वकमायव्ययौ विशोधयेत् ॥

आयव्ययविप्रतिपत्तौ कुशलकरणकार्यपुरुषेभ्यस्तद्विनिश्चयः ॥

नित्यपरीक्षणं कर्मविपर्ययः प्रतिपत्तिदानं नियोगिष्वर्थोपायाः ॥

नापीडिता नियोगिनो दुष्टव्रणा इवान्तःसारमुद्गिरन्ति ॥

पुनः पुनरभियोगे नियोगिषु महीपतीनां वसुधाराः ॥

सकृन्निपीडितं हि स्नानवस्त्रं किं जहाति स्निग्धताम् ॥

देशमपीडयन् बुद्धिपुरुषकाराभ्यां पूर्वनिबन्धमधिकं कुर्वन्नर्थमानौ लभते ॥

यो यत्र कर्मणि कुशलस्तं तत्र नियोजयेत् ॥

न खलु स्वामिप्रसादः सेवकेषु कार्यसिद्धिनिबन्धनं किंतु बुद्धिपुरुषकारौ वा ॥

शास्त्रविदप्यदृष्टकर्मा कर्मसु विषादं गच्छेत् ॥

अनिवेद्य भर्तुर्न कंचिदारम्भं कुर्यादन्यत्राऽऽपत्प्रतीकारेभ्यः ॥

परस्परकलहो नियोगिषु भूभुजां निधिः ॥

नियोगिषु लक्ष्मीः क्षितीश्वराणां द्वितीयः कोशः ॥

[1]वर्णपदवाक्यप्रमाणप्रयोगनिष्णातमतिः सुमुखः सुव्यक्तो मधुरगम्भीरध्वनिः प्रगल्भः प्रतिभावान् सम्यगूहापोहावधारणगमक( ? णागम )शक्तिसंपन्नः संप्रज्ञातसमस्तलिपिभाषावर्णाश्रमसमयस्वपरव्यवहारस्थितिराशुलेखनवाचनसमर्थश्चेति सांधिविग्रहिकगुणाः ॥

अथ सांधिविग्रहिकस्य लक्षणमाह— वर्णपदवाक्येति । सम्यक् पदवाक्यप्रमाणप्रयोगनिष्णातमतिः— पदानि विभक्त्यन्तानि, वाक्यानि समाससंस्काराणि, प्रमाणं तर्कलक्षणम् एतेषां ( प्रयोग )विषये निष्णाता परिणता मतिर्यस्य स सांधिविग्रहिको राजार्हः । तथा सुमुखः स्पष्टाक्षरवक्ता । तथा सुव्यक्तः यस्य स्पष्टाक्षराणि वदतो व्यक्तोऽर्थो जायते । तथा गम्भीरमधुरध्वनिः गम्भीरः मेघगर्जितवत् मनोहरः ध्वनिर्यस्य स तथा, यस्य प्रजल्पतः काकस्वरो न भवतीत्यर्थः । तथा प्रगल्भः उदारचरितः । तथा प्रतिभावान् तेजस्वी । तथा सम्यगूहापोहावधारणगमकशक्तिसंपन्नः— सम्यगूहापोहनं युक्तायुक्तविवेकः, सम्यगवधारणं हृदि स्थापनम्, तस्य आगमः परिज्ञानम्, तत्र विषये याऽसौ शक्तिः समर्थता, तया संपन्नः युक्तः इति । तथा संप्रज्ञातसमस्तलिपिभाषा ... ... वर्णाः ब्राह्मणक्षत्रियविट्छूद्राः, तथा आश्रमाः

---

( १ ) नीवा. ३२।२; नीवाटी. मधुरगम्भीर (गम्भीरमधुर) धारणगमक ( धारणागम ).

ब्रह्मचारिगृहस्थवानप्रस्थयतिलक्षणाः, तथा स्वः (परश्च) योऽसौ व्यवहारः तस्य स्थितिः ज्ञानं यस्य । तथा आशुः लेखनवाचनसमर्थः यो लेखनमाशु शीघ्रं लिखति, तथा वाचनसमर्थः । इति सांधिविग्रहिकगुणाः । नीवाटी.

## युक्तिकल्पतरुः

अध्यक्षादीनां परीक्षापूर्वकं नियोजनं गुणाश्च

[1]गुरुः पुरोहितोऽमात्यो मन्त्री दूतश्च लेखकः ।
ज्योतिर्ज्ञान्तःपुराध्यक्षबलाध्यक्षादिकं क्रमात् ।
पुनः पुनः परीक्ष्यैव स्वस्वकार्ये नियोजयेत् ॥

अथ तेषां परीक्षा यथा–

सदाचारः कुशलधीः सर्वशास्त्रार्थपारगः ।
नित्यनैमित्तिकानां च कार्याणां कारकः शुचिः ॥
अपर्वमैथुनपरः पितृदेवार्चने रतः ।
गुरुभक्तो जितक्रोधो विप्राणां हितकृत् सदा ॥
दयावान् शीलसंपन्नः सत्कुलीनो महामतिः ।
परदारेषु विमुखो दृढसंकल्पको द्विजः ॥
अन्यैश्च वैदिकगुणैर्युक्तः कार्यो गुरुर्नृपैः ॥

[2]नीतिशास्त्रार्थकुशलो लेख्यालेख्यविशारदः ।
बह्वर्थवक्ता चाल्पेन लेखकः स्यात् सभापटुः ॥

[3]वृद्धः कुलोद्गतः शक्तः पितृपैतामहः शुचिः ।
राज्ञामन्तःपुराध्यक्षो विनीतश्च तथेष्यते ॥
हयशिक्षाविधानज्ञस्तच्चिकित्सितपारगः ।
अश्वाध्यक्षो महीभर्तुः सुभक्तश्च प्रशस्यते ॥
गजलक्षणजातिज्ञस्तच्चिकित्सितपारगः ।
निर्भयश्च विशुद्धश्च गजाध्यक्षः प्रशस्यते ॥

[4]अध्यक्षान् विविधान् कुर्युस्तत्र तत्र विपश्चितः ।
अप्रमत्तानलुब्धांश्च विरोषांश्चैव राजसु ।
राज्ञामाज्ञानुरूपेण तत्तत्कर्म प्रकुर्वताम् ॥
प्रसादं च महीपालः कुर्यात् कार्यानुरूपकम् ।
सर्वे सेवितुमिच्छन्ति महीपालं धनाशया ॥
स्वतस्ते तु महीपालैः परीक्ष्यास्तत्र कोविदैः ॥

(१) युक. २–३।१३–१७. (२) युक. ३।२१.
(३) युक. ४।२३–२५.
(४) युक. ४–५।२७–३०.

## मानसोल्लासः

अध्यक्षादीनां गुणाः

[1]लोहवस्त्राजिनादीनां रत्नानां च विभेदवित् ।
व्यये च तद्विशेषज्ञो रक्षणे निपुणः शुचिः ॥
अनाहार्यः सुसंतुष्टश्चाऽऽसो बहुकुटुम्बकः ।
सावधानो गणितविद्भाण्डागारे नियोजयेत् ॥

[2]ईदृशं गुणकारं च भागहारं च तत्त्वतः ।
त्रैराशिकविधानं च यो जानाति विनिश्चितम् ॥
अलुब्धः सावधानश्च रागद्वेषविवर्जितः ।
स राज्ञा गणकः कार्यः कोशे राष्ट्रे च धीमता ॥
उन्नतो रूपवान् दक्षः प्रियवाग्दर्पवर्जितः ।
ग्राही चित्तस्य सर्वेषां प्रतीहारः प्रशस्यते ॥
प्रगल्भो मतिमान् दक्षः सर्वभाषाविशारदः ।
संधिविग्रहतत्त्वज्ञो लिपिज्ञोऽक्षरवाचकः ॥
सामन्तमण्डलेशानां मान्यकानां विशेषतः ।
आवाहने विसर्गे च स्थापने निपुणो भृशम् ॥
षाड्गुण्यविधितत्त्वज्ञो देशकालविभागवित् ।
आयव्ययौ च लोकं च देशोत्पत्तिं च वेत्ति यः ॥
अर्थरक्षापरो भृत्यः कृत्याकृत्यविवेकवित् ।
सांधिविग्रहिकः कार्यो राज्ञा कार्यविशारदः ॥
सर्वदेशलिपिज्ञाता लेखने कुशलः पटुः ।
अधीतो वाचको धीमान् योज्यो राज्ञा स लेखकः ॥
आयुर्वेदविदश्वानां निमित्तशकुनादिवित् ।
शिक्षावेदी तुरंगाणां भूमिभागविशारदः ॥
बलाबलरथाभिज्ञः प्रियवाक् प्रियदर्शनः ।
कृतविद्यश्च शूरश्च सारथिः पार्थिवोचितः ॥
असंभेद्यः शुचिर्दक्षः कृतान्नस्य परीक्षकः ।
सूदानां च विशेषज्ञः सूदाध्यक्षो विधीयते ॥

(१) मासो. २।९५–९६.
(२) मासो. २।१२४–१३७, १४६–१५०.

कुलक्रमसमायातास्तुष्टेष्टाश्चानुकारिणः ।
कृत्तकेशनखा दान्ताः परामेया नृपे रताः ॥

अन्नपानविशेषज्ञा मांसपाकविशारदाः ।
शाकपाककलादक्षाः पक्वान्नकरणे बुधाः ॥

पानव्यञ्जनतत्त्वज्ञाः खण्डपाकस्य वेदिनः ।
क्षीरप्रकारबोद्धारः सूदाः कार्या महीभुजा ॥
विरूपो लोभहीनश्च सावधानो जितेन्द्रियः ।
इङ्गिताकारकुशलः शुद्धान्ताध्यक्ष इष्यते ॥
सुप्तकामोपमाः शुद्धाः पुरुषाः कृतबुद्धयः ।
अन्तःपुरेक्षकाः कार्या नृपेण शुचियोनयः ॥
धर्मज्ञाः शुचयो धीराः प्रभुभक्ता जितेन्द्रियाः ।
कार्या राज्ञा कुमाराणामध्यक्षाः स्युः परीक्षिताः ॥
कर्मस्वन्येषु सर्वेषु दक्षाश्च शुचयस्तथा ।
शूराश्च बुद्धिमन्तश्च शस्त्रशास्त्रकलाविदः ॥
योगक्षेमसुखार्थाय दुष्टसंयमनाय च ।
आत्मनश्च विनोदाय राज्ञा योज्या यथार्हतः ॥

## अनिर्दिष्टकर्तृकवचनानि

अध्यक्षादीनां गुणाः यथागुणं नियोजनं च

[1]प्राज्ञत्वमुपधाशुद्धिरप्रमादोऽभियुक्तता ।
कार्येषु व्यसनाभावः स्वामिभक्तिश्च योग्यता ॥
[2]धर्मकृत्येषु धर्मज्ञानर्थकृत्येषु पण्डितान् ।
स्त्रीषु क्लीबान्नियुञ्जीत नीचान्निन्द्येषु कर्मसु ॥

नियोज्या अध्यक्षाः अष्टादश

[3]मन्त्री पुरोहितश्चैव युवराजश्चमूपतिः ।
पञ्चमो द्वारपालश्च षष्ठोऽन्तर्वेशिकस्तथा ॥
कारागाराधिकारी च द्रव्यसंचयकृत्तथा ।
कृत्याकृत्येषु चार्थानां नवमो विनियोजकः ॥
प्रदेष्टा नगराध्यक्षः कार्यनिर्माणकृत्तथा ।
धर्माध्यक्षः सभाध्यक्षो दण्डपालस्त्रिपञ्चमः ॥
षोडशो दुर्गपालश्च तथा राष्ट्रान्तपालकः ।
अटवीपालकान्तानि तीर्थान्यष्टादशैव तु ॥

---

(१) मिता. १।३२२ ; अप. १।३२०.

(२) मिता. १।३२२ ; वीमि. १।३२२ स्त्रीषु क्लीबान् (क्लीबान् स्त्रीषु) चतुर्थचरणे (नीचानीचेषु धर्मवित्).

(३) नीटी. १।१४०।६४.

# *सेनापतिः

## महाभारतम्

सेनापतिगुणाः

[1]कच्चिद्धृष्टश्च शूरश्च मतिमान्धृतिमाञ्शुचिः ।
कुलीनश्चानुरक्तश्च दक्षः सेनापतिस्तव ॥

हृष्टः धनमानादिना । नीटी.

युद्धे जयार्थमेक एव नियोज्यः क्षत्रियः सेनापतिः

वैशम्पायन उवाच–

[2]ततः शान्तनवं भीष्मं प्राञ्जलिर्धृतराष्ट्रजः ।
सह सर्वैर्महीपालैरिदं वचनमब्रवीत् ॥
ऋते सेनाप्रणेतारं पृतना सुमहत्यपि ।
दीर्यते युद्धमासाद्य पिपीलिकपुटं यथा ॥

[3]न हि जातु द्वयोर्बुद्धिः समा भवति कर्हिचित् ।
शौर्यं च नाम नेतॄणां स्पर्धते च परस्परम् ॥

[4]श्रूयते च महाप्राज्ञ हैहयानमितौजसः ।
अभ्ययुर्ब्राह्मणाः सर्वे समुच्छ्रितकुशध्वजाः ॥

[1]तानन्वयुस्तदा वैश्या शूद्राश्चैव पितामह ।
एकतस्तु त्रयो वर्णा एकतः क्षत्रियर्षभाः ॥

[2]ते स्म युद्धेष्वभज्यन्त त्रयो वर्णाः पुनः पुनः ।
क्षत्रियास्तु जयन्त्येव बहुलं चैकतो बलम् ॥

[3]ततस्ते क्षत्रियानेव पप्रच्छुर्द्विजसत्तमाः ।
तेभ्यः शशंसुर्धर्मज्ञा याथातथ्यं पितामह ॥

[4]वयमेकस्य शृणुमो महाबुद्धिमतो रणे ।
भवन्तस्तु पृथक् सर्वे स्वबुद्धिवशवर्तिनः ॥

[5]ततस्ते ब्राह्मणाश्चक्रुरेकं सेनापतिं द्विजम् ।
नयेषु कुशलं शूरमजयन् क्षत्रियांस्ततः ॥

[6]एवं ये कुशलं शूरं हिते स्थितमकल्मषम् ।
सेनापतिं प्रकुर्वन्ति ते जयन्ति रणे रिपून् ॥

भीष्मस्य सेनापतित्वेन वरणमभिषेकश्च कौरवपक्षे

[7]भवानुशनसा तुल्यो हितैषी च सदा मम ।
असंहार्यः स्थितो धर्मे स नः सेनापतिर्भव ॥

उशनसा शुक्रेण । असंहार्यः पितुर्वरदानात् कालेनापि संहर्तुमशक्यः । नीटी.

---

* यद्यपि सेनापतिरपि कोशाध्यक्षादिवत्सेनाध्यक्ष एवेति पूर्वप्रकरणविषय एव, तथाऽपि ' राजा युवराजः सेनापतिश्च स्वामिप्रकृतयः ' ( जम. १९।२७ ), ' मन्त्रिपुरोहितसेनापतियुवराजानामन्यतमकोपोऽभ्यन्तरकोपः ' ( कौ. ९।३ ), ' पञ्चाशत्साहस्रः सेनापतिकुमारवधः ' ( कौ. १०।३ ) इत्यादिवचनप्रमाणकैः स्वामिप्रकृतित्वाभ्यन्तरत्वयुवराजादिसमानमान्यत्वादिभिः कोशाध्यक्षादिभ्योऽभ्यर्हितत्वावगमात् नागरं सैनिकं चेति प्रशासनविभागस्याऽऽधुनिकव्यवहारविषयत्वाच्च पृथक्प्रकरणविषयः कृत इति ज्ञेयम् ।

( १ ) भा. २।५।३६ ; भामु. २।५।४६ स्तव ( स्तथा ).

( २ ) भा. ५।१५३।१–२ ; भामु. ५।१५६।१–२.

( ३ ) भा. ५।१५३।३ ; भामु. ५।१५६।३ नाम ( बल ).

( ४ ) भा. ५।१५३।४ ; भामु. ५।१५६।४.

( १ ) भा. ५।१५३।५ ; भामु. ५।१५६।५ तानन्व ( तानभ्य ).

( २ ) भा. ५।१५३।६; भामु. ५।१५६।६ ते स ( ततो ) यास्तु ( याश्च ).

( ३ ) भा. ५।१५३।७ ; भामु. ५।१५६।७.

( ४ ) भा. ५।१५३।८ ; भामु. ५।१५६।८ शृणुमो ( शृण्वाना ).

( ५ ) भा. ५।१५३।९ ; भामु. ५।१५६।९ नयेषु ( नये सु ).

( ६ ) भा. ५।१५३।१० ; भामु. ५।१५६।१० ते स्थित ( तेप्सित ).

( ७ ) भा. ५।१५३।११ ; भामु. ५।१५६।११.

[1]रश्मीवतामिवाऽऽदित्यो वीरुधामिव चन्द्रमाः ।
कुबेर इव यक्षाणां मरुतामिव वासवः ॥

[2]पर्वतानां यथा मेरुः सुपर्णः पततामिव ।
कुमार इव भूतानां वसूनामिव हव्यवाट् ॥

कुमारः कार्तिकेयः । नीटी.

[3]भवता हि वयं गुप्ताः शक्रेणेव दिवौकसः ।
अनाधृष्या भविष्यामस्त्रिदशानामपि ध्रुवम् ॥
प्रयातु नो भवानग्रे देवानामिव पावकिः ।
वयं त्वामनुयास्यामः सौरभेया इवर्षभम् ॥

पावकिः कार्तिकेय एव । नीटी.

भीष्म उवाच–

एवमेतन्महाबाहो यथा वदसि भारत ।
यथैव हि भवन्तो मे तथैव मम पाण्डवाः ॥

[4]अपि चैव मया श्रेयो वाच्यं तेषां नराधिप ।
योद्धव्यं तु तवार्थाय यथा स समयः कृतः ॥

[5]न तु पश्यामि योद्धारमात्मनः सदृशं भुवि ।
ऋते तस्मान्नरव्याघ्रात्कुन्तीपुत्राद्धनंजयात् ॥

[6]स हि वेद महाबाहुर्दिव्यान्यस्त्राणि सर्वशः ।
न तु मां विवृतो युद्धे जातु युध्येत पाण्डवः ॥

विवृतः विस्पष्टो भूत्वेत्यर्थः । नीटी.

[1]अहं स च क्षणेनैव निर्मनुष्यमिदं जगत् ।
कुर्यां शस्त्रबलेनैव ससुरासुरराक्षसम् ॥

[2]न त्वेवोत्सादनीया मे पाण्डोः पुत्रा नराधिप ।
तस्माद्योधान्हनिष्यामि प्रयोगेणायुतं सदा ॥

न मे मया उत्सादनीयाः नाशयितुं शक्याः सदा प्रत्यहम् । नीटी.

[3]एवमेषां करिष्यामि निधनं कुरुनन्दन ।
न चेत्ते मां हनिष्यन्ति पूर्वमेव समागमे ॥
सेनापतिस्त्वहं राजन्समयेनापरेण ते ।
भविष्यामि यथाकामं तन्मे श्रोतुमिहार्हसि ॥

कर्णो वा युध्यतां पूर्वमहं वा पृथिवीपते ।
स्पर्धते हि सदाऽत्यर्थं सूतपुत्रो मया रणे ॥

कर्ण उवाच–

[4]नाहं जीवति गाङ्गेये योत्स्ये राजन् कथंचन ।
हते भीष्मे तु योत्स्यामि सह गाण्डीवधन्वना ॥

वैशम्पायन उवाच–

[5]ततः सेनापतिं चक्रे विधिवद् भूरिदक्षिणम् ।
धृतराष्ट्रात्मजो भीष्मं सोऽभिषिक्तो व्यरोचत ॥

[6]ततो भेरीश्च शङ्खांश्च शतशश्चैव पुष्करान् ।
वादयामासुरव्यग्राः पुरुषा राजशासनात् ॥

---

(१) भा. ५।१५३।१२; भामु. ५।१५६।१२ रश्मी (रश्मि) मरुता (देवाना).

(२) भा. ५।१५३।१३; भामु. ५।१५६।१३ पततामिव (पक्षिणां यथा) भूतानां (देवानां).

(३) भा. ५।१५३।१४–१६; भामु. ५।१५६। १४–१६.

(४) भा. ५।१५३।१७; भामु. ५।१५६।१७ योद्धव्यं तु (संयोद्धव्यं) स (मे).

(५) भा. ५।१५३।१८; भामु. ५।१५६।१८.

(६) भा. ५।१५३।१९; भामु. ५।१५६।१९ बाहु (र्बुद्धि) णि सर्वशः (ण्यनेकशः).

(१) भा. ५।१५३।२०; भामु. ५।१५६।२० स च (चैव).

(२) भा. ५।१५३।२१; भामु. ५।१५६।२१ नरा (जना).

(३) भा. ५।१५३।२२–२४; भामु. ५।१५६। २२–२४.

(४) भा. ५।१५३।२५; भामु. ५।१५६।२५ योत्स्ये राजन् (राजन् योत्स्ये).

(५) भा. ५।१५३।२६; भामु. ५।१५६।२६.

(६) भा. ५।१५३।२७; भामु. ५।१५६।२७ द्वितीयचरणे (शतशोऽथ सहस्रशः) पुरुषा (वादका).

[1]सिंहनादाश्च विविधा वाहनानां च निस्वनाः ।
प्रादुरासन्ननभ्रे च वर्षं रुधिरकर्दमम् ॥

निर्घाताः पृथिवीकम्पा गजबृंहितनिस्वनाः ।
आसंश्च सर्वयोधानां पातयन्तो मनांस्युत ॥

पातयन्तः मूर्च्छितानि कुर्वन्तः । नीटी.

[2]वाचश्चाप्यशरीरिण्यो दिवश्चोल्काः प्रपेदिरे ।
शिवाश्च भयवेदिन्यो नेदुर्दीप्तस्वरा भृशम् ॥

[3]सेनापत्ये यदा राजा गाङ्गेयमभिषिक्तवान् ।
तदैतान्युग्ररूपाणि अभवञ्शतशो नृप ॥

[4]ततः सेनापतिं कृत्वा भीष्मं परबलार्दनम् ।
वाचयित्वा द्विजश्रेष्ठान् निष्कैर्गोभिश्च भूरिशः ॥

[5]वर्धमानो जयाशीर्भिर्निर्ययौ सैनिकैर्वृतः ।
आपगेयं पुरस्कृत्य भ्रातृभिः सहितस्तदा ।
स्कन्धावारेण महता कुरुक्षेत्रं जगाम ह ॥

[6]परिक्रम्य कुरुक्षेत्रं कर्णेन सह कौरवः ।
शिबिरं मापयामास समे देशे नराधिपः ॥

[7]मधुरानूषरे देशे प्रभूतयवसेन्धने ।
यथैव हास्तिनपुरं तद्वच्छिबिरमाबभौ ।

(१) भा. ५।१५३।२८–२९ ; भामु. ५।१५६।२८–२९.

(२) भा. ५।१५३।३० ; भामु. ५।१५६।३० स्वरा ( तरा ).

(३) भा. ५।१५३।३१ ; भामु. ५।१५६।३१ सेना ( सैना ) अभवञ्श ( बभूवुः श ).

(४) भा. ५।१५३।३२ ; भामु. ५।१५६।३२ निष्कैर्गोभिश्च ( गोभिर्निष्कैश्च ).

(५) भा. ५।१५३।३३ ; भामु. ५।१५६।३३–३४.

(६) भा. ५।१५३।३४ ; भामु. ५।१५६।३५ नराधिपः ( जनाधिप ).

(७) भा. ५।१५३।३५ ; भामु. ५।१५६।३६.

सप्त सेनापतयः सर्वसेनापतिश्च पाण्डवपक्षे

जनमेजय उवाच–

[1]आपगेयं महात्मानं भीष्मं शस्त्रभृतां वरम् ।
पितामहं भारतानां ध्वजं सर्वमहीक्षिताम् ॥

बृहस्पतिसमं बुद्ध्या क्षमया पृथिवीसमम् ।
समुद्रमिव गाम्भीर्ये हिमवन्तमिव स्थिरम् ॥

प्रजापतिमिवौदार्ये तेजसा भास्करोपमम् ।
महेन्द्रमिव शत्रूणां ध्वंसनं शरवृष्टिभिः ॥

[2]रणयज्ञे प्रतिभये स्वाभीले रोमहर्षणे ।
दीक्षितं चिररात्राय श्रुत्वा राजा युधिष्ठिरः ॥

[3]किमब्रवीन्महाबाहुः सर्वधर्मविशारदः ।
भीमसेनार्जुनौ वाऽपि कृष्णो वा प्रत्यपद्यत ॥

वैशम्पायन उवाच–

[4]आपद्धर्मार्थकुशलो महाबुद्धिर्युधिष्ठिरः ।
सर्वान्भ्रातॄन्समानीय वासुदेवं च सात्वतम् ।
उवाच वदतां श्रेष्ठः सान्त्वपूर्वमिदं वचः ॥

[5]पर्याक्रामत सैन्यानि यत्तास्तिष्ठत दंशिताः ।
पितामहेन वो युद्धं पूर्वमेव भविष्यति ।
तस्मात्सप्तसु सेनासु प्रणेतॄन्मम पश्यत ॥

वासुदेव उवाच–

[6]यथाऽर्हति भवान्वक्तुमस्मिन्काल उपस्थिते ।
तथेदमर्थवद्वाक्यमुक्तं ते भरतर्षभ ॥

(१) भा. ५।१५४।१–३ ; भामु. ५।१५७।१–३.

(२) भा. ५।१५४।४ ; भामु. ५।१५७।४ पूर्वार्धे ( रणयज्ञे प्रवितते सुभीमे लोमहर्षणे । ) राजा ( तत्र ).

(३) भा. ५।१५४।५ ; भामु. ५।१५७।५ धर्मविशारदः ( शस्त्रभृतां वरः ) पद्यत ( भाषत ).

(४) भा. ५।१५४।६ ; भामु. ५।१५७।६–७ सात्व ( शाश्व ).

(५) भा. ५।१५४।७ ; भामु. ५।१५७।७–८.

(६) भा. ५।१५४।८ ; भामु. ५।१५७।९ वासुदेव उवाच ( कृष्ण उवाच ) ल उप ( ले ह्युप ).

¹रोचते मे महाबाहो क्रियतां यदनन्तरम् ।
नायकास्तव सेनायामभिषिच्यन्तु सप्त वै ॥

वैशम्पायन उवाच–

²ततो द्रुपदमानाय्य विराटं शिनिपुंगवम् ।
धृष्टद्युम्नं च पाञ्चाल्यं धृष्टकेतुं च पार्थिवम् ।
शिखण्डिनं च पाञ्चाल्यं सहदेवं च मागधम् ॥
³एतान्सप्त महेष्वासान्वीरान् युद्धाभिनन्दिनः ।
सेनाप्रणेतॄन्विधिवदभ्यषिञ्चद्युधिष्ठिरः ॥
⁴सर्वसेनापतिं चात्र धृष्टद्युम्नमुपादिशत् ।
द्रोणान्तहेतोरुत्पन्नो य इद्धाज्जातवेदसः ॥

इद्धात् प्रदीप्तात् । नीटी.

⁵सर्वेषामेव तेषां तु समस्तानां महात्मनाम् ।
सेनापतिपतिं चक्रे गुडाकेशं धनंजयम् ॥
अर्जुनस्यापि नेता च संयन्ता चैव वाजिनाम् ।
संकर्षणानुजः श्रीमान्महाबुद्धिर्जनार्दनः ॥

अभिषिक्तो द्रोणः सेनापतिः कौरवपक्षे

संजय उवाच–

⁶कर्णस्य वचनं श्रुत्वा राजा दुर्योधनस्तदा ।
सेनामध्यगतं द्रोणमिदं वचनमब्रवीत् ॥
⁷वर्णश्रैष्ठ्यात्कुलोत्पत्त्या श्रुतेन वयसा धिया ।
वीर्याद्दाक्ष्याददधृष्यत्वादर्थज्ञानान्नयाज्जयात् ॥

(१) भा. ५।१५४।९ ; भामु. ५।१५७।१० याम-भिषिच्यन्तु ( यां क्रियन्तामिह ).

(२) ५।१५४।१० ; भामु. ५।१५७।११-१२ र्थिवम् ( र्थिव ).

(३) भा. ५।१५४।११ ; भामु. ५।१५७।१२-१३ महेष्वासा ( महाभागा ) नन्दिनः ( काङ्क्षिणः ).

(४) भा. ५।१५४।१२ ; भामु. ५।१५७।१३-१४ म्नमुपादिशत् ( म्नं चकार ह ).

(५) भा. ५।१५४।१३-१४ ; भामु. ५।१५७। १४-१६.

(६) भा. ७।५।२१ ; भामु. ७।६।१.

(७) भा. ७।५।२२ ; भामु. ७।६।२ 'दुर्योधन उवाच–' इत्यधिकम्.

¹तपसा च कृतज्ञत्वाद् वृद्धः सर्वगुणैरपि ।
युक्तो भवत्समो गोप्ता राज्ञामन्यो न विद्यते ॥
²स भवान्पातु नः सर्वान्विबुधानिव वासवः ।
भवन्नेत्राः पराञ्जेतुमिच्छामो द्विजसत्तम ॥

भवान् नेत्रं नेता येषां ते । नीटी.

³रुद्राणामिव कापाली वसूनामिव पावकः ।
कुबेर इव यक्षाणां मरुतामिव वासवः ॥
⁴वसिष्ठ इव विप्राणां तेजसामिव भास्करः ॥
पितॄणामिव धर्मोऽथ आदित्यानामिवाम्बुराट् ॥

धर्मेन्द्रः यमः । अम्बुराट् वरुणः । नीटी.

⁵नक्षत्राणामिव शशी दितिजानामिवोशनाः ।
श्रेष्ठः सेनाप्रणेतॄणां स नः सेनापतिर्भव ॥
अक्षौहिण्यो दशैका च वशगाः सन्तु तेऽनघ ।
ताभिः शत्रून् प्रतिव्यूह्य जहीन्द्रो दानवानिव ॥
प्रयातु नो भवानग्रे देवानामिव पावकिः ।
अनुयास्यामहे त्वाऽऽजौ सौरभेया इवर्षभम् ॥

पावकिः स्कन्दः । नीटी.

⁶उग्रधन्वा महेष्वासो दिव्यं विस्फारयन्धनुः ।
अग्रे भवन्तं दृष्ट्वा नो नार्जुनः प्रसहिष्यते ॥
ध्रुवं युधिष्ठिरं संख्ये सानुबन्धं सबान्धवम् ।
⁷जेष्यामि पुरुषव्याघ्र भवान्सेनापतिर्यदि ॥

(१) भा. ७।५।२३ ; भामु. ७।६।३.

(२) भा. ७।५।२४ ; भामु. ७।६।४ द्वितीयचरणे ( देवानिव शतक्रतुः ).

(३) भा. ७।५।२५ ; भामु. ७।६।५.

(४) भा. ७।५।२६ ; भामु. ७।६।६ उत्तरार्धे ( पितॄणामिव धर्मेन्द्रो यादसामिव चाम्बुराट् ॥ ).

(५) भा. ७।५।२७-२९ ; भामु. ७।६।७-९.

(६) भा. ७।५।३० ; भामु. ७।६।१० उत्तरार्धे ( अग्रेभवं त्वां तु दृष्ट्वा नार्जुनः प्रहरिष्यति ॥ ).

(७) भा. ७।५।३१ ; भामु. ७।६।११.

द्रोण उवाच–

[1]वेदं षडङ्गं वेदाहमर्थविद्यां च मानवीम् ।
त्रैय्यम्बकमथेष्वस्त्रमस्त्राणि विविधानि च ॥
[2]ये चाप्युक्ता मयि गुणा भवद्भिर्जयकाङ्क्षिभिः ।
चिकीर्षुस्तानहं सत्यान्योधयिष्यामि पाण्डवान् ॥
[3]पार्षतं तु रणे राजन्न हनिष्ये कथंचन ।
स हि सृष्टो वधार्थाय ममैव पुरुषर्षभ ॥
योधयिष्यामि सैन्यानि नाशयन्सर्वसोमकान् ।
न च मां पाण्डवा युद्धे योधयिष्यन्ति हर्षिताः ॥

संजय उवाच–

[4]स एवमभ्यनुज्ञातश्चक्रे सेनापतिं ततः ।
द्रोणं तव सुतो राजन्विधिदृष्टेन कर्मणा ॥
[5]अथाभिषिषिचुर्द्रोणं दुर्योधनमुखा नृपाः ।
सेनापत्ये यथा स्कन्दं पुरा शक्रमुखाः सुराः ॥
[6]ततो वादित्रघोषेण सह पुंसां महास्वनैः ।
प्रादुरासीत्कृते द्रोणे हर्षः सेनापतौ तदा ॥
[7]ततः पुण्याहघोषेण स्वस्तिवादस्वनेन च ।
संस्तवैर्गीतशब्दैश्च सूतमागधबन्दिनाम् ॥
[8]जयशब्दैर्द्विजाग्र्याणां सुभगानर्तितैस्तथा ।
सत्कृत्य विधिवद् द्रोणं जितान्मन्यन्त पाण्डवान् ॥

(१) भा. ७।५।३४ ; भामु. ७।७।१ स्त्रमस्त्राणि (स्त्रं शस्त्राणि).

(२) भा. ७।५।३५ ; भामु. ७।७।२ सत्यान्यो (सर्वान्यो).

(३) भामु. ७।७।३–४.

(४) भा. ७।५।३६ ; भामु. ७।७।५.

(५) भा. ७।५।३७ ; भामु. ७।७।६ सेना (सैना).

(६) भा. ७।५।३८ ; भामु. ७।७।७ सह पुंसां (शङ्खानां च).

(७) भा. ७।५।३९ ; भामु. ७।७।८.

(८) भा. ७।५।४० ; भामु. ७।७।९ उत्तरार्धे (सत्कृत्य विधिना द्रोणं मेनिरे पाण्डवाञ्जितान् ॥).



सुभगानर्तितैः सौभाग्यवतीनृत्यैः । नीटी.

कर्णस्य सैनापत्याभिषेकः

संजय उवाच–

[1]एवमुक्तो महातेजास्ततो दुर्योधनो नृपः ।
उत्तस्थौ राजभिः सार्धं देवैरिव शतक्रतुः ।
सेनापत्येन सत्कर्तुं कर्णं स्कन्दमिवामराः ॥
[2]ततोऽभिषिषिचुस्तूर्णं विधिदृष्टेन कर्मणा ।
दुर्योधनमुखा राजन् राजानो विजयैषिणः ।
शातकौम्भमयैः कुम्भैर्माहेयैश्चाभिमन्त्रितैः ॥

शातकुम्भमयैः सौवर्णैः माहेयैः महीमयैश्च कुम्भैः । नीटी.

[3]तोयपूर्णैर्विषाणैश्च द्वीपिखड्गमहर्षभैः ।
मणिमुक्तामयैश्चान्यैः पुण्यगन्धैस्तथौषधैः ॥

विषाणैः द्विपस्य गजस्य दन्तमयैः पात्रैः खड्गस्य गण्डकस्य महर्षभस्य गवयस्य च शृङ्गैः । 'विषाणं दन्तशृङ्गयोः' इति विश्वः । द्विपखड्गमहर्षभीयैरिति तद्धितलोप आर्षः । नीटी.

[4]औदुम्बरे समासीनमासने क्षौमसंवृतम् ।
शास्त्रदृष्टेन विधिना संभारैश्च सुसंभृतैः ॥
[5]ब्राह्मणाः क्षत्रिया वैश्यास्तथा शूद्राश्च संमताः ।
तुष्टुवुस्तं महात्मानमभिषिक्तं वरासने ॥
ततोऽभिषिक्ते राजेन्द्र निष्कैर्गोभिर्धनेन च ।
वाचयामास विप्राग्र्यान् राधेयः परवीरहा ॥

(१) भा. ८।६।३५ ; भामु. ८।१०।४२–४३ तेजास्ततो (राज ततो) सेना (सैना).

(२) भा. ८।६।३६ ; भामु. ८।१०।४३–४४ चुस्तूर्णं (चुःकर्णं) कौम्भ (कुम्भ).

(३) भा. ८।६।३७ ; भामु. ८।१०।४५ पूर्णैर्वि (पूर्णवि) द्वीपि (द्विप) मयै (युतै).

(४) भा. ८।६।३८ ; भामु. ८।१०।४६ समा (सुखा) वृतम् (वृते).

(५) भामु. ८।१०।४७–४८.

[1]जय पार्थान्सगोविन्दान्सानुगांस्त्वं महाहवे ।
इति तं बन्दिनः प्राहुर्द्विजाश्च भरतर्षभ ॥
[2]जहि पार्थान्सपाञ्चालान्राधेय विजयाय नः ।
उद्यन्निव सदा भानुस्तमांस्युग्रैर्गभस्तिभिः ॥
[3]न ह्यलं त्वद्विसृष्टानां शराणां ते सकेशवाः ।
कृतघ्नाः सूर्यरश्मीनां ज्वलतामिव दर्शने ॥
शराणां दर्शनेऽपि नालम्, किमुत स्पर्शे इत्यर्थः । नीटी.
[4]नहि पार्थाः सपाञ्चालाः स्थातुं शक्तास्तवाग्रतः ।
आत्तशस्त्रस्य समरे महेन्द्रस्येव दानवाः ॥
[5]अभिषिक्तस्तु राधेयः प्रभया सोऽमितप्रभः ।
व्यत्यरिच्यत रूपेण दिवाकर इवापरः ॥
संजय उवाच--
[6]एतच्छ्रुत्वा वचो राज्ञो मद्रराजः प्रतापवान् ।
दुर्योधनं तदा राजन् वाक्यमेतदुवाच ह ॥
दुर्योधन महाबाहो शृणु वाक्यविदां वर ।
यावेतौ मन्यसे कृष्णौ रथस्थौ रथिनां वरौ ।
न मे तुल्यावुभावेतौ बाहुवीर्ये कथंचन ॥
[7]उद्यतां पृथिवीं सर्वां ससुरासुरमानवाम् ।
योधयेयं रणमुखे संक्रुद्धः किमु पाण्डवान् ।
विजेष्ये च रणे पार्थान्सोमकांश्च समागतान् ॥

(१) भा. ८।६।३९ ; भामु. ८।१०।४९ स्त्वं महाहवे (स्तान् महामृधे) भरतर्षभ (पुरुषर्षभम्).

(२) भा. ८।६।४० ; भामु. ८।१०।५०.

(३) भा. ८।६।४१ ; भामु. ८।१०।५१ ते (वै) कृतघ्नाः (उलूकाः).

(४) भा. ८।६।४२ ; भामु. ८।१०।५२.

(५) भा. ८।६।४३ ; भामु. ८।१०।५३ व्यत्य (अत्य).

(६) भा. ९।६।१-२ ; भामु. ९।७।१-३.

(७) भा. ९।६।३ ; भामु. ९।७।३-४ विजेष्ये च (विजेष्यामि).

[1]अहं सेनाप्रणेता ते भविष्यामि न संशयः ।
तं च व्यूहं विधास्यामि न तरिष्यन्ति यं परे ।
इति सत्यं ब्रवीम्येष दुर्योधन न संशयः ॥
न तरिष्यन्तीत्यत्र न भविष्यन्तीति पाठे यं प्राप्य न भविष्यन्ति मरिष्यन्तीत्यध्याहृत्य योज्यम् । नीटी.
[2]एवमुक्तस्ततो राजा मद्राधिपतिमञ्जसा ।
अभ्यषिञ्चत सेनाया मध्ये भरतसत्तम ।
विधिना शास्त्रदृष्टेन हृष्टरूपो विशां पते ॥
क्लिष्टरूपः पराजयनिश्चयात् । नीटी.
[3]अभिषिक्ते ततस्तस्मिन्सिंहनादो महानभूत् ।
तव सैन्येष्ववाद्यन्त वादित्राणि च भारत ॥
[4]हृष्टाश्चाऽऽसंस्तदा योधा मद्रकाश्च महारथाः ।
तुष्टुवुश्चैव राजानं शल्यमाहवशोभिनम् ॥
क्रुष्टाः आहूताः । नीटी.
[5]जय राजंश्चिरं जीव जहि शत्रून्समागतान् ।
तव बाहुबलं प्राप्य धार्तराष्ट्रा महाबलाः ।
निखिलां पृथिवीं सर्वां प्रशासन्तु हतद्विषः ॥
[6]त्वं हि शक्तो रणे जेतुं ससुरासुरमानवान् ।
मर्त्यधर्माण इह तु किमु सोमकसृञ्जयान् ॥
मर्त्यधर्माणः मर्त्यधर्मणः । नीटी.
[7]एवं संस्तूयमानस्तु मद्राणामधिपो बली ।
हर्षं प्राप तदा वीरो दुरापमकृतात्मभिः ॥

(१) भा. ९।६।४ ; भामु. ९।७।५-६.

(२) भा. ९।६।५ ; भामु. ९।७।६-७ हृष्ट (क्लिष्ट).

(३) भा. ९।६।६ ; भामु. ९।७।८ न्येष्ववा (न्येऽभ्यवा).

(४) भा. ९।६।७ ; भामु. ९।७।९ हृष्टा (क्रुष्टा) स्तदा (स्तथा).

(५) भा. ९।६।८ : भामु. ९।७।१०-११ खिलां (खिलाः).

(६) भा. ९।६।९ ; भामु. ९।७।११-१२ सोमकसृञ्जयान् (सृञ्जयसोमकान्).

(७) भा. ९।६।१० ; भामु. ९।७।१२-१३ स्तूय (पूज्य).

[1]धर्मार्थशास्त्रतत्त्वज्ञः संधिविग्रहको भवेत् ।
मतिमान् धृतिमान्धीमान् रहस्यविनिगूहिता ॥
[2]कुलीनः सत्यसंपन्नः शक्तोऽमात्यः प्रशंसितः ।
एतैरेव गुणैर्युक्तस्तथा सेनापतिर्भवेत् ॥
[3]व्यूहयन्त्रायुधीयानां तत्त्वज्ञो विक्रमान्वितः ।
वर्षशीतोष्णवातानां सहिष्णुः पररन्ध्रवित् ॥

एतैः धर्मेत्यादिभिरमात्यगुणैः । सेनापतेर्विशेषगुणानाह– व्यूहेति । व्यूहः सेनायाः निवेशनप्रकारविशेषः । यन्त्राणि धनुरादीनि । आयुधानि खड्गादीनि ।

नीटी.

[4]सेनाप्रणेता च भवेत्तव तात दृढव्रतः ।
शूरः क्लेशसहश्चैव प्रियश्च तव मानवः ॥

## वाल्मीकिरामायणम्

सेनापतिगुणाः

[5]कच्चित् संग्रामनीतिज्ञः शूरस्ते वाहिनीपतिः ।
असंहार्योऽनुरक्तो हि लोको नित्यं च तिष्ठति ॥
[6]कच्चिद् धृष्टश्च शूरश्च धृतिमान् मतिमाञ् शुचिः ।
कुलीनश्चाप्रमत्तश्च दक्षः सेनापतिस्तव ॥

(१) भा. १२।८६।२९ ; भासु. १२।८५।३० धर्मार्थशास्त्र (धर्मशास्त्रार्थ) ग्रहको (ग्रहिको) धीमान् (ह्रीमान्).

(२) भा. १२।८६।३० ; भासु. १२।८५।३१ सत्य (सत्त्व) शक्तो (शुक्लो) शंसितः (शस्यते).

(३) भा. १२।८६।३१ ; भासु. १२।८५।३२ युधीयानां (युधानां च).

(४) भा. १५।१०।१२ ; भासु. १५।५।३९–४० चतुर्थचरणे (हितो भक्तश्च पूरुषः) ; रार. ३९ तव तात दृढव्रतः (तावता तु दृढव्रत) शेषं भासुवत्.

(५) वारा. २।१।४।२९.

(६) वारा. २।१।४।४३ ; वाराकु. २।१००।३१ धृतिमान्मतिमाञ् (मतिमान् धृतिमाञ्) प्रमत्त (नुरक्त) तिस्तव (तिः कृतः).

## कौटिलीयमर्थशास्त्रम्

सेनापतिकर्तव्यानि

[1]तदेव सेनापतिः सर्वयुद्धप्रहरणविद्याविनीतो हस्त्यश्वरथचर्यासंघुष्टश्चतुरङ्गस्य बलस्यानुष्ठानाधिष्ठानं विद्यात् ॥

'सेनापतिप्रचारः' इति सूत्रम् । हस्त्यश्वरथपदातिरूपचतुरङ्गसमुदायात्मकं मौलभृतादिषट्प्रकारोपेतं बलं सेना, तस्य पतिः नायकः सेनापतिः, तस्य प्रचारः व्यापारः अभिधीयते इति सूत्रार्थः । एकैकाङ्गाध्यक्षकथनानन्तरं सर्वाङ्गसमुदायाध्यक्षस्य क्रमप्राप्तत्वाद्वचनम् ।

तदेवेत्यादि । * अश्वाध्यक्षादीनां पत्त्यध्यक्षान्तानां चतुर्णामङ्गाध्यक्षाणां यत् कर्मजातमभिहितं तदेव सेनापतिः विद्यात् । स कथंभूतः ? सर्वयुद्धप्रहरणविद्याविनीतः सर्वेषु युद्धेषु निम्नयुद्धादिषु सर्वेषु प्रहरणेषु धनुर्वर्गादिषु विद्यासु आन्वीक्षिकीप्रभृतिषु च कृतशिक्षः । हस्त्यश्वरथचर्यासंघुष्टः गजाद्यारोहणयोधनादिकर्मसु प्रख्यातः । तदेवेत्येतद्विशिनष्टि– चतुरङ्गस्य बलस्यानुष्ठानाधिष्ठानमिति । हस्त्यश्वरथपदात्यात्मिकायाः सेनायाः यान्यनुष्ठानानि 'हस्त्यश्वरथपत्तिकर्माणि' (कौ. १०।४) इति साङ्ग्रामिकाधिकरणे वक्ष्यमाणानि कर्माणि तदधिष्ठानं तदाश्रयम्, अश्वाध्यक्षादिकर्मणामश्वादिकर्मानुरूपकरणीयत्वात् ।

श्रीमूला.

स्वभूमिं युद्धकालं प्रत्यनीकमभिन्नभेदनं भिन्नसंधानं संहतभेदनं भिन्नवधं दुर्गवधं यात्राकालं च पश्येत् ॥

अतिदिष्टकर्मातिरिक्तं कर्माऽऽह– स्वभूमिमित्यादि । स्वभूमिं सेनाव्यायामार्हं देशम्, युद्धकालं प्रकाशादियुद्धयोग्यं कालम्, प्रत्यनीकं शत्रुबलम्, अभिन्नभेदनम् अभिन्नस्य परव्यूहस्य भेदनं विश्लेषणम्, भिन्नसंधानं भिन्नस्य विश्लिष्टस्य स्वबलस्य संश्लेषणम्, संहतभेदनं

* अश्वाध्यक्षादीनां कर्मजातम् 'कार्याध्यक्षाः' इत्यस्मिन् प्रकरणे (पृ. २३०६–२३१७) द्रष्टव्यम् ।

(१) कौ. २।३३.

परस्पररक्षार्थसंघटितानां विघटनम्, भिन्नवधं विघटितानां वधम्, दुर्गवधं परपुरस्थानीयादिविध्वंसनम्, यात्राकालं च अभिषेणनकालं च पश्येत् विद्यात्।

श्रीमूला.

**तूर्यध्वजपताकाभिर्व्यूहसंज्ञाः प्रकल्पयेत्।**
**स्थाने याने प्रहरणे सैन्यानां विनये रतः॥**

विधिशेषं श्लोकेनाऽऽह– तूर्येत्यादि। स्थाने गमननिवृत्तौ, याने गमने, प्रहरणे पराभिहनने च विषये तूर्यध्वजपताकाभिः वाद्यैः शङ्खचक्रादिचिह्नैः वैजयन्तीभिश्च व्यूहसंज्ञाः युद्धव्यूहितस्वसैन्यस्य सङ्केतान् पराविज्ञेयान् प्रकल्पयेत् उल्लिखेत्। उल्लिखितसङ्केताविसंवादेन स्वसैन्या वाद्यविशेषश्रवणध्वजपताकाविशेषदर्शनैः स्थानयानाद्यनुष्ठानं यथा कुर्युस्तथा तान् शिक्षयेच्चेत्यभिप्रायकमध्यक्षविशेषणमाह– सैन्यानां विनये रत इति।

श्रीमूला.

***[1]अङ्गदशकस्य एकः पतिः पदिकः, पदिकदशकस्य एकः सेनापतिः, तद्दशकस्य एकः नायक इति। स तूर्यघोषध्वजपताकाभिः व्यूहाङ्गानां संज्ञाः स्थापयेदङ्गविभागे संघाते स्थाने गमने व्यावर्तने प्रहरणे च॥**

## चाणक्यराजनीतिशास्त्रम्

सेनाध्यक्षगुणाः

**[2]कुलशीलगुणोपेतः सत्यधर्मपरायणः।**
**रूपेण सुप्रसन्नश्च सेनाध्यक्षो महीपतेः॥**

## मनुः

सेनापतिबलाध्यक्षनियोजनम्

**†[3]सेनापतिबलाध्यक्षौ सर्वदिक्षु निवेशयेत्॥**

* एतद्वचनस्य व्याख्यानं 'यात्रा–व्यूहरचना' इत्यस्मिन् प्रकरणे द्रष्टव्यम्।

† अस्य वचनस्य व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च 'यात्रा–युद्धसामान्यविचारः' इत्यस्मिन् प्रकरणे द्रष्टव्यः।

(१) कौ. १०।६. (२) चाशा. ५।३.

(३) मस्मृ. ७।१८९.

## याज्ञवल्क्यः

राज्ञः कर्तव्यं सेनान्या सह बलचिन्तनम्

***[1]बलानां दर्शनं कृत्वा सेनान्या सह चिन्तयेत्॥**

## बृहस्पतिः

सेनापतिगुणाः

**[2]स्वधर्मविदनुरक्तः शुचिरनुद्धत उद्युक्तो देशकालविन्नीतिनिगमेतिहासकुशलोऽव्यसनी मृदुरर्थशास्त्रकृतयोग्यो हस्त्यश्वपुरुषाचाराहोरात्रयामनिर्गमविनिश्चितमतिश्च स्वपरबलाबलज्ञो बलाधिकृतः सेनापतिः स्यात्॥**

## मत्स्यपुराणम्

ब्राह्मणः क्षत्रियो वा सैनापत्यार्हः, सेनापतिगुणाः

**[3]कुलीनः शीलसंपन्नो धनुर्वेदविशारदः।**
**हस्तिशिक्षाश्वशिक्षासु कुशलः श्लक्ष्णभाषिता॥**
**[4]निमित्ते शकुनज्ञाने वेत्ता चैव चिकित्सिते॥**
**कृतज्ञः कर्मणां शूरस्तथा क्लेशसहस्त्वृजुः॥**

* अस्य वचनस्य व्याख्यानसंग्रहः शेषस्थलानिर्देशश्च 'राजदिनकृत्यम्' इत्यस्मिन् प्रकरणे (पृ. ९५३–९५४) द्रष्टव्यः।

(१) यास्मृ. १।३२९.

(२) विश्व. १।३०७.

(३) मत्स्य. २१५।८; विध. २।२४।८ प्रथमान्तपदेषु बहुवचनान्तः पाठः, एवमग्रिमश्लोकयोरपि, भाषिता (भाषितैः); राक. २५ शिक्षाश्व (शिक्षादि); राप्र. १७९ भाषिता (भाषितः).

(४) मत्स्य. २१५।९; विध. २।२४।९–१० द्वितीयचरणे (वित्तवैद्यचिकित्सके) पूर्वार्धानन्तरं + (पुरुषान्तरविज्ञाने षाड्गुण्येन विनिश्चिताः।); राक. २५ सहस्त्वृजुः (सहो ऋजुः); राप्र. १७९ राकवत्.

[1]व्यूहतत्त्वविधानज्ञः फल्गुसारविशेषवित्।
राज्ञा सेनापतिः कार्यो ब्राह्मणः क्षत्रियोऽथवा ॥

(१) व्यूहतन्त्रविधानज्ञः चक्रदण्डाद्याकारसैन्य-संनिवेशो व्यूहः, तस्य तन्त्रं शास्त्रम्, तेन व्यूहप्रकारं यो जानाति । राक. २५

(२) व्यूहतन्त्रविधानज्ञः व्यूहाः चक्रदण्डगरुडाद्याकाराः सेनासंनिवेशाः, तेषां तन्त्रं तत्प्रतिपादकं शास्त्रं विधानं रचनं च, तत् जानाति तादृशः । राप्र. १७९

## गरुडपुराणम्

बलाबलज्ञानं सेनापतिगुणः

[2]बलाबलपरिज्ञाता सेनाध्यक्षो विधीयते ॥

## अग्निपुराणम्

ब्राह्मणः क्षत्रियो वा सैनापत्यार्हः, सेनापतिगुणौ

[3]राज्ञा सेनापतिः कार्यो ब्राह्मणः क्षत्रियोऽथवा ।
कुलीनो नीतिशास्त्रज्ञः ...... ॥

## कामन्दकीयनीतिसारः

सेनापतेर्गुणसंपत्, सेनापतेर्युद्धे कर्तव्यम्

[4]कुलोद्गतं जानपदं मन्त्रज्ञं मन्त्रिसंमतम् ।
दण्डनीतेः प्रयोक्तारमध्येतारं च तत्त्वतः ॥

(१) सैन्यस्य सेनापत्यायत्तत्वात् तत्प्रचार उच्यतेऽष्टादशभिः श्लोकैः– कुलोद्गतमित्यादि । 'एवं (? इत्यादि) लक्षणोपेतं कुर्वीत ध्वजिनीपतिम्' इति वक्ष्यमाणेन संबन्धः । अत्र लक्षणद्वारेणैतत्प्रचारो विज्ञेयः । कुलोद्गतो न व्यभिचरति । जानपदः तत्रत्यत्वात् विश्वास्यः । मन्त्रज्ञः निर्णयकौशलात्कृच्छ्रेषु प्रसाधनार्हः । मन्त्रिसंमतः मन्त्रिभिः सह संभूय कार्यानुष्ठानसमर्थः । प्रयोक्ता तत्त्वतो दण्ड्येषु, तस्य स्वामिप्रकृतित्वात् । तथाहि– 'राजा युवराजः सेनापतिश्च स्वामिप्रकृतयः' । अध्येता वक्ता । जम.

(२) सेनाया लक्षणमभिधाय सेनापतेरपि सप्तदश-श्लोकपरिकल्पितकुलकेन लक्षणमभिधातुमाह– कुलोद्गतमिति । कुलोद्गतं विशुद्धोभयकुलोत्पन्नम् । जानपदं स्वजनपदभवम् । मन्त्रज्ञं पञ्चाङ्गमन्त्राभिज्ञम् । मन्त्रिसंमतं मन्त्रिणा अभिमतम् । यत्नतः दण्डनीतेः दण्डनीतिशास्त्रस्य प्रयोक्तारं प्रयोगनिपुणम् अध्येतारं च अध्ययनशीलं च । एवंभूतं जनं ध्वजिनीपतिं कुर्वीत इति परेणान्वयः । एवमुत्तरत्रापि । 'मन्त्रिसंमतम्' इत्यत्र 'मन्त्रसंमितम्' इति मुद्रितपुस्तकपाठः । उनिसा.

[1]सत्यसत्त्वक्षमास्थैर्यमाधुर्यार्थगुणान्वितम् ।
प्रभावोत्साहसंपन्नमाजीव्यमनुजीविनाम् ॥

(१) क्षमा आक्रोशादितितिक्षा क्वचित् कार्यकालापेक्षया । स्थैर्यं कर्मसु । माधुर्यं प्रियवादिता । सत्यादय एवाऽऽर्यगुणाः । यत्तु 'कुलं शीलं दया दानं धर्मः सत्यं कृतज्ञता । अद्रोहः' (कानी. १८।४९) इति प्रागुक्तास्तेषामत्रैवान्तर्भूतत्वान्न तद्ग्रहणम् । प्रभावोत्साहसंपन्नमिति । शौर्याद्युत्साहगुणयुक्तोऽपि कश्चिदप्रतापः प्रतापवत्त्वे सत्यप्यक्तोत्साहश्चाभिभूयते । उभयगुणस्तु सदैवाप्रधृष्यो भवति । अतश्च सहनिर्देशः । तयोरप्युत्साहस्यैव प्रधानत्वम्, इतरस्य तज्जन्यत्वात् । एवं च मत्वा तद्गुणानत्रैव निर्देक्ष्यति । आजीव्यं जीवनादिदानेन । जम.

(२) सत्त्व–शौर्य–क्षमा–स्थैर्य–माधुर्यार्थगुणान्वितम् । सत्त्वं बलम्, शौर्यं पराक्रमः, क्षमा सहिष्णुता, स्थैर्यं स्थिरता, माधुर्यं सौन्दर्यम्, अर्थगुणाः धैर्य-गाम्भीर्यादयः, तैः अन्वितं युक्तम् । प्रभावोत्साहसंपन्नम् ।

---

(१) मत्स्य. २१५।१०; विध. २।२४।१०–११ राज्ञा (राज्ञां); राक. २५ तत्त्व (तन्त्र); राप्र. १७९ राकवत्.

(२) गरुड. ११२।५. (३) अग्नि. २२०।१–२.

(४) कानी. १९।२७; नीम. ६१ तत्त्वतः (यत्नतः).

(१) कानी. १९।२८; उनिसा. सत्यसत्त्व (सत्त्वशौर्य) र्यार्थ (र्यार्थ); नीम. ६१ उत्त.

प्रभावः प्रतापः, उत्साहः, ताभ्यां संपन्नं युक्तम्। आजीव्यमनुजीविनाम्। अनुजीविनाम् आश्रितानाम् आजीव्यम् आश्रयरूपम्। उनिसा.

[1]मित्रवन्तमुदाराढ्यं बहुस्वजनबान्धवम्।
व्यवहारिणमक्षुद्रं पौरप्रकृतिसंमतम्॥

(१) मित्रवन्तं बहुमित्रत्वात् परस्यानुच्छेद्यम्। तत्र बहुस्वजनबान्धवं बहुस्वजनबान्धवत्वात् दत्तबलम्। तत्र बाह्येन संबद्धः स्वजनः, आभ्यन्तरेण बान्धवः। उदाराढ्यं महत्त्वादेवाऽऽढ्यम्। व्यवहारिणम् ऋणादानादिव्यवहारशीलं धर्मस्थबन्धुम्। अक्षुद्रम् अविग्रहशीलं सत्संग्रहशीलं च। पौरप्रकृतिसंमतम्। उपलक्षणमेतत् जनपदप्रकृतेश्च। संमतम् अनुद्वेजनात्। जम.

(२) मित्रवन्तम्— मित्रं सुहृत्, तत् विद्यते अस्य असौ मित्रवान्, तम्। उदारास्यं विशालवदनम्। बहुस्वजनबान्धवं बहवः स्वजना बान्धवाश्च यस्य तम्। व्यावहारिकं व्यवहारज्ञम्। अक्षुद्रं महान्तम्। पौरप्रकृतिसंगतम्— पौरा अग्राम्या प्रकृतिः स्वभावः, तया संगतं युक्तम्। अथवा पौरप्रकृतिषु पुरंस्थितप्रजासु संगतं मिलितम्। उनिसा.

[2]नित्याकारणवैराणामकर्तारमनाविलम्।
शुभानुबन्धिकर्माणमल्पामित्रं बहुश्रुतम्॥

(१) नित्यवैरं यन्निष्फलम् आनुबन्धिकम्, अकारणवैरं निर्हेतुकम्। अनाविलत्वम् अपैशुन्यम्। त्रितयमपि प्रकृतीरनुरञ्जयति। शुभानुबन्धिकर्माणमिति। कल्याणोदर्यं हि कर्माऽऽरभमाणः स्वपरेषां पूज्यः। अल्पामित्रम् अनुच्छेद्यम्। बहुश्रुतं बह्वागमम्। स हि कृच्छ्रेषु नावसीदति। जम.

(२) नित्याकारणवैराणामकर्तारं चिरकालिनाकारणवैरकरणाप्रवृत्तम्। अनाविलं निर्मलम्, निर्दोषमिति यावत्। श्रुतानुबन्धिकर्माणं शास्त्रानुगतकर्मकारिणम्। अल्पामित्रम् अल्पशत्रुम्। बहुश्रुतं बहुशास्त्रज्ञम्। उनिसा.

[1]अरोगं व्यायतं शूरं त्यागिनं कालवेदिनम्।
कल्याणाकृतिसंपन्नं सत्संभाव्यपराक्रमम्॥

(१) अरोगं कर्मण्यम्। व्यायतं महाकायम्। स हि दृष्टमात्र एवाभिभवति। शूरमिति उत्साहगुणः। त्यागिनं सर्वाभिगम्यम्। कालवेदिनम्, स हि कार्यं न हापयति। कल्याणाकृतिसंपन्नं दर्शनीयत्वाल्लोकप्रियम्। सत्संभाव्यपराक्रमं प्रकृष्टविक्रमैकदर्शनादन्योऽप्यसाधारणः संभाव्यते यस्य। जम.

(२) आरोग्यम् अनामयम्। अरोगः एव आरोग्यः। स्वार्थे ष्यञ्प्रत्ययः। व्यायतं प्रांशुम्। शूरं शौर्यसंपन्नम्। त्यागिनं दातारम्। कालवेदिनं कालज्ञम्। कल्याणाकृतिसंपन्नं मनोज्ञाकारयुक्तम्। स्वसंभाव्यपराक्रमं स्वानुभवनीयविक्रमम्। उनिसा.

[2]गजाश्वरथचर्यासु शिक्षितं सुजितश्रमम्।
खड्गयुद्धे नियुद्धे च शीघ्रचङ्क्रमणक्षमम्॥

(१) चर्या हस्त्यादिभिर्गमनम्, तत्र शिक्षितं कृताभ्यासम्। सुजितश्रमं कर्मस्वपरिभग्नम्। नियुद्धं मल्लयुद्धम्। शीघ्रचङ्क्रमणक्षमं विद्युद्वल्लघुपरिक्रमणयोग्यम्। जम.

(२) गजाश्वरथचर्यासु शिक्षितं गजाश्वरथानां चर्यासु गतिषु शिक्षितं प्राप्तशिक्षम्। सुजितश्रमं पराभूतपरिश्रमम्। खड्गयुद्धनियुद्धेषु खड्गयुद्धमल्लयुद्धेषु शीघ्रचङ्क्रमणक्षमं शीघ्रपुनःपुनर्भ्रमणशक्तम्। उनिसा.

---

(१) कानी. १९।२९; उनिसा. राढ्यं (रास्यं) व्यवहारिण (व्यावहारिक) संम (संग).

(२) कानी. १९।३०; उनिसा. शुभा (श्रुता); नीम. ६१ उनिसावत्.

(१) कानी. १९।३१; उनिसा. अरोगं (आरोग्यं) सत्सं (स्वसं).

(२) कानी. १९।३२; उनिसा. तृतीयचरणे (खड्गयुद्धनियुद्धेषु); नीम. ६१ सुजितश्रमम् (त्यागिनं सहम्) पू.

[1]**युद्धभूमिविभागज्ञं सिंहवद् दृढविक्रमम् ।**
**अदीर्घसूत्रं निस्तन्द्रममर्षणमनुद्धतम् ॥**

(१) युद्धभूमयो हस्त्यादीनाम् । ताः स्वयमेव वक्ष्यति । दृढविक्रममिति । शौर्यात् सिद्धेऽपि पराक्रमे कस्यचिदस्थिरत्वात् इति विक्रमो विशेष्यते । अदीर्घसूत्रं निस्तन्द्रं क्षिप्रकारिणम् अनलसं च । अमर्षणं परिभवासहिष्णुम् । एते त्रय उत्साहगुणाः । अनुद्धतवेषधारिणं सतामभिगम्यम् । जम.

(२) युद्धभूमिविभागज्ञं युद्धोपयोगिस्थानविभागविदम् । सिंहवद्गूढविक्रमं सिंहवत् अन्तर्लीनपराक्रमम् । अदीर्घसूत्रम् अचिरक्रियम् । निस्तन्द्रम्– तन्द्रा आलस्यम्, तद्रहितम् । अमर्षणम् अपमानासहिष्णुम् । अनुद्धतम् अधृष्टम् । उनिसा.

[2]**हस्त्यश्वरथशस्त्राणां सम्यग्लक्षणवेदिनम् ।**
**नरान्तरविवेकज्ञं कृतज्ञमनुकम्पकम् ॥**

(१) लक्षणवेदिनं शुभाशुभानां हस्त्यादीनां प्राप्तिपरिहारार्थम् । नरान्तरविवेकज्ञं सत्यशौचशौर्यप्रज्ञादिभिः । कृतज्ञमनुकम्पकमिति । कृतज्ञत्वात् मुख्यपुरुषाणामभिगम्यम् । जम.

(२) हस्त्यश्वरथशस्त्राणां सम्यग्लक्षणवेदिनं सम्यक् चिह्नज्ञम् । चरस्थिरविवेकज्ञं चरस्य गमनशीलगुप्तदूतस्य स्थिरस्य निश्चलगुप्तदूतस्य विवेकज्ञं प्रभेदज्ञम् । कृतज्ञम् उपकाराङ्गीकर्तारम् । अनुकम्पकं दयालुम् । उनिसा.

[3]**वर्मकर्मसमायोगे कुशलं कुशलानुगम् ।**
**सर्वयुद्धक्रियोपेतं शक्तं तत्परिकर्मणि ॥**

(१) वर्मकर्म संनहनकर्म, तत्समायोगे युद्धोपाये कुशलम् । तत्कुशलैश्चानुगतम् । सर्वयुद्धक्रियोपेतं सर्वैः रङ्गैरायुधैश्च योद्धुमभिज्ञम् । शक्तं युद्धपरिकर्मणि व्यूहरचनादौ । जम.

(२) धर्मकर्मसमायोगं धर्मोपयोगिकर्मणा समायोगः संबन्धः यस्य तम् । कुशलं निपुणम् । कुशलानुगं निपुणानुगामिनम् । सर्वयुद्धक्रियोपेतं सर्वप्रकारयुद्धक्रियायुक्तम् । 'सर्वशुद्धक्रियोपेतम्' इति पाठे सकलविशुद्धक्रियान्वितमित्यर्थः । तत्परिकर्मणि तस्य सर्वप्रकारयुद्धस्य परिकर्मणि प्रसाधनक्रियायां शक्तं समर्थम् । उनिसा.

[1]**स्वभावचित्तज्ञतया युक्तमश्वनृदन्तिनाम् ।**
**तन्नाम्नां चापि वेत्तारं तद्विधानोपपादकम् ॥**

(१) स्वभावचित्तज्ञतया युक्तं तदनुरूपप्रतिपत्त्यर्थम् । तत्राश्वादीनां सहजो धर्मः स्वभावः, आकस्मिकश्चाभिप्रायः चित्तम् । तन्नाम्नां वेत्तारं यथाकार्यं व्यवहारार्थम् । विधानं पोषणविधिः । जम.

(२) अश्वनृदन्तिनाम् अश्वानां हयानां नृणां सैनिकपुरुषाणां दन्तिनां गजानां स्वभावचित्तज्ञतया युक्तं स्वभावं चित्तं च जानाति यः तस्य भावः तया युक्तम् । तन्नाम्नां चापि तेषाम् अश्वनृदन्तिनां नाम्नां चापि वेत्तारं ज्ञातारम् । तद्विधानोपपादकम्– तेषाम् अश्वनृदन्तिनां विधानं नियमः, तस्य उपपादकं संपादकम् । उनिसा.

[2]**देशभाषास्वभावज्ञं लिपिज्ञं सुदृढस्मृतिम् ।**
**निशाप्रचारकुशलं शकुनज्ञाननिश्चितम् ॥**

(२) देशभाषास्वभावज्ञमिति । तत्र देशभाषाज्ञानं व्यवहारार्थम्, देशस्वभावज्ञानं च तद्देश्योपचारप्रतिपत्त्यर्थम् । लिपिज्ञं पत्रसंप्रेषणमन्त्रणाद्यर्थम् । सुदृढस्मृतिम्, स हि संप्रधारितं कार्यं न हापयति । निशाप्रचारः सौप्तिकादिव्यापारः । शकुनज्ञानं भविष्यच्छुभाशुभपरिज्ञानफलम् । जम.

---

(१) कानी. १९।३३ ; उनिसा. दृढ (गूढ) ; नीम. ६१ दृढ (गूढ).

(२) कानी. १९।३४ ; उनिसा. नरान्तर (चरस्थिर) ; नीम. ६१ पू.

(३) कानी. १९।३५ ; उनिसा. वर्म (धर्म) योगे (योगं).

(१) कानी. १९।३६.

(२) कानी. १९।३७ ; नीम. ६१ ढस्मृतिम् (ढं स्मृतम्) शकुन (कुशल).

( २ ) देशभाषास्वभावज्ञं नानादेशीयभाषास्वभावज्ञानसंपन्नम् । लिपिज्ञं नानादेशीयलिपिज्ञानसंपन्नम् । सुदृढस्मृतिं दृढतरस्मरणम् । निशाप्रचारकुशलं रात्रिसंचारनिपुणम् । शकुनज्ञाननिश्चितं निमित्तज्ञम्, शुभाशुभचिह्नज्ञमिति यावत् । 'शकुनज्ञाननिश्चितम्' इत्यत्र 'कुशलज्ञाननिश्चितम्' इति मुद्रितपुस्तकपाठे तु बहूनां मध्ये कुशलस्य निपुणस्य ज्ञानयुक्तमित्यर्थः । उनिसा.

**[1]उदयास्तमयज्ञं च नक्षत्राणां ग्रहैः सह ।**
**दिग्देशमार्गविज्ञानसंपन्नं तज्ज्ञसेवितम् ॥**

( १ ) उदयास्तमयज्ञं चेति ग्रहनक्षत्राणामुदयास्तमयौ शुभाशुभसूचकौ जानाति । दिग्देशमार्गविज्ञानसंपन्नमिति रात्रौ वनदुर्गादिषु दिङ्मूढं सैन्यं बोधयति । एवं देशमार्गयोश्च विज्ञानात् दृष्टदेशमार्गम् । तज्ज्ञैः दिगाद्यभिज्ञैः सेवितम् । जम.

( २ ) तन्निषेवितं तेषां दिग्देशमार्गाणां निषेवितं निषेवणं यस्य तम् । भावे तप्रत्ययः । अन्यत् प्रतीतम् । उनिसा.

**[2]क्षुत्पिपासाक्लमत्रासशीतवातोष्णवृत्तिभिः ।**
**अनाहितभयक्लान्तिं तत्संविग्नाभयप्रदम् ॥**

( १ ) अनाहितभयक्लान्ति क्षुदादिभिरनुत्पादितं भयं ग्लानिश्च, तत्क्लेशसहत्वात् कर्मण्यम् । तत्संविग्नाः क्षुदादिपीडिताः सैनिकाः, तेषामाश्वासयितारम् । जम.

( २ ) अनाहितभयग्लानिम् अनाहिता अनुत्पन्ना भयं त्रासः ग्लानिः क्लान्तिश्च यस्य तम् । अन्यत् प्रतीतम् । उनिसा.

---

( १ ) **कानी.** १९।३८ ; **उनिसा.** तज्ज्ञसे (तन्निषे) ; **नीम.** ६१ उत्त.

( २ ) **कानी.** १९।३९ ; **उनिसा.** क्लान्तिं (ग्लानिं) ; नीम. ६१ क्लम (श्रम) वृत्तिभिः (वृष्टिभिः) क्लान्तिं तत्संविग्नाभयप्रदम् ( ग्लानिशत्रपक्षभयावहम् ).

**[1]हन्तारं परसैन्यानां दुःसाधाहितनिश्चयम् ।**
**हतानां च स्वसैन्यानां सम्यग्विष्टम्भनक्षमम् ॥**

( १ ) हन्तारम्, प्रयोगकौशलं दर्शयति, अन्यथा हि शूरमित्येतेनैवावगतत्वात् । दुःसाधाहितनिश्चयं स्थिरप्रतिज्ञम् । विष्टम्भनक्षमं स्तम्भनसमर्थम् । जम.

( २ ) परसैन्यानां यातव्यसैन्यानां भेत्तारं भेदकर्तारम् । दुःसाध्याहितनिश्चयं दुःसाध्यस्य साधयितुमशक्यस्य आहितनिश्चयं कृतोपायनिश्चयम् । भग्नानां च भयेन पराजितानां च । 'भयानां च' इति पाठे भीतानां च । सम्यग्विष्टम्भलक्षणं सम्यक्प्रतिरोधकम् । उनिसा.

**[2]अवस्कन्दाभिमन्तारं वेत्तारं सैन्यकर्मणाम् ॥**
**परदूतप्रचारज्ञं महारम्भफलोपगम् ॥**

( १ ) अवस्कन्दाः परेणोपरुद्धाः, तेषाम् अनुबलाधानेन मन्तारम् । सैन्यकर्मणां ( वेत्तारं ) हस्त्यश्वरथपत्तिकर्मविदम् । परदूतप्रचारज्ञं यथोक्तेन प्रकारद्वयेन । महारम्भफलोपगं महारम्भफलं साधयितुमुपगन्तारम्, नान्यत् । जम.

( २ ) अवस्कन्दस्य शिबिरस्य अभिगोप्तारं सम्यग्रक्षितारम् । वेत्तारं सैन्यकर्मणां सैन्यकर्माभिज्ञम् । 'वेत्तारम्' इत्यत्र 'भेत्तारम्' इति मुद्रितपुस्तकपाठो न सम्यक् । चरदूतप्रचारज्ञं चरस्य गुप्तदूतस्य दूतस्य सामान्यतो वार्तावाहकस्य प्रचारज्ञं संचारज्ञम् । महारम्भफलोपगं महारम्भफलं महता उद्योगेन लब्धव्यं फलम् उपगच्छति स्वीकरोति यस्तम् । बह्वायाससाध्यफलप्राप्तावपि कृतोद्योगमिति भावः । उनिसा.

---

( १ ) **कानी.** १९।४० ; **उनिसा.** हन्तारं ( भेत्तारं ) दुःसाधा ( दुःसाध्या ) हतानां ( भग्नानां ) नक्षमम् ( लक्षणम् ) ; **नीम.** ६१ चतुर्थचरणे ( अवष्टम्भस्य कारकम् । ) शेषं उनिसावत् .

( २ ) **कानी.** १९।४१ ; **उनिसा.** मन्तारं ( गोप्तारं ) पर ( चर ) ; **नीम.** ६१ पर ( चर ) उत्त.

[1]शश्वत्संसिद्धकर्माणं सिद्धकर्मनिषेवितम् ।
पराभवेष्वनिर्विण्णं श्रीमद्राजार्थतत्परम् ॥

( १ ) शश्वत्संसिद्धकर्माणं यद्यदारभते कर्म तत्तदस्य सर्वदा सिध्यतीत्यर्थः । सिद्धकर्मभिश्च निषेवितम् । पराभवेष्वनिर्विण्णं शत्रुकृतेष्वभग्नोत्साहम् । श्रीमद्राजार्थतत्परं प्रकृष्टे राजकार्ये सावधानम् । जम.

( २ ) शश्वत् सदा संसिद्धकर्माणं संसिद्धं कर्म अनुष्ठानं यस्य तम् । सिद्धकर्मनिषेवितं सिद्धं कर्म येषां तैः निषेवितम् । पराभवेष्वनिर्विण्णं पराभवेषु पराजयेषु अनिर्विण्णं निर्वेदरहितम् । 'परापरेषु निर्विण्णम्' इति मुद्रितपुस्तकपाठे तु परापरेषु प्रधानाप्रधानेषु निर्विण्णं खिन्नम् । यथा प्रधानेषु बलेषु निर्विण्णेषु निर्विण्णं तथा अप्रधानेष्वपि बलेषु निर्विण्णेषु निर्विण्णमिति यावत् । श्रीमद्राज्यार्थतत्परम् । श्रीमतः राज्ञः, विजिगीषोरिति यावत्, राज्यार्थे राज्यरूपविषये तत्परं व्यग्रम् । उनिसा.

[2]इत्यादिलक्षणोपेतं कुर्वीत ध्वजिनीपतिम् ।
ध्वजिनीं तु सदोद्युक्तः स गोपायेद्दिवानिशम् ॥

( १ ) ध्वजिनीं सेनाम् उक्तलक्षणां गोपायेत् रक्षेत्, तन्नियुक्तत्वात् । जम.

( २ ) इत्यादिलक्षणोपेतं प्रागुक्तलक्षणाक्रान्तं ध्वजिनीपतिं सेनापतिं कुर्वीत । सः ध्वजिनीपतिः सदा सर्वदा उद्युक्तः कृतोद्योगः सन् दिवानिशं दिवारात्रं ध्वजिनीं सेनां गोपयेत् रक्षेत् । 'स गोपयेत्' इत्यत्र 'संगोपयेत्' इति मुद्रितपुस्तकपाठः । उनिसा.

[3]नद्यद्रिवनदुर्गेषु यत्र यत्र भयं भवेत् ।
सेनापतिस्तत्र तत्र गच्छेद्व्यूहीकृतैर्बलैः ॥

( १ ) नद्यद्रिवनदुर्गेष्विति दुर्गशब्दः प्रत्येकं योज्यः । भयं सामन्ताटविकादिभ्यः । व्यूहीकृतैः संनद्धैः । जम.

( २ ) व्यूहीकृतैर्बलैः व्यूहरचितैर्बलैः । अन्यत् प्रतीतम् । उनिसा.

## शुक्रनीतिः

सेनापतिगुणाः, सर्वे वर्णाः संकरजा म्लेच्छाश्च सेनापतिपदार्हाः, सेनाविभागप्रविभागाधिपनियोजनम्, सैन्यशिक्षा च

[1]नीतिशस्त्रास्त्रव्यूहादिनतिविद्याविशारदाः ।
अबाला मध्यवयसः शूरा दान्ता दृढाङ्गकाः ॥
स्वधर्मनिरता नित्यं स्वामिभक्ता रिपुद्विषः ।
शूद्रा वा क्षत्रिया वैश्या म्लेच्छाः संकरसंभवाः ॥
सेनाधिपाः सैनिकाश्च कार्या राज्ञा जयार्थिना ॥

ये जनाः, नीतिः कार्याकार्यविज्ञानम्, शस्त्राणि अक्षेपणीयानि प्रहरणानि तलवारादीनि, अस्त्राणि क्षेपणीयानि शरादीनि, व्यूहादयः बलरचनाप्रभृतयः, तथा नतिविद्याः शत्रुपराजयकौशलेषु (? शलानि, तेषु) विशारदाः दक्षाः, अबालाः शैशवातीताः, मध्यवयसः तरुणाः, शूराः बलवन्तः, दान्ताः विनीताः, दृढाङ्गकाः, कठिनदेहाः, स्वधर्मनिरताः निजधर्मपालननिष्ठाः, नित्यं स्वामिभक्ताः स्वामिषु प्रभुषु भक्ताः अनुरागिणः, रिपुद्विषः शत्रुषु अननुरागिणः, शूद्राः शूद्रजातीयाः, क्षत्रियाः क्षत्रियजातीयाः, वैश्याः वैश्यजातीया वा, संकरसंभवाः संकीर्णाः, म्लेच्छाः हीनजातयः, ते जयार्थिना विजिगीषुणा राज्ञा सेनाधिपाः सैनिकाश्च कार्याः ॥ शुनीटी.

पञ्चानामथवा षण्णामधिपः पद्गामिनाम् ।
योज्यः स पत्तिपालः स्यात्त्रिंशतां गौल्मिकः स्मृतः ॥

( १ ) कानी. १९।४२ ; उनिसा. राजार्थ ( राज्यार्थ ) ; नीम. ६१ सिद्धकर्म ( सिद्धिकर्म ) पू.

( २ ) कानी. १९।४३ ; उनिसा. गोपा ( गोप ) ; नीम. ६१ तु ( च ).

( ३ ) कानी. १९।४४ ; रार. ४० भवेत् ( नृप ) उत्तरार्धे ( तत्र तत्र च सेनानीर्यायाद् व्यूहीकृतैर्बलैः । ) राजनीतौ ; नीम. ६१.

( १ ) शुनी. २।१३७–१४८.

पञ्चानाम् अथवा षण्णां पदगामिनां पदातीनाम् अधिपः पत्तिपालः पदातिगः (१ पः) योज्यः पदातिपालकत्वेन नियोक्तव्यः। त्रिशतां पत्तिपालानाम् अधिपः गौल्मिकः स्मृतः कथितः। शुनीटी.

**शतानां तु शतानीकस्तथाऽनुशतिको वरः।**
**सेनानीर्लेखकश्चैते शतं प्रत्यधिपा इमे॥**
**साहस्रिकस्तु संयोज्यस्तथा चाऽऽयुतिको महान्॥**

* शतानां गौल्मिकानाम् अधिपः शतानीकः, अनुशतिकः वरः, सेनानीः, तथा लेखकः। एते नियोक्तव्याः इति शेषः। इमे च शतानीकादयः शतं प्रति अधिपाः विशेषविशेषकार्याध्यक्षाः इत्यर्थः। किं च साहस्रिकः सहस्रपतिः, तथा महान् अयुतपतिः दशसहस्रपतिः संयोज्यः नियोक्तव्यः। शुनीटी.

**व्यूहाभ्यासं शिक्षयेद्यः सायं प्रातश्च सैनिकान्।**
**जानाति स शतानीकः सुयोद्धुं युद्धभूमिकाम्॥**

यः सायं प्रातश्च सैनिकान् व्यूहाभ्यासं बलरचनाया अभ्यासं पाटवं शिक्षयेत्, तथा सुयोद्धुं सम्यक् युद्धं कर्तुं युद्धभूमिकां रणसज्जां च जानाति स शतानीकः। शुनीटी.

**तथाविधोऽनुशतिकः शतानीकस्य साधकः।**
**जानाति युद्धसंभारं कार्ययोग्यं च सैनिकम्॥**

यश्च तथाविधः तादृशगुणसंपन्नः शतानीकस्य साधकः साहाय्यकारकः युद्धसंभारं युद्धोपयोगिद्रव्यसमूहं तथा कार्ययोग्यं सैनिकं च जानाति सः अनुशतिकः। शुनीटी.

**निदेशयति कार्याणि सेनानीर्यामिकांश्च सः।**
**परिवृत्तिं यामिकानां करोति स च पत्तिपः॥**

यः कार्याणि तथा यामिकान् प्रहरिणश्च निदेशयति आदेशयति स सेनानीः। यश्च यामिकानां प्रहरिणां परिवृत्तिं विनिमयं करोति स च पत्तिपः पदातिपतिः। शुनीटी.

**स्वावधानं यामिकानां विजानीयाच्च गुल्मपः॥**
**सैनिकाः कति सन्त्येतैः कति प्राप्तं तु वेतनम्।**
**प्राचीनाः के कुत्र गताश्चैतान् वेत्ति स लेखकः।**
**गजाश्वानां विंशतेश्चाधिपो नायकसंज्ञकः॥**

गुल्मपः यामिकानां स्वावधानं स्वस्वकर्मणि सतर्कतां जानीयाच्च। स लेखकः सैनिकाः कति कियन्तः सन्ति? एतैश्च कति कियत्परिमाणं वेतनं प्राप्तम्? के च प्राचीनाः? अक्षमा इत्यर्थः, के च कुत्र गताः? एतान् वेत्ति जानाति जानीयादित्यर्थः। किंच गजानाम् अश्वानां च विंशतेः विंशतिगजानां विंशत्यश्वानामित्यर्थः, अधिपः नायकसंज्ञकः नायक इति ख्यात इत्यर्थः। शुनीटी.

**उक्तसंज्ञान् स्वस्वचिह्नैर्लाञ्छितांश्च नियोजयेत्॥**

उक्तसंज्ञान् कथितनाम्नः पत्तिपादीन् स्वस्वचिह्नैः चिह्नितान् अङ्कितान् कृत्वा नियोजयेत्। शुनीटी.

**सेनाधिपः क्षत्रियस्तु ब्राह्मणस्तदभावतः॥**

क्षत्रियः सेनाधिपः, तदभावे क्षत्रियाभावे ब्राह्मणश्च सेनाधिपः। नियोक्तव्य इति शेषः। शुनीटी.

*** न वैश्यो न च वै शूद्रः कातरश्च कदाचन।**
**सेनापतिः शूर एव योज्यः सर्वासु जातिषु॥**

---

* 'शतानाम्' इति बहुवचनं मूले आर्षम्। तस्य 'गौल्मिकानाम्' इति विवरणं न साधु, 'पदगामिनाम्' इत्येव विवरीतुं युक्तम्। प्राकृतसमश्लोक्यां 'वरः' इत्यत्र जघन्यार्थकः 'अवरः' इति छेदः। अग्रे साधकपदं सहायार्थकमस्यानुगुणम्।

* 'कातरो वैश्यः, कातरः शूद्रः' इति कातरत्वस्य वैश्यशूद्रयोर्विशेषणत्वे क्षत्रियादीनां कातरत्वमनुचितमनुमतं स्यादुत्तरार्धविरोधश्च। तस्मात् 'न कातरः' इति पृथगेव निषेधः। तथा च वैश्यशूद्रविषये 'शूद्रा वा क्षत्रिया वैश्याः' इत्यादिपूर्ववचनविरोधं आभासते। विरोधपरि-

(१) शुनी. २।४२९–४३०.

कदाचन वैश्यः सेनापतिर्न, शूद्रः न, कातरः भीतश्च न । भवेदिति शेषः । सर्वासु जातिषु शूर एव बलवानेव सेनापतिः योज्यः । शुनीटी.

## नीतिवाक्यामृतम्

सेनापतेर्गुणा दोषाश्च

**'अभिजनाचारप्राज्ञानुरागशौचशौर्यसंपन्नः प्रभाववान् बहुबान्धवपरिवारो निखिलनयोपायप्रयोगनिपुणः समभ्यस्तसमस्तवाहनायुधयुद्धलिपिभाषात्मपरिज्ञानस्थितिः सकलतन्त्रसामन्ताभिमतः सांग्रामिकाभिरामिकाकारशरीरो भर्तुरादेशाभ्युदयहितवृत्तिषु निर्विकल्पः स्वामिनाऽऽत्मवन्मानार्थप्रतिपत्ती राजचिह्नैः संभावितः सर्वक्लेशायाससह इति सेनापतिगुणाः ॥**

अथ सेनापतिसमुद्देशो व्याख्यायते । तत्राऽऽदावेव सेनापतिगुणानाह– अभिजनेति । यस्यैते अधोलिखिता गुणाः सन्ति स सेनापतिः कार्यः । के एते गुणाः ? यः अभिजनयुक्तः कुलीनः, तथा आचारव्यवहारसंपन्नः, तथा प्राज्ञः पण्डितः, तथा जनानुरागयुक्तः, तथा शौचानुष्ठानवान्, तथा शौर्यसपन्नः विक्रमयुक्तः, तथा प्रभाववान् माहात्म्यवान्, तथा बहुबान्धवपरिवारः प्रभूतपितृभ्रातृपरिवारितः, तथा निखिलनयोपायप्रयोगनिपुणः समस्तनीतिविचक्षणः, तथा समभ्यस्त(समस्त)वाहनायुध (युद्ध) लिपिभाषात्मपरिज्ञानस्थितिः । समभ्यस्ता शिक्षिता समस्तवाहनानाम् अश्वादीनां तथा खड्गयुद्धादीनां तथा काश्मीरजादिलिपीनां तथा विभिन्नदेशोद्भवभाषा (? षाणां) तथा आत्मपरिज्ञानयुक्तः (? ज्ञानस्य) एतेषां गुणानाम् (अभ्यस्ता ?) स्थितिः स्थानं येन । तथा सकलतन्त्रसामन्ताभिमतः– तन्त्रं सैन्यम्, सामन्ताः प्रधानसेवकाः, तेषां समस्तानां यः अभिमतः वल्लभः । तथा सांग्रामिकाभिरामिकाकारशरीरः संग्रामे युद्धे आभिरामिकः मनोज्ञः आकारः आकृतिः यस्य शरीरे, सोत्साह इत्यर्थः । तथा भर्तुरादेशाभ्युदयहितवृत्तिषु निर्विकल्पः– न विद्यते विकल्पः विचित्तता यस्य सः । क्व विषये ? स्वाम्यादेशः भर्तुरादेशः, अभ्युदयः विजयः, हितम् अनुकूलम् एतेषां या वृत्तिः वर्तनम्, तासु वृत्तिषु यो विकल्पं न करोति । तथा स्वामिनाऽऽत्मवन्मानार्थप्रतिपत्तिः स्वामिना प्रभुणा आत्मवन्मानार्थप्रतिपत्तिः । तथा राजचिह्नैः संभावितः राज्ये यानि चिह्नानि छत्रचामरादीनि तैः संभावितः युक्तः । तथा सर्वक्लेशायाससहः सर्वे ये क्लेशाः कष्टानि, आयासाः खेदाः, तेषां सहः समर्थः । इति सेनापतिगुणाः । तथा च शुक्रः– 'सर्वैर्गुणैः समोपेतं सेनानाथं करोति यः । भूमिपालो न चाऽऽप्नोति स शत्रुभ्यः पराभवम् ॥' । नीवाटी.

**स्वैः परैश्च प्रधृष्यप्रकृतिरप्रभाववान् स्त्रीजितत्वमौद्धत्यं व्यसनिताऽक्षयव्ययप्रवास उपहतत्वं तन्त्राप्रतीकारः सर्वैः सह विरोधः परपरीवादः परुषभाषित्वमनुचितज्ञताऽसंविभागित्वं स्वातन्त्र्यात्मसंभावनोपहतत्वं स्वामिकार्यव्यसनोपेक्षः सहकारिकृतकार्यविनाशो राजहितवृत्तिषु चेर्ष्यालुत्वमिति सेनापतिदोषाः ॥**

अथ सेनापतिदोषा व्याख्यायन्ते– स्वैरिति । स्वैः परैश्च प्रधृष्यः यः स्वैः आत्मीयैः परैश्च प्रधृष्यप्रकृतिः प्रकर्षेण यस्य प्रकृतयः प्रधानपुरुषाः प्रधृष्यन्ते पराभवं लभन्ते । सः सेनापतिर्न कार्यः, यतः स कापुरुषः । तथा अप्रभाववान् माहात्म्यरहितः । तथा स्त्रीजितत्वं स्त्रीभिर्जीयते यः । तथा औद्धत्यं सगर्वः । तथा व्यसनिता व्यसनाभिभूतो यः । तथा अक्षयव्ययप्रवासः अक्षयौ अनन्तौ व्ययप्रवासौ यस्य सः । तथा उपहतत्वं दरिद्रता । तथा तन्त्राप्रतीकारः सैन्यस्य योऽपराधान् करोति । तथा सर्वैः सह विरोधः । परपरीवादः यस्य जननिन्दा । तथा परुषभाषित्वं निष्ठुरवचनम् । तथा अनुचितज्ञता अनु-

---

हारस्तु– 'वैश्यत्वं शूद्रत्वं च जातिर्न सैनापत्यानधिकारे प्रयोजिका' इत्यस्मिन्नर्थे पूर्ववाक्यस्य तात्पर्यम्, अस्य वाक्यस्य तु 'वैश्यशूद्रयोः केचित् स्वाभाविका दोषाः सैनापत्यविरोधिनः' इत्यत्र तात्पर्यमिति तात्पर्यभेदात्संभवति ।

(१) नीवा. १२।१–२.

चितम् अयोग्यं यत्तज्जानाति, न योग्यम् । तथा असंविभागित्वम् एकाकी यदुपार्जितं तद्भक्षयति । तथा स्वातन्त्र्यात्मसंभावनोपहतत्वम् आत्मप्रभुत्वस्य या संभावना तया उपहतः । तथा स्वामिकार्यव्यसनोपेक्षः यः स्वामिकार्यमुपेक्षते, न स्वयमेव तत्साधयेत् , तथा प्रभोर्व्यसनं संजातमुपेक्षते, न सद्भावं कृत्वा तद्विनाशयति । तथा सहकारिकृतकार्यविनाशः सहकारिभिः कार्ये कृते तस्य कार्यस्य विनाशः । तथा राजहितवृत्तिषु चेर्ष्यालुत्वम् । एते सेनापतिदोषाः । तथा च गुरुः— 'सेनापतिं स्वदोषाढयं यः करोति स मन्दधीः । न जयं लभते संख्ये बहुसेनोऽपि स क्वचित् ॥' । नीवाटी.

**स चिरं जीवति राजपुरुषो यो नगरनापित इवानुवृत्तिपरः सर्वासु प्रकृतिषु ॥**

अथ राजपुरुषो यथा चिरं जीवति तदाह— स इति । सर्वासु प्रकृतिषु यो राजपुरुषः राज्ञः सेवकसामान्यो भवति स चिरं प्रभूतकालं जीवति । किंविशिष्टः सन् ? ( अनुवृत्तिपरः ) विनयपरः सन् । कासु ? प्रकृतिषु राजप्रधानपुरुषेषु । क इव ? नगरनापित इव । यथा परस्थः सन् पत्तनमध्यगः सर्वजनेषु विनयपरः चिरं नन्दति तथा राजपुरुषोऽपि । तथा च शुक्रः— 'सेवकः प्रकृतीनां यो नम्रतां याति सर्वदा । स नन्दति चिरं कालं भूपस्यापि प्रियो भवेत् ॥' । नीवाटी.

## युक्तिकल्पतरुः

सेनापतेर्गुणाः

[1]**अस्त्रशास्त्रेषु कुशलो बहुबन्धुजनान्वितः ।**
**शुद्धः कुलोद्भवो विद्वान् धर्मभीरुरभीस्तथा ॥**
**युद्धाध्यक्षः स्मृतो राज्ञां दुर्गसंधानकार्यवित् ॥**

## मानसोल्लासः

सेनापतेर्गुणाः

[2]**कुलजः शीलवान् धीरश्चतुर्भाषाविशारदः ।**
**गजाश्वारोहणे दक्षः शस्त्रशास्त्रविचक्षणः ॥**

**शकुने च निमित्ते च चिकित्सायां च वेदिता ।**
**वाहभेदविधानज्ञः सारेतरविशेषवित् ॥**

**दाता प्रियंवदो दान्तो गतिमान् दृढनिश्चयः ।**
**राज्ञा सेनापतिः कार्यः शूरो भृत्यविशेषवित् ॥**

---

( १ ) युक. ४।२६–२७.
( २ ) मासो. २।९०–९२.